श्री विश्वनाथ विरचितो

भाषापरिच्छेदः

# निजनिर्मितसिद्धान्तमुक्तावल्या विशदीकृतः

## प्रत्यक्षखण्डो भागः ।

न्यायाचार्य पं० श्री ज्वालाप्रसाद गौड़

विरचित विलासिनी-हिन्दी संस्कृत टीका द्वय विभूषितः

पं० श्री ढुण्ढिराजशास्त्रिणा संशोधितः

पूज्यपाद महामहोपाध्याय कल्प

पं० श्री शिवदत्तमिश्रचरणैः, निध्यायानुमोदितः

प्रथम संस्करण २००० ] जुलाई १९५८ मूल्य ५)

॥ श्रीः ॥

# भूमिका

## बौद्धमतसमालोचनात्मिका

यदीयन्यायविस्तारैरन्तध्वन्तिः प्रलीयते
सवेदं वेदहीनं वा तमेक महमाश्रये १

जगति जीवजाताश्चतुर्विधाः समुपलभ्यन्ते । स्वार्थं विनाश्यापि परार्थं चेष्टमानाः १, स्वार्थमविनाश्य परार्थं प्रवर्तमानाः २, स्वार्थाय परार्थध्वंसकाः ३, स्वार्थाऽभावेऽपि परार्थध्वंसकाः ४ । तत्र द्वितीयतृतीय; चतुर्थप्रकाराणां प्राणिनां संख्याऽबाधतया सर्वत्र दृश्यते । प्रथमकथाश्रिता हि मानवाः सन्ति अन्वेषणलभ्याः ।

यद्यपि सन्ति अद्यापि भारतेऽभूतपूर्वाविभूतयः । यैर्हि नावशेषितं किमपि भारतीयशासनसूत्रस्य भारतीयहस्ते आनयनाय । यैश्च स्वकीयं कुलं, कोट्यवधि द्रव्यं, नैकविधसुखोपभोगकुशलं यौवनं चापि स्वमातृभूमिजनताहिताय व्यतानि अहो पराकाष्ठा परोपकारस्य ।

हन्त तथापि वाह्योयमुपकारोदेशस्वातन्त्र्यं नाम । इतोऽप्यधिकमस्ति "आत्मस्वातन्त्र्यं स्वात्मपरिचयसंपादनं वा । तथा हि । इदं दृश्यमानं शरीरमेवाऽत्मपदाभिधेय उताऽन्यत् । किमुपादानकंचेदं सकलमपि, इति भवति सर्वस्य सशयः, यावदस्य न निराकृतिः कथं तावदात्मीयनिरतिशयदर्शनमपि । तामेताः मात्मीयनिरतिशयतया शान्ति लोकस्य संपादयितुं प्रयतमानाः पुनरन्ये एव प्राचीना परमर्षयो मुनयो वा । ते हि तरणिशतकिरणैरपि अपनोद्यमाभ्यन्तरं तमो मानवानामपनयन्तो विज्ञानालोकप्रसरैर्निःश्रेयसैकान्तानि दर्शनानि यथादर्शनमाविश्चक्रुः ।

बुद्धो हि भगवान् भिक्षूणां वैराग्याय कांश्चिद्दार्शनिकतत्वान् कांश्च पुनर्धार्मिकतत्वविशेषान् समुपदिदेश । दिङ्नागाचार्यैः ( ४५० ई० ) नागार्जुनेन ( १७५ ) धर्मकीर्तिना ( ६३५ ) असंगवसुबन्धु प्रभृतिभिश्चाऽन्यायसमीक्षाकृता । यया चाऽस्यदर्शनस्य प्रचारः, कियत्कालपर्यन्तं स्थिरता च संभूता ।

### बुद्धगौतमयोः कालनिर्धारणम् ।

केचन बुद्धानुयायिनो हि बुद्धदर्शनस्योपनिषत्कालिकतामाख्यापयन्तः "असदेवेदमग्रआसी" दित्यादि प्रमाणयन्ति । संभाव्यते च यत्पूर्वपक्षरूपेण तादृशी थवेत्कापि विचारधारा । यस्याः विशेषेण परिग्रहो बुद्धमहात्मना कृतः स्यात्-अस्तु अयं पुनर्बुद्धः ईशवीयवर्षात्पूर्वमेव ( ४८३ ) इत आरभ्य ( ५३३ ) एतत्पर्यन्तमासीत् । अयं च जगत्पितुः भगवतोम्लेच्छावतार इत्यन्यत्र सुव्यक्तम् ।

श्रीमानक्षपादमहर्षिस्तु पुनः ( ५५० ) ईशवीय वर्षात्पूर्वमासीदिति प्रामाणिकजनसंवादः । श्रीमान् डा० श्री शतीशचन्द्रविद्याभूषणोपि स्वकीय पुस्तके "दी हिष्टरी आफ् इण्डियन् फिलासफी" इति नामके मतमेतद्दर्शितवान् ।

श्रीमान् राहुलसाकृत्यायन महानुभावस्तु त्रिपिटकाचार्यो महर्षिमेनं ( २५० ) कालभाविनमाह । तमेनं त्रिपिटकाचार्यमहापुरुष पृच्छामः नागार्जुनो हि भवन्मतेन ( १७५ ) ई० वर्षीयः । अयं च नागार्जुनः स्वग्रन्थेषु "उपायकौशल्य शास्त्रे विग्रहव्यावर्त्तिनी" इत्येवमादिषु अक्षपादोक्तशब्दान्विलिख्य अक्षपादोक्त-षोड़शपदार्थान् गणयामास । तृतीयशताब्द्यामेव च वात्स्यायनोमुनिः सूत्रेषु भाष्यमरीरचत् । अतएताभ्यां पूर्वं वर्त्तेयैवभविष्यतीति । आन्वीक्षिकीशासनं हि उपनिषत्कालिकमस्ति तस्यैव चाऽनेन महर्षिणा सूत्ररूपेण प्रकाशनं कृतम् ।

मानवः पुनरधिकारिभावमापन्नः कुतोपि पदार्थतत्वज्ञानमासाद्य योगमभ्यस्य स्वतन्त्रोभूत्वा निरतिशय सुखमश्नुते । अस्मदीय पूर्वपुरुषैस्तथाविधं पदार्थज्ञानमासाद्य योगमभ्यस्य क्रमेण स्वातन्त्र्यमलंभि । व्यासो भौतिकतन्त्राऽनपेक्षः भूतं भविष्यञ्च वर्णितवान् । वशिष्ठः पदार्थतत्वज्ञो विप्रकृष्टमपि न्यवेदयनूराज्ञे दिलीपाय पुरा । श्रीमच्छंकराचार्यः पदार्थज्ञानपूर्वकयोगमहिम्ना स्वस्थं शरीरमुत्सृज्य कस्यचिद् राज्ञः शरीरमनुप्रविश्य चिराय राज्यसुखमनुबभूव ।

इदं च पदार्थतत्वज्ञानं योगो वा दर्शनेभ्योजायते लभ्यते वा । तानि च दर्शनानि अस्मादृशैर्मनु यैरेव तपः संसाध्य स्वयं ज्ञानमासाद्य स्वात्मकल्याणमवाप्य परमकृपालुतया परार्थकाम्यया प्रणीतानि ।

तत्र तर्कशलाकाञ्जनोपसंस्कृतेन विलोचनेन मानसेन तत्त्वं परीक्षमाणाः परीक्षितानर्थान् दर्शनपथे प्रापयन्ति कति च न तत्वदर्शिनः ।

अपरे तु अनादिनिधनमपौरुषेयं किमपि शब्दप्रमाणं वेदलक्षणं प्राधान्येन स्वीकृत्य तदनुकूलैस्तर्कैस्तदेव प्रमाणमाख्यापयन्त· प्रवर्तन्ते तत्वरत्नपरीक्षायाम्

प्रथमे तावदर्हतसुगतादयः—ते हि बौद्धाचारानभिमन्यमानाः संगिरन्ते । न खलु व्यास जैमिनि कपिल कणाद गौतम पतञ्जलि मुनिप्रवराणां दृष्टिः शाक्यस्येव तर्कशलाकाञ्जनमात्रसुसंस्कृता । ते हि आप्तवचनकोटौ वेदमपौरुषेय मीश्वरोचरितं वा गणयन्ति, कथमपि च वेदानुकूलमेव तर्कं प्रमाणीकुर्वन्ति । वेदवासनावासितपरतन्त्रचिन्तास्ते न प्रभवन्ति विशुद्धेन तर्कशलाकाञ्जनेन दृष्टिमात्मनः संस्कर्तुम् । अत एव लोकविपरीतं कदाचिद् भवति तेषां तर्कजातम् इति तेषामादेशाः परीक्षकाणां प्रेक्षावतां न हृदयंगमा भवन्ति । सुगतस्य विशुद्धतर्कप्रशस्तिः । एवं हि आदिशति शाक्यो मुनिः ।

> पक्षपातो न नो वीरे न द्वेषः कपिलादिषु
> युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रहः
> तापाच्छेदाच्च निकषात्सुवर्णमिव पण्डितैः ।
> परीक्ष्य भिक्षवोग्राह्यं मद्वचो न तु गौरवादिति

अपरे तावद्बादरायणादयः । ते हि आदिशन्ति चोदनालक्षणोधर्मः—शास्त्रयोनित्वात् विहितकर्मजन्योधर्म इति च तर्कशून्यमेवेति ।

वस्तुतस्तु विदितमेवैतद्दार्शनिकसमीक्षकाणां यन्न्याये दर्शनेचास्ति परस्परं भेदः। दर्शनं हि पदार्थव्यवस्थापक तद्बोधकं वा शासनम्। न्यायस्तु तत्र युक्तिः। अत एवोक्तं।

"प्रमाणैरर्थपरीक्षणं न्यायः"। समस्तरूपोपपन्नलिंगप्रतिपादकवाक्यं न्याय इति। गौतमदर्शनं हि न्यायप्रधानं दर्शनमिति न्यायदर्शनमित्युच्यते। तत्रैव हि षोड़शपदार्थेषु न्यायाङ्गानां संशयादीनां विनिवेशो दृश्यते। अत एव च तत्र भगवान् भाष्यकारोऽप्याह। त्रिविधा चाऽस्य शास्त्रस्य प्रवृत्तिः उद्देशोलक्षण परीक्षा चेति। गौतमदर्शनात्पार्थक्येनापि तदीय य न्यायस्य नव्यपद्धत्या द्वादशशताब्द्यां प्रादुर्भावः, ततश्च स्वतन्त्रतया तदध्ययनाध्यापनप्रचारः। बौद्धदर्शनस्योपदेशस्तु मुनिना शाक्येन न्यायाऽघटिततयैव कृत इति विभावनीयम्।

## अनात्मवादविमर्शः

सर्व एव जनाः भोगभाजं स्थिरतरमात्मानं मन्वानाः भाविसुखादिकामनया संसारे प्रवर्तन्ते तदुक्तम्।

"सुखी भवेयं, दुःखीवा मा भूव,मिति तृष्यतः।
यैवाऽहमिति धीः सैव सहजमात्मदर्शनम्॥

प्रवर्तमानाश्च सुखसाधनं विहितं निषिद्धंवाऽनुतिष्ठन्तो धर्माधर्मावनुचिन्वन्ति। ततश्च जन्मादिकमनुभवन्ति इति पुनः पुनः संसारः। यदि पुनरमीजनाः आत्मा मिथ्यैव किमपिनाहमास्पदमस्ति, किंचिदपि वस्तु न स्थिरं विश्वमेव क्षणभङ्गुरमलीकं वा इत्यवधारयेरन्, तदा आत्मनोऽस्थैर्यादिज्ञाने विहितकर्मादौ कालान्तरभाविफलाऽजनकत्वनिश्चये चिकीर्षाविरहे प्रवृत्यभावः। न चाऽप्रवर्त्तमाना बध्यन्ते। नचान्तरेणापि कर्माशयं संभवोभोगस्येति भवति नैरात्म्यदर्शनमपवर्गसाधनमिति।

तदुक्तम्-नैरात्म्यदृष्टिं मोक्षस्य हेतुं केचन मन्वते। इति।

नागार्जुनोपि—यः पश्यत्यात्मानं तस्याहमिति शाश्वतः स्नेहः।
स्नेहाद् गुणेषु तृष्यति तृष्णा दोषांतिरस्कुरुते
गुणदर्शी परितृष्यन् ममेति तत्साधनमुपादत्ते
तेनात्माभिनिवेशोयावत्तावत्तु संसारः
आत्मनि सति परसंज्ञा स्वपरविभागात्परिग्रहद्वेषौ
अनयोः संप्रतिबन्धान्न च दोषाः प्रजायन्त इति।

एवं चाऽऽत्माऽभाव एव तदादिपदवाच्यः जगत्कारणम्। आत्मानास्तीति ज्ञानमेव मोक्षहेतुः। तथा च श्रुतिः असदेवाऽग्रे आसीत् एकमेवा द्वितीयम्। असतः सञ्जायते इति।

शून्यवादिमते च अभाव एव-तदादिपदवाच्यः। अभाव एव जगत्कारणम्। अभावज्ञानमेव मोक्षहेतुः।

## आत्मनोव्यावहारिकसत्ताविमर्शः

अनात्मेत्यत्र पर्युदासार्थकोनञ् । पुद्गलवादिनश्चेमे । आत्मभिन्नः पुद्गलः स्वीक्रियते । तथा च रूप-वेदना-संज्ञा-संस्कार-विज्ञानरूपपञ्चस्कन्धसमुदाय आत्मा । स एव जीवशब्देन पुद्गलशब्देन च व्यवह्रियते । स चाऽऽत्मा क्षणिकोऽविच्छिन्न-प्रवाहात्मा, उपनिषत्प्रतिपाद्यनित्यविज्ञानविलक्षणः । आत्मनः पारमार्थिकत्वे एव विवादान्नात्मनः सत्त्वे इति बोध्यम् । सम्यक्समाधिसंगतस्य तृष्णाक्षये स्वात्मप्रवाह-विच्छेद एव मोक्षइत्यनात्मता ।

## उपसंहारः

बाह्यं नास्ति—तथा च घटज्ञानं घटाऽभिन्नं "घटो वा घटज्ञानाऽभिन्नः" घटज्ञानाऽविषयकप्रतीत्यविषयत्वात् घटवद् घटज्ञानवच्च । न च स्वरूपासिद्धिः, घटज्ञानाविषयक "घट विषयक" प्रतीत्यविषयत्वस्य घटज्ञाने विरहादिति वाच्यम् ज्ञानस्य स्वप्रकाशतयाऽसिद्धिविरहात् । एवमात्मापि बाह्यपदार्थः, तन्मते ज्ञान-नात्मकस्य सर्वस्यैव बाह्यपदार्थत्वात् । आत्मा ज्ञानाऽभिन्नः ज्ञानाऽविषयकप्रतीत्य-विषयत्वात् । अत्र नैयायिकानामेकवाक्यत्वं 'अध्यक्षोविशेषगुणयोगत" इत्युक्ते । एवमात्मा ज्ञानाऽभिन्नः ज्ञानविषयकप्रतीतिविषयत्वादित्यनुमानमपि अभेदसाधकम् । ननुवेदान्तिनांमतेपि नित्यविज्ञानमेवाऽऽत्मेति कथं नैरात्म्यमिति चेन्न । ज्ञानस्य क्षणिकत्वाङ्गीकारात्, नित्याऽऽत्मवादाऽपेक्षया नैरात्म्यम् । एवं गुणिनं पक्षयित्वा गुणयभेदो वा साधनीयः । अत एव शुक्लोघट इति सामानाधिकरण्यधीरपि संगच्छते । अत्र ज्ञानत्वं प्रमेयत्वव्यापकं न वेति विप्रतिपत्तिर्बोध्या । इति संक्षेपतो-नैरात्म्यवादिमतम् ।

नैरात्म्यवादिनोबौद्धाश्च माध्यमिक-वैभाषिकसौत्रान्तिक योगाचारभेदेन चतुर्विधाः । तदुक्तम् ।

मुख्योमाध्यमिको विवर्तमखिलं शून्यस्य मेने जगत्<br>
योगाचारमते तु सन्ति मतयस्तासाविवर्तोऽखिलः ।<br>
अर्थोस्ति क्षणिकस्त्वसावनुमितो बुद्ध्येति सौत्रान्तिकः<br>
प्रत्यक्षं क्षणभङ्गुरं च सकलं वैभाषिको भाषते

## माध्यमिकमतम्

मध्यमं मार्गमवलंब्य प्रवृत्ताः माध्यमिकाः । तदुक्तं माध्यमिकवृत्तौ "अतो-भावाऽभावद्वयरहितत्वान् सर्वस्वभावानुत्पत्तिलक्षणा-शून्यता-मध्यमा तदाश्रितोमार्गो-मध्यम इति" । गुरूक्तस्याऽर्थस्याङ्गीकरणादुत्तमः, पर्यनुयोगस्याऽकरणादधमः, अतस्ते माध्यमिकाः इति विद्यारण्यस्वामिपादा । शून्यवादिनश्चेमे । माध्यमिकमते शून्यमेव जगत् । तत्त्वंचात्र नाभावत्व, अभावस्य सापेक्षत्वात् । अस्य च

निरपेक्षत्वात्। किन्तु चतुष्कोटिविनिर्मुक्तत्वम् । कोटिचतुष्टयं च अस्ति-नास्ति-तदुभयात्मकं-अनुभयात्मकं च । तदुक्तम् ।

न सत्-नाऽसत्-न सदसत्-न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्वं माध्यमिका विदुरिति ।

एवं चाऽद्वैतमतवदनिर्वचनीयत्वमेव फलितं भवति। अस्य च प्रक्रियाऽद्वैतमतवद् बोध्या । इयांस्तु विशेषः एतन्मते शून्यं पारमार्थिकम्। अद्वैतमते ब्रह्म पारमार्थिकम् । माध्यमिकमते मुक्तिर्दुःखाभावरूपा । तदुक्तम् । "तदेवं भावना चतुष्टयवशान्निखिलवासनानिवृत्तौ परनिर्वाणं सेत्स्यतीति । माध्यमिकवृत्तावपि तदेवमशेषप्रपंचोपशमशिवलक्षणां शून्यतामागम्य यस्मादशेषकल्पनाजालप्रपञ्च-विगमोभवति प्रपंचविगमाच्च विकल्पनिवृत्तिः । तस्माच्छून्यतैव सर्वप्रपंचनिवृत्ति-लक्षणत्वान्निर्वाणमुच्यते"इति । भावनाचतुष्टयी च—सर्वं क्षणिकम् २-सर्वं दुःखं दुःखम्-सर्वं स्वलक्षणं स्व लक्षणम् सर्वशून्यं शून्यम्-इत्याकारिका बौद्धाचार्योपदिष्टा ।

तेषामयमाशयः-संसारोदुःखमयः, सर्वेषां विवेकिनां जिहासितश्च । अथ च वैराग्यार्थं दुःखरूपतयैव भावनीयमिति हि शाक्योपदेशः । परन्तु तदुच्छेदप्रकारो न वेदादिप्रतिपादितेन पथा, वेदानां प्रामाण्यस्यैव संन्दिग्धत्वात् । "तदप्रामाण्यम नृतव्याघातपुनरुक्तिदोषेभ्यः" इति सूत्रेण वेदाऽप्रामाण्यस्य समुद्घोषात् । किन्तु चतुर्विधभावनया अपवर्ग सिद्धिः । एताश्चतस्रोभावनाः सम्यग्बुद्धावस्थापिताः परनिर्वाणाख्यं मोक्षमासादयन्तीति ।

## क्षणिकत्वसाधनम्

अथ सर्वं क्षणिकं क्षणिक मित्याकारिकया भ्रमात्मिकया भावनया कथं परनिर्वाणं सेत्स्यतीति चेद् अत्र सौगताः—अर्थक्रियाकारित्वं विना नैकोपि पदार्थः सत्तावान् । यतोहि अर्थक्रियाकारित्वमेव सत्वम् । भावानां स्थिरत्वे च सत्वमेवाऽनुपपन्नम् अनुक्षणमर्थक्रियाकारित्वविरहात् । अतः स्वमेव स्वसदृशं करोतीति प्रतिक्षणमुत्पद्यन्ते पदार्थाः । तत्र कार्यकारणात्मनाऽविच्छिन्ना परंपरा प्रवहति । इयमेव च परंपरा प्रतीत्यसमुपादशब्देनोच्यते । तथाच विवादास्पदो "घटादिः" क्षणिकः 'स्वोत्पत्त्यव्यवहितोत्तरक्षणोत्तिध्वंसप्रतियोगी" सत्वाद् यत्सत्तत्क्षणिक-मितिसामान्यव्याप्तिरेव क्षणिकत्वे मानम् । जलधरपटले अन्त्यशब्दे च साहचर्यदर्शनान्न दृष्टान्ताऽसिद्धिः ।

कार्याणां हि द्वयी स्थितिः । भिन्न-भिन्न कार्याणां भिन्न-भिन्नकाले उत्पत्तिः, यथा दण्डाद् घटादेः, । अनेककार्याणामेककाले उत्पत्तिश्च यथा घटे रूपरसगन्ध-स्पर्शानाम् । तथा च कस्य चित्कार्यस्य क्रमिककालोत्पत्तित्वं कस्य चित्कार्यस्य युगपत्कालोत्पत्तिकत्वं प्रसिद्धम् एवं च स्थैर्यपक्षे न क्रमसंभवः, समर्थात्कारणाद्युगपत

"अनागत" सत्त्वकार्योत्पत्तिः। असमर्थता चेत्कारणस्य, तदा किंचिदपि कार्यं न स्यात्। युगपत्करणमपि दुर्घटम्, कार्यकरणसमर्थस्य 'कार्यकारित्वस्वभावस्य" उत्तरकालमप्यनिवृत्तेः। कृतस्य करणं नास्ति, कर्तव्यं चाऽस्य न विद्यते, निखिलकार्यस्य कृतत्वात्, अत क्षणान्तरे न करोतीति चेत् तर्हि तदानीमस्य कारणस्याऽसत्वापत्तिः, समस्तार्थक्रियाकारित्वविरहादिति क्षणिकत्वसिद्धिः।

एवं विरुद्धधर्माध्यासादपि क्षणिकत्वसिद्धिः। तथा हि एकमेव बीजादि कार्यं क्षेत्रनिपातितं सत् अंकुरं जनयति कुसूलस्थं पुनर्नेति सामर्थ्याऽसामर्थ्यरूपसत्ताद्वयस्य तत्त्वे सा सत्ता सत्ता नवेत्यादिरीत्याऽनवस्थास्यात्।

विरुद्धधर्माध्यास स्पष्ट एव। तथा च क्षेत्रस्थबीजं कुसूलस्थबीजं यद्येकं स्यात्तदा सामर्थ्याऽसामर्थ्यलक्षण विरुद्धधर्म वत्त्वयादित्यापत्तिः स्यात्। एवं चाऽऽपाद्याभावेन "विरुद्धधर्माभावेन" हेतुना तयोर्भेदसिद्धौ सत्वेन हेतुना क्षणिकत्वसिद्धिः। न च सामर्थ्याऽसामर्थ्ययोः स्वरूपयोग्यत्वतदभावरूपयोर्विरोधित्वेपि प्रकृते नोपयोग; कारित्वाऽकारित्वयोः प्राकृतयोरपि न विरोध इति वाच्यम्। प्रसंगविपर्ययाभ्यां तत्साधनात् तथा हि प्रसंगः— कुसूलस्थबीजं यद्यंकुरसमर्थं स्यादङ्कुरं जनयेत् न च करोति, तस्मान्न समर्थमिति। विपर्ययश्च क्षेत्रस्थबीजं यद्यङ्कुरजननाऽसमर्थं स्यान्न कुर्यात्, करोति च तस्मान्नासमर्थमिति। आभ्यामेव कुसूलस्थक्षेत्रस्थबीजयोर्भेदसिद्धिः। तथा च क्षणिकत्वे एव पर्यवसानं बोध्यम्। प्रतिक्षण विनाशे किं कारणमिति चेद् न किञ्चिद् तदुक्तंशान्तिरक्षितेन।

तत्र ये कृतका भावा स्ते सर्वे क्षणभङ्गिनः<br>
विनाशं प्रति सर्वेषामनपेक्षतया स्थितिः<br>
यद्भावं प्रति यन्नैव हेत्वन्तरमपेक्षते<br>
तत्तत्र नियतं ज्ञेयं स्वहेतुभ्यस्तथोदयात्<br>
निर्निबन्धा हि सामग्री स्वकार्योत्पादने यथा<br>
विनाशं प्रति सर्वेऽपि निरपेक्षाश्च जन्मिन इति।

## जाति खण्डनम्

एवं सर्वं स्वलक्षण सर्वं स्वलक्षणमित्यपि भावनीयम्। न चायं भ्रमः। सकलस्यापि उच्चावचस्य स्वलक्षणतयैव सिद्धेः। घटः घट इत्यनुगतव्यवहारो हि जातिसिद्धौ मूलमिति तु रिक्तं वचः। तथा सति प्रमेयं अभिधेयमित्यनुगतव्यवहारेण प्रमेयत्वाऽभिधेयत्वादीनामपि जातित्वापत्तेः। अनुगतप्रतीतिबलात्सिद्ध्यमानाया जातेर्जाति बाधकसहस्रैरपि अपलपितुमशक्यत्वात्।

किं च पाचकत्वं नाम सामान्यमस्ति नवा। आद्ये प्रागेव तथाविधप्रत्यय प्रसंगात्। अन्त्ये पाचकः पाचक इति व्यवहारानुपपत्तिः। पाकक्रियानिबन्धनोऽनुगतव्यवहार इत्यपि न सांप्रतम्। क्रियायाः प्रतिव्यक्तिभिन्नत्वात्। अननुगतेनापि धर्मेणाऽनुगतव्यवहारोपपत्तौ किमपराद्धं व्यक्तिभिः। तदुक्तं—

न च पाचकादिबुद्धीनामस्ति किंचिन्निबन्धनम्
कर्मास्ति चेत्प्रतिव्यक्ति ननु तद्भिद्यते तथा
भिन्नेष्वन्वयिनोऽसत्त्वे न युक्ताऽन्वयिनोमतिरिति ।

किं च वृत्यनुपपत्तेश्च न वास्तवं सामान्यमस्ति । तथा हि एकत्र वर्त्तमानं सामान्यं नैकदेशेन वर्तते एकदेशाभावात् । कार्त्स्न्येन अन्यत्र वृत्यभावप्रसंगात् । तथा येनैवरूपेण एकत्र वर्तते तेनैवाऽन्यत्रापि स्वीकारे सर्वव्यक्तीनामैक्यप्रसंगः । अथ स्वरूपान्तरेण तर्हि स्वरूपभेदान्नानात्वं स्यात् । स्वभावान्तरनिवृत्तौ चाऽनेकत्र वृत्तित्वं विरुध्येत । किं च पिण्डोव्रजति न सामान्यं गच्छति निष्क्रियत्वात् । नाप्यवस्थानं पिण्डस्य तच्छून्यताप्रसगात् । न भागेन निरंशत्वात् नापि पश्चादागत्य संबध्यते पूर्वं तच्छून्यतयानुपलब्धेः । तदुक्तम् ।

न याति न च तत्रासीन्नचोत्पन्नं न चांशवत्
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ।

यत्कालमारभ्य गोत्वं गविवर्तते स एव गोरुत्पत्तिकालः, तत्पूर्वं गोरभावेन गोत्वं कुत आगत्य कुत्र स्यात् । न च गोत्वं गोभिन्ने वर्तते । गोत्वगोभेदयोरेकत्राऽसत्वनियमात् । यदि च गोरुत्पत्तिदेशे पूर्वत एव स्थित उत्पद्यमानगोशरीरमाश्रयते तदा तद्देशोपि गौरिति व्यवह्रियेत । न चोत्पन्नम् । नित्यत्वात् । ननु गोत्वं गव्येव वर्तते एकस्य गोरुत्पत्तेः पूर्वं अन्येषु गोषु वर्त्तते, तदुत्पत्ति पूर्वमपरेषु इति चेद्—निष्क्रियत्वात्पूर्वाऽऽधारत्यागाऽसंभवात् । पूर्वाश्रयभूते गवि अगौरयमिति व्यवहारप्रसंगाच्च । न चैकैकाश्रयनिरूपितजातिनिष्ठवृत्तित्वं एकदेशगतमिति वाच्यम् । जातेरेकदेशस्याऽभावात् । तदेवोक्तं न चांशवदिति ।

वस्तुतः सामान्याश्रयीभूतपदार्थस्यैवाऽभावात्कुत्र सामान्यं स्थास्यति ।

द्रव्यादिषु निषिद्धेषु जातयोपि निराकृताः
पदार्थत्रयवृत्ता हि सर्वास्ताः परिकल्पिता इति ।

तस्मादनेकदूषणग्रासान्न जातिनामकः कश्चन पदार्थः । सर्वं स्वलक्षणं सर्वं स्वलक्षणमिति भावनायाः प्रामाणिकत्वमुपपन्नम् । कथं तर्हि अनुगतव्यवहार इति चेद्—अन्यापोहनिबन्धन एव स इति गृहाण । घट इत्यनुगतबुद्धेर घटभेदविषयकत्वात्, भेदस्योभयवादिसिद्धतया जातेश्च नवीनायाः कल्पनीयतया न विनिगमनाविरहावसरः । तदुक्त —

"प्रसज्यप्रतिषेधश्च गौरगौर्नभवत्ययम्
अतिविस्पष्ट एवायमन्यापोहोऽवगम्यते इति ।

स्व लक्षणमन्यापोह इति चाऽनर्थान्तरम् । तथा चाऽगोव्यावृत्तधर्मस्य सकलगोसाधारणतया तस्यैव शक्त्यनुगमकत्वम् । अगोव्यावृत्तिधर्मस्य एकत्र गवि विद्यमानत्ववद् गोमात्रे सत्वात् । तदुक्तं—"यथा ह्येकोगौरगोव्यावृत्तस्तथाऽपरेपि गाव इति" । भवतां विधिरूपस्येव निषेधरूपस्यापि गोत्वस्य संकेतविषयत्वमस्माकम् ।

## शून्यत्वसाधनम्

एवं सर्वं शून्यं सर्वं शून्यमिति भावनाया प्रमात्वं बोध्यम्। सर्वं भाव-जालं शून्यमेव, अन्योन्याभावस्वरूपत्वात्। अभावस्याधिकरणरूपतयाऽभावत्वे-नैव सर्वेषां प्रतीतेः। प्रतीतिश्च घटः पटो न, घटे पटो नास्तीत्यादिरूपा। तथा च पारमर्षं सूत्रम्—"सर्वमभावः भावेषु इतरेतराभावसिद्धे" रिति।

व्यवहारे प्रमाविषयत्वेनोपलभ्यमानानां पदार्थानां स्वप्ने बाधदर्शनात्। स्वाप्निकानामत्र बाधदर्शनात् स्वप्नसृष्टेर्मिथ्यात्वमिव प्रपञ्चस्य मिथ्यात्वं बोध्यम्। ननु स्वाप्निकप्रपञ्चस्य न बहुकालपर्यन्तमनुवृत्तिः, व्यावहारिकस्य तु तथेति व्यावहारिक-प्रातिभासिकसत्ताभेदाङ्गीकारेण प्रातिभासिकस्यैव बाध्यत्वापरपर्याय मिथ्यात्वम्। व्यावहारिकस्य तु आब्रह्मदर्शनमनुवृत्तिरिति वेदान्तमतानुप्रवेश इति चेत्तर्हि सिद्धं ममापि मनोरथद्रुमेण। कालस्याऽनियामकत्वात्। तिमिरादिरोगोपहतस्याऽनल्प-निद्रस्य वा जनस्य बहुशः स्वाप्नसृष्टिप्रचारस्यैव दृष्टचरत्वात्, जगतः स्वप्नसमान-शीलत्वमेव।

यदुक्तं वेदान्तमतानुप्रवेश इति तन्नास्माकमनिष्टम्, जगतो यथाकथ-चित्स्वप्नापेक्षया उत्कृष्टसत्ताभ्युपगमेऽपि परमार्थतः सत्वं यथा वेदान्तिभिर्नाङ्गीक्रियते तथाऽस्माभिरपि। भेदस्तु इयानेव तैर्ब्रह्मणः परमार्थसत्वमिष्यते नास्माभिरिति।

एवं स्वप्ने जागरणे वा "न मया दृष्टं रजत" मित्यादिसमशीलप्रत्ययो-पपत्तिः ऋते सर्वशून्यत्ववादं न कर्तुं शक्यते तथा हि परैरत्र दर्शने रजतविषय-कत्वाभावः, रजतविषयकदर्शनाभावो वा आत्मनि प्रत्याय्यते। स चाऽनुपपन्नः। अहं रजतविषयकदर्शनाभाववानिति ज्ञानस्य रजतविषयकदर्शनवानिति ज्ञानप्रति-बन्धकतया तस्य च तन्मतानुसारेणाऽहमंशे प्रमात्वं रजतविषयकत्वांशे भ्रमत्वं स्थितम्। तत्रैकज्ञानस्यांशभेदेन प्रमात्वं भ्रमत्वं च न युक्तम्, ज्ञानं हि न घटादिरिव सावयवं वस्तु यत्तस्यांऽशादिकल्पना न्याय्या स्यात्। एवं रजतविषयकदर्शननिषेधे सर्वस्यापि निषेधो वक्तव्यः, अन्यथाऽर्धजरतीयत्वप्रसंगः। यदि भवन्मतानुसारे-णापि निषेध्यं रजतज्ञानं सत् तदा रजतं रजतत्वं-तत्संबन्धः-तद्विषयकत्वमित्यादि सर्वमपि वक्तुं पार्यते, न हि तत्तथेति सर्वस्यापि ज्ञानविषयस्य निषेध एवोचितः। एवं चाऽधिष्ठानस्यात्मनः—विशेष्यायाः शुक्तेः प्रकारीभूतस्य रजतस्य रजतत्वस्य च बाधात्सर्वत्रैव सर्वस्य बाधदर्शनात् "न मया किमपि" इति प्रत्ययबलात् 'नाहं किंचिदवेदिष" मिति प्रत्ययप्रामाण्याद्वा जगतः शून्यत्वसिद्धिः।

यद्वा यथाऽद्वैतवादिभिः प्रपंचस्य मिथ्यात्वं साध्यते, तथा अस्माभिरपि। संक्षेपतस्तत्प्रकारश्च प्रपञ्चस्तावन्न शशविषाणवदत्यन्ताऽसत् व्यावहारिकप्रत्यक्ष-विषयत्वात्। नापि सत् तत्वज्ञानेन बाध्यत्वात्। बाधश्चाऽत्र पक्षनिष्ठाभावप्रति-योगित्वम्, पक्षश्चस्वाश्रयत्वेनाऽभिमतो ग्राह्यः। स्वपदं च प्रपञ्चपरम्। एवं च

"अद्वैत मते" ब्रम्हण एव प्रपञ्चाधिष्ठानतया निधर्मकत्वेन प्रपञ्चाऽभाववत्तया च चैतन्यनिष्ठाऽभावप्रतियोगित्वं प्रपञ्चेऽस्तीति । तथा च प्रपञ्चो न सत् स्वाश्रयत्वेनाऽभिमत 'चैतन्य'निष्ठाभावप्रतियोगित्वात् शुक्तिरूप्यवत् । यथा तादात्म्येन रजत। श्रयत्वेनाभितायां शुक्तौ वर्तमानोऽभावस्तत्प्रतियोगित्वं रजतस्येति रजतं न सदिति। तथा च स्वात्यन्ताभावस्य स्वस्य चैकत्रवर्तमानतया प्रतीति स्वीक्रियते, तादृशप्रतीतिविषयत्वंबाध्यत्वं तदेव च मिथ्यात्वम्। एवं च प्रपंचो च सत् मिथ्यात्वात् शुक्तिरूप्यवदित्यनुमानं फलितम्। न च स्वरूपाऽसिद्धिः स्वाधिकरणे स्वात्यन्ताभाववृत्तेर्विरोधादिति वाच्यम् । नेहनानास्तिकिंचनेति श्रुत्या स्वस्मिन् स्वात्यन्ताभावसामानाधिकरण्यानुभवात् ।

एवं ब्रम्हभिन्नं सर्वं मिथ्या ब्रम्हभिन्नत्वादिति सामान्यानुमानेन घटो मिथ्या दृश्यत्वादिति विशेषानुमानेन वा घटादीनां सर्वेषां पदार्थानां मिथ्यात्वसिद्धौ सर्वशून्यतायां पर्यवसानम्। न च यदि सर्वं शून्यमेव तदा सकलोपि प्रेक्षावतां व्यवहारः कथमुपपद्यतामिति वाच्यम्। तस्य युष्माकमिवास्माकमपि अविद्यावासनामूलकत्वादिति ।

तथा च सर्वं शून्यं सर्वं शून्यमिति भावनायां हेयोपादेयतत्साधनविरहे द्वेषभयरागादिविरहे परमानिर्वृतिर्भवतीति शून्यवादिनां सिद्धान्तः ।

सर्वं दुःखं सर्वं दुःखमिति भावनायां वादिनामविवाद, एवेति ध्येवम्।

## योगाचारमतम्

योगाचारमतावलंबिनामयमाशयः, माध्यमिकमते या धीर्जगतः शून्यतामापादयति सा धीः अवश्यं स्वीकर्तव्या, अन्यथा शून्यस्य निःसाक्षिकत्वापत्तेः। अतएव योगाचाराः विज्ञानवादिनः, एतन्मते विज्ञानमेवाऽनादिवासनावशादनेकाकारमवभासतेविज्ञानस्वरूपावगमश्च योगादिसाध्य इति योगस्याऽऽचारस्य चाऽऽश्रयणाद् योगाचार इति नाम्ना कथ्यते। एते विज्ञानमेव पारमार्थिकं स्वीकुर्वन्ति। चित्तंमनोबुद्धिरिमे पर्यायाः । तदुक्तम् ।

चित्तं मनश्च विज्ञानं संज्ञावैकल्यवर्जिताः
विकल्पधर्मतां प्राप्ताः श्रावकाः न जिनात्मजाः इति ।

अपि च माध्यमिकमते वादिना विचारावसरे वादिन आशयं बुद्ध्वा तत्खण्डने शून्यवादो दत्ताञ्जलिः स्यात्। शून्यस्यैव प्रमाणत्वे वादे माध्यमिकानामधिकारो न स्यात्। तदुक्तम्

त्वयोक्तसर्वशून्यत्वे प्रमाणं शून्यमेव ते
अतोवादेऽधिकारस्ते न परेणोपपद्यते ।
स्वपक्षस्थापनं तद्वत्परपक्षस्य दूषणम्
कथं करोत्यत्र भवान् विपरीतं वदेन्न किमिति ।

तथा च विज्ञानसत्तैव परमार्थिकी। तदुक्तं "गुरूक्तं भावनाचतुष्टयम्, बाह्या-

## शून्यत्वसाधनम्

एवं सर्वं शून्यं सर्वं शून्यमिति भावनायाः प्रमात्वं बोध्यम्। सर्वं भाव-जालं शून्यमेव, अन्योन्याभावस्वरूपत्वात्। अभावस्याधिकरणरूपतयाऽभावत्वे-नैव सर्वेषां प्रतीतेः। प्रतीतिश्च घटः पटो न, घटे पटो नास्तीत्यादिरूपा। तथा च पारमर्षं सूत्रम्—"सर्वमभावः भावेषु इतरेतराभावसिद्ध" रिति।

व्यवहारे प्रमाविषयत्वेनोपलभ्यमानानां पदार्थानां स्वप्ने बाधदर्शनात्। स्वाप्निकानामत्र बाधदर्शनात् स्वप्नसृष्टेर्मिथ्यात्वमिव प्रपञ्चस्य मिथ्यात्वं बोध्यम्। ननु स्वाप्निकप्रपञ्चस्य न बहुकालपर्यन्तमनुवृत्तिः, व्यावहारिकस्य तु तथेति व्यावहारिक-प्रातिभासिकसत्ताभेदाङ्गीकारेण प्रातिभासिकस्यैव बाध्यत्वापरपर्यायं मिथ्यात्वम्। व्यावहारिकस्य तु आब्रह्मदर्शनमनुवृत्तिरिति वेदान्तमतानुप्रवेश इति चेत्तर्हि सिद्धं ममापि मनोरथद्रुमेण। कालस्याऽनियामकत्वात्। तिमिरादिरोगोपहतस्याऽनल्प-निद्रस्य वा जनस्य बहुशः स्वाप्नसृष्टिप्रचारस्यैव दृष्टचरत्वात्, जगतः स्वप्नसमान-शीलत्वमेव।

यदुक्तं वेदान्तमतानुप्रवेश इति तन्नास्माकमनिष्टम्, जगतो यथाकथं चित्स्वप्नापेक्षया उत्कृष्टसत्ताभ्युपगमेऽपि परमार्थतः सत्त्वं यथा वेदान्तिभिर्नाङ्गीक्रियते तथाऽस्माभिरपि। भेदस्तु इयानेव तैर्ब्रह्मणः परमार्थसत्त्वमिष्यते नास्माभिरिति।

एवं स्वप्ने जागरणे वा "न मया दृष्टं रजत" मित्यादिसमशीलप्रत्ययो-पपत्तिः ऋते सर्वशून्यत्ववादं न कर्तुं शक्यते तथा हि परैस्तत्र दर्शने रजतविषय-कत्वाभावः, रजतविषयकदर्शनाभावो वा आत्मनि प्रत्याय्यते। स चाऽनुपपन्नः। अहं रजतविषयकदर्शनाभाववानिति ज्ञानस्य रजतविषयकदर्शनवानिति ज्ञानप्रति-बन्धकतया तस्य च तन्मतानुसारेणाऽहमंशे प्रमात्वं रजतविषयकत्वांशे भ्रमत्वं स्थितम्। तत्रैकज्ञानस्यांशभेदेन प्रमात्वं भ्रमत्वं च न युक्तम्, ज्ञानं हि न घटादिरिव सावयवं वस्तु यत्तस्यांऽशादिकल्पना न्याय्या स्यात्। एवं रजतविषयकदर्शननिषेधे सर्वस्यापि निषेधो वक्तव्यः, अन्यथाऽर्धजरतीयत्वप्रसंगः। यदि भवन्मतानुसारे-णापि निषेध्यं रजतज्ञानं सत् तदा रजतं रजतत्वं-तत्संबन्धः - तद्विषयकत्वमित्यादि सर्वमपि वक्तुं पार्येत, न हि तत्तथेति सर्वस्यापि ज्ञानविषयस्य निषेध एवोचितः। एवं चाऽधिष्ठानस्यात्मनः-विशेष्यायाः शुक्तेः प्रकारीभूतस्य रजतस्य रजतत्वस्य च बाधात्सर्वत्रैव सर्वस्य बाधदर्शनात् "न मया किमपि" इति प्रत्ययबलात् 'नाहं किंचिदवेदिष" मिति प्रत्ययप्रामाण्याद्वा जगतः शून्यत्वसिद्धिः।

यद्वा यथाऽद्वैतवादिभिः प्रपञ्चस्य मिथ्यात्वं साध्यते, तथा अस्माभिरपि। संक्षेपतस्तत्प्रकारश्च प्रपञ्चस्तावन्न शशविषाणवदत्यन्ताऽसत् व्यावहारिकप्रत्यक्ष-विषयत्वात्। नापि सत् तत्त्वज्ञानेन बाध्यत्वात्। बाधश्चाऽत्र पक्षनिष्ठाभावप्रति-योगित्वम्, पक्षश्च स्वाश्रयत्वेनाऽभिमतो ग्राह्यः। स्वपदं च प्रपञ्चपरम्। एवं च

"अद्वैत मते" ब्रम्हण एव प्रपञ्चाधिष्ठानतया निधर्मकत्वेन प्रपञ्चाऽभाववत्तया च चैतन्यनिष्ठाऽभावप्रतियोगित्वं प्रपञ्चेऽस्तीति । तथा च प्रपञ्चो न सन् स्वाश्रयत्वेनाऽभिमत 'चैतन्य'निष्ठाभावप्रतियोगित्वात् शुक्तिरूप्यवत् । यथा तादात्म्येन रजत। श्रयत्वेनाभिताया शुक्तौ वर्तमानोऽभावस्तत्प्रतियोगित्वं रजतस्येति रजतं न सदिति। तथा च स्वात्यन्ताभावस्य स्वस्य चैकत्रवर्तमानतया प्रतीति स्वीक्रियते, तादृशप्रतीतिविषयत्वंबाध्यत्वं तदेव च मिथ्यात्वम्।एवं च प्रपंचो च सत् मिथ्यात्वात् शुक्तिरूप्यवदित्यनुमानं फलितम्। न च स्वरूपाऽसिद्धिः स्वाधिकरणे स्वात्यन्ताभाववृत्तेर्विरोधादिति वाच्यम् । नेहनानास्तिकिंचनेति श्रुत्या स्वस्मिन् स्वात्यन्ताभावसामानाधिकरण्यानुभवात् ।

एवं ब्रम्हभिन्नं सर्वं मिथ्या ब्रम्हभिन्नत्वादिति सामान्यानुमानेन घटो मिथ्या दृश्यत्वादिति विशेषानुमानेन वा घटादीनां सर्वेषां पदार्थानां मिथ्यात्वसिद्धौ सर्वशून्यतायां पर्यवसानम्। न च यदि सर्वं शून्यमेव तदा सकलोपि प्रेक्षावतां व्यवहारः कथमुपपद्यतामिति वाच्यम्। तस्य युष्माकमिवास्माकमपि अविद्यावासनामूलकत्वादिति ।

तथा च सर्वं शून्यं सर्वं शून्यमिति भावनायां हेयोपादेयतत्साधनविरहे द्वेषभयरागादिविरहे परमानिर्वृतिर्भवतीति शून्यवादिनां सिद्धान्तः ।

सर्वं दुःखं सर्वं दुःखमिति भावनायां वादिनामविवाद, एवेति ध्येयम् ।

## योगाचारमतम्

योगाचारमतावलंबिनामयमाशयः, माध्यमिकमते या धीर्जगतः शून्यतामापादयति सा धीः अवश्यं स्वीकर्तव्या, अन्यथा शून्यस्य निःसाक्षिकत्वापत्तेः। अतएव योगाचाराः विज्ञानवादिनः, एतन्मते विज्ञानमेवाऽनादिवासनावशादनेकाकरमवभासतेविज्ञानस्वरूपावगमश्च योगादिसाध्य इति योगस्याऽऽचारस्य चाऽऽश्रयणाद् योगाचार इति नाम्ना कथ्यते। एते विज्ञानमेव पारमार्थिकं स्वीकुर्वन्ति। चित्तंमनोबुद्धिरिमे पर्यायाः । तदुक्तम् ।

'चित्तं मनश्च विज्ञानं संज्ञावैकल्यवर्जिताः
विकल्पधर्मतां प्राप्ताः श्रावकाः न जिनात्मजाः इति ।

अपि च माध्यमिकमते वादिना विचारावसरे वादिन आशयं बुद्ध्वा तत्खण्डने शून्यवादो दत्ताञ्जलिः स्यात्। शून्यस्यैव प्रमाणत्वे वादे माध्यमिकानामधिकारो न स्यात्। तदुक्तम्

स्वयोक्तसर्वशून्यत्वे प्रमाणं शून्यमेव ते
अतोवादेऽधिकारस्ते न परेणोपपद्यते ।
स्वपक्षस्थापनं तद्वत्परपक्षस्य दूषणम्
कथं करोत्यत्र भवान् विपरीतं वदेन्न किमिति ।

तथाच विज्ञानसत्तैव परमार्थिकी। तदुक्तं "गुरूक्तं भावनाचतुष्टयम्, बाह्या-

र्थस्य शून्यत्वं चाऽङ्गीकृतम्, अङ्गीकृतं चाऽऽन्तरस्य शून्यत्वम्। कथमिति पर्यनुयोगस्य करणाद्योगाचारप्रथा। बाह्यार्थश्च विज्ञानस्य विवर्तएव। तदुक्तम्।

चित्तं प्रवर्तते चित्त चित्तमेव विमुच्यते।
चित्तं हि जायते नान्यत् चित्तमेव निरुद्धयते।
दृश्यतेविद्यते बाह्यं चित्तं चित्तं हि दृश्यते।
देहभोगप्रतिष्ठान चित्तमात्रं वदाम्यहम्।
चित्तमात्रं न दृश्योऽस्ति द्विधा चित्तं हि दृश्यते।
ग्राह्यग्राहकभावेन शाश्वतोच्छेदवर्जितम्।
अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते।
बुद्धिस्वरूपमेकं हि वस्त्वस्ति परमार्थत।
प्रतिभानस्य नानात्वान्नचैकत्वं विहन्यते इति।

एषा हि तेषां परिभाषा। स्वयं वेदनं तावदङ्गीकार्यम् अन्यथा जगदान्ध्यं प्रसज्येत, विज्ञानस्य क्षणिकत्वं तावत्सत्त्वेनोपेयम्। अतएव क्षणिकविज्ञानवादिन इमे।

तत्र विज्ञानं द्विविधम्, प्रवृत्तिविज्ञान आलयविज्ञानं च तत्र प्रवृत्तिविज्ञानं अयं घट इत्याद्याकारकम् तच्च चक्षुर्विज्ञान-श्रोत्रविज्ञान-घ्राणविज्ञान-जिह्वाविज्ञान कायविज्ञान मनोविज्ञानभेदात्सप्तविधम्।

आलयविज्ञानं तु अहमित्याकारकम् तदेवाऽऽत्मा सर्वसांक्लेशिकधर्मबीज स्थानत्वादालयः। आलयः स्थानमितिचाऽनर्थान्तरम्, अथवा आलीयन्ते उपनिबध्यन्तेऽस्मिन् सर्वधर्माः कार्यभावेन। यद्वा आलीयते उपनिबध्यते कारणभावेन सर्वधर्मेषु इत्यालयः( त्रिंशिकाभाष्ये )यथा समुद्रे पवनप्रेरिता वीचयो नृत्यन्ति कदाचिदपि न विश्रान्ति भजन्ते, तथैवाऽऽलयविज्ञाने विषयपवनप्रेरिताः प्रवृत्तिविज्ञानतरङ्गाः नृत्यन्ति न कदाचिदपि विश्रान्ति भजन्ते। तदुक्तम्

तरङ्गा उदधेर्यद्वत्पवनप्रत्ययेरिता।
नृत्यमानाः प्रवर्तन्ते व्युच्छेदश्च न विद्यते।
आलयौघस्तथा नित्यं विषयपवनेरितः।
चित्तैस्तरङ्गविज्ञानैर्नृत्यमानः प्रवर्तते इति।

अद्वैतमतवदेतन्मतेपि व्यावहारिकसत्तां पारमार्थिकसत्तां चाऽभ्युपगम्याऽध्यारोपापवादन्यायेन सर्वे व्यवहाराः संपादनीयाः अद्वैतमतादविशेष इति तु नाशंकनीयम्, तन्मते विज्ञानं नित्यम्, एतन्मते क्षणिकं विज्ञानसन्तानप्रवाहाऽविच्छेदरूपं चेति विशेषः।

एतन्मते अनुपप्लवा चित्तसन्ततिर्मोक्षः। उपप्लवः संसार, प्रवृत्तिविज्ञानमिति यावत्।' तद्भिन्ना-आलयविज्ञानसन्ततिरिति यावत्। चिन्तामणिकृतस्तु उपप्लवो दुःखं तदभावविशिष्टेत्यर्थः। उपप्लवपदस्य प्रवृत्तिविज्ञानपरत्वे दुःखहेतु-

रुपप्लवः। सर्वथापि मुक्तिदशायां दुःखनिवृत्तिः। तदुक्तम्-प्रागुक्तभावनाप्रचय-बलान्निखिलवासनोच्छेदविगलितविषयाकारोपप्लवविशुद्धज्ञानोदयो महोदय इति।

## —सौत्रान्तिकमतम्—

भवन्तः सूत्रस्यान्तं पृष्टवन्त इति "सौत्रान्तिका भवन्तु" इति भगवताऽभिहिततया सौत्रान्तिका इत्युच्यन्ते। तदुक्तं यशोमित्रेण "कः सौत्रान्तिकार्थः-ये सूत्रप्रमाणकाः न तु शास्त्रप्रमाणकाः ते सौत्रान्तिकाः" इति। सौत्रान्तिकास्तु एवमाहुः- यदुक्तं वाह्यवस्तुजातं तन्नास्ति, किन्तु विज्ञानविलसितमात्रम्-तदयुक्तम्-ज्ञानस्य ज्ञेयतोभेदस्य स्पष्टं प्रतिभासनात्। सहोपलम्भविषयोऽभेद साधक इति चेत् नहि सहोपलंभमात्रेणाऽभेदः सुसाध्यः। ज्ञानस्यान्तर्देशत्वात् वाह्यस्य च वहिर्देशत्वात्। अहंज्ञानमिति प्रतिभासाभावाच्च वाह्याऽभ्यन्तरेत्यादिविभिन्नसंज्ञाप्रचारवलाच्च। वाह्यस्याऽन्तराद्भेदेनावस्थानस्यावश्याभ्युपेयत्वात्। तस्माद् वाह्यं नास्त्येवेति न वक्तुं सुशकम्।

परन्तु विषयो न प्रत्यक्षो, ज्ञानकाले तस्याऽसत्त्वात्। असत्वं च क्षणिकत्वात्। ज्ञानविषययोर्भिन्नकालतया कथं विषयप्रत्यक्षोपपत्तिरिति चेत्। इन्द्रियसन्निकृष्टो घटादिर्द्वितीयक्षणे स्वजातीयंघटान्तरमुत्पादयति, तदीयश्चाऽऽकारस्तत्क्षणोत्पन्ने ज्ञाने समर्प्यते यतोघटइत्याकारकं ज्ञानमित्यादिप्रत्ययः। तेन च समर्पिताकारेण पूर्वक्षणे विद्यमानोघटोनुमीयते। इयमेव सरणिः सर्वत्रोपादेयेति वाह्यार्थः सर्वोपि अनुमेय एवेति।

सर्वं जगत्-दुःखं, दुःखायतनम्, दुःखसाधनमिति त्रिधा विभज्यते। एवं च जगतो दुःखात्मकत्वाद्धेयता। तन्निरोधार्थं तत्वज्ञानं संपादनीयम्। तत्वानि चाऽऽर्यसत्यानि। एवं च तत्वज्ञानात्तादृशदुःखतत्साधन निरोधानन्तरं विमलज्ञानोदयो मोक्ष इति।

## आर्यसत्यानि

सर्वेषामपि तत्वानां तत्वज्ञानोपयोगितया पदार्थानां चतुर्धा भेदमाकलय्य तदानीं भिक्षवउपदिष्टाः। तानिखलु चत्वारि तत्त्वानि आर्यसत्यानीति बौद्धागमे प्रसिद्धानि। ते च भेदाः-दुखं-दुःखसमुदयः—निरोधोमार्गश्चेति।

आर्यसत्यानां विशेषतोविमर्शः।

१ तत्र, प्रतिकूलवेदनाविषयत्वोपलक्षिताः पदार्था दुःखम् तच्च पञ्चविधम्-पञ्चस्कन्धात्मकम्। स्कन्धाश्चाग्रे प्रदर्शयिष्यन्ते।

२ दुःखसमुदयो दुःखस्योत्पत्तिसाधनम्। समुदयः कारणम्। दुःखानां समुदयो दुःखसमुदयः, दुःखकारणमित्यर्थः। दुःखकारणन्तु तृष्णा, प्रकारश्च। स च प्रकारो यद्यपि पदार्थेभ्यो नातिरिच्यते-तथापि तत्वविज्ञानाय प्रकारस्य विशेषतो ज्ञानाय स्वतन्त्रोद्देशः। "सुखदुःखोपभोगः" तृष्णा उत्तरोत्तरं

संसारयति विज्ञानप्रवाहम्। सर्वेषां अङ्कुरघटपटादीना पदार्थानां च समुदयः। तृष्णात्रिविधा। कामतृष्णा-विषयेच्छारूपाऽऽद्या। द्वितीयाभवतृष्णा-संसारस्थितीच्छारूपा। विभवतृष्णा तृतीया। विभवोनाश, अर्थात्संसारस्यैव, संसारनाशेच्छेति यावत्। सापि दुःखकारणम्। एतामवलंब्यैव "यावज्जीवेत्सुख जीवेद्" त्यादयश्चार्वाकोक्तयः।

दुःखसमुदयो द्विविधः। हेतूपनिबन्धः—प्रत्ययोपनिबन्धश्च। प्रथमोयथा-बीजादङ्कुरः—अङ्कुरात्कांडम्, काण्डात्पत्रम्, एवमादिरूपेण। अपरस्तु बाह्यधातुसमवायः। यथा पृथिवीधातुर्बीजस्य सन्धारणं करोति। अब्धातुः स्नेहयति। तेजोधातुः परिपाचयति। वायुस्तु धातुर्बीजमभिनिर्हरति। अत एव सर्व एव भावाः प्रतीत्यसमुत्पादाः प्राप्य कारणं सपदि पदार्था उत्पद्यन्ते इति प्रतीत्यसमुत्पादाः।

३ दुःखनिरोधः—तृष्णानाशः। निरोधो नाम परंपराविच्छेदः। जीवन्मुक्ताऽपरपर्यायं निर्वाणं मोक्ष इति। यद्यपि अयमपि परंपराविरामो नातिरिच्यते पदार्थः, तथापि दुःखभीतस्य निर्विण्णस्य विश्रामार्थं हि विश्रामस्थाननिर्देशाभिप्रायेण स्वतन्त्रोपदेशः। अयि भिक्षो संसारप्रवाहान्निर्विद्य प्राप्स्यसि किलाऽहंकारानास्पदं स्थानम्।

४ मार्गः—धर्मानुकूलस्तत्त्वज्ञानोपयोगिभूत आचारः। स च मार्गोऽष्टविधः सम्यग्दृष्टिः, सम्यक्संकल्पः, सम्यग्वाक्, सम्यक्कर्मान्तः, सम्यगाजीवनम्, सम्यग्व्यवसायः, सम्यक्स्मृतिः, सम्यक्समाधिश्चेति मार्गोऽयमष्टाङ्गिकमार्गशब्देनोच्यते।

(क) सम्यग्दृष्टिः—सम्यग्ज्ञानम्। कुशलाऽकुशलकर्मज्ञानवान्। कर्म च त्रिविधम् कायिकवाचिकमानसिकभेदात्।

कायिककुशलकर्माणि—अहिंसाऽस्तेयाऽव्यभिचाराः।
कायिकाऽकुशलकर्माणि—हिंसाचौर्यव्यभिचाराः।
वाचिककुशलकर्माणि—अप्रलापाऽमिथ्याभाषणाऽपैशुन्याऽकटुवचनानि।
वाचिकाऽकुशलकर्माणि—प्रलापमिथ्याभाषणपैशुन्यकटुवचनानि।
मानसिककुशलकर्माणि—अलोभाप्रतिहिंसाऽमिथ्यादृष्टयः।
मानसिकाऽकुशलकर्माणि—लोभप्रतिहिंसामिथ्यादृष्टयः।

इदमत्रावधेयम्। तत्त्वज्ञानेन सर्वाऽनर्थहेतुभूतायास्तृष्णायाःकारणीभूताऽविद्यानिवृत्तौ परमशान्तिमधिगच्छति। भगवतः सौगतस्यापि "ऋतेज्ञानान्नमुक्तिरित्यौपनिषत्सिद्धान्ताभिमतत्वात्। किन्तु केवलशाब्दज्ञानेन वाग्विलासेन वा न शान्तिर्भवति किन्तु, आचारपुष्टीकृतज्ञानेनैव, अत आचारसमन्वितमेव ज्ञानं तात्त्विकम्। यस्य च ज्ञानिनो जीवनं सदाचारभित्तौ नावलंबितं तस्य ज्ञानं विडम्बनमेव, स स्वात्मानं परात्मानं चाऽवसादयतीति, किं बहुना संसारमेव प्रतारयतीति।

(ख) सम्यक्संकल्पः—सम्यङ्निश्चयः। निष्कामता विषयस्य। अद्रोहस्य च भावनं सर्वभूतेषु।

(ग) सम्यग्वचनम्—मितभाषणम्।

(घ) सम्यककर्मान्तः—पंचशीलकर्मानुष्ठानम्। पंचशीलकर्माणि च अहिंसा-सत्यं-अस्तेयः-ब्रम्हचर्यं-सुरापरित्यागश्च। अन्यानि च पंचकर्माणि भिक्षुभ्य उपदिष्टानि।

अपराण्हभोजनत्यागः। मालाधारणत्यागः। संगीतत्यागः। "अमूल्यशय्या-त्यागश्चेति। (च) सम्यगाजीविका-सदाजीवनम्। (छ) सम्यग्व्यवसायः—सत्प्रयत्नः। (ज) सम्यकस्मृतिः—यथावत्स्मरणम्। चत्वारि स्मृतिप्रस्थानानि—कायानुपश्यता। वेदनानुपश्यता। चित्तानुपश्यता। धर्मानुपश्यता। रुधिरमांसास्थि-मलमूत्रादिमयं कायं स्मरतस्तत्र नासक्तिः। एवं सुखदुःखादिरूपवेदनामनुस्मरतस्तत्र नाऽसक्तिः। अनासक्तं चित्तमनुस्मरतोवैराग्यधारा जायते। (झ) सम्यकसमाधिः—चित्तैकाग्रता। तदयं निष्कर्षः—सम्यग्दृष्टि सम्यकसंकल्पौ प्रज्ञापदवाच्यौ। सम्यग्वाक् सम्यककर्मान्त-सम्यगाजीविकाः शीलपदवाच्याः। सम्यग्व्यवसाय, सम्यकस्मृति-सम्यकसमाधयः समाधिपदवाच्याः। अत्रशीलेनकायशुद्धिः। समाधिना चित्तशुद्धिः। शुद्धे चेतसि ज्ञानप्राप्तिः। ततः शान्तिमधिगच्छति।

अत्रफलहेत्वोर्द्रव्यादिषु अन्तर्भावः। साक्षात्कारश्च ज्ञानमेव। क्षणिकत्वे परं विरोधः क्लेशशून्यता स्वभाव एवेति न पदार्थान्तरं न्यायस्वीकृतादाय ति इति।

## वैभाषिकमतम्

विभाषा नामिका काचिद्वृत्तिः तामाश्रित्य प्रवृत्तोऽयं संप्रदायो वैभाषिकः। विभाषयाचरन्तिवावैभाषिकाः। प्रत्यक्षं क्षणभङ्गुरं चेति विरुद्धा भाषा तां वदन्ति वा-वैभाषिकाः उक्थादित्वाट्ठक्। तेषामयमाशयः। बाह्यार्थस्यानुमेयत्वं यत्सौत्रान्ति कैरुक्तम् तन्न युक्तम्। विज्ञेयरूपस्य साध्यस्य सिद्धयर्थं अनुमितिसामग्रीभूताव्याप्तिः कथं गृह्यते इत्यपि वक्तव्यम्। साप्यनुमानेनेति चेद्—अनवस्थापातु,। नापि प्रमाणान्तरेण—अनभ्युपगमात्। एवं "मयाऽत्रभूलले घटो दृष्टो,नत्वनुमितः" इति सार्वजनीनोऽनुभवोविरुध्येत। तस्माद्बाह्यार्थःप्रत्यक्ष एवेति,अन्यत्सौत्रान्तिकमत-वदिति संक्षेपः।

## बौद्धमतेचआत्मस्वरूपम्

तन्मतेहि—रूप—विज्ञान—वेदना—संज्ञा संस्काराःपञ्चस्कन्धाः। तत्र श्रोत्रत्वकच-क्षुर्जिव्हाघ्राणाख्यानि पंचेन्द्रियाणि शब्दस्पर्शरूपरसगन्धाः पंचविषया। अविज्ञप्तिश्चेत्येकादश रूपस्कन्धाः। अविज्ञप्तिः शरीरम्। रूप्यन्ते विषया एभिः, रूप्यन्ते इति वा रूपाणीति व्युत्पत्त्या रूपपदमिन्द्रिय-शरीर-विषयपरम्। पृथिवी जलतेजोवाय्वाकाशानां धातुसंज्ञा। एतेषां रूपस्कन्धान्तर्गतत्वं बोध्यम्।

विज्ञानस्कन्धःसर्वं बाह्यान्तरज्ञानम्। तथाहि द्विविधं विज्ञानं प्रवृत्तिविज्ञान मालयविज्ञानं च तत्र श्रावणज्ञानादिभेदभिन्नं घटादि विषयभेदेन च भिन्नमनेक-विधं प्रवृत्तिविज्ञानम्। इदमिप्याकारकम्। प्रवृत्तिविज्ञानस्यैव प्रवाहः संसारः। अह-

मित्याकारंसततानुवर्त्तमानं विज्ञानमालयविज्ञानम्। द्विविधविज्ञानयोरनारतप्रवाहो विज्ञानस्कन्धः। अतएव "विज्ञानस्कन्धोऽहमित्याकारो,रूपादिविषय इन्द्रियजन्यो वा दण्डायमानः" इति वाचस्पतिमिश्रा.। "अहमित्याकारमालयविज्ञानं, इन्द्रिय जन्यज्ञानं, एतद्द्वयं दण्डायमानं प्रवाहापन्नंविज्ञानस्कन्ध. इत्यर्थः" इतिकल्पतरौ।

वेदनास्कन्धः—सुखंदु खं-उपेक्षा च। विज्ञानस्कन्धस्य रूपस्कन्धेन सह संपर्कात् "दुष्टादनिष्टात्तदुभयरहिताच्च" सुखस्य दुःखस्य उपेक्षायाश्चावस्थाविशेषो वेदनास्कन्धः।

संज्ञास्कन्धः—घटःपटः इत्यादिसञ्ज्ञोल्लेखिसंवित्सन्तान। अयं च सविकल्परूपो-विज्ञानस्कन्धोनिर्विकल्पकरूपइत्यनयोर्विशेष.।

संस्कारस्कन्धः—सुखदुःखसंवेदनजनिताः—रागद्वेषमदमानमोहादयः। धर्मा धर्मौ च संस्काररूपेण वर्त्तमानौ। इमे पंचस्कन्धाः। रागादयो यस्मादुदियन्ति स समुदयपदाऽभिधेय, आत्माविज्ञानरूपःक्षणिक इति।

इदमत्रावधेयम्। एतेपि पदार्था न कणादमतमतिक्रामन्ति। इन्द्रियादीनां द्रव्यादिषु अन्तर्भावात्। सञ्ज्ञाभेदमात्रस्य स्वतन्त्रेच्छत्वेन करणात्। सामान्यतो बौद्धानामपि मतभेदः प्रत्यक्षाऽप्रत्यक्षत्वविषये, सांवृतत्वाऽसांवृतत्वविषयेवाऽस्ति। पदार्थस्थितिः समानैव।

अयमत्र विभागः। सर्वोऽस्तित्वमित्येके। सर्वकाल्पनिकत्वमित्यन्ये। सर्वशून्यत्वमित्यपरे। सर्वास्तित्ववादिनो वैभाषिकाः सौत्रान्तिकाश्च। "तत्र ते सर्वाऽस्तित्ववादिनो बाह्यमाभ्यन्तरं च वस्तु अभ्युपगच्छन्ति, भूतं च भौतिकं च चित्तं च चैत्त च" इति शांकरभाष्ये। भामत्यां-"यद्यपि वैभाषिकसौत्रान्तिकयोरवान्तरभेदोस्ति तथापि सर्वास्तितायामस्ति संप्रतिपत्तिरित्येकीकृत्योपन्यास" इति। एवमन्योऽपरश्च योगाचारमाध्यमिकाविति।

निरूपिताः प्रमेयाः। तत्साधकीभूतप्रमाणद्वयमेव-प्रत्यक्षमनुमानं च। विषयश्च प्रत्यक्षपरोक्षभेदेन "स्वलक्षणविषय सामान्यविषयभेदेन" द्विविधः।

तत्र प्रत्यक्षे स्वलक्षणात्मनि विषये प्रत्यक्षं प्रवर्तते, परोक्षे तु सामान्याकारे अनुमानम्। तदुक्तम्—

> ते हि प्रमेयद्वैविध्यात्प्रमाणं द्विविधं जगुः।
> नान्यः प्रमाणभेदस्य हेतुर्विषयभेदतः
> प्रमाणद्वयसिद्धे च विषयद्वयवेदने
> वद करणानुरोधेन तृतीयं मानमिष्यतामिति।

प्रत्यक्षं स्वलक्षणविषयं भवति। लक्ष्यते तावदन्यान्यत्वेनाऽवधार्यते तत्राऽग्न्यादिकमनेन उष्णत्वादिनेति लक्षणं-असाधारणो धर्मः। स्वं च तल्लक्षणं चेति स्वलक्षणम्। किं वा स्वस्य वस्तुनोलक्षणमिति। तद्विषयो "गोचरो" यस्य प्रत्यक्षस्यतत्तथा।

अयमाशयः—वस्तुनः असाधारणतया सामान्यतया च द्वैविध्यं भवति। तत्र प्रथममक्षसन्निपाते एकक्षणावस्थायि वस्त्वसाधारणरूपं सजातीयेतरव्यावृत्तं स्वलक्षण संज्ञितं प्रत्यक्षस्य ग्राह्यम्। गृहीतसन्तानश्च प्रत्यक्षपृष्ठभाविनो विकल्पस्याऽ-ध्येवसेयः। इतरच्च यत्सामान्यं साधारणं विकल्पज्ञानावभासिवस्तुनोरूपं तदनुमानस्य विषयः।

## —प्रत्यक्षलक्षणम्—

तत्र प्रत्यक्षं कल्पनाऽपोढम्। कल्पना अपोढा अपेतायस्मात्तत्कल्पना-पोढम्। अथवा कल्पनया अपोढम्, कल्पनाया वा अपोढं कल्पनापोढम्। यद्ज्ञानं नामजातिगुणक्रियाद्रव्यकल्पनाभीरहितमित्यर्थः। नामकल्पना-यथा डित्थइति। जातिकल्पना गौरिति। गुणकल्पना शुल्क इति। क्रिया कल्पना पाचक इति। द्रव्यकल्पना दण्डीति। तच्च प्रत्यक्षं स्पर्शन रसनघ्राणचक्षुः श्रोत्रमनोभेन षड्विधम्।

## अनुमानलक्षणम्

अनुमानं लिंगदर्शनम्। तस्मात्त्रिरूपाल्लिङ्गाद्यदनुमेयेर्थेधर्मिणिज्ञान-मुत्पद्यते साऽनुमितिः लिंगं च त्रिरूपम्। पक्षसत्व-सपक्षसत्त्व-विपक्षाऽसत्वानि। प्रथमंलिंगज्ञानं "पक्षधर्मतात्मकम्"। ततोव्याप्तिस्मरणम्। व्याप्तिश्च कार्यकारण भावात्-तादात्म्याच्च जायते। तदुक्तम्।

> कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
> अनिाभावनियमोऽदर्शनान्न न दर्शनात् इति।

अयमर्थः—कार्यकारणभावान्नियामकात्, "स्वभावात्" तादात्म्याद्वा नियामकादविनाभावनियमो-"व्याप्ति" विपक्षेऽदर्शनान्न, सपक्षेदर्शनादपिनेति। न व्यतिरेकदर्शनात्, नाप्यन्वदर्शनादितिभावः अर्थात् बौद्धानांमते अविनाभाव एव व्याप्तिरितियावत्। तथा च कार्यस्वभावभेदाद्द्विविधमनुमानम्। यत्तु अनुपलब्धिभेदात्त्रैविध्यमनुमानस्येति। तन्न, स्वभावेऽन्तर्भावात्। यतः केवलं भूतलं घटाभावस्य स्वरूपम्, नाऽपरोऽभावः कश्चिदस्तीति। पुनरपि द्विविधम्-स्वार्थं परार्थं च। अयमत्रसंग्रहः—यथाबौद्धानांमते अविनाभावरूपाव्याप्तिः स्वीक्रियते तथा गौतममते, एवं वात्स्यायनमते, अथचव्योमशिवाचार्यमतेऽपि अविनाभावरूपैव व्याप्तिः स्वीकृतावर्त्तते। वह्निंविना धूमस्य अवर्त्तमानत्वमेव अविनाभावशब्दार्थः। मीमांसकानांनये "अव्यभिचरितः सम्बन्ध" एव व्याप्तिः।

एवम् उदयनाचार्य तथा शंकरमिश्रमते "अनौपाधिकः सम्बन्ध" एव व्याप्तिर्वर्त्तते।

तथा विशेषतो वैशेषिकसिद्धान्तप्रतिपादनकर्तृ "न्यायलीलावती" टीकाकर्तृ श्रीवल्लभाचार्यमते "कात्स्न्र्येनसम्बन्धो" व्याप्तिः।

मित्याकारंसततानुवर्तमानं विज्ञानमालयविज्ञानम्। द्विविधविज्ञानयोरनारतप्रवाहो विज्ञानस्कन्धः। अतएव "विज्ञानस्कन्धोऽहमित्याकारो,रूपादिविषय इन्द्रियजन्यो वा दण्डायमान" इति वाचस्पतिमिश्राः। "अहमित्याकारमालयविज्ञानं, इन्द्रिय जन्यज्ञानं, एतद्द्वयं दण्डायमानं प्रवाहापन्नंविज्ञानस्कन्ध. इत्यर्थः" इतिकल्पतरौ।

वेदनास्कन्धः—सुखं-दुःख-उपेक्षा च। विज्ञानस्कन्धस्य रूपस्कन्धेन सह सपर्कात् "दुष्टादनिष्टात्तदुभयरहिताच्च" सुखस्य दुःखस्य उपेक्षायाश्चावस्थाविशेषो वेदनास्कन्धः।

संज्ञास्कन्धः—घटःपटः इत्यादिसञ्ज्ञोल्लेखिसंवित्सन्तानः। अयं च सविकल्पकरूपो-विज्ञानस्कन्धोनिर्विकल्पकरूपइत्यनयोर्विशेषः।

संस्कारस्कन्ध.-सुखदुःखसंवेदनजनिताः-रागद्वेषमदमानमोहादयः। धर्मा धर्मौ च संस्काररूपेण वर्त्तमानौ। इमे पंचस्कन्धा। रागादयो यस्मादुदियन्ति स समुदयपदाऽभिधेय, आत्माविज्ञानरूपःक्षणिक इति।

इदमत्रावधेयम्। एतेपि पदार्था न कणादमतमतिक्रामन्ति। इन्द्रियादीनां द्रव्यादिषु अन्तर्भावात्। संज्ञाभेदमात्रस्य स्वतन्त्रेच्छत्वेन करणात्। सामान्यतो बौद्धानामपि मतभेदः प्रत्यक्षाऽप्रत्यक्षत्वविषये, सांवृतत्वाऽसांवृतत्वविषयेवाऽस्ति। पदार्थस्थितिः समानैव।

अयमत्र विभागः। सर्वोऽस्तित्वमित्येके। सर्वकाल्पनिकत्वमित्यन्ये। सर्वशून्यत्वमित्यपरे। सर्वास्तित्ववादिनो वैभाषिकाः सौत्रान्तिकाश्च। "तत्र ते सर्वाऽस्तित्ववादिनो बाह्यमाभ्यन्तरं च वस्तु अभ्युपगच्छन्ति, भूतं च भौतिकं च चित्तं च चैत्त च" इति शांकरभाष्ये। भामत्यां-"यद्यपि वैभाषिकसौत्रान्तिकयोर-वान्तरभेदोस्ति तथापि सर्वास्तितायामस्ति संप्रतिपत्तिरित्येकीकृत्योपन्यास" इति। एवमन्योऽपरश्च योगाचारमाध्यमिकाविति।

निरूपिताः प्रमेया.। तत्साधकीभूतप्रमाणद्वयमेव-प्रत्यक्षमनुमानं च। विषयश्च प्रत्यक्षपरोक्षभेदेन "स्वलक्षणविषय सामान्यविषयभेदेन" द्विविधः।

तत्र प्रत्यक्षे स्वलक्षणात्मनि विषये प्रत्यक्षं प्रवर्त्तते, परोक्षे तु सामान्याकारे अनुमानम्। तदुक्तम्—

> ते हि प्रमेयद्वैविध्यात्प्रमाणं द्विविधं जगुः।
> नान्यः प्रमाणभेदस्य हेतुर्विषयभेदतः
> प्रमाणद्वयसिद्धे च विषयद्वयवेदने
> वद कस्यानुरोधेन तृतीयं मानमिष्यतामिति।

प्रत्यक्षं स्वलक्षणविषयं भवति। लक्ष्यते तावदन्यान्यत्वेनाऽवधार्यते तत्राऽग्न्यादिकमनेन उष्णत्वादिनेति लक्षणं-असाधारणो धर्मः। स्वं च तल्लक्षणं चेति स्वलक्षणम्। किं वा स्वस्य वस्तुनोलक्षणमिति। तद्विषयो "गोचरो" यस्य प्रत्यक्षस्यतत्तथा।

अयमाशयः—वस्तुनः असाधारणतया सामान्यतया च द्वैविध्यं भवति। तत्र प्रथममक्षसन्निपाते एकक्षणावस्थायि वस्त्वसाधारणरूपं सजातीयेतरव्यावृत्तं स्वलक्षणं संज्ञितं प्रत्यक्षस्य ग्राह्यम्। गृहीतसन्तानश्च प्रत्यक्षपृष्ठभाविनो विकल्पस्याऽध्यवसेयः। इतरश्च यत्सामान्यं साधारणं विकल्पज्ञानावभासिवस्तुनोरूपं तदनुमानस्य विषयः।

## —प्रत्यक्षलक्षणम्—

तत्र प्रत्यक्षं कल्पनाऽपोढम्। कल्पना अपोढा अपेतायस्मात्तत्कल्पनापोढम्। अथवा कल्पनया अपोढम्, कल्पनाया वा अपोढं कल्पनापोढम्। यद्ज्ञानं नामजातिगुणक्रियाद्रव्यकल्पनाभीरहितमित्यर्थः। नामकल्पना-यथा डित्थइति। जातिकल्पना गौरिति। गुणकल्पना शुल्क इति। क्रिया कल्पना पाचक इति। द्रव्यकल्पना दण्डीति। तच्च प्रत्यक्षं स्पर्शन रसनघ्राणचक्षुः श्रोत्रमनोभेन षड्विधम्।

## अनुमानलक्षणम्

अनुमानं लिंगदर्शनम्। तस्मात्त्रिरूपाल्लिङ्गाद्यदनुमेयेर्थेधर्मिणिज्ञानमुत्पद्यते साऽनुमितिः लिंगं च त्रिरूपम्। पक्षसत्व-सपक्षसत्त्व-विपक्षाऽसत्वानि। प्रथमंलिंगज्ञानं 'पक्षधर्मतात्मकम्'। ततोव्याप्तिस्मरणम्। व्याप्तिश्च कार्यकारण भावात्-तादात्म्याच्च जायते। तदुक्तम्।

> कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
> अनिाभावनियमोऽदर्शनान्न न दर्शनात् इति।

अयमर्थः—कार्यकारणभावान्नियामकात्, "स्वभावात्" तादात्म्याद्वा नियामकादविनाभावनियमो-"व्याप्ति" विपक्षेऽदर्शनान्न, सपक्षेदर्शनादपिनेति। न व्यतिरेकदर्शनात्, नाप्यन्वदर्शनादितिभावः अर्थात् बौद्धानांमते अविनाभाव एव व्याप्तिरितियावत्। तथा च कार्यस्वभावभेदाद्द्विविधमनुमानम्। यत्तु अनुपलब्धिभेदात्त्रैविध्यमनुमानस्येति। तन्न, स्वभावेऽन्तर्भावात्। यतः केवलं भूतलं घटाभावस्य स्वरूपम्, नाऽपरोऽभावः कश्चिदस्तीति। पुनरपि द्विविधम्-स्वार्थं परार्थं च। अयमत्रसंग्रहः—यथाबौद्धानां मते अविनाभावरूपाव्याप्तिः स्वीक्रियते तथा गौतममते, एवं वात्स्यायनमते, अथचव्योमशिवाचार्यमतेऽपि अविनाभावरूपैव व्याप्तिः स्वीकृतावर्त्तते। वह्निंविना धूमस्य अवर्त्तमानत्वमेव अविनाभावशब्दार्थः। मीमांसकानांनये "अव्यभिचरितः सम्बन्ध" एव व्याप्तिः।

एवम् उदयनाचार्य तथा शंकरमिश्रमते "अनौपाधिकः सम्बन्ध" एव व्याप्तिर्वर्त्तते।

तथा विशेषतो वैशेषिकसिद्धान्तप्रतिपादनकर्त्तृ "न्यायलीलावती" टीकाकर्तृ श्रीवल्लभाचार्यमते "कात्स्न्र्येनसम्बन्धो" व्याप्तिः।

श्रीधराचार्यमते "विधिर्निरुपाधिकसहभाव" रूपाव्याप्तिः ।
अस्मद्गोत्रीयस्य अर्थात् भारद्वाजगोत्रस्य अथच गौड़वंशावतंसगौड़ब्राह्मणस्य तथा पश्चिमदेशवासिनो जरन्नैयायिकपदाभिधेयश्रीजयन्तभट्टस्यमते "नित्यसाहचर्य" रूपा व्याप्तिरेवाङ्गीकृता वर्त्तते ।

"न्यायवार्त्तिक" नाम्नीं टीकां रचयितु पाशुपताचार्यश्रीभारद्वाजस्यमते, एवं मिथिलाभूषणभूतस्य षड्दर्शनचार्यश्रीवाचस्पतेर्मते हेतुसाध्ययो स्वाभाविकः सम्बन्ध एव व्याप्तिः स्वीक्रियते ।

श्रीगंगेशोपाध्यायमते "हेतुव्यापकसाध्यसामानाधिकरण्यं" व्याप्तिः । शिरोमणिश्रीरघुनाथमते "प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्यभाव प्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्व यद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं व्यापकसामानाधिकरण्यञ्च" व्याप्तिः ।

मथुरानाथतर्कवागीशमते "स्वावच्छेदकसम्बन्धेन स्वावच्छेदकावच्छिन्न सामान्यसम्बन्धि निरुक्तहेतुसम्बन्धिकप्रतियोगितासामान्ये साध्यतावच्छेक सम्बन्धावच्छिन्नत्व–यद्धर्मनिष्ठपर्याप्तावच्छेदकत्वोभयाभावस्तद्धर्मावच्छिन्न साध्यसामानाधिकरण्यम् व्याप्ति ।

श्रीगदाधरभट्टाचार्यमते साध्यतावच्छेदकसम्बन्धानुयोगितासामान्ये प्रतियोगितावच्छेदकावच्छिन्न प्रतियोगिकत्वविशिष्टसम्बन्धनिरूपितहेत्वधिकरणीभूतयत्किञ्चितव्यक्तिनिष्ठत्वाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वम्, व्यापकसामानाधिकरण्यञ्च व्याप्ति ।

विश्वनाथपञ्चानन, दिनकर, तथा रामरुद्रीकाराणांमते "हेतुव्यापकसाध्यसामानाधिकरण्यं" व्याप्ति ।

तर्कसंग्रहकार श्री "अन्नंभट्ट" मते "साहचर्यनियम" एव व्याप्तिः न्यायबोधिनीकार श्री "गोवर्धनमते" "सामानाधिकरण्यनियमो" व्याप्ति । तर्कभाषा निर्मातुः श्री "केशवस्य" मते "उपाधिविधुरः" सम्बन्धो व्याप्तिः ।
असिद्ध-विरुद्धाऽनैकान्तिकभेदात्त्रैविध्यं हेत्वाभासस्येति । जातिनिग्रहस्थानयोरप्युल्लेखोऽस्तितयोर्विभागो नोपलभ्यते ।

प्रकारान्तरेण विभागे क्रियमाणे पदार्थानामेषां स्कन्धाऽऽयतनधातुरूपेण संज्ञाव्यवहारः । षड़िन्द्रियाणि-अध्यात्मायतनानि । षड्विषयाः बाह्यायतनानि इति द्वादशाऽऽयतनानि । द्वादशायतनानि धातवः । चक्षुर्धातु-श्रोत्रधातु-रूपधातु-शब्द धातु इत्यादि शब्दैर्व्यवहार्याः । चाक्षुषादिषड्ज्ञानानीत्यष्टादशधातवः । स्कन्धास्तूक्ताः पंचेति संक्षेपः ।

## बौद्ध मते मुक्तिस्वरूपम्

बौद्धमते दुःखनिवृत्तिर्मोक्षः । "हेयो ह्यर्थः हातु मिष्यते" इति वदता धर्मोत्तरेण हानापरपर्यायो जन्माऽभावो दुःखाभावो वा मोक्ष इति व्यक्तीकृतमेव ।

अतएव हि मोक्षेऽर्थे निर्वाणपदप्रयोगो बौद्धसंप्रदायसिद्धः । यथा "दीपनिर्वाण गन्धं चे" त्यादि प्रयोगस्थले निर्वाणपदस्याऽभावार्थकता प्रसिद्धा तथान्यत्रापि तत्पदेन तत्परेणैव भाव्यम् । तदुक्तम् ।

दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् ।<br>
दिशं न कांचिद् विदिशं न कांचित् स्नेहक्षया त्केवलमेतिशान्तिम् ।<br>
तथा कृती निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् ।<br>
दिशं न कांचिद्विदिशं न कांचित् क्लेशक्षया त्केवलमेति ।<br>
शान्तिम् ।

अपिचाऽहंकारनिवृत्तिमेव शान्तिसाधनंमन्यन्ते । तदुक्तम् । साहंकारे मनसि न शमं याति जन्मप्रबन्धः ।

नाहंकारश्चलति हृदयादात्मदृष्टौ च सत्याम् । अन्यः शास्ता जगति भवतो नास्ति नैरात्म्यवादी ।

नान्यस्तस्मा दुपशमविधे स्त्वन्मतादस्ति मार्ग इति । न्यायनये तु आत्म नः सत एव दुःखनिवृत्तिर्मोक्ष इति विशिष्टः पन्थाः ।

सर राधाकृष्णन् महोदयैः स्वग्रन्थे "इण्डियन फिलासफी" नामके बौद्ध दर्शनस्य महत्वं स्यापर्यद्भिरुक्तं यदत्र निर्वाणं परमसत्तात्मकमस्ति यद्येवं तदा विरोध एव, अभावात्मकस्येव निर्वाणस्य बौद्ध संमतत्वात् । यच्चोक्तं तद्ग्रन्थे (४११) यद्बुद्धस्याऽयमभिप्रायः आसीत् "पवित्रमौपनिषद्विज्ञानवादमवगत्य मानव लोकस्य यथोपकारः स्यात्तथा व्याख्याप्रबन्धो योजनीयः, बौद्धधर्मस्यापि च लक्ष्यमेतदेवाऽऽसीत्, उपनिषत्सिद्धान्तानां लोक प्रचार" इति । परन्तु स आशयो बुद्धकालीनैस्तदुत्तरकालीनैर्वा न प्रकटीकृत इति विभावनीयम् ।

## नैरात्म्यवादिमतसमालोचनम्

दर्शनस्पर्शनाभ्यामेकार्थानुसन्धानं भवति । यथा यमहमद्राक्षं तमहं स्पृशामि यमहमस्प्राक्षं तमहं पश्यामि इति न चेदमनुसन्धानं रूपमात्रविषयकं स्पर्शमात्र विषयकं स्पर्शमात्रविषयकं वा रूपस्पर्शयोर्भेदाच्चाक्षुषे स्पर्शस्य, स्पार्शने रूपस्य भाना-नुपपत्तेः । न च चक्षुषा रूपमिव स्पर्शोपि गृह्यतां, एवं त्वचा स्पर्शश्च रूपमपि गृह्यतामिति वाच्यम् । रूपस्य त्वगिन्द्रियग्राह्यत्वे अन्धस्यापि नीलादि प्रत्ययप्रसंगात् एवं स्पर्शस्य चक्षुरिन्द्रियग्राह्यत्वे त्वगिन्द्रियाऽसंबद्धे शुक्लत्वादिवत् उष्णत्वादेरपि ग्रहणप्रसंगात् । एकमेव वस्तु चक्षुषा रूपत्वेन, त्वचा चस्पर्शत्वेन गृह्यते इति तु न युक्तम् । रूपं न स्पर्शः, स्पर्शो न रूपमितिप्रतीतिसाक्षिकत्वेन

सिद्धयोः रूपत्वा स्पर्शत्वयो विरुद्धयो रेकत्रवृत्त्य सभवात्। एकतरवत्तायां नियामकाऽभावादन्तुन उभयरूपशून्यत्वप्रसगात्। विरुद्धयोश्चैकत्र वृत्तौ धर्मिणोभेद प्रसंगात् विरुद्धधर्माऽध्यस्तत्वेपि च तस्याऽभेदे भेदमात्रोच्छेदे भेदाऽभेदव्यवस्थानुपपत्तिप्रसंग अतः प्रतिसन्धानं रूपस्पर्शातिरिक्त 'रूपस्पर्शाश्रयविपयकम्। प्रतिसन्धानस्य गुणगुणिभेदसाधकतया न नैरात्म्यसिद्धिः।

प्रतिसन्धानं च यमहमद्राक्षं तमहं स्पृशामीत्याकारिकायाः, योऽहमद्राक्षं सोहं स्मरामीत्याकारिकाया वा धियः एकाश्रय ( क ) त्व निश्चयः। तथा च परप्रतीति. पूर्वप्रतीत्याश्रयाश्रिता पूर्वप्रतीत्याश्रये साक्षात्क्रियमाणत्वात् पूर्व प्रतीतिवदित्यनुमानबलेन, योऽहं घटमद्राक्षं सोहं स्पृशामि योहमद्राक्ष सोह स्मरामीति पूर्वप्रतीत्याश्रये परप्रत्ययबलग्रहणम्। योऽहं घटमद्राक्ष सोहं स्पशामीतिप्रतिसन्धानं आश्रयभेदेऽनुपपद्यमानं पूर्वापरप्रतीत्योरेकाश्रयत्वं व्यवस्थापयति। प्रत्येतव्यादभिन्नस्यैव प्रत्येतु अहमिति व्यवहारगोचरत्वात्, न हि भवति चैत्रोहं यमद्राक्ष मैत्रोह तं स्पृशामीति सिद्धान्तानुसारी पन्थाः।

अथाऽनुपलब्धिरेव नैरात्म्यसाधिका भविष्यति, आत्मानास्ति अनुपलब्धेरित्यनुमानसाम्राज्यात्। न चाऽऽश्रयाऽसिद्धिरिति वाच्यम्। असत्ख्यातिविषयस्याऽऽत्मन पक्षत्वात, शशशृङ्ग नास्तीति प्रतीत्यनुरोधेनाऽसत्ख्यातेः स्वीकारादिति चेन्न। अनुपलब्धिर्यदि ज्ञानसामान्याऽभावः, तदासिद्धिः, नास्तिआत्मेति शब्देनैव प्रतियोगितयाऽऽत्मनोभानात्। न च साक्षात्काराऽभाव. स इति वाच्यम्। स च सर्वानुपलंभरूपः, स्वानुपलंभरूपो वा। आद्येऽतीन्द्रिये व्यभिचारः सन्दिग्धासिद्धिश्च। द्वितीयेपि व्यभिचारः, तददृष्टस्यापि वस्तुनः सत्वात्। तदुक्तम्—

सर्वाऽदृष्टेश्च सन्देहात् स्वाऽदृष्टेर्व्यभिचारत इति।

अयंभावः—यथा भूतले घटानुपलब्ध्या तत्र तदभावो भवद्भिरभ्युपेयते तथा ईश्वरस्याऽनुपलब्ध्या तदभावोऽभ्युपेयः। ईश्वरः स्यादुपलभ्येत इति तर्कः सहकारी। अनुपलब्धिमात्रं नाभावसाधकं, अतीन्द्रियमात्रविलोपप्रसंगात्, किन्तु योग्यानुपलब्धिरेव, तथा चेश्वरस्याऽयोग्यतया तदनुपलब्धिर्नाभावसाधिका इत्यपि न शंक्यम्। तथासति शशशृङ्गमपि अयोग्यत्वादेव नोपलभ्यते इत्येव वक्तुमुचितत्वात् शशशृङ्गस्याप्यभावो न सिद्ध्येत्, तदभावस्तु नैयायिकैरप्यभ्युपगम्यते, तथाच तदुपपादकतयाऽनुपलब्धिमात्रमभावसाधकमित्युपेयम्। एवंच सुतरामीश्वरस्याप्यभावसिद्धिरिति भावः। सिद्धान्तस्तु योग्यानुपलब्धिरेवाऽभावग्राहिका। अनुपलब्धिमात्रस्याऽभाव-ग्राहकत्वे परमाण्वाकाशधर्माऽधर्मादिविलयापत्तेः। सा च नास्त्येव धर्मिणः सिद्ध्यसिद्धिभ्यां व्याघातश्च। शशशृङ्गंनास्तीतिप्रतीत्या अप्रसिद्धं शशशृङ्गं न निषिध्यते किन्तु शशशृङ्ग-शृङ्गे वा शशीयत्वं निषिध्यते, गविशशशृङ्गंनास्तीत्यप्रतीत्या तस्या अखण्डशशशृङ्गावगाहित्वाभावात्। बाधाभावे शशशृङ्गाभ्युपगमप्रसग इति चेत्

न-साधकाभावात्। इदमुपलक्षणम्। शशशृङ्गादिप्रतिबन्धा नादृश्यमात्रनिरासः. तैरपि परमाण्वादिस्वीकारात्।

ईश्वरे तु साधकमस्ति—तथाच प्रमाणस्यगतस्याऽनुपलब्धा अयोग्यत्वान्नोपलभ्यते इति कल्प्यते, न तु तावतैव तदभावसिद्धिः। तथाच न्यायसूत्रम्-नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुरिति।

ननु ईश्वरो न कर्ता अशरीरत्वात् फलेच्छाशून्यत्वाच्चेत्यनुमानेन तस्याऽकर्तृत्वे सिद्धे बाधबलेन न कर्तृत्वेनेश्वरसिद्धिसंभवः इति प्रमाणाभावादेव शशशृङ्गवदीश्वरस्यापि न सिद्धिरिति चेन्न। पक्षस्यैवाऽप्रसिद्धेः, तस्याऽलीकत्वात्। अथैतद्दोषपरिजिहीर्षया ईश्वरोऽङ्गीक्रियते, माभूदाश्रयासिद्धिः, बाधस्तु स्यादेवेति चेत्—शृणु-ईश्वरसिद्धिर्हि न प्रत्यक्षेण, तस्य तदयोग्यत्वात्। किन्त्वनुमानेन तथा च कार्यत्वादिहेतुकानुमानेन कर्तृतयैव तस्य सिद्धेः, उपजीव्येन तदनुमानेन बलवता उपजीवकं त्वदनुमानमेव बाध्यते, नतु त्वदनुमानेन तदनुमानम्, त्वदनुमानस्य दुर्बलत्वात्, सेयमुभयतः पाशारज्जुर्दुरुच्छेद्या बौद्धस्य।

एतेन आत्मा सर्वकालवृत्त्यभावप्रतियोगी प्रत्यक्षाद्यविषयत्वादित्यनुमानमपि निरस्तम्। तदुक्तमाचार्यैः—योग्याऽदृष्टिःकुतोऽयोग्ये प्रतिबन्धिकुतस्तराम्।

क्वा योग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम्।

शून्यवादे कस्यापि वस्तुनोऽभावात्, विज्ञानवादेपि विज्ञानातिरिक्तस्य सर्वस्यैव तथात्वात् असन्त एव बाह्यार्थाः अनादिवासनावशाद्भासन्ते इति तत्सिद्धान्तः। यथाहि घटेन्द्रियसन्निकर्षजन्यनिर्विकल्पकज्ञानकाले घटाऽसमवायिकारणनाशे जाते तदुत्तरक्षणे घटनाशेपि नाशक्षणावच्छेदेनाऽसतोपि घटस्य भानंनैयायिकैरुपेयते, तथाऽत्यन्ताऽसतोऽप्यसत्वाऽविशेषाद्भानमस्तु। अतएव शशशृङ्गं नास्तीतिप्रतीतिरपि साधु संगच्छते। न च शशेशृङ्गाभावस्तत्र विषयः-तथासति शशे शृङ्गं नास्तीति स्यान्नतु शशशृङ्गं नास्तीति। एवंचाऽसत्ख्यातिविषय आत्मैव पक्ष इति बौद्धानामाशयः।

सिद्धान्तस्तु अभावाधिकरणतारूपा विशेष्यता पारमार्थिकी एवेति। एवं च विशेष्यता वस्तुन एव नाऽवस्तुनः। तथाचाऽसत्ख्यातिविषये ईश्वरे कर्तृत्वाभावः साध्य इति रिक्तं वचः। यद्वा अभावाधिकरणता पारमार्थिकी एव। विशेष्यं प्रतिषेधस्याधिकरणम्। अलीकस्याऽवस्तुनः कथमभावेन वस्तुना संबन्धः, सदसतोः संबन्धाऽयोगात्।

ननु ईश्वरे कर्तृत्वाभावाऽसाधनेऽपि तस्यैवाऽभावः साधनीय इतिचेत्—अलीकस्य प्रतिषेधाधिकरणत्ववत्प्रतिषेधप्रतियोगित्वस्याप्यस्वीकारात्। तदुक्तं तैः।

व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता इति॥

अयंभावः—यत्र तु नाशक्षणावच्छेदेनाऽसतोपि घटस्य भानं तत्सामग्रीसमवधानान्नानुपपन्नम्। प्रकृतेतु सामग्र्यभावान्नालीकस्य भानसंभवः। कार्यसहभा-

येन हेतुत्वनये तु नोपेयते एव तदानीं भानम्। शशशृङ्गं नास्तीतिप्रतीतेस्त्वगत्या शशे शृङ्गाभावावगाहित्वम्, शृङ्गे शशीयत्वाभावावगाहित्वं वा कल्प्यते, अन्यथा तेनापि गवि शशशृङ्गंनास्तीति प्रतीत्यापत्तेः।

किंचाऽसत्ख्यातिस्तु स्वयमसिद्धा—तथाहि—न तावत्प्रत्यक्षात् असता समिन्द्रियसन्निकर्षाऽसंभवात्। नाऽप्यनुमानेन—तेन रूपेण व्याप्तिग्रहाभावात्, तस्यापि प्रत्यक्षपूर्वकत्वाच्च। नापि शब्दात्, तस्य प्रामाण्यानभ्युपगमात्। न च निर्निमित्तेयमसत्ख्यातिः। कार्यमात्रस्य सहेतुकत्वव्यवस्थापनात्। नाप्यनादिवासनावशात्, तत्रापि पर्यनुयोगस्य तादवस्थ्यात्। वासनायाश्चाऽवस्तुत्वे तस्या हेतुत्वाऽसंभवात्, अलीकस्य हेतुतानिरासात्। वस्तुत्वे च गतमसत्ख्यात्या, किंवा तद्धर्पराद्धमन्यैः। तस्मात् भ्रमस्थलेऽसत्ख्यातिमुपेक्ष्याऽन्यथाख्यातिरुपेयेति।

न च भवतु योग्यानुपलब्धिरेवाऽभावग्राहिका साच न योग्यस्य 'प्रत्यक्षस्या' नुपलब्धिः, व्याघातात्। किंतु योग्यताविशिष्टाऽनुपलब्धिः। योग्यता च चक्षुरादिकारणसमवधानम्, तच्च शशशृङ्गादावप्यस्ति, चक्षुरादिकारणकलाप समवधानेप्यनुपलब्धेरितिवाच्यम्। यावत्प्रतियोग्युपलंभकसामग्रीसमवधानस्यैव योग्यतापदार्थत्वात्। चक्षुरादिकारणसमवधानमात्रस्य तथात्वे अन्धकारे घटाभावचाक्षुषापत्तेः। उक्तयोग्यताविवक्षणे तु नान्धकारे घटाभावचाक्षुषापत्तिः, घटोपलंभसामग्री मध्यपातिनो यावदन्तर्गतस्याऽऽलोकस्य तत्राऽभावात्। नापि अतीन्द्रियोच्छेदप्रसंगः, तदुपलंभकसामग्र्या अप्रसिद्धेः। एषा च योग्यता शशशृङ्गादि "असद्विषयस्थले" न संभवत्येव-तथाहि।

असद्विषयस्थले दोषादेव तदुपलब्धिर्वाच्या, तथाच दोषोपि तदुपलब्धौ हेतुः। एवंच तदुपलब्धिहेतुयावदन्तर्गतदोषस्याऽसत्वे यावदुपलंभकसामग्रीसमवधानरूपा योग्यतैवाऽनुपलब्धेर्नास्तीति तदानीं न योग्यानुपलब्ध्या तदभावग्रहः।

दोषस्य सत्वे च दोषादेवाऽसतोऽप्युपलब्धिरनिवार्येति कथं तदभावग्रहः, तद्विरोधिनःप्रतियोगिग्रहस्यैव संभवात्। तथाच यत्र योग्यताऽस्ति तत्रानुपलब्धिरेव न संभवति, तत्र योग्यताघटकदोषवशादेव तदुपलब्धेरावश्यकत्वात्। यत्र चाऽनुपलब्धिरस्ति तत्र योग्यतैवनास्ति, योग्यताया दोषघटितत्वात्, दोषसत्वेचाऽनुपलब्ध्यसंभवात्, अनुपलब्धिबलेन तत्र दोषाभावस्यैवाऽवधारणात्। तदुक्तं।

दुष्टोपलंभसामग्री शशशृङ्गादियोग्यता।<br>न तस्यां नोपलंभोस्ति नास्ति साऽनुपलंभने इति।

## —आत्मनोनित्यत्वसिद्धिः—

अहं जाने अहं करोमीत्यादिप्रतीत्या स्वात्मनः प्रत्यक्षत्वेपि परात्मा अनुमेयः। चेष्टा प्रयत्नजन्या चेष्टात्वात् मदीयचेष्टावत्, स प्रयत्नः क्वचिद्द्रव्यसमवेतो गुणत्वाद्रूपवदित्याकारकः। तादृशप्रयत्नाश्रयतयाऽऽत्मसिद्धिः।

एवं ज्ञानं क्वचिदाश्रितं गुणत्वाद्रूपवत्। करणानि सकर्तृकाणि करणत्वाद्

वास्यादिवत्। शरीरं प्रयत्नवदधिष्ठितं इच्छापूर्वकविकृतवाय्वाश्रयत्वात् भस्त्रावदित्यादयो बोध्याः।

जातस्य हि बालस्य स्तन्यपानप्रवृत्तिः इष्टसाधनताधीसाध्या, प्रवृत्तेरिष्टसाधनताधीसाध्यत्वनियमात्। तच्चेष्टसाधनताज्ञानं नानुभवरूपं सामग्र्यभावात्, स्मृतेस्तु समानाधिकरणपूर्वानुभवसापेक्षतया पूर्वजन्म स्वीकारणीयम्, तत्रापि प्रथम प्रवृत्त्यनुरोधेन तत्पूर्वजन्मनः, एवं तत्पूर्वजन्मनः सिद्धिरित्यनादिजन्मपरंपरयाऽऽत्मनोऽनादित्वसिद्धिः। एवं सर्वस्य विदुषोऽविदुषो वा इयमिच्छा दृश्यते माभून्मेमृतिः,जीव्यासमिति, साच पूर्वजन्मानु-भूतमरणजन्यदुःखानुभववासनाबलादित्यपि जीवस्यानादित्वसिद्धिः। इत्थं चाऽऽत्मनोऽनादित्वसिद्धौ अनादिभावस्य नाशाऽसंभवान्नित्यत्वसिद्धिः।

अत्रेयं प्रक्रिया - आदौ स्तन्यपानं मदिष्टसाधनमिति स्मरणम्। ततः स्तन्यपानेच्छा-ततः प्रवृत्तिः। इष्टसाधनतास्मरणं च तत्संस्काराधीनं, संस्कारश्च तदनुभवाधीनः। अनुभवाभावे संस्काराभावः,तदभावे स्मरणाभावः,तदभावे इच्छाऽभावः तदभावे प्रवृत्त्यभाव इति न्यायसिद्धान्तः। आत्मनित्यत्वसमर्थनेन सुस्पष्टसिद्धोऽयंपरलोकमार्गः।

य एव देहान्तरसंगमोऽस्य तमेव तज्ज्ञाः परलोकमाहुः।

## आत्मनो नानात्वसिद्धिः—

अत्र कन्दलीकृतः—ऐकात्म्ये हि यथा बाल्यावस्थायामनुभूतं वृद्धावस्थायामनुसन्धीयते मम सुखमासीत्, मम दुःखमासीत् इति। एवं देहान्तरानुभूतमप्यनुसन्धीयेत, अनुभवितुरेकत्वात्। नचैवमप्यस्तिअतः प्रतिशरीरं नानात्मानः। यथा सर्वत्रैकाकाशस्यश्रोत्रत्वे कर्णशष्कुल्याद्युपाधिभेदाच्छब्दोपलब्धिव्यवस्था, तथाऽऽत्मैकत्वेपि देहभेदादनुभवव्यस्थेतिचेद्—विषमोयमुपन्यासः—प्रतिपुरुषं व्यवस्थिताभ्यां धर्माधर्माभ्यांमुपगृहीतानां शब्दोलब्धिहेतुनांकर्णशष्कुलीनां व्यवस्थानाद्युक्ता तदधिष्ठाननियमेन शब्दग्रहणव्यवस्था, ऐकात्म्ये तु धर्माधर्मयोरव्यवस्थानाच्छरीरव्यवस्थाऽभावे किंकृत्य सुखदुःखोत्पत्तिव्यवस्था, मनःसंबन्धस्यापि साधारणत्वात्। यस्य तु नानात्मानः तस्य सर्वेषात्मनां सर्वगतत्वेन सर्वशरीरसंबन्धेपि न साधारणो भोगः, यस्य कर्मणा यच्छरीरमारब्धं तस्यैव तदुपभोगायतनं न सर्वस्य, कर्मापि यस्य शरीरेण कृतं तस्यैव तद्भवति नापरस्य। एवं शरीरान्तरनियमः कर्मान्तरनियमादिति। तथाच पामर्ष सूत्रम् "व्यवथातो नाना जीवात्मान इति।

## आत्मनोऽहेयता

स्यादेतत्—ज्ञानवान् नित्यो विभुश्च सिद्धोप्ययमात्मा हेयएव आत्मदर्शी हि तदुपकारिणि रज्यते, तदपकारिणं द्वेष्टि, रागद्वेषौ च मूलं संसारस्य। आत्मा हेयः संसारनिदानरागद्वेषहेतुत्वात् शरीरादिवत् आत्मज्ञानं न मोक्षहेतुः रागद्वेष

हेतुज्ञानत्वादिति फलितम् यस्तु न तं पश्येत्, नासौ तदुपकारापकारिणमपि पश्येत् ततश्च न रज्येत्, न द्विष्यात् न संसरेदिति नैरात्म्यमेव भावनीय मिति चेन्न।

अनात्मदर्शिनो मुमुक्षुत्वव्याघातात्, तथासति मोक्षसाधनेपि प्रवृत्तिर्न स्यात्, तस्याः इष्टसाधनताधीसाध्यतया आत्माऽभावे इष्टसाधनत्वाभावात्। नह्यात्मानमप्रतिसन्धाय कश्चिद्दुःखं हातुमिच्छेत्, सुखं वाऽवाप्तुम्। प्रत्युताऽऽत्मनोऽस्तित्वधीरेव रागादिहेतुः। परलोकभागिनो निषिद्धकर्मजन्यफलभोक्तुरभावं जानतोऽनिष्टसाधनेपि प्रवृत्तेरप्रत्यूहत्वात्। एतदभिप्रेत्यैव "यावज्जीवेत्सुखंजीवे दित्या द्यौनिःशङ्कमालापा।

यत्तूक्तमुपकारिणि रज्येदपकारिणि द्विष्यादिति, तदेवमेतत्, परन्तु आत्म दर्शिनो रागद्वेषौ न दोषाय किन्तु गुणायैव। तथाहि यो हि मोक्षमुपकारं मनुते स तद्वेतौ रागवान् तमुपाददानस्तत्परिपन्थिनं द्वेषात्परिहरन्नेव समीहितमा सादयतीति।

तथापि दुःखहेतुत्वादिन्द्रियादिवदसौ हेय इति चेत्—यादृशो दुःखहेतुस्ता दृशो हेय एव, शरीरेन्द्रियाद्युपाधिसहितो हेयः सः। निरुपाधिरपिहीयतामिति चेत् न—नहि तस्य हान-नाशो, नित्यत्वात्। नापिहानं-विप्रकर्षः व्यापकत्वात्। नापि अप्रतिपत्तिः यथा यथा तदर्थं यत्नः तथा तथा प्रतिपत्तेः। उपेक्षात अप्रतिपत्ति; रिति चेत् तथापि आत्महानाऽसिद्धेः। किं च सोपाधेर्हि हानं दुःखनाशाय, निरुपाधेस्तु हानं किमर्थम्। पुनः शरीरेन्द्रियादि प्राप्तिशंकयेतिचेत्।

कारणाभावादेव तत्प्राप्त्यसंभवेन तादृशशंकाया निरास्पदत्वात्। आत्मनः सत्वेपि अदृष्टाभावादिति तत्त्वम्।

निरुपाधेरात्मनोपि प्रणिधानस्य किं प्रयोजनमितिचेत्निः श्रेयससिद्धिरेवेवि ब्रूम'। किमस्योपादानं, विवेकः। कुतः, अनात्मनः शरीरादेः। शरीरादेर्भेदेनाऽऽत्म-विवेकस्य मोक्षहेतुत्वं च न्यायसिद्धम्। तथाहि शरीरमेवात्मा इत्यभिमन्यमानस्य तदनुकूलत्रैलोक्यविषया तृष्णा विजृम्भते, तथा तत्प्रतिकूलविषये द्वेषः। न चैतत्केवलाऽऽत्मदर्शिनः संभवति, निरुपाधेः पुत्रवित्तलोभाभावात्, तैरनुपकार्यत्वात्। छेदक्लेददाहशोषणाद्यनुपपत्तेः, विधिनिषेधानधिकाराच्च जन्मजातिवयोवित्त संस्काराद्युपग्रहेण विधिप्रवृत्तेः। ततोनात्मनि आत्मग्रहो "मिथ्याज्ञानं" निदानं संसारस्य। मिथ्याज्ञानं च तत्वज्ञानान्निवर्तते, तच्च श्रवणादिक्रमेणैवोत्पद्यते, कारणनिवृत्तौ च कार्यं न जायते। उत्पन्नश्च धर्माधर्मप्रचयोभोगेन क्षीयते इति संक्षेपः।

## क्षणिकत्व समालोचना

यत्सत्तत्क्षणिकमिति व्याप्तिरेवाऽसिद्धा जलधरपटले अन्त्यशब्दे च तत्साहचर्यमातीति चेत् जलधरपटलेऽसिद्धा व्याप्तिः, क्षणिकत्वेनैव तस्याऽन्यथाभमित्यस्य च शपथनिर्णेयत्वात्। अन्त्यशब्दस्य च क्षणिकत्वाङ्गीकारपक्षेपि

च न तदुदाहरणेन सामान्यव्याप्तिः साधयितुं शक्या । गुणिनो घटादेः सावयवत्वदर्शनाद् द्रव्यमात्रस्यैव तया दिशा सावयवत्वं सिध्येत् । तस्माद् व्याप्तौ माना भावेनाऽनुमानमेवाऽसिद्धम् ।

द्वितीये च किं सामर्थ्यपदाभिधेयम् । यदि कारणत्वं "तदेव कारित्वं" तत्र फलाऽयोगव्यवच्छिन्न कारण स्वरूपं तदाऽऽपाद्यापादकयोरभेदापत्तिः । कुसूलस्थबीजं यदि समर्थं स्यात्तदा कारि स्यादिति प्रसंगे सामर्थ्यस्याऽऽपादकत्वात् कारित्वस्याऽऽपाद्यत्वात्, तयोश्चैक्यात् । "साध्यसाधनयोरेवाऽऽपाद्यापादकयोरपि भेदे सति आपादनप्रवृत्तेरित्यभियुक्तोक्तेः कथमप्यत्रापादनाऽसंभवात् ।" एवं विपर्यये क्षेत्रस्थबीजं यद्यसमर्थं स्यादकारि स्यादित्यत्राऽऽपाद्यापादकयोरभेदापत्तिर्बोध्या ।

अथ सामर्थ्यं-योग्यता-तथाच नाऽऽपाद्यापादकयोरभेदः इति क्षणिकत्वसिद्धिरिति चेत् योग्यता-सहकारिसाकल्यरूपा-कारणतावच्छेदकीभूतबीजत्वरूपा-कुर्वद्रूपत्वरूपा वा-नाद्यः सिद्धसाधनात् तथाहि—यदि बीजं सहकारिसमवहितं स्यात्तदा कारि स्यादित्यत्रेष्टापत्तिः । तदुक्तमाचार्येण "यत्सहकारिसमवधानवत्तद्धि करोत्येवेतिको नाम नाभ्युपैति यमुद्दिश्य साध्यते । नचाऽकरणकाले सहकारिसमवधानवत्वं नैयायिकेनाभ्युपेयते यतः प्रसंगः प्रवर्त्तेतेति" । न द्वितीयः—व्यभिचारप्रसंगात्-बाधप्रसंगाच्च । तथाहि—कुसूलस्थं यदि बीजं स्यात्तदा कारि स्यादिति प्रसंगे व्यभिचारः । क्षेत्रस्थं यदि बीजं न स्यादकारि स्यादिति विपर्यये बाधः ।

अथ सामर्थ्यं "बीजत्वव्याप्यमङ्कुर" कुर्वद्रूपत्वमेव । कुशूलस्थबीजं कुर्वद्रूपत्वजातिमत्स्यात् अङ्कुरकारि स्यात्, क्षेत्रपतितबीजवत् । एवं क्षेत्रस्थबीजं यदि कुर्वद्रूपत्वजातिमन्नस्यादङ्कुरकारि न स्यात् कुशूलस्थबीजवत् । इ तप्रसंगविपर्ययाभ्यां भेदसिद्धौ क्षणिकत्वसिद्धिरितिचेत् दृष्टान्तस्य "क्षेत्रबीजस्य" साधनविकलत्वात्, तादृशजातिविशेषस्याङ्कुरकारिण्यप्यनभ्युपगमात् । अत्राऽऽचार्याः । कोहिनाम सुस्थात्मा प्रमाणशून्यमभ्युपगच्छेत् । स हि तावन्न प्रत्यक्षेणाऽनुभूयते, तथा नध्यवसायात् । नाप्यनुमानेन, लिंगाभावात् । यदि न कश्चिद्विशेषः कथं तर्हि करणाकरणे इति । चेत्—क एवमाह नेति-परं किं जातिभेदरूपः—सहकारिलाभालाभरूपो वेति नियामकं प्रमाणमनुसरन्तो न पश्यामः ।

एषा हि बौद्धप्रक्रिया—अङ्कुरादिकं प्रति बीजादेः केन रूपेण हेतुता, न तावद्बीजत्वेन, कुशूलस्थबीजादप्यङ्कुरोत्पत्त्यापत्तेः । न च सहकारिणोऽभावात्तदभावः । विकल्पानुपपत्तेः । तथाहि सहकारिणोऽभावस्योपकुर्वन्ति न वा, न चेत्-नापेक्षणीयास्ते, अकिंचित्कुर्वतां तेषां सहकारित्वानुपपत्तेश्च । उपकारपक्षे सहकारिजन्य उपकारः अतिशयापरनामधेयो भावाद्भिद्यते न वा, आद्ये आगन्तुकातिशयस्यैव कारणत्वं स्यात् न बीजस्याऽ क्षणिकस्य आगन्तुकातिशयान्वयव्यतिरेकानुविधायित्वात्कार्यस्य । प्राचीनोभावोऽनतिशयात्मा निवृत्तः

बीजादौ सहकारिसमवधानाऽसमवधानाभ्यामेव कस्माच्चिद्बीजादङ्कुरोत्पत्तिः कस्याच्चिन्नेतिनियमोपपत्तेः, बीजत्वादिनैवाङ्कुरजनकत्वोपपत्तेः, बीजव्यक्तिभेदाभावे कुतः क्षणिकत्वम्। न च सहकारिसमवधाने कार्योत्पत्तेरभ्युपगमे पूर्वोक्तदोषतादवस्थ्यमिति वाच्यम्। सहकारिसमवहितस्यैव बीजस्याङ्कुरजनकत्वोपगमात्। सामर्थ्यस्य सहकारिसमवधानरूपत्वाभ्युपगमेनोक्तरीत्या क्षणिकत्वाऽसिद्धेश्च। न चैवं सहकारिसमवधानस्यैव हेतुत्वमस्तु न बीजस्येतिवाच्यम्। तथात्वे सहकारिसमवहितात्, शिलाशकलादप्यङ्कुरोत्पत्तिप्रसंगात्। अङ्कुरोत्पत्तौ पवनसलिलादयो बीजस्यैव सहकारिणो भवन्ति नहि शिलाशकलस्येति चेत्-तर्हि बीजस्यापि कारणत्वमापतति। नहि सहकारिसमवधानाऽसमवधाने परस्परंविरुद्धे—मानाभावात् तस्मात् यत् यदभावेयन्न करोति तत् तत्समवधाने तत्करोति। एतच्च स्थैर्यसिद्धावेवस्यात् पवनसलिलाद्यसमवधाने बीजेनाऽङ्कुरस्याऽकरणात्, तत्समवधाने तत्करणाच्च। तस्मात् कुर्वद्रूपत्वस्याऽप्रामाणिकत्वात्, क्षणिकत्वेपि न प्रमाणमिति न्यायसिद्धान्तः।

अथ माभूत् साधकाऽभावात् क्षणिकत्वनिश्चयः, बाधकाभावात्संशयस्तु नच स्यादेव तन्मते सर्वस्यैव क्षणिकतया कोट्यन्तराऽनिर्णयान्न संशय इति वाच्यम्। स्थैर्य-क्षणिकत्वसाधकयुक्तिभ्यां कोटिद्वयोपस्थितिसंभवात्। सौगतनैयायिकयो विप्रतिपत्तिमुपलभमानस्य तटस्थस्य संशयसंभवाद्वा इति चेन्न। घटादीनां स्थैर्ये सोऽयं घट इत्यादि प्रत्यभिज्ञाया एव प्रमाणत्वात्। तथाहि घटस्य क्षणिकत्वे प्रतिक्षणं घटव्यक्तिभेदेन "स एवायं घट" इति पूर्वापरकालीनाऽभेदावगाहिप्रत्यक्षं सर्वानुभवसिद्धं स्यादिति तदुपपत्तये घटादिपदार्थानां स्थैर्यमावश्यकम्। तथाचाऽनुमानम् विमतोभावः स्थिरः "क्षणिकत्वाभाववान्" सोऽयमित्यादि *प्रत्यभिज्ञाविषयत्वात्, यन्नैवं तन्नैवं यथा क्षणिकान्त्यशब्दः। तथा च प्रत्यभिज्ञैव* क्षणिकत्वबाधिकेतिभावः।

न च तत्त्व-इदन्त्वोल्लेखिज्ञानत्वस्यैव प्रत्यभिज्ञात्वेन तस्य च ज्वालादि प्रत्यभिज्ञायामपि सत्वेन व्यभिचारिजातीयत्वेन प्रत्यभिज्ञाविषयत्वस्य ज्वालादावपिसत्वात्तत्र च स्थैर्याभावादुक्तहेतोर्व्यभिचारितयाऽप्रयोजकत्वमिति वाच्यम्। विरुद्धधर्मासंसृष्टविषयकप्रत्यभिज्ञाविषयत्वस्यहेतुत्वोपगमात्। न चायंहेतुः स्वरूपासिद्धः, सामर्थ्याऽसामर्थ्यलक्षणविरुद्धधर्मसंसर्गस्यैव दर्शितत्वादिति वाच्यम्।

सहकारिसमवधाने सति वीजे सामर्थ्यं सहकार्यसमवधानदशायां तत्रैवा सामर्थ्यमिति प्रागुक्तदिशा तयोरविरोधात्।

एवं च स्थैर्ये न संशयः, सोऽयंघटइतिप्रत्यभिज्ञया स्थैर्यसिद्धेः। प्रत्यभिज्ञास्वरूपेपि न सः, तमेवैतं घटमहंजानामीत्यनुव्यवसायेन निश्चयात्। प्रत्यभिज्ञायाः प्रामाण्ये त्रयो विकल्पाः—किं ज्ञानमात्रस्य प्रामाण्ये संशयः किं वा प्रामाण्यमात्रे अथवा प्रत्यभिज्ञायाः प्रामाण्ये। नाद्यःविरोधात् तथाहि सन्देह्मीति "संशयानुव्यसायस्य" प्रामाण्यसन्देहे संशयस्याप्यसिद्धिप्रसंगात्। संशयस्य तदनुव्यवसाय प्रमाणकत्वादनुव्यवसायप्रामाण्यसंशये संशयस्याप्यसिद्धेरितिभावः। न द्वितीयः, प्रामाण्यस्याऽसिद्धौ प्रामाण्यसंशयस्याप्यभावः स्यात्, कोट्यनिर्णयात्। तृतीये तु इदं वोध्यम्। क्षणिकत्वपक्षे एकस्मिन्नेव क्षणे भावानां न नानात्वं किन्तु एकत्वमित्येव कुतः सिध्यति। विरुद्धधर्मसंसर्गस्य भेदहेतुत्वात् तस्मिन्नेव क्षणे च तदभावान्नानात्वासंभवेनैकत्वमेव पर्यवस्यति, प्रकारान्तराऽसंभवात्, एवं चैकतानिश्चयेन एकत्वज्ञानप्रामाण्यसंशयोऽपनीयते इति चेद् एवन्तर्हि तेनैव विरुद्धधर्मसंसर्गविरहेण स्थिरेपि नाना क्षणवर्त्तिन्यपि भावे एकतानिश्चयः स्थैर्यज्ञानप्रामाण्यसंशयमपनयतीति तदुक्तम्।

> स्थैर्यदृष्टयोर्न सन्देहो न प्रामाण्ये विरोधतः।
> एकतानिर्णयोयेन क्षणे तेन स्थिरे मत इति।

अत्र च विवादाध्यासितो भावः कालभेदेपि न भिद्यते तदभेदेपि विरुद्धधर्माऽसंसृष्टत्वात् इत्यात्मतत्त्वविवेकोक्तमनुमानमपि वोध्यम्।

एवं कृतहानाऽकृताऽभ्यागमप्रसंगोपि क्षणिकत्वे वाधकः। तदुक्तं जयन्तभट्टेन।

> कर्म सन्तानिनाऽन्येन यत्कृतं चैत्यवन्दनम्।
> ततोऽद्य फलमन्येन भुज्यतेऽकृतकर्मणा इति॥

## शून्यवादिमतसमालोचना

प्रथमतस्तावत् "सर्वमभावः भावेषु इतरेतराऽभावसिद्धेरितिसूत्रार्थो विचार्यते, सर्वमभावइतिप्रतिज्ञावाक्ये सर्वपदार्थोऽशेषोऽनेको वा भावरूपः सोपाख्यः। अभावपदार्थश्च शून्यं निरुपाख्यम्, तयोश्च परस्परं विरोधः, भावरूपस्य सर्वपदार्थस्य शून्यत्वाऽसंभवात्। यत्सोपाख्यं तत्कदापि निरूपाख्यं न भवितुमर्हति इति सोपाख्यं "सर्वं" निरुपाख्याऽभावतया प्रतिज्ञातुं न शक्यते। न

हि अत्यन्ताऽसत् निरुपाख्यं सर्वमिति, भावइति वा ज्ञानस्य गोचरः। अतएव "असद्वाऽनिर्वाचनीयं वा न ज्ञान गोचरः अपितु सदेव सदन्तरात्मना, तथा च कुतोऽत्यन्ताऽसतः कल्पनागोचरत्वमपीति" तात्पर्यकृतः।

यद् भवता सर्वं इति व्यपदिश्यते स अभाव एवेति प्रतिज्ञावाक्यम्, इति चेदनेकस्याऽशेषतामेव च वयं सर्वं इतिव्यपदिशामः—तथाचाऽनेकमशेषमभाव इति प्रतिज्ञार्थः पर्यवसितः। सोपि व्याहत एव नहि अभावे अनेकमशेष चेति-ज्ञानं भवति। तथा च सर्वमभाव इत्यनेनाऽनेकमशेषमभाव इत्येवार्थ उक्तोभवति स च व्याहत एवेति।

एवं प्रतिज्ञाहेत्वोरपि विरोधः, सर्वमभाव इति वाक्ये सर्वस्याऽभावत्व मुक्तम्, पुनर्भावेष्वितिहेतुवाक्ये भावेष्विति पदं प्रयुक्तम्, तेन च नानाभावाना-मस्तित्वमुररीकृतम्, तेषु इतरेतराभावरूपताचाऽऽरोपिता। यदि सर्वमभाव स्तदा भावेषु इतरेतराभावसिद्धिरिति नोपपद्यते—यदि भावेषु इतरेतराभावसिद्धिः—तदा सर्वमभाव इतिनोपपद्यते। तथा च भाष्यं "प्रतिज्ञावाक्ये पदयोः, प्रतिज्ञाहेत्वोश्च व्याघातादयुक्त" मिति।

अपरं च विचारणीयम्। यच्छून्यतावादिनां मते प्रतिज्ञैव तावन्नात्मतां धारयति-तथाहि—न कश्चिदस्ति ज्ञेयत्वात्रज्जुसर्पवत्, न किंचित्सत्यं ज्ञानत्वात् रज्जुसर्पज्ञानवत्, न किंचित्कारकं असत्वात्, शशविषाणवत्, न किंचिद्विचारसहं विकल्पानुपपत्तेः दर्पणस्थमुखवत्, सत्वे बाध्यत्वस्य असत्वेच व्यवहार्यत्वस्या-योगात्"। एवं न किंचित्सालंबनं प्रत्ययत्वात् स्वप्नप्रत्ययवत्, इत्यादि।

अत्र न किंचिदस्तीतिप्रतिज्ञाघटक किंचित्पदेन न किंचिदस्तीतिप्रतिज्ञाया ग्राह्यतया तस्या अपि प्रतिक्षेपापत्तिर्दुरुद्धरा। न किंचिदस्तीत्यादौ किंचित्पदार्थः प्रतिज्ञापि चेत्-तर्हि प्रतिज्ञैव तावत्स्वशरीरं न धारयति दूरे तस्याः स्वार्थप्रत्याय-कत्वम्। प्रतिज्ञायाः प्रतिक्षेपेभावरूको प्रतिज्ञापि हि न स्यात्। असत्यां च प्रति-ज्ञायां तदर्थस्यापि प्रतिक्षेपः स्यात्, न सत्या, न कारिका-न विचारसहा—प्रतिज्ञा नमपि न सालंबनम्, प्रतिज्ञाजन्यफलमपि न दर्शनम्, इत्यस्याऽर्थस्याभावात्। तादृशार्थोपि न सिद्धान्त इत्यापद्येत। ननु अस्मन्मते नेदं दूषणम्, किन्तु भूषण-मेवेतीदमिष्टमेवाऽस्माकमिति चेत्-विरोधापत्तेः। तथाहि- अत्राचार्याः—"यदि हि न किंचिदस्तीतिप्रतिज्ञार्थः प्रतिज्ञां स्पृशेत्कथमयमर्थः प्रत्येतव्यः, न चेत्कथं सोपपन्ना। तदनुपपन्नत्वे च कथं पुनः प्रतिज्ञार्थ उपपद्यते। तदिदमायातं—स्व-विषमूर्छिता भुजङ्गी आत्मानमेव दशती"ति।

अथ तत्वत इतिप्रतिज्ञायां विशेषणीयम्, तथाच तत्वतो न किंचिदस्तीति-प्रतिज्ञास्वीकारे न विरोधः, प्रतिज्ञायाः सत्वाऽसत्यत्वादेर्व्यावहारिकत्वात्, तथाच व्यावहारिकं सत्वादिकमङ्गीकुर्मो न तु पारमार्थिकमिति चेत्-सत्यम्—तत्वत इत्यत्र तच्छब्देन किं गृह्यते विचारो-वा लोकमर्यादातिक्रमो वा। नाद्यः-सति विचारे

किंचिन्नास्तीतिप्रतिज्ञया प्रतीयते आपाततः किंचिदस्तीति सच विचारः पूर्वमेव निरस्तः । तथाहि—विचारो हि प्रतिज्ञाद्यवयवघटितत्वेन प्रतिज्ञादिस्वरूप एव न तु तदतिरिक्तः, एवं च सर्वसत्त्वबाधकप्रतिज्ञाद्यात्मकविचारप्रतिपाद्या युक्तिरवश्यं सत्यत्वेन त्वयाऽभ्युपेया, अन्यथा असत्यायास्तस्याः साधकत्वाऽसंभवेन "किंचित्" नास्तित्वसाधकत्वानुपपत्तेः। एवंच तादृशयुक्तेः सत्यत्वे प्रतिज्ञाद्यात्मकस्य हि विचारस्य स्वप्रसूतयुक्त्यपत्येनैव प्रतिहतत्वात्, स्वापत्यप्रतिहतकुलीरवदासादितो विचारः कथमन्यत्सत्त्वं बाधितुं प्रभवेत्।

नापि द्वितीयः—लोकमर्यादातिक्रमो नाम पारमार्थिकत्वम् । यदि लोकमर्यादातिक्रान्तं कस्यचित्पदार्थस्य स्वरूपं नास्ति, अर्थात् लोकमर्यादान्तर्गतं ( व्यावहारिकं ) वस्तुजातस्वरूपमस्ति नतु लोकमर्यादातिक्रान्तं ( पारमार्थिकं ) स्वरूपमस्तीत्यस्मत्प्रतिज्ञार्थ इत्युच्यते, तथापि व्याघातो दुर्वार एव—तथाहि—लोकमर्यादातिक्रमो हि न वस्तुसत्तासाधकः, अलीकस्य लोकमर्यादातिक्रान्ततया सत्स्वरूपापत्तेः। किन्तु सति विचारे यो न बाध्यते तद्धि स्वरूपं सत्, बाध्यते चेद्, न सदित्यङ्गीकर्तव्यम्। इत्थच विचारस्यैव सत्त्वाऽसत्त्वव्यवस्थापकतया तस्यच लोकमर्यादाधीनतया लोकमर्यादातिक्रमे विचारस्याऽप्रवेशेन विचारस्य दुर्विचारत्वापातात्। सुविचारत्वे न लोकमर्यादातिक्रम इत्युभयथा व्याघात इति।

किंच न किंचिदस्तीत्यत्र यदि प्रतियोगी प्रसिद्धः तर्हि कथं तदत्यन्तनिषेधः। न चेत्—प्रतियोग्यप्रसिद्ध्यैव निषेधाऽसंभवः, असत्प्रतियोगिकनिषेधाऽसंभवात्।

अथ च विदाङ्कुर्वन्तु सर्वशून्यतापक्षे शून्यताग्राहकप्रमाणस्यापि शून्यतया न शून्यतासिद्धिः।

प्रमाणं विनापि तत्सिद्धौ अविशेषेण पूर्णतैव किं न स्यात्, वाङ्मात्रस्य सर्वत्र सुलभत्वात्। अथ तद्ग्राहकमशून्यं, तर्हि न सर्वशून्यता।

अथ संवृतिरेव शून्यतायां प्रमाणम्। संवृतिश्च संवृणोति आवृणोति तत्त्वानितिव्युत्पत्त्या-अविद्यैव। तथा च विश्वस्य विपर्यीकरणेपि न सर्वशून्यताहानिरिति चेद् उपायस्याऽसत्यत्वे विश्वशून्यतापि सती न स्यात्। अथासंवृतिरेव तत्र प्रमाणम्, असंवृतिश्चाऽनुभव इति चेत्—अनुभवोपि ज्ञातोऽज्ञातो वा प्रमाणम्। ज्ञातोपि स्वतः परतो वा, परतश्चेदनवस्था। अज्ञातश्चेत्स्वयमसिद्धोनुभवः कथं शून्यतां साधयेत्, विश्वमेव वा किं न साधयेत्।

यद्यपि स्वतः पक्षे न दोषः स्वप्रकाशत्वादेव शून्यतासिद्धौ अनवस्थाविरहात्। तथापि वेदान्तमतानुप्रवेशः तथाहि—ज्ञानातिरिक्तस्य जडतया स्वप्रकाशत्वासंभवेन शून्यत्वस्य स्वप्रकाशात्मकत्वे ज्ञानात्मकमेव तत्स्वरूपमङ्गीकर्तव्यम्। एवं प्रपञ्चमात्रस्य मिथ्यात्वेन, कालस्य कालोपाधीनां च प्रपञ्चान्तर्गततया तेषामसत्त्वात्तत्कृतपरिच्छेदशून्यत्वेन तस्य नित्यत्वम्। एवं देशस्याप्यसत्त्वेन देशकृतपरिच्छेदशून्यत्वादेव व्यापकत्वमपि। तत्र नित्यत्वव्यापकत्वधर्मस्वीकारे सधर्म[illegible]

रिति तु नाशकनीयम् । तत्र कालकृतदेशकृतपरिच्छेदशून्यत्वेनौपचारिकनित्यत्व-व्यापकत्वस्वीकारात् । अतएव च धर्मधर्मिभावविरहाद् विचाराऽसमर्थं तत् । विचारस्य धर्मधर्मिभावमुपादायैव प्रवृत्तेः ।

एवं वैधर्म्याभावाच्च—तच्चाऽन्योन्याभावविरहेण द्वैताभाव इत्यद्वैतम् ।

ननु प्रपंचभिन्नत्वात्तस्य प्रपंचनिषेधरूपत्वमेवाङ्गीक्रियतामलं भावरूपज्ञानात्मकत्वस्वीकारेणेतिचेन्न । निषेधस्याऽसत्प्रतियोगित्वानङ्गीकारेण ब्रह्मभिन्नप्रपंचो यदि परमार्थसत् स्यात्तदा तत्प्रतियोगिकनिषेधरूपता स्यात्, नत्वेवमस्ति-अतोभावरूपमेव तत् स्वीकर्तव्यम् । एवमपि तस्य ज्ञानात्मकत्वेन भावरूपतायां पर्यवसानात् शून्यत्वाभिधानमसंगतमिति चेत्—ज्ञानभिन्नं किमपि नास्तीत्यभिप्रायेण तथाभिधानात् । प्रपंचो ज्ञानेन न प्रकाशते इति वक्तुं न शक्यते ज्ञानेन प्रपंचप्रकाशस्य सर्वानुभवसिद्धत्वात् ।

अथ ज्ञानस्याऽसंबद्धवस्तु प्रकाशकत्वेऽसंबद्धत्वाऽविशेषाद् घटज्ञानेन पटादिप्रकाशोपत्तेः एवं च ज्ञानप्रपंचयोः कश्चन संबन्धोवाच्यः । नचास्तु विषयविषयिभावसंबन्ध इति वाच्यम् । ज्ञानातिरिक्तपदार्थाऽस्वीकारेण तादृशसंबन्धस्य त्वया स्वीकर्तुमशक्यत्वात् । इति चेदुच्यते । आविद्यकस्य विषयविषयिभावसंबन्धस्य स्वीकारात् । विषयविषयिभावः क इतिचेत् परमार्थरूपेण नैयायिकैर्यथा समर्थ्यते तथा आविद्यिकस्य विद्ययाविवर्तनीयस्य तस्य समर्थनीयत्वात् । "सच नैयायिकैः समर्थयिष्यते तथैव, वेद्यनिष्ठस्त्वसावस्मिन्वेदान्तदर्शने इति विशेषः । अविद्यैव तथा तथा विवर्तते यथा यथानुभाव्यतया व्यवह्रियते । तत्तन्मायोपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारपथमवतरति गगनमिव स्वप्नदृष्टघटकटाहकोटर कुटीकोटिभि" रितिआचार्यपादाः । तदयं वेदान्तिपक्षो न भूष्यते न वा दूष्यते अप्रकृतत्वादिति ।

अथ निरस्यन्तु शून्यतामौपनिषदाः, द्वैतवादिनस्तु कथमिति चेत्-तथैव-तथाहि—असिद्धैव चेच्छून्यतोपेयते किमपराद्धं व्यवहारसिद्धया पूर्णतया व्यवहार बलादिति चेत् तदिदंविपरीतम् । न खलु स्वप्नेपि शून्यता स्वारसिकस्य कस्याप्यनुभवस्य गोचरः, अपि तु पूर्णतैव, अनुभवोपगमे च क नाम शून्यतेतिदिक् ।

तदयं निष्कर्षः आत्माऽभावज्ञानं न मोक्षहेतुः । तदपेक्षयाऽऽत्मदर्शनस्यैव मोक्षहेतुताकल्पने लाघवात् । अतएव प्रतियोगितयानुयोगितया चात्मैव तत्वतो ज्ञेय इत्याचार्यीयस्य "अभावज्ञाने "आत्म" प्रतियोगिज्ञानस्य हेतुतया प्रतियोगितये त्यभिहितमिति दीधितिकारः । अपि च नैरात्म्यवादिमते आत्मा नास्तीत्यभाव लौकिकप्रत्यक्षं प्रति प्रतियोगिज्ञानस्यातिरिक्तहेतुत्वकल्पने तादृशतत्वज्ञानसामग्र्या निवेशे च गौरवम् । न च तादृशविशिष्टवैशिष्ट्य स्वविषयताशालिप्रत्यक्षं प्रति विशेषणतावच्छेदकमुद्रया क्लृप्तहेतुत्वादेव तदुपपत्तेर्नातिरिक्तहेतुत्वमिति वाच्यम् । विशिष्ट वैशिष्ट्यावगाहितया भ्रमसाधारणतया तत्वज्ञानस्य भ्रमत्वापत्तेः । प्रति-

योगिज्ञानस्य हेतुताकल्पने तु तथाविधाऽभावे प्रतियोगितासंबन्धेन प्रतियोगिनः एव प्रकारत्वात्तदंशे भ्रमत्वाभावात्। न चैवं प्रतियोगिविशेषिताऽभावज्ञानं तु विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते इति दीधितिकृद्विरोध इति वाच्यम्। इष्टत्वात् न च प्रतियोगिज्ञानं न हेतुः किन्तु विशेष्ये विशेषणमितिरीत्या तादृशप्रत्ययं प्रति विशेषणज्ञानविधया तस्य हेतुत्वं क्लृप्तम्, निर्विकल्पादपि घटोनास्तीतिप्रतीतिरिष्टैवेति वाच्यम्। तथापि तत्कारणीभूतनिर्विकल्पात्मक प्रत्यक्षस्यैव मोक्षहेतुत्वकल्पने लाघवात्।

न चासदेवेत्यादिश्रुतिवलादेव तथात्वकल्पने गौरवं न दोषायेति वाच्यम्। सदेवाग्रे आसीदित्यादिश्रुत्या आत्मनएव तथात्वबोधनात्। तत्रानुकूलतर्कस्यैव नियामकत्वात्। अतएव "मिथो विरुद्धार्थानां श्रुतीनां विना न्यायं तात्पर्यस्य दुरवधारणात् इत्युक्तं दीधितिकृता।

वस्तुतस्तु सृष्टेरग्रेऽसदेवाऽग्रे आसीदिति प्रश्नानन्तरमेव सदेवसौम्येदमग्रे आसीदेकमेवाऽद्विवीतीयं तद्धैके आहु-रसदेवेदमग्रे आसीदेकमेवाऽद्वितीयं, तस्मादसतःसज्जायते। कुतस्तु खलु सौम्य एवं स्यादितिहोवाच कथमसतः सज्जायेतेतिसत्वेन सौम्येदमग्रे आसीदेकमेवाऽद्विवतीयम्। इति श्रुतिः।

अस्याः भाष्यम्। सदेव सदित्यस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतमेकं निरंजनं निरवयवं विज्ञानं यदवगम्यते सर्ववेदान्तेभ्यः। एवशब्दोऽवधारणार्थः। किं तदवध्रियते इत्याह। इदं-जगत्-नामरूपक्रियावद्विकृतं उपलभ्यते यत् तत्सदेवाऽसीदिति आसीच्छब्देन संबध्यते। कदा सदेवाऽऽसीदित्युच्यते, अग्रे-जगतः प्रागुत्पत्तेः। किंनेदानीमिदं सत्, येनाऽग्रे आसीदिति विशिष्यते। न। कथं तर्हि विशेषणम्। इदानीमपीदं सदेव; किन्तु नामरूपविशेषणवदिदं शब्दबुद्धिविषयं चेतीदं च भवति। प्रागुत्पत्तेस्त्वग्रे केवलसच्छब्दबुद्धिमात्रगम्यमेवेति सदेवेदमग्रे आसीदित्यवधार्यते। न हि प्रागुत्पत्तेर्नामरूपवद्वा इदमिति गृहीतुं शक्यं वस्तु-सुषुप्तकाल इव। यथा सुषुप्तादुत्थितः सत्त्वमात्रमवगच्छति सुषुप्ते सन्मात्रमेव केवलं वस्त्विति तथा प्रागुत्पत्तेरित्यभिप्रायः। यथेदमुच्यते लोके पूर्वाह्णे घटादिसिसृक्षुणा कुलालेन मृत्पिण्डं प्रसारितमुपलभ्य ग्रामान्तरं गत्वा प्रत्यागतोऽपराह्णे तत्रैव घट-शरावाद्यनेक भेदभिन्नं कार्यमुपलभ्य मृदेवेदं घटशरावादि केवलं पूर्वाह्णे आसीदिति, तथेहाप्युच्यते सदेवेदमग्रेआसीदिति। एकमिति सजातीयभेदनिषेधः। अद्वितीयमिति विजातीयभेदनिषेधः। तदिति। तत्रेत्यर्थः। एके, वैनाशिकाः। इदं-जगत्-उत्पत्तेः पूर्वं-असदेव-सदभाव एव। आसीत्। तस्मादसतः शून्यात् सत्कार्यं जायत-अजायत। अड्भावश्छान्दसः। वैनाशिकपक्षं प्रतिषेधति। कुतस्तु-कस्मात्प्रमाणात्खलु हे सौम्य एवं स्यात्-असतः सज्जायेत इत्येवं कुतो भवेत्, न कुतश्चित्प्रमाणादेवं संभवतीत्यर्थः। कथं-केन प्रकारेणासतः सज्जायेतेति। असतः सदुत्पत्तौ न कश्चिदपि दृष्टान्तोस्तीतिभावः। यदपि बीजध्वंसेऽङ्कुरो

जायमानो दृष्टोऽभावादेवेति, तदपि अभ्युपगमविरुद्धं तेषाम्। कथम्—ये तावद्बीजावयवास्तेऽङ्कुरेऽप्यनुवर्तन्त एव न तेषामुपमर्दोऽङ्कुरजन्मनि। यत्पुनर्बीजाकारसंस्थानं, तद्बीजावयवव्यतिरेकेण वस्तुभूतं न वैनाशिकैरभ्युपगम्यते, यदङ्कुरजन्मनि उपमृद्येतेति।

श्रुत्यन्तरं च—असुर्या नाम ते लोका अन्धेन तमसा वृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जना इति।

तस्मान्नैरात्म्यवादः शून्यवादश्च हेय एव। अतएव आत्मतत्त्वविवेके दीधितौ 'गौरोऽहमित्याकारकं अनादिदेहाभेदवासनासमुद्भूतं आत्मज्ञानमतत्त्वज्ञानमेव, कादाचित्कं अहंसुखीत्यादिकं च ज्ञानं बलवता मिथ्याज्ञानेन तिरस्कृतत्वान्न कार्यक्षम" मित्युक्तम्।

तस्मात्तत्त्वज्ञानविषयतया मोक्षभागितया चाऽऽत्मा निरूपणीयः। तदुक्तमाचार्यैः।

स्वर्गाऽपवर्गयोर्मार्गमामनन्ति मनीषिणः
यदुपास्तिमसावत्र परमात्मा निरूप्यते।

स्वर्गापवर्गरूपयोः-स्वर्गतुल्ययोरपवर्गयोः जीवन्मुक्तिपरममुक्त्योरिति प्राञ्चः। वस्तुतस्तु स्वर्गः-स्वर्गसाधनं धर्मः स्वर्गसाधनमार्ग-यस्य उपासनारूप 'सकामिनः आमनन्ति, अपवर्गस्य मार्गमुपायं यदुपासनारूपं निष्कामिन' कथयन्ति इति योजना। यदुपास्तिमिति। यस्योपासनामित्यर्थः। न तु परमात्मा निरूप्यते इत्याचार्यकथनादीश्वरस्यैव तत्त्वज्ञानविषयत्वे-आत्मतत्त्वज्ञानस्य मोक्षहेतुत्वे मानाभावः। एतेन स्वात्मसाक्षात्कारस्य मोक्षहेतुत्वे मानं च—

यदात्मानं विजानीयादहमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय संसारमनुसंसरेदिति।

ईश्वरमननं चादृष्टद्वारा स्वात्मसाक्षात्कारद्वारा वामुक्तौ हेतुरिति प्राचीनमतं निरस्तम्। तत्त्वमस्यादिवाक्यवदस्यापि जीवेश्वरभेदनिरसने तात्पर्यात्तस्य चरमतत्त्वज्ञानाभावात्।

अत्र केचित्। उभयश्रवणमननिदिध्यासनसाक्षात्कारा एव यथायथं मोक्षहेतव इति वदन्ति। तन्न। तदुभयविषयकतत्त्वज्ञानस्य मोक्षहेतुत्वे गौरवात्।

यत्तु गौरोऽहं स्थूलोऽहमित्याकारकमिथ्याज्ञानादिजन्यवासनानाशं प्रति आत्मविशेष्यकशरीरभिन्नत्वप्रकारकसाक्षात्कारस्य विरोधितया नाशकत्वं क्लृप्तम्, तथा च जीवात्मतत्त्वज्ञानं वासनानाशद्वारा मोक्षजनकमिति। तन्न। यदि तत्त्वज्ञानादेव मोक्षः—यदि वा कर्मणां भोगादेव क्षय, उभयथा च वासनानाशस्य मोक्षहेतुत्वे मानाभावः। परन्तु तादृशवासनानाशकतयाऽपि आत्मसाक्षात्काररूपमारभते। अन्यथा विहितनिषिद्धयो प्रवर्तमानस्य तत्त्वज्ञानिनः धर्माधर्मोत्पादादनिर्मोक्षत्वापत्तेः।

न चेश्वरविषयकसाक्षात्कारादेव तादृशवासनानाशोस्तु इति वाच्यम्। भिन्नविषयकत्वात्, समानविषयकविरोधिज्ञानस्यैव संस्कारनाशकतया क्लृप्तत्वात्। न च संस्कारविषयकविरोधिज्ञानविषयकयोर्नाश्यनाशकभावो विषयभेदाद्भिन्न एव। तथाच वासनात्मकसंस्कारनाशे विरोधिज्ञानस्य हेतुताया अक्लृप्तत्वात्, तादृशवासनानाशे ईश्वरविषयकसाक्षात्कार एव हेतुरस्त्विति वाच्यम्। घटादिधर्मिकशरीराऽभेदधीजन्यसंस्कारस्य विनैवेश्वरसाक्षात्कारं घटधर्मिकशरीरभेदबुद्ध्या नाशात् तत्र तस्य हेतुत्वमावश्यकम्, तत्र घटाद्यनन्तविषयभेदेनाऽनन्तकारणत्वमपेक्ष्य धर्मितावच्छेदकत्वसामाधिकरण्योभयसंबन्धेन तादृशविरोधिज्ञानस्य तादृशप्रतियोगितासंबन्धेन तादृशसंस्कारनाशं प्रति हेतुता कल्प्यते। एवं च तादृश कार्यकारणभावेनैवोपपत्तौ आत्मविशेष्यकमिथ्याज्ञानजन्यसंस्कारनाशे विरोधिज्ञानस्य कारणत्वान्तरं न कल्प्यते, ईश्वरविषयकसाक्षात्कारस्य तन्नाशकत्वोपगमे तु कारणान्तरकल्पनप्रसंगः। न चात्मविशेष्यकशरीरभेदप्रकारक साक्षात्कारस्य तादृशसंस्कारनाशकतया आवश्यकत्वे मुक्तिहेतुत्वमपि तस्यैवोचितम्, अक्लृप्तेश्वर साक्षात्कारस्य मोक्षहेतुत्वकल्पने गौरवमिति तमेव विदित्वेति श्रुत्या ईश्वरविषयक साक्षात्कारस्य मुक्तिहेतुताया बोधने गौरवस्याऽकिंचित्करत्वात् ईश्वरतत्वज्ञानमेव हेतुरिति।

वस्तुतस्तु, आत्मविशेष्यक शरीरतादात्म्यप्रकारकवासनानाशं प्रति आत्मविशेष्यकशरीरभेदप्रकारकसाक्षात्कारस्य धर्मितावच्छेदकप्रत्यासत्या हेतुतया आवश्यकत्वेपि अहंममेत्याकारक निर्धर्मितावच्छेदककाऽऽमतादात्म्यप्रकारक मिथ्याज्ञानजन्यतादृशसंस्काररूपवासनाया आत्मवादित्यादिमिथ्याज्ञानजन्यवासनायाश्च नाशकतया ईश्वरसाक्षात्कारस्य हेतुत्वमावश्यकम्।

केचित्तु धर्मितावच्छेदकत्वादिप्रत्यासत्या तथात्वे तत्पुरुषीयत्वनिवेशमपेक्ष्य विषयनिवेशस्यैवोचितत्वाद्विशेष एव निवेशः। तथा च वासनात्मकसाक्षात्कारनाशे विरोधितया आत्मज्ञानस्य हेतुत्वाऽकल्पनादीश्वरसाक्षात्कार एव हेतुर्मोक्षे। न च तथापि स्वात्मसाक्षात्कारस्य सामान्यबाधनिश्चयमुद्रया शरीरानुमितिसाक्षात्कारविरोधित्वं न संभवति, तत्प्रतिबध्यतावच्छेदके लौकिकान्यत्वस्य दोषविशेषाऽजन्यत्वस्य च निवेशात् कथं तज्जन्यसंस्कारनाश इति वाच्यम्। तथापि तदिन्द्रियजस्थलीयप्रतिबध्यप्रतिबन्धकभावेनैव तदुपपत्तेः। तथाहि—शरीरमात्मभिन्नमितिमानसबाधनिश्चयस्य प्रतिबध्यतावच्छेदके न लौकिकान्यत्वनिवेशः। प्रयोजनाभावात्। लौकिकाऽलौ ककसाधारणशरीरोऽहमिति मानसत्वमेव प्रतिबध्यतावच्छेदकम्, लाघवात्। तादृशोपनीतभानस्य सामान्यबाधप्रतिबध्यतावच्छेदकाक्रान्तत्वाच्च।

ननु समानेन्द्रियजन्यस्यापि उपनीतभानात्मकबाधनिश्चयस्य लौकिकप्रत्यक्षाऽप्रतिबन्धकत्वाद् ग्राह्याऽभावांशे लौकिकत्वमपि प्रतिबन्धकतावच्छेदककोटौ निवेश्यमिति सिद्धान्तः। तथाच शरीरमात्मभिन्नमितिमानसे आत्मप्रतियोगिकभेदे

लौकिकत्वाभावाच्च तस्य विरोधित्वम्, तस्य संस्कारनाशकत्वात्तादृशसंस्कारनाशक- ईश्वरसाक्षात्कार एवेति चेन्न। मानसदशायां मनःसंयुक्तसमवेतविशेषणताया आत्मत्वनिष्ठाऽऽत्मभेदेपि सत्वादात्मत्वनिष्ठभेदस्य शरीरेपि सत्वात्। एवंसति शंखो न पीतः—इयं प्राचीत्यानुमानिकशब्दादिनिश्चयसत्वे पित्तादिदोषसत्वेच शंखः पीतः—नेयं प्राचीत्यादिविशिष्टबुद्ध्युदयात् दोषविशेषाजन्यत्वं सामान्यतो बाध- निश्चयप्रतिबध्यतावच्छेदके निवेश्यम्। तथाच घटादिधर्मिकशरीरतादात्म्यज्ञानस्य घटः शरीरभिन्न इति सामान्यबाधनिश्चयाऽप्रतिबध्यत्वात्, तस्य दोषविशेष जन्यत्वात्।

ननु दोषविशेषाः विशिष्यैवोपादेयाः, तथा तत्र वासनारूपदोषाजन्यत्व- निवेशात् आत्मा गौरः-घटो गौर इत्यादिसाधारणधर्मितावच्छेदकताप्रत्यासत्या तथात्वं स्वरूपमिति चेन्न। इदानीन्तन आत्मा न गौर इतितत्वज्ञानात्तादृशवासना- नाशाज्जीवन्मुक्तः स्यात्।

तस्मादात्मागौर इति मिथ्याज्ञानजन्य संसारनाशकमीश्वरज्ञानमेवेति। न च तदीयाऽलौकिकसाधारणमानसं प्रति आत्मा गौरभिन्न इतिमानसज्ञानमेव विशेष तो विरोधीतिवाच्यम्। लौकिकविषयताशालिमानसं प्रत्येव तादृशमानसस्य प्रतिबन्धकत्वस्वीकारात्, अन्यथा प्रायशो जीवन्मुक्ताः स्युरिति। नच लौकिकस- न्निकर्षजन्यबुद्धाविव दोषविशेषजन्यज्ञानेपि तदंशे लौकिकविषयकत्वं स्वीक्रियते- तथा चाऽऽत्मा गौर इतिमानसे गौरांशे लौकिकत्वस्वीकारा ल्लौकिकविषयताशालि मानसं प्रति तस्य प्रतिबन्धकत्वात्तन्नाश्य एव तत्संस्कार इतिवाच्यम्। तत्र प्रमाणा- भावादिति वदन्ति।

दीधितिकृतस्तु "*न वा पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय*- पतिः प्रियो भवति इत्युपक्रम्य "आत्मा वारे द्रष्टव्यः श्रोतव्य इति श्रुतेः स्वात्मज्ञान स्यैव मोक्षहेतुत्वसिद्धिः। यदि "यतो वा इमानि भूतानि जायन्ते इत्यादीश्वरमुप क्रम्य तत्वमस्यादिश्रुत्या जीवेश्वरतादात्म्यसाक्षात्कार एव मोक्षहेतुरिति प्राहुः।

ननु इन्द्रियप्रत्यासन्नतया ईश्वरसाक्षात्कार एव दुर्घटः। अथ तदादिपदार्थ विप्रतिपत्तयः। तत्राऽद्वितीय परमानन्दबोध एव ब्रह्म, तच्च जीवस्य वास्तवं रूपम्। मायया च सर्वज्ञत्वादिविशिष्टं जगदुपादानं निमित्तं चोपनिषदाः अतएव कुसुमांजलौ शुद्धस्वभाव इत्यौपनिषदा इत्युक्तम्। *जगत्कारणं प्रधानम* चेतनमिति सांख्याः। आदिविद्वान् सिद्धइति च आदौ-सर्गादौ-विद्वान् चिद्रूपःसिद्धः अष्टविधैश्वर्यवान्। क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषो नित्यज्ञानरूपः प्रधानां शसत्वगुणं प्रतिफलिततया सर्वज्ञः संसारिभिन्न ईश्वरः निर्माणकायमधिष्ठाय संप्रदायप्रद्योतकोऽनुग्राहकश्चेतिपातंजलाः। अविद्याऽस्मितारागद्वेषाभिनिवेशाः पंचक्लेशाः। तत्राऽविद्या-अनाद्यज्ञानं विनाशि च। अस्मिता-अहंकारः। अभि- निवेशोमरणभयम्। कर्म-धर्माऽधर्महेतुर्यागहिंसादि। जातिरुत्पत्तिर्जन्मेति यावत्। उत्पत्तिश्चाऽऽद्योदेहप्राणसंयोगः। उत्तरकालमनुवर्तमानो देहप्राणसंयोगः आयुः।

भोगः सुखदुःखानुभवः। त इमे विपाकाः। तथा च पातञ्जलसूत्रम् "सति मूले तद्विपाको जात्यायुर्भोगाः" इति। आशया इति। फलपर्यन्तमात्मनि आशेते इतिव्युत्पत्त्या आशयो धर्मादिः। यद्यपि क्लेशादीनां तन्मते मनोधर्मत्वात् जीवात्मनामपि तदपरामृष्टत्वं वर्तते एव।

तथापि मनसि वर्तमानानामेषां जीवात्मसु व्यपदेशोस्ति, ईश्वरे तु न तथेत्यभिप्रायः। तदुक्तं व्यासभाष्ये "ते च मनसिवर्तमानाः पुरुषे व्यपदिश्यन्ते स हि तत्फलस्य भोक्तेति। यथा जयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते। यो हि अनेन भोगेनाऽपरामृष्टः स पुरुषविशेष ईश्वर" इति। घटादि निर्माणाद्यर्थं शरीरं परिगृह्य। न च भगवतोऽदृष्टाभावात् कथंशरीरपरिग्रह इति वाच्यम्। तस्याऽदृष्टाऽभावेपिघटादिभोगप्रयोजकाऽस्मदाद्यदृष्टैरेव तस्य घटादिनिर्माणार्थं शरीरपरिग्रहो पपत्तेः। अतएव शरीरपरिग्रहेपि न तस्य संसारित्वम्। स्वादृष्टोपनिबद्धशरीरपरिग्रहस्यैव संसारत्वात्। संप्रदायोवेदः संप्रदीयतेऽसौ गुरुणा शिष्यायेति व्युत्पत्तेः। घटादौ कर्तव्ये शिक्षयिता।

विषभक्षणविषधरधारणादिभिः लोकविरुद्धैः, वेदविरुद्धै-र्द्विजहनन-द्विज वधूविध्वंसनादिभिः, निर्लेपः-दृष्टाऽदृष्टदोषशून्यः। वेदविरुद्धकर्मणापिपरस्य पापाजननात्। न च वेदनिषिद्धकर्मणा कथं तस्य पापं न जन्यते इति वाच्यम्। तस्य वासनाऽभावात्। मिथ्याज्ञानसलिलसिक्तायां हि आत्मभूमौ कर्मबीजं फलाङ्कुरं जनयति, न तु तत्वज्ञाननिदाघनिपीतमिथ्याज्ञानसलिलायामुषरायामपीतिभावः। स्वतन्त्रः परमाण्वदृष्टादिनैरपेक्ष्येण जगतः कर्तेति महापाशुपताः। स च जीवाद्भिन्नो जीवोपास्य एव अतएव कुसुमाञ्जलौ शिव इतिशैवा इत्युक्तम्। भगवान् वासुदेवो जगत्कारणम्, तस्मादुत्पद्यते संकर्षणो महान्, तस्मात्प्रद्युम्नः, ततोऽहंकारोऽनिरुद्ध इति पंचरात्रिकाः भगवान् पुरुषोत्तम इतिवैष्णवाः। पितामह इति पौराणिकाः। यज्ञपुरुषः इति याज्ञिकाः। क्षणिकसर्वज्ञ इति सौगताः। निरावरण इति दिगंबराः लोकव्यवहारसिद्ध इतिचार्वाकाः। सर्वज्ञत्वादिधर्मोपेतं ब्रह्म नास्ति, उपास्यत्वेन देशितो मन्त्रादिः। लोकव्यवहारसिद्धचतुर्भुजादिशरीरं तत्प्रतिमावेति तस्मऽज्जगदुत्पत्तिरिति मीमांसकाः। नित्यज्ञानेच्छाकृतिमानीश्वरः सर्वज्ञः क्षित्यादि कार्यानुमितो जीवभिन्नो इति नैयायिकाः। अतएव कुसुमाञ्जलौ "यावदुक्तोपपन्न इतिनैयायिका इत्युक्तम्। यावदुक्तेषु यदुपपन्नं युक्तिसिद्धं तेनोपपन्न इति तदर्थः। किंबहुना कारवोपि यं विश्वकर्मेत्युपासते। यद्यपि स्मृतिश्रुतिसिद्धे भगवति संशय एव नास्ति तथापि विचारचर्चेयमुपासनैव क्रियते। तथा च आत्मा श्रोतव्यो मन्तव्य इत्यादिश्रुतिः।

आगमेनानुमानेन ध्यानाभ्यासरसेन च।

त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तममितिस्मृतिश्च। आगमेन-श्रुत्यादिना। अनुमानेन मननेन। ध्यानं "तत्रप्रत्ययैकतानताध्यानम्" इति योगसूत्रोक्तं लक्षणम्।

तस्याऽभ्यास –पौन पुन्येनाऽऽवृत्तिः । तत्र यो रस इच्छा तेनेत्यर्थः । त्रिधा–उक्ताऽऽगमादिप्रकारत्रयेण, प्रज्ञां-बुद्धि, भगवति प्रकल्पयन्नित्यर्थः ।

अत्रचार्वाकाः—प्रत्यक्षमेव प्रमाणं, नत्वनुमानादिकम् । धूमदर्शनानन्तरं वन्ह्यर्थप्रवृत्तिश्च संभावनामात्रात् । तथाचेश्वरस्याऽनुमानान्न सिद्धिः, यन्न प्रत्यक्षं तन्नास्तीत्यनुपलब्धिमात्रमीश्वरबाधकं च । किन्तु जीवात्मज्ञानादेव मुक्तिरित्यत्र वादिनामविवाद एव । तथाच चार्वाकमतप्रतिपादिका श्रुतिश्च । "पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन् ।" स्वयम्भू ब्रह्मा, खानि, खोपलक्षितानि श्रोत्राणीन्द्रियाणि, पराञ्चि–बाह्यशब्दादिविषयप्रकाशनसमर्थानि, व्यतृणत्—हिंसितवान्, बहिर्मुखतया निर्माणमेवेन्द्रियाणामहितकरत्वात् हननमिव भवतीति भावः । तस्मात् इन्द्रियाणां बहिर्गामित्वात्, जीवः तैरिन्द्रियैः पराङ्-शब्दादिबाह्य-विषयान्, पश्यति, जानाति । नान्तरात्मन्, अन्तर्यामिणं प्रत्यगात्मानंनजानाति । तथा चाऽन्तरात्मनो दर्शनविरहेणाऽसत्वमिति शंकानिराकरणपरायाः श्रुतेः पूर्वार्धस्य तदसत्वकल्पनयापि चार्वाकमतोत्थानबीजमिति वदन्ति । तन्न । श्रुतेरुत्तरार्द्धेनैव तन्निकरणात् तथाहि—

"कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृतचक्षुरमृतत्वमिच्छन्निति" ।

एवं लोकस्य बाह्यविषयोपलब्धृत्वस्वभावे सत्यपि कश्चिद्धीरः–कोपि विवेकी आवृतचक्षुः—विषयेभ्यः आवृतः व्यावृत्त चक्षुः श्रोत्रादीन्द्रियगणो येन स अमृतत्वं मोक्षमिच्छन् मोक्षप्राप्तिकामनया प्रत्यगात्मानं प्रत्यक चासौ आत्मा चेति प्रत्यगात्मा तं । प्रत्यकशब्द आत्मनि रूढः । ऐक्षत् साक्षात्करोतीत्यर्थः ।

"न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः
परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति"

अन्ये ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुरित्यादिश्रुत्या तन्मतत्यागात् अतएव बौद्धाधिकारे "उपास्यमाने तस्मिन् प्रथमं बहिरर्था एव भासन्ते यानाश्रित्य कर्ममीमांसोपसंहारः, चार्वाकसमुत्थानं च तत्प्रतिपादनार्थं "पराञ्चि खानि" इत्यादि । तद्धानार्थं परं कर्मभ्य इत्यादि" इत्युक्तम् ।

अपिचाऽनुमानस्याऽप्रामाण्ये प्रत्यक्षस्याप्यप्रामाण्यापत्तिः, प्रत्यक्षप्रामाण्यस्या-नुमेयत्वात्, तस्य स्वतस्त्वे इदं ज्ञानं प्रमा न वेति प्रामाण्यसंशयानुपपत्तेरित्यन्यत्र विस्तरः ।

अपिच पर्वतोवन्हिमानित्यनुमितिमानहं इत्यनुव्यवसायसाक्षिकोऽनुमिति-त्वजातिविशेषः, तदवच्छिन्नं प्रति परामर्शस्य हेतुतयाऽनुमानं प्रमाणम् ।

ननु तथापि अनुमितित्वं मानसत्वव्याप्योजातिविशेष एवास्तु इति चेन्न । वन्हिमनुमिनोमि न साक्षात्करोमीत्यनुभवात् ।

अपिच परलोकसाधनमदृष्टधर्माधर्मात्मकमलौकिकमवश्यं वाच्यम्, तदधिष्ठातृतया ईश्वरः साधनीयः, अचेतनस्य कारणस्य चेतनाधिष्ठानेनैव कार्यजन-कत्वात् । अयंभावः अधिष्ठानं प्रेरणा, अधिष्ठातुरधिष्ठेयगतफलानुकूलव्यापारवत्वम्

तच्च प्रकृते इच्छैव। नचाऽस्मदादीनामदृष्टाधिष्ठातृत्वं संभवति, जायमानायामपीच्छायां ततः फलानुत्पत्तेः। ईश्वरस्य तु सत्यसंकल्पतया अधिष्ठातृत्वमुपपद्यते। किंचाऽधिष्ठेयगोचरापरोक्षज्ञानवत एवाधिष्ठातृत्वस्य रथशकटादौ दर्शनादज्ञातेऽधिष्ठानाऽदर्शनाच्च प्रकृतेपि अदृष्टगोचराऽपरोक्षज्ञानवत ईश्वरस्यऽ धिष्ठातृत्वं, नत्वनेवंरूपाणां जीवानाम्। तथाचाऽयं प्रयोगः। विमतमधिष्ठातं अधिष्ठेयगोचरापरोक्षज्ञानपूर्वकं अचेतनाधिष्ठानत्वात् तक्षादिकृतवास्याद्यधिष्ठानवदिति।

अतएव कुसुमाञ्जलौ अदृष्टसाधनायोक्तम्-

"सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः।
प्रत्यात्मनियमाद् भुक्तेरस्ति हेतुरलौकिकः" इति।

अलौकिकः—अतीन्द्रियः, परलोकहेतुः-अस्तीतिप्रतिज्ञा। न चाऽलौकिकपरलोकहेतुपक्षकाऽस्तित्वसाध्यकप्रतिज्ञा न संभवति, तादृशपक्षस्याऽप्रसिद्धेरिति वाच्यम्। विमतं सुखं लौकिकप्रत्यक्षाऽगोचराऽऽत्मविशेषगुणजन्यं अनुभवाद्यन्यजन्याऽऽत्मविशेषगुणत्वात् स्मृतिवदित्यत्र तात्पर्यात्। भावनायास्तत्र हेतुत्वाऽसंभवाददृष्टमादाय पर्यवसानम्। भावनायाः स्मृतिजनकतयैवसिद्धेर्न स्वर्गादिजनकत्वम्, एवं तस्याः अनुभवजन्यतया न यागादिजन्यत्वमितिशब्दमणौ व्यक्तम्। भावनायास्तथाविधत्वाङ्गीकारे तु संज्ञामात्रे विवाद इति ध्येयम्। एवं दुःखं पक्षीकृत्य वाच्यम्।

कार्यकारणभाव एव नास्ति कुतः कारणविशेषस्याऽदृष्टस्य सिद्धिरित्युपोद्घातसंगत्या कार्यकारणभावं व्यवस्थापयति। सापेक्षत्वादिति। सापेक्षत्वं च कादाचित्कत्वम्। तथाच कार्यं सहेतुकं कादाचित्कत्वात् भोजनजन्यतृप्तिवत्। न च साध्याप्रसिद्धिः। अन्वयव्यतिरेकाभ्यां प्रत्यक्षत एव तृप्त्यादौ भोजनादिहेतुकत्वस्य प्रसिद्धेरितिजगदीशः। प्रकाशकृताऽप्युक्तं "कियद्भागे प्रत्यक्षेणैव तत्सिद्धौ, तदविषयेऽनुमानादिति"। कादाचित्कत्वं च किंचित्कालवृत्त्यभावप्रतियोगित्वे सति किंचित्कालवृत्तित्वम्। न च प्रागभावे व्यभिचारः। उत्पत्तिमत्वस्यैव विशेष्यदलार्थत्वात्। तच्च स्वावृत्तित्व स्वोत्तरवृत्तित्वोभयसंबन्धेन किंचित्कालविशिष्टत्वम्।

तदेवं कार्यकारणभावसिद्धौ क्षित्यादिकर्तृतयेश्वरसिद्धिः। एवमदृष्टसिद्धौ तदधिष्ठातृतयेश्वरसिद्धिः। ननु घटादिहेतोः सदातनत्वे घटादेरपि सदातनत्वापत्तिः। न चाऽऽपत्तिस्तर्कः-कारणं यदि सदातनं तदा कार्यमपि सदातनं स्यादित्याकारकः—"कार्यस्य सदातनत्वमापाद्यं, हेतोः सदातनत्वमापादकम्"। सच न संभवति आपाद्यापादकयोर्वैयधिकरण्यादिति वाच्यम्। कार्यं यदि सदातनहेतुकं स्यात्तदा सदातनं स्यादित्यापादनात्। सदातनहेतुकत्वं च सदातनमात्रहेतुकत्वम्, कादाचित्कहेतुकत्वाभाववत्त्वमितियावत्। तच्च गगनादौ प्रसिद्धमेव। एतेन सदातनहेतुकत्वं परमाणुजन्ये द्व्यणुके ईश्वरीयाऽपेक्षाबुद्धिजन्ये द्वित्वेच सदातनत्वव्यभिचारि, सदातनचरमसामग्रीकत्वं चाऽप्रसिद्धम्, सर्वत्राऽदृष्टादेर्हेतुत्वादितिनिरस्तम्।

तथाच घटादिहेतोः कादाचित्कत्व वाच्यम्, एवं तत्कारणपरंपरापि कादाचित्की सहेतुका वाच्या इत्यनवस्थायामुक्तम् अनादित्वादिति। बीजाङ्कुरवत्प्रामाणिकीयमनवस्था न दोषायेत्यर्थः।

ननु ब्रह्मैवकारणमस्तु किं वा नानाबुद्ध्यात्मिका प्रकृतिरेवकारणमस्तु किमदृष्टेनेत्यत्राह-वैचित्र्यादिति। वैजात्यादित्यर्थ कार्यं विचित्रकारणवत् विचित्रकार्यत्वात्। तथा च वैजात्यस्य भेदव्याप्यतया कार्यभेदात्कारणभेदः, कार्यवैजात्यात्कारणवैजात्यं च लभ्यते। कारणभेदस्य कार्यभेदे, कारणवैजात्यस्य च कार्यवैजात्ये प्रयोजकत्वात्। एवं च न ब्रह्मणः प्रकृतेर्वा कारणत्वम्। ब्रह्मण एकत्वात् कार्यभेदानुपपत्तेः, प्रकृतेरेकजातीयत्वात्कार्यवैजात्यानुपपत्तेश्चेति भावः।

ननु दृष्टं यागाद्येव विचित्रं कारणमस्तु किमदृष्टेनेत्यत्राह विश्ववृत्तित्व इति। विश्वेषां परलोकार्थिनां यागादौ प्रवृत्तितः। स्वर्गादिजनकत्वज्ञानमेव यागादि प्रवृत्तिजनकम्। तथा च यागादौ प्रवृत्तिः सफला भ्रमाद्यजन्यप्रवृत्तित्वात्, प्रेक्षावत्प्रवृत्तित्वाद्वा इत्येनेन प्रवृत्ते फलजनकत्वमनुमेयम्। प्रवृत्तिं प्रति कृतिसाध्यताज्ञानं इष्टसाधनज्ञानं च कारणम्। यागो मत्कृतिसाध्यः मदिष्टसाधनं चेति प्रकृतम्। एवं चिकीर्षापि प्रवृत्तौ कारणम्। सा च प्रकृते यागंकुर्यामित्याकारिका। "जानाति इच्छति यतते चेष्टते इतिव्यवहारोपि। उक्तच।

चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा।
उपादानस्य चाऽध्यक्षं प्रवृत्तौजनकं भवेदिति।

परन्तु स्वर्गादिजनकत्वं यागादेः स्वर्गादिकालावस्थायिव्यापारंविना न संभवति स्व-स्वव्यापारान्यतरसत्वे एव कार्योत्पत्तेः। इत्यतोऽदृष्टसिद्धिः। यागः स्वर्गादिकालावस्थायिव्यापारवान् फलकालमस्थायित्वे सति फलजनकत्वात्कर्पणादिवदिति प्रयोग.।

ननु अदृष्टं न भोगसमानाधिकरणं किन्तु भोग्यनिष्ठत्वेनैव भोगजनकमित्यत आह। प्रत्यात्मनियमादिति। भुक्तेः भोगस्य सुखदुःखान्यतरसाक्षात्कारस्येति यावत्। प्रत्यात्मवृत्तित्वात् व्यधिकरणादृष्टस्य भोगजनकत्वेऽतिप्रसंगात्। तथाहि-अदृष्टस्य भोग्यनिष्ठत्वे कालिकसंबन्धेनैव तस्यभोगहेतुत्वं वाच्यम्, तथाचाऽन्यकृतकर्मजन्याऽदृष्टादन्यस्यापि भोगः स्यात्। तत्तत्पुरुषीयकर्मजन्यादृष्टस्य तत्तत्पुरुषीय भोगनियामकत्वे चाऽनन्तकार्यकारणभावकल्पनापत्तिरित्यतोलाघवात् समवायघटितसामानाधिकरण्यप्रत्यासत्त्याऽदृष्टस्य भोगहेतुत्वमिति भाव। भोग समानाधिकरणहेतुजन्यः प्रतिनियतभोगत्वात् भोजनजन्यतृप्तिवदिति प्रयोगोबोध्यः।

अयं भावः भोग्यनिष्ठाऽदृष्टस्य भोगहेतुत्वे भोग्यनिष्ठमदृष्ट कस्यचिदेव भोगं जनयति कस्यचिन्नेति नियमो न स्यात् तथाहि – आत्मनो विभुतया सर्वै रेव शरीरादिभिः सर्वेषामेवाऽऽत्मनां संयोगस्य सत्वात्तन्निष्ठादृष्टस्यभोगहेतुत्वे चैत्र शरीरेणापि मैत्रभोगजननापत्तेः। कालिकस्य स्वाश्रयसंयोगस्य वा तत्कारणतावच्छेदक संबन्धत्वात्तस्य च सर्वात्म साधारण्यात्। न चाऽऽत्मनोऽवच्छेदकत्वलक्षणोविलक्षण

एव शरीरसंयोगो भोगनियामक इति वाच्यम् । सर्वात्मसंयुक्तानां शरीराणां तेनैवाऽऽत्मनाऽवच्छेदकत्वलक्षणः संयोगो नान्यैरात्मभिरित्यत्रापि नियामकाभावात्. तथा च सुखादिसाक्षात्कारः लौकिकप्रत्यक्षाविषयाऽऽत्मविशेषगुणजन्यः जन्यसाक्षात्कारत्वात् सोयं देवदत्त इति प्रत्यभिज्ञावत्। अत्र दृष्टान्ते भावनाजन्यत्वं, दार्ष्टान्ते स्वदृष्टजन्यत्वं पक्षधर्मतावलात्सिध्यति। इत्थं चाऽदृष्टाधिष्ठातृतयेश्वरसिद्धिः। एतेन जगदुत्पादकोन कश्चिद्विलक्षणः पुरुषविशेषः गोपुरगृहारामपदार्थ ज्ञातं हि तत्तन्नानाचेतनसंघजन्यं नापेक्षतेचेतनान्तरम् । तदुक्तम्।

नेश्वरोजन्मिनां हेतुरुत्पत्तिविकलत्वतः

गगनाम्भोजवत्सर्वमन्यथा युगपद्भवेदिति ।

बुद्धिमत्पूर्वकत्वानुमानं हि प्रसिद्धचेतनैः सिद्धसाधनमिवाऽऽभातीति निरस्तम्।

आचार्यैरीश्वरसाधकानि नवानुमानानि दर्शितानि । अनुमाननवकं च

कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः।

वाक्यात्संख्याविशेषाच्च साध्योविश्वविदव्य इति ।

कार्यं चाऽऽयोजनं च धृतिश्चेतिद्वन्द्वः । ता आदिर्यस्येति अतद्गुणसंविज्ञानोबहुव्रीहिः। तस्मात् । तादात्म्येन धर्मिणो व्याप्यतायां विवादात्कार्यपदं धर्मपरम् । कार्यत्वादित्यर्थः कार्यं कर्तृजन्यं कार्यत्वाद् घटवदित्यनुमानेन विश्ववित्साध्य इत्यन्वयः । एवमायोजनादिहेतूनामन्वयः कार्यः । विशिष्टस्य विश्ववेदनवतोऽव्ययत्वाद्वेदनेपि अव्ययत्वलाभः। असतिबाधके विशिष्टान्वयस्थले विधेयस्य विशेषणविशेष्योभयान्वयित्वनियमात्। न च ज्ञानेच्छाकृतीनां जन्यत्वनियमात्कथमेवमिति वाच्यम् । लाघवज्ञानादिवशात् नित्यज्ञानंसिद्धयत् ज्ञानमनित्यमेवेति व्याप्तिप्रत्यक्षेणऽप्रतिबन्धात्। अस्मदादिज्ञानानां तथात्वेपि अस्मदादि बुद्धिमात्रविषयकत्वेन ( उक्त प्रत्यक्षस्य ) ज्ञानंनित्यमिति बुद्धौभिन्नविषय कत्वेनाऽप्रति बन्धकत्वात् । एक विशेष्यक ( विषयक ) विरोधिज्ञानस्यैव विरोधित्वात्। न हि नित्यत्वाऽनित्यत्वयोरेकजातीये वस्तुनि विरोधोमानाभावात्।

न च ज्ञानत्वं नित्याऽवृत्तीति ज्ञातमतस्तत्र कथं नित्यवृत्तित्वज्ञान मिति वाच्यम्। परैर्नित्यज्ञानानभ्युपगमात्, ज्ञानत्वस्य नित्यावृत्तित्वनिश्चयेपि नैयायिक मात्रसिद्धनित्यज्ञानवृत्तित्वे विरोधाभावात् । उभयसिद्धनित्यावृत्तित्वज्ञानेपि अतिरिक्तनित्यवृत्तित्वज्ञप्तौ अविरोधादिति "प्रकाशकृतः। न च बुद्धित्वस्य नित्यवृत्तित्वसामान्याभावनिश्चये कथं नित्यवृत्तित्वग्रह इति वाच्यम्। नित्यत्वस्याऽनुगतैकरूपस्याऽभावेन सामान्याभावनिश्चयाऽसंभवादिति ध्येयम् ।' किं च ज्ञानजनकशरीरादौ मानाभावाद् ज्ञानसिद्धेश्च नित्यमेव तत्सिध्यतीत्यात्मतत्त्वविवेकेस्पष्टम्। न च तस्य सर्वविषयकत्वे मानाभावः जन्यज्ञानविषयतायाः कारणप्रयोज्यतया व्यवस्थितत्वेपि नित्यज्ञानविषयताया स्तथात्वाभावाद् विनिगमनाविरहाच्चतत्सिद्धेः न च तस्य नित्यज्ञानादिमत्त्वे सर्वदा सृष्ट्यादिप्रसंगः । सृज्यमानप्राण्यदृष्टसापेक्षत्वात् ।

अत्र जन्यकृत्यजन्यं जन्यं पक्षः, न तु जन्यमात्रं, तेन घटादौ अंशतः सिद्ध-साधनेपि नक्षतिः। क्षित्यादौ कृत्यजन्यत्वस्य बाधाऽजन्येतिकृतिविशेषणम्। नित्येऽति प्रसंगवारणाय द्वितीयजन्यपदम्। न च क्षित्यादेरपि अदृष्टद्वाराऽस्मदादिजन्यत्वाद-संभव इति वाच्यम्। अदृष्टाऽद्वारक जन्यकृत्यजन्यजन्यस्य पक्षत्वात्। अनित्याऽसर्व-विषयकज्ञानाऽजन्य जन्यस्य पक्षत्वाद्वा। क्षित्यादेरदृष्टद्वारा चेत्रकृतिजन्यत्वेपि तद्ज्ञान-जन्यत्वाभावात्। अतएव पक्षधर्मताबलादीश्वरस्य नित्यसर्वविषयकज्ञानसिद्धि-रिति ध्येयम्।

अत्र जन्यत्वं पक्षतावच्छेदकं, पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्य त्वान्नांशतः सिद्धसाधन मिति नव्याः अतएव पक्षतायां "पक्षतावच्छेदकसामाना धिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमिति दर्शनात्पक्षतावच्छेदेनानुमितिं प्रति तदवच्छेदेन सिद्धेः, तत्सामानाधिकरण्येनानुमितिं प्रति सिद्धिमात्रं विरोधीत्युक्तं दीधितिकृता।

अथ कर्तृजन्यत्वं साध्यम् तच्च न कृतिमज्जन्यत्वं अस्मदादिना सिद्धसाधनात् न च तत्र कृतिविशेषणम्, एवं च न सिद्धसाधन मर्थान्तरं वा, क्षित्यादिपूर्वमस्मदादेः सत्त्वेपि तदा तत्कृतेरसत्वात्, बिना शरीरमस्मदादीनां ज्ञानेच्छाकृत्यादीनामसंभवात्। नित्यज्ञानाश्रयसिद्धिरिति वाच्यम्। उपलक्षणतया तत्संभवात्। कर्तृत्वविशिष्टस्य क्षित्यादिकारणत्वेनाऽसिद्धेश्च। कार्यमात्रं प्रति कर्तृत्वेनहेतुत्वे मानाभावात्, अन्यथा घटादिकं प्रति कृतिमत्कुलालादिना हेतुत्वं स्यात्। न च कृतिजन्यत्वमेव तदिति वाच्यम्। कार्यत्वावच्छिन्नं प्रति कृतित्वेनापि हेतुत्वस्य मीमांसकैरनगीकारात्। तदङ्गीकारे तु जन्यकृतिमादायैव सिद्धसाधनात्। नचैवं जन्यकृतित्वेन हेतुत्वे गौरवमिति वाच्यम्। ईश्वरानगीकारे जन्यत्वस्याऽप्रवेशात्। यत्तु साक्षात्कृतिजन्यत्वं विवक्षणीयम् तथा च नास्मदादिना सिद्धसाधनमिति। तन्न तथात्वेति दृष्टान्तोपिसाध्यविकलः स्यात्। शरीरक्रियैव दृष्टान्तः स्यादिति चेन्न। घटस्य दृष्टान्ततयोपन्यासाऽसंगतेः। तावतापि घटे व्यभिचारात्, चेष्टात्वस्योपाधित्वसंभवाच्चेति चेन्न। स्वोपादान गोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वस्य तदर्थत्वात्। स्वोपादानगोचरेत्यस्य कार्यसमवायिविषयकेत्यर्थः। तेन स्वत्वाननुगमेपि न क्षतिः। अत्र कार्यत्वावच्छिन्नं प्रति उपादानप्रत्यक्षत्वेन चिकीर्षात्वेन कृतित्वेन हेतुत्वमेवानुकूलस्तर्कः। कपालादि-लौकिकप्रत्यक्षस्यापि कृतिद्वारा घटादौ हेतुत्वम्। न च कुलालकुविन्दत्वेन तत्कृतित्वेन वा हेतुताया आवश्यकत्वे तादृशसामान्यकार्यकारणभावे मानाभाव इति वाच्यम्। कुलालाद्यकर्तृकखण्डकपालाद्युपादानकानां खण्डघटपटादीनां कर्तृत्वेनेश्वरसिद्धेः। ननु कपालगोचरकृतित्वेन घटत्वेन कार्यकारणभावे मानाभावेन न किंचिदेतत्। अति-प्रसंगभङ्गाय चेष्टाविशेषद्वारा कृतिहेतुताया आवश्यकत्वात्, तथा च कथमीश्वरसिद्धिः किं च घटादौ कुलालादिकृतिचेष्टयोरन्वयव्यतिरेकानुविधानसत्वेपि उपादान-गोचरकृतिसाक्षात्कारत्वमपि न दृष्टम्। अत एव कथं तादृशकारणताबलादीश्वरसिद्धिः ननु चेष्टं प्रति तादृशकृतेरवच्छेदकतासम्बन्धेन हेतुत्वम स्त्वितिचेत् तदापि नेश्वरसिद्धिः।

व्याप्यवृत्तिनित्यकृतेरवच्छेदकत्वासंभवात्, ईश्वरीयकृत्यन्तर्भावेन कारणत्वाकल्पनाच्च। अपिच मीमांसकमते यावदवयवनाशस्यैव अवयविनाशकत्वाद् खण्डघट एव नास्ति, तत्स्वीकारे दण्डकादेर्हेतुत्वेऽव्यभिचाराद्धेतुत्वं न स्यात्। एवं च ज्ञानेच्छाकृतीनामपि व्यभिचारान्नहेतुत्वम्। अपि च द्व्यणुकमात्रनाशस्य घटादिनाशकत्वे घटादेः क्षणिकत्वापत्तेः। नाप्यवयविनाशं प्रति अवसंयोगनाशत्वेन हेतुत्वम्, अति प्रसंगात्। तस्मान्न खण्डघटकर्तृत्वेनेश्वरसिद्धिरिति चेत् श्रुतिरेव भगवति मानमितिविचारचर्चेयमिति।

अथ कार्यत्वं क्रियात्वं-कृतिसाध्यत्वं कादाचित्कत्वं प्रागभावप्रतियोगित्वं वा। न प्रथमद्वितीयौ क्षित्यादावसिद्धेः। तृतीयः प्रागभावे व्यभिचारात्। न चतुर्थः ध्वंसे व्यभिचारात्। न च सत्वेन हेतुर्विशेषणीयः। सत्ताजातेः परंप्रत्यसिद्धेः। स्वरूपसत्वस्य ध्वंसेपि सत्वात्। नापि पूर्वकालाऽसंबन्धित्वे सति उत्तरकालसंबन्धः। सकलपूर्वकालस्याऽज्ञानात्। तत्तत्पूर्वकालस्यननुगमात् इति चेद् अत्र दीधितिकृतः।

कार्यत्वं च सत्वेन विशेषितं प्रागभावप्रतियोगित्वम्। न च कर्त्रादिजन्यतावच्छेदकं, अपि तु घटत्वपटत्वादिकमिति वाच्यम्। घटत्वादीनामनन्तत्वात्। तावतापि घटत्वावच्छिन्नं प्रति कपालादिगोचरज्ञानत्वादिना कारणत्वे घटादीनां कर्तृत्वेनेश्वरसिद्धेरप्रत्यूहत्वात्। ननु शरीरजन्यत्वं कार्यतावच्छेदकमस्तु शरीरत्वं च चेष्टाश्रयत्वं चेष्टात्वं च जातिः, चेष्टात्वमेव तथेति चेन्न। एवमस्मदाद्यकर्तृकाणां शरीरपवनसंयोगादीनां बुद्ध्यादीनां च चेष्टाजन्यानां सुखदुःखधर्माधर्मसाक्षात्काराणां कर्तृत्वेनेश्वरसिद्धेरावश्यकत्वात्। शरीरजन्यत्वापेक्षयाजन्यत्वस्यैवच्छेदकत्वौचित्याच्चेति वदन्ति। एव खण्डघटादीनां कर्तृत्वेनेश्वरसिद्धिरित्यपिवदन्ति। मीमांसकमते यावदवयवनाशस्यैवाऽवयविनाशहेतुत्वात्, परिमाणभेदस्याऽवस्थाभेदकत्वात् खण्डघटो नास्तीति विभावनीयम्।

ननुप्रागभावप्रतियोगित्वहेतोर्नानात्वेन दृष्टान्त दार्ष्टान्तोभयाऽसंग्रहः। तथाहि-समवायेन कपाले घटोभविष्यति न संयोगेनेत्यादिप्रतीतेः संबन्धस्यापिप्रागभाव प्रतियोगितावच्छेदकत्वम्, तथा च संबन्धप्रतियोगितावच्छेदकयोर्भेदात्प्रागभावप्रतियोगितावच्छेदकत्वं भिन्नमिति चेन्न। प्रागभावप्रतियोगिविशेषणीभूतस्य प्रतियोगितावच्छेदकत्वात्, संबन्धस्य चाभावात्। प्रागभावत्वमखण्डोपाधिरेव, तत्प्रतियोगिवृत्तिकार्यत्वमतो न दृष्टान्तदार्ष्टान्तोभयाऽसंग्रहः।

एतेन भविष्यत्वं वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वम्, न तु वर्तमान प्रागभाव प्रतियोगित्वम् श्वोभाविनि अद्य भविष्यतीति प्रत्ययप्रसंगात्। न चेदं प्रत्यक्षं, उत्पक्ष रतीन्द्रियत्वात्, तद्घटितत्वेनाऽननुगमाच्चेति निरस्तम्। प्रागभावप्रतियोगित्व मात्रस्यैव हेतुत्वात्। अतीन्द्रियघटितस्य लौकिक प्रत्यक्षाऽसंभवेऽलौकिकप्रत्यक्षादिसंभवाच्च।

ननु भविष्यतीति प्रतीतेर्वर्तमानध्वंसकालोत्पत्तिकत्वविषयत्वेनैवोपपत्तौ प्रागभावे मानाभाव इतिचेन्न। प्रागभावानंगीकारे ध्वंसप्रतियोगित्वस्यैव तथात्वात्। न

च ध्वंसत्वं जन्याभावत्वम्, जन्यत्वं च प्रागभावप्रतियोगित्वम् अन्यथा निर्वक्तुमशक्यत्वात्इति वाच्यम्। ध्वंसत्वस्याखण्डोपाधित्वात्।

परे तु कुलालकृतित्वेन घटत्वावच्छिन्नं प्रति न हेतुत्वम्, किन्तु घटत्वावच्छिन्नं प्रति कुलालत्वेन हेतुत्वम्। कुलालत्वं चेष्टाविशेषवत्त्वम्, फलतोविजातीयचेष्टात्वेन हेतुत्वम्। तथा च कार्यत्वावच्छिन्नं प्रति कृतित्वेन हेतुत्वादीश्वरसिद्धिः। न च कृतित्वावच्छिन्नायाः साक्षात्कारणत्वं कुत्रापि न दृष्टम्, चेष्टायां कारणत्वेपि तदुपादानगोचरत्वानियमादिति वाच्यम्। नृत्यादिस्थले तादृशचेष्टायां इष्टसाधनत्वकृतिसाध्यत्वज्ञानानन्तरं तदुपादानगोचरपरात्मकृतित एव तादृशचेष्टोपपत्तेः। न चैवं निश्चलदेहस्य चेष्टाविशेषशून्यस्य कपालगोचरकृतिसत्वे अन्यस्य तादृशकृतिशून्यस्य चेष्टाविशेषसत्वे घटोत्पत्तिः स्यादिति वाच्यम्। कृतिविशेषं विना तादृशचेष्टाविशेषस्यैवाऽभावात्। न चैवं ज्ञानेच्छायत्नाः निराश्रयाः कृतिसामान्यजनकाः सन्तु कृतेस्तदाश्रयेणेति वाच्यम्। कार्यत्वावच्छिन्नं प्रतिकृतित्वादिनैवकर्तृत्वादिनापि हेतुत्वस्य प्रामाणिकत्वात् अन्यथा वेदान्तमतानुप्रवेशापत्तेः। कुलालादिस्थले ज्ञानेच्छाकृतीनां परस्परं सामानाधिकरण्यदर्शनात्तदाश्रयस्यैकस्यैव सिद्धिः।

किं च कृष्णरामनृसिंहादिशरीरेषु तत्तद्दैत्यवधानुकूलचेष्टा विशेषः श्रुतिस्मृतिपुराणादिसिद्धतया नोपेक्ष्यः। न च कृतेश्चेष्टा प्रति अवच्छेदकतासंबन्धेन हेतुत्वान्नित्यकृतेरवच्छेदकत्वाभावात्कथं ततश्चेष्टेति वाच्यम्। व्याप्यवृत्तेरपि अवच्छेदकत्वस्वीकारात्, फलबलाच्च ऋष्यादिशरीरमेवतत्कृतेवच्छेदकम्, नास्मदादिशरीरमिति नातिप्रसंगः। न च ऋष्यादि शरीरे सर्वदैव तादृशचेष्टोत्पत्त्यापत्तिः। अदृष्ट विशेषस्य कालविशेषस्य वा सहकारित्वात्। एवं सर्गादौ घटाद्यनुकूलचेष्टाविशेषकर्तृत्वेनापीश्वरसिद्धिः। अतएव नमः कुलालेभ्यः कर्मारेभ्यःश्च वो नमः "श्रुतयोपि न बाधितार्थका इति वदन्ति।

अत्रेदं बोध्यम्। वन्हिव्याप्यधूमवान् पर्वत इति परामर्शाद् वन्हेर्महानसीयत्वे लाघवमिति लाघवज्ञानसहकृतात्तथा पर्वतो महानसीयवन्हिमानित्यनुमितिः, तथा कृतेरेकत्वे नित्यत्वे च लाघवमिति लाघवज्ञानसहकृतात् कृतिजन्यत्वव्याप्यकार्यत्ववानितिपरामर्शात् नित्यैककृतिजन्यमित्यनुमितिर्भवतीति।

कृत्यादेरेकत्वं च समानाधिकरणकृतिमात्रवृत्तिद्वित्वाभाववत्त्वम्। समानाधिकरण कृतिप्रतियोगिक प्रतियोग्यवृत्तिभेदाभाववत्त्वम् वेतिसङ्क्षेपः। एवं आयोजन कर्म-सत्ता च सर्गाद्यकालीन द्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म चेतनप्रयत्न पूर्वकं कर्मत्वात् अस्मदादिशरीरक्रियावत्।

ब्रह्माण्डादि पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितं धृतिमत्वात् वियतिविहङ्गमधृतकाष्ठवत्, ब्रह्माण्डादि प्रयत्नवद्विनाश्यं विनाशित्वात् पाट्यमानपटवत्। घटादिसंप्रदाय व्यवहारः स्वतन्त्रपुरुषप्रयोज्यः व्यवहारत्वात् आधुनिकलिप्यादिव्यवहारवत्। वेदजन्यज्ञानं कारणगुणजन्यं प्रमात्वात् प्रत्यक्षादिप्रमावत् वेदः पौरुषेयः वाक्यत्वात् भारतवत्। वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् अस्मदादिवाक्यवत्। द्व्यणुकपरि-

माणसंख्याजन्यं परिमाणप्रचयाजन्यत्वेसति जन्यपरिमाणत्वात् तुल्यपरिमाणकपाल-द्वयारब्धघटपरिमाणात् प्रकृष्टतादृशकपालत्रयारब्धघटपरिमाणवत्, इत्यादयः प्रयोगाबोध्याः ।

अनादावस्मिन् संसारे कियन्ति दुःखदुर्दिनानि कियती वा सुखखद्योतिकेति कुपितकृष्णसर्पफणामण्डलच्छायातुल्यमिदमिति मन्यमाना संसाराद्दुःखमयः जिहासितश्च निश्चिन्वन्ति सर्वे एव सन्तः, व्यवस्यन्ति च दुःखभारं समूलमुन्मूलयितुम् । न खलु विवेकिनः पातादिभयात्स्वर्गमपि कामयन्ते तदुक्तं भगवद्गीतायाम् ।

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोके विशन्ति ।

अतः प्रच्युतिशंकातः, कस्य चित्स्वर्गमात्रम् अपरस्य तु स्वाराज्यमिति दुःखसाधनीभूतपरसम्पदुत्कर्षसत्वाच्च स्वर्गादिकमपि न निःश्रेयसं ( पदाभयेम् )। अतएवाऽऽत्यन्तिकं दुःखनिवृत्तिरूपं निःश्रेयसमेव सर्वे परमपुरुषार्थतया स्वीकुर्वन्ति ।

तत्र कोनामोपायो निःश्रेयसस्येति जिज्ञासायां श्रुतिः "आत्मा वाऽरे द्रष्टव्यः श्रोतव्योमन्तव्यो निदिध्यासितव्यः" इति आत्मदर्शनमपवर्गरूपेष्टसाधनमिति तदर्थः आत्मदर्शनो पायः कः इत्यत आह । श्रोतव्य इत्यादि । श्रुधातोः शाब्दबोधे लक्षणा तथा चाऽऽत्मा शाब्दबोधविषयीकर्तव्यः ।

अत्रेदं बोध्यम् । पाठक्रमादर्थक्रमोबलीयान् । यथा "अग्निहोत्रंजुहोति यवागूं पचति" इत्यत्र अग्निहोत्रहवनयवागूपाकयोः । अत्र हि यवाग्वाहोमार्थत्वेन-तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते अतोऽर्थक्रमः पाठक्रमाद्बलीयान् । यथा पाठक्रमानुष्ठाने होमरूपप्रयोजनबाधोऽदृष्टार्थत्वापत्तिश्च । न हि होमानन्तरंक्रियमाणस्य पाकस्य किंचिद्दृष्टप्रयोजनमस्ति । अतो यथा प्रथमं यवागूपाकः ततोऽग्निहोत्रहोमः तथा प्रथमंश्रवणादिकम्, ततोआत्मदर्शन मित्यर्थक्रमेण पाठक्रमस्य त्यागोऽवधेयः ।

एवं च श्रवणमनननिदिध्यासनानि तत्वज्ञानप्रयोजकानीत्युक्तं भवति । तत्र च श्रुतितः कृतात्मश्रवणस्य मननेऽधिकारः । श्रोतव्यः श्रुतिवाक्यभ्यो मन्तव्यश्चोपपत्तिभिरिति स्मरणात् । मननं चाऽऽत्मन इतरभिन्नत्वेनानुमानम् । तच्च भेदप्रतियोगिनामितरेषांयद्ज्ञानं तत्साध्यम् । द्रव्यादिपदार्थज्ञानमन्तरेण तावदात्मनिआत्मेतरभेदस्य साधयितुमशक्यत्वात् पदार्थनिरूपणम् ।

अत्रेदं बोध्यम् । न्यायवैशेषिकयोरुद्देश्यसाम्यात् न तयोः परस्परं विरोधः अत एव "वैशेषिकाः पुनरस्मदनुयायिन एवेति" न्यायमञ्जर्यां जयन्तभट्टः "न्यायवैशेषिकानां हि मिथः प्रमाणतत्वानां संख्याभेदे सत्यपि अन्योन्यं तत्वानामन्तर्भावनेऽल्पीयानेव भेदोजायते तेनैतेषां प्रायोमततुल्यता ।" इति षड्दर्शनटीकायां गुणरत्नसूरिः ।

अथ गौतमोक्तानां षोडशपदार्थानां वैशेषिकोक्तसप्तपदार्थेषु अन्तर्भावे

ग्रन्थकृद्भिः प्रतिपादितः। परन्तु गौतमोक्तपदार्थेषु द्रव्यादीनां कुत्रान्तर्भावः?। न च प्रमेय एवान्तर्भवितुमर्हन्ति यतो महर्षिणा "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" इति सूत्रे आत्मादीनामेव प्रमेयत्वं परिभाषितम् इति चेन्न यथां तत्त्वज्ञानादपवर्गो येषां मिथ्याज्ञानात्संसारः तेषामेव पदार्थानां प्रतिपादितत्वात्। अत एव न्यायभाष्यम् "अस्ति अन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम्, तद्भेदेन चाऽपरिसंख्येयम्। अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात्संसारः इत्यत एतदुपदिष्टं विशेषेणेति"।

न्यायसूत्रकृद्भिः आत्माद्यतिरिक्तानामपि सामान्यतः प्रमेयत्वमभ्युपेयते। तत्र निदर्शनम् प्रमेयता च तुलाऽप्रामाण्यवदिति सूत्रमेव। तत्र तुलाद्रव्यस्यापि प्रमेयत्वव्यवस्थापनात्। "न प्रमेयान्तरनिराकरणार्थः सूत्राऽऽरम्भः मुमुक्षुणा आत्मादिप्रमेयं ज्ञातव्यमेव। नाऽन्य प्रमेयत्वं विधीयते नान्यस्य निराक्रियते" इति वार्तिककृत।

एवं च प्राधान्येन पृथगनुद्दिष्टत्वेपि काणादतन्त्रोक्तद्रव्यगुणादीनां यथार्थ निर्वचनं सूत्रकृतापि खलुनानुमतम्। अतएव "*सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः*" "*द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः*"। "*गन्धरसरूपस्पर्शपर्यन्ताः पृथिव्याः*" "*अप्तेजोवायूनां पूर्वमपोह्याकाशस्योत्तरः*" इत्यादि न्यायसूत्राण्यपि साधु संगच्छन्ते।

न्यायमञ्जरीकृतापि सिद्धान्तितम्। "प्रमाणे एव ज्ञाते सति तद्विषयोऽर्थः प्रमेयमिति ज्ञायत एव किं तेन लक्षितेन तस्माद्विशिष्टमिह प्रमेयं लक्ष्यते।

ज्ञातं सम्यगसम्यग् वा यन्मोक्षाय भवाय वा
तत्प्रमेयमिहाभीष्टं न प्रमाणार्थमात्रकम् इति।"

नन्वेवं द्रव्यगुणादिपदार्थानां तत्त्वज्ञानमपि मोक्षप्रयोजकम्। अत एव "धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" इति काणादसूत्रम्। तथा च द्रव्यादीनि प्रमेयान्तराणि कुतो न लक्षितानि अक्षपादेनेति चेदत्र वरदराजः "मोक्षे साक्षादनङ्गत्वादक्षपादेन न लक्षितम्। वयं तु तेषामपि परम्परया तदुपयोगोस्तीति कणादतन्त्रमनुसृत्य लक्षणमाचक्ष्महे इति।"

"आत्मत्वादिकं न प्रमेयमात्रविभाजकं संयोगादीनामपि प्रमेयत्वाद् द्वादशधेति विभागानुपपत्तेः, किं तु मोक्षहेतुप्रमेयविभाजकम्। तथा च तु शब्दः पुनरर्थे एवं पुनःमेयं प्रकर्षेण मेयम्। प्रकर्षश्च मोक्षहेतुधीविषयत्वम्। अथवा तुशब्दश्चार्थे। तथाचोक्तानुक्तसमुच्चयलाभः। एवं प्रमेयमात्रस्य साक्षात्परम्परया वा मोक्षजनकत्वेपि न क्षतिः। आत्मादीनां च प्राधान्येन विशेषनिर्देशः। तत्रापि पूर्वपूर्वप्राधान्यात्पूर्वपूर्वक्रमनिर्देशः इति राधामोहनगोस्वामिपादाः।

अथैतस्यानन्तरं प्रात्यमननस्य सुष्ठुनिर्वाहकतयाऽऽन्वीक्षिकीत्यन्वर्थनामधेयमेव न्यायविद्यायाः। तथा चोक्तं न्यायभाष्यकृता "प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा तया प्रवर्तते इति आन्वीक्षिकी न्यायविद्या न्यायशास्त्रम्" आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः" इत्यमरकोषः। "एतद्ग्रन्थस्याऽऽन्वीक्षिकी-न्याय-

तर्कादिशब्दैर्व्यपदेशश्च योगेनरूढ्या च, तत्र श्रवणादनु पश्चादीक्षा अन्वीक्षा-आत्म-मननंअन्वीक्षा तन्निर्वाहिका आन्वीक्षिकीति योगार्थः। अस्य योगार्थस्यवेदान्तादिगतत्वेपि प्राचुर्येण भूरिप्रयोगाद्रूढकल्पनम। न्यायसूत्र विवरणम्) एतेन वेदान्तादि शास्त्रान्तराणामपि मननोपयोगि पदार्थ प्रतिपादकत्वात्कथं न्यायविद्याया एवाऽऽन्वीक्षिकीति संज्ञा इति पूर्वपक्षः समाहितः।

निःश्रेयसोपाय प्रतिपादनेनाऽऽत्मनः परमोपकारकत्वादान्वीक्षिक्या आत्म-विद्येति विशेषणमुपात्तं मनुना—

"त्रैविद्येभ्यस्त्रयीं विद्याद् दण्डनीतिं च शाश्वतीम्।
आन्वीक्षिकीं चाऽऽत्मविद्यां वार्तारम्भांश्च लोकतः॥

शान्तिपर्वणि याज्ञवल्क्य जनकसंवादेनावगम्यते। याज्ञवल्क्यस्तावद् गौतमोक्ताया एवान्वीक्षिक्या साहाय्येन विश्वावसोर्दुरूह प्रश्नान् समादधौ। आह च—

एषा तेऽन्वीक्षिकी विद्याचतुर्थी सांपरायिकी इति।

चतुर्थी त्रयींवार्तां दण्डनीतिं चाऽपेक्ष्य सांपराविकी-मोक्षाय हिताइति नील-कण्ठः। धर्मतत्वनिरूपणेपि तर्कशास्त्रमवश्यमपेक्षणीयमिति स्पष्टमुक्तं मनुना—

आर्षं धर्मोपदेशं च वेदशास्त्राऽविरोधिना।
यस्तर्केणानुसन्धत्ते सधर्मं वेद नेत र इति॥

अत्र वेदाशास्त्र ऽविरोधिना इतिविशेषणेन तर्कपदं गौतमोक्तन्यायशास्त्र परमिति ज्ञायते यतस्तेन महर्षिणा श्रुतिप्रामाण्याच्चेति" सूत्रे वेदविरुद्धस्यानुमान-स्याऽप्रामाण्यं सूचितम्। "अतएवोक्तं भाष्यकृतापि 'यत्पुनरनुमानं प्रत्यक्षागम-विरुद्धं न्यायाभासः सइति।

एतेन वेदविरुद्धायाः स्वबुद्धिमात्र कल्पितायाः बौद्धचार्वाकादितर्कविद्यायाः नास्ति कश्चिदुपयोग इति सूच्यते। अतएव त्रैविद्येभ्यस्त्रयीं विद्यादिति पद्यव्याख्या-नावसरे "या तु बौद्धचार्वाकादितर्कविद्या सा नातीव कृत्वा क्वचिदुपयुज्यते, प्रत्युत आस्तिक्यमुपहन्ति योनातिनिपुणमतिः"। मेधातिथिः।

"कच्चिन्न लोकायतिकान् ब्राह्मणांस्तात सेवसे।
अनर्थकुशला ह्येते बालाः पण्डितमानिनः।
धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्बुधाः।
बुद्धिमान्वीक्षिकीं प्राप्य निरर्थं प्रवदन्ति ते। (रा० अयो०)
"अहमासं पण्डितको हैतुको वेदनिन्दकः।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम्।
हेतुवादान् प्रवदिता वक्ता संसत्सु हेतुमत्।
आक्रोष्टा चाभिवक्ता च ब्रह्मवाक्येषु च द्विजान्।
नास्तिकः सर्वशङ्की च मूर्खः पण्डितमानिकः।
तस्येयं फलनिर्वृत्तिः शृगालत्वं मम द्विज "मोक्षपर्व"।

इति रामायण-महाभारतादौ अपि अस्ति निन्दाश्रुति र्वेदविरुद्धाया एव आन्वीक्षिक्या । न्यायवैशेषिकयोरिव लोकायतादि-नास्तिक दर्शनस्यापि आन्वीक्षिकीशब्देन व्यवहारोदृश्यते । काव्यमीमांसायां 'द्विधाचाऽऽन्वीक्षिकी पूर्वोत्तर-पक्षाभ्याम् । अर्हद्भदन्तदर्शने लोकायतं च पूर्वपक्षः । सांख्यंन्यायवैशेषिकौ चोत्तरःपक्ष' ।

पूर्वामान्वीक्षिकीं सेवमाना एव प्रामाण्यं नाभ्युपगच्छन्ति शास्त्रमर्यादां च लङ्घयन्ति, तेन स्वात्महननमेव भवतीत्याह व्यासः ।

"अप्रामाण्यं च वेदानां शास्त्राणां चातिलंघनम् ।
अव्यवस्था च सर्वत्र एतन्नाशनमात्मनः ।
भवेत्पण्डितमानी यो ब्राह्मणोवेदनिन्दकः ।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् । ( अनुशा० )

मनुनाऽप्युक्तम्—"योवमन्येतते मूले हेतुशास्त्राश्रयाद् द्विज ।
स साधुभिर्बहिष्कार्यो नास्तिकोवेदनिन्दकः"

अत्र हेतुशास्त्रशब्दस्य वेदविरुद्धतर्कशास्त्रपरत्वं सर्वैरेव व्याख्यातृभिः सुस्पष्टमभिहितम् । तथाहि "हेतुशास्त्रं-नास्तिकतर्कशास्त्रं बौद्धचार्वाकादिशास्त्रम्, यत्रवेदोऽधर्मायेति पुनरुद्घोष्यते तादृशं तर्कमाश्रित्ये" ति मेधातिथि । हेतुशास्त्राश्र याद् वेदवाक्यमप्रमाणं वाक्यत्व त् विप्रलंभकवाक्यवदिति प्रतिकूलतर्कोपष्टंभेन चार्वाकादिनास्तिक इव नास्तिको मत वेदनिन्दकः" । कुल्लुकभट्टः । असत्तर्क-शास्त्रावलम्बनेन निन्देत् नास्ति परलोक इत्येवं स्थितप्रज्ञोवेदनिन्दकः—गोविन्द-राजः । 'हेतुशास्त्रं-श्रुतिविरोधि तर्कशास्त्रम्" नारायणः । इति संक्षेपः ।

केषां मते कति पदार्थाः ? संक्षेपत उच्यते भट्टमते पंच पदार्थाः । तदुक्तं-मानमयोदये—

"वयं तावत्प्रमेयं तु द्रव्यजातिगुणक्रियाः
अभावश्चेति पञ्चैतान् पदार्थानाद्रियामहे" इति

द्रव्यं गुणः कर्म सामान्यमिति चत्वारः पदार्था इति तावभट्टाः ।

"द्रव्यं गुणः कर्म च जातिशक्ती
सादृश्यसंख्ये समवाय एते
अष्टौ पदार्था इह तान् विभज्य
संक्षिप्य वक्ष्यामि गुरोर्मतेन" इति प्राभाकराः ।

अष्टौ एते, उपचारः संस्कारोऽन्धकारश्चेति मीमांसकैकदेशिनः ।
एते एकादश, औपादानिकश्चेति द्वादशपदार्था इति महार्णवकाराः ।
भट्टमते च द्रव्याणि एकादश । तदुक्तं—मानमेयोदये—

"पृथिवी सलिलं तेजः पवमानस्तमस्तथा
व्योमकालदिगात्मानो मनः शब्द इति क्रमात्" इति ।

अथ परिभाषा संगृह्य वितन्यते । इह जगति वस्तुद्वयं-भावोऽभावश्च तत्र द्रव्यगुणकर्मसामान्यविशेषसमवायाः षड्भावाः । सप्तमोऽभाव इति सप्तपदार्था उपदिष्टाः । विषयत्व-विषयित्व-प्रतियोगित्वाऽनुयोगित्वाऽवच्छेदकत्व-संबन्धत्वाऽधिकरणत्वाऽऽधेयत्व - निरूप्यत्व-निरूपकत्व-पर्याप्ति-कार्यत्व-कारणत्व-प्रतिबध्यत्व-प्रतिबन्धकत्वादयो वक्ष्यमाणास्तद्भेदाः, तद्गतधर्माश्चाऽऽश्रयादिस्वरूपानतिरिक्ततया यथायथं सप्तस्वेवाऽन्तर्भवन्तीति केचित् ।

अतिरिक्ता एव विषयत्वादयो न सप्तपदार्थान्तर्भूता द्रव्यगुणादीनां द्रव्यत्व-गुणत्वादिभिः पृथिवीत्वरूपत्वादिभिश्चज्ञानं मोक्षोपयोगि न तु विषयित्वादीनां विषयतात्वादिना ज्ञानमपि तथा इत्यभिप्रायेण तु सप्तैव पदार्था विभज्य दर्शिता इत्यपरे ।

वर्द्धमानोपाध्यायास्तु सामान्यं द्विविधम्, जातिरूपमुपाधिरूपं च । तत्रोपाधिरूपमतिरिक्ततयाऽङ्गीक्रियमाणविषयत्वतत्त्वादिकं, अतो न किञ्चिदस्ति अतिरिक्तमिति त्रिसूत्रीतत्त्वबोधादौ सिद्धान्तयामासुः । तत्र ज्ञानेच्छाकृतिद्वेषसंस्कारान्यतमनिरूपिताविषयता निरूपक निरूपकतावच्छेदक तदवच्छेदकससर्ग, तादृशसंसर्गतावच्छेदकादिभेदेन भिद्यते । न चैवं दर्शितसामान्यान्तर्भावपक्षोदुरुपपादो, अनुगमविरहिणस्तत्त्वायोगादिति वाच्यम् । सखण्डाऽखण्डभेदेन । द्विविधं द्वितीयं सामान्यमित्यभिदधानैर्वर्द्धमानोपाध्यायैरेव समाहितत्वात् । सखण्डानामपि विषयतात्वादिभिरनुगतरूपैरनुगमकमव्याहतमिति तदभिप्रायात् ।

## अथ विषयता

ज्ञानादिनिष्ठविषयितानिरूपिता भवति विषयता, तथा विषयतयापि निरूपिताविषयिता । विशेष्यता-प्रकारता - संसर्गता-अवच्छेदकता - विशेषणता-विधेयता-उद्देश्यतोपादानतोत्कटता अनुत्कटता चेति दशविधा विषयता । तत्र घट इत्याकारकज्ञाननिरूपिता विषयता घटादौ विशेष्यता रूपा । घटत्वादौ प्रकारतात्मिका । समवायादौ संसर्गतारूपा विशेष्यता प्रकारता संसर्गतासु तिसृषु विषयतात्वमुक्तदशविषयतासाधारणोधर्मः, विशेष्यतात्व प्रकारतात्व-संसर्गतात्वादयस्तु प्रत्येकं विशेष्यतादिषु वर्तमाना विषयतात्वव्याप्यधर्माः, तेषां स्वरूपं तु आश्रयात्मकमतिरिक्तंवेति मतभेदेन पूर्वमुक्तम् ।

तत्र घटनिष्ठविशेष्यतया निरूपिता भवति घटत्वप्रकारता, घटनिष्ठविशेष्यतापि घटत्वनिष्ठप्रकारतानिरूपिता, संसर्गता तु प्रकारताविशेष्यताभ्यामुभाभ्यामेव निरूपिता निरूपिका च तयोरुभयोः । संसर्गतयैव प्रकारताविशेष्यतयोर्निरूप्य-निरूपकभावो न तु तयोः परस्परमपि निरूप्यनिरूपकभाव इति नवीनाः ।

एवमवच्छेदकतापि प्रकारे घटत्वादौ घटादिनिष्ठविशेष्यतया निरूपिता, सा च प्रकारतातोनातिरिक्तेति केचित् । तन्मते अवच्छेदकतात्वं प्रकारतात्वं

चोभयं नियमतः प्रकारताधर्मः, प्रकारस्यावच्छेदकत्वेपि तन्निष्ठावच्छेदकता प्रकारतातोभिन्नैवेत्यपरे ।

एवमयं घट इत्याद्याकारकज्ञानीया इदन्त्वादिनिष्ठधर्मितावच्छेदकतापि तन्निष्ठप्रकारतातोभिन्नाऽभिन्ना वेति यथामतमनुसन्धेयम् । धर्मिताविशेष्यतेति अनर्थान्तरम् । धर्मितावच्छेदकेदन्त्वादिनिष्ठप्रकारतानिरूपितविशेष्यतापि घटत्वनिष्ठप्रकारतानिरूपितविशेष्यतातोऽतिरिक्ताऽनतिरिक्तावेति यथामतमालोचनीयम् ।

मुख्यविशेष्यतापि विशेष्यताविशेषः । प्रकारतानात्मकविशेष्यता हि सा । उपदर्शितज्ञानीया घटादिनिष्ठविशेष्यता तादृशी, तत्र घटादेरन्यत्राऽप्रकारत्वात्, यद्धि प्रकारतया किंचिदंशे भासमानं विशेष्यतयाऽन्यत्र भासते तन्निष्ठैव विशेष्यता प्रकारतात्मिका, यथा घटवद्भूतलमिति ज्ञाने भूतलांशे प्रकारतया भासमानो घटो घटत्वांशे विशेष्यतया भासते इति ज्ञाननिरूपितघटनिष्ठा विशेष्यता प्रकारतात्मिका तादृशप्रकारताविशेष्यतयोर्भेदे मानाभावादिति केचित् ।

प्रकारत्वानवच्छिन्ना विशेष्यता मुख्यविशेष्यतेति भेदमते निरुक्तिः प्रत्येतव्या ।

उद्देश्यतापि विशेष्यताविशेषोऽनुमिति शाब्दबोधाऽऽपत्त्यादिनिरूपिता पक्षादिवृत्तिविषयता । क्वचित्प्रकारतापि उद्देश्यतारूपा भवति इति वक्ष्यते । विधेयता प्रकारताविशेषरूपा पर्वतोवन्हिमानित्याकारकानुमितिनिरूपिता वन्ह्यादौ, घटवद्भूतलमित्यादिशाब्दबोधनिरूपिता च घटादौ, पर्वतो यदि निर्वन्हिः स्यान्निर्धूमः स्यादित्यापत्तिनिरूपिता च धूमाभावादौ । तत्राऽऽपाद्यताख्यः प्रकारताभेदोऽपर इत्यपरे ।

*विशेष्यतापि भवति विधेयता, पृथिव्यामितरभेदः ह्रदे वन्ह्यभाव इत्याकारकव्यतिरेकव्याप्तिविषयकज्ञानजन्यानुमितिनिरूपिता* इतरभेदवन्ह्यभावादिनिष्ठा । अन्वयव्याप्तिविषयकादपि व्याप्यविशेष्यकपक्षप्रकारकाद् वन्हिव्याप्योधूमः पर्वते इत्याकारकपरामर्शादुत्पद्यमानाया अनुमितेः पर्वते वन्हिरित्याकारिकाया वन्ह्यादिनिष्ठा विशेष्यतारूपा विधेयतेति केचित् । तथा च विशेष्यतात्मकविधेयतानिरूपिता प्रकारतैव भवति उद्देश्यता, अनुमित्यादिनिरूपिता पृथिवी-ह्रद-पर्वतादिष्ववधेया ।

इच्छायत्नादिनिरूपिता फलविषयतोद्देश्यतापि प्रकारताभेदः विशेष्यताभेदश्च [illegible] निरूपिता स्वर्गादौ

[illegible]

प्रथमोपदर्शितेच्छानिरूपिता विशेष्यतारूपा विधेयता यागादौ । [illegible] च्छानिरूपिता प्रकारतारूपा विधेयता यागादौ । विधेयतैव प्रवृत्तिनिरूपिता साध्यतेतिगीयते । उपादानतापि यागकरणीभूतहविरादिनिष्ठा प्रवृत्तिनिरूपिता प्रकारताविशेष एव ।

संसर्गता यद्यपि अवच्छेदकतारूपा, तथापि धर्मनिष्ठावच्छेदकतातो विलक्षणा, तत्र संसर्गतावच्छेदकत्वस्वं विलक्षणोधर्मः, न तत्प्रकारतास्वसमानाधिकरणमपि ।

धर्मविधया त अवच्छेदकता तद्वृत्ति विलक्षणमवच्छेदकतात्वं प्रकारतात्वव्याप्य-मिति तूक्तप्रायम् । प्रतियोगितानिरूपितावच्छेदकतागतं मवच्छेदकतात्वमन्यविधमि-त्यग्रे व्यक्तीभविष्यति ।

विशेषणतातु प्रकार संसर्ग विशेषण साधारणी । विशेषणतात्वं प्रकारता संसर्ग विशेषण विषयतयोः साधारणोधर्मः । संसर्गेविशेषणे च विशेषणता । सा च धर्मितावच्छेदकीयप्रकारतः धर्मितावच्छेदकतातोऽतिरिक्तामङ्गीकुर्वाणानां संसर्गताव-च्छेदकतातो-तिरिक्ता, इतरेषां तु अनतिरिक्तैवेति ध्येयम् ।

अस्ति अन्यविधापि विशेषणता यत्पारतन्त्र्येण भानमुच्यते । तत्र भानं विषयता । तच्च द्विविधम् । विशेष्यपारतन्त्र्येण भानं विशेषणपारतन्त्र्येण भानं च । आद्यं धनवान् सुखीत्यादिविशिष्टबुद्धिनिरूप्यम्, तत्र हि धनस्य मुख्यविशेष्ये भास-मानस्य विशेष्यपारतन्त्र्येण विधेये सुखे प्रयोज्यतासंसर्गेण भानात् धनप्रयोज्यं सुखमिति बुबोधयिषितार्थ लाभः । इयमेवोच्यते विशिष्टानुयोगिकवैशिष्ट्यबुद्धिः ।

द्वितीयं तु गुणकर्मान्यत्वविशिष्टसत्तावद् द्रव्यमित्यादौ-तत्रहि गुणकर्मा-न्यत्ववैशिष्ट्यं "समानाधिकरण्यरुप" विशेणीभूतसत्तायां विशेषणतया भासमानं "मुख्यविशेष्यविशेषणीभूतस्य विशेष्य" सत्तापारतन्त्र्येण अवच्छेदकतया निरूपकतया वा संसर्गेण मुख्यविशेष्येपि भासते, सत्वगुणकर्मान्यत्वयोर्वैशिष्ट्यं द्रव्ये एवेति प्रतीतेः । गुणकर्मान्यत्वस्य विशेषणविशेषणतया विशेषणपार तदीय विषयतानिरुपितविषयतयाऽवच्छिन्नम्, अभिन्नं वा विषयत्वम्, तत्पार-तन्त्र्यण भानम् । तादृशभानं चोपलक्षणविधया तद्विशेषणम् वगाह्य तत्तद्बोधात् विशिष्टवैशिष्ट्यवगाहिबोधस्य वैलक्षण्योपपत्तयेऽङ्गीक्रियते इत्यन्यत्रविस्तरः ।

विधेयता प्रकारताविशेषो विशेष्यताविशेषश्च ।

विधेयतात्वं तादृशोभयविधविधेयताऽनुगताऽखण्डधर्मान्तरम्, विषयतात्वस्य व्याप्यम्, न विशेष्यतात्वस्य, नापि प्रकारतात्वस्य । एतेन प्रसिद्धं विशेष्यमुद्दिश्याऽ प्रसिद्धं बोधनीयतयोक्तं विधेयमिति नादरणीम् । विशेष्यतया भासमानस्यापि विधेयत्वात् । यागादिगता साध्यताख्यप्रवृत्तिविषयता पि विधेयतान्तर्गतैव । एव-मापत्तिनिरूपिताआपाद्यतापि विधेयतान्तर्गता यथा धूमोयदि वह्निव्यभिचारी स्याद्वन्हिजन्योन स्यादित्याकारकापत्तिनिरूपिता वन्हिजन्यत्वाभावादिनिष्ठा विष-यता ।

एवमुद्देश्यतापि काचित्प्रकारतारूपा, विशेष्यतारूपापि काचित् । तत्रोद्देश्य-तात्वमपि पूर्ववद्विषयतात्वस्य व्याप्यम्, न प्रकारतात्वस्य नापि विशेष्यतात्वस्य । एतेन विशेष्ट मेव विधेयविशेषणापेक्षया अनुवाद्यमुद्देश्यं चोच्यते इत्यपास्तम् । विधेयांशे विशेष्यस्येव प्रकारस्याप्युद्देश्यत्वात् ।

अन्यापि उद्देश्यता योगभोजनादिफलीभूतस्वर्गतृप्त्यादिनिष्ठा, यागभोजनादि-विधेयकप्रवृत्ति इच्छादिनिरूपिता । पित्रादौश्राद्धाद्युद्देश्यव्यवहारस्तु "श्राद्धेन पितृतृप्ति भवतु" इत्याद्याकारकश्राद्धादिविषयकेच्छादिनिरूपितफलनिष्ठोद्देश्यतावच्छेदकता

रूपविषयताविषयकोगोणः । अनयैवरीत्या लक्ष्योद्देश्यकशरक्षेपे पुरुषान्तरोद्देश्यकगङ्गास्नाने विप्रोद्देश्यकगोदानादिव्यवहारा अपि उपपादनीयाः

उपादानता तु घटादिविधेयकप्रवृत्तिनिरूपिता घटादिसमवायिकारणनिष्ठा, यागादिविधेयकप्रवृत्तिनिरूपिताहविराद्युपादाननिष्ठा च ।

उत्कटता तु उत्कटेच्छात्मकरागनिरूपितभोजनादिजन्यसुखादिगतोद्देश्यतारूपा, तन्निरूपितैव भोजनादिक्रियागता विधेयतारूपा । एवं संभावनानिरूपितप्रकारताभेदात्मकैककोटितापि क्वचिदुत्कटता तथा हि "संभावयाम्यद्य भविष्यति वृष्टि" रित्याद्यनुव्यवसायविषयीभूता संभावना एतद्दिवसावच्छेद्यभविष्यत्तत्तदभावकोटिकसंशयरूपा, अद्य वृष्टिभविष्यति न वेत्याकारिका । उत्कटैककोटिको हि संशयः संभावनेत्युच्यते । तदीयकोटितागतमुत्कटतात्वं च तत्कोटिसहचरितभूयोधर्मदर्शनादिघटितसामग्रीप्रयोज्यम्, कोट्यन्तरभाने च तत्सहचरिताल्पधर्मदर्शनादित इति विशेषान्न तदीयविषयता भवति उत्कटता । मेघादिसामग्री समवधानेपि क्वचिद्वृष्ट्यनुत्पाददर्शनात्मकव्यभिचारदर्शनमपि एतत्सामग्री घटकम् । एव मनुत्कटता बोध्या, तथाविधसंभावनानिरूपितोत्कटेतर कोटिगता कोटिताख्यप्रकारता, रागेतरेच्छानिरूपिता फलोपायगतोद्देश्यताविधेयतारूपा च, अनुत्कटोभयकोटिकसंशयनिरूपिता चोभयोरेव कोट्योः । इति विषयता ।

## अथ विषयिता

ज्ञानेच्छादिनिष्ठा विषयिता विषयनिरूप्या, विषयतायास्तु निरूप्या निरूपिका च भवति, विषयत्वविषयित्वयोः परस्परं निरूप्यनिरूपकभावात् । न च ज्ञानादिगतं यद्विषयतानिरूपकत्वं तदेवास्तु विषयित्वं, किमतिरिक्ततत्कल्पनेनेति वाच्यम् । विषयित्वमतिरिच्यते तन्निरूपकत्वं विषयत्वमित्यस्यापि सुवचत्वात् । विनिगमनाविरहादुभयोः परस्परनिरूप्यनिरूपकभावादतिरिक्तयोः सिद्धिः । विशेष्यिताप्रकारिता विधेयितादयो विषयिताभेदा निरूपकीभूतविषयताभेदवदेवोह्नीयाः । तत्राप्युद्देश्यताविधेयितादयो विशेष्यिता प्रकारितान्तर्भूता बोध्याः । इतिविषयिता ।

## अथ प्रतियोगिता

प्रतियोगित्वमाश्रयस्याऽवच्छेदकस्य वा स्वरूपमतिरिक्तं वेति पूर्वमिहितमवगन्तव्यं यथामतम्, तच्च भावनिरूपितम्, अभावनिरूपितं च । संयोगसमवायादि निरूपितं घटादि रूपादिनिष्ठमाद्यम् । चतुर्विधाऽभावनिरूपितं घटादिगतं द्वितीयम् । तत्राऽन्योन्याभावप्रतियोगित्वं तादात्म्येन संबन्धेनावच्छिद्यते । नञोऽसत्वे यत्र धर्मिणि येन संबन्धेन यद्वत्ता प्रतीयते नञ् सत्वे तत्र धर्मिणि तत्संबन्धावच्छिन्न प्रतियोगिताकतदभावः प्रतीयते इति नियमात् । प्रतिबध्यप्रतिबन्धकभावान्यथानुपपत्तिरत्रेह मानम् । तथाहि—तादात्म्यसंबन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताशालि बुद्धित्वावच्छिन्नं प्रति घटत्वावच्छिन्नतादात्म्यसंबन्धावच्छिन्न प्रतियोगिका-

भावत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकता, सा च प्रतियोगितायां तादात्म्य संबन्धावच्छिन्नत्वमन्तरेण तद्घटितावच्छेदकानुपपत्त्या नोपपद्यते इति प्राञ्चः।

नव्यास्तु तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वं नाऽन्योन्याभावत्वं किन्तु अनुयोगिताविशेषरूपं तत्। तथा च दर्शितप्रतिबन्धकताया घटत्वावच्छिन्न प्रतियोगितानिरूपितानुयोगिताविशेषावच्छिन्नप्रकारताशालिनिश्चयत्वमवच्छेदकम् तच्च न तादात्म्यसंबन्धावच्छिन्नत्वघटितमिति न दर्शितमानावतारः। अतस्ता-दात्म्यसंबन्धो न प्रतियोगितावच्छेदकोऽन्योन्याभावप्रतियोगिता च संबन्धानवच्छि-न्नैव। इत्थं च वृत्त्यनियामकसंबन्धस्याऽभावप्रतियोगितावच्छेदकत्वनियमे तादा-त्म्यातिरिक्तत्वनिवेशप्रयुक्तलाघवमप्यनुकूलम्। तादात्म्यं च तद्वृत्तिउभयावृत्तिधर्म-वत्त्वरूपम्। उभयाऽवृत्तित्वं च स्वप्रतियोगिवृत्तित्व स्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टान्यत्वमिति प्राहुः।

संसर्गाभावप्रतियोगितास्वपि अत्यन्ताभावप्रतियोगिता भवति संसर्गा वच्छिन्ना, तत्तत्संसर्गावच्छिन्नतद्धर्मावच्छिन्नप्रकारताघटितज्ञानत्वावच्छिन्नं प्रति तत्तत्संसर्गावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावप्रकारकनिश्चयत्वेन प्रतिबन्धकताया निर्वचनानुरोधेन तत्सिद्धेः। यदि हि प्रतियोगितायां संबन्ध विशेषावच्छिन्नत्वेनाऽघटितं तत्र प्रतिबन्धकतावच्छेदकं स्यात् तदैकसंबन्धेन तत्त-द्धर्मावच्छिन्नस्याभाव निर्णयेपि अन्यसंबन्धेन तद्धर्मावच्छिन्नप्रकारकज्ञानमव्याहत मिति सार्वजनीनानुभवसिद्धसिद्धान्त उन्मीलितः स्यात्, स्याच्च तादृशप्रतिबन्ध-काभावस्य निरुक्तप्रतिबध्यतावच्छेदकधर्मावच्छिन्नं प्रति कारणता व्यतिरेकव्य-भिचारपराहता। अतोऽत्यन्ताभावप्रतियोगित्वस्य संसर्गावच्छिन्नत्वमवश्यमुप-गन्तव्यम्। ध्वंसप्रागभावप्रतियोगिते तु न संसर्गावच्छिन्ने-मानाभावादिति सिद्धान्तः अभावप्रतियोगितायाः संसर्गावच्छिन्नत्वमभ्युपगच्छन्तः प्राचीनाः ध्वंसप्रतियो-गिताया उत्तरकालीनत्वम्, प्रागभावप्रतियोगितायाः पूर्वकालीनत्वं संसर्गविधयाऽ-वच्छेदकमित्यभ्युपगच्छन्ति। इति प्रतियोगिता।

## अथानुयोगित्वम्

"अनुयोगित्वं सप्रतियोगिकपदार्थनिरूपितं द्विविधम्। भावनिरूपितम्, अभावनिरूपितं च। तत्राऽऽद्यं —संयोगसमवायादिसंसर्गनिरूपितं, तत्संबन्धा-वच्छिन्नाधिकरणताश्रयनिष्ठम्। यत्र येन संबन्धेन यत्प्रकारकं ज्ञानं प्रामाणिकं तत् तत्प्रतियोगिकसंबन्धानुयोगीति नियमात्। भूतलादौ घटादिप्रतियोगिक संयोगानुयोगिता, कपालादौ च घटादिप्रतियोगिकसमवायानुयोगिता, न तु तत्संबन्धाश्रयत्वाविशेषेपि प्रतियोग्यनुयोगिभाववैपरीत्यम्, घटादिविशेष्यकभूतल-कपालादिप्रकारकसंयोगसमवायादिसंसर्गकप्रतीतेः प्रामाण्यविरहात्। ययोः पदार्थयोरेकसंबन्धेन परस्परं विशिष्टधीः प्रमा तत्संयोगस्यैकस्यापि प्रतियोग्य-नुयोगिभावावुभावपि उभयत्राऽभ्युपगन्तव्यौ। एवं वाच्यत्वप्रमेयत्वादीनां स्वरूपे

च संबन्धादौ उभयप्रतियोगिकत्वोभयानुयोगिकत्वे प्रतिसंन्धेये। परंपरासंबन्धस्य तु प्रथमविशेषणनिरूपितं प्रतियोगित्वम्, मुख्यविशेष्यनिरूपितमनुयोगित्वम्, नत्वेकनिरूपितमुभयमिति विशेषः। तथा हि—घटरूपस्य समवायिसंयोगात्मको-भूतलादौ "घटसंयोगिनि" परंपरासंबन्धः—तद्घटकसमवायनिरूपितं प्रतियोगित्वं रूपे, संयोगनिरूपितमनुयोगित्वं भूतले, रूपे संयोगनिरूपितप्रतियोगित्वस्याऽसंभवदुक्तिकत्वेऽपि भूतले समवायनिरूपितानुयोगित्वस्याऽप्यसंभवात्। प्रतियोगित्वा-नुयोगित्वोभयमेकनिरूपितमिति तु न शक्यते वक्तुम्। प्रतियोगित्वस्य भूतले उपगन्तुमशक्यत्वात्, विशेष्यतयैव तस्य भानात्। समवायस्य नानात्वम ते घटरूपप्रतियोगिकसमवायस्य भूतलानुयोगितायाः अत्यन्तमसंभावितत्वाच्च। किं च जातौ निरवयवद्रव्यस्य संयुक्तसमवायसंबन्धघटकनिरूपितमपि उभय-मेकत्राऽसिद्धमेव। न हि भवति सामान्यं संयोगस्य प्रतियोगि न वा समवायस्य च निरवयवद्रव्यं प्रतियोगीति रीतिरियमन्यास्वपि परंपरासु अनुसंधेया। इत्यनुयोगित्वम्।

## अथाऽवच्छेदकत्वम्

अवच्छेदकत्वं द्विविधम्, अव्याप्यवृत्तिता नियामकं तदितरच्च। यत्र प्रकारावच्छेदकत्वं विशेष्यतावच्छेदके भासते तदाद्यम्, यथा मूलावच्छिन्नो वृक्षो न कपिसंयोगी, द्वितीयक्षणावच्छिन्नो घटो गन्धवानित्यादौ। तच्च स्वरूपसंबन्ध-रूपमतिरिक्तं चेत्यभिहितप्रायम्। तत्र धर्मिविशेषणीभवन्मूलद्वितीयक्षणादिकं धर्मिपारतन्त्र्येण प्रकारस्यापि कपिसंयोगाभाव-गन्धादेरवच्छेद्यतासंबन्धेन विशेष-णीभूय भासते इति तादृशावच्छेदकत्वं प्रामाणिकम्। इदमेवोच्यते अव्याप्यवृत्ति-तानियामकमवच्छेदकत्वम्। भावाभावयोरेकत्र समावेशोऽवच्छेदकमन्तरा न संभवतीति। तथाऽऽद्यं द्विविधम्। अव्याप्यवृत्तितायाः दैशिक्याः कालिक्याश्च भेदात्। अग्रेवृक्षः कपिसंयोगी न मूले इत्याद्याकारकप्रतीत्या अग्रमूलादिषु कपिसंयोगतद-भावादीनां अवच्छेदकत्वमवगाह्यते। "गृहे नेदानीं गौः" इत्यादिप्रतीत्या एतत्काला-वच्छेदेन गृहे गवाभावसिद्धेः। अव्याप्यवृत्तित्वञ्च स्वसमानाधिकरणाभावप्रतियोगि-त्वत्वम्। निरूपितमव्याप्यवृत्तितानियामकावच्छेदकत्वम्। इतरच्चाऽवच्छेदकत्वमि-दानीं निरूपणीयम्। तच्च स्वरूपसंबन्धरूपमतिरिक्तं चेति निरूपितम्। तच्च द्विविधम्, विषयतारूपं तदितरच्च। तत्र विषयतारूपं प्रकारत्वान्तर्गततया निरूपितं, शिष्टमिदानीं निरूप्यते। अनवच्छिन्नाऽवच्छिन्नभेदेन द्विविधम् तत्। घटाभावा-दिनिरूपितघटादिवृत्तिप्रतियोगितानिरूपितं घटत्वादिनिष्ठमाद्यं, घटो नास्तीति प्रतीतौ घटत्वादेः स्वरूपतोभासमानत्वेन तन्निष्ठावच्छेदकत्वस्याऽनवच्छिन्नस्यैव तया प्रतीत्या विषयीकरणात्।

जातिमान्नास्तीत्यादिप्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपितं जाति-निष्ठावच्छेदकत्वं द्वितीयम्, तत्र जातेः प्रतियोग्यंशे जातित्वेन भासमानतया जाति-निष्ठावच्छेदकतायाः जातित्वावच्छिन्नत्वात्। अवच्छेदकतावच्छेदकतापि अनवच्छि-

न्नानवच्छिन्नभेदाद् भवति द्विविधा। तत्राऽऽद्या दर्शितस्थलेएव जातित्वनिष्ठावच्छेद-कता जातित्वत्वाद्यवच्छिन्ना, जात्यखण्डोपाधिभिन्नस्य जातित्वस्य स्वरूपतो भानाऽ-संभवात्। द्वितीया तु घटवान्नास्तीत्यादिप्रतीतिसाक्षिकघटवदभावनिरूपितप्रतियो-गितानिरूपितघटनिष्ठावच्छेदकतानिरूपितघटत्वनिष्ठावच्छेदकता, तत्र घटांशे घटत्व-स्याऽन्यप्रकारेणाभानेन घटत्वनिष्ठावच्छेदकतावच्छेदकताया अनवच्छिन्नत्वात्। एवं रीत्या अवच्छेदककोटिप्रविष्टेषु अवच्छेदकताऽवच्छेदकताऽवच्छेदकताधारा निराबाधा।

अवच्छेद्यप्रतीतौ अवच्छेद्याश्रये यस्य येन संबन्धेन भानं तत्र तत्संबन्धाव-वच्छिन्नाऽवच्छेदकता तया प्रतीत्या विषयीक्रियते। यथा घटोनास्तीति प्रतीत्या स्वविषयीभूताऽवच्छेद्यप्रतियोगिताश्रयीभूते समवायेन प्रकारतया विषयीकृते घटत्वे समवायसंबन्धावच्छिन्नप्रतियोगितावच्छेदकता विषयीक्रियते। तथा घटवान्ना-स्तीति प्रतीत्या स्वविषयीभूताऽवच्छेद्यप्रतियोगितावच्छेदकताश्रयीभूते "घटे" सम-वायेन प्रकारतया विषयीकृते घटत्वे समवायसंबन्धावच्छिन्ना प्रतियोगितावच्छे-दकताऽवच्छेदकता विषयीक्रियते। अत ऊर्ध्वमपि भासमानानामेवं रीत्यैवाऽवच्छे-दकतापरंपरायाः स्वसमानाधिकरणप्रकारतावच्छेदकसंबन्धावच्छिन्नत्वमुपेयम्।

अत्राऽपरोविशेषः। यद्विशिष्टवैशिष्ट्यबोधमर्यादया स्वाश्रयाश्रयत्वादि-संबन्धेन मुख्यावच्छेद्याश्रये भासमानानामवच्छेदकविशेषणानां अवच्छेदकता-वच्छेदकतावत् मुख्यावच्छेद्यनिरूपिताऽवच्छेदकतापि प्रामाणिकी, विनिगम-नाविरहाच्च मुख्यावच्छेदकता, तदवच्छेदकतावच्छेदकता च सिद्ध्यति। न च परंपरासंबन्धावच्छिन्नावच्छेदकताकल्पनामपेक्ष्य साक्षात्संबन्धावच्छिन्ना-वच्छेदकतावच्छेदकताकल्पने लाघवमित्यस्य विनिगमकत्वादिति वाच्यम्। यतोऽवच्छेदकविशेषणस्याऽवच्छेदकतावच्छेदकतायां कल्पनीयाया मवच्छेदकता-वृत्ति तदवच्छेद्यतावच्छेदकं मुख्यावच्छेद्यनिरूपितत्वविशिष्टमवच्छेदकतात्वं भवेत्, तच्च गुरुतरमितिपरंपरासंबन्धस्यावच्छेदकतावच्छेदकत्वेपि न गौरवमिति।

नीलघटोनास्तीति प्रतीति सिद्धाभावप्रतियोगितावच्छेदकता घटत्वेऽनवच्छिन्ना, नीलत्वे तु "नीलरूपपर्यवसिते' रूपत्वव्याप्यनीलत्वजात्यवच्छिन्ना-ततश्चावच्छेदक-संबन्धाभेदेपि अवच्छिन्नानवच्छिन्नत्वयोरेव भेदकत्वात्, अवच्छेदकतयोर्भेदे तयोश्च तत्प्रतियोगितानिरूपितावच्छेदकतात्वेनोभयानुगतेन व्यासज्यवृत्तित्वम्, द्वित्वादिवत्। व्यासज्यवृत्तित्वं चैकत्वानवच्छिन्नपर्याप्तिप्रतियोगित्वम्। पर्याप्तिश्च स्वरूपसंबन्धविशेषः पदार्थान्तरं वेति सामान्यत उद्दिष्टं, विशेषतस्तु निरूपयिष्यते।

यदवच्छेदेन पर्याप्तिस्तत्पर्याप्त्यवच्छेदकं पर्याप्त्यनुयोगितावच्छेदकं चोच्यते। इह च नीलघटाभावीयप्रतियोगितानिरूपितावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं घटत्वनीलोभयगतं द्वित्वं, तयोरेवावच्छेदक तयोः प्रत्येकवृत्ति "असाधारण" तदवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्या-प्त्यनुयोगितावच्छेदकं तु प्रत्येक "नील-घटत्व" वृत्ति एकत्वमेव, तदवच्छेदकत्वमे-

कस्मिन् घटत्वे पर्याप्त "मिति प्रत्ययात् उक्तप्रतियोगितानिरूपितावच्छेदकत्वमेकस्मिन घटत्वे नीले वा पर्याप्तमिति प्रत्ययविरहेण च तत्प्रतियोगितानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिकानुयोगिता प्रत्येकमात्रवृत्ति प्रत्येकत्वादिना नावच्छिद्यते, अवच्छिद्यते च तदुभयगतद्वित्वादिनैव, नीलघटाभाव प्रतियोगितावच्छेदकत्वं नीलघटत्वयोरुभयोः पर्याप्तमितिप्रत्ययात् । जातिमदभावीयप्रतियोगितावच्छेदकता तदवच्छेदकताघटकसकलपदार्थगतसमुदायत्वं जातिमदभावीयप्रतियोगितानिरूपितवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनु योगितावच्छेदकं, तत्र समुदायोऽवच्छेदक इति प्रतीतिविरहेऽपि जातित्वावच्छिन्नमवच्छेदकमिति प्रतीत्यैव तादृशसमुदायत्वावच्छिन्नेऽवच्छेदकत्वमवगाह्यते । तत्र समुदायत्वं विषयतासंबन्धेन प्रत्यासन्नो धीविशेषो, धीविशेषविषयत्वं वा, संख्यारूपस्य समुदायत्वस्य द्रव्यभिन्नेऽसंभवात् । संख्यारूपस्यापि समुदायत्वस्य पर्याप्तिसम्बन्धेन द्रव्येतरवृत्तित्वं न विरुध्यते, समवायेनैव गुणस्य द्रव्येतराऽवृत्तित्वनियमात् । घटत्वनीलादिगतैकत्वादिकमप्येवं रीत्या प्रत्येतव्यम् ।

*सेयमवच्छेदकताऽलघुधर्मे भवति गुरुधर्मे न स्वीक्रियते ।* कंबुग्रीवादिमान्नास्तीत्यादिप्रतीतिसिद्धाभावप्रतियोगितावच्छेदकं घटत्वमेव, न तु कंबुग्रीवादिकं, कंबुग्रीवा हि अवयवसंयोगविशेषः, तस्याऽवच्छेदकत्वं कंबुग्रीवात्वजात्यवच्छिन्नं कल्पनीयम् इति गौरवं, तदपेक्षया घटत्वगताऽनवच्छिन्नावच्छेदकता कल्पने लाघवात् । एवं कंबुग्रीवादेरवच्छेदकत्वं स्वाश्रयसमवेतत्वसंबन्धेनावच्छिन्नं कल्पनीयम्, तत समवायात्मकसाक्षात्संबन्धावच्छिन्नघटत्वादिनिष्ठावच्छेदकता कल्पने लाघवमिति ज्ञानं गुरुणि अवच्छेदकत्वबुद्धौ प्रतिबन्धकम् । अवच्छेदकता संबन्धेन प्रतियोगिताप्रकारकग्रहं प्रति तादात्म्यसंबन्धेन गुरुधर्मस्य प्रतिबन्धकत्वादिति प्राञ्चः ।

नव्यास्तु अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताया एवान्वयिनो नञर्थाभावे संसर्गविधया भानस्य व्युत्पत्तिसिद्धत्वात्, सत्यपि गौरवज्ञाने कंबुग्रीवादिमान्नास्तीति प्रतीत्युदयेन भवत्येव गुरुरपि धर्मोऽवच्छेदकः प्रतियोगितायाः । यथा जलवन्ह्यभाववदिति ज्ञानविरहकाले जलं वन्हिमदिति भ्रमोजायते, तथा उक्तगौरवज्ञानविरहकाले कंबुग्रीवादिमान्नास्तीति प्रतीत्या कंबुग्रीवादिमत्वावच्छिन्नप्रतियोगिताकत्वेनाऽभावग्रहोजायते इति गुरुधर्मस्य प्रतियोगितावच्छेदकत्वं प्राचीनैरपि स्वीकरणीयम् । कंबुग्रीवादिमान्नास्तीतिप्रतीते घटत्वावच्छिन्नप्रतियोगिताकत्वावगाहित्वे तदानीमुत्पन्नायाः कंबुग्रीवादिमान्नास्तीति धियो वाचनिश्चयविधया कंबुग्रीवादिमानस्तीति विशिष्टधीविरोधित्वानुपपत्तेः । कंबुग्रीवादिमत्वावच्छिन्नस्य विशिष्टबुद्धौ तदवच्छिन्नप्रतियोगिताकाभावनिश्चयस्य विरोधित्वात् ।

उक्तप्रतिबध्यप्रतिबन्धकभावस्तु अनुभवविरुद्धोऽतः स्वरूपसंबन्धरूपाऽवच्छेदकत्वपक्ष एव श्रेयान् । परन्तु स्वरूपसंबन्धरूपाऽवच्छेदकत्वस्वीकर्तृभिः ज्ञानभेदेन विषयताभेदमवलंब्य वन्ह्यभाववान् ह्रद इतिनिश्चयीयप्रतिबन्धकता

वच्छेदकतावन्ह्यभावाद्येकदेशविषयतायामपि स्वीक्रियते, 'वन्ह्यभाववान् हृद इतिज्ञानीयविषयतायाः ज्ञानान्तरेऽसत्वेन वन्ह्यभाव इत्यादिनिश्चयस्य प्रतिबन्धकत्वापत्तिविरहादिति वदन्ति।

प्राञ्चस्तु गुरुधर्मे स्वरूपसंबन्धरूपावच्छेदकत्वं न स्वीकुर्वन्ति, किन्तु अनतिरिक्तवृत्तित्वरूपम्, तच्च तदभाववदवृत्तित्वम्, यथा घटसामान्याभावादिप्रतियोगित्वाभाववति पटादौ अवृत्तित्वं घटत्वादावच्छेदकेऽवगाहते, इदमवच्छेदकत्वं तदभाववदवृत्तित्वरूपम्। तच्च कंबुग्रीवादिमत्वगुरुधर्मेपि, घटत्वाभाववदवृत्तित्वादिति प्राहुः। इत्यवच्छेदकत्वम्।

## अथ पर्याप्तिः।

पर्याप्तिश्च स्वरूपसंबन्धविशेषः पदार्थान्तरं वा। अयमेको न द्वौ इत्यादिप्रतीतीनां प्रामाण्यनिर्वाहाय तदभ्युपगम आवश्यकः। समवायेन हि तस्योभयत्र सत्वेन तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावस्यैकस्मिंस्तदाश्रयेपि वाधितत्वात्, एवमेकोद्वावित्यादिप्रतीतीनां प्रामाण्यमपि पर्याप्त्यनभ्युपगमे वारयितुमशक्यम्, एकस्मिन् समवायेन द्वित्वस्याऽवाधितत्वात्। न चाऽङ्गीकृतायामपि पर्याप्तौ समवायेन द्वित्वमवगाह्य एको द्वौ इति प्रतीतेः प्रामाण्यं न शक्यते वारयितुम्, किंच पर्याप्तेरपि उभयत्र सत्वेन तत्संबन्धावच्छिन्नप्रतियोगिताकद्वित्वात्यन्ताभावस्य तत् संबन्धावच्छिन्नद्वित्ववृत्त्यवच्छेदकताकप्रतियोगिताकान्योन्याभावस्य चैकस्मिन्नपि वाधितत्वादेको न द्वौ इत्यादिप्रत्ययप्रामाण्यमपिदुरुपपादमिति वाच्यम्। एकोद्वौ इत्यादिप्रत्ययानां नियमतो विशिष्टानुयोगिकवैशिष्ट्यबुद्धित्वोपगमात्, द्वित्वादौ अवच्छेद्यतासम्बन्धेन, तदीयपर्याप्तौ अवच्छिन्नानुयोगिताकत्वसम्बन्धेन वा विशेष्यतावच्छेदकस्य भानावश्यभावेन तदंशेऽप्रामाण्यस्य प्रथमायामुपपत्तेः। द्वितीयायां तु विशेष्यतावच्छेदकस्यैकत्वस्याऽवच्छेद्यतासम्बन्धेनाऽभावे तदीयसंसर्गेवा भानोपगमे नैकत्वस्य द्वित्वाद्यनवच्छेदकतया तदवच्छेदेन तदभावस्या ऽव्याप्यवृत्तेरवाधितत्वेन प्रामाण्यस्य सूपपादितत्वात्। समो हि व्यासज्यवृत्तिधर्मो व्यासज्यवृत्ति पर्याप्त्यनुयोगितावच्छेदकइतिनैकत्वं द्वित्वपर्याप्त्यनुयोगितावच्छेदकमतस्तदवच्छेदेन द्वित्वं बाधितम्, अबाधितश्च तदभावः। द्वित्वं तु द्वित्वपर्याप्त्यनुयोगितावच्छेदकं, तदवच्छेदेन द्वित्वमवगाहमानाया इमौ द्वौ इति प्रतीतेः प्रामाण्यम्, तदभावादिकमवगाहमानाया इमौ न द्वौ इतिप्रतीतेरप्रामाण्यं चोपपद्यते।

इदमत्रालोचनीयम्। एकत्वावच्छेद्यत्वस्य दर्शितरीत्याभासमानस्य द्वित्वादौ बाधितत्वादेव एको द्वौ इत्यादि प्रत्ययानामप्रामाण्यमुपपद्यते। अस्तु च द्वित्वादिकं द्वित्वादेरेवाऽवच्छेदकम्, एकत्वादिकं चाऽनवच्छेदकमिति इमौ द्वौ इति प्रत्ययानां प्रामाण्यमुपपद्यते। उपपद्यते च एको न द्वौ इति प्रत्ययप्रामाण्यम्, एकत्वावच्छेदेन समवायसंबन्धावच्छिन्नप्रतियोगिताकस्य द्वित्वात्यन्ताभावस्य तत्संबन्धावच्छिन्नद्वित्ववृत्त्यवच्छेदकताकप्रतियोगिताकान्योन्याभावस्य च प्रतीत्यनुरोधेनोपगन्तुं शक्यतयाऽ वाधितत्वोपपत्तेरिति समवायेनैवोपपत्तौ पर्याप्तौ मानाभावः।

यत्तु पर्याप्त्याख्यसंबन्धानुपगमे आकाशौ इत्यादिप्रत्ययस्य प्रामाण्यापत्तिः, आकाशमात्रसमवेतद्वित्वस्याऽप्रसिद्धत्वेपि अन्यसाधारणस्य तस्याऽऽकाशेपिसमवेतत्वात्। न च समवाय एव द्वित्वस्य संबन्धो धर्मितावच्छेदकव्याप्यत्वं च द्वित्वादेः संसर्गतावच्छेदककोटौ अवश्यं भासतेइतिनियमोऽवश्यमभ्युपेयः। प्रकृते च एकत्वव्याप्यसमवायः संसर्गः, तथा च द्वित्वसमवाये आकाशत्वव्याप्यताविरहेण तादृशप्रतीतेरप्रामाण्यमुपपद्यते इति वाच्यम्। समवायस्यैकत्वेन घटत्वादिव्याप्यतायास्तत्र बाधेन घटौ इत्यादिप्रतीतेरपि अप्रामाण्यापत्तिरतः पर्याप्तिसम्बन्धोपगम आवश्यकः, तदुपगमे च तत्र धर्मितावच्छेदकव्याप्यत्वस्यसंसर्गतावच्छेदकतया न तादृशप्रतीतीनां प्रामाण्यम्, नापि घटौइत्यादिप्रत्ययानामप्रामाण्यम्, कस्याश्चिदपि द्वित्वपर्याप्तेराकाशत्वादिव्याप्यताविरहात्, घटद्वयवृत्तिद्वित्वपर्याप्तौ च घटत्वादिव्याप्यतायाअबाधितत्वादिति। तदप्ययुक्तम्। समवायस्य नानात्वपक्षे दर्शितानुपपत्त्यनुपपत्तेः। घटद्वय द्विगनद्वित्वादेः समवायस्य घटत्वादिव्याप्यताया अबाधितत्वात्। घटपटौइत्यादिप्रत्ययानामपि नाप्रामाण्यप्रसक्तिः, तत्र हि इमौ इति विशेष्यसमर्पकमपेक्षणीयम्। तथा च विशेष्यतावच्छेदकीभूतेदन्त्वव्याप्यत्वं घटपटवृत्तित्वोपरक्तद्वित्वसमवायेऽबाधितमिति। अस्तु वा द्वित्वांशे एव पारतन्त्र्येण व्याप्यतासंसर्गेण प्रकारतया धर्मितावच्छेदकस्य भानम्, तावतापि उक्तदोषाणामप्रसक्तेः। पर्याप्तिमुपगच्छतापि तत्र धर्मितावच्छेदकव्याप्यताभानोपगमस्यावश्यकतया द्वित्वांशे तदीयव्याप्यताभानोपगमे गौरवानवकाशात्।

अथ एकत्वानवच्छिन्नपर्याप्तिप्रतियोगित्वं व्यासज्यवृत्तित्वम्, द्वित्वादिपर्याप्त्यनुयोगिताया एकत्वेनाऽनवच्छेदाद् द्वित्वादीनां तथात्वम्, एकत्वद्रव्यत्वादिपर्याप्त्यनुयोगिताया एकत्वेनाऽवच्छिन्नतया तेषामतथात्वम्। एवं चैतादृशव्यासज्यवृत्तित्वस्य निर्वचनानुरोधेन पर्याप्तिसिद्धिरावश्यकी। न हि एकत्वेतरसंख्यात्वमेव व्यासज्यवृत्तित्वम् इति शंक्यम्। संख्येतरस्य प्रतियोगितावच्छेदकत्वादेरपि व्यासज्यवृत्तिताया आवश्यकत्वादिति चेत् का क्षतिः। व्यासज्यवृत्तित्वस्याऽनिर्वाच्यत्वे न हि कश्चित्पदार्थः शास्त्रैकसमधिगम्यं व्यासज्यवृत्तित्वमुपजीवति येन तन्निर्वचनाऽऽग्रहः परिपूरणीयः स्यात्।

वन्हित्वमेकं न महानसीयवन्ह्यभावप्रतियोगितावच्छेदकं महानसीयत्ववन्हित्वोभय तादृशाभावप्रतियोगितावच्छेदकमित्यादिप्रतीत्या वन्हित्वगतैकत्वावच्छेदेन तादृशाभावप्रतियोगितावच्छेदकत्वस्यपर्याप्तिसम्बन्धावच्छिन्नप्रतियोगिताकाभावोविषयीक्रियते, महानसीयत्ववन्हित्वोभयगतद्वित्वावच्छेदेन च पर्याप्तिसंबन्धेन तादृशावच्छेदकत्वं विषयीक्रियते, स्वरूपसम्बन्धेन तादृशावच्छेदकतायाः प्रत्येकपर्यवसितत्वेन वन्हित्वगतैकत्वावच्छेदेन तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्यावगाहुमशक्यत्वात्, इति तदनुरोधेन पर्याप्तिसिद्धिरावश्यकीत्यपि न शक्यते वक्तुम्। वन्हित्वगतैकत्वावच्छेदेन तथाविधावच्छेदकताया स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यापि मूलाद्यवच्छेदेन कपिसंयोगाभाववत्, प्रतीतिवले-

नोपगन्तुं शक्यत्वात्, विशिष्टनिरूपितत्वेन सम्बन्धाभानानुपगमेपर्याप्तिमुपगम्यापि अनिस्तारादिति ।

अत्र भ्रमः । यथा अनुमिनोमि आपादयामीत्यादिप्रतीत्याऽनुमितित्वाऽऽपत्तित्वादीनां सिद्धिः, तथा पर्याप्नोति समवैतीत्यादिप्रत्ययानां परस्परवैलक्षण्यस्याऽनुभवसिद्धतया तदुपपत्तये पर्याप्तिसम्बन्धस्य सिद्धिरव्याहता । न च तत्तत्प्रतियोगिकत्वविशिष्टः समवायादिरेव पर्याप्नोतीतिप्रतीतिविषय इति वाच्यम् । द्रव्यत्वविशिष्टसत्तादि प्रतियोगिकत्वविशिष्टसमवायसत्वेपिद्रव्यत्वं विशिष्टसत्ता वा पर्याप्नोतीत्यप्रत्ययात् । व्यासज्यवृत्तित्वनिर्वचनानुरोधेनापि सिद्धयति पर्याप्तिरित्यपि बोध्यम् । सेयंपर्याप्तिरव्यासज्यवृत्तिद्रव्यत्वैकत्वजातित्वादीनां संवन्धो नेष्यते समवायविशेषणतादिभिरेव निर्वाहात् ।

यत्तु द्रव्यत्वादीनां पर्याप्तिरिव द्वित्वादीनां व्यासज्यवृत्तिसंख्यानां समवायो न प्रामाणिकः, पर्याप्त्यैव प्रतीतेर्निर्वाहात् । तन्न युक्तम् । जन्यभावस्य समवायिकारणजन्यत्वनियमेन जन्यसत्वावच्छिन्नायाः द्रव्यत्वावच्छिन्नसमवायिकारणतानिरूपितजन्यताया अवच्छेदकस्य समवायसंवन्धस्य जन्यभावभूतद्वित्वादि संख्याप्रतियोगिकत्वाऽऽवश्यकत्वात् । इति पर्याप्तिः ।

## अथ कार्यत्व कारणत्वे

अनन्यथासिद्धत्वे सति कार्यनियतपूर्ववर्त्तित्वम् कारणत्वम्, कार्यनियतपूर्ववर्त्तित्वं चकार्यव्यापकत्वम् । तथा च कार्यतावच्छेदकसंवन्धेन कार्याधिकरणे कार्याऽव्यवहितपूर्वक्षणावच्छेदेन वर्त्तमानो योऽभावस्तन्निरूपितकारणतावच्छेदकसंवन्धावच्छिन्नप्रतियोगितानवच्छेदकधर्मवत्त्वमर्थः । घटाद्यात्मककार्याधिकरणे समयान्तरावच्छेदेन वर्त्तमानोऽपिदण्डादेरव्याप्यवृत्त्यन्ताभावो न घटाद्यव्यवहितपूर्वक्षणावच्छेदेन वर्तते इति दण्डत्वादिकं तादृशाभाव प्रतियोगितानवच्छेदकमिति दण्डत्वादिना घटादिकारणतानिर्वाहः । न चैवं यद्धर्मावच्छिन्नयत्संवन्धावच्छिन्नप्रतियोगिताकाभावो घटाद्यात्मककार्याधिकरणे व्याप्यवृत्तिस्तेन संवन्धेन तत्तद्धर्मावच्छिन्नस्य घटादिकं प्रति कारणत्वापत्तिः, तत्तद्धर्मावच्छिन्नाभावे पूर्वक्षणावच्छिन्नकार्याधिकरणवृत्तित्वविरहादितिवाच्यम् । तादृशधर्मावच्छिन्नस्याऽऽवश्यकनियतपूर्ववर्त्तिभिन्नत्वेनाऽन्यथासिद्धतया सत्यन्तेन वारणात् । न च सत्यन्तमेवास्तु अव्यापकानामन्यथासिद्धतयाऽनतिप्रसंगादिति वाच्यम् । अनन्यथासिद्धत्वस्यानुगतस्य दुर्निर्वचत्वेन येयेऽन्यथासिद्धास्तेषां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटस्य लक्षणघटकत्वेऽव्यापकानामन्यथासिद्धानां भेदाननिवेश्य व्यापकत्वदलेन तद्वारणेलाघवात् । तथा च नियतपूर्ववर्त्तितावच्छेदकयद्धर्मावच्छिन्नेऽन्यथासिद्धत्वंव्यवह्रियते तत्तद्धर्मावच्छिन्नभेदकूटवत्त्वंतत् । कारणताग्रहस्य व्यभिचारग्रहप्रतिबध्यतासंपत्तये व्यापकत्वान्तर्निवेशनमित्यपिकेचित् ।

कारणताव्याप्यत्वं कार्यत्वम्। तद्दर्शितव्यापकतावत्कारणसामानाधिकरण्यम्। अन्यथासिद्ध्यनिरूपकत्वसहितदर्शितकारणत निरूपकत्वं वा कार्यत्वंबोध्यम्।

वस्तुतस्तुतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकान्योन्याभावादिकूटघटितस्याऽसर्वज्ञदुर्ज्ञेयत्वात्, कार्यत्वं कारणत्वं चाऽतिरिक्तः पदार्थः। तयोरेकस्याऽन्यनिरूपकता न संभवति विनिगमनाविरहेण तयोरतिरिक्तपदार्थतासिद्धेः। अन्यथासिद्धेषु अतिरिक्तकारणताया अनभ्युपगमेनैव नातिप्रसङ्गः। अन्यथासिद्धभेदानामनिवेशेन नाऽसर्वज्ञदुर्ज्ञेयतादोषः।

यत्तु यद्यतिरिक्तःपदार्थः कारणता, तर्हि दण्डादौ इन्द्रियसंयोगानन्तरमेव दण्डत्वादीनामिव तादृशकारणताया अपि प्रत्यक्षापत्तिः, अतिरिक्तपदार्थरूपकारणताग्रहं प्रति अनन्यथासिद्धत्वसहितदर्शितव्यापकताग्रहस्यकारणत्वांगीकारे तु गौरवम् असर्वज्ञदुर्ज्ञेयत्वं दुष्परिहरमेवेति। तन्न। अन्वयव्यतिरेकयोर्ज्ञानस्यकारणताग्रहंप्रतिकारणत्वाभ्युपगमेनतद्विलंबादेवधर्मीन्द्रियसन्निकर्षमात्रेण कारणताग्रहाऽऽपादनाऽसंभवात्, असर्वज्ञदुर्ज्ञेयतायाश्च परिहृतत्वात्।

नचैवं दण्डत्वादिकमेवास्तुकारणत्वम्, अन्वयव्यतिरेकज्ञानकारणतयैवाऽनतिप्रसङ्गादिति वाच्यम्। दण्डइत्याकारकप्रतीतितो घटकारणमित्यादिप्रतीतेर्वैलक्षण्यस्यानुभविकतया तदुपपत्तये विषयवैलक्षण्यस्यावश्यमास्थेयतया दण्डत्वादेस्तद्रूपताया वक्तुमशक्यत्वात्। एवं निष्प्रतियोगिकत्वदण्डत्वादेस्तद्रूपतोपगमे घटस्यकारणमित्यादि प्रतियोगिविशेषविशेषित तत्प्रतीतेरप्रामाण्यमपि स्यात्। यदि दण्डत्वादौ एव सप्रतियोगिकत्वं लाघवात्सिध्यतु इत्युच्यते तदा घटस्य दण्ड इति प्रतियोगिविशेषविशेषिततद्विषयक प्रतीतेरपि प्रामाण्यप्रसंगोदुर्वारः।

न च कारणतात्वमतिरिच्यतां तच्च दण्डत्वादिनिष्ठ दण्डत्वादिवृत्तिप्रतियोगिताकत्वस्याऽवच्छेदकमिति वाच्यम्। कारणतात्वातिरेकात् कारणातिरेके गौरवविरहात्। न च कारणतामतिरिक्तामुपगच्छतोपि कारणतात्वातिरेकोपगमः आवश्यकः, अन्यथाऽनुगतप्रतीत्यनुपपत्तेरिति वाच्यम्। सकलकारणानुगतायाः एकस्या एव कारणतायाः कल्पनीयतया स्वरूपेणैवाऽनुगतप्रतीत्युपपत्तेः। नचैवं तन्तुर्घटकारणमित्यादिप्रत्ययानां प्रामाण्यापत्तिः, तन्तुनिष्ठयाःपटनिरूपितकारणताया एव दण्डनिष्ठकारणतात्मकतया तत्र घटप्रतियोगिकत्वस्याबाधितत्वादिति वाच्यम्। गुणकर्मान्यत्ववैशिष्ट्यस्य गुणवृत्तिसत्तावृत्तित्वेपि गुणोगुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतेर्भ्रमत्ववत् तन्तौ घटप्रतियोगिकत्वविशिष्टकारणतावैशिष्ट्यावगाहिप्रतीतेर्भ्रमत्वोपपत्तेः। एतेन प्रतियोगिभेदेन विभिन्नानां कारणतानामभ्युपगमे गौरवाल्लाघवेन कारणतात्वमेवैकं क्लृप्तदण्डत्वाद्यनुगतमभ्युपगन्तव्यम् इति समाहितम्। एकस्या एव कारणताया उपगमात्। प्रतियोगिभेदेपि तद्भेदविरहात्। नित्या चेयं कारणता सिध्यतीति तत्वम्।

इति कार्यत्वकारणत्वे।

कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वम्। अभावजन्यत्वं प्रतिबध्यत्वमित्यन्यत्र विस्तरः। इति प्रतिबध्यत्वप्रतिबन्धकत्वे।

विशेष्यताप्रकारतातिरिक्तविशिष्टबोधविषयत्वं संबन्धत्वम् । घटः इत्याकारकज्ञाननिरूपिता घटघटत्वयोः समवायवृत्तिर्विषयता घटनिष्ठविशेष्यतातो घटत्वनिष्ठविशेषणतातश्च भिन्ना, सैव संबन्धता। प्रतियोगितायांसंसर्गविधयांऽवच्छेदकतात्मकोऽवच्छेदकताविशेषश्च संबन्धत्वम् ।

## इति संबन्धत्वम्

अधिकरणत्वमप्यतिरिक्तः पदार्थः। स च धर्मविशेषेण संबन्धविशेषेण चावच्छिद्यते, पर्वतोवन्हित्वावच्छिन्नाधिकरणमित्याद्याकारकप्रतीत्या पारतन्त्र्येणावच्छेद्यतासंबन्धेन पर्वतत्वादीनां धर्मिविशेषणतापन्नाऽधिकरणत्वांशे विषयीकरणात् । संयोगेनाधिकरणं समवायेनाऽधिकरणमित्यादिव्यवहाराच्च ।

न च संयोगादिसंबन्धरूपमेवास्तामाधारत्वम् किमतिरिक्तपदार्थकल्पनेनेति वाच्यम् । पर्वतादिसंयोगिनोदहनादेः संयोगेन पर्वताद्यधिकरणत्वापत्तेः ।

एतेन तत्तत्पतनप्रतिबन्धकीभूतसंयोगसंबन्धावच्छिन्नतदधिकरणत्वं अभिन्नस्यापि विशेषणान्तरविशिष्टस्यस्वावच्छिन्नत्वं नाऽप्रामाणिकम् । कारणत्वस्य व्याप्त्यादेश्चाऽवच्छेदकधर्मस्वरूपतापक्षे दण्डत्वधूमत्वाद्यात्मकघटादिकारणत्व-वन्ह्यादिव्याप्तेश्च दण्डत्वधूमत्वाद्यवच्छेद्यत्वस्यावश्योपेयत्वात् । इत्थं च शरीरादिसंयोगिनोपि हारमुकुटादेर्न शरीराद्यधिकरणत्वप्रसंगः, तत्संयोगस्य शरीरादिपतनाऽप्रतिबन्धकत्वात् । न च एकस्मिन्नेवाऽधिकरणे धृतस्याऽप्रसिद्धपतनकस्य घटादेरधिकरणत्वानुपपत्तिः, हारमुकुटादेः संयोगस्य स्वपतनप्रतिबन्धकस्य स्वस्मिन्नप्यबाधितत्वेन स्वस्मिन् स्वाधिकरणत्वापत्तेश्चेति वाच्यम् । तद्भिन्नत्वविशिष्टः तन्निष्ठस्य पतनोत्पत्तिविरहस्य पतनविरहस्य वा प्रयोजकः संयोगः तदधिकरणत्वमित्यस्य विवक्षणीयत्वात् । अप्रसिद्धपतनकोपि वर्तमानस्य पतनोत्पत्त्यभावस्य प्रयोजकस्तदीयसंयोगोभवत्येव, कारणाभावत्वेन प्रतिबन्धकस्य कार्यानुत्पादप्रयोजकत्वावश्यकत्वात् अतो नाऽप्रसंगः। स्वस्मिन् स्वभेदाऽसत्वेन तद्विशिष्टत्वत्वाच्च नाऽप्रसंगः इति निरस्तम् ।

वन्ह्याद्यधिकरणत्वस्य संग्रहानुपपत्तेः । तैजसोदहनादेः पतनकारणीभूतगुरुत्वविरहेण पतनानुत्पत्त्या तन्निष्ठपतनाऽप्रसिद्धेः, पतनाभावादेः प्रसिद्धावपि न संयोगस्तन्निष्ठपतनाभावप्रयोजको, गुरुत्वविरहेणावश्यकेनाऽन्यथासिद्धत्वात्, अन्यथा तत्प्रतियोगिकसंयोगविरहे क्वचित्पतनस्य प्रसंगादिति । पतनप्रतिबन्धकत्वाद्यप्रतिसन्धाने अधिकरणत्वव्यवहारोदयादिति समाधानं तु न युक्तम्। अधिकरणत्वव्यवहारस्य तावानेव विषय इति प्रतिबन्धकत्वाद्यप्रतिसन्धानेऽधिकरणत्वज्ञानानुदयस्यापि समाधातुं शक्यत्वात् ।

आधेयतानिरूपकत्वमधिकरणत्वमस्तु, आधेयता तु अतिरिच्यतामिति तु न युक्तम् । अधिकरणत्वमतिरिच्यतां तन्निरूपकत्वमेवाऽऽधेयत्वमस्तु एकत्र विनिगमकस्य दुर्लभत्वात् । तस्मादधिकरणत्वमाधेयत्वं चोभयमेवातिरिक्तमभ्युपगन्तव्यम् ।

इदं पुनरिहावधेयम् । संबन्धानुयोगित्वमेवास्तु अधिकरणत्वम् सामान्यतः।

विशेषतस्तु तत्प्रतियोगिकतत्संबन्धानुयोगित्वं तत्संबन्धावच्छिन्नतदधिकरणत्वम्। यत्र च येन संबन्धेन यत्प्रकारिका धीः प्रामाणिकी, तत्रैव तदीयतत्संबन्धानुयोगित्वमंगीक्रियते। पर्वते वन्हिः, घटे रूपमित्यादिप्रत्ययस्तु संयोगसमवायादिप्रतियोगित्वमेव संसर्गविधयाऽवगाहते, न तु संयोगसमवायादिक। न च समवायस्यैकत्वेपक्षे वाय्वादौ रूपाधधिकरणत्वापत्तिरिति वाच्यम्। तत्प्रतियोगिकत्वविशिष्ट "संसर्ग" निरूपितानुयोगितायाश्च वाय्वादावनुपगमेनाऽतिप्रसंग विरहात्।

एवमाधेयत्वमपि सामान्यत संसर्गप्रतियोगित्वमेव। विशेषतस्तु तत्संबन्ध प्रतियोगित्वं तत्संबन्धावच्छिन्नाधेयत्वम् तेन न रूपादौ वाय्वादिनिरूपिताधेयत्वाप्रसक्तिः।

तदिदमधिकरणत्वमाधेयभेदाद्भिन्नम्, तदनुयोगितारूपत्वेपि दर्शितविशिष्टनिरूपितायास्तस्या निरूपकभेदादेव भेद आवश्यकः। एकमेव चेदधिकरणत्वं सर्वाधेयनिरूपितं स्यात्सर्वेषां सर्वाधारताप्रसंगोदुर्वारः स्यात्। न चाऽनुगतप्रत्ययानुपपत्तिः स्यादिति वाच्यम्। अधिकरणतात्वात्मकाऽखण्डधर्मान्तरस्योपगमेनाऽनुगतप्रतीतेरपि निर्वाहात्।

निरूपकतावच्छेदकभेदस्याधिकरणताभेदकत्वादेकधर्मावच्छिन्ननिरूपितमधिकरणत्वमेकमेवेत्यपि शक्यं समाधातुम्। गुणत्वेन गन्धस्याधिकरणं जलमित्यादि प्रत्ययप्रामाण्यापत्ते। निरूपकताव्यक्तिभेदोपगमेपि तद्गतानुगतरूपावच्छिन्नस्याऽनतिप्रसक्तत्वम्, दण्डत्वादौ घटादिपूर्ववर्त्तित्वादीनामिव सुवचम्।

इत्यधिकरणत्वाधेयत्वे।

## उपसंहारः

अत्युत्तमोयं ग्रन्थः, न्यायवैशेषिशास्त्रप्रविविक्षूणां महान्तमुपकारमावहति, परन्तु अतिगभीरत्वादेतदाविष्करिणी "विलासिनी" व्याख्यामहमारचितवान्।

व्याख्यया चाऽनया छात्रोपकारमेव विशेषतः समीहमानेन मया हिन्दीभाषयापि सङ्ग्रथितोयं ग्रन्थः। बहुत्र ग्रन्थमन्दर्भोविवृतश्चस्वोयैर्वाक्यैः।

एवं कृतेपि परिश्रमे पुरुषमात्रसाधारणा भ्रमप्रमादादिदोषा अत्राऽवश्यं भवेयु रेव तथापि येऽत्रगुणलवास्ते गुरूणां, ये च दोषास्ते मदीयाः इति गुणैकपक्षपातिनोविपश्चितः क्षाम्यन्तु ममापराधं, निवेदयन्तु च मह्यमत्रत्यान् दोषविशेषान् येनाहमुद्यतः स्या द्वितीयावृत्तौ तन्निराकरणायेति भूयोभूयःप्रार्थये पण्डितप्रवरानिति शम्।

गणेशचतुर्थी
सं० २०१६
विद्याभवनम्

विदुषामनुविधेयः
श्री ज्वालाप्रसादो गौड़ः

# महर्षि गौतम

न्यायदर्शन के इतिहास से सम्बन्धित विकाश की दो धाराएँ प्रधानरूप से दृष्टिगोचर होती आ रही हैं। जिनमें सर्वप्रथम धारा के जन्मदाता महर्षि गौतम हैं। इन महर्षि गौतम ने प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-छल-जाति-निग्रहस्थान—ये १६ पदार्थ स्वीकार किये हैं।

इन्हीं महर्षि गौतम का दूसरा नाम अक्षपाद या अक्षचरण भी है। इनके अक्षपाद या अक्षचरण इस नामकरण के विषय में ऐसी किंवदन्ती है कि ये रात दिन शास्त्रीय विचार में संलग्न होने के नाते कभी इधर ठोकर खाकर गिरते थे तो कभी इधर गिर जाते थे, इस प्रकार इनका समस्त शरीर पतनजन्य आघातों से हमेशा ओत-प्रोत रहा करता था। एक बार विचार चातुरी चमत्कृत चेता होने के नाते महर्षि अकस्मात् कूएँ में जा गिरे, कुएँ में गिरा हुआ देख किसी देव विशेष ने अपने वरप्रदान से पैरों में इन्हें अक्षिप्रदान कर अक्षपाद अथवा अक्षचरण बना दिया। जो कि कालान्तर में इनका दूसरा नामकरण सम्पन्न हुआ।

कोई लोग गौतम और अक्षपाद को अलग-अलग दो व्यक्ति मानते हैं। उनका कथन है कि आन्वीक्षिकी के जन्मदाता महर्षि गौतम हैं, और न्यायसूत्रों की रचना करने वाले अक्षपाद या अक्षचरण हैं। परन्तु यह उनका कहना सर्वथा अप्रमाण एवं निराधार है। कारण कि दो नामों के आधार पर दो व्यक्तियों का निर्धारण कदापि नहीं हो सकता है। क्योंकि प्रायः अधिकांश में एक व्यक्ति के दो नाम तो हमेशा से ही पाये जाते हैं। जैसे भाष्यकार वात्स्यायन का "वात्स्यायन" यह एक नाम तो है ही है, परन्तु इसके अतिरिक्त कहीं पक्षिलस्वामी, कहीं पक्षिलमुनि आदि नाम भी श्रवण गोचर एवं दृष्टिगोचर होते हैं।

दूसरी बात यह है कि न्यायसूत्रों का नाम ही तो आन्वीक्षिकी है। कारण कि न्याय-सूत्रों के आधार पर भाष्य आदि के रूप में खड़ा किया हुआ न्याय का वह विशदरूप ही न्यायशास्त्र-न्यायसम्प्रदाय एवं आन्वीक्षिकी आदि शब्दों से व्यवहृत होता है। इसके अतिरिक्त कही जानेवाली आन्वीक्षिकी आकाश पुष्प-गन्धर्व नगर आदि के समान सर्वथा अलीक है। अतः इस प्रकार के भ्रान्त्यवच्छिन्न विषय का दिमाग से दूरीकरण नितान्त परमावश्यक है।

तीसरी बात यह भी है कि हमारे भाष्यकार श्रीवात्स्यायन ने सर्वत्र अपने भाष्य में न्यायविद्या ( न्यायशास्त्र ) का ही आन्वीक्षिकी शब्द से उल्लेख किया है। जैसे कि प्रत्यक्षा-गमाभ्यामीक्षितस्य अन्वीक्षणमन्वीक्षा तथा प्रवर्त्तते इत्यान्वीक्षिकी-न्यायविद्या-न्यायशास्त्रम् इत्यादि। एवं "इमास्तु चतस्रोविद्याः पृथक्प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते यासां चतुर्थीयमान्वीक्षिकी न्यायविद्या" इत्यादि।

इन महर्षि गौतम के द्वारा विनिर्मित यह न्यायशास्त्र समस्त व्याकरण आदि शास्त्रों एवं समस्त दर्शनों में श्रेष्ठ इसलिये माना गया है कि यह इतरशास्त्रों को अपनी अपेक्षा प्रदान करता हुआ उन्हें अपनी उपयोगिता भी प्रदान करता है। स्वनामधन्य पूज्य गुरुजी

० शिवदत्त मिश्रजी जो कि वास्तविक में प्रकृतया नैयायिक हैं, न्यायशास्त्र की चर्चा चलने पर कहा करते हैं कि देखो यदि सूक्ष्म दृष्टि से विचार किया जाय तो न्यायशास्त्र के बिना "यस्य ज्ञानदयासिन्धोः" इस अमरकोश की प्रथमपंक्ति का भी अर्थ कोई नहीं कर सकता है। कारण कि वहाँ पर यह प्रश्न हो जाता है कि "यत्" पदार्थ क्या है? एवं तदुत्तर षष्ठी का क्या अर्थ है। न्यायशास्त्रानभिज्ञव्यक्ति त्रिकाल में भी इस प्रकार के प्रश्नों का उत्तर नहीं दे सकता है। उनका कहने का तात्पर्य इसी अर्थ में रहता है कि पदार्थों के विषयों में सूक्ष्म विचार एकमात्र न्यायशास्त्र के आधार पर ही हो सकता है।

इसके अतिरिक्त श्रुति-स्मृति-पुराण आदि में भी न्यायशास्त्र की सर्वश्रेष्ठता का प्रतिपादन किया गया है। जैसे—"न्यायो मीमांसा धर्मशास्त्राणि" यह श्रुति सर्वप्रथम न्यायशास्त्र का उल्लेख करती हुई उसी के प्राधान्य का वर्णन करती है। तथा "पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥" इस स्मृति के आधार पर महर्षि याज्ञवल्क्य ने, एवं "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः" इस स्मृति के आधार पर भगवान् मनु ने भी न्यायशास्त्र को साक्षात् अङ्गी बतलाते हुये उसका महत्त्व वर्णित किया। इसी प्रकार पुराण आदि में भी "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश" इत्यादि रूप से न्यायशास्त्र को किसी का अङ्ग न बतलाते हुये साक्षात् अङ्गित्व का वर्णन किया है।

इसके अतिरिक्त तर्कशास्त्रपदाभिधेय इस न्याशास्त्र की धर्मज्ञान के लिये भी उपयोगिता का निरूपण भगवान् मनु ने किया है। जैसे—"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः"।

इतना ही नहीं न्यायशास्त्र का महत्त्व इतना ऊँचा है कि जिसे जाने बिना मनुष्य सामने रक्खी हुयी घट-पट आदि वस्तु को भी यह घट है, यह पट है, यह सिद्ध नहीं कर सकता है। कारण कि कोई भी जगदन्तर्गत वस्तु क्यों न हो उसका साधन करनेवाले प्रमाण एवं लक्षण का निर्वचन जब तक कि नहीं किया जायगा तब तक पुरोवर्त्ती वस्तु "अमुक" है, यह कहना सर्वथा अशक्य हो जायेगा। क्योंकि प्रमाण के आधार पर ही मनुष्य की इष्टानिष्ट वस्तु के विषय में प्रवृत्ति-निवृत्ति देखने में आती है। जैसे कि कहा भी है—"प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम्" इस प्रकार प्रमाण के आधार पर ही वस्तु के स्वरूप का निर्वचन करने के पश्चात् मनुष्य तादृश वस्तु विषयकज्ञान कर पाता है। सो वही आधारभूत प्रमाण न्यायशास्त्र है। प्रमाणशास्त्र-तर्कशास्त्र-न्यायशास्त्र-पदार्थशास्त्र-आन्वीक्षिकीशास्त्र-लक्षणशास्त्र ये सब पर्याय वाचक शब्द माने गये हैं। इसीलिये नैयायिकों को "प्रमाण पटु" कहा गया है। और इस न्यायशास्त्र के साक्षात् जन्मदाता महर्षि गौतम ही हैं। महर्षि गौतम के द्वारा जन्म पाये हुये इस न्यायशास्त्र का भाष्यकार महर्षि वात्स्यायन ने भी "प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्। आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्त्तिता" इत्यादि रूप से महत्त्व गाया है। इतना ही नहीं "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इस एक पन्द्रह अक्षरों वाले सूत्र के आधार पर अपनी बुद्धि के कलाकौशल से एक बहुत बड़े निबन्ध स्वरूप चिन्तामणि ग्रन्थ को लिखने वाले गङ्गेशोपाध्याय ने भी इस न्यायशास्त्र

के महत्व का स्पष्ट रूप से बड़े व्यायामशीलशब्दों में उत्कीर्तन किया है कि—"अथ जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय" इत्यादि। ईश्वरकृष्ण ने भी प्रमाणशास्त्रापरपर्यायभूतन्यायशास्त्र के महत्व को "प्रमेयसिद्धिः प्रमाणाद्धि" इस सूत्र के आधार पर प्रमेयभूतपदार्थों की सिद्धि में अत्यन्त ही उपयोगितावच्छेदक बतलाया है।

## देशनिर्णय

महर्षि गौतम का जन्म स्थान जीवन्मुक्त महाराजजनक से पवित्रीकृत मिथिलानगरी ही बतलायी जाती है। मेरे एक मित्र रांचीस्थ राजकीय संस्कृत महाविद्यालयाध्यापक मैथिल विद्वान् ने मुझे बतलाया कि हमारे यहाँ अर्थात् मिथिला में अभी भी वह महर्षि गौतम का स्थान एक टीले के रूप में मौजूद है, और उसे लोग गौतम आश्रम के नाम से पुकारते हैं, वहीं पर महर्षि तपस्या किया करते थे। वर्त्तमान काल में भी उस स्थान के दर्शन करने के लिये दर्शनार्थी एवं ऐतिहासिक विद्वान् लोग प्रायः वहाँ जाते ही रहते हैं। और इस समय तो वहाँ वसति विशेष होने के कारण वह आश्रम एक गौतम स्थान नामक गाँव के रूप में परिणत हो गया है।

## महर्षि का कालानुमान

न्यायशास्त्र के जन्मदाता श्री महर्षि गौतम के काल का निर्धारण सावधारणरूप से करना तो अत्यन्त ही कठिन बात होगी—परन्तु जहाँ तक भी उनकी सत्ता सम्बन्धी कालविषयक प्रश्न है वहाँ तक हमारा अनुमान ऐसा है कि न्यायसूत्रों के अन्दर नागार्जुन के शून्यवाद का निरास किया गया है, इससे इनके समय के विषय में ऐसा अनुमान होता है कि जब दक्षिण भारत के निवासी ब्राह्मणवंशावतंस श्री नागार्जुन का अस्तित्वकाल दूसरी शताब्दी का प्रारंभकाल है तो उसके पश्चात् ही न्यायसूत्रों का प्रणयन महर्षि ने किया। इससे स्पष्ट है कि तीसरी शताब्दी के अन्दर ही अन्दर महर्षि ने न्यायसूत्रों का प्रणयन किया होगा। इसलिये इस आनुमानिक विचारधारा के आधार पर न्यायसूत्रों का प्रणयनकाल तीसरी शताब्दी ही निर्विवाद प्रतीत होती है।

और स्वयं महर्षि गौतम के अस्तित्व एवं स्थितिकाल के विषय में जहाँ तक हमें अनुमानतः मालूम पड़ा ईशा के २५०० ( अढ़ाई हजार ) वर्ष पूर्व के हैं। और हम समझते हैं कि हमारा यह अनुमान पौर्वापर्य क्रम के आधार पर सर्वथा अव्यभिचारी है। अब रहा उनका जन्म तथा मरण के विषय में प्रश्न। सो उसके विषय में निश्चितरूप से कुछ कहना अनुभवविरुद्ध तथा निराधार प्रतीत होता है। हो सकता है महर्षि शास्त्रचिन्तन के पश्चात् अब ईश्वर चिन्तन ही कहीं कन्दरा में बैठे हुवे समाधिस्थ होकर कर रहे हों। जैसा कि शिवराज विजय आदि में महर्षियों के विषय में चिरस्थायित्व का उल्लेख श्रुतिगोचर होता है।

## भाष्यकार वात्स्यायन

न्याय भाष्यकार भगवान् वात्स्यायन किस देश में किस समय उत्पन्न हुवे यह निश्चय करना तो अत्यन्त कठिन है कारण कि जिसके नाम में ही मतभेद है। भगवान् भाष्यकार का

त्वादिति। अनुपस्थितोपस्थितिकल्पने गौरवात् अन्यथा गंगास्नानस्येव कषायपान-स्यापि अदृष्टफलकत्वापत्तेरिति भावः। तथा च मंगलानुष्ठानावच्छेदकशरीरभिन्नशरीरावच्छिन्नभोगविषयफल(स्वर्ग)साधनत्वविधेयकानुमितेरप्रामाण्यप्रकारकज्ञानविषयत्वादिति यावत्। ननु मंगलविशेष्यकनिरुक्तदृष्टफलकत्वप्रकारकसंभावनायां समाप्ति-विघ्नध्वंसातिरिक्तदृष्टफलविषयकैवानुमितिर्भवतु इत्यत आह उपस्थितत्वाच्चेति। ग्रन्थादौ मंगलकर्तुर्मंगलानुष्ठानसमये ग्रन्थसमाप्ति-तत्प्रतिबन्धकविघ्नध्वंसयोरेवेच्छाविषयत्वेन स्मृतिविषयत्वादित्यर्थः। इतरेषां फलानामनुपस्थितत्वादिति यावत्।

केचित्तु उपस्थितत्वादित्यस्य आरब्धकर्माङ्गतयोपस्थितत्वादित्यर्थः। तथा च यद्यदारब्धकर्माङ्गं तत्तदारब्धकर्मफलफलकं यथा प्रयाजादि। ननु मंगलस्याऽऽरब्ध-कर्माङ्गत्वे मानाभाव इति चेत्। मंगलं आरब्धकर्माङ्गं तत्फलार्थितयाऽभ्रान्तैस्तत्पूर्व-मनुष्ठीयमानत्वात्प्रयाजवदित्यनुमानस्य प्रमाणत्वादिति प्राहुः।

तथा च संभवति दृष्टफलकत्वे इत्याद्युपस्थितत्वाच्चेत्यन्तफक्किकया बलवदनिष्टान-नुबन्धीष्टसाधनत्वव्याप्याऽविगीतशिष्टाचारविषयत्ववन्मंगलमिति परामर्शात् निर्विघ्न-परिसमाप्तीतरफलसाधनत्वाभाववन्मंगलमितीतरबाधसहकृतात्, निर्विघ्नपरिसमाप्ती-तरफलसाधनत्वाभावविशिष्टबलवदनिष्टाननुबन्धीष्टसाधनत्वव्याप्याऽविगीतशिष्टाचार-विषयत्ववन्मंगलमिति परामर्शाद्वा मंगलं समाप्तिसाधनमिति परिशेषानुमितिर्जायते। यथा पर्वते पर्वतीयवन्हीतरवह्निर्नास्तीति बाधसत्वे पर्वतीयवह्नीतरवह्न्यभावविशिष्टवह्नि-व्याप्यधूमवांश्चायमिति परामर्शेण पर्वतीयवह्निमानित्याकारिका पर्वतो वह्निमानित्या-कारिका वह्नित्वावच्छिन्नपर्वतीयवह्निविधेयकानुमितिर्भवति, तथा बलवदनिष्टाननु-बन्धीष्टसाधनत्वव्याप्याऽविगीतशिष्टाचारविषयत्ववन्मंगलमिति परामर्शेण मंगलं बलवदनिष्टाननुबन्धीष्टसाधनमित्याकारिका बलवदनिष्टाननुबन्धीष्टसाधनत्वत्वावच्छि-न्नसमाप्तिविधेयकानुमितिः। "इतरबाधबलाद् व्यापकतानवच्छेदकप्रकारेणाऽनुमिति-स्वीकारे तु" मंगलं समाप्तिसाधनमित्याकारिका वाऽनुमितिरुत्पद्यते इत्याह समाप्तिरेव हि फलं कल्प्यते इति। "समाप्तिविघ्नध्वंसान्यतरत्" फलं-मंगलजन्यं कल्प्यते-अनुमीयते-परिशेषानुमितिविषयीक्रियते इत्यर्थः। तथा च समाप्तिविघ्नध्वं-सान्यतरस्य मंगलजन्यत्वलाभे मंगले तुल्यवित्तिवेद्यतया समाप्तिविघ्नध्वंसान्यतरसाध-नत्वमनुमीयते इति फलितोर्थः। समाप्तिरेवेत्येवकारेण पशुपुत्रादीनां दृष्टानाम्-अदृष्टस्य च स्वर्गादेर्व्यावृत्तिः। तथा च परिशेषानुमानान्मंगले समाप्तिजनकत्वसिद्धिरिति निष्कर्षः। इदमुपलक्षणम्— मंगलस्य समाप्तिजनकत्वे शिष्टाचारानुमितश्रुतिरपि प्रमाणम्। तादृशश्रुतेः सर्वज्ञभाष्यकारप्रभृतिभिः उच्चरितानुपूर्वीविशेषनिर्णयादेव बोध-कतासंभवात्, अत एव "न च तस्य निष्फलत्वे" इत्यग्रिममुक्तावलीग्रन्थोऽपि संगच्छते।

अत्रेदं बोध्यम्—"तत्र च फलजिज्ञासायां"मित्यस्य सफलत्वानुमितिसह-कारीभूतपक्षताघटकतया नोपादानम्, मंगलं सफलमिति सिद्धेर्मंगले समाप्तिफल-

कमित्याकारानुमिताबप्रतिबन्धकतया सफलत्वविधेयकमंगलोद्देश्यकानुमितिकालेऽपि विनैव सिषाधयिषां समाप्तिफलकत्वविधेयकानुमित्युत्पत्तौ बाधकाभावात्। समानकालिकसिद्धेः समानाकारानुमितिं प्रति विरोधित्वात्। तर्हि किमर्थं तदुपादानमिति चेत्। मंगलं निष्फलमित्याशंकायाः, मंगले सफलमित्यनुमानेन निरासेपि तावता मंगले प्रवृत्तिनिर्वाहो न संभवतीति प्रवृत्तिनिर्वाहकं किं फलविशेषसाधनं मंगलमित्येवंविधवादिजिज्ञासायाः समाप्तिफलानुमानोपयोगितयाऽनुपयुक्तत्वाभावादिति।

अथ समाप्तिश्चरमवर्णध्वंसरूपा-न तु चरमवर्णरूपा, तथा सति चरमवर्णस्य तृतीयक्षणे नाशेन ततो ग्रन्थः समाप्त इति व्यवहारानुपपत्तेः। वर्णे चरमत्वं च-स्वघटितग्रन्थघटकवर्णप्रागभावाऽसमानकालीनत्वम्। तथा च ध्वंसप्रागभावयोः स्वप्रतियोगिसमवायिदेशवृत्तित्वनियमेन समाप्तिराकाशनिष्ठा- मंगलं ज्ञानरूपमात्मसमवेतम् इति समाप्तिमंगलयोरेकाधिकरणवृत्तित्वविरहात्कथं समाप्तिं प्रति मंगलं कारणम्, ययोः सामानाधिकरण्यं तयोरेव कार्यकारणभावात्, तथाहि-मंगलं कारणं कारणं हि कार्याधिकरणे नियतपूर्ववृत्ति, अत्र हि समाप्त्यधिकरणे आकाशे मंगलं ज्ञानात्मकं नैव वर्त्तते इति चेत्। सत्यम्। स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसंबन्धेन समाप्तिं प्रति समवायेन मंगलं कारणमिति विवक्षणात्। स्वपदं चरमवर्णध्वंसपरम्। तथा हि ग्रन्थकर्त्तरि पुरुषे स्वप्रतियोगिचरमवर्णानुकूलकृतिर्वर्त्तते। तत्र समवायेन मंगलं वर्त्तते इति चरमवर्णध्वंसरूपसमाप्तेः स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसंबन्धेनाधिकरणे आत्मनि मंगलं समवायेन वर्त्तते इति समाप्तिमंगलयोर्वैयधिकरण्याभावात्कारणकार्यभाव इति ध्येयम्।

एवमनुमानेन सफलत्वस्य समाप्तिफलकत्वस्य च सिद्धावपि स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसंबन्धेन समाप्त्यधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकमंगलत्वाश्रयत्वे सति समाप्तिं प्रति अनन्यथासिद्धं मंगलमित्याकारककारणताग्रहे निरुक्तसम्बन्धेन समाप्त्यधिकरणवृत्त्यभावप्रतियोगितावच्छेदकं मंगलमित्याकारकव्यतिरेकव्यभिचारज्ञानस्य तदभाववत्ताज्ञानस्य तद्वत्तानिश्चयविधया प्रतिबन्धकतया तन्निरासः

इत्थं च यत्र मंगलं न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते। यत्र सत्यपि मंगले समाप्तिर्न दृश्यते, तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यम्। प्रचुरस्यास्यैव बलवत्तरविघ्ननिवारणे कारणत्वं बोध्यम्। विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः।

यह प्राचीन ने] कहा। (प्राचीनमत में नास्तिक प्रदत्त व्यतिरेक व्यभिचार का वारण आस्तिक करता है, "इत्थञ्च" इत्यादि ग्रन्थ से कि इस प्रकार जहां (किरणावली आदि नास्तिक ग्रन्थों में) मंगल नहीं देखते हैं वहां पर हम जन्मान्तरीय मंगल का अनुमान करते हैं कि नास्तिक पूर्वजन्म में पूर्ण आस्तिक था जिसके नाते इसने बहुत ही ईश्वरनमस्कारात्मक

मंगल किया था, मृत्युकाल में किसी कर्मवैगुण्य के नाते वह नास्तिक होगया—परन्तु जन्मान्तरीय आस्तिकताप्रयुक्त किये हुवे मंगल का फल (समाप्ति) उसे अवश्य प्राप्त होगया। अन्वयव्यभिचार का वारण करते हैं "यत्र च सत्यपि" इससे, जहां (कादम्बरी में) मंगल के होने पर भी समाप्ति नहीं देखते हैं वहां या तो वलवान् विघ्न है या विघ्न अधिक हैं, अतः समाप्ति नहीं होसकी। अतः प्रचुर (अधिक संख्या वाला) यह मंगल ही वलवत्तर विघ्न के निवारण में कारण हो सकता है। विघ्नध्वंस मंगल का द्वार (व्यापार) है। ऐसा प्राचीन कहते हैं। अर्थात् मंगल से जो समाप्ति होती है वह विघ्नध्वंसद्वारा। (इससे यह सिद्ध हुआ कि प्राचीनमत में मंगल का फल समाप्ती है)।

कथं संभवतीत्याशंक्याह इत्थं चेति। मंगलस्य समाप्तिसाधनत्वसिद्धौ चेत्यर्थः। यत्र नास्तिकग्रन्थे। समाप्तिरूपकार्यदर्शनेन मंगलकारणस्याऽनुमातुं शक्यतया निरुक्त-संबन्धेन समाप्त्यधिकरणे नास्तिकात्मनि मंगलस्यैव सत्त्वेन समाप्त्यधिकरणवृत्त्य-भावप्रतियोगितावच्छेदकं मंगलत्वमिति व्यभिचारज्ञानाऽसम्भव इति भावः। नन्वत्र जन्मान्तरीयमंगलकल्पनमयुक्तं, समाप्तिरूपकार्येण मंगलमात्रस्यैवानुमातुं शक्यत्वात्, न तु जन्मान्तरीयस्येति चेन्न। समाप्त्या मंगलमेवानुमीयते, अनुमितिश्च नास्तिकः मंगलवान् समाप्तिमत्त्वादित्याकारिका, तत्रैहिकवाधे जन्मान्तरीयं तदर्थात्कल्प्यते इति ध्येयम्। न चैहिकफलार्थस्य कर्मणोऽनुष्ठाने फलादर्शनेन वैगुण्यकल्पनमेव युक्तं, न तु जन्मान्तरीयफलकल्पनमिति वाच्यम्। वृष्टिकामनया कारीरीष्ट्यादौ तथा कल्पनेऽपि पुत्रकामनया पुत्रेष्ट्यादौ जन्मान्तरीयपुत्रस्यापि फलत्वस्य न्यायसिद्धतया प्रकृतेऽपि जन्मान्तरीयसमाप्तेः फलत्वसंभवात्। नचाद्यैव वृष्टिर्भूयादिति कामनया कारीर्यनुष्ठानवत्, आरीप्सितं कर्म समाप्यतामिति कामनया मंगलानुष्ठानदर्शनादत्र फलादर्शने ऽमुत्रफलकल्पनापेक्षया वैगुण्यकल्पनमेव युक्तमिति वाच्यम्। इष्टेर्वह्वङ्गकलापयुक्ततया विशिष्टकर्त्तृकतया च तत्तदङ्गकर्त्तृवैगुण्यसंभवेपि नमस्कारमात्रादिरूपमंगलस्य वर्णाश्रमविशेषानादरेण पुरुषमात्रस्यैव तत्र कर्त्तृतया कर्त्तृवैगुण्यासंभवात्, ईश्वरादिविशेष्यकस्वापेक्षोत्कर्षप्रकारकज्ञानादिरूपतया तत्राङ्गकलापाभावाच्च वैगुण्यकल्पनाऽसंभवेन फलकल्पनस्यैव युक्तत्वात्।

ननु कार्यात् कारणस्यानुमेयतया नास्तिकग्रन्थे समाप्तिरूपकार्यदर्शनेन तत्कारणेऽनुमातव्ये जन्मान्तरानुष्ठितसुवर्णदानादिजन्यविघ्नध्वंसस्य विघ्नात्यन्ता-भावस्य वा कारणस्यानुमानेन जन्मान्तरीयमंगलकल्पनमयुक्तमेवेति चेत्। सत्यम्। तस्य दृष्टकामनानुरोधेन जन्मान्तरे सत्त्वेन समाप्तिं प्रति कारणीभूतविघ्नध्वंसाभा-वप्रदर्शनेन स्वेतरप्रतिवन्धकाभावरूपविघ्नध्वंसात्मककारणसमवहितस्य स्वाव्यवहि-तोत्तरक्षणावच्छेदेन समाप्त्यभावकमंगलस्यैवाऽन्वयव्यभिचाररूपतया मंगलाधिक-रणे "जन्मान्तरे" विघ्नध्वंसाभावेन विघ्नध्वंससहितस्वाधिकरणवृत्तिसमाप्त्यभाव-स्वरूपान्वयव्यभिचारो नास्तीति प्रदर्शितमिति कुतोऽन्यथासिद्धिरिति भावः।

न च सिद्धे जन्मान्तरीये मंगले व्यभिचाराभावज्ञानेन कार्यकारणभावग्रहः,

गृहीते च कार्यकारणभावे समाप्त्या तदनुमानमित्यन्योन्याश्रय इति वाच्यम्। समाप्तिकार्यत्वेन परिशेषात् मंगलानुमाने बाधकाभावादिति।

ननूक्तरीत्या कारणताघटकसमाप्त्यधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकं मंगलमित्याकारकव्यापकताज्ञानविरोधिज्ञानविषयीभूतसमाप्त्यधिकरणवृत्त्यभावप्रतियोगितावच्छेदकमंगलत्वरूपव्यतिरेकव्यभिचारस्य निरासेऽपि समाप्तिं प्रति अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्नत्वरूपाऽन्यथासिद्धत्वज्ञानप्रयोजकस्वाव्यवहितोत्तरक्षणावच्छिन्नस्वाधिकरणवृत्तिसमाप्त्यभावकमंगलरूपाऽन्वयव्यभिचारो दुष्परिहर इत्यत आह **यत्र चेति**। कादम्बर्यादौ चेत्यर्थः। सत्यपि मंगले समाप्तिर्न दृश्यते इत्यनेन स्वाव्यवहितोत्तरक्षणावच्छेदेन स्वाधिकरणवृत्तिसमाप्त्यभाववत्वरूपान्वयव्यभिचारप्रदर्शनेन समाप्तिं प्रति अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्नत्वरूपान्यथासिद्धिरुद्घाटिता। **बलवत्तर** इति। बलवत्तरत्वं च विघ्नत्वव्याप्यजातिविशेषः। तदाश्रयप्रतियोगिकनाशत्वं जन्यतावच्छेदकं बलवत्तरत्वरूपवैजात्यकल्पने गौरवादाह **विघ्नप्राचुर्यं वेति**। प्राचुर्यमनेकत्वम्। **तत्र च बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्य**मित्यनेन समाप्तिप्रतिबन्धकस्यैव तत्र सत्त्वेन समाप्तिकारणीभूतविघ्नध्वंसाभावप्रदर्शनेन स्वेतरप्रतिबन्धकाभावरूपविघ्नध्वंसात्मककारणसमवहितस्य स्वाव्यवहितोत्तरक्षणावच्छेदेन समाप्त्यभावकमंगलस्यैवान्वयव्यभिचाररूपतया मंगलाधिकरणे विघ्नध्वंसाभावेन विघ्नध्वंससहितस्वाधिकरणवृत्तिसमाप्त्यभाववत्त्वरूपान्वयव्यभिचारो नास्तीति प्रदर्शितमिति कुतोऽन्यथासिद्धिरिति भावः। ननु नाशकसत्त्वेन नाशापत्तिरत आह **प्रचुरस्यैवेति**। विघ्नाऽन्यूनसंख्याकमंगलत्वेनैवेत्यर्थः। **अस्य** मंगलस्य। **बलवत्तरविघ्ननिवारणे** बलवत्तरादिविघ्ननिवारणे। आदिना प्रचुरविघ्ननिवारणपरिग्रहः। तथा च प्रचुरविघ्ननाशं प्रति विघ्नान्यूनसंख्याकमंगलत्वेनैव कारणतया प्रचुरमंगलाभावात्प्रकृते न विघ्ननाश इति भावः। इदमुपलक्षणम्। पूर्वोत्पन्नविघ्नानां तेन नाशेऽपि तदुत्तरविघ्नानां नाशकाभावेन न समाप्तिरित्यपि बोध्यम्।

अत्रेदं बोध्यम्। यत्र मंगलसत्त्वेऽपि समाप्तिर्न दृश्यते तत्र विघ्नध्वंसो नोत्पन्न इति न बुद्धिप्रतिभादिरूपकारणान्तराभावात् मंगलानन्तरोत्पन्नविघ्नाद् बलवत्तरविघ्नाद्वा समाप्त्यभावः संभवति तस्मात्कुतोऽन्वयव्यभिचारः। न चैव मंगलस्य मंगलजन्यविघ्नध्वंसस्य च सत्त्वेऽपि समाप्त्यनुत्पत्तौ सहकारीभूतविघ्नध्वंससहितस्वाधिकरणवृत्तिसमाप्त्यभावकत्वरूपाऽन्वयव्यभिचार एव भवता दृढीकृत इति वाच्यम्। स्वस्वव्यापारीभूतविघ्नध्वंसेतरयावत्कारणसमवहितस्वाधिकरणवृत्तिसमाप्त्यभावकत्वस्येहान्वयव्यभिचारपदार्थतया मंगलतद्व्यापारीभूतविघ्नध्वंसयोः सत्त्वेऽपि बुद्धिप्रतिभादिकारणान्तराभावेन मंगलाऽनाश्यप्रबलप्रतिबन्धकध्वंसाभावरूपकारणाभावेन च स्व-स्वव्यापारेतरयावत्कारणसमवहितस्वाधिकरणवृत्तिसमाप्त्यभावकत्वरूपान्वयव्यभिचारो नास्तीति कुतोऽन्यथासिद्धिशंकेति। बलवत्तरो विघ्नो विघ्नप्राचुर्यं वेत्यत्र मंगलानन्तरोत्पन्न इति पूरणीयम्।

न चैवमवश्यक्लृप्तनियतपूर्ववृत्तिविघ्नसंसर्गाभावेनैव समाप्तिसंभवे तत्सहभूतमंगलस्याऽन्यथासिद्धत्वमिति वाच्यम्। कारीरीष्टिपुत्रकामेष्ट्यादेरवग्रहरूपदुरितविशेषपुत्रप्रतिबन्धकदुरितविशेषनिवृत्तिद्वारा हेतुत्वेप्यन्यथासिद्ध्यभाववत्, मंगलस्यापि विघ्ननिवृत्तिद्वारा हेतुत्वेप्यन्यथासिद्ध्यभावस्य वक्तुं शक्यत्वात्।

न च वृष्टिकामो यजेत पुत्रकामो यजेत इत्यादिश्रुत्या वृष्टिकामेष्टिपुत्रकामेष्ट्योः कारणत्वेन श्रुतिसिद्धत्वाद्दुरितविशेषसंसर्गाभावेनान्यथासिद्धेराशंकितुमशक्यत्वेऽपि मंगलस्यानुमानप्रमाणेन कारणतया सिद्धस्य विघ्नसंसर्गाभावेनाऽन्यथासिद्धिः संभवत्येवेति वाच्यम्। अत्रापि शिष्टाचारानुमितस्मृत्यादिना समाप्तिसाधनत्वस्य सिद्धत्वेन विघ्नध्वंसत्वादिनाऽन्यथासिद्धेराशंकितुमशक्यत्वादिति ध्येयम्।

ननु कादम्बर्यादौ विघ्नध्वंसो मा जायतां समाप्तिः परं जायतां मंगलरूपहेतोः सत्त्वादित्याशंक्याह विघ्नध्वंसस्त्विति। विघ्नध्वंस एवं व्यापार इत्यर्थः। तथा च स्वजन्यविघ्नध्वंससंबन्धेन मंगलाभावान्न समाप्तिरिति भावः। तज्जन्यत्वे सति तज्जन्यजनकत्वं हि व्यापारः। प्रकृते च विघ्नध्वंसे मंगलजन्यत्वमपि मंगलजन्यसमाप्तिजनकत्वमपीति समन्वयः।

अत्रेदं बोध्यम्। विघ्नध्वंसस्य समाप्तिं प्रति प्रतिबन्धकाभावविधया कारणत्वेन सिद्धस्य मंगलफलत्वकल्पने तस्यैव द्वारत्वमुचितं, न तु मंगलध्वंसस्य। न च विघ्नध्वंसस्य समाप्तिं प्रति कारणत्वेन क्लृप्तत्वेऽपि मंगलजन्यत्वस्य कल्पनीयतया मंगलध्वंसस्य च समाप्तिं प्रति कारणत्वस्य कल्पनीयत्वेपि मंगलजन्यत्वस्य क्लृप्तत्वात् तयोर्व्यापारत्वे विनिगमनाविरह इति वाच्यम्। मंगलनाशस्य द्वारत्वे समाप्तिं प्रति कारणीभूताभावप्रतियोगित्वेन मंगलस्य विघ्नवत्प्रतिबन्धकत्वापत्तेः। न च कारणीभूतात्यन्ताभावप्रतियोगित्वं प्रतिबन्धकत्वमिति वाच्यम्। विघ्नस्यापि समाप्तिकारणीभूतध्वंसप्रतियोगित्वेन प्रतिबन्धकत्वानापत्तेः। प्रतिबन्धकसंसर्गाभावस्य कार्यमात्रे कारणत्वकल्पनानुपपत्तेश्च। अथाऽपूर्वमेव व्यापारोस्तु इति चेन्न। सिद्धस्य विघ्नध्वंसस्य द्वारत्वकल्पनायां लाघवात्, निर्विघ्नं समाप्यतामितीच्छाविषयाऽसिद्धेश्च प्रतिबन्धकाभावहेतुतया तद्धेतुत्वस्य तवाप्यावश्यकत्वेन तत्रैव द्वारत्वकल्पनायां लाघवादिति संक्षेपः।

ननु चरमवर्णध्वंसरूपायाः समाप्तेः प्रतियोगितया चरमवर्णस्य कारणत्वेनैव निर्वाहे मंगलस्य तद्द्वारकविघ्नध्वंसस्य समाप्तौ हेतुत्वासिद्धिरिति चेन्न। विना बीजप्रयोजनाभ्यां यस्य कस्यचित्कार्यस्यानुपपत्तेरिति न्यायेन तत्तत्कार्यविशेषे अदृष्टविशेषरूपबीजस्य विघ्नध्वंसात्मकप्रयोजनस्य चा हेतुत्वेन तद्द्वारा मंगलस्यापि हेतुत्वात्।

ननु ग्रन्थघटकयावद्वर्णध्वंसविशिष्टतद्ग्रन्थघटकचरमवर्णध्वंसरूपसमाप्तेः प्रत्येकसामग्रीसमुदायप्रयोज्यस्याऽर्थसमाजग्रस्ततया नैककारणप्रयोज्यत्वमिति चेन्न।

**नव्यास्तु मंगलस्य विघ्नध्वंस एव फलम्, समाप्तिस्तु बुद्धि-प्रतिभादिकारणकलापात्। न चैवं स्वतःसिद्धविघ्नविरहवता कृतस्य मंगलस्य निष्फलत्वापत्तिरिति वाच्यम्। इष्टापत्तेः। विघ्नशंकया तदाचरणात्, तथैव शिष्टाचारात्।**

नवीन कहते हैं कि मंगल का विघ्नध्वंस ही फल है, समाप्ति तो बुद्धि-प्रतिभा-आदि कारण कलाप से स्वयं हो जावेगी (अतः नवीनमत में विघ्नध्वंस के लिये मंगल की आवश्यकता है समाप्ति के लिये नहीं) प्रश्न—यदि नवीन ने मंगल का फल विघ्नध्वंस ही मान लिया तो जिस निष्पाप पुरुष ने कोई विघ्न (पाप) ही नहीं किया—ऐसे स्वत.सिद्धविघ्नविरहवान् निष्पाप पुरुष से किया हुआ मंगल निष्फल हो जावेगा, क्योंकि मगल से तो विघ्नध्वंस ही होना है वह उसे स्वयं ही है। उत्तर—ऐसे स्थल में मंगल की निष्फलता हमे इष्ट है, क्योंकि विघ्न की शंका से मगल किया है, वैसा ही शिष्टों का आचार है, कि यदि विघ्न होगें तो मंगल से नष्ट हो जावेगे-यदि नहीं होगे तब वहां मंगल निष्फल है।

प्रमाणाभावे अर्थसमाजग्रस्तस्य कार्यस्य एककारणताप्रयोज्यत्वाभावेऽपि प्रमाणसद्भावे अर्थसमाजग्रस्ततादृशध्वंसरूपसमाप्तेः एककारणप्रयोज्यत्वे बाधकाभावात्।

ननु विघ्नसामान्यशून्यपुरुषकृततद्ग्रन्थसमाप्तौ मंगलजन्यविघ्नध्वंसरूपद्वाराऽभावेन मंगलस्य हेतुत्वं न संभवतीति चेन्न। विघ्नसामान्यशून्यपुरुषे मानाभावात्।

इत्थं च स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसंबन्धेन समाप्तिं प्रति स्वजन्यविघ्नध्वंसवत्तासंबन्धेन मंगलस्य कारणत्वं फलितम्।

आहुरित्यनेनाऽस्वरसः सूचितः। स च समाप्तिमंगलकार्यकारणभावकल्पने गौरवमेव। तथाहि समाप्तेः स्वत.सिद्धविघ्नात्यन्ताभावेन भोग-सुवर्णदानादि-विघ्नध्वंसेन- मंगलजन्यविघ्नध्वंसेनाप्युत्पत्त्या परस्परं व्यभिचारः, विघ्नध्वंसद्वारा सुवर्णदानजन्यसमाप्तौ मंगलस्य, मंगलजन्यसमाप्तौ सुवर्णदानस्य विघ्नात्यन्ताभाव-जन्यसमाप्तौ सुवर्णदानमंगलयोश्चाऽभावात्। न च सुवर्णदानस्य विघ्नध्वंसं प्रत्येव कारणत्वं न समाप्तिं प्रत्यपीति सुवर्णदानजन्यसमाप्तौ कथं व्यभिचार इति वाच्यम्। एवमपि सुवर्णदानजन्यविघ्नध्वंसजन्यसमाप्तौ मंगलाभावेन व्यभिचारस्य दुष्परिहरत्वात्। न च मंगलजन्यविघ्नध्वंसविशिष्टसमाप्तिं प्रति मंगलस्य हेतुत्वकल्पने न व्यभिचार इति वाच्यम्। तथासति गौरवस्यावेदित्वात्। कारणस्य कार्यतावच्छेदकत्वकानुपगमाच्च। सुवर्णदानादिस्थले समाप्तिं प्रति विघ्नध्वंसस्य कारणतायाः स्वीकारेण प्रतिबन्धकाभावस्य कार्यमात्रे कारणतया च अत्रापि विघ्नध्वंसेनैव समाप्ति-निर्वाहे मंगलस्यान्यथासिद्धत्वाच्च नोक्तकार्यकारणभावसंभव इति।

नास्तिकसमाप्तौ जन्मान्तरीयमंगलस्य हेतुत्वे जन्मान्तरीयसमाप्तिमुद्दिश्यापि प्रवृत्त्यापत्तिः, नहि तादृशप्रवृत्तिः शिष्टसिद्धा। एवं स्वतःसिद्धविघ्नविरहवतां ग्रन्थसमाप्तौ व्यभिचारश्चेति अस्वरस आहुरित्यनेन सूचित इत्यपरे।

"शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ सर्वे विघ्नाः शमं यान्ति गणेशस्तवपाठत" इत्यादिस्मृत्या, समाप्तिं प्रति मंगलस्य हेतुत्वं वदतामपि विघ्नध्वंसस्य मंगलजन्यत्वाभ्युपगमेन च दर्शितरीत्या समाप्तिं प्रति मंगलस्याऽन्यथासिद्धत्वेन च विघ्नध्वंस एव मंगलफलमिति वदतां चिन्तामणिकृतां मतमाह नव्यास्त्विति । विघ्नध्वंस एवेत्येवकारेण समाप्तेर्मंगलफलत्वव्यवच्छेदः । तथा च मंगलं सफलं अविगीतशिष्टाचारविषयत्वाद्दर्शवदित्यनुमानेनेतरबाधबलान्मंगलं विघ्नध्वंसफलकमेव सिद्ध्यतीति भावः । तर्हि समाप्तौ किं कारणमत आह समाप्तिस्त्विति । चिकीर्षितग्रन्थप्रतिपाद्यज्ञानं बुद्धिः । आपतितशंकाविरोधपरिहारानुकूलबुद्धिविशेषसंस्कारविशेषान्यतररूपा च प्रतिभा । आदिपदात्प्रतिबन्धकाभावपरिग्रहः । कारणकलापात्—सामग्रीवशात् । तथा च विघ्नध्वंसरूपप्रतिबन्धकाभावसहितबुद्ध्यादिसामग्रीवशात् "मंगलस्य हेतुत्वाभावेपि" समाप्तिर्भवतीति नानुपपत्तिरिति भावः । ननु मंगलस्य विघ्नध्वंसं प्रति हेतुत्वं न संभवति, विघ्नात्यन्ताभावस्थले सत्यपि मंगले स्वाव्यवहितोत्तरक्षणावच्छेदेन स्वाधिकरणे विघ्नध्वंसानुत्पत्तेरन्वयव्यभिचारेण विघ्नध्वंसं प्रत्यन्यथासिद्धत्वादित्याशंक्य निराचष्टे न चैवमिति । एवं—मंगलस्य विघ्नध्वंसं प्रति कारणत्वे । स्वतःसिद्धविघ्नविरहवता=विघ्नसामग्र्यभाववता । विघ्नात्यन्ताभाववता विघ्नप्रागभाववता चेति यावत् । कृतस्य मंगलस्य=विघ्नशंकयाऽनुष्ठितमंगलस्य । निष्फलत्वापत्तिरिति । विघ्नध्वंसहेतुत्वानुपपत्तिः, विघ्नरूपकारणाभावेन विघ्नध्वंसोत्पत्त्यभावात्, स्वाव्यवहितोत्तरक्षणावच्छिन्नस्वाधिकरणवृत्तिविघ्नध्वंसकभिन्नत्वेन विघ्नध्वंसं प्रति अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्नत्वरूपान्यथासिद्ध्याक्रान्तत्वादिति भावः । शंकामुद्धरति इष्टापत्तेरिति । स्वतःसिद्धविघ्नविरहस्थले मंगलसत्वेऽपि विघ्नध्वंसं प्रति कारणीभूतविघ्नाभावेन स्वेतरकारणीभूतविघ्नसमवहितस्वाधिकरणवृत्तिविघ्नध्वंसान्यकभिन्नत्वरूपान्वय-व्यभिचाराभावेन विघ्नध्वंसं प्रति अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्नत्वरूपान्यथासिद्ध्यभावेन मंगलस्य विघ्नध्वंसं प्रति स्वरूपयोग्यतारूपकारणत्वे क्षत्यभावात्, सामग्र्यैव फलोपधानस्य दृष्टत्वेन स्वतःसिद्धविरहस्थले विघ्नरूपसहकार्यभावेन मंगले विघ्नध्वंसानुपधायकत्वस्येष्टत्वादित्यर्थः। ननु विघ्नाभावे स्वतःसिद्धविघ्नविरहवतो मंगलाचरणमयुक्तं निमित्तनिश्चयस्यैव मिनैत्तिकानुष्ठानप्रवृत्तिहेतुत्वादित्यत आह विघ्नशंकयेति । पापसंशयेनापि शिष्टानां प्रायश्चित्तानुष्ठानदर्शनेन संशयनिश्चयसाधारणनिमित्तज्ञानमात्रस्यैव नैमित्तिकानुष्ठानहेतुत्वान्न स्वतःसिद्धविघ्नविरहवतो मंगलानुष्ठाने प्रवृत्त्यनुपपत्तिरिति भावः । तदाचरणादिति । मंगलाचरणादिति भावः । तत्र प्रवृत्तेरिति यावत् । अत्र तदाचरणादिति पाठः प्रामादिक एव, अन्यथा पञ्चम्यन्तद्वयानुपपत्तेः ।

**न च तस्य निष्फलत्वे तद्बोधकवेदाऽप्रामाण्यापत्तिरिति वाच्यम्। सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात्। अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाऽप्रामाण्यम्।**

प्रश्न—मंगल के निष्फल होने पर मंगल की सफलता के बोधक वेद को अप्रामाण्य (मिथ्यात्व) आजावेगा। उत्तर—उस वेद का यही अर्थ है कि विघ्न के रहने पर ही विघ्न का नाश मंगल करता है। इसीलिये पापभ्रम से किये हुवे प्रायश्चित्त के निष्फल होने पर भी प्रायश्चित्त के पापनाशकत्व का बोधक जो वेद उसे अप्रामाण्य कदापि नहीं। (क्योंकि पापनाश के लिये ही प्रायश्चित्त का विधान है, जब कि पाप ही नहीं केवल भ्रममात्र है तो वहां नाश किसका)

आचरणमित्येव पाठः साधुः। ननु नैमित्तिके निमित्तनिश्चयवानधिकारीति निमित्तज्ञानमात्रस्य हेतुत्वे मानाभाव इत्यत आह **तथैवेति**। निमित्तशंकयैवेत्यर्थः। **शिष्टाचारादिति शिष्टानां** = आस्तिकानां, **आचारात्**—प्रवृत्तेरित्यर्थः। निमित्तशंकयैव शिष्टाः नैमित्तिकमाचरन्तीति दृष्टत्वात्, इष्टानुरोधित्वात्कल्पनायाः। तथा च पापध्वंसार्थिप्रवृत्तौ पापनिश्चयो हेतुरिति व्याप्तिरप्रयोजिकेति भावः। ननु मंगले विघ्नध्वंससाधनत्वबाधाद् बाधितार्थबोधकत्वेन श्रुतेरप्रामाण्यमित्याशंक्य निराचष्टे **न चेति**। **तस्य** = स्वतःसिद्धविघ्नविरहवता कृतमंगलस्य। **निष्फलत्वे** = फलानुपधायकत्वे। ध्वंसं प्रति प्रतियोगिनोपि हेतुत्वादिति भावः। **तद्बोधकेति**। मंगलविघ्नध्वंसयोः कार्यकारणभावबोधकेत्यर्थः। **वेदाप्रामाण्यापत्तिरिति**। विघ्नध्वंसजनकत्वाभाववति विघ्नध्वंसजनकत्वप्रतिपादनादिति भावः। उक्ताशंकानिरासे हेतुमाह **सति विघ्ने** इति। मंगलादिति शेषः। विघ्नरूपकारणान्तरसमवधाने सतीत्यर्थः। **तन्नाशस्यैव** = विघ्नध्वंसजनकत्वस्यैव। **वेदबोधितत्वात्** = प्रमाणबोधितत्वात्। तथा च स्वतःसिद्धविघ्नविरहवत्कृतमंगलस्य विघ्नासहितस्य विघ्नरूपकारणान्तराभावेनैव विघ्नध्वंसरूपफलानुपधायकत्वोपपत्तौ स्वरूपयोग्यताया अबाधेन नाऽप्रामाण्यशंकेति भावः। यथा केवलदण्डाद् घटानुत्पादेऽपि दण्डो घटकारणमिति वाक्यस्य नाऽप्रामाण्यं तद्वस्यत्रापीति ध्येयम्। ननु विघ्नो निवर्त्ततामिति कामनया क्रियमाणमंगलस्य केवलस्यैव विघ्ननाशजनकत्वं युक्तं, न तु विघ्नसहितस्य मानाभावादित्यत आह **अत एवेति**। स्वरूपयोग्यत्वादेवेत्यर्थः। ध्वंसं प्रति प्रतियोगिनः कारणत्वादेवेति **दिनकरी**। **निष्फलत्वेपीति**। पापभ्रमेण कृतस्य प्रायश्चित्तस्य पापसहितस्यैव पापनाशरूपफलोपधायकत्वेन पापाभावेन पापध्वंसोपधायकत्वाभावेपीत्यर्थः। **तद्बोधकवेदस्य** = पापजनकत्वस्वरूपयोग्यताबोधकवेदस्य। **नाऽप्रामाण्यम्**। पापजनकत्वाभाववति पापजनकत्वबोधजनकत्वरूपमप्रामाण्य नास्ति

क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनम्, प्रतिबन्धकसंसर्गाभावस्यैव कार्यजनकत्वात् । इत्थं च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमंगलजन्यदुरितध्वंसः, स्वतःसिद्धविघ्नात्यन्ताभावो वाऽस्तीति न व्यभिचार इत्याहुः ।

प्रश्न—मंगल सम्पूर्ण जो विघ्न उसके ध्वंस में कारण है-अथवा कतिपय विघ्नों के ध्वंस में कारण है। उत्तर मंगल कतिपय ( कुछ ) जो विघ्न उनके ध्वंस में ही कारण हैं। अन्य कतिपय विघ्न ( बीमार होजाना इत्यादि ) ध्वंस में गणेशस्तुति पाठ आदि कारण हैं। कहीं पर विघ्नात्यन्ताभाव ही कारण है। क्योंकि प्रतिबन्ध का भाव कार्यमात्र के प्रति कारण होता है। प्रकृत में वह प्रतिबन्धक ( विघ्न ) का अभाव संसर्गाभावरूप ही है। संसर्गाभाव के अन्तर्गत अत्यन्ताभाव भी आगया अतः कहीं स्थलविशेष में विघ्नात्यन्ताभाव को ही समाप्ति कारणत्व है। नवीनमत में पूर्वोक्त व्यभिचारों का वारण करते हैं, कि नास्तिकों के ग्रन्थों में जन्मान्तरीय मंगल से विघ्नध्वंस हुआ है, अथवा स्वतःसिद्ध वहां विघ्नात्यन्ताभाव है, अतः कोई व्यभिचार नहीं है।

प्रायश्चित्ते पापजननस्वरूपयोग्यताया अबाधादिति भावः। ननु विघ्नध्वंससामान्ये मंगलस्य हेतुत्वमसिद्धं विनायकस्तवपाठ–सुवर्णदान–प्रायश्चित्तजन्यविघ्नध्वंसे व्यभिचारादित्यत आह **मंगलं चेति** । **विघ्नध्वंसविशेषे** विजातीयविघ्नध्वंसं प्रतीत्यर्थः। वैजात्यं च मंगलनाश्यतावच्छेदकतया सिद्धो विघ्ननिष्ठो जातिविशेषः। तथा च विजातीयविघ्नध्वंसं प्रति मंगलं कारणम्। अथवा मंगलविशिष्टविघ्नध्वंसं प्रति मंगलं कारणम्। वै० स्वसामानाधिकरण्य-स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसंबन्धेन। एवं विनायकस्तवपाठादेरुपदर्शितसंबन्धेन विनायकस्तवपाठादिविशिष्टविघ्नध्वंसत्वं विजातीयविघ्नध्वंसत्वं वा कार्यतावच्छेदकमिति न व्यभिचार इति भावः। ननु **सर्वे विघ्नाः शमं यान्ति गणेशस्तवपाठत** इति स्मृत्या गणेशस्तवपाठस्य विघ्नध्वंससामान्ये हेतुत्वप्रतिपादनेन मंगलजन्यविघ्नध्वंसेऽपि तस्य हेतुत्वात्तद्रहितमंगलस्य विघ्नध्वंसहेतुत्वमेव न संभवति सामान्यकारणविशिष्टविशेषकारणस्यैव फलोपधायकत्वादित्यत आह **विघ्नध्वंसविशेषे चेति**। शिष्टानां ग्रन्थारंभसमये मंगलाचरणस्यैव दर्शनेन मंगलाऽनाश्यसर्वविघ्नपरतया सर्वे विघ्ना इति सर्वशब्दस्य संकोचनीयत्वात्। मंगलजन्यविघ्नध्वंसं प्रति विनायकस्तवपाठस्य हेतुत्वाभावेन तद्रहितस्यापि मंगलस्य हेतुत्वमव्याहतमेवेति भावः।

ननु मंगलस्य समाप्तिजनकत्वाभावेपि विघ्नध्वंसद्वारा समाप्तिप्रयोजकत्वमवश्यमङ्गीकार्यम्, अन्यथा समाप्तिकामनया ग्रन्थारंभसमये शिष्टानां मंगलाचरणानुपपत्तेः, विघ्नध्वंसस्य मंगलफलत्वेपि समाप्तिजनकतया एव मंगले प्रवृत्त्युद्देश्यतया तदनुपपत्तेश्च, इत्थं च स्वतःसिद्धविघ्नविरहवत्कृतमंगलेन विघ्नध्वंसाजननात्समाप्तिप्रयोजकत्वमपि मंगलस्य न स्यादित्यत आह **क्वचिच्चेति** । स्वतःसिद्धविघ्नवि-

संसारेति। संसार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः। एतेन ईश्वरे प्रमाणमपि दर्शितं भवति।

संसारेति—संसाररूप जो वृक्ष उससे बीज ( निमित्तकारण ) भगवान् कृष्ण ही हैं। "संसारमहीरुहस्य बीजाय" इससे ईश्वर में प्रमाण दिखला दिया, अर्थात् इस संसाररूपी वृक्ष का कारण ईश्वरातिरिक्त कोई नहीं हो सकता है।

रहस्थले त्वित्यर्थः। **विघ्नात्यन्ताभाव एव समाप्तिसाधनमिति**। न तु विघ्नध्वंस एव सर्वत्र समाप्तिसाधनमित्यर्थः। तथा च समाप्तिं प्रति विघ्नसंसर्गाभावस्यैव विघ्नसंसर्गाभावत्वेन हेतुत्वं वक्तव्यमिति स्वतःसिद्धविघ्नविरहस्थले विघ्नध्वंसेन समाप्त्यजननेऽपि समाप्तौ विघ्नध्वंसस्य क्वचिज्जनकतया तत्फलकमंगलस्य समाप्तिप्रयोजकत्वे क्षतिर्नास्तीति भावः। ननु समाप्तिं प्रति विघ्नसंसर्गाभावत्वेन कारणत्वे मानाभाव इत्यत आह **प्रतिबन्धकसंसर्गाभावस्यैवेति**। इदं च ध्वंसस्यापि हेतुत्वरक्षणाय प्राचीनमतेनोक्तम्, नव्यमते तु अत्यन्ताभावस्य ध्वंसाद्यविरोधितया प्रतिबन्धकात्यन्ताभावत्वेनैव हेतुत्वम्, इत्थं च ध्वंसमुत्पाद्याऽत्यन्ताभावसत्त्वसंपादनेन मंगलस्य समाप्तिं प्रति प्रयोजकत्वं बोध्यम्, तथा च प्रतिबन्धकसंसर्गाभावस्यैव कार्यमात्रे तत्त्वेन हेतुत्वावश्यकतया विघ्नस्यापि समाप्तिप्रतिबन्धकतया तत्संसर्गाभावत्वेनैव समाप्तिं प्रति हेतुत्वं युक्तमिति भावः। **इत्थंचेति**। प्रतिबन्धकसंसर्गाभावत्वेन हेतुत्वे चेत्यर्थः। **जन्मान्तरीयमंगलजन्यदुरितध्वंस** इति। नन्वेवं जन्मान्तरीयसमाप्तिमुद्दिश्यापि मंगले प्रवृत्त्यापत्तिरत आह **स्वतःसिद्धेति**। वस्तुतस्तु **जन्मान्तरीयमंगलजन्यदुरितध्वंसः** = जन्मान्तरीयदुरितध्वंससामग्रीप्रयुक्त इत्यर्थः। तच्चाऽत्यन्ताभावविशेषणम्।

वस्तुतस्तु प्राचीनमते आहुरित्यनेन सूचितामन्यथासिद्धिं प्रकटयति **क्वचिच्चेति**। विघ्नात्यन्ताभाव एवेत्येवकारेण विघ्नध्वंसस्य तद्द्वारकमंगलस्य च व्यवच्छेदः। तथा च विघ्नात्यन्ताभावेनैव मंगलस्थलीयसमाप्तिनिर्वाहे मंगलस्य तज्जन्यविघ्नध्वंसस्य चान्यथासिद्धिः, ध्वंसप्रागभावयोरत्यन्ताभावविरोधे मानाभावाद् ध्वंसाधिकरणेऽपि अत्यन्ताभावसत्वात्। अन्यत्सर्वं पूर्ववत्।

नवीनमते कार्यकारणभावद्वयं, मंगलविघ्नध्वंसयोः, समाप्तिविघ्नध्वंसयोश्च। स्वरूपसंबन्धेन विघ्नध्वंसं प्रति आश्रयतासंबन्धेन मंगलं कारणम्। यत्र च सत्यपि मंगले न समाप्तिः, तत्र मंगलाद्विघ्नध्वंसो भवत्येव, समाप्त्यभावस्तु विघ्नभूयस्त्वान्मंगलानन्तरोत्पन्नविघ्नाद्वेति ध्येयम्। स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसंबन्धेन समाप्तिं प्रति स्वरूपसंबन्धेन विघ्नध्वंसः कारणमिति समाप्तिविघ्नध्वंसयोः कार्यकारणभावः। तस्य च कारणता विघ्नध्वंसत्वेन विघ्नसंसर्गाभावत्वेन विघ्नात्यन्ताभावत्वेन वेत्यन्यदेतत्।

मंगलश्लोकार्थस्तु **तस्मै**=सकलजनप्रसिद्धाय-**कृष्णाय**, गोपीजनवल्लभाय नमः। कथंभूताय तस्मै-**नूतनजलधररुचये**। पुनः किंभूताय गोपवधूटीदुकूलचौराय, पुनः किंभूताय संसारमहीरुहस्य बीजायेत्यन्वयः।

तत्पदं चाऽत्र प्रसिद्धार्थकम्, अतो न यत्पदाऽपेक्षा। एतेन यत्तदोर्नित्यसंबन्धात्प्रकृतश्लोके यत्पदाभावात्कथं तत्पदसंगतिरिति समाहितम्। स्वापकर्षबोधानुकूलो व्यापारो नमःपदार्थः। स्वं-प्रयोक्ता। एवं च कृष्णाय नम इत्यत्र अवधित्वं चतुर्थ्यर्थः। तच्च स्वरूपसंबन्धविशेषः। तत्र च प्रकृत्यर्थकृष्णस्य आधेयतासंबन्धेनान्वयः। तस्य निरूपकतासंबन्धेनाऽपकर्षेऽन्वयः, तथा च कृष्णावधिकग्रन्थकृदपकर्षबोधानुकूलो ग्रन्थकृद्व्यापार इति बोधः। वस्तुतस्तु स्वावधिकोत्कर्षवत्तया ज्ञापनं नमःपदार्थः, विषयित्वं चतुर्थ्यर्थः, तत्र प्रकृत्यर्थस्य निरूपितत्वसंबन्धेनाऽन्वयः, तस्य च नमःपदार्थघटकज्ञानेऽन्वयः, तथा च ग्रन्थकृदवधिकोत्कर्षवत्तया कृष्णविशेष्यकज्ञानानुकूलो ग्रन्थकृद्व्यापार इति बोधः। तादृशं ज्ञानं च श्रीकृष्णो मदुत्कृष्ट इत्याकारकम्। धरन्तीति धराः। जलस्य धराः इति जलधराः। न तु जलानि धरन्तीति व्युत्पत्तिः, तथासति कर्मण्यणिति अण्-प्रत्यये उपधावृद्धौ जलधार इति प्रयोगापत्तेः। नूतनाश्च ते जलधराश्चेति नूतनजलधराः नूतनजलधराणां रुचिरिव रुचिर्यस्य स नूतनजलधररुचिः, तस्मै, अतीवश्यामवर्णायेति भावः। गोपानां वधूट्यो गोपवधूट्यः-गोपस्त्रियः तासां दुकूलानि-वस्त्राणि-तेषां चौरः-तस्मै। अतिप्रसन्नायेति भावः। अथवा गाः-इन्द्रियाणि पाति-रक्षतीति गोपं-मनः-तस्य वधूटी-बुद्धिः-तस्याः दुकूलानि-अहंकारादयः (आवरकत्वाद्बुद्धेः) तेषां चौरः-नाशकः-तस्मै। संसार-एव महीरुहः-संसारमहीरुहः-तस्य बीजाय। जगत्कारणायेति भावः।

**संसार एवेति**। संसारः कार्यजातम्। न च कर्मधारयप्रदर्शनं व्यर्थम्। संसारस्य महीरुह इति षष्ठीतत्पुरुषभ्रान्तिनिरासाय तद्दर्शनात्। तथासति सकलप्रपंचहेतोरीश्वरस्य महीरुहमात्रबीजत्वकथनस्यानौचित्यापातात्। बीजत्वं-समवायिकारणत्वं तच्चेश्वरे बाधितमत आह **निमित्तकारणायेति**। एतेनेश्वरस्य कार्यमात्रं प्रति साधारणकारणत्वं सूचितम्। समवायिकारणाऽसमवायिकारणयोः साधारणत्वाभावादिति ध्येयम्।

ननु ईश्वरे न किमपि प्रमाणं-तथाहि ईश्वरसद्भावे न प्रत्यक्षं प्रमाणं-तथाहि-विवादाऽध्यासित ईश्वरो न मानसान्यप्रत्यक्षनिरूपितलौकिकविषयतावान् अरूपिद्रव्यत्वात्, वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे उद्भूतरूपस्य कारणत्वात्। न मानसनिरूपितलौकिकविषयतावान् स्वात्मभिन्नद्रव्यत्वात्। परात्मनः परेण मनसा प्रत्यक्षवारणायाऽऽत्मप्रत्यक्षं प्रति परात्मव्यावृत्तविजातीयमनःसंयोगस्य हेतुत्वावश्यकतया ईश्वरे तस्याभावात्। एवमीश्वरोऽनुमानगम्यत्वाभाववान् तद्व्याप्यलिङ्गाभावात्। उपमानस्य शक्तिमात्रसाधकत्वेन तत्प्रमाणागम्यत्वात्। आगमो नेश्वरसाधकः निर्णीतप्रामाण्यकत्वाभावात्। तथाचेश्वरः प्रमाणसामान्यगम्यत्वाभाववान् प्रत्यक्षादिप्रमाण-

**तथाहि यथा घटादि कार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि। न च तत्कर्तृत्वमस्मदादीनां संभवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः।**

तथाहि-घट आदि कार्य किसी (कुलाल आदि) कर्त्ता से जन्य है-कार्य होने से-ऐसे ही क्षिति-अङ्कुरादि कार्य भी किसी कर्त्ता से जन्य हैं। क्षिति-अङ्कुर-आदि कार्य के कर्त्ता हम शरीरधारी नहीं हो सकते हैं, अतः जो उनका कर्त्ता है वही ईश्वर है इससे ईश्वर सिद्धि होगयी।

विशेषगम्यत्वाभावकूटवत्त्वाधन्नैवं तन्नैवं यथा घट इति फलितम्। न च नित्यत्वेन निर्दोषत्वं श्रुतीनां तेनैव तासां न सन्दिग्धं प्रामाण्यमिति वाच्यम्। वर्णानित्यत्ववादे नित्यत्वस्य दूषितत्वादित्यत आह **एतेनेति**। जगत्कारणत्वप्रतिपादनेनेत्यर्थः।

**प्रमाणं** = अनुमानं प्रमाणम्।

आचार्यैरीश्वरसाधकानि नवानुमानानि दर्शितानि, तेषु कार्यत्वहेतुकप्राथमिकानुमानम्, क्षित्यंकुरादिक कार्यं कर्तृजन्यं कार्यत्वाद् घटवदित्याकारकम् तत्र व्याप्तिं दर्शयति **तथाहीति**। घटादि कार्यमिति पदद्वयम्। तथा च कार्यं घटादि यथा कर्तृजन्यं तथा क्षित्यंकुरादिकमपीत्यन्वयः। **अनुमाननवकं च** "कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः। वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः" इति वेदितव्यम्।

अत्रेदं बोध्यम्। क्षितिश्चाऽङ्कुरश्च क्षित्यङ्कुरौ तावादिर्यस्येति क्षित्यंकुरादिकम्, तथा च क्षितिः सकर्तृका (कर्तृजन्या) कार्यत्वाद् घटवदित्यनुमितिः। सापि क्षितित्वसामानाधिकरण्येन-क्षितित्वावच्छेदेन वा। नाद्यः—घटादिकमादाय सिद्धिसाधनप्रसंगात्। न द्वितीयः। नित्यक्षितौ "परमाणौ" कार्यत्वहेतोर्भागासिद्धिः, कर्तृजन्यत्वस्य बाधश्च, अवच्छेदावच्छेदेनानुमितौ *सामानाधिकरण्येन* बाधनिश्चयस्यापि प्रतिबन्धकत्वात्। जन्यक्षितित्वस्य पक्षतावच्छेदकत्वे परमते जन्यपदव्यावृत्त्यसिद्धिः। तन्मतेऽजन्यक्षितेरभावात्। जन्यत्वस्यैव तथात्वसंभवेन पक्षतावच्छेदककोटौ क्षितित्वस्य वैयर्थ्यं चाऽतोऽङ्कुरस्य पक्षत्वमुक्तम्। तथाचाऽङ्कुरः कर्तृजन्यः कार्यत्वाद् घटवदिति संपन्नम्। अवच्छेदावच्छेदेन साध्यसत्त्वान्न सिद्धिबाधौ। अत्रापि अंकुरत्वस्य पक्षतावच्छेदकत्वे न संभवति अंकुरत्वावच्छेदेन साध्यसिद्धावपि जन्यमात्रे सकर्तृकत्वासिद्धेः। तत्सिद्ध्यर्थमनुमानान्तरकल्पने गौरवादादिपदं जन्यमात्रस्य पक्षत्वलाभाय। तथा च—कार्यं कर्तृजन्यं कार्यत्वाद् घटवदिति स्थापनानुमानं पर्यवसितम्। अत्र कार्यत्वं पक्षतावच्छेदकम्। अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वान्न *सिद्धसाधनावकाशः।* एतेन जन्यकृत्यजन्यं अजन्यं पक्षः नातो घटादिकमादाय सिद्धसाधनं, परमाण्वादिकमादायाऽशंतो बाधश्चेति वदन्तः समाहिताः। अवच्छेदकावच्छेदेनानुमित्युद्देश्यतायां सामानाधिकरण्येन सिद्धेरविरोधित्वात्। तथा च नोपादेयमेव जन्यकृत्यजन्यमिति ध्येयम्। न च पक्षतावच्छेदकहेत्वोरैक्ये उपनयवाक्याच्छाब्दबोधानुपपत्तिः उद्दे-

ध्यतावच्छेदकविधेययोरैक्यादिति वाच्यम्। स्वरूपसंबन्धविशेषरूपकार्यत्वस्य पक्षतावच्छेदकत्वात्, प्रागभावप्रतियोगित्वरूपकार्यत्वस्य हेतुतयोक्तानुपपत्त्यभावात्। न च विनिगमकाभावेन स्वरूपसंबन्धरूपकार्यत्वमेव हेतुरस्त्विति वाच्यम्। तथासति पक्षवृत्तिकार्यत्वस्य पक्षात्मकतया अनुगमकाभावेन सपक्षावृत्तित्वादसाधारण्यापत्तेः। न च प्रतियोगित्वस्यापि स्वरूपसंबन्धविशेषतया तद्दोषतादवस्थ्यम्। प्रतियोगित्वस्य पदार्थान्तरत्वात्, सप्तपदार्थविभागस्तु तत्त्वज्ञानोपयोगितयेति ध्येयम्। वस्तुतोऽत्र प्रागभावप्रतियोगित्वादित्यस्य प्रतियोगितासंबन्धेन प्रागभाववत्वादित्यर्थः। यद्यपि स्वरूपसंबन्धरूपकार्यताव्यक्तीनां तत्तद्व्यक्तिमात्रपर्यवसितत्वेन नानुगतपक्षतावच्छेदकलाभस्तथापि अन्यतमत्वेनानुगतीकृतानां पक्षतावच्छेदकत्वं बोध्यम्।

कर्तृजन्यत्वं साध्यं, तस्य कृतिजन्यत्वमर्थः। नातः साध्यतावच्छेदकानन्त्यम्। समवायसंबन्धेन कार्यत्वावच्छिन्नं प्रति उपादानत्वाख्यविषयतासंबन्धेन कृतेर्हेतुतया तथाविधविषयतासंबन्धावच्छिन्नकृतिनिष्ठकारणतानिरूपितसमवायसंबन्धावच्छिन्नकार्यत्वस्य साध्यत्वे पर्यवसानम्।

अथैवं जन्यं तथाविधविषयतासंबन्धावच्छिन्नकृतिनिष्ठकारणतानिरूपितसमवायसंबन्धावच्छिन्नकार्यतावत् प्रागभावप्रतियोगित्वादित्यनुमानं पर्यवसन्नम्, तथा सति ध्वंसे पक्षतावच्छेदकाक्रान्ते व्यभिचारः, तत्रोक्तसाध्यविरहात्। न च सत्वविशिष्टजन्यत्वं ध्वंसप्रतियोगित्वविशिष्टजन्यत्वं वा पक्षतावच्छेदकं वक्तव्यं, तथा च नोक्तव्यभिचारः, ध्वंसस्य सत्ताभाववत्तया ध्वंसप्रतियोगित्वाभाववत्तया वा पक्षतावच्छेदकानाक्रान्तत्वादिति वाच्यम्। तथापि तादृशसाध्याभाववति ध्वंसे प्रागभावप्रतियोगित्वरूपहेतोः सत्त्वेन व्यभिचारतादवस्थ्यादिति चेन्न। हेतावपि सत्त्ववैशिष्ट्यनिवेशेन व्यभिचारानवकाशादिति ध्येयम्।

ननु सर्वमिदं तदैव संभवति यदि कार्यत्वावच्छिन्नं प्रति कृतित्वेन हेतुत्वं स्यात्, तदेव कुत इति चेत्। सत्यम्। घटादिस्थले कुलालादिकृतीनां अन्वयव्यतिरेकानुविधानबलाद् घटादिकं प्रति कुलालादिकृतित्वेन हेतुत्वं न कल्प्यते, लाघवात्कार्यत्वावच्छिन्नं प्रत्येव कृतित्वेन तत्कल्प्यते न तु घटत्वपटत्वावच्छिन्नं प्रति, तथा सति अनन्तकार्यकारणभावकल्पने गौरवात्। अथैवं विशेषकार्यकारणभावाऽस्वीकारे कुलालकृत्यभावेपि तन्तुवायकृतिसत्त्वे घटोत्पत्तिवारणाय कुलालकृतिसत्त्वे घटसत्वम्, तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यां घटत्वावच्छिन्नं प्रति कुलालकृतित्वेन विशेषकार्यकारणभाव आवश्यकः, यद्रूपावच्छिन्नयोरन्वयव्यतिरेकग्रहः तद्रूपावच्छिन्नयोरेव कार्यकारणभावनियमात्, तथा च सामान्यकार्यकारणभावो निर्युक्तिक इति चेन्न। यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपीति न्यायेन सामान्यकार्यकारणभावस्याऽऽवश्यकत्वात्। कार्यत्वावच्छिन्नाभावे तत्तत्कृत्यभावकूटस्य प्रयोजकत्वकल्पने गौरवात्, कृतित्वावच्छिन्नाऽभावस्यैकस्यैव प्रयोजकत्वे लाघवात्, तथा चोक्तन्यायस्य लाघवमूलकत्वान्न निष्प्रमाणकत्वमिति ध्येयम्। अस्तु वा घटत्व-

**न च शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम्। अप्रयोजकत्वात्।**

शंका—"क्षित्यङ्कुरादिक कर्तृजन्यं कार्यत्वात् घटवत्" इस आस्तिक के अनुमान मे नास्तिक कहता है कि शरीरजन्यत्व उपाधि है। शरीर जन्यत्व का अर्थ सर्वत्र शरीरिजन्यत्व समझना। उपाधि उसे कहते हैं जो साध्य का व्यापक हो तथा साधन (हेतु, का अव्यापक हो। जैसे *शरीरजन्यत्व उपाधि कर्त्ट जन्यत्व रूप साध्य का व्यापक है क्यों कि घट-पटा-* दि कार्य कुलालादिरूप शरीरी कर्त्ता से जन्य हैं। अत यह उपाधि साध्य की व्यापक हुवी-और कार्यत्व हेतु पृथिवी अङ्कुर आदि कार्य मे भी है उसमें शरीरीजन्यत्व नही है क्यो कि पृथिवी अङ्-कुर आदि कार्य ईश्वर मे उत्पन्न होने के नाते शरीरी से जन्य नहीं अतः यह उपाधि साधन की अव्यापक हुवी। अब प्रश्न यह है कि उपाधि क्या करती है, सो उपाधि अपने अभाव को हेतु करके साध्य के अभाव को पक्ष में सिद्ध कर देती है। जैसे क्षित्यङ्कुरादिक कर्त्तृजन्यं कार्यत्वात् घटवत् इस आस्तिक के अनुमान मे नास्तिक ने शरीरजन्यत्व उपाधि दी है उपाध्यभाव हुआ शरीराजन्यत्व, वह कर्त्तृजन्यत्वरूप साध्य के अभाव कर्त्रजन्यत्व ( कर्त्तृजन्यत्वा भाव ) को सिद्ध करके अर्थात् "क्षित्यङ्कुरादिकं कर्त्रजन्य शरीराजन्यत्वात् आकाशवत्" इस कर्त्तृजन्यत्वाभाव साधक अनुमान से पूर्वोक्त "क्षित्यङ्कुरादिकं कर्त्तृजन्यम्' इस आस्तिकानुमान का बाध हो जावेगा। यही सत्प्रतिपक्ष है। साध्यके अभाव का साधक जहा दूसरा हेतु हो उसे सत्प्रतिपक्ष कहते हैं—जैसे प्रकृत मे "क्षित्यङ्कुरादिकं कर्त्तृजन्यम्' यहा पर साध्य जो कर्त्तृजन्यत्व उसका अभाव हुवा कर्त्रजन्यत्व ( कर्त्तृजन्यत्वाभाव ) उसका साधक हेत्वन्तर उपाध्यभाव (शरीराजन्यत्व) है। यही मूल मे कहा है कि "नच शरीराजन्यत्वेन" इत्यादि। अर्थात् कर्त्रजन्यत्व का साधक हेत्वन्तर जो *शरीराजन्यत्व, उससे पूर्वोक्त आस्तिकानुमान मे कर्त्तृजन्यत्व का साधक* कार्यत्व हेतु सत्प्रतिपक्षित हो जावेगा। उत्तर—"अप्रयोजकत्वात्" अर्थात् नास्तिक का अनुमान अप्रयोजक ( व्यभिचारशंकानिवर्त्तकतर्क शून्य ) है। इस ग्रन्थ का अभिप्राय यह है कि जैसे *"पर्वतो वन्हिमान् धूमात्" यहां पर यदि कोई व्यभिचारशका करता है कि पक्षे ( पर्वते )* हेतुः ( धूमः ) अस्तु साध्यं ( वन्हिः ) मास्तु ) इस प्रकार की हेतु मे "साध्याभाववद्वृत्तित्व" रूप व्यभिचार की यदि कोई आशंका करता है तो उसका निवर्त्तक तर्क है कि यदि "पर्वते वन्हिर्न स्यात्तदा धूमोऽपि न स्यात् धूमस्य वन्हिजन्यत्वात्"। परन्तु "क्षित्यङ्कुरादिकं कर्त्रजन्यं शरीराजन्यत्वात् आकाशवत्" इस नास्तिकानुमान मे यदि व्यभिचारशंका की जाय कि "क्षित्यङ्कुरादिषु शरीराजन्यत्वमस्तु कर्त्रजन्यत्वं मास्तु'। अर्थात् क्षिति-अङ्कुर-आदि 'कार्य शरीरी जो हमलोग हैं उनसे सर्वथा अजन्य हैं, क्योंकि वे ईश्वर से जन्य हैं-ईश्वर शरीरी नही है अत शरीराजन्यत्व रहे, और क्षित्यङ्कुरादि ईश्वररूप कर्त्ता से जन्य होने के नाते उनमे सर्वथा कर्त्तृअजन्यत्वरूप साध्य न रहे। अतः नास्तिकाका अनुमान अप्रयोजक सिद्ध हुवा।

**पटत्वावच्छिन्नं प्रति कृतित्वेन विशिष्यैव हेतुत्वं तथापि सर्गादिकालीनघटादिकं पक्षीकृत्य घटत्वादिहेतुना सकर्तृकत्वसाधनेनेश्वरसिद्धिरप्रत्यूहैवेति।**

तत्र परार्थानुमाने विचाराङ्गविप्रतिपत्तेरावश्यकतया अनित्याऽसर्वविषयकज्ञाना‌ज्जन्यं जन्यं सकर्तृकं न वा, क्षितिः सकर्तृका न वा, जन्यं कर्तृजन्यं न वेत्यादिविप्रतिपत्तयो बोध्याः।

एवं च तादृशकृतिः द्रव्याश्रिता गुणत्वाद्रूपवदित्यनुमानेन तादृशकृतेर्द्रव्याश्रितत्वसिद्धौ अनुपदोक्तरीत्या जीवबाधादीश्वरसिद्धिः।

अथ कार्यं कर्तृजन्यं कार्यत्वादित्यनुमाने सत्प्रतिपक्षः—विवादास्पदं "कार्यं" न कर्तृजन्यं शरीराजन्यत्वाद् व्योमादिवत् व्यतिरेकेण घटादिवदित्यनुमानेन कर्त्रजन्यत्वस्यापि साध्यतया सत्प्रतिपक्षः, साध्यव्याप्यहेतुमान्पक्षः साध्याभावव्याप्यप्रतिहेतुमान्पक्ष इत्युभयपरामर्शकाले सत्प्रतिपक्षव्यवहारात्, स्वसाध्यपरामर्शकालीनस्वसाध्यविरोधि"साध्याभाव"परामर्शविषयस्य सत्प्रतिपक्षदोषत्वात्। प्रकृते च कर्तृजन्यत्वव्याप्यकार्यत्ववत्कार्यस्य कर्त्रजन्यत्वव्याप्यशरीराजन्यत्ववत्कार्यस्य सत्प्रतिपक्षतया तन्निश्चयस्य परस्परानुमितिप्रतिबन्धान्नेश्वरसिद्धिसंभव इति शंकते न चेति। **अप्रयोजकत्वादिति।** व्यभिचारशंकानिराकरणानुकूलतर्करहितत्वादिति भावः। तथाच समबलयोरेव सत्प्रतिपक्षता न न्यूनाधिकबलयोरिति। अयं भावः। व्यभिचारज्ञानाभावसहकृतसहचारदर्शनं व्याप्तिग्रहे कारणम्। न च व्यभिचारज्ञानाभावस्य कुतो व्याप्तिग्रहहेतुत्वमिति वाच्यम्। सति व्यभिचारज्ञाने व्याप्तिग्रहासंभवेन व्यभिचारज्ञानाभावस्य हेतुत्वावश्यकत्वात्। व्यभिचारज्ञानस्यापि संशयनिश्चयसाधारणज्ञानत्वेन प्रतिबन्धकत्वम्। तथा च शरीराजन्यत्वमस्तु कर्त्रजन्यत्वं मास्तु "कर्त्रजन्यत्वरूपसाध्याभाववति अपि शरीराजन्यत्वं स्यात्" इत्याकारकव्यभिचारशंकायाः "कर्त्रजन्यत्वव्याप्यं शरीराजन्यत्वमिति व्याप्तिग्रहे" प्रतिबन्धकत्वे तन्निवृत्त्यर्थं तर्कोऽपेक्षणीयः। स चात्र न संभवति- शरीराजन्यत्वकर्त्रजन्यत्वयोः "शरीरजन्यत्वाभाव-कर्तृजन्यत्वाभावरूपयोः" अत्यन्ताभावरूपत्वेन नित्यत्वात्। तथा च नित्ययोर्व्याप्तिग्राहककार्यकारणभावरूपानुकूलतर्काभावादिति ध्येयम्।

इदमुपलक्षणम्—शरीराजन्यत्वादित्यत्र शरीरांशविशेषणस्य व्यर्थत्वात्, अजन्यत्वस्यैव सम्यक्त्वात्। केवलस्याऽजन्यत्वस्य कर्त्रजन्यत्वव्यभिचारे हि सति तद्व्यावर्त्तनेन विशेषणस्य सार्थक्यं स्यात्, नचात्र केवलस्य व्यभिचारोऽस्ति। न च केवलस्याऽजन्यत्वस्य स्वरूपाऽसिद्धत्वेन तत्परिहारार्थत्वेन विशेषणसार्थक्यमस्तीति वाच्यम्। स्वरूपासिद्धिपरिहारेऽपि व्याप्यत्वासिद्धेरपरिहारात्। तदुक्तं- **एकामसिद्धिं परिहरतो द्वितीयापत्तेरिति।** गौरवेण नीलधूमत्ववद्विशेषणान्तर्भावेन शरीराजन्यत्वस्य व्याप्यतानवच्छेदकत्वात्। नचाऽखण्डाभावघटकतया न वैयर्थ्यम्। तथापि व्याप्यत्वासिद्धितादवस्थ्यात्। तथा चोक्तानुमानस्य समबलत्वाभावान्न सत्प्रतिपक्ष इत्यन्यत्र विस्तरः।

अथैवमपि कार्यत्वहेतोः सत्प्रतिपक्षितत्वं दुर्वारं-ईश्वरो न कर्त्ता अशरीरित्वादित्यनुमानात्। न चेश्वरपक्षककर्तृत्वानुमानेऽसौ सत्प्रतिपक्षः, न तु कार्यत्वेन क्षितौ

कर्त्तृजन्यत्वानुमाने इति नायं कार्यत्वहेतौ दोष इति वाच्यम्। कार्यत्वहेतुना पक्षधर्मताबलादितरबाधबलाच्चाऽशरीरेश्वरकर्तृकत्वस्य क्षितौ सिषाधयिषितत्तया तत्रापि परंपरया एतत्सत्प्रतिपक्षस्य प्रसरसंभवात्। यद्वा कर्त्ता शरीर्येवेति व्याप्त्या क्षित्यादौ शरीरिकर्तृकत्वसाधने वाऽशरीरिकर्तृकत्वसाध्यकहेतोः सत्प्रतिपक्ष इति चेन्न। प्रथमे पक्षसिद्ध्यर्थं कार्यत्वहेतुकानुमानस्यापेक्षणीयत्वेनोपजीव्यतया बलवत्वात्। यद्वेत्याद्युक्तसत्प्रतिपक्षोपि न, पक्षीभूतक्षित्यङ्कुरादिकार्ये गृहीतकार्यत्वे कर्त्तृजन्यत्वव्याप्तेर्बलवत्त्वात्। पार्थिवादेः शरीरस्य सृष्ट्युत्तरकालभावितया क्षित्यादावशरीरिकर्तृजन्यत्वस्यैव संभवात्, कार्यत्वे सकर्तृकत्वव्यभिचारशंकानिवर्त्तकेन "कार्यत्वं यदि कर्त्तृजन्यत्वव्यभिचारि स्यात्तदा कर्त्तृजन्यतावच्छेदकं न स्यादि"त्यादितर्केण निश्चितत्वाच्च बलवत्त्वं बोध्यम्। बलवत्त्वं च सकर्तृकत्वसिद्ध्युपधायकत्वम्।

अथैवमपि कार्यत्वहेतौ बाधो दुर्वारः, ईश्वरे कर्तृत्वविरहात्, कर्तृजन्यत्वाभावश्च कर्तृजन्यत्वरूपसाध्यके, कर्तरि विशेषणस्य कर्त्तृत्वस्य विरहात्, परमेश्वरे कर्तृत्वाभावश्च कर्तृत्वव्यापकीभूतशरीराभावाद्बोध्यः। निर्धर्मितावच्छेदककेपि विशिष्टसाध्यग्रहे विशेषणबाधग्रहस्य प्रतिबन्धकत्वात। ईश्वरे कर्तृत्वं नास्तीति प्रत्ययस्य क्षितिनिष्ठजन्यतानिरूपकत्वरूपस्येश्वरत्वावच्छिन्ननिरूपितवृत्तित्वेन कर्तृत्वाभावस्यावगाहिनः क्षितौ कर्तृनिरूपितजन्यताग्रहं प्रति विरोधस्यानुभवसिद्धत्वाच्च। ( इदं चाऽसत एवेश्वरस्य भानमित्यभिमानेन )। सत्यम्। ईश्वरो न कर्त्ता इति ज्ञानं न प्रत्यक्षात्मकं, अधिकरणज्ञानस्याऽभावज्ञाने हेतुतयाऽधिकरणज्ञानं विना अभावज्ञानाऽसंभवात्, तथा चाऽधिकरणज्ञानजनकतया कार्यत्वस्याऽवश्यापेक्षणीयत्वात्, तेनैवेश्वरसिद्धेः। न च वायौ रूपं नास्तीतिवत् कर्त्तृत्वे ईश्वरवृत्तित्वाभावो गृह्यतामिति वाच्यम्। अस्मदादिवृत्तिकर्त्तृत्वस्य धर्मित्वे इष्टापत्तेः। ईश्वरवृत्तिकर्त्तृत्वन्तु व्याघातादसंभवीति। वस्तुतो महति वायौ रूपवत्त्वे रूपोपलब्धिप्रसङ्गेन योग्यानुपलब्धिसंभवाद् वायौ रूपं नास्तीति प्रत्यक्षं संभवतीति दृष्टवैषम्यं बोध्यम्। तस्याऽनुमित्यात्मकत्वे पक्षप्रसिद्ध्यर्थं स्थापनानुमानस्योपजीव्यत्वाद्बलवत्वम्।

तदुक्तमाचार्यैः—न बाधोऽस्योपजीव्यत्वात्प्रतिबन्धो न दुर्बलैः।

सिद्ध्यसिद्ध्योर्विरोधो न नाऽसिद्धिरनिबन्धना॥

अस्या अर्थः—बाधो न अधिकरणज्ञानं विनाऽसंभवात्। अस्य— कार्यत्वस्य हेतोर्धर्मिसाधकस्याऽधिकरणज्ञापकस्योपजीव्यत्वेन बलवत्वात्। प्रतिबन्धः-सत्प्रतिपक्षो न शरीराजन्यत्वादिति हेतोःशरीरांशस्य व्यर्थत्वेन व्याप्यत्वासिद्धस्य दुर्बलत्वात्। एवं कर्ता शरीर्येवेति व्याप्तेश्च दुर्बलतया न प्रतिबन्धः, कार्यत्वव्याप्तेः पक्षधर्मतासहकाराद्विपक्षबाधकतर्काच्च बलवत्त्वम्। ननु कुलालादौ कर्तृत्वशरीरित्वदर्शनात्मकेन यः कर्त्ता स शरीरी यथा घटादिकर्त्ता कुलालादिरित्याद्युदाहरणेन बोधितया व्याप्त्या शरीरित्वव्याप्यतया कर्त्ता उपनतं

मम तु कर्त्तृत्वेन कार्यत्वेन कार्यकारणभाव एवाऽनुकूलस्तर्कः । "द्यावाभूमी जनयन्देव एकः, विश्वस्य कर्त्ता भुवनस्य गोप्ता" इत्यादय आगमा अप्यनुसन्धेयाः ।

आस्तिक कहते हैं कि "क्षित्यङ्कुरादिकं कर्त्तृजन्यं कार्यत्वात् घटवत्" हमारे इस अनुमान में पक्ष क्षित्यङ्कुरादि में हेतुः (कार्यत्वम्) अस्तु-साध्यं (कर्त्तृजन्यत्वं) मास्तु—इस प्रकार की यदि व्यभिचार शंका की जाय तो हमारे यहाँ उस शंका का निवर्त्तक तर्क है, कि "यद्यत् कार्यं तत्तत् कर्त्तृजन्यम्" अर्थात् जो २ भी कार्य हैं वह किसी कर्त्ता से जन्य अवश्य है—अतः जहाँ कार्यत्व हेतु रहेगा, वहाँ कर्त्तृजन्यत्व साध्य अवश्य ही रहेगा—यह कार्यकारणभावानुकूल तर्क विद्यमान है। वही मूल में कहा है कि—"मम तु कर्त्तृत्वेन कार्यत्वेन" इत्यादि। आस्तिक के यहाँ और ईश्वर साधक प्रमाण है कि आकाश तथा पृथ्वी को उत्पन्न करनेवाला कोई एक देव अवश्य है जो विश्व (संसार) का कर्त्ता है—और संसार की रक्षा करनेवाला है। यही मूल में कहा है कि "द्यावाभूमी" इत्यादि।

बोधितः—पक्षधर्मतया च क्षित्यादावशरीरिकर्त्तृजन्यत्वं साधनीयमिति विशिष्टसाध्याप्रसिद्धिः-विरोधविशेषश्चेत्यत उक्तं **सिद्ध्यसिद्ध्योर्विरोधो नेति** । तथा च यदि पक्षधर्मतयाऽशरीरी सिद्धः तदा न **विरोधः**—नकर्त्तृत्वेऽशरीरित्वसामानाधिकरण्याभावः तदा कार्यत्वहेतोःशरीरिकर्त्तृकत्वव्यभिचारोपलंभेन तद्व्याप्त्याभावात् । यदि तु न सिद्ध स्तदाकर्त्तुरनुपस्थानेपि न विरोधः-न कर्त्तृत्वेऽशरीरित्वसामानाधिकरण्याभावग्रहः-विशेष्यतावच्छेदकप्रकारेण विशेष्यस्य "अशरीरस्य कर्त्तुः" अग्रहादिति भावः । **अनिबन्धना**—निर्बीजा—तर्काभावनिबन्धनेति यावत् । **असिद्धिर्नेति** । शरीरजन्यत्वरूपोपाधिमादाय व्याप्यत्वासिद्धिर्नेत्यर्थः । इदमुपलक्षणम्—शरीरजन्यत्वस्य कर्त्तृजन्यत्वव्यापकत्वस्यैवाऽसिद्ध्या तस्योपाधित्वासंभवादिति संक्षेपः ।

ननु कार्यं कर्त्तृजन्यं कार्यत्वाद् घटवदित्यत्रापि कार्यत्वमस्तु कर्त्तृजन्यत्वं मास्तु "कर्त्तृजन्यत्वाभाववति अपि कार्यत्वं स्यात्" इत्याकारकव्यभिचारशङ्काया निवर्तकतर्काभावस्तुल्य एवेत्यतस्तर्कं दर्शयति **मम त्विति** । नैयायिकस्येत्यर्थः । **कर्त्तृत्वेनेति** । आत्मत्वेनेत्यर्थः । नातः कारणतावच्छेदकानन्त्यं, न वा परंपरया कृतित्वस्य तथात्वम् । पूर्वं तु नित्यकृतिसिद्ध्यर्थं तथोपन्यासात् । **कार्यत्वेनेति** । कालिकेन ध्वंसमहाकालान्यत्वविशिष्टसत्तावत्त्वेनेत्यर्थः । यथाश्रुते कार्यत्वस्य जन्यतावच्छेदकत्वे आत्माश्रयः स्यात् । स्ववृत्तिकृतीयोपादानत्वाख्यंविषयत्व-समवायौ कारणकार्यतावच्छेदकसम्बन्धौ । स्वपदमात्मपरम् । **अनुकूलस्तर्क इति** । कार्यत्वं यदि

कर्त्तृजन्यत्वव्यभिचारि स्यात्तदा "कर्त्तृ"जन्यतावच्छेदकं न स्यात्, अनतिरिक्तवृत्तेरेवावच्छेदकत्वादिति।

एतेन स्थापनानुमाने शरीरिकर्त्तृकत्वं शरीरजन्यत्वं वोपाधिरित्यपि परास्तम्। उपदर्शितकार्यकारणभावरूपानुकूलतर्केण कार्यत्वे सकर्त्तृकत्वव्याप्यत्वनिर्णये सकर्त्तृकत्वव्याप्याव्यापके शरीरिकर्त्तृकत्वादौ साध्याव्यापकत्वानुमानसंभवे साध्यव्यापकतानिर्णयाभावेन नोपदर्शितोपाधिरिति ध्येयम्। ननु ईश्वरो यदि कर्त्ता स्यात्तदा प्रयोजनवान् स्यात्, सुखी स्यात्, दुःखी स्यादित्यादयः प्रतिकूलास्तर्काः कर्त्तृबाधका अपि सन्तीति चेत्। अत्र **आचार्यपादाः—**

> **तर्काभासतयाऽन्येषां तर्काशुद्धिरदूषणम्।**
> **अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम्॥**

**अन्येषां** प्रतिवादिनां यदीश्वरः कर्त्ता स्याच्छरीरी स्यादित्यादिभिस्तर्कैरत्रानुमाने या**ऽशुद्धिः** प्रतिबन्धायोद्भावनं **तन्न दूषणं** तेषां प्रतिकूलतर्काणामाभासत्वात् कर्त्तृत्वाभावरूपविपयाऽपरिशोधकत्वात् ते तर्का न बाधकाः। ईश्वरसिद्ध्यसिद्धिभ्यां व्याघातेनाऽऽभासत्वादिति पूर्वार्द्धफलितार्थः। ननु प्रतिकूलतर्कैरसिद्धि- [illegible] कूलतर्कमाह [illegible] उपकारकः [illegible] कार्यमात्रहेतुत्वावधारणात् कर्त्तृजन्यं न स्यात्कार्यं न स्यादित्यादितर्क एव कार्यलोपपदेन विवक्षितः। न च कर्त्रभावेपि कारणान्तरात्कार्यं स्यादिति वाच्यम्। कारणान्तरवत्कर्त्तुरपि कारणत्वात्, यत्किंचित्कारणाभावस्यैव कार्यानुत्पत्तिव्याप्यत्वात्, अन्यथा कर्त्तुरिव कारणान्तराणामभावेऽपि कार्यं स्यादिति जित चार्वाकैः। वेदोपीश्वरे प्रमाणम् तथाहि विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः॥ इति। अक्षरार्थस्तु एकः अनादि देवः *विश्वकर्मा द्यौश्च भूमिश्चेति द्यावाभूमी द्वितीयाद्विवचनं, धाता* इति ऊर्ध्वसप्तलोकोपलक्षणम् भूमिरधस्तात्। जनयन् सन् बाहुभ्यां बाहुस्थानीयाभ्यां धर्माधर्माभ्यां-सन्धमति-संगच्छते। धर्माधर्मौ हि लोकयात्रावहनाद् बाहू। पतत्रैः परमाणुभिः पंचमहाभूतैः संयोजयति। परमाणवो हि गतिशीलत्वात्पतत्रव्यपदेश्यः। विश्वतश्चक्षूंषि यस्य सः। अनेन सर्वज्ञत्वं चक्षुषा दृष्टेरुपलक्षणात्। विश्वतो मुखानि यस्य सः। अनेन सर्ववक्तृत्वं मुखेन वागुपलक्षणात्। विश्वतो बाहवो यस्य सः। अनेन सर्वसहकारित्वं बाहुना सर्वसहकारित्वोपलक्षणात्। विश्वतः पादा यस्य सः। पादस्य लोपोऽहस्त्यादिभ्य इति पादस्याऽन्त्यलोपः। अनेन व्यापकत्वं, पदा व्याप्तेरुपलक्षणात्। परमेश्वरस्य सर्वप्राण्यात्मकत्वाद् यस्य यस्य प्राणिनो ये चक्षुरादयस्ते तदुपाधिकस्य परमेश्वरस्यैवेति सर्वत्र चक्षुरादयः संपद्यन्ते इत्यर्थ इति।

द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।
समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः ॥२॥

पदार्थों का विभाग करते हैं—"द्रव्यं गुणस्तथा कर्म" "इत्यादि ग्रन्थ से ।
द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय, अभाव, ये सात पदार्थ कहे हैं ।

---

पदार्थान्विभजते द्रव्यं गुण इति ।

संक्षेपतः शास्त्रप्रतिपाद्यज्ञानार्थं आदौ पदार्थान् कथयति द्रव्यं गुण इति । यत इत्यादिः । पदार्थ इतिविपरिणामेन द्रव्यादिषु प्रत्येकमन्वयात्, यतो द्रव्यादिकं पदार्थः—अतः पदार्थाः सप्तेत्यन्वयः । यद्यपि द्रव्याणां नवविधत्वाद् द्रव्याणीत्येव वक्तुमुचितं तथापि जातावेकत्वभानोपगमेन द्रव्यमित्येकवचनसंगतिः । तथा च द्रव्यमित्यस्य द्रव्यत्वावच्छिन्नमित्यर्थः । अत एवाऽग्रे द्रव्यत्वजातौ किं मानमिति पूर्वपक्षोपि सङ्गच्छते । अन्यथा पूर्वं द्रव्यत्वजातेरप्रतिपादनात्पूर्वपक्षाऽसङ्गतिः स्यात् । एवं गुण इत्यादावपि एकवचनसंगतिर्बोध्या । गुणत्वावच्छिन्न इति तदर्थः । संयोगापेक्षया कर्मणोऽतिरिक्तत्वं नास्तीति मतं निराकर्तुं "तथे" त्युक्तम् । यथा गुणः पदार्थान्तरं तथा कर्माऽपि । कर्म कर्मत्वावच्छिन्नमित्यर्थः । सामान्यं—जातिः—सामान्यत्वरूपोपाध्यवच्छिन्नमित्यर्थः । विशेषेण सहितं सविशेषं सविशेषमेव सविशेषकमिति विग्रहेण परमाणूनां परस्परभेदसाधकत्वरूपविशेषविशिष्टो विशेष इत्यर्थः । तथा च परमाणूनां परस्परभेदसिद्ध्यर्थं विशेषपदार्थोऽङ्गीकर्त्तव्य इति भावः । समवायः-सम्बन्धविशेषः । अधिकरणात्मकतयाऽभावो भावरूप एवेति प्रभाकरमतं निरसितुं तथेत्युक्तम् । तथा च यथा समवायोऽतिरिक्तपदार्थस्तथाऽभावोपीति भावः । युक्तिश्च तत्तन्निरूपणावसरे वक्ष्यते । तथा च द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावाः सप्त पदार्था इति फलितम् ।

अत्रेदं बोध्यम् । द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावाः पदार्था इति वाक्येन पदार्थानुद्दिश्य द्रव्यादयो विधीयन्ते । अत्र पदार्था उद्देश्याः-उद्देश्यतावच्छेदकं "उद्देश्यांशे विशेषणीभूतं" पदार्थत्वम् । द्रव्यादीनां विधेयत्वे विधेयविशेषणीभूतंद्रव्यत्वादिकं विधेयतावच्छेदकं, तच्च न विधेयीभूतद्रव्यादिसप्तानुगतं-द्रव्यत्व-गुणत्व-कर्मत्व-सामान्यत्व-विशेषत्व-समवायत्वा-भावत्वानां पदार्थविभाजकोपाधीनां प्रत्येकवृत्तित्वात् । एवं च पदार्थो द्रव्यं-पदार्थो गुणः-पदार्थः कर्म-पदार्थः सामान्यं पदार्थो विशेषः पदार्थः समवायः पदार्थोऽभाव इत्येवंरीत्याऽभिधाने पदार्थत्वावच्छेदेन द्रव्याद्यभेदाभावात् पदार्थत्वसामानाधिकरण्येनैव द्रव्याद्यभेदस्य विधेयतयाऽधिकपदार्थनिषेधो न स्यात्, अतो द्रव्यादिसप्तानुगतं द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावान्यतमत्वस्यैव विधेयत्वं वाच्यम् । तथा च पदार्थाः तादृशान्यतमत्ववन्तः इत्युद्देश्यविधेयभावो जातः । तत्र च असति बाधके विधेये विधेयसंसर्गे वा उद्देश्यतावच्छेदकव्यापकत्वं अवच्छेदावच्छेदेन विशिष्टबुद्धौ भासते इति नियमबलेन पदार्थत्व-

व्यापकत्वं तादृशान्यतमत्वे यथा भासते तथा तुल्यवित्तिवेद्यतया पदार्थत्वे तादृशान्यतमत्वव्याप्यत्वमपि भासते। तथा च पदार्थत्वं तादृशान्यतमत्वव्याप्यमिति व्याप्तिलाभः। एवं चाऽष्टौ पदार्था न सन्तीति सिद्धम्। अन्यथा पदार्थत्वस्याऽष्टमपदार्थेपि सत्त्वेन तादृशान्यतमत्वव्याप्तिविरोधापत्तेः। तथा च पदार्थाः "द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावात्मानः" द्रव्याद्यभावान्तान्यतमत्ववन्त इत्यत्र पदार्थत्वविशेष्यकद्रव्याद्यन्यतमत्वनिरूपितव्याप्तिनिश्चयार्थकं सप्तग्रहणम्। ननु उक्तव्युत्पत्तिसहकृतेन उद्देश्यविधेयभावमहिम्नैव निरुक्तनिश्चयसंभवात्सप्तपदं व्यर्थमिति चेन्न। समानविभक्तिकस्थले उद्देश्यविधेयभावस्य विवक्षाधीनतया तादृशान्यतमत्वमुद्देश्यतावच्छेदकीकृत्य पदार्थत्वमपि विधातुं शक्यते "द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः पदार्थत्ववन्त इत्युद्देश्यविधेयभावो बोध्यः"। तथा चोक्तव्युत्पत्तिबलाद् द्रव्याद्यन्यतमत्वं पदार्थत्वव्याप्यमित्यपि व्याप्तिनिश्चयः स्यात्, तद्व्यावृत्त्यर्थमेव सप्तग्रहणमित्याशयात्। न च तद्व्यावृत्तिर्व्यर्थेति वाच्यम्। तथा सति अतिरिक्तशक्त्यादिपदार्थसत्त्वेपि तादृशनिश्चयोपपत्त्या द्रव्यादय एव पदार्था इति लाभो न स्यात्। तादृशान्यतमत्वस्यैव विधेयतेति बोधनार्थैव सप्तग्रहणमिति। सप्तग्रहणं स्पष्टार्थमिति बहवः।

ननु द्रव्याद्यन्यतमत्वं यदि द्रव्यादिवृत्तिप्रत्येकधर्मावच्छिन्नप्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वं तदाऽप्रसिद्धिः, द्रव्यं न गुणो न कर्म न सामान्यं न विशेषो न समवायो न अभावो इति प्रतीतिविषयीभूतभेदकूटवतोऽप्रसिद्धेरिति चेन्न। प्रकृते द्रव्याद्यन्यतमत्वं–द्रव्यादिभेदसप्तकाभाववत्त्वम्। तथा च द्रव्यादिभेदानां प्रत्येकं प्रसिद्धानां सप्तानां कुत्राप्यसत्त्वेन तादृशभेदसप्तकत्वावच्छिन्नाभावस्य सर्वत्र सत्त्वान्नाप्रसिद्धिः।

ननु तथापि कथं सप्त पदार्था इति गुणादिषु सप्तत्वसंख्याविरहात्, गुणे गुणानङ्गीकारादिति चेन्न। अपेक्षाबुद्धिविशेषविषयत्वरूपस्य सप्तत्वस्य सर्वत्र सम्भवादिति ध्येयम्।

**पदार्थान् विभजते** इति द्वितीयार्थो विशेष्यकत्वम्, तस्य धात्वर्थैकदेशे ज्ञानेऽन्वयः। समभिव्याहृतपदार्थतावच्छेदकीभूतधर्मावान्तरधर्म[1]प्रकारकज्ञानानुकूलो

---

१ अत्रेदं बोध्यम्। धर्मे तद्धर्मावान्तरत्वं च तद्धर्मव्याप्यत्वम्। तच्च न तदभाववद्वृत्तित्वरूपं-पदार्थत्वावान्तरत्वाप्रसिद्धेः, किन्तु पदार्थत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्। पदार्थत्वाधिकरणगुणवृत्तिभेदप्रतियोगितावच्छेदकत्वाद्द्रव्यत्वस्य पदार्थत्वावान्तरत्वमुपपन्नम्। एवं गुणत्वादिषु अपि बोध्यम्। न च पृथिवीत्वमादाय अष्टौ पदार्था इति प्रयोगापत्तिः। तद्धर्मावान्तरत्वं हि तद्धर्मसाक्षाद्व्याप्यत्वम्, तच्च तद्धर्मव्याप्यत्वे सति तद्धर्मव्याप्याऽव्याप्यत्वम्, तथा च पृथिवीत्वस्य पदार्थत्वसाक्षाद्व्याप्यत्वाभावेन तदापत्तिविरहात्। पदार्थत्ववारणाय सत्यन्तं-तच्चोक्त न्यूनवृत्तित्वरूपं ग्राह्यम्। पृथिवीत्वादिवारणाय विशेष्यदलम्। तत्रापि प्रथमव्याप्यत्वं न्यूनवृत्तित्वरूपं, तेन नाऽप्रसिद्धिः। अव्याप्यत्वघटकद्वितीयव्याप्यत्वमपि

अत्र सप्तमस्याऽभावत्वकथनादेव षण्णां भावत्वे प्राप्ते तेन भावत्वेन पृथगुपन्यासो न कृतः। एते च पदार्था वैशेषिके प्रसिद्धा नैयायिकानामप्यविरुद्धाः। प्रतिपादितं चैवमेव भाष्ये। अत एवोपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामतिरिक्तपदार्थत्वमाशंकितम्।

प्रश्न—"पदार्थो द्विविधः—भावोऽभावश्च" अर्थात् पदार्थ दो प्रकार के हैं—भाव और अभाव। उसमें द्रव्यादि ६ भाव पदार्थ हैं—सप्तम अभाव है। इस रीति से पदार्थ-निरूपण क्यों नहीं किया। उत्तर—सप्तमपदार्थ को अभाव कहने से ही ६ पदार्थ स्वयं भाव सिद्ध हो जाते हैं—अतः ६ भाव पदार्थों का भावत्वेन अलग उपन्यास नहीं किया। प्रश्न—गौतमतन्त्र में १६ पदार्थों का निरूपण किया है—वे भी यहाँ निरूपणीय हैं तो सातवीं क्यों कहे। उत्तर ये ७ पदार्थ वैशेषिक लोग मानते हैं इसीलिये वैशेषिकशास्त्र में प्रसिद्ध हैं, परन्तु गौतमानुयायिओं को भी पदार्थों के विषय में कोई विरोध नहीं है—अर्थात् १६ पदार्थों का इन सात ही पदार्थों में अन्तर्भाव है। इसमें भाष्य सम्मति बतला रहे हैं—"प्रतिपादितञ्चेति" अर्थात् भाष्य में ऐसा ही प्रतिपादन किया है कि ७ ही पदार्थ हैं—१६ पदार्थों का इन्हीं ७ में अन्तर्भाव है। इसीलिये उपमान-चिन्तामणि ग्रन्थ में सात ही पदार्थ क्यों? जब कि शक्ति-सादृश्य भी उनसे अतिरिक्त पदार्थ हो सकते हैं ऐसी आशंका की है।

---

व्यापारो विपूर्वकभजधातोरर्थः। कृतिश्चाऽऽख्यातार्थः। तथा च पदार्थविशेष्यकपदार्थत्वावान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमान् मूलकार इति बोधः। तादृशज्ञानं द्रव्यं गुण इत्याद्याकारकम्। तदनुकूलव्यापारो द्रव्यं गुणस्तथाकर्मेत्यादिपद्यात्मकः।

ननु सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासां प्रति हेतुतया लक्षणात्मकसाधारणधर्मप्रकारकज्ञानाभावात् कियन्तः पदार्था इति जिज्ञासानुत्पत्त्या विभागकरणमनुचितमिति चेन्न। पदार्था इति समाख्या लक्ष्यपरम्। तन्निर्वचनं लक्षणं पदस्य अर्थ इति तन्निर्वचनात्। ईदृशनिर्वचनेन पदसंबन्ध्यभिधाविषयत्वस्य लाभः।

---

न्यूनवृत्तित्वरूपमेव, अन्यथा पदार्थत्वव्याप्यद्रव्यत्वादिव्याप्यत्वस्यैव द्रव्यत्वादौ सत्वाद्वान्तरत्वानुपपत्तेः। विशेष्यदलघटकस्वव्याप्यत्वं स्वाश्रयवृत्तित्व-स्वानाश्रयवृत्तित्वोभयसंबन्धेन द्रव्यत्वादिविशिष्टान्यत्वेन विशेषणीम्। तेन पदार्थत्वव्याप्यद्रव्यगुणान्यतरत्वव्याप्यत्वस्यैव द्रव्यत्वादौ सत्त्वेपि न क्षतिः। स्वपदं द्रव्यत्वादिपरम्। तथाचोक्तोभयसंबन्धेन द्रव्यत्वादिविशिष्टत्वस्य तादृशान्यतरत्वे सत्वात् स्वव्याप्यपदेन तदग्रहणान्नोक्तदोषः। तथा च पदार्थत्वविशिष्टधर्मप्रकारकज्ञानानुकूलव्यापारो धात्वर्थः, धर्मे पदार्थत्ववै० स्वव्याप्यत्व-स्वविशिष्टविशिष्टभिन्नत्वोभयसंबन्धेन। स्वद्वयं पदार्थत्वपरम्। स्ववै० स्वव्याप्यत्व-स्वसमानाधिकरणद्रव्यत्वादिमदन्यत्वोभयसं०। स्वद्वयं पूर्ववद्। द्रव्यत्वादिसत्ता च स्वाश्रयवृत्तित्व-स्वानाश्रयवृत्तित्वोभयसं०। स्वद्वयं प्रथमात्वादिपरम्। विशिष्टवै० स्वव्याप्यत्वसंबन्धेनेति संक्षेपः। स्वपदं विशिष्टपरम्।

**ननु कथमेत एव पदार्थाः, शक्तिसादृश्यादीनाममप्यतिरिक्तपदार्थत्वात्। तथाहि—मण्यादिसमवहितेन वह्निना दाहो न जन्यते, तच्छून्येन तु जन्यते तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते, उत्तजकेन मण्याद्यपसारणेन च जन्यते इति कल्प्यते।**

आशंका ग्रन्थ—ये ही ७ पदार्थ क्यों मानें जब कि शक्ति-सादृश्य भी अतिरिक्त पदार्थ सम्भव हैं। शक्ति को अतिरिक्त पदार्थ सिद्ध करते हैं। तथाहि—प्रश्न—मीमांसक नैयायिक से पूछता है कि यदि वन्हि दाह के प्रति कारण है तो जहाँ वन्हि तथा चन्द्रकान्तमणि दोनों हैं—वहाँ दाह क्यों नही होता है— क्योंकि "कारणसत्त्वे कार्यसत्वम्" कारण के रहने पर कार्य अवश्य ही होना है—अतः केवल वन्हि दाह के प्रति कारण नहीं है—अपितु "शक्तिविशिष्टवन्हि" दाह के प्रति कारण है—ऐसा तुम्हें (नैयायिक को) मानना चाहिए। चन्द्रकान्तमणि का सन्निधान होने से वन्हि में दाह नहीं होता है—चन्द्रकान्त के शून्यकाल में दाह होता है। वहाँ चन्द्रकान्तमणि से वन्हि की दाहकारणीभूत शक्ति नष्ट हो जाती है—और दोनों के रहते हुए सूर्यकान्तमणि को ले आवें, या दोनों में से चन्द्रकान्तमणि का अपसारण कर लें तो दाह अवश्य ही होता है ऐसी कल्पना की जाती है। अतः शक्ति अतिरिक्त पदार्थ है यह सिद्ध हुआ।

---

तत्रापि पदसंबन्धित्वांशस्याऽव्यावर्त्तकत्वादभिधेयत्वं पदार्थसामान्यलक्षणं लभ्यते। **अर्थोऽभिधेय** इति कोषेनाऽर्थपदस्याऽभिधेयत्वावच्छिन्ने शक्तिप्रतिपादनात्। एवं ऋगताविरयनुशासनाद् गत्यर्थको धातुः, तस्य गुणे कृते अरिति धातुनिष्पत्तिः। ततो विषयार्थकथप्रत्यये अर्थ इति शब्दो निष्पन्नः। तथा च गत्यर्थकधातूनां ज्ञानार्थकत्वनियमेन ज्ञेयत्व-प्रमेयत्वमित्यपि पदार्थसामान्यलक्षणं बोध्यम्।

ननु ग्रन्थान्तरे "पदार्थो द्विविधो भावोऽभावश्च-तत्र द्रव्यगुणकर्मसामान्यविशेषसमवायाः षड् भावाः, सप्तमस्त्वभाव इति क्रमेण" विभागो दृष्टः, तथैवाऽत्रापि विभागः कुतो न कृतः।

"ग्रन्थान्तरीयविभागपक्षे पदार्थविभाजकं भावत्वं अभावत्वं चेति धर्मद्वयमेव। द्रव्यत्वादीनां षण्णां पदार्थविभाजकीभूतभावत्वविभाजकत्वमेव। सन्ति तत्पक्षेपि सप्तपदार्था एव। एतद्ग्रन्थरीत्या तु द्रव्यत्वगुणत्वादयः सप्त धर्मा एव साक्षात्पदार्थविभाजका इति विशेषः" इत्यत आह **अत्रेति**। पक्षे इत्यर्थः। **सप्तमस्य**= अभावस्य। अभावत्वकथनादेवेति। अभावत्वप्रकारकबोधजनकादेवेत्यर्थः। "तथाऽभाव" इत्यनेन सप्तमस्यैवाऽभावत्वबोधनादिति यावत्। **षण्णां**=द्रव्यगुणकर्मसामान्यविशेषसमवायानाम्। **अर्थात्प्राप्तं**=अनुमानात्प्राप्तम्। तथा च वाचकपदं विनापि भावत्वमुपस्थितमिति यावत्। यद्यपि सप्तमस्याऽभावत्वकथनात्तदितरेषां भावत्वं दुर्लभमेव, न ह्येकस्य ब्राह्मणत्वे प्रतिपादिते तदितरेषां सर्वेषामब्राह्मणत्व प्रतिपादितं

भवति। तथाप्येतस्य विभागवाक्यतया परस्परमसङ्कीर्णव्याप्यधर्मस्यैव विभाजकतया द्रव्यादीनामभावत्ववत्त्वेऽभावत्वं विभाजकमेव न स्यात्। "द्रव्यादीनामभावत्ववत्त्वे द्रव्यत्वादीनां पदार्थत्वसाक्षाद्व्याप्यत्वविरहापत्त्या द्रव्यत्वादिकं वा विभाजकं न स्यात्" इति द्रव्यादीनामभावभिन्नत्वात्परिशेषाद्भावत्वं प्राप्तमिति भावः। अनुमानं च द्रव्यादयो भावाः अभावत्वविरुद्धधर्मवत्त्वादित्याकारकं बोध्यम्। **तेन** = प्राप्तत्वेन, उपस्थितत्वेनेति यावत्। **भावत्वेन पृथगुपन्यासो न कृत इति**। तेषामिति शेषः। "पदार्थो द्विविधः—भावोऽभावश्च" द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः इत्यादिशब्देन पृथगुपन्यासो न कृत इत्यर्थः।

ननु अन्ये पदार्थाः कुतो न सन्ति न्यायसूत्रे षोडशपदार्थनिरूपणादित्याशङ्कायामाह **एते च पदार्था** इति। द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावा इत्यर्थः। **प्रसिद्धा** इति। प्रमाविषया इत्यर्थः। **अविरुद्धा** इति। न भ्रमज्ञानविषया इत्यर्थः। उक्तार्थे भाष्यसम्मतिमाह **प्रतिपादितं** चेति। **एवमेव** = द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावाः सप्त पदार्थाः, षोडशानामत्रैवाऽन्तर्भावादिति प्रतिपादितमित्यर्थः। **भाष्ये** = वात्स्यायनभाष्ये। अयमभिप्रायः। **आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति** सूत्रप्रतिपादितद्वादशप्रमेयान्तर्गताऽर्थनिरूपणप्रस्तावे परमकारुणिकेन भगवता वात्स्यायनाचार्येण द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयमित्युक्तम्।

भाष्यकृतां सम्मतिमुक्त्वा मणिकृतां सम्मतिमाह **अत एवेति**। भ्रमाविषयत्वादेवेत्यर्थः। **उपमानचिन्तामणौ**-तत्त्वचिन्तामणिग्रन्थस्योपमानखण्डे। **आशङ्कितमिति**। शक्तिसादृश्यादयः अतिरिक्ताः पदार्थाः सप्तपदार्थभिन्नत्वादित्यनुमानेनाऽतिरिक्तत्वं साधितमिति भावः।

वस्तुतस्तु **सप्तपदार्थभिन्नतयेति,** द्रव्यत्व-गुणत्व-कर्मत्व-सामान्यत्व-विशेषत्व-समवायत्वाऽ-भावत्वान्यतमभिन्नतयेत्यर्थः। **शक्तिसादृश्यादीनामिति**। शक्तित्वसादृश्यत्वयोरित्यर्थः। **अतिरिक्तपदार्थत्वमिति**।

पदार्थविभाजकधर्मत्वमित्यर्थः। तथा च शक्तित्वं-सादृश्यत्वं वा पदार्थविभाजकं तादृशान्यतमप्रतियोगिकभेदवत्त्वात् यन्नैवं तन्नैवं यथा पृथिवीत्वमित्यनुमानेन पदार्थविभाजकत्वमाशंकितम्। **तत्रापि** शक्तित्वसादृश्यत्वयोःप्रमाणत्वादिपदार्थविभाजकप्रतियोगिकभेदवत्त्वहेतुना पदार्थविभाजकत्वस्य शंकामकृत्वा द्रव्यत्वादिपदार्थविभाजकप्रतियोगिकभेदवत्त्वहेतुना पदार्थविभाजकत्वशंकया द्रव्यत्वादीनामेव पदार्थविभाजकत्वं चिन्तामणिकृदनुमतमिति लभ्यते। अथवा शक्तिसादृश्यादिकं पदार्थान्तरं सप्तपदार्थभिन्नत्वादिति यथाश्रुतानुमाने प्रमाणादिषोडशपदार्थभिन्नत्वरूपहेत्वननुसरणेन ज्ञायते यद्द्रव्यत्वादीनामेव पदार्थविभाजकत्वं चिन्तामणिकृदनुमतमिति भावः।

**एवं सादृश्यमप्यतिरिक्तः पदार्थः, तद्धि न षट्सु भावपदार्थेषु अन्तर्भवति सामान्येऽपि सत्त्वात्। यथा गोत्वं नित्यं तथाऽश्वत्वमपि नित्यमिति सादृश्यप्रतीतेः।**

ऐसे ही सादृश्य भी अतिरिक्त पदार्थ है—क्योंकि सादृश्य का ६ भाव पदार्थों में तो अन्तर्भाव है नहीं—कारण कि सादृश्य सामान्य में भी रहता है—जैसे गोत्व नित्य है वैसे अश्वत्व भी नित्य है—इस प्रकार अश्वत्व जाति में गोत्वजाति के सादृश्य की नित्यत्वेन प्रतीति होती है। इससे यह सिद्ध हुआ कि जो वस्तु सामान्य में रहती है—उसका ६ भाव पदार्थों में अन्तर्भाव नहीं हो सकता है।

---

शक्तिसादृश्ययोरुपस्थितत्वादाशंकते **नन्विति।** तथा च पदार्थत्वं द्रव्याद्यन्यतमत्वव्याप्यं नवेति विप्रतिपत्तिर्बोध्या[1]। एते एव[2] पदार्थाः कथमित्यन्वयः। **एत एवेति।**

---

१ विप्रतिपत्तेराकारस्तु द्रव्याद्यन्यतमत्वं पदार्थवृत्तिभेदप्रतियोगितावच्छेदकं न वेति बोध्यः। तेन निषेधकोटेरप्रसिद्धावपि न क्षतिः।

२ *एवकारार्थस्त्वनेकप्रकारः क्वचिदत्यन्ताऽयोगव्यवच्छेदः क्वचिदन्ययोगव्यवच्छेदः।* तत्र क्रियासमभिव्याहारस्थले आद्यः। यथा नील सरोजं भवत्येवेत्यादौ। अत्यन्ताऽयोगः-अत्यन्तयोगाभावः। व्यवच्छेदोऽभावः योगाभावश्च प्रकृते नीलाभावः। तत्राऽत्यन्तत्वं व्यापकत्वम्। तथा च सरोजत्वव्यापकीभूतो यो नीलाभावस्तदभाववत्सरोजमिति बोधः। तथा च सरोजत्वव्यापकनीलाभावस्याऽभावः एवकारेण प्रत्याय्यते। न च नीलाभावे सरोजत्वव्यापकत्वमप्रसिद्धमिति वाच्यम्। सरोजत्वव्यापकत्वाभाववन्नीलाभाववत्सरोजमिति बोधस्वीकारात्। न च नील सरोजं भवत्येवेत्यत्राऽभावान्वयस्यापि प्रामाणिकत्वेन सरोजत्वविशिष्टे नीलाभाववत्ताग्रहे कथं सरोजत्वविशिष्टे नीलत्वविशिष्टबुद्धिरिति वाच्यम्। सरोजत्वसामानाधिकरण्येन तादृशाभावनीलिमयोर्बोध इति न दोषः।

विशेष्यसंगतैवकारस्थले द्वितीयः। यथा पार्थ एव धनुर्धर इत्यादौ। अन्यस्मिन्-पार्थान्यस्मिन् योगव्यवच्छेदः-धनुर्धरत्वाभावः, तथा च पार्थान्यवृत्त्यत्यन्ताभावप्रतियोगिधनुर्धरत्ववान्पार्थः। पार्थान्यस्मिन्धनुर्धरत्वाभावः। पार्थान्यो धनुर्धरभिन्न इति वा बोधः। न च प्रथमे धनुर्धरपदस्य धनुर्धरत्वपरतया धनुर्धरत्वलाभेऽपि नामार्थयोरभेदातिरिक्तसंबन्धेनाऽन्वयबोधस्याऽव्युत्पन्नत्वात्कथं धनुर्धरत्वलक्षणनामार्थस्य नामार्थेन पार्थेनाऽन्वय इति चेत्, सत्यम्। पार्थान्यवृत्त्यन्योन्याभावप्रतियोगिधनुर्धराभिन्नः पार्थ इत्यन्वयबोधस्वीकारेण न दोषः।

विशेषणसमभिव्याहृतैवकारस्थले तृतीयः। यथा शंखः पाण्डुर एवेत्यादौ। अयोगस्य-तादात्म्याभावस्य व्यवच्छेदोऽभावः। तथा च पाण्डुरतादात्म्याभावाभाववान्शंख इति बोधः।

परन्तु एते एव कथं पदार्था इत्यत्र यद्यपि नैवकारस्याऽत्यन्तायोगाऽन्ययोगाऽयोगव्यवच्छेदाः संभवन्त्यर्थाः। क्रियासमभिव्याहाराभावेन प्रथमार्थासंभवात्। सप्तान्यस्य सप्ततादात्म्याभावस्य चाऽप्रसिद्ध्या चरमयोरर्थयोरप्यसंभवात्। तथापि एवकारेणैतच्छब्दार्थे द्रव्यादिसप्तत्वरूपे पदार्थव्यापकत्वं बोध्यते। तथा चैते न पदार्थव्यापका इति शंकितुराशयः।

द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावा एव कथं पदार्था इत्यर्थः। तत्र हेतुमाह शक्तिसादृश्यादीनामिति। तत्तत्पदवाच्यानामित्यर्थः। आदिना स्वत्वाधारत्वपरिग्रहः। **अतिरिक्तपदार्थत्वादिति**। द्रव्यत्वादिसंबन्धकल्पने प्रमाणाभावेन प्रत्येकं द्रव्यत्वाद्यभाववत्त्वादित्यर्थः।

द्रव्यादिसप्तान्यतमत्वं न पदार्थत्वव्यापकं द्रव्यत्वाद्यभाववत्'सप्तपदार्थातिरिक्त'पदार्थवृत्त्यभावप्रतियोगित्वात् घटत्वादिवत्, तुल्यवित्तिवेद्यतया पदार्थत्वं न द्रव्यादिसप्तान्यतमत्वव्याप्यं तादृशान्यतमत्वाभाववत्"सप्तपदार्थभिन्न"पदार्थवृत्तित्वात् यन्नैवं तन्नैवं घटः इत्यनुमानं फलितं, तत्रादौ शक्तेरतिरिक्तपदार्थत्वं साधयति **तथाहीत्यादिना**। अत्र वह्निर्दाहानुकूलाऽदृष्टाऽतीन्द्रियधर्मसमवायी न वेत्याकारिका विप्रतिपत्तिर्बोध्या। प्रत्यक्षाभावाद् युक्तिं दृढयति **मण्यादिसमवहितेनेति**। मण्यादिविशिष्टेनेत्यर्थः। आदिना मन्त्रौषध्यादिपरिग्रहः। वह्निनेति। अनेन वह्नित्वरूपकारणतावच्छेदकविशिष्टस्य "कारणीभूत"वह्नेः सत्त्वं सूचितम्। **दाहः** = पूर्वरूपध्वंसः, रूपान्तरोत्पत्तिर्वा। **तच्छून्येन** = मण्यादिशून्येन। वह्निनेति पूर्वेणान्वयः। **जन्यते इति**। दाह इत्यादिः। तथा च वह्नित्वमिवाऽन्योपि "वह्निनिष्ठ" कारणतावच्छेदकधर्मो वाच्यः स एव शक्तिरिति भावः। अथ वह्नित्वेनेव शक्तिमत्त्वेन कारणत्वसिद्धावपि अन्वयव्यभिचारो दुर्वार इत्यत आह **तत्रेति**। पूर्वोक्तयुक्त्या शक्तिसिद्धावित्यर्थः। **वह्नौ** = वह्निनिष्ठा। **दाहानुकूला** = दाहजनकतावच्छेदिका। एतन्मते शक्तिमद्वह्नित्वेनैव हेतुत्वात्। इत्थं च दाहत्वावच्छिन्ने संयोगेन शक्तिमद्वह्नित्वेन स्वाश्रयसंयोगेन स्वातन्त्र्येण शक्तित्वेन हेतुत्वकल्पनाद्वा शक्तिसिद्धिरित्यर्थः। नाश्यते इति। यद्यपि मण्यादिना शक्तिरभिभूयते इत्यपि मीमांसकमतं—तथापि कल्पनागौरवमियैतदपहाय निष्कृष्टमतमेवाभिहितम्। नाश्यते इत्यस्य इतिकल्प्यते इत्यनेनाऽन्वयः। तथा च वह्निवृत्तिशक्तिं प्रति मणित्वेन "मणेः" नाशकतास्वीकारेण मण्यादिसत्त्वे शक्तेरभावान्न दाहापत्तिरिति भावः।

अयं भावः। शक्तिस्वीकर्तृप्रभाकरमते कारणीभूताभावप्रतियोगित्वं न प्रतिबन्धकत्वं, दाहं प्रति मण्यभावानामपि हेतुत्वापत्त्या गौरवात्, किन्तु कारणतावच्छेदकविघटकत्वमेव तत्, तथा च वह्निनिष्ठः कश्चिदतीन्द्रियधर्मः शक्त्याख्यः स्वीकार्यः। मण्यादिसमवधानकाले वह्निनिष्ठतादृशशक्तेर्नाशेन कारणतावच्छेदकीभूतशक्तिविशिष्टकारणाभावान्न दाहापत्तिरिति भावः। ननु मास्तु मण्यादिसमवधानदशायां दाहजनकीभूतशक्त्यभावेन दाहोत्पादः, शक्तिजनकोत्पादनियामकहेतुसत्त्वदशायां शक्त्युत्पादः स्यादेवेत्यत आह **उत्तेजकेनेति**। अस्य जन्यते इत्यनेनान्वयः। उत्तेजकेन शक्तिर्जन्यते इति यावत्। **मण्याद्यपसारणेन चेति**। अस्याप्यन्वयः पूर्ववत्। अत्र चकारो वाकारार्थे, न तु समुच्चयार्थे, उत्तेजकमण्याद्यपसारणयोरेकसत्त्वे-

पि दाहोत्पत्तेः समुच्चितयोर्दाहकारणत्वाऽसंभवात्। तथाचोत्तेजकाभावविशिष्टम-ण्यभावादेरेव शक्तिनियामकत्वादिति भावः।

न चोत्तेजकस्य मण्याद्यभावस्य वा दाहं प्रत्येव हेतुतास्तु, तावतापि मणि-समवधानकाले न दाहापत्तिः, तथाचाऽनन्तशक्तिपदार्थकल्पनमयुक्तमेवेति वाच्यम्। मण्यभावत्वेन रूपेण स्वातन्त्र्येण हेतुताकल्पने गौरवात्। वस्तुतो मीमांसकैर्घटा-दिकं प्रति तत्तत्कारणेषु घटाद्यनुकूलां शक्ति कल्पयित्वा तादृशविलक्षणशक्तिमत्त्वेनैव कारणत्वस्याङ्गीकाराद्दण्डचक्रादिभेदेन न कारणताबाहुल्यमित्यपि लाघवं बोध्यम्।

कल्प्यते इति। वह्निर्दाहानुकूला[1]ऽधिष्ठाऽतीन्द्रियधर्मसमवायी दाहजनकत्वा-ददृष्टविशेषवदात्मवदित्यनुमानेन शक्तिसिद्धिरिति भावः। अनुकूलत्वं च जनक-तावच्छेदकमाधारणम्। तच्च कारणतावच्छेदकाऽवृत्ति अन्यथासिद्धिचतुष्टयशून्यत्वे सति कार्यनियतपूर्ववर्तित्वम्। नातः शक्तेर्जनकतावच्छेदकत्वाददृष्टस्य तु जनकत्वेपि न क्षतिः। कार्यमात्रं प्रति अदृष्टवदात्मन एव तथात्वमित्यपरे।

ननु अनया युक्त्या न शक्तिसिद्धिः, वन्ध्यास्त्रीसंप्रयोगादौ दृष्टसाद्गुण्येपि-अदृष्टविलंबात्फलविलंब इतिवदत्रापि तद्विलंबाद्विलम्ब इति चेत्। नहि दृष्टसामग्रीसंपत्तौ अदृष्टविलंबात्कार्यविलंबो दृष्टः। वन्ध्यास्त्रीसंप्रयोगादौ विजातीयसंयोगरूपदृष्टहेत्व भावेन फलानुत्पादः, इतरथाऽदृष्टविलंबादेव कार्यविलंबे दृष्टकार्यकारणकथा विलीयेत, तस्मात्संभवति दृष्टसाद्गुण्ये तथाकल्पनाया न्याय्यत्वाच्छक्तिसिद्धिरिति।

नन्वेवं शक्तिसिद्धावपि तस्या अतिरिक्तत्वे किं मानमिति चेन्न। शक्तिः अतिरिक्तः पदार्थः क्लृप्तपदार्थानन्तर्भूतत्वादित्यनुमानेनाऽतिरिक्तत्वसिद्धिः। क्लृप्त-पदार्थानन्तर्भावश्चेत्थम्—शक्तिर्न द्रव्यात्मिका गुणवृत्तित्वात् गुणत्ववत्। न च स्वरूपासिद्धिः। गुणस्यापि शक्तिमत्त्वेनैव हेतुत्वात्।

अत्र पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यता, तेन द्रव्याश्रयं शक्तेर्भिन्नत्वे हेतूनां भागासिद्धत्वेऽपि न दोषः। पक्षतावच्छेदकं चोभयसाधारणं शक्तिपदवाच्यत्वं, शक्तिमात्रस्यैव द्रव्यरूपत्वाङ्गीकर्त्रा समं विवादे एवानुमानम्, तेन शक्तिषु चालनीन्यायेन द्रव्यादिभेदमादाय नांशतः सिद्धसाधनावकाशः। यद्वा भागासिद्धिर्न दोषायेति मन्यमतेनेदमनुमानम्, तथाच पक्षतावच्छेदकावच्छेदेनैव साध्यसिद्धिरुद्देश्येति न काप्यनुपपत्तिरिति ध्येयम्। शक्तिर्गुणकर्मभिन्ना गुणकर्म-वृत्तित्वादेव। न च सामान्याद्यन्यतमरूपा उत्पत्तिमत्त्वे सति विनाशित्वादिति।

विभागव्याघाताय सादृश्यमपि व्यवस्थापयति एवमिति। अतिरिक्त-शक्तिसिद्धिरिवेत्यर्थः। नहि शक्तिवत्सादृश्येऽप्यनुमानाऽपेक्षा तस्य प्रत्यक्षसिद्धत्वात्,

---

[1] अजनकशक्तत्ववह्निनिष्ठानुकूलरूपमादाय सिद्धसाधनवारणाय दाहानुकूलेति। अदृष्टवदात्मसंयोगमादाय सिद्धसाधनवारणायाऽधिष्ठेति। *उष्णस्पर्शमादाय सिद्धसाधन-वारणायाऽतीन्द्रियेति।

किन्त्वनुमानेन तस्याऽतिरिक्तत्वं साधयति **अतिरिक्तः पदार्थ इति**। षड्भावानन्तर्भूतत्वे सति अभावानन्तर्भूतत्वादिति हेतुः पूरणीयः। तथाच सादृश्यं क्लृप्तसप्तपदार्थातिरिक्तं षड्भावानन्तर्भूतत्वे सति अभावानन्तर्भूतत्वादित्यनुमानं फलितम्। तत्र विशेषणासिद्धिं निरस्यति **तद्धीति**। हि- यतः, तत्- सादृश्यम्। न षट्सु पदार्थेषु **अन्तर्भवतीति**। षड्भावानन्तर्भूतमित्यर्थः। षट्सु अनन्तर्भावे एकोक्तिमाह **सामान्येपि सत्त्वादिति**। अपिना सामान्येतरपरिग्रहः। तथाच सादृश्यं षड्भावानन्तर्भूतं सामान्यवृत्तित्वे सति सामान्येतरवृत्तित्वादिति फलितम्। अत्राऽऽकाशाभावो दृष्टान्तः। वृत्तित्वं च सामानाधिकरण्यान्य"स्वरूप"सम्बन्धेन, षड्भावानां तेन संबन्धेन सामान्येऽसत्त्वादिति भावः। ननु सामान्ये सादृश्यधीरेव नास्तीति न तत्र सादृश्यं तथाच स्वरूपासिद्धिरत आह **यथेति**। अश्वत्वमपीत्यपिना आकाशादिपरिग्रहः। एवं च यथा गोत्वं नित्यं तथा अश्वत्वं नित्यं तथाऽऽकाशादिकं नित्यमिति सादृश्यप्रतीतेरित्यर्थः। तादृशप्रतीत्या गोत्वनिरूपितसादृश्यस्य अश्वत्वे आकाशादौ च सिद्धत्वेन तत्र निरुक्तहेतोरक्षतत्वादिति भावः।

अत्र घटत्वादौ व्यभिचारवारणाय विशेष्यदलम्। **सत्यन्तम्** सामान्यत्वे व्यभिचारवारणाय। अथ सामान्यत्वमनेकसमवेतत्वे सति नित्यत्वं, तच्च ध्वंसप्रागभावाऽप्रतियोगित्वम्, अप्रतियोगित्वं प्रतियोगित्वाभावः, एवं सामान्यत्वमभावस्वरूपमेवेति कथं व्यभिचारः, अभावस्य षड्भावानन्तर्भूतत्वात्। न च विनिगमनाविरहेण नित्यत्वे सति अनेकसमवेतत्वस्यापि सामान्यत्वरूपतया व्यभिचारः, अनेकसमवेतत्वस्य अनेकानुयोगिकसमवायप्रतियोगित्वरूपतया प्रतियोगित्वस्य स्वरूपसंबन्धविशेषरूपस्य सामान्यात्मकत्वादिति वाच्यम्। तथाप्यभेदे आधाराधेयभावानुपगमेन सामान्ये सामान्यवृत्तित्वासंभवेन व्यभिचाराऽसंभवादिति चेन्न। सामान्यं सामान्यत्ववदिति प्रतीत्या स्वस्यापि स्वरूपसंबन्धेन स्ववृत्तित्वमवश्यमङ्गीकरणीयम्। अभावाधिकरणकाभावस्थले सर्वैरपि तथा स्वीकारादिति सामान्यत्वे व्यभिचारो बोध्य इति ध्येयम्।

अथ सामान्यतदितरोभयसाधारणस्य एकस्य सादृश्यस्याभावेन स्वरूपासिद्धिः। न च सादृश्यमेकमेवेति वाच्यम्। तथासति गवयनिष्ठगोसादृश्यस्य खरनिष्ठाश्वसादृश्याभिन्नतया अश्वसदृशो गवय इति व्यवहारापत्तेः, किंबहुना सर्वस्य सर्वसदृशत्वापत्तेः। न च सादृश्यस्य ऐक्येऽपि अश्वनिरूपितत्वविशिष्टसादृश्याधिकरणतायाः गवये बाधान्न तथा व्यवहारः, अश्वसादृश्यं गवयवृत्तीति व्यवहारस्येष्टत्वादिति वाच्यम्। सुसदृशमन्दसदृशव्यवहारस्य तदेकत्वेऽनुपपत्तेः। तथाहि- तद्गतभूयोधर्मवति (यत्सादृश्यं सुसादृश्यं-तद्गताऽल्पधर्मवति) यत्सादृश्यं यथा तन्मन्दसादृश्यं गोसदृशो गवयः अश्वसदृशः पीतगौरित्यादौ। सादृश्यस्यैकत्वे तन्नोपपद्यते विरुद्धयोः शोभनत्वमन्दत्वयोरेकत्राऽसंभवादिति, सत्यम्। सादृश्यमेकमेवेत्यालङ्कारिकसिद्धान्तानुरोधेन सामान्येपि सत्त्वादिति हेतुप्रतिपादनात्।

**नाप्यभावे सत्त्वेन प्रतीयमानत्वादिति चेन्न ।**

**मण्याद्यभावविशिष्टवन्ह्यादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वं कल्प्यते, अनेनैव सामञ्जस्ये अनन्तशक्तितत्प्रागभावध्वंसकल्पनाऽनौचित्यात् । न चोत्तेजके सति प्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यम् ।**

अभाव में भी अन्तर्भाव सादृश्य का नहीं हो सकता है—क्योंकि अभाव में अन्तर्भाव होने से सादृश्यं असत् ऐसी प्रतीति होनी चाहिये। इस पूर्वोक्त प्रकार से मीमांसक ने शक्ति-सादृश्य अतिरिक्त पदार्थ सिद्ध कर दिये।

"मण्यद्यभावविशिष्टवन्ह्यादेः इत्यादि ग्रन्थ से खण्डनात्मक उत्तर—नैयायिक कहता है कि कोई भी कारण स्वतन्त्र होकर किसी कार्य को उत्पन्न नहीं कर सकता है अपितु सहकारी कारण से युक्त होकर ही उत्पन्न करता है)। प्रकृत में मण्यभावविशिष्ट वन्हि ही दाह के प्रति कारण है। (न कि केवल वन्हि)। अथवा मण्यभाव भी स्वतंत्र कारण मान लिया जाय। (मणिसमवधानस्थल में मणि के अभाव से विशिष्ट वन्हि नहीं है—अपितु मणि से विशिष्ट ही वन्हि है—अतः "मण्यभावविशिष्टवन्हि" रूप दाह का कारण वहाँ नहीं है अतः वहाँ दाह नहीं होता है। अथवा स्वतन्त्र रूप से मण्यभाव रूप कारण नहीं है अपितु मणि ही है, इसलिये भी दाह नहीं होता है ऐसा मानने से ही जब कि सामञ्जस्य (निर्वाह) हो सकता है तो अनन्तशक्ति—उनका ध्वंस तथा प्रागभाव—की कल्पना करना अनुचित है। प्रश्न—यदि मण्यभावविशिष्टवन्हि—अथवा स्वतन्त्र मण्यभाव दाह के प्रति कारण है तो चन्द्रकान्त सूर्यकान्त (उत्तेजक) तथा वन्हि तीनों मोजूद हैं वहाँ दाह कैसे हुआ—(वहाँ न तो *मण्यभाव विशिष्ट वन्हि है क्योंकि मणिविशिष्ट ही वन्हि है, और न स्वतंत्र मण्यभाव ही है—* क्योंकि वहाँ मणि ही है)। यही कहा है "न चोत्तेजके सति" इत्यादि।

---

उक्तसिद्धान्तानादरे तु सादृश्यस्य षड्भावानन्तर्भावश्चेत्थम्-सादृश्यं न द्रव्यगुणकर्मात्मकं गुणवृत्तित्वात्। अत एव न विशेषसमवायात्मकमित्यपि द्रष्टव्यम्। नापि सामान्यात्मकं प्रत्याश्रयभिन्नत्वाद्, अन्यथा सुसदृशमन्दसदृशव्यवहारानुपपत्तेः। एवं सप्रतियोगिकत्वादित्यपि हेतुर्बोध्यः। इदमनेन सदृशमिति सादृश्यानुभवात्प्रतियोगिज्ञानं विना सादृश्याऽज्ञानात्, प्रतियोगिज्ञानस्य तद्धीहेतुत्वाभिप्रतियोगिकसामान्यं न सादृश्यमिति भावः।

विशेष्यासिद्धिं निरस्यति .नापीति। **अभावे इति।** अभावत्वशून्यमित्यर्थः। **सत्त्वेन प्रतीयमानत्वादिति।** भावत्वेन प्रमीयमानत्वादित्यर्थः। तथा च सादृश्यं अभावत्वशून्यं भावत्वेन प्रमीयमानत्वादिति फलितम्।

यद्यपि मणिसमवधानकाले दाहजनकवह्नेरेव नाशाभ्युपगमान्न दाहोत्पादः अतिरिक्तशक्तिकल्पनातः क्लृप्ते तत्कल्पनाया एव न्याय्यत्वादिति न्यायेन सुकरमेव समाधानं तथापि वस्तुतो नाशकल्पनागौरवेण तदपहाय निष्कृष्टं समाधानमाह

**मण्यभावविशिष्टवन्ह्यादेरिति**। अस्य दाहादिकं प्रति हेतुत्वं कल्प्यते इत्यन्वयः। तथाच दाहं प्रति मण्यभावविशिष्टवह्नेर्हेतुत्वस्वीकारेणैव मण्यादिसमवधाने दाहापत्तिवारणेऽलं शक्तिस्वीकारेणेति भावः। ननु विशेष्यविशेषणभावे कामचाराद्दाहं प्रति मण्याद्यभावविशिष्टवन्हित्वेन वह्निविशिष्टमण्याद्यभावत्वेन वा विनिगमनाविरहाद् गुरुतरकार्यकारणभावद्वयकल्पनापत्तिभिया वन्हेः शक्तिमत्त्वेन हेतुत्वमेवोचितमित्यत आह **स्वातन्त्र्येणेति**। वह्नेः कारणतावच्छेदककोटावनिवेशेनेत्यर्थः। **मण्यभावादेरेवेति**। एवकारेण वन्हेः कारणतावच्छेदककोटौ निवेशविशिष्टव्यावृत्तिः। आदिना मन्त्राभावौषध्यभावयोः परिग्रहः। **हेतुत्वं कल्प्यते इति**। तथा च स्वरूपसंबन्धेन दाहं प्रति स्वरूपसंबन्धेन मण्यभावस्य[1] कारणत्वम्। अयं च कार्यकारणभावस्तवापि आवश्यक इति भावः। तथा च प्रतिबन्धकत्वं न कार्यानुकूलधर्मविघटकत्वं, बाधसत्प्रतिपक्षनिश्चयस्य प्रतिबन्धकत्वानुपपत्तेः, किन्तु कारणीभूताभावप्रतियोगित्वं; तच्च मण्यभावस्य हेतुत्वे एवोपपद्यते इति भावः। यत्तु मण्यादिना दाहविरोध्यदृष्टं जायते इत्युक्तम्। तन्न। मानाभावात्। अविहितक्रियातोऽदृष्टायोगाच्च।

ननु वन्हेः मण्यभावादीनां च हेतुत्वापेक्षया एकस्य वह्नेः शक्तिमत्त्वेन हेतुत्वमेवोचितमित्यत आह **अनेनैवेति**। दाहादिकं प्रति मण्यभावादेर्हेतुत्वेनैवे-

---

१ अथ मण्यभावस्य केन रूपेण कारणत्वम्! न तावत्प्रतिबन्धकाभावत्वेन, अन्योन्याश्रयप्रसंगात्। तथाहि—प्रतिबन्धकत्वं हि कारणीभूताभावप्रतियोगित्वं, तच्च कारणत्वग्रहाधीनग्रहम्, कारणत्वं च तद्ग्रहाधीनग्रहमिति। नापि मण्याद्यभावत्वेन, मणिसमवधानेपि तदन्योन्याभावरूपाऽभावमादाय दाहप्रसंगात्। नापि मणिप्रागभावत्वेन, उत्पन्नविनष्टे मणौ दाहानुत्पादप्रसंगात्। नापि तद्ध्वंसत्वेन, अनुत्पन्ने मणौ दाहानुत्पादप्रसंगात्। नापि मण्यत्यन्ताभावत्वेन, उत्पन्नध्वस्ते मणौ दाहानुत्पादप्रसंगात्; अत्यन्ताभावस्य तदाऽभावात्। नापि मण्यादिसंसर्गाभावत्वेन, अन्योन्याभावातिरिक्तस्य संसर्गाभावस्य वक्तुमशक्यत्वात्, तथाहि—संसर्गाभावत्वं संसर्गप्रतियोगिकाभावत्वं तादात्म्यातिरिक्तप्रतियोगिकाभावत्वं वा! नाद्यः, संसर्गान्योन्याभावेऽतिप्रसंगात्। न द्वितीयः, तादात्म्यात्यन्ताभावेऽप्रसंगात् इति चेन्न। मणिसंसर्गाभावत्वेनैव कारणत्वात्। न चान्योन्याभावसंसर्गाभावयोरभेदः। आपाततः संसर्गावच्छिन्नप्रतियोगिताकाभावप्रतियोग्यवृत्तिसदातनाभावत्वयोर्व्यावर्त्तकयोर्विद्यमानत्वात्। न च संसर्गावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावविशेषेऽतिप्रसक्तम्, तथाहि—गृहधृतबहुघटमध्यादेकस्मिन् बहिरानीते घटे अधुना गृहसंसर्गिघटभिन्नोयं घट इति व्यवहारोऽस्ति। न चैतद्घटवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकं घटत्वं, घटत्वस्य तत्राप्यनुयोगिनि वृत्तेः, तस्मादवश्यं संसर्गस्तदन्योन्याभावस्य प्रतियोगितावच्छेदक इति स्वीकर्त्तव्यमिति वाच्यम्। स्वप्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्याधेयजन्यप्रतीतिविषयाभावस्य संसर्गाभावत्वादित्यन्यत्र विस्तरः।

**उत्तेजकाभावविशिष्टमण्यभावस्य कारणत्वात् ।**

उत्तर—(उत्तेजक ( सूर्यकान्त ) मणि के अभाव से विशिष्ट जो चन्द्रकान्त मणि वह दाह के प्रति प्रतिबन्धक है और उसका अभाव ( उत्तेजका भावविशिष्ट मण्यभाव ) कारण है—यही मूल में कहा है "उत्तेजकाभावविशिष्ट" इत्यादि। ( तीन स्थल में दाह होता है—जहाँ केवल वन्हि है, १—जहाँ सूर्यकान्त-चन्द्रकान्त-वन्हि—ये तीनों हैं २। एवं जहाँ उत्तेजक तथा वन्हि है ३। प्रथम- स्थल में विशेष्याभावप्रयुक्तविशिष्टाभाव है। क्योंकि वहाँ उत्तेजक तो है नहीं अतः विशेष्याभाव प्रयुक्त विशिष्टाभाव है। द्वितीयस्थल में—विशेषणाभावप्रयुक्त विशिष्टाभाव है—क्योंकि वहाँ उत्तेजक मणि है अतः "उत्तेजकाभाव" रूप विशेषण नहीं है—उत्तेजकाभाव विशिष्ट मण्यभावरूप कारण विशेषणाभाव प्रयुक्त होकर बैठा है—इसलिये वहाँ भी दाह होता है। तृतीयस्थल में—उभयाभावप्रयुक्त विशिष्टाभाव है, क्योंकि वहाँ उत्तेजकाभाव रूप विशेषण भी नहीं है उत्तेजक ही है, और न विशेष्य जो चन्द्रकान्त मणि वही है—अतः विशेषण-विशेष्य उभय का अभाव है। इस प्रकार विशिष्टाभाव तीन प्रकार का है )

---

त्यर्थः। **सामंजस्ये इति**। मण्यादिसमवधानकाले दाहाद्यापत्तिवारणे इत्यर्थः। न च कारणत्वस्य भावधर्मतयाऽभावो न हेतुः। तथासति तुल्यन्यायेन कार्यस्यापि भावतया नाशः कार्यो न स्यात्। ननु मणेर्दाहप्रतिबन्धकत्वव्यवहारान्यथानुपपत्त्यैव शक्तिः सिद्ध्यति, कार्यानुकूलधर्मविघटकत्वस्यैव प्रतिबन्धकत्वपदार्थत्वात्। साध्यसंसृष्टत्वज्ञानमनुमितिकारणं तद्विरोधित्वयैव बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति तयोरपि कार्यानुकूलधर्मविघटकतायाः सुवचत्वादिति चेत्।

शक्तिं प्रति किं कारणम्? यदि वह्निः तर्हि मणिसमवहितेन वह्निना कुतो नोत्पद्यते। मणिना प्रतिबन्धादिति चेत्, मणिः शक्तिनाशकः शक्तिप्रतिबन्धको वा? आद्ये पूर्वशक्तेर्मणिना नाशेपि शक्त्यन्तरोत्पत्तिर्दुर्वारा। अथ शक्त्यन्तरं नाशकसमवधानान्नश्यतीति चेद्, नश्यतां तृतीयक्षणे, द्वितीयक्षणे च दाहः केन वारणीयः। द्वितीये च मणेः शक्तिप्रतिबन्धकत्वं यदि शक्त्यनुकूलधर्मविघटकत्वं तदा कोऽसौ शक्त्यनुकूलधर्मः? वह्निनिष्ठशक्त्यन्तरमिति चेत्, तदेव कुतो न। तदानीं मणिना नाशादिति चेत्, नश्यतात्पूर्वं अन्यदुत्पद्यताम्। तत्रापि मणिः प्रतिबन्धक इति चेत्तदपि प्रतिबन्धकत्वं यदि निरुक्तं तदा कोसौ शक्त्यनुकूलधर्म इति रीत्याऽनवस्था मनसि निधायाह **अनन्तशक्तीति**। **तत्प्रागभावेति**। शक्तिप्रागभावेत्यर्थः। प्रागभावानंगीकारेऽप्याह **ध्वंसेति**। शक्तिध्वंसेत्यर्थः। न च शक्तिर्नित्या मण्यादिसमवधाने उत्तेजकमण्याद्युत्सारणेन वा तस्याः कुब्जता जायते उत्तेजकेन सा नाश्यते इति वाच्यम्। एवमप्यतिरिक्तकुब्जतातद्ध्वंसादिकल्पनागौरवानपायात्। न च फलमुखगौरवं न दोषः।

**कथं दाह इति**। तत्र मण्यभावरूपकारणविरहादिति शेषः। **उत्तेजकाभावविशिष्टेति**। तथा च केवलं मणिर्न प्रतिबन्धकः किन्तु उत्तेजकाभावविशिष्टः

सः, तदभावश्चोत्तेजकसमवधानेपि तिष्ठतीति भावः। एवं चोत्तेजकाभावविशिष्टो यो मणिस्तदभावः कारणम्। उत्तेजकत्वं 'च' प्रतिबन्धकसत्त्वे कार्यजनकत्वम्। प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वमिति यावत्। अत्रेदं बोध्यम्—विशिष्टाभावः विशेषणाभावप्रयुक्तः, विशेष्याभावप्रयुक्तः—उभयाभावप्रयुक्तश्च। तथाच यत्रोत्तेजकप्रतिबन्धकयोर्द्वयोः समवधानम्, तत्र विशेषणाभावप्रयुक्तो विशिष्टाभावः। यत्र द्वयोरसमवधानं तत्र विशेष्याभावप्रयुक्तो विशिष्टाभावः, यत्र केवलमुत्तेजकं तत्रोभयाभावप्रयुक्तो विशिष्टाभावः। यत्र केवलं मणिः (प्रतिबन्धकः) तत्र 'न' विशिष्टाभावरूपं कारणम्, विशेषणविशेष्योभयस्यैव सत्त्वादिति ध्येयम्।

अथ मण्युत्तेजकाभावयोर्विशेष्यविशेषणभावे कामचार इति चेत्। तवापि शक्तिहेतुत्वेऽस्य दुर्वारत्वात्। न च मण्युत्तरदाहे उत्तेजकस्य, मण्यनुत्तरदाहे मण्यभावस्य हेतुत्वम्, कार्यकारणभावद्वयेपि अवच्छेदकलाघवादिति वाच्यम्। उत्तेजकस्याननुगतत्वात्, उत्तेजकाभावकूटस्य चाऽननुगमात्।

ननु मणिसमवधानदशायां वन्ह्यादिघटितसामान्यसामग्रीवशेन उत्तेजकाभावेऽपि दाहत्वरूपसामान्यधर्मावच्छिन्नापत्तिः। न च विशेषसामग्रीसमवहिताया एव सामान्यसामग्र्याः फलोपधायकत्वात्तावदुत्तेजकान्यतमरूपविशेषसामग्र्यभावे सामान्यसामग्र्या न फलापत्तिरिति वाच्यम्। मण्याद्यसमवधानदशायां उत्तेजकविरहेऽपि वन्ह्यादिघटितसामान्यसामग्र्याः फलोपधानेन तेषां विशेषसामग्रीत्वासंभवादिति चेन्न। मण्यभावविशिष्टदाहं प्रति मण्यभावत्वेन कारणत्वान्तरं कल्पयित्वा वन्ह्यादिघटितसामान्यसामाग्र्या फलजनने मण्यभावतत्तदुत्तेजकान्यतमस्य विशेषसामग्रीत्वकल्पनया दोषविरहात्।

अत्र च स्वरूपसंबन्धेन दाहं प्रति उद्देश्यतादैशिकविशेषणतान्यतरसंबन्धावच्छिन्नप्रतियोगिताकानां तत्तदुत्तेजकाभावानां सामानाधिकरण्यरूपं यद्वैशिष्ट्यं तदवच्छिन्नस्य मण्यादेस्तादृशान्यतरसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपसंबन्धेन हेतुत्वमिति कार्यकारणभावो बोध्यः।

ननु दाहानुकूलशक्त्यस्वीकारेऽपि साहजिकशक्तिसिद्धिर्दुर्वारा। तथाहि तृणारणिमणितो वह्न्युत्पत्त्या तत्र च तृणत्वादिना हेतुत्वे व्यभिचारात्, वह्निजनकतावच्छेदकतया तृणारणिमणिसाधारणी सा अवश्यं स्वीकार्या, एतदतिरिक्तस्य जनकतावच्छेदकस्य दुर्लभत्वात्, त्रितयसाधारणशक्तिमत्त्वेन हेतुत्वमिति तत्सिद्धिरिति चेत्। न, तृणादिजन्यवह्नौ वैजात्यानुभवेन विजातीयवह्नित्वस्यैव तृणादिजन्यतावच्छेदकतया विजातीयवह्नित्वावच्छिन्नं प्रति तृणत्वेन हेतुत्वोपगमान्न व्यभिचारः। तृणत्वादेरेव जनकतावच्छेदकत्वोपगमाच्च शक्तिसिद्धिः। एवमरणिमण्यादीनामपि। तृणजन्यतावच्छेदकवैजात्यावच्छिन्नं प्रति तृणफूत्कारयोः, अरणिजन्यतावच्छेदकवैजात्यावच्छिन्नं प्रति अरणिनिर्मन्थनयोः मणिजन्यतावच्छेदकवैजात्यावच्छिन्नं प्रति मणिकिरणयोगयोर्हेतुत्वात्, अन्यथा तृणनिर्मन्थनाभ्यां-अरणिफूत्काराभ्यां-मणिनिर्मन्थनाभ्यामपि तदुत्पत्त्यापत्तिः।

**सादृश्यमपि न पदार्थान्तरम्, किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्। यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति।**

इसी प्रकार सादृश्य भी अतिरिक्त पदार्थ नहीं है अपितु किसी पदार्थ से भिन्न भी हो तथा उस पदार्थ के बहुत से धर्म उसमें पाये जावें तो उसे ही सादृश्य कहते हैं। जैसे "चन्द्रवन्मुखम्" यहाँ पर मुख चन्द्र से भिन्न है, और चन्द्रगत आल्हादकत्व आदि धर्म मुख में विद्यमान है यही मुख में चन्द्र का सादृश्य है।

---

अथ यदि तृणादिजन्यतावच्छेदकं वैजात्यमानुभविकं तदा एवं स्यात्। न च तदनभ्युपगमे फूत्कारादिजन्यतावच्छेदकानुपपत्तिः, फूत्कारादिजन्यतावच्छेदकवैजात्यत्रयाभ्युपगमात्। न च तादृशवैजात्यानामेव तृणादिजन्यतावच्छेदकत्वात्तदसिद्धिः, तत्तद्वैजात्यावच्छिन्नकार्यतानिरूपिततत्तत्कारणतात्रयकल्पनामपेक्ष्य वह्नित्वावच्छिन्ने प्रत्येकशक्तिमत्त्वेन हेतुत्वकल्पनाया न्याय्यत्वात्। न च तृणनिर्मन्थनाभ्यां वह्न्युत्पादप्रसङ्गः, तद्वैजात्यावच्छिन्नजनकतावच्छेदकवैजात्याभ्युपगमेन तृणनिर्मन्थने तादृशवैजात्याभावात्। न च तृणादिजन्यतावच्छेदकं वैजात्यत्रयं, फूत्कारादीनां चैकशक्तिमत्त्वेन वह्नित्वावच्छिन्ने हेतुत्वमिति वैपरीत्यं किन्न स्यात्, तृणनिर्मन्थनादौ च शक्त्यभावेनाऽदोषादिति वाच्यम्। उभयथापि अस्य शक्तिसिद्धावुपायत्वादिति चेन्न।

लाघवेन तृणफूत्कारसमवधानस्यैव विजातीयवह्नित्वावच्छिन्नं प्रति हेतुत्वाभ्युपगमेन तत्त्वभावात्। एवमरणिनिर्मन्थनस्य मणिरविकिरणयोगस्य च तत्तद्वैजात्यावच्छिन्नं प्रति हेतुत्वसंभवात्। न च तृणादेरहेतुत्वे प्रवृत्त्यनुपपत्तिः, प्रयोजकतयापि तदुपपत्तेः। यद्यपि तृणफूत्कारअरणिनिर्मन्थनमणिरविकरणसंयोगानामेकशक्तिमत्त्वेन हेतुत्वे एव लाघवम्, न्यायनये च वैजात्यत्रयं कल्पयित्वा कार्यकारणभावत्रयकल्पनायां गौरवात्, तथापि तृणफूत्कारसंयोग-अरणिनिर्मन्थनसंयोग-मणिरविकिरणसंयोगानामन्यतमत्वेन हेतुत्वेनैव व्यभिचारवारणाच्छक्तौ प्रमाणाभावादिति संक्षेपः।

यदाशंकितं सादृश्यमप्यतिरिक्तः पदार्थ इति तदपि निराकरोति **सादृश्यमपीति। न पदार्थान्तरमिति।** क्लृप्तपदार्थान्तर्गतमित्यर्थः। एतच्च सादृश्यस्याऽतिरिक्ततामतेऽपि तद्व्यञ्जकतयाऽभ्युपगन्तव्यम्, एवं चेदमेव सादृश्यप्रतीतिविषयो भवत्विति भावः। तद्गताऽऽह्लादिमत्त्वस्य तद्वृत्तित्वात्स्वस्मिन् स्वसादृश्यवारणाय सत्यन्तम्। **तद्गतेति।** भूयःपदं क्वाचित्कम्, तद्गतासाधारणधर्मपरम्। वस्तुतस्तु आलंकारिकचमत्कृतिविषयतावच्छेदकधर्मवद्भेदसमानाधिकरणैकविषयतावच्छेदकधर्म (साजातीयधर्म) शालित्वम्। सा च प्रकारता विशेष्यता चेत्यन्यदेतत्। न च धर्मयोरेकप्रतीतिविषयताभावान्तरत्वात् शशी आल्हादकः—मुखमाल्हादकमि-

क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः।

द्रव्याणि

द्रव्याणि विभजते क्षित्यमित्यादि। क्षितिः—पृथ्वी, आपो जलानि, तेजो वह्निः, मरुद्वायुः, व्योम आकाशः, कालः समयः, दिग् आशा, देही आत्मा, मनः एतानि नव द्रव्याणीत्यर्थः।

द्रव्यों का विभाग करते हैं—

पृथ्वी-जल-तेज-वायु-आकाश-काल-दिक्-आत्मा-मन-ये नव द्रव्य हैं।

---

तिसमूहालंबनप्रतीतिविषयतया तदुपपत्तेः। एतेनाऽसाधारणत्वं तदितरावृत्तित्वे सति तद्वृत्तित्वरूपं तव्यक्तिमात्रवृत्तिधर्मस्यैव तादृशतया मुखे तथात्वानापत्तेः। तद्व्यक्तिवृत्तिमेयत्वादिकमादायातिप्रसंगाच्च। न च मेयत्वादेरव्यतिरेकितया तद्व्यक्तिवृत्त्यव्यतिरेकिधर्मत्वं तत्त्वमिति वाच्यम्। तद्वृत्तिद्रव्यत्वादिमति घटादौ अतिप्रसंगादिति निरस्तम्।

अथ "उपमानोपमेयत्वं यदैकस्यैव वस्तुतः। इन्दुरिन्दुरिव श्रीमानित्यत्र तदनन्वयः॥" इत्यादौ, "उपमानोपमेयत्वे एकस्यैवैकवाक्यगे। अनन्वय" इत्यत्र, "न केवलं भाति नितान्तकीर्तिर्नितंबिनी सैव नितंबिनी" वेत्यादौ अनन्वयालंकारस्थले एकस्यैव वस्तुन उपमानोपमेयत्वदर्शनात्, तस्य च सादृश्यघटिततया तल्लक्षणाव्याप्तिः, स्वभेदस्य स्वाऽवृत्तित्वादिति चेन्न।

अनन्वयालंकारस्थले निरुपमत्वस्य कवितात्पर्यविषयत्वात्। एकस्यैवेत्युपमाव्यवच्छेदायेति ध्येयम्

केचित्तु एकस्यैवेत्यनेन भिन्नशब्दबोध्यत्वाव्यवच्छेदो बोध्यते। मुखमिवास्याः वक्त्रमित्यादौ नानन्वयः, किन्तूपमैवेत्याहुः।

तन्न। एकस्यैवार्थस्य शब्दभेदेनाऽपाततो भेदः प्रतीयते ननु वस्तुभेद इति तदन्वय एव। अनुयोगितासंबन्धेन तद्गतधर्मवत्त्वविवक्षणे नोपादेयमेव सत्यन्तदलम्। स च धर्मः क्वचिज्जातिरूपः क्वचिदुपाधिरूप इत्यवधेयम्।

मूले क्षितिश्चापश्च तेजश्च मरुच्च व्योम च कालश्च दिक् च देही चेति द्वन्द्वः समासः, सर्वेषां प्राधान्यात्। तथाच द्रव्याणीत्यस्यैकवचनान्तत्वेन विपरिणामस्य क्षितिर्द्रव्यं, आपो द्रव्यं, तेजो द्रव्यं, मरुद् द्रव्यं, व्योम द्रव्यं, कालो द्रव्यं, दिग्द्रव्यं, देही द्रव्यं, मनो द्रव्यमिति विपरिणतेनाऽन्वयः। द्रव्याणि विभजते इति। द्रव्याणीत्यत्र द्वितीयार्थो विषयित्वम्, तस्य धात्वर्थैकदेशे ज्ञानेऽन्वयः। तद्धर्मावान्तरधर्मप्रकारकज्ञानानुकूलव्यापारो विपूर्वकभजधात्वर्थः। तद्धर्मपदेन विभाज्यतावच्छेदकीभूतद्रव्यत्वस्य ग्रहणम्। तथा च द्रव्यत्वावान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमान्मूलकार इति बोधः। धर्मे तद्धर्मावान्तरत्वं च तद्धर्मसाक्षाद्व्याप्यत्वम्, इदमेव तद्धर्मविभाजकत्वमित्युच्यते। तद्धर्मसाक्षाद्व्याप्यत्वं च तद्धर्मव्याप्यत्वे सति तद्धर्म-

व्याप्याव्याप्यत्वम् । द्रव्यत्वप्रमेयत्वादेर्द्रव्यत्वविभाजकत्ववारणाय सत्यन्तम् । घटत्वादेस्तथात्ववारणाय विशेष्यदलम् । विशेष्यदलघटकीभूतं तद्धर्मव्याप्ये पृथ्वीत्वविशिष्टान्यत्वं निवेशनीयम् । वै० पूर्ववत् । तेन पृथिवीजलान्यतरत्वमादाय न पृथिवीत्वस्य विभाजकत्वानुपपत्तिः। अन्यत्सर्वं पूर्ववत्। तथा च द्रव्यत्वविशिष्ट-"पृथिवीत्वादि" धर्मप्रकारकज्ञानानुकूलो व्यापारो विपूर्वकभजधात्वर्थः। धर्मे द्रव्यत्ववै० स्वव्याप्यत्व-स्वविशिष्टाऽव्याप्यत्वोभयसं०, स्ववै० स्वव्याप्यत्व-स्वकालीनपृथिवीत्व-विशिष्टान्यत्वोभयसं० । वै०स्वाश्रयवृत्तित्व-स्वानाश्रयवृतित्वोभयसं० ।

अथ द्रव्यसामान्यलक्षणमनुक्त्वा विभागकरणमनुचितं, सामान्यधर्मप्रकारक-ज्ञानस्य विशेषधर्मप्रकारकजिज्ञासां प्रति हेतुतया लक्षणात्मकसामान्यधर्मप्रकारक-ज्ञानाभावेन कियन्ति द्रव्याणीति जिज्ञासानुत्पत्तेरिति चेत् ।

सत्यम्, गुणवत्त्वं कर्मवत्त्वं वा द्रव्यसामान्यलक्षणमिति गृहाण । अत एव वक्ष्यति क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगितेति । अधिकं तत्रैव ।

क्षितिशब्दस्य क्षयवाचकत्वादाह **क्षितिः पृथिवीति**। अप्शब्दस्य देवतापर-त्वादाह **आपो जलानीति** । तेजःशब्दस्य रूपविशेषपरत्वादाह **तेजो वह्निरिति** । मरुच्छब्दस्य देवतापरत्वादाह **मरुद्वायुरिति** । व्योमशब्दस्य ब्रह्मपरत्वादाह **व्योम आकाश इति** । यमस्यापि कालशब्दवाच्यत्वादाह **कालः समय इति** । ईषत्समाप्तावपि दिक्शब्दस्य प्रयोगादाह **दिग्दिशेति** । देहिन्शब्दो देहावच्छिन्न-परो लोके दृष्टः, तथाचेश्वरपरिग्रहो न स्यादत आह **देही आत्मेति** । तथाचा-त्मत्वं द्रव्यविभाजकं न तु देहित्वमन्यथा नवत्वव्याघातापातादिति भावः। मनःशब्द-स्यान्यार्थपरत्वाभावात्तत्पर्यायो न दर्शितः। **एतानि नव द्रव्याणीति**[1] । न न्यूनानि नाप्यधिकानीति भावः। मूले **द्रव्यं गुणस्तथाकर्मेत्यत्र** द्रव्यमित्यस्य द्रव्यत्वजा-तिमदित्यर्थः। तदुत्तरसुचर्थैकत्वस्य द्रव्यत्वे एवान्वयः। द्रव्याणामनेकत्वेन तत्रै-कत्वान्वयायोगात्। तत्राशंकते **नन्विति** । **द्रव्यत्वजातौ किंमानमिति** । ननु द्रव्यं द्रव्यमित्यनुगतप्रतीतिरेव द्रव्यत्वसाधिकेत्यत आह **नहीति** । तत्र= द्रव्यत्वजातौ। **प्रत्यक्षं प्रमाणमिति** । इदं द्रव्यमित्याकारप्रत्यक्षप्रमाणमित्यर्थः। **घृतजतुप्रभृतिष्विति** । प्रभृत्यन्तं हिरण्यभिन्नमात्रोपलक्षकम्। **द्रव्यत्वाग्रहादिति** । तथाच पामराणां हिरण्यभिन्ने द्रव्यत्वप्रकारकज्ञानाभावेन प्रत्युत हिरण्यादिष्वेव लोकानां द्रव्यत्वप्रतीत्या नवद्रव्येषु नोक्तप्रतीत्या द्रव्यत्वजातिसिद्धिरिति भावः।

---

1 अत्रापि पूर्ववद् द्रव्यत्वविशेष्यकक्षित्याद्यन्यतमत्वनिरूपितव्याप्तिनिश्चयार्थकं नवग्रहणमिति ध्येयम् ।

ननु द्रव्यत्वजातौ किं मानम्, नहि तत्र प्रत्यक्षं प्रमाणं, घृतजतुप्रभृतिषु द्रव्यत्वाऽग्रहादिति चेन्न । कार्यसमवायिकारणाव्यवच्छेदकतया संयोगस्य विभागस्य वा समवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धेः ।

प्रश्न द्रव्यत्वजाति में प्रत्यक्ष प्रमाण तो है नहीं । क्यों कि घृत और जतु ( लाख ) आदि द्रव्यों में साधारण व्यक्तियों को यह द्रव्य है ऐसा ज्ञान नहीं होता है। ( क्योंकि लोग प्रायः द्रव्य कहते रुपया पैसा ही अधिकतर समझते हैं ) वही मूल में कहा है कि "घृतजतुप्रभृतिषु द्रव्यत्वाग्रहात्" इत्यादि ।

अब द्रव्यत्व जाति की सिद्धि करते हैं-"कार्यसमवायिकारणतावच्छेदकतया" इत्यादि ग्रन्थ से संसार में कोई किसी का कार्य है, कोई किसी का कारण है—इस प्रकार संसार में दो पदार्थ हैं—कार्य और कारण । उसमें कार्य में कार्यता धर्म रहता हैं—कारण में कारणता धर्म रहता है—इनमें प्रत्येक के दो दो अवच्छेदक होते हैं-"सम्बन्धो धर्मश्च"सम्बन्ध और धर्म । अर्थात् कार्यता के भी दो अवच्छेदक होते हैं सम्बन्ध और धर्म, कारणता के भी दो अवच्छेदक हैं सम्बन्ध और धर्म । अब प्रश्न यह है कि कार्यता का अवच्छेदक सम्बन्ध कौन, एवं कार्यता का अवच्छेदक धर्म कौन । कार्य अपने,कारण में जिस सम्बन्ध से हो वह कार्यतावच्छेदक सम्बन्ध कहलाता है । एवं कार्य में रहनेवाला धर्म कार्यतावच्छेदक धर्म कहलाता है । और यह नियम है कि "यो यस्या अवच्छेदको भवति सा तदवच्छिन्ना भवति" अर्थात् जो जिसका अवच्छेदक होता है वह उससे अवच्छिन्न होता है । पृथिवी-जल-आदि अवयवी द्रव्य रूप कार्य (घट-पट आदि) अपने कारण ( अवयवद्रव्य ) में समवाय सम्बन्ध से उत्पन्न होकर रहते हैं । अतः अवयवीद्रव्यनिष्ठ कार्यता का अवच्छेदक सम्बन्ध-समवायसम्बन्ध है इसलिये वह कार्यता समवायसम्बन्धावच्छिन्ना हो गई । एवं पृथिव्यादि कार्य द्रव्य में कार्यत्व धर्म रहता है इसलिये वह कार्यत्व धर्म पृथिव्यादि-कार्य द्रव्यनिष्ठ कार्यता का अवच्छेदक हो गया अतः वह कार्यता कार्यत्व से अवच्छिन्ना हो गयी । और यह नियम है कि समवायसम्बन्ध से कार्य के प्रति तादात्म्यसम्बन्ध से द्रव्य कारण होता है, क्योंकि समवाय सम्बन्ध से कार्यमात्र द्रव्य ही में रहता है । अतः द्रव्यनिष्ठ कारणता का अवच्छेदक सम्बन्ध तादात्म्य ही हो गया तथा द्रव्यनिष्ठ कारणता तादात्म्य सम्बन्धावच्छिन्ना हो गयी । और कार्यता-कारणता का परस्पर निरूप्यनिरूपकभाव देखा जाता है—कहीं कार्यता से निरूपित कारणता होती है कहीं कारणता से निरूपित कार्यता होती है । अब यह अनुमान द्रव्यत्व जाति का साधक हो गया कि "समवायसम्बन्धावच्छिन्ना कार्यत्वावच्छिन्ना या अवयविद्रव्यनिष्ठा कार्यता तादृशकार्यतानिरूपिता या तादात्म्यसम्बन्धावच्छिन्ना द्रव्यनिष्ठा कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटनिष्ठकार्यतानिरूपितकपालनिष्ठकारणतावत् । अनुमान में सर्वत्र चार बातें होती हैं—पक्ष-साध्य हेतु-दृष्टान्त । यहाँ पक्ष द्रव्यनिष्ठकारणता है—उसमें किञ्चिद्धर्मावच्छिन्नत्व-साध्य है, कारणतात्व हेतु है । अब प्रकृत में पक्ष जो द्रव्यनिष्ठकारणता है उसी में किञ्चिद्धर्मावच्छिन्नत्व सिद्ध कर रहे हैं तो द्रव्यनिष्ठा कारणता उसी धर्म से अवच्छिन्ना होगी जो उस कारणता का अवच्छेदक होगा तो द्रव्यनिष्ठ कारणता का अवच्छेदक द्रव्यत्व ही होगा । अतः द्रव्यनिष्ठा कारणता द्रव्यत्वावच्छिन्ना होगी सो द्रव्यनिष्ठकारणता यद्धर्मावच्छिन्ना हो उसी धर्म का नाम

है द्रव्यत्व जाति। इस प्रकार इस अनुमान से द्रव्यत्व जाति की सिद्धि हो गयी। इस अनुमान में "कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताच्छेदकतया" द्रव्यत्व जाति की सिद्धि की है। परन्तु यह ठीक नहीं है, क्योंकि कार्यत्व को कार्यता का अवच्छेदक बना रक्खा—है स्वही को स्वयं का अवच्छेदक बना दिया। कार्यत्व और कार्यता एक ही वस्तु है। अतः आत्माश्रय हो गया। इस लिये मूल में "संयोगस्य" कहा। "संयोगत्वस्य" इसका "समवायिकारणतावच्छेदकता" के साथ अन्वय है—अर्थात् संयोग का समवायिकारण हुवा द्रव्य-समवायिकारणतावच्छेदक हुवा द्रव्यत्व, वही द्रव्यत्व जाती है। यहाँ भी पूर्ववत् समझना कि—'संयोग' समवाय सम्बन्ध से द्रव्य में रहेगा-अतः संयोगनिष्ठा कार्यता समवायसम्बन्धावच्छिन्ना हुवी-और संयोगनिष्ठ कार्यता का अवच्छेदक संयोगत्व हुवा अतः तन्निष्ठा कार्यता संयोगत्वावच्छिन्ना हुवी। अब यह अनुमान द्रव्यत्व जाति साधक संपन्न हुवा कि समवायसम्बन्धावच्छिन्ना अथ च संयोगत्वावच्छिन्ना या संयोगनिष्ठा कार्यता तन्निरूपिता या तादात्म्यसम्बन्धावच्छिन्ना द्रव्यनिष्ठा कारणता सा किञ्चिद्धर्मावच्छिन्ना, हेतूदाहरण पूर्ववत्। सो द्रव्यनिष्ठा कारणता द्रव्यत्वावच्छिन्ना ही होगी-इससे भी द्रव्यत्व जाति की सिद्धि हो गयी, क्योंकि द्रव्यनिष्ठा कारणता यद्धर्मावच्छिन्ना हो वही धर्म द्रव्यत्व जाती है। अब इस अनुमान में भी संयोगत्वावच्छिन्न कार्यता अप्रसिद्ध है—क्योंकि संयोगत्व यदि संयोगनिष्ठ कार्यता का अवच्छेदक हो तो संयोगनिष्ठा कार्यता संयोगत्वावच्छिन्ना हो सकती है, परन्तु संयोगत्व कार्यता का अवच्छेदक हो ही नहीं सकता, क्योंकि अन्यूनानतिरिक्त वृत्तिधर्म ही अवच्छेदक होता है, सो संयोगत्व नित्यसंयोग ( विभुद्वय संयोग, कालाकाश संयोग ) में भी रहता है अतः कार्यता के अतिरिक्त वृत्ति है। इसलिये विभागपर्यन्तानुधावन किया, "विभागस्य वा" इति। इसका भी "समवायिकारणतावच्छेदकतया" इसी के साथ अन्वय है। विभाग सब अनित्य ही होते हैं—अतः विभागत्वावच्छिन्नकार्यतानिरूपितकारणता-द्रव्यनिष्ठाकारणता वह कारणता किञ्चिद्धर्मावच्छिन्ना है, सो यहाँ किञ्चिद्धर्मपद से द्रव्यत्व ही लेना होगा, यही मूल में कहा है कि "विभागस्य वा कार्यसमवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिः"। अर्थात् कार्यमात्र का समवायि कारण हुआ द्रव्य-समवायिकारणतावच्छेदक-द्रव्यत्व-वही-द्रव्यत्व जाति है। द्रव्य जब कि कार्यमात्र का समवायिकारण हुआ तो संयोग-विभाग-एवं जन्य द्रव्य-इनका भी समवायिकारण हुआ—समवायिकारणतावच्छेदक द्रव्यत्व वही द्रव्यत्वजाति है। इस प्रकार द्रव्यत्वजातिसिद्धि कर लेना चाहिये।

---

ननु घटप्रभृतिष्वित्येव कथं नोक्तमिति चेत्, सत्यम्, अनुगतप्रतीत्यभावे बीजसूचनाय घृताद्युपादानात्। तथाहि अनुगताकृतिव्यङ्ग्या हि जातिः, नहि द्रव्येषु अनुगताकृतिः काचित्संभवति घृतादिष्वेकैकपदार्थेष्वपि सर्वदा नैकाकृतिः, कठिनद्रवत्वयोरनियतत्वात्। यद्यपि द्रव्यशब्दोल्लेखित्वाभावेपि पृथिवीजलादिष्वनुगतो जातिविशेषः प्रत्यक्षसिद्ध एव, चक्षुःसंयुक्तसमवायसत्त्वात्। तथापि तस्य पृथिवीत्वादिना सांकर्यवारणाय परमाणुद्व्यणुकसाधारण्यस्वीकारेपि गगनादिसाधारण्यं न सिद्ध्येदिति सर्वद्रव्यसाधारणद्रव्यत्वजातिसिद्ध्यर्थमनुमानप्रमाणमाह कार्यसमवायिकारणतावच्छेदकतयेति। अस्य द्रव्यत्वजातिसिद्धेरित्यनेनाऽन्वयः। अत्रेदं बोध्यम्।

समवायसंबन्धेन कार्यं प्रति तादात्म्यसंबन्धेन द्रव्यं कारणम्[1]। अतो द्रव्यमेव समवायिकारणशब्देन व्यवह्रियते, तथाच समवायसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्, या या कारणता सा सा किञ्चिद्धर्मावच्छिन्ना घटनिष्ठकार्यतानिरूपितकपालनिष्ठकारणतावत् इत्यनुमानेन द्रव्यनिष्ठकारणतायां किंचिद्धर्मावच्छिन्नत्वसिद्धौ तुल्यवित्तिवेद्यतया तादृशकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिः। अत्रायं भावः- कारणत्वं हि कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदक "कारणतावच्छेदकीभूत" धर्मवत्त्वम्, न तु तादृशप्रतियोगितानवच्छेदकधर्मवत्त्वमात्रम्, तादृशप्रतियोगितानवच्छेदकीभूतप्रमेयत्वसत्त्वादिधर्ममादायाऽकारणेऽपि कारणत्वप्रसक्तेः। कारणतावच्छेदकश्च स एव धर्मो भवति यः कारणताऽन्यूनानतिरिक्तवृत्तिः, तादृशधर्मो द्रव्यत्वमेव तादृशकारणत्वाऽन्यूनवृत्तित्वे सति तादृशकारणताऽनतिरिक्तवृत्तित्वात्, न तु प्रमेयत्वसत्त्वादिकं द्रव्यनिष्ठतादृशकारणतावच्छेदकं तादृशकारणतातिरिक्तवृत्तित्वात्, तादृशकारणत्वाभाववद्वृत्तित्वादिति यावत्। नापि पृथिवीत्वघटत्वादिकं तादृशकारणतान्यूनवृत्तित्वात्, तादृशकारणतासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वादिति यावत्। न च कार्यसमवायिकारणतावच्छेदकतया द्रव्यत्वसिद्धावपि तस्य जातित्वे किं मानमिति वाच्यम्। द्रव्यत्वं जातिः नित्यत्वे सति अनेकसमवेतत्वादित्यनुमानस्य प्रमाणत्वात्।

समवायसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नद्रव्यनिष्ठकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानं फलितम्।

अथात्र द्रव्यत्वावच्छिन्नस्य कार्यतावच्छेदकं न कार्यत्वं तस्य प्रागभावप्रतियोगित्वरूपतया तस्य द्रव्यकार्यत्वाभाववति ध्वंसेऽतिप्रसक्तत्वात्। एवं च सम-

---

[1] न चैतादृशकार्यकारणभावे मानाभावः। समवायेन पटरूपं प्रति स्वसमवायिसमवेतत्वसंबन्धेन तन्तुरूपं कारणम्, स्वं-तन्तुरूपम्। एवं च तन्तुत्वे तदापत्त्या तादृशकार्यकारणभावाभ्युपगमात्। तथा च नीलत्वव्यापकीभूतकार्यत्वावच्छिन्नजनकस्य द्रव्यस्य तादात्म्येन तन्तुत्वादौ विरहान्न तदापत्तिः। गुणादीनां तादात्म्येन प्रतिबन्धकत्वे तु महागौरवम्। न च तत्तद्व्यक्तिसमवेतजन्यत्वावच्छिन्नं प्रति तादात्म्येन तत्तद्व्यक्तित्वेन हेतुत्वाधावद्विशेषसामग्रीविरहादेव न तन्तुत्वादौ तदापत्तिरिति वाच्यम्। कार्यकारणभावानन्त्यप्रसंगेन तादृशकल्पनायां प्रमाणाभावात्। न च द्रव्यत्वविशिष्टस्वाश्रयसमवेतत्वमेव नीलादीनां जनकतावच्छेदकः संबन्ध इति वाच्यम्। अस्यापि पक्षस्य द्रव्यत्वसिद्धावुपायत्वात्, द्रव्यत्वतथाविधसमवेतत्वयोः कामचारेण कल्पनीयस्य कार्यकारणभावचतुष्कस्यापेक्षयाऽतिरिक्ततादृशकार्यकारणभावकल्पनाया एव युक्तत्वात्।

ननु जलादौ नीलाद्यापत्तिवारणाय नीलत्वावच्छिन्नं प्रति पृथिवीत्वादिना समवायिकारणताया आवश्यकतया तत एव न नीलादौ नीलस्यापत्तिरिति चेन्न। गुणादौ समवायसंबन्धेन कार्यत्वावच्छिन्नानुत्पादे कार्यत्वव्याप्यतत्तद्धर्मावच्छिन्नजनकसामग्र्यभावकूटस्य प्रयोजकत्वकल्पनामपेक्ष्य कारणतावच्छेदकतया सिद्धद्रव्यत्वाभावस्य प्रयोजकत्वे लाघवात्।

वायसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितेत्यादिपक्षाप्रसिद्धिः। न च सत्त्वं कार्यतावच्छेदकम्। तस्य गगनादावतिप्रसक्तत्वादिति चेन्न।

जन्यसत्त्वस्यैव कार्यतावच्छेदकत्वात्। तथा च समवायसंबन्धावच्छिन्नजन्यसत्त्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नद्रव्यनिष्ठकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्युक्तौ न पक्षाप्रसिद्धिः।

द्रव्यत्वसाधनायानुमानान्तरमाह **संयोगस्येति**। समवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धेरित्यनेनाऽन्वयः। तथा च समवायसंबन्धावच्छिन्नसंयोगत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नद्रव्यनिष्ठकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानात्तत्सिद्धिर्बोध्या।

ननु समवायसंबन्धेन संयोगं प्रति तादात्म्येन द्रव्यं कारणमिति कार्यकारणभावः किमर्थः। न च गुणादौ तदापत्तिवारणाय स आवश्यक इति वाच्यम्। द्वे हि संयोगकारणे संयोगः कर्म च, तयोश्च कार्यतावच्छेदकं विजातीयसंयोगत्वम्, एवं च संयोगत्वव्याप्यजातिद्वयावच्छिन्नकारणक्रियासंयोगयोर्गुणादावभावादेव न संयोगापत्तिरिति व्यर्थोऽयं कार्यकारणभाव इति चेन्न। गुणादौ संयोगत्वावच्छिन्नानुत्पादे संयोगत्वव्याप्यतत्तद्धर्मावच्छिन्नजनकसामग्र्यभावकूटस्य प्रयोजकत्वे गौरवेण तदावश्यकत्वात्।

वस्तुतो जन्यसत्त्वेन द्रव्यत्वेन हेतुहेतुमद्भावानभ्युपगमे द्रव्ये समवायिकारणतानिर्वाहाय, भावे वा कार्यमात्रवृत्तिधर्मस्य कार्यतावच्छेदकतया संयोगत्वेन द्रव्यत्वेन हेतुहेतुमद्भावावश्यकत्वमिति द्रव्यत्वसिद्धिर्निष्प्रत्यूहैवेति विदाङ्कुर्वन्तु।

नचात्र स्वाश्रयाश्रयत्वरूपपरंपरासंबन्धेन गुणत्वस्यैव तादृशकारणतावच्छेदकत्वमस्तु इति वाच्यम्। साक्षात्संबद्धधर्मबाधे सत्येवानुमितेः परंपरासंबद्धधर्मविषयकत्वादिति ध्येयम्।

अत्र च रूपरसगन्धस्पर्शानां सकलद्रव्यावृत्तितया द्रव्यकार्यत्वेनाऽनुक्तिः। संख्यापरिमाणपृथक्त्वानां सकलद्रव्यवृत्तित्वेऽपि गगनादिवृत्तितया नित्यत्वात्। द्वित्वसमवायिकारणतावच्छेदकतया कुतो नोक्तमिति तु विभावनीयम्।

नित्यसंयोगाङ्गीकर्तृनये संयोगत्वस्य नित्यसंयोगसाधारणतया कार्यतानवच्छेदकत्वादाह **विभागस्य वेति**। तथाच समवायसंबन्धावच्छिन्नविभागत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नद्रव्यनिष्ठकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन द्रव्यत्वजातिसिद्धिरिति भावः।

नन्वेवमपि सत्त्वमेव जनकतावच्छेदकमस्तु, द्रव्यत्वव्यापकत्वेऽपि लघुत्वादिति चेत्। सत्यम्। तथासति गुणादिर्न विभागसमवायिकारणमिति व्यवहारविलोपापत्तेः। न च तत्फलोपधायकत्वरूपसमवायिकारणत्वाभाव एव तद्विषयः। अजनितघटे दण्डे दण्डो न घटकारणमिति व्यवहारापत्तिरित्ति द्रष्टव्यम्।

अथैवमपि यत्र घटे विभागो नोत्पन्नस्तादृशघटे द्रव्यत्वं न सिद्ध्येत्, तत्र विभागसमवायिकारणतासत्त्वे प्रमाणाभावादिति चेन्न।

**ननु दशमं द्रव्यं तमः कुतो नोक्तम्, तद्धि प्रत्यक्षेण गृह्यते, तस्य च रूपवत्त्वात्कर्मवत्त्वाच्च द्रव्यत्वम्। तद्धि गन्धशून्यत्वान्न पृथिवी, नीलरूपवत्त्वाच्च न जलादिकम्। तत्प्रत्यक्षे चाऽऽलोकनिरपेक्षं चक्षुः कारणमिति चेत्।**

तमो-निरूपयति—तम को दशम द्रव्य मानने वाला मीमांसक आशंका करता है—कि "ननु दशमं द्रव्यमि"त्यादि। तम को दशम द्रव्य क्यों नहीं माना, क्योंकि तम का प्रत्यक्ष प्रमाण (इन्द्रियादि) से "नीलं तमश्चलति" इस रूप से ज्ञान होता है। सो इस प्रतीति के अनुसार तम रूप वाला होने से तथा कर्मवाला होने से तम को द्रव्यत्व सिद्ध है (क्योंकि "गुणक्रियावत्त्वम्" यही द्रव्यसामान्य का लक्षण है) (यदि कथित नव द्रव्यों ही में, तम का अन्तर्भाव करें, सो ठीक नहीं क्योंकि) तम गन्ध शून्य है अतः पृथिवी में अन्तर्भाव नहीं कर सकते, तम नील रूपवाला होने से जल आदि पद से-तेज-वायु-आकाश-काल-दिक्-आत्मा मन इनमें भी अन्तर्भूत नहीं हो सकता—(क्योंकि इनमें नील रूप नहीं है। (तम के प्रत्यक्ष में एक विशेषता यह है कि) तम के प्रत्यक्ष में आलोक निरपेक्ष (प्रकाश रहित) चक्षु कारण है।

---

समवायिकारणत्वस्य समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वरूपस्य कारणताघटितत्वेन कारणतायाश्च कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपतया तादृशधर्मवत्त्वस्य घटे सत्त्वान्नानुपपत्तिरिति ध्येयम्।

**दशमं द्रव्यमिति**। पृथिव्यादिनवातिरिक्तत्व-द्रव्यत्वोभयवदित्यर्थः, अतो नाऽप्रसिद्धिः। प्रत्येकाधिकरणेषु प्रसिद्धयोर्द्वयोर्द्वित्वरूपेण निरधिकरणकप्रसिद्धिसत्त्वात्। नहि विधेयतावच्छेदकावच्छिन्नस्य साधिकरणकप्रसिद्धिरेवाङ्गमिति ध्येयम्। तमः=तमःपदवाच्यम्। तद्धि=तमःपदवाच्यं हि। तस्य च=तमःपदवाच्यस्य च। तथाच तमो द्रव्यं रूपवत्त्वाद्कर्मवत्त्वाच्च घटवदिति प्रयोगः। अत्र द्रव्यत्वं पृथिव्याद्यन्यतमत्वव्याप्यं नवेति विप्रतिपत्तिर्बोध्या। नन्वस्तु तमो द्रव्यं, अस्तु तस्य क्लृप्तद्रव्येष्वन्तर्भाव इत्यत आह **तद्धीति**। तमःपदवाच्यमित्यर्थः। **गन्धशून्यत्वादिति**। प्रतियोगिव्यधिकरणगन्धाभावादित्यर्थः। **जलादिकमिति**। आदिना प्रत्येकमनुमानं द्रष्टव्यम्। ननु द्रव्यचाक्षुषे आलोकसंयोगस्य हेतुतया तद्विरहे कथं चाक्षुषम्। न च चक्षुर्गोलकान्तर्वर्तिइन्द्रियान्तरात्तद्ग्रह इति वाच्यम्। इन्द्रियान्तरकल्पने गौरवादित्यत आह **तत्प्रत्यक्षे इति**। तमःप्रत्यक्षे इत्यर्थः। इत्थं चोक्तयुक्त्या तस्य द्रव्यत्वे सिद्धेऽनायत्या तमोन्यद्रव्यचाक्षुषत्वं प्रति आलोकसंयोगस्य जन्यतावच्छेदकत्वम्, भवतापि तमसोऽभावरूपत्वे तमोन्याऽभावचाक्षुषत्वं तज्जन्यतावच्छेदकं वाच्यमिति साम्यमिति भावः। **आवश्यकेति**।

न, आवश्यकतेजोभावेनैवोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात्। रूपवत्ताप्रतीतिस्तु भ्रमरूपा, कर्मवत्ताप्रतीतिरपि आलोकापसारणौपाधिकी भ्रान्तिरेव। तमसोऽतिरिक्तद्रव्यत्वे अनन्तावयवादिकल्पनागौरवं च स्यात्। सुवर्णस्य यथा तेजस्यन्तर्भावस्तथा वक्ष्यते।

अथ गुणा रूपं रसो गन्धस्ततः परम् ॥३॥
स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम्।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥४॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम्।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥५॥

समाधान—आवश्यक ( प्रौढ़ प्रकाशक ) तेजःसामान्याभाव रूप अन्धकार को मानने से ही जब कि उपपत्ति ( निर्वाह ) हो जाता है तो द्रव्यान्तर कल्पना (अतिरिक्त द्रव्य की कल्पना करना) अन्याय्य है।

प्रश्न—तम यदि तेजोऽभाव है तो उसमें "नीलं तमश्चलति" यह रूपवत्ता प्रतीति क्यों होती है—अभाव तो नीरूप है। उत्तर—("नीलमाकाशम्" यह प्रतीति जैसे भ्रम है—क्योंकि आकाश सर्वथा रूपशून्य है—वैसे ही ) नीलं तमश्चलति" यह रूपवत्ता प्रतीति भी भ्रम है। "चलति" यह कर्मवत्ताप्रतीति भी ( जब कि मनुष्य-"लालटैन" रूप प्रकाश लेकर चलता है तो उस मनुष्य की अपसारण ( क्रिया ) लालटैन में आकर अन्धकार में भासित होने लगती है-कि तम चल रहा है-इत्यादि ) इसलिये आलोकापसारण रूप उपाधि प्रयुक्त होने से भ्रान्ति ही है। और तम को यदि अतिरिक्त द्रव्य मानते हैं तो उसके अनन्त अवयव मानने पड़ेंगे-अर्थात् सावयव द्रव्य मानना होगा—अतः अनन्त अवयव कल्पन प्रयुक्त गौरव होगा—तदपेक्षया तेजोऽभाव ही तम है सो अभाव हमारे ( नैयायिक के ) यहां सप्तम पदार्थ है। अत तम का उसी में अन्तर्भाव है, तम अतिरिक्त द्रव्य नहीं है। सुवर्ण का जैसे तेज में अन्तर्भाव है वह अगाड़ी ( तेजोनिरूपण में ) बतलायेंगे।

---

अतिरिक्ततमोवादिनापि "इह तेजो नास्तीति" प्रतीतिविषयतया महत्त्वसमानाधि- [illegible]

स्त्वावच्छिन्नसामान्याभावभेदोऽवश्यं निवशनीयः, एव द्रव्यचाक्षुषप्रत्यक्ष[illegible] विपरीतगौरवमिति भावः। न च तेजोभावस्तमः, तमोभावो वा तम इत्यत्र विनिगमनाविरह इति वाच्यम्। उष्णस्पर्शाश्रयतया तेजसो द्रव्यत्वसिद्धेः। तमोभावरूपत्वे च उष्णस्पर्शाश्रयत्वस्य तत्र बाधात्, एवं आलोकस्याऽन्धकाराभावरूपत्वे द्रव्यचाक्षुषं प्रति अन्धकाराभावसंबन्धस्य हेतुत्वे गौरवादित्यपि बोध्यम्। एतत्सूचनायाऽऽवश्यकपदमिति ध्येयम्। तेजोभावेनैवेति। उद्भूतानभिभूतरूपव-

न्महातेजःसामान्याभावेनैवेत्यर्थः। **चक्षुरूष्मादिवारणायोद्भूतेति**। सुवर्णादिवारणायानुद्भूतेति, सुवर्णादिभिन्नार्थकम्, तेनानुद्भूतत्वस्याननुगतस्य दुर्वचत्वेपि न क्षतिः। परमाणुद्व्यणुकत्रसरेणुवारणाय महेति।

न चैतादृशतेजःसामान्याभावस्य तमोरूपत्वे आलोकसमवधानेपि घटवृत्तिरूपादौ अन्धकारप्रतीत्यापत्तिः, संयोगेन तादृशतेजःसामान्याभावस्य तत्र सत्त्वादिति वाच्यम्। द्रव्यवृत्तित्वविशिष्टतत्सामान्याभावस्य, संयोग-संयुक्तसमवायसंयुक्तसमवेतसमवायाद्यन्यतमसंबन्धेन तादृशतेजःसामान्याभावस्य वा विवक्षितत्वात्। **द्रव्यान्तरकल्पनाया अन्याय्यत्वादिति**। तमस्त्वे द्रव्यविभाजकोपाधित्वाऽकल्पनादित्यर्थः। तेन न सिद्ध्यसिद्धिभ्यां व्याघातः। उक्तानुमाने स्वरूपासिद्धिं दर्शयति **रूपवत्तेति**। भ्रान्तिरेव=भ्रमरूपैवेत्यर्थः। तथाच नीलक्रियारोपे तन्निष्ठचक्षुःसंयुक्तविशेषणत्वाऽऽलोकापसरणयोर्नियतदोषत्वमिति भावः। न च तथापि नीलं तम इति चाक्षुषी भ्रान्तिः कथं स्यात्, आलोकादिसन्निकर्षाभावेन नीलरूपस्य प्रत्यक्षाऽसंभवादिति वाच्यम्। यत्र देशान्तरे आलोकसद्भावे नीलानुभवस्तत्रानुभूयमानस्याऽऽरोपसंभवात् स्मर्यमाणारोपसंभवाच्च। ननु तथापि बहिरिन्द्रियजन्यज्ञानस्य मुख्यविशेष्यांशे लौकिकत्वनियमाद् विशेष्यांशे आलोकसन्निकर्षविरहे कथं नीलं तम इति चाक्षुषी भ्रान्तिरिति चेन्न। आलोकाभावचाक्षुषे आलोकसन्निकर्षस्याहेतुत्वात्। साधकाभावमुक्त्वा बाधकमाह **तमसोऽतिरिक्तत्वे इति**। **अनन्तावयवादीति**। आदिनाऽवयवसंयोग-तद्ध्वंसादिपरिग्रहः।

अथ तमो द्रव्यमेव अन्यथा नीलं तमश्चलतीतिप्रत्ययानुपपत्तेः। न चायं भ्रमः, भ्रमत्वे साधकाभावात्, इतरथा तमो न नीलमितिविपरीतप्रत्ययप्रसंगाच्च। न चैवं तमसः पृथिवीत्वं स्यात्, नीलत्वावच्छिन्नं प्रति पृथिवीत्वेन समवायिकारणत्वादिति वाच्यम्। तादृशकार्यकारणभावे मानाभावात्। विलक्षणतेजःसंयोगा-ऽवयवनीलात्मकविशेषकारणद्वयविरहादेव जलादौ तदुत्पादवारणसंभवात्, तैजसे पाकजनीलाद्युत्पादस्य विद्यमानरूपव्यक्तेः प्रतिबन्धकत्वादेव वारणसंभवाच्च। न च नीलत्वस्य कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वस्यावश्यकत्वेन तदवच्छिन्नं प्रति पृथिवीत्वेन समवायिकारणत्वमावश्यकम्, द्रव्यत्वादेर्व्यापकधर्मत्वेनान्यथासिद्धत्वादिति वाच्यम्। तमसो नित्यतया तद्वृत्तिनीलस्यापि नित्यत्वाभ्युपगमेन तस्य कार्यमात्रवृत्तित्वासिद्धेः। न च तमसो नित्यत्वेऽन्धकारो नष्टः उत्पन्नोन्धकार इति प्रतीतिव्याघात इति वाच्यम्। तादृशप्रतीतेर्न्यायमतेपि भ्रमत्वात्। अस्तु वा तादृशकार्यकारणभावः, तथापि तमोवृत्तिनीलस्य नित्यत्वाभ्युपगमेन तस्य पृथिवीत्वसाधकत्वादिति ध्येयम्।

नापि चलतीतिप्रतीतिर्भ्रमः, बाधकाभावात्। न च क्रियात्वावच्छिन्नं प्रति मूर्तत्वेन समवायिकारणतया क्रियावत्त्वान्मूर्तत्वमायाति तमसः, तस्य द्रव्यत्वे किं मानमिति वाच्यम्। मूर्तत्वस्य द्रव्यत्वव्याप्यत्वात्, अन्यथा द्रव्यत्वमूर्तत्वयोः

गुणान् विभजते— अथ गुणा इति । एते गुणाश्चतुर्विंशतिसंख्याकाः कणादेन कण्ठतश्चशब्देन च दर्शिताः । तत्र गुणत्वजातिसिद्धिरग्रे वक्ष्यते ॥३–५॥

उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा ।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च ॥६॥
भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च ।
तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥७॥

गुणों का विभाग करते हैं—रूप-रस-आदि—२२— और अदृष्ट से धर्म-अधर्म २ ये-इस प्रकार इन २४ गुणों को महर्षिकणाद ने अपने सूत्रों में कण्ठ से पढ़े हैं – तथा च शब्द से दिखलाये हैं । गुणत्व जाति सिद्धि अगाड़ी गुणनिरूपण में कहेंगे ।

---

सांकर्यापत्तेः । तमस्येव द्रव्यत्वस्य मूर्तत्वव्यभिचारित्वादिति भावः । न च तस्याऽतिरिक्तत्वकल्पनागौरवेणेदृशप्रतीतीनां भ्रमत्वमेव कल्प्यम्, गौरवस्य साहजिकप्रतीतौ भ्रमत्वासाधकत्वात्, अन्यथा नानाघटकल्पनागौरवेण जगत्येकैव घटव्यक्तिः कल्प्येत । तत्र तेजोभावत्वकल्पनातो द्रव्यत्वकल्पनायामेव लाघवाच्च । किंच तमसस्तेजोभावत्वकल्पनावत् तेजसि तदभावत्वं किं न कल्प्यते । उष्णस्पर्शस्य द्रव्यत्वसाधकस्य सत्त्वात्तत्कल्पनमयुक्तमिति चेत् । उपदर्शितदिशा तत्साधकयोः रूपक्रिययोः सत्त्वात् । अपि च तस्य तथात्वे "नष्टमुत्पन्नं तम" इत्याकारकप्रत्ययायोगः । न ह्यनेकप्रतीतिभ्रमत्वसाधकं तस्याऽभावत्वसाधकं च प्रमाणमस्ति, येन तथा कल्पनं युज्येत इति चेत् ।

तमसो नीलरूपवत्त्व उक्तहेतुहेतुमद्भावे व्यभिचारवारणाय तत्तद्द्रव्याप्यजातयः स्वीकार्याः । न हीदृशजातिकल्पनायामनुभवोस्ति, नापि तत्र नीलत्वव्याप्यजातिकल्पने नीलं तम इति प्रत्ययातिरिक्तं मानमस्ति । तस्मादुक्तप्रतीतीनां भ्रमत्वमेव । नहि प्रतीतिमात्रेण विषयसत्त्वं संभवति, अन्यथा शुक्तिविशेष्यकरजतप्रकारकज्ञानादप्यनिर्वचनीयरजतसिद्ध्यापत्त्या संभविष्यत्यौपनिषदपक्ष एव श्रेयान् । यच्चोक्तं जगति एकैव घटव्यक्तिः स्यादिति । तन्न, नहि तत्र नानाव्यक्तिकल्पनायां बाधकमस्ति प्रत्युत साधिका प्रतीतिरिति तत्कल्पनं युज्यते । यदप्युक्तं-विपरीतप्रत्ययप्रसंग इति । तदपि न, निरस्तसमस्तविषयाज्ञानकलापस्य विदुषां नोदेतीति कथं निश्चयः । यदपि तमोऽभाव एव तेजः किन्न कल्प्यते इति । तदयुक्तं—तत्रोक्तप्रतीतेरन्यथा नेतुं शक्यत्वात्, इह च पृथिवीगतनीलाद्यारोप इति सुकरं वक्तुम् । नष्टोत्पन्नत्वव्यवहारः कथमिति चेत्, इत्थम्-नष्ट इति व्यवहारस्तूक्तप्रागभावनाशं गोचरयति, उत्पन्न इति व्यवहारश्च नीलारोपोत्पत्तिगोचर इति संक्षेपः ।

ननु गन्धाभावविशिष्टपीतत्वेन क्लृप्तद्रव्यान्तर्भावाऽसत्त्वाद्द्रव्यान्तरसिद्धिरित्यत आह **सुवर्णस्येति**।

**कण्ठतश्चशब्देन चेति**। तत्र रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्चेति सूत्रे कण्ठतः सप्तदश, गुरुत्वद्रवत्वस्नेहसंस्काराऽदृष्टशब्दाः सप्त चशब्देनोक्ता इत्यर्थः। ननु चशब्देन षडेव समुच्चिता इति चतुर्विंशतित्वव्याघातः। न चाऽदृष्टशब्देन धर्माधर्मयोरभिधानाच्चतुर्विंशतित्वोपपत्तिरिति वाच्यम्। एवंसति अदृष्टपदे लक्षणापत्तिः, धर्माधर्मोभयसाधारणाऽदृष्टत्वजातेरेव तत्प्रवृत्तिनिमित्तत्वात्। तथाचाऽदृष्टत्वजातेर्गुणविभाजकतानवच्छेदकत्वे गुणत्वसाक्षाद्व्याप्यजातेर्गुणविभाजकोपाधित्वनियमभंगः स्यात्, अन्यथा शुक्लत्वादिभेदेन गुणानामानन्त्यापत्तेरिति चेन्न।

अदृष्टत्वस्य जातित्वे मानाभावात्। न च भावकार्यसामान्यजनकतावच्छेदकतयाऽदृष्टत्वजातिसिद्धिरिति वाच्यम्। तादृशसामान्यकार्यकारणभावे मानाभावात्। अथ तथापि अदृष्टाऽपूर्वादिशक्यतावच्छेदकतयाऽदृष्टत्वजातिसिद्धिः, धर्मत्वाऽधर्मत्वयोर्द्वयोः शक्यतावच्छेदकत्वे गौरवात्। न च पदशक्यतावच्छेदकत्वेनापि जातिसिद्धौ गगनादिचतुष्टयसाधारणजातिसिद्ध्यापत्तिरिति वाच्यम्। भूतपदशक्यतावच्छेदकत्वेनापि पृथिव्यादिपंचकसाधारणजातिसिद्ध्या सांकर्यापत्त्या विनिगमनाविरहेण भूतत्वविभुत्वयोरुभयोरेवाऽजातित्वात्। न च तथापि हर्यादिपदशक्यतावच्छेदकत्वेनानुगतसिद्ध्यापत्तिर्दुर्वारैवेति वाच्यम्। हरिपदात् सिंहत्वविष्णुत्वादिप्रकारेणैव स्वारसिकस्य बोधस्य सर्वसिद्धत्वादिति चेन्न। अदृष्टादिपदादपि धर्मत्वाऽधर्मत्वप्रकारेणैव बोधस्य स्वारसिकतायाः सर्वसिद्धत्वात्। वस्तुतस्तु मुक्तिवादोक्तरीत्या मुक्तिं प्रति अदृष्टस्य प्रतिबन्धकत्वमावश्यकम्, तथाच मुक्तिप्रतिबन्धकतावच्छेदकतयैवाऽदृष्टत्वजातिसिद्धिः। न चाऽदृष्टत्वस्य जातित्वे गुणविभाजकत्वापत्तिः, गुणत्वसाक्षाद्व्याप्यजातेरेव गुणविभाजकत्वनियमादिति वाच्यम्। तादृशनियमस्याऽप्रयोजकत्वात्। स्वतन्त्रेच्छस्येति न्यायेन ग्रन्थकर्तुरिच्छाया एव वा नियामकत्वादित्यन्यत्र विस्तरः।

ननु गुणेषु कथं चतुर्विंशतित्वव्यवहारः, चतुर्विंशतित्वस्य संख्यारूपतया गुणे तदसंभवादिति चेन्न। रूपादि "चतुर्विंशतिमात्र" विशेष्यकसमूहालंबनरूपापेक्षाबुद्धिविशेष्यत्वरूपचतुर्विंशतित्वस्य विवक्षितत्वात्। संख्याया गुणावृत्तित्वं चाग्रे वक्ष्यते। **अग्रे वक्ष्यते इति**। गुणनिरूपणे इत्यर्थः। द्रव्यकर्मभिन्नसामान्यवृत्तिकारणतावच्छेदकतया गुणत्वजातिसिद्धिः, तत्रावच्छेदकं न सत्तारूपत्वादि अधिकन्यूनदेशवृत्तित्वादित्यग्रे वक्ष्यते इति भावः। वस्तुतस्तु कार्यतावच्छेदकानुगतधर्माभावेन नेदृशरीत्या जातिसिद्धिः, तथा च रूपान्यद्रव्यकर्मभिन्नसामान्यवद्वृत्तिकारणतावच्छेदकतयापि जातिसिद्धिः स्यात्। न चेष्टापत्तिः, ईदृशजात्या गुणत्वसांकर्यप्रसंगात्, किन्तु गुणपदशक्यतावच्छेदकतया गुणत्वजातिसिद्धिर्बोध्या। एवं च गुणत्वजातिमत्त्वं गुणस्य लक्षणम् नातो न्यूनता।

कर्माणि विभजते-उत्क्षेपणमिति। कर्मत्वजातिस्तु प्रत्यक्षसिद्धा। एवमुत्क्षेपणत्वादिकमपि ॥६॥

ननु भ्रमणादिकमपि पञ्चकर्माधिकतया कुतो नोक्तमत आह भ्रमणमित्यादि ॥७॥

सामान्यं द्विविधं प्रोक्तं परं चापरमेव च।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥८॥
परभिन्ना च या जातिः सैवापरतयोच्यते।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥९॥
व्यापकत्वात्पराऽपि स्याद्व्याप्यत्वादपराऽपि च।

कर्मों का विभाग करते हैं—उत्क्षेपण (ऊपर को फेंकना) अपक्षेपण (नीचे को फेंकना) आकुञ्चन (सिकोड़ना) प्रसारण (फैलाना) गमन—ये पाँच प्रकार के कर्म हैं।

प्रश्न—जब कि भ्रमणादि भी पाँच कर्मों में अधिक मौजूद हैं तो उन्हें क्यों नहीं कहा—अर्थात् १० कर्म कहने चाहिये थे।

उत्तर—उन अतिरिक्त भ्रमण आदि पाँच कर्मों का गमन में ही अन्तर्भाव है। भ्रमण-(घूमना-फिरना) रेचन (किसी वस्तु का बाहर निकलना) जैसे शरीर से मल आदि का। स्पन्दन (बहना जैसे जल का) ऊर्ध्वज्वलन (ऊपर की ओर जलना—जैसे अग्नि का) तिर्यग्गमन (टेढ़ा चलना जैसे वायु का)

---

**कर्माणि विभजते इति।** कर्मलक्षणं तु विभागाऽसमवायिकारणत्वे सति संयोगाऽसमवायिकारणत्वम्। कपालाकाशसंयोगादावतिप्रसंगवारणाय सत्यन्तम्, तस्य घटाकाशसंयोगासमवायिकारणत्वात्। कपालद्वयविभागेऽतिव्याप्तिवारणाय विशेष्यदलम्, तस्य कपालाकाशविभागाऽसमवायिकारणत्वात्। एवमूर्ध्वदेशाऽसमवायिकारणत्वमुत्क्षेपणत्वम्। अधोदेशसंयोगाऽसमवायिकारणत्वमपक्षेपणत्वम्। शरीरसन्निकृष्टसंयोगासमवायिकारणत्वमाकुंचनत्वम्। विप्रकृष्टसंयोगासमवायिकारणत्वं प्रसारणत्वम्। उत्क्षेपणादिचतुष्टयभिन्नत्वे सति विभागासमवायिकारणत्वे सति संयोगासमवायिकारणत्वं गमनत्वम्। **प्रत्यक्षसिद्धेति।** संयुक्तसमवेतसमवायेनेत्यादिः। अतीन्द्रिये कर्मणि तत्सिद्धिस्तु संयोगरूपकार्येण द्रष्टव्या। **एवमुत्क्षेपणत्वादिकमपीति।** अस्य विपरिणतेन प्रत्यक्षसिद्धमित्यनेनान्वयः।

मूले—**भ्रमणमिति।** भ्रमणं चक्रादेः। रेचनं मलादेः। स्यन्दनं रथादेः। ऊर्ध्वजलनं वन्ह्यादेः। तिर्यग्गमनं वाय्वयदेः। **गमनादेव लभ्यते इति।** तथाच भ्रमणादीनां गमने एवान्तर्भाव इति भावः। यद्यपि उत्क्षेपणत्वादिजातिवद् भ्रमणत्वादीना-

सामान्यं निरूपयति-सामान्यमिति। तल्लक्षणं तु नित्यत्वे सत्य-नेकसमवेतत्वम्। अनेकसमवेतत्वं संयोगादीनामप्यस्त्यत उक्तं-नित्यत्वे सतीति। नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तमने-

सामान्य का निरूपण करते हैं—सामान्य दो प्रकार का है पर तथा अपर—द्रव्यादि (द्रव्य गुण-कर्म) इन तीन पदार्थों में रहने वाली सत्ता जाति पर-जाति कही जाती है। सामान्य (जाति) का लक्षण है कि जो नित्य हो तथा अनेक में समवाय सम्बन्ध से रहे। इस लक्षण में नित्यत्व विशेषण न देंगे तो संयोग में अतिव्याप्ति हो जावेगी - क्योंकि संयोग भी अनेक (एक से भिन्न- दो-में तीन) में समवेत (समवाय सम्बन्ध से वर्तमान) हैं। अतः नित्यत्व कहा तो संयोग नित्य नहीं है। एवं अनेक पद न देंगे तो गगन परिमाण में अतिव्याप्ति हो जावेगी—क्योंकि गगन-परिमाण नित्य भी है समवेत भी है गगन में। अतः अनेक पद दिया तो गगनपरिमाण अनेक

---

मपि जातित्वाविशेषेण पार्थक्येनैव निर्देश उचितः। स्वतन्त्रेच्छस्य मुनेरिच्छैव नियामिका, अत एव गुरुत्वद्रवत्ववेगजन्यतावच्छेदकजातयोपि सन्तीति कथमेतावानेव विभाग इति निरस्तम्। यत्तु गमनत्वजातेर्भ्रमणादिषु प्रत्ययादुत्क्षेपणादौ च तद्प्रत्ययादेवमभिहितमिति। तन्न, उत्क्षेपणादावपि ऊर्ध्वं गच्छतीत्यादिप्रयोगात्तत्रापि गमनत्वसिद्धेः। वस्तुतस्तु गमनादेव लभ्यते इत्यनेन भ्रमणादीनां गमनेऽन्तर्भाव इति पक्षान्तरमुक्तम्, उत्क्षेपणमितिश्लोके चरमचकारेणाऽनुक्तपंचकर्मणां समुच्चयाभिधानान्न न्यूनतेति द्रष्टव्यम्।

तल्लक्षणं तु=सामान्य लक्षणं तु। **संयोगादीनामिति**। आदिना अनेकसंख्या-अनेकपृथक्त्व-विभागानां कार्यद्रव्यस्य च संग्रहः। नित्यत्वं च प्रागभावाऽप्रतियोगित्वं ध्वंसाप्रतियोगित्वं वा। सामान्यस्य जन्यत्वे व्यक्तेस्तत्र समवायिकारणत्वं वाच्यम्, एवं च घटोत्पत्तेः पूर्वमपरत्र घटत्वविशिष्टप्रत्ययानुपपत्तिः, तस्य नानात्वे तु गौरवम्, तदंगीकारे प्रमाणाभावश्च स्यात्। एवं च प्रागभावाप्रतियोगित्वे सिद्धे तद्विशिष्टाभावत्वेन लाघवसहकृतेन ध्वंसाप्रतियोगित्वं तस्य सिद्ध्यति। न च ध्वंसप्रतियोगित्वाभावकल्पना तत्रापि तुल्येति वाच्यम्। अभावज्ञानस्य प्रतियोगिज्ञानसापेक्षतया तत्र प्रतियोगिज्ञानाभावे ध्वंसप्रतियोगित्वाभावस्याऽर्थसिद्धत्वात्। नित्यद्रव्य-नित्यगुणविशेषेषु चाऽतिव्याप्तिवारणाय विशेष्यदलम्। समवेतत्वसंबन्धेन व्यक्तिद्वयवत्त्वं तदर्थः।

गगनपरिमाणादीनामिति। आदिना जलपरमाणुरूपादेः परिग्रहः। अत्यन्ताभावेऽप्यस्तीति। अत्यन्ताभावस्य स्वरूपसंबन्धेनाऽनेकवृत्तित्वात्। नित्यद्रव्यादेरपि कालिकेनाऽनेकवृत्तित्वादित्यपि बोध्यम्।

केति । नित्यत्वे सत्यनेकवृत्तित्वमत्यन्ताभावेऽप्यस्त्यतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्तम् । एकव्यक्तिमात्रवृत्तिस्तु न जातिः । तथा चोक्तम्—

"व्यक्तेरभेदस्तुल्यत्वं संकरोऽथाऽनवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः" ॥

नहीं है—अपितु एक ही है मानिव्याप्तिः । "समवेतत्व" शब्द का अर्थ है "समवाय सम्बन्ध से रहना" (समवायसम्बन्धेन वृत्तित्व) —सो यहाँ वृत्तित्व मात्र का ही निवेश कर दीजिये "समवाय सम्बन्ध" का निवेश क्यों किया—तथा सति अत्यन्ताभाव में अति व्याप्ति हो जावेगी—क्योंकि अत्यन्ताभाव नित्य है और सर्वत्र रहने के नाते अनेक में भी रहता है । "समवायसम्बन्ध" का निवेश किया तो अत्यन्ताभाव समवायसम्बन्ध से नहीं रहता है (अपितु स्वरूपसम्बन्ध से रहता है ) यहाँ पर "समवेतत्व" की व्यावृति से समवाय सम्बन्ध की व्यावृत्ति में ही तात्पर्य है ।

जाति के बाधकों को बतलाते हैं—"व्यक्तेरभेदः इत्यादि से—

एक व्यक्ति (आकाश आदि) में आकाशत्व आदि जाति नहीं है । क्योंकि अनेक व्यक्तियों का एक रूप से बोध करने के लिये जाति मानते हैं—जैसे संपूर्ण घटों का एक रूप से बोध करने के लिये उसमें घटत्व जाति मानते हैं । आकाशत्व-कालत्व-दिकत्व ये उपाधियाँ हैं । जाति से भिन्न धर्म को उपाधि कहते हैं । *तुल्यत्व अन्यूनानतिरिक्तव्यक्तिकत्व तुल्यत्व है*—यह घटत्व-कलशत्व दोनों को जातित्व का बाधक है । अर्थात् घटकलश दोनों पर्यायवाचक हैं' अतः इन दोनों का बोध जब कि एक रूप से घटत्व रूप से हो सकता है तो असिद्धत्वात् घटत्व को ही केवल जाति मान लिया जाय—घटत्व कलशत्व दोनों को नहीं । सङ्करः परस्परात्यन्ताभावसमानाधिकरणयोरेकत्र समावेशः । यह भूतत्व-मूर्त्तत्व को जातित्व का बाधक है । अर्थात्-पृथ्वी-जल-तेज वायु-आकाश-ये पांच भूत पदार्थ हैं- इनमें भूतत्व धर्म रहता है । इन पाचों में आकाश के स्थान में मन को जोड़ दीजिये तो ये ही पांच मूर्त्त पदार्थ हो जावेंगे । मन में मूर्त्तत्व है वहीं *भूतत्वात्यन्ताभाव-आकाश में भूतत्व है वहां मूर्त्तत्वात्यन्ताभाव है* । इस रीति से परस्पराऽत्यन्ताभाव समानाधिकरण हैं, और पृथिवी-जल तेज-वायु-इन चार में भूतत्व-मूर्त्तत्व-दोनों हैं—अतः साकर्य दोष भय से भूतत्व-मूर्त्तत्व दोनों जाति नहीं हैं किन्तु उपाधि हैं । क्रियासमवायिकारणतावच्छेदकतया मूर्त्तत्व को जाति मानते हैं । अनवस्थिति-अप्रामाणिक अनन्त पदार्थ कल्पना अविश्रान्तिः अनवस्था । जैसे—अनेक व्यक्तियों का एकरूप से बोध करने के लिये जाति मानते हैं । सकल घटों का एक रूप से बोध करने के लिये उनमें घटत्व जाति मानी जाती है । परन्तु सकल घट और घटत्व इन दोनों का एकरूप से बोध करने के लिये इन दोनों में एक घटत्वत्व जाति और मानिए । एवं सकल घट-घटत्व एक श्रेणी में घटत्वत्व ये अलग श्रेणी इन दोनों में फिर एक जाति "घटत्वत्वत्व" मानिये तो इस प्रकार अप्रामाणिक रूप से अनन्त पदार्थों की कल्पना प्रयुक्त अनवस्था हो जावेगी । क्योंकि इसी प्रकार फिर आगाड़ी बढ़ते जाइये । रूपहानि-घट-पट-रूप अवयवियों का परस्पर अवयव भेद प्रयुक्त भेद करते चले

जाइये - घट-पट-इन दोनों के द्व्यणुकों का भेदक तो दोनों के परमाणु ही गये-दोनों के परमाणुवों का भेदक हुआ विशेष परन्तु उन दोनों घटपरमाणु-पटपरमाणु में रहने वाले जो अलग २ विशेष हैं-- उनका भेदक कौन है। अर्थात् घट परमाणु में रहने वाले विशेष से पट परमाणु में रहने वाला विशेष भिन्न है इसमें क्या प्रमाण है! यदि दोनों विशेषों में कोई अन्तर नहीं तो परमाणुवों में अभेद हो जावेगा—इस प्रकार घट-पट को ऐक्य हो जावेगा। यदि उन दोनों विशेषों के परस्पर भेद का साधक उनमें एक विशेषत्व जाति मानी जाय तो इस शंका में कहते हैं कि "रूपहानि" हो जावेगी। अर्थात् विशेष नित्यद्रव्यों का परस्पर भेद करता हुआ अपना व्यावर्त्तक स्वयं है - अतः विशेषों में यदि विशेषत्व जाति मान ली जाती है तब तो वही भेदक हो जावेगी —विशेष का स्वतोव्यावर्त्तकत्व जो रूप है उसकी हानि हो जावेगी। अतः विशेष में विशेषत्व जाति नहीं मानना "रूपहानि" भयात्। असम्बन्ध —प्रतियोगिता-अनुयोगितान्यतर सम्बन्धेन समवायाभावः। यह असम्बन्ध समवाय तथा अभाव के जातिमत्त्व का बाधक है— अर्थात् समवाय में समवायत्व-अभाव में अभावत्व यदि जाति मानी जाय तो उसका विरोधी असम्बन्ध है। लक्षण समन्वय-समवाय तथा अभाव ये समवायसम्बन्ध से यदि कहीं रहते तो समवाय सम्बन्ध के प्रतियोगी होते तब प्रतियोगिता सम्बन्ध से समवायवान् होते - परन्तु सो बात नहीं। अथवा समवाय-अभाव में समवाय सम्बन्ध से कोई रहता तो समवायसम्बन्ध के अनुयोगी ये दोनों होते तब अनुयोगितासम्बन्ध से समवायवान् होते परन्तु समवाय और अभाव में समवाय सम्बन्ध से कोई नहीं रहता है। अतः यह सिद्ध हुआ कि न तो समवाय अभाव कहीं समवाय सम्बन्ध से रहते हैं और न इन्हीं में कोई समवाय सम्बन्ध से रहता है। इसलिये प्रतियोगिता-अनुयोगिताऽन्यतर सम्बन्ध से समवायाभाव रूप असम्बन्ध समवाय-अभाव में समवायत्व-अभावत्व रूप जाति का बाधक हो गया। घट-पट आदि अन्यतर सम्बन्धान्तर्गत अनुयोगिता सम्बन्ध से समवायवान् हैं समवायाभाव रूप असम्बन्ध जाति का बाधक उनमें नहीं है—अतः उनमें घटत्व-पटत्व रूप जाति मानते हैं।

---

**समवेतत्वमित्युक्तमिति** । यत्किंचित्संबन्धावच्छिन्नवृत्तित्वमित्यर्थः । अनेकसमवेतत्वं च स्वप्रतियोगिसमवेतत्व-स्वसामानाधिकरण्योभयसंबन्धेन भेद-विशिष्टत्वम्, तेनैकभिन्नत्वरूपानेकत्वस्याऽसिद्धावपि न क्षतिः।

ननु इदं लक्षणं गगनत्वादावव्याप्तम्, तस्याऽनेकसमवेतत्वाभावादित्यत आह **एकव्यक्तिमात्रेति** । व्यक्तेरभेदः = एकव्यक्तिमात्रवृत्तित्वम्। व्यक्तिद्वयाऽवृत्तित्वमिति यावत्। यथा गगनत्वं न जातिः। तुल्यत्वं स्वभिन्नजातिसमनियतत्वम्, तज्जातिसमनियतो यो व्यक्तिसमवेतो धर्मः स न तज्जातिभिन्नजातिः इत्यर्थः, यथा घटत्वं कलशत्वं च न जातिद्वयम्। एतच्चाऽसति भेदसाधके प्रमाणे बोध्यम्। तत्सत्त्वे तु तुल्यव्यक्तिकयोर्द्वयोरपि जातिद्वयत्वमुपेयत एव। घटपरिमाण-तत्तुल्यद्रव्यपरिमाणेषु पर्वतपरिमाणावधिकापकर्ष-सर्षपतत्तुल्यद्रव्यपरिमाण्यवधिक-प्रकर्षरूपं जातिद्वयं तुल्यव्यक्तिकमपि विभिन्नं स्वीक्रियते। अत एव तुल्यव्यक्तिकयोर्जातिद्वयत्वाभ्युपगमे मानाभावो मूलमिति पक्षधरमिश्राः। संकरः = परस्परात्य-

द्रव्यादीन्। परत्वमधिकदेशवृत्तित्वम्। अपरत्वमल्पदेशवृत्तित्वम्। सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वं, तदपेक्षया चान्यासां जातीनामपरत्वम् ॥८॥

पृथिवीत्वाद्यपेक्षया व्यापकत्वादधिदेशवृत्तित्वाद्द्रव्यत्वादेः परत्व, सत्ताऽपेक्षयाऽव्याप्यत्वाद् अल्पदेशवृत्तित्वाच्च द्रव्यत्वस्यापरत्वम्, तथाच धर्मद्वयसमावेशाद् उभयमविरुद्धम् ॥ ९ ॥

अधिक देश में रहने वाली जाति पर जाति कही जाती है—और जो जाति कम देश में रहती है उसे अपर कहते हैं। समस्त जातियों की अपेक्षया अधिक देश में रहने के नाते सत्ता जाति 'पर' है। उसकी अपेक्षया अन्य जातियाँ 'अपर' हैं।

पर से भिन्न जाति अपर कही जाती हैं, द्रव्यत्व-गुणत्व आदि जातियाँ पर तथा अपर दोनों ही कही जाती हैं। जैसे पृथिवीत्व जाति की अपेक्षया द्रव्यत्व जाति व्यापक-तथा अधिक देश में रहने के नाते 'पर' है। सत्ता जाति की अपेक्षया अव्याप्त होने से तथा अल्पदेश में रहने के नाते द्रव्यत्व जाति 'अपर' है। अतः द्रव्यत्व आदि जाति में परत्व-अपरत्व दोनों धर्म विरोधी नहीं हैं।

---

न्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः। तत्तज्जातितदभावसमानाधिकरणत्वे सति तत्तज्जातिमन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वमिति यावत्। गुणत्वस्य द्रव्यत्वस्य पृथिवीत्वादिना सांकर्यवारणाय जातिसामानाधिकरण्यं सत्यन्तघटकम्। विशेष्यदलं च पृथिवीत्वस्य द्रव्यत्वादिना सांकर्यवारणाय तत्तद्भावसामानाधिकरण्यत्वे सतीति। अत एव पृथिव्यादिपंचकसाधारणं भूतपदप्रवृत्तिनिमित्तं न जातिः मूर्त्तत्वजात्या सांकर्यादित्यनुमानम्। स्वसामानाधिकरण्यस्याभावसामानाधिकरण्योभयसंबन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगित्वाभाव इति नियम एव सांकर्यस्य जातिबाधकत्वे मूलम्। अनवस्थितिः = स्वाधिकरणे स्वस्याभावः। अव्याप्यवृत्तित्वमित्यर्थः। आंशिकत्वमिति यावत्। यथोपेक्षात्वादि। वस्तुतोऽनवस्थितिः = अनवस्था—यथा सकलनिखिलजातिनिष्ठं वैजात्यं-तादृशवैजात्यतदाश्रयनिष्ठं वैजात्यान्तरं तत्तश्च तादृशवैजात्यतदाश्रयनिष्ठमपरं वैजात्यमित्येवं क्रमेणानवस्था बोध्या। एवं च जातिषु न जातिकल्पनेति ध्येयम्। रूपहानिः=स्वतोव्यावर्त्तकत्वहानिः। यथा विशेषत्वं न जातिः। तस्य जातित्वे विशेषपदार्थस्य स्वतोव्यावर्तकत्वहानिः स्यात्। जातिमत्पदार्थस्य जातेरेव व्यावर्तकत्वात्। असंबन्धः=समवेतत्वाभावः। समवायाभावयोरभावत्वस्य च जातित्वे बाधकः। जातिबाधकसंग्रह इति। जातित्वाभावनियतत्वेन प्रामाणिकैः कथित इत्यर्थः। अत्र व्यक्त्यभेदादिज्ञानानां सामान्यज्ञाने प्रतिबन्धकत्वम्। यत्र यत्किंचिदेकबाधकज्ञानेन जातिज्ञानप्रतिबन्धस्तत्र तदेव जातिबाधकम्, न तु

**अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥**

विशेषं निरूपयति—अन्त्य इति । अन्तेऽवसाने वर्त्तत इत्यन्त्यः, यदपेक्षया विशेषो नास्तीत्यर्थः। घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः, परमाणूनां परस्परभेदको विशेष एव स तु स्वतएव व्यावृत्तः, तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः ॥ ९ ॥ १० ॥

विशेष पदार्थ का निरूपण करते हैं—जो अन्त्य हो नित्यद्रव्यवृत्ति हो उसे विशेष कहते हैं। अन्त्य शब्द का अर्थ है कि जो सबके अन्त में हो और उसमें जो रहे - जैसे सबके अन्त में परमाणु हैं और उसमें विशेष रहता है, (क्योंकि विशेष नित्यद्रव्यों में रहता है सो परमाणु भी नित्यद्रव्य हैं)। प्रश्न—विशेषपदार्थ को मानने की आवश्यकता ही क्या है। उत्तर—हम जब आपसे पूछेंगे कि घट-पट आदि में क्या भेद है· तो आप यही कहेंगे कि अवयव भेद प्रयुक्त भेद है—सो द्व्यणुकपर्यन्त घट-पट आदि पदार्थों का तो अवयव भेद प्रयुक्त भेद हो जावेगा—अर्थात् परमाणुवों के भेद प्रयुक्त द्व्यणुकों का भी भेद हो जावेगा-परन्तु वे दोनों परमाणु परस्पर में भिन्न हैं—इसमें क्या प्रमाण है। तो उन परमाणुवों का भेदक विशेष ही को कहना होगा। अब उन दोनों परमाणुवों में रहने वाले जो अलग २ विशेष हैं उनका परस्पर भेदक कौन इस प्रश्न का उत्तर किया कि विशेष स्वतः ही व्यावृत्त ( भिन्न ) है - विशेष को भिन्न करने के लिये विशेषान्तर या (विशेषत्व) जाति की अपेक्षा नहीं है।

---

स्वरूपसत्, तेनाऽत्र परिगणितेषु न कस्यापि वैयर्थ्यम्। अत्र व्यक्त्यभेदतुल्यत्वसंकराऽनवस्थितिरूपहानिज्ञानानां स्वातन्त्र्येण समवेतत्वाभावरूपाऽसंबन्धस्य च ग्राह्याभावावगाहितया प्रतिबन्धकता बोध्या।

परं चाऽपरमेव चेति मूलम्। ननु परत्वापरत्वे गुणविशेषौ कथं सामान्ये इत्यत आह **परत्वमिति**। व्यापकरूपत्वे गौरवादाह **अधिकदेशवृत्तित्वमिति**। स्वाभाववद्वृत्तित्वमित्यर्थः। यद्यपि विरुद्धघटत्वपटत्वयोरप्येवमस्ति, तथापि स्वाधिकरणवृत्तित्वविशेषितं तथा, स्वं—व्याप्यत्वेनाभिमतम्, स्वाभावश्च समवायसंबन्धावच्छिन्नप्रतियोगिताकः, नातः पृथिवीत्वाद्यपेक्षया घटत्वादेः परत्वम्, संयोगसंबंधावच्छिन्नप्रतियोगिताकपृथिवीत्वाद्यभाववति तस्य वृत्तित्वात्। वृत्तिद्वयमेकसंबंधावच्छिन्नं समवायसंबन्धावच्छिन्नं वा ग्राह्यम्, तेन समवायसंबन्धावच्छिन्नप्रतियोगिताकाभाववति संबन्धान्तरेण वर्तमाने तस्मिन्नातिप्रसंगः। न वा पटत्वावच्छिन्नप्रतियोगिताकाभाववति वर्तमाने संबन्धान्तरेण स्वाधिकरणे वर्तमाने तस्मिन्नातिप्रसंगः। अपरत्वं विवृणोति **अल्पदेशवृत्तित्वमिति**। स्वभिन्नत्वे सति स्वाभाववदवृत्तित्वमित्यर्थः। स्वपदद्वयं परत्वेनाभिमतसामान्यपरम्। पर्यवसितमुक्तप्रायम्। **सकलजात्यपेक्षयेति**। समावेतापेक्षयेत्यर्थः। अधिकदेशवृत्तित्वात्=व्यापकत्वात्। **परत्वमिति**। समवेतवन्निष्ठान्योन्याभावप्रतियोगितान-

वच्छेदकत्वमित्यर्थः। प्रतियोगितावच्छेदकता च समवायसंबन्धावच्छिन्ना ग्राह्या, अन्यथा सत्ताया अपि विषयितासंबन्धेन तादृशान्योन्याभावप्रतियोगितावच्छेदकत्वादसंभवापत्तेः। अवच्छेदकता च किंचिद्धर्मानवच्छिन्नापि, अन्यथा द्रव्यगुणाद्यावृत्तिव्याप्तिः। जात्यखण्डोपाध्यतिरिक्तस्य पदार्थस्य स्वरूपतोऽवच्छेदकत्वविरहान्नातिप्रसंगः। तदपेक्षया=सत्तापेक्षया। **अन्यासामिति।** सत्ताभिन्नानामित्यर्थः। **अपरत्वमिति।** समवेतसामान्यमपेक्ष्याऽव्यापकत्वमित्यर्थः। समवेतवन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वमिति यावत्। उभयं=व्याप्यत्वव्यापकत्वोभयम्। **अविरुद्धमिति।** तथाच प्राचां परापरत्वविभागो व्यर्थ इति भावः।

सत्ताजातिसिद्धिस्तु सत्पदशक्यतावच्छेदकतया, एवं च द्रव्यं सन् गुणः सन्-कर्म सदितिव्यवहारोऽप्युपपद्यते। इत्थंच द्रव्यं सत् गुणः सन् कर्म सदितिप्रतीतेः समवायसम्बन्धेन एकधर्मप्रकारकत्वस्यानुभवसिद्धतया द्रव्यादित्रितयसाधारणजातिसिद्धिः।

अथ ज्ञेयत्वमेव सत्पदप्रवृत्तिनिमित्तमस्तु किं सत्ताजातेस्तथात्वेन। ज्ञेयत्वं च ज्ञानविषयत्वम्। न च सत्पदशक्यत्वं यदि सत्ताभिन्नधर्मावच्छिन्नं स्यात्तदा जातिमद्भिन्नवृत्तिः स्यात्, सत्ताभिन्नेत्यत्र सत्तापदं जातिमन्मात्रवृत्तिधर्मपरम्, तेन सत्ताया असिद्धावपि न क्षतिरिति वाच्यम्। इष्टापत्तेः। सामान्यं सत्, विशेषः सन्, समवायः सन्नित्यादिव्यवहारस्य सर्वसिद्धत्वादिति चेन्न।

एकार्थसमवायेन सत्तावत्तया तादृशव्यवहारोपपत्तेः। न चाऽभावः सन्नितिव्यवहारानुपपत्तिः। स्वसमवायिविशेषणतया तदुपपादनात्। एकार्थसमवायश्च स्वप्रतियोगिकसमवायप्रतियोगित्व-स्वप्रतियोगिकसमवायतादात्म्यान्यतररूपः, स्वं सत्तेत्यलम्।

नन्वेवं नित्यसंयोगे सामान्यलक्षणातिव्याप्तिरिति चेन्न। अनेकसमवेतत्वमित्यनेन बहुसमवेतत्वस्य विवक्षितत्वादित्यन्यत्र विस्तरः।

मूले-**अन्त्यो नित्यद्रव्यवृत्तिरिति** स्वरूपकथनम्। लक्षणन्तु निःसामान्यत्वे सति सामान्यभिन्नत्वे सति समवेतत्वम्। मूलस्थमन्त्यपदं व्याचष्टे। **अन्त्य इति।** परमाणुनिष्ठरूपादिकं व्यावर्त्तयितुमाह **यदपेक्षयेति।** तदपेक्षया तु रूपत्वादिसामान्यमेव विशेषोऽस्तीति भावः। **द्व्यणुकपर्यन्तानामिति।** न च द्व्यणुके एव तत्कल्पनास्तु विशेषवत्परमाणुसमवेतत्वाद्द्व्यणुकभेद इव विशेषवद्द्व्यणुकजनकत्वादेव परमाणूनां भेदोपपत्तेरिति वाच्यम्। परमाणुद्वयसमवेतानन्तद्व्यणुकभेदेन तद्भेदकल्पनापातात् तत्परमाणुद्वयसमवेतानन्तद्व्यणुकमात्रवृत्त्येककल्पने भाविद्व्यणुकाद् विद्यमानद्व्यणुकभेदो न स्यात्, तथात्वे जातित्वापाताच्च। एतत्कपालसमवेतत्वेन हेतुना एतद्घटे घटान्तरभेदः साधनीयः। एवं द्व्यणुकमिदं द्व्यणुकान्तरभिन्नं एतत्परमाणुसमवेतत्वादित्यनुमानतो भेदः साधनीयः। एवमयं परमाणुः परमाण्व-

**घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः।**
**तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः॥ ११॥**

**समवायं दर्शयति—घटादीनामिति। अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवायः।**

समवाय का निरूपण करते हैं—घटादि का कपालादि में ( घट अवयवी है—कपाल अवयव है ) अवयवी अपने अवयव में, जाति व्यक्ति में, गुण-गुणी में, विशेष-नित्यद्रव्यों में जिस सम्बन्ध से रहे उसे ही समवाय कहते हैं।

---

न्तराद्भिन्नः विशेषादित्यनुमानात् भेदसिद्धिः। तदेवाह **विशेष एवेति**। अथवा भेदात्=भेदज्ञानात्। भेदः=भेदज्ञानम्। परमाणूनां=एकजातीयरूपवताम्। एतेन परमाणूनामपि नीलपीतादिरूपभेदेन भेदसंभवाद् विशेषांगीकारो व्यर्थ इति परास्तम्। एकजातीयरूपवतां तेषां तदनभ्युपगमे भेदानुपपत्तेः। परमाणुपदमवयवशून्यतां बोधयति। तथा चैतत्परमाणुनिष्ठपरमाण्वन्तरप्रतियोगिकभेदबुद्धिः एतत्परमाणुनिष्ठयत्किंचिद्धर्मज्ञानसाध्या तद्बुद्धित्वात्। यद्यत्प्रतियोगिकयन्निष्ठभेदबुद्धिर्भवति सा तन्निष्ठयत्किंचिद्धर्मज्ञानसाध्या, यथा पटप्रतियोगिकघटनिष्ठभेदबुद्धिरिति सामान्यव्याप्तिज्ञानादितरबाधसहकृताद्विशेषसिद्धिरिति भावः।

ननु विशेषाणामपि परस्परव्यावर्त्तनाय विशेषान्तरमुपगन्तव्यम्, एवं चानवस्थेत्यत आह **स त्विति**। इत्थं चेतरव्यावर्त्तनाय कल्प्यमानानां तेषां स्वव्यावर्त्तकनिरपेक्षाणामेव कल्पनान्नानुपपत्तिरिति भावः। स्वतोव्यावृत्तत्वं च स्वभिन्नलिंगकस्वविशेष्यकस्वसजातीयेतरभेदानुमित्यविषयत्वम्।

नव्यास्तु विना व्यावर्त्तकं परेषां विशेषाणामिव नित्यानामपि द्रव्याणां स्वत एव व्यावृत्तत्वान्न विशेषापेक्षेत्याहुः।

केचित्तु शब्दसमवायिकारणतावच्छेदकतया तत्कल्पनमावश्यकम्, अनेकशब्दादौ तत्कल्पने गौरवात्। न च तत्परिमाणव्यक्तिस्तथास्तु, तदैकत्वादिना विनिगमनाविरहात्। न चाऽक्लृप्ते विनिगमनाविरहः संभवतीति तत्सिद्धौ मानमाचक्षते। अत्रेदं बोध्यम्। यत्राननुगतानि कारणानि तत्रापेक्ष्यते कारणतावच्छेदकोऽनुगतो धर्मः कारणतायाः, प्रकृते तु कारणाननुगमाभावान्नापेक्षणीयोनुगतो धर्मः कारणतायाः। न च कारणता सावच्छिन्नेति नियमः, प्रमाणाभावादिति चिन्तनीयम्।

मूले-**घटादीनामिति**। आदिना पटादिपरिग्रहः। **कपालादाविति**। आदिना तंत्वादिपरिग्रहः। मूले-जातेश्चेत्यत्र चकारेण विशेषनित्यद्रव्ययोर्ग्रहणमिति दर्शयति-**अवयवावयविनोरिति**। सामान्यतोऽवयवत्वं जन्यद्रव्यसमवायिकारणतावच्छेदकधर्मवत्त्वम्। विशेषतश्च तत्तत्समवायिकारणत्वम्।

समवायत्वं नित्यसम्बन्धत्वम्। तत्र प्रमाणं तु गुणक्रियादिविशिष्टबुद्धि-र्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वाद् दण्डी पुरुष इति विशिष्टबुद्धि-वद् इत्यनुमानम्। अनेन संयोगादिबाधात् समवायसिद्धिः। न च स्वरूपस-म्बन्धेन सिद्धसाधनम् अर्थान्तरं वा ?, अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवाल्लाघवादेकसमवायसिद्धिः। न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धि-प्रसङ्गः, तत्र रूपसमवायसत्त्वेऽपि रूपाभावात्।

नित्यसम्बन्ध को समवाय कहते हैं—इस दृष्टि से समवायत्व नित्यसम्बन्धत्व रूप हुवा। समवाय में अनुमानप्रमाण है कि "दण्डी पुरुषः" यह दण्ड से विशिष्ट पुरुष की बुद्धि जैसे विशेषण जो दण्ड और विशेष्य जो पुरुष इन दोनों के सम्बन्ध (संयोग) को विषय (अवगाहन) करती है—ऐसे ही "रूपवान् घटः" "कर्मवान् घटः" यह गुण एवं क्रिया से विशिष्ट घट बुद्धि भी विशेषण जो रूप तथा कर्म हैं और विशेष्य जो घट इन दोनों के सम्बन्ध को अवगाहन करती है। सो इस विशिष्ट बुद्धि का जो भी सम्बन्ध विषय हो—वही समवाय है। गुण-क्रियादि विशिष्ट बुद्धि स्थल में गुण द्रव्य का क्रियाद्रव्य आदि के संयोग सम्बन्ध का बाध है—क्योंकि "द्रव्यद्रव्ययोरेव संयोगः" इस न्याय से। अतः समवाय की सिद्धि हो गयी। स्वरूप सम्बन्ध वादी मीमांसक शंका करता है कि अयुतसिद्ध गुण द्रव्य का तो स्वरूप सम्बन्ध प्रत्यक्ष सिद्ध ही है फिर उसी को "गुणक्रियादिविशिष्टबुद्धिः" इस विशिष्ट बुद्धि पक्षक अनुमान के द्वारा सिद्ध करना यह नैयायिक के अनुमान में सिद्धसाधन दोष हो जाता है। और नैयायिक के मत से नैयायिक के अनुमान में अर्थान्तर भी हो जाता है। क्योंकि समवाय की सिद्धि उक्तानुमान से नैयायिक करने चला था स्वरूपसम्बन्ध की सिद्धि हो गयी—प्रकृत अर्थ से भिन्न अर्थ की सिद्धि हो जाना यहाँ अर्थान्तर नामक निग्रह स्थान कहलाता है "न च स्वरूपसम्बन्धेन सिद्ध साधन मित्यादि"। नैयायिक उत्तर करता है कि "रूपवान घटः" "रूपवान् पटः" "रूपवान् मठः" इत्यादि स्थल में वस्तुओं के अनन्त स्वरूप होने से स्वरूप सम्बन्ध अनन्त मानने पड़ेंगे और उक्त स्थलों में समवाय एक ही मानना पड़ता है क्योंकि समवाय एक है—अतः एक समवाय की सिद्धि हो गई। मीमांसक प्रश्न करता है कि यदि समवाय एक है तो (वायू रूपवान्) यह वायु में रूपवत्ताबुद्धि होनी चाहिये। क्योंकि वायु में स्पर्श का समवाय है जो स्पर्श का समवाय है वही तो रूप का भी है—क्योंकि समवाय आपके (नैयायिक) यहाँ एक है- अथ च "सम्बन्ध सत्ता सम्बन्धिसत्ता नियामिका' जहाँ सम्बन्ध रहता है वहीं उस सम्बन्ध से सम्बन्धी रहता है—ऐसा नियम है—सो वायु में रूप का समवाय स्पर्श को लेकर बैठा है तो समवाय सम्बन्ध से सम्बन्धी रूप की भी प्रतीति अवश्य भी होनी चाहिये। उत्तर नैयायिक करता है कि वायु में रूप का समवाय है—परन्तु सम्बन्धी जो रूप वह वहाँ नहीं है क्योंकि सम्बन्ध—और सम्बन्धी इन दोनों की सत्ता भी सम्बन्धी की प्रतीति की नियामिका है) अर्थात् जहाँ सम्बन्ध और सम्बन्धी दोनों रहते हैं वहीं तेन सम्बन्धेन सम्बन्धी की प्रतीति होती है। वायु में रूप का सम्बन्ध समवाय अवश्य है परन्तु सम्बन्धी नहीं है। अतः "रूपवान् वायुः" यह प्रतीति नहीं होती है—वही मूल में कहा है कि "नच रूपसमवायसत्त्वेऽपि" इत्यादि।

**नित्यसंबन्धत्वमिति**। संयोगवारणाय **नित्येति**। आकाशादिवारणाय **संबन्धत्वमिति**। तच्चेहेतिप्रतीतिनियामकत्वम्। अथाऽत्यन्ताभावस्वरूपेऽतिव्याप्तिः, अधिकरणाभावयोः स्वरूपातिरिक्तसंबन्धानभ्युपगमात्। न च संबन्धत्वं संयोगसमवायान्यतरत्वरूपमत्र प्रविष्टमिति नाभावस्वरूपेऽतिव्याप्तिरिति वाच्यम्। घटकीभूतसंबन्धत्वज्ञानं विना लक्षणज्ञानाऽसंभवात्, घटकज्ञानं च समवायज्ञानाधीनमित्यन्योन्याश्रयात् इति चेन्न। संबन्धिभिन्नत्वेनापि विशेषणीयत्वात्। वस्तुतः संबन्धपदं भावविभाजकोपाधिपरम्। नित्यपदं च स्वाश्रयप्रतियोगिकान्योन्याभावासमानाधिकरणधर्मपरम्। स्वाश्रयप्रतियोगिकान्योन्याभावासमानाधिकरणैतद्व्यक्तित्वशालिनि घटादौ विशेष्यविरहान्नातिप्रसंगः। इत्थं च स्वाश्रयप्रतियोगिकान्योन्याभावासमानाधिकरणभावविभाजकोपाधिमत्त्वं नित्यसंबन्धत्वं फलितम्। एतेन संबन्धत्वस्योक्तान्यतरत्वरूपत्वेऽन्योन्याश्रयः, अखण्डोपाधिरूपत्वे समवायत्वस्यैव लाघवेन तथात्वौचित्यादिति निरस्तम्। एवं च संबन्धिभिन्नत्वमनुपादेयमिति ध्येयम्। विशिष्टबुद्धित्वावच्छेदेन साध्यसिद्धिरुद्देश्या, सामानाधिकरण्येन तथात्वे तु संयोगविषयताशालिबुद्धिमादाय सिद्धसाधनप्रसंगात्। गुणक्रियेति स्वरूपकथनम्। गुणादिप्रकारताशालिप्रमेत्यर्थः। विशेष्यविशेषणसंबन्धविषया=विशेष्यवृत्तिगुणादिप्रकारतावच्छेदकसंबन्धविषया, नातो घटो रूपवान् चैत्रश्चलति दण्डी पुरुष इति संमूहालंबनविशिष्टबुद्ध्याद्यादाय सिद्धसाधनम्। वस्तुतो रूपत्वप्रकारकप्रमाविशेष्यत्वं घटवृत्तिरूपे इति ज्ञानमादाय सिद्धसाधनं दुर्वारं तथापि गुणक्रियादिविशिष्टबुद्धित्वावच्छेदेन तथात्वं साध्यमित्यदोषः।

**विशिष्टबुद्धित्वादिति**। विशिष्टविषयताशालिबुद्धित्वादित्यर्थः। निर्विकल्पकव्यावृत्तविषयताशालिप्रमात्वादिति परमार्थः। अनेन=अनुमानेन। समवायसिद्धिरित्यनेनान्वयः। संयोगादिबाधेन=संयोगसमवायिकारणतावच्छेदकद्रव्यत्वाभावेन, गुणादौ तदसिद्धेरिति भावः। **अर्थान्तरं वेति**। प्रकृतानुपयुक्तसिद्धिविषयोर्थस्तदित्यर्थः। तथा च मां प्रति साधनं व्यर्थम्—तव च नेष्टसिद्धिरनेनानुमानेनेति पर्यवसितोर्थः।

**अनन्तस्वरूपाणामिति**। गुणगुण्यादिस्वरूपाणामित्यर्थः। इदमुपलक्षणम्-संबन्धत्वमुक्तस्वरूपद्वये कल्पनीयमतिरिक्ते वेत्यत्र विनिगमकाभावेनापि तत्सिद्धेः। किं च समवायेन जन्यभावत्वावच्छिन्नं प्रति संयोगत्वावच्छिन्नं प्रति वा तादात्म्येन द्रव्यत्वेन हेतुतया तत्सिद्धिः। स्वरूपसंबन्धेन तथात्वोक्तौ तु कालिकादिस्वरूपसंबन्धेन क्रियादेरपि जन्यभावाश्रयतया व्यभिचारः स्यात्।

अथ कालिकादिसंबन्धव्यावृत्तः भावाभावसाधारणः पदार्थमात्रस्याधारतानियामकः कश्चित्संबन्धोऽस्तु-स एव च वैशिष्ट्यम्, अन्यथा तवापि मण्यभावस्य कारणत्वेऽतिप्रसंगस्य दुर्वारत्वात्, तेन च संबन्धेन जन्यभावादेः कार्यत्वान्न प्रागुक्तो दोष इति चेत्। तथापि प्रतियोगितासंबन्धेन घटादिसमवेतरूपादिनाशे स्वप्रतियो-

गिसमवेतत्वसंबन्धेन घटादिनाशत्वेन हेतुतया तत्सिद्धिः। भावाभावसाधारणसंबन्धावच्छिन्नवृत्तित्वस्य समवेतत्वस्थाने निवेशे घटादिवृत्त्यभावादेरपि नाशापत्तेः।

ननु घटादिवृत्तिद्वित्वादिनाशे व्यभिचारवारणाय कालिकादिसंबन्धेन घटनाशविशिष्टघटसमवेतनाशत्वं जन्यतावच्छेदकं वाच्यम्, एवं च घटनाशविशिष्टनाशत्वमेव तथास्तु न तु घटादिसमवेतत्वस्यापि निवेशः। अत्र कार्यतावच्छेदकस्तद्घटकश्च संबन्धः कालिको ग्राह्यः। कारणतावच्छेदकसबन्धोपि तथा। न च घटनाशात्पटनाशं विनापि पटसमवेतरूपादेर्नाशापत्तिः। पटनाशवत्तत्समवेतनाशत्वावच्छिन्नं प्रति पटनाशत्वेनापि हेतुतया तदापत्त्यसंभवादिति चेन्न। ईदृशनानाकार्यकारणभावकल्पनापेक्षया स्वप्रतियोगिसमवेतत्वकालिकोभयसम्बन्धेन नाशवद्वृत्तिप्रतियोगितासंबन्धेन नाशत्वावच्छिन्नं प्रति स्वप्रतियोगिसमवेतत्वसंबन्धेन नाशत्वेन हेतुताया एव युक्तत्वात्। अथैवमपि मास्तु ध्वंससाधारणः, अत्यन्ताभावान्योन्याभावसाधारणस्तु स्यात् लाघवादिति चेन्न। उक्ताभावयोः समवायांगीकारे चक्षुःसंयुक्तसमवायेनैव तद्ग्रहो वाच्यः। एवं च चक्षुःसंयुक्तविशेषणतायाः कार्यतावच्छेदकमत्यन्ताभावान्योन्याभावभिन्नाभावत्वं वाच्यमिति गौरवम्। ननु ध्वंसचाक्षुषत्वमेव कार्यतावच्छेदकं वाच्यम्। प्रागभावे मानाभावेन तत्संग्रहस्यानुपयोगात्। ध्वंसत्वं चाखण्डोपाधिः। एवं च भावाभावसाधारणसंबन्धाङ्गीकारान्महदुद्भूतरूपवत्समवेतचाक्षुषत्वावच्छिन्नं प्रति महदुद्भूतरूपवच्चक्षुःसंयुक्तःसमवायस्य हेतुत्वे न किंचिद्बाधकम्। एवं गुणादिवृत्तिजात्यभावयोः प्रत्यक्षे एक एव सन्निकर्षो वाच्यः इति चेत्। तथापि परमाणौ महत्त्वाभावादिचाक्षुषोदयेन महत्त्वाभावान्यद्रव्यवृत्त्यभावचाक्षुषे चक्षुःसंयुक्तमहत्त्ववद्विशेषणतायाः रूपाभावान्यद्रव्यवृत्त्यभावचाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तोद्भूतरूपवद्विशेषणतायाः हेतुत्वात्, महत्समवेतचाक्षुषे चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवायत्वेन हेतुतयोभयसाधारणवैशिष्ट्यसिद्धौ मानाभावात्। ननु कार्यकारणभावद्वयेपि अभावत्वनिवेशे गौरवात्, लाघवेन तत्तदन्यद्रव्यवृत्तिचाक्षुषत्वं कार्यतावच्छेदकमतो रूपादिप्रत्यक्षमपि वैशिष्ट्येनैवेति चेन्न। द्व्यणुकवृत्तिरूपादौ विषयतया चाक्षुषापत्तिवारणाय संयुक्तांशे महत्त्वनिवेशनमावश्यकम्। एवं च परमाणौ महत्त्वाभावप्रत्यक्षानापत्तिः, महत्संयुक्तवैशिष्ट्यस्याभावात्। तस्मादुक्तकार्यकारणभावद्वयेपि जन्यतावच्छेदककोटौ अभावत्वनिवेशनस्यावश्यकतया न गुणकर्माऽभावप्रत्यक्षसाधारणं तज्जन्यतावच्छेदकं संभवतीति संक्षेपः।

नन्नु स्वरूपाणामनन्तानामपि तथात्वकल्पनं युक्तम्, अतिरिक्तनानासमवाये तथात्वकल्पनातः क्लृप्ते तत्कल्पनाया एव न्याय्यत्वादित्यत आह **लाघवादिति। एकसमवायसिद्धिरिति।** एकत्वे नित्यत्वं तस्यार्थसिद्धमिति तन्नोक्तम्। **समवायस्यैकत्वे इति।** स्पर्शसमवायरूपसमवायोरेकत्वे इत्यर्थः। तत्र = वायौ। **रूपाभावादिति।** संबन्धिसंबन्धोभयसत्त्वे प्रतीतिसत्त्वमिति

न चैवमभावस्यापि वैशिष्ट्यं सम्बन्धान्तरं सिद्ध्येदिति वाच्यम्, तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभाववुद्धिप्रसङ्गाद, घटाभावस्य तत्र सत्त्वात्, तस्य च नित्यत्वात् । अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्याद्, वैशिष्ट्यस्य च तत्र सत्त्वात् । मम तु घटे पाकरक्ततादशायां श्यामरूपस्य

मीमांसक प्रश्न करता है कि जब अनन्त स्वरूप सम्बन्ध के भय से एक समवाय सम्बन्ध आपने माना तो "घटाभाववद् भूतलम्" इत्यादि घटाभाव स्थल में भी अभाव के अनन्त स्वरूप सम्बन्ध के भय से एक वैशिष्ट्य नामक संबन्धान्तर मान लिया जाय । नैयायिक कहता है कि जिस वैशिष्ट्य नामक संबन्ध को आप हमें मनवाना चाहते हैं वह नित्य है कि अनित्य । यदि नित्य है तो ( पहिले भूतल में घट नहीं था बाद में घट ले आये तो) भूतल में घट लाने के बाद भी ( अर्थात घटवद् भूतल में भी ) "घटाभाववाद् भूतलम्" यह घटाभावबुद्धि होनी चाहिये । ( क्योंकि भूतल में घट लाने के बाद भी ) घटाभाव वहाँ मौजूद है—( कारण कि ) घटाभाव नित्य है । यदि अन्यथा ( घटात्यन्ताभाव को अनित्य मानते हो तो ) देशान्तर ( घटशून्य देश ) में भी घटाभाव की प्रतीति नहीं होनी चाहिये । ( क्योंकि सामान्यधर्मावच्छिन्नप्रतियोगिता का-भाव एक होता है । ) घट लाने पर सर्वत्र भूतल में घटाभाव नष्ट हो गया—अतः घट शून्य-देश में भी घटाभाव प्रतीति नहीं होगी । ( प्रत्युत घटाभाव के नाश हो जाने से सर्वत्र भूतल में घटवत्-घटवत्-इत्यादि ही प्रतीति होनी चाहिये ) प्रश्न—प्रागुक्तस्थल में घटाभाव के रहने पर भी प्रतियोगि दशा में प्रतियोगी ( घट ) का वैशिष्ट्य है भूतल में, न कि घटाभाव का—अतः भूतल में घटाभाव बुद्धि नहीं होती है—इस अभिप्राय से कहते हैं कि—"वैशिष्ट्यस्य च तत्र सत्त्वात्" । मीमांसक—( जैसे तुम्हारी सिद्धान्ती के ( नैयायिक के ) मत में भी जहाँ पाक से घट रक्त हो गया, उस स्थल में घट में श्यामरूप का समवाय है, परन्तु श्यामरूपवत्ता बुद्धि नहीं होती है, वैसे ही मेरे ( मीमांसक के ) मत में भी वैशिष्ट्य के नित्य होने पर भी घटसत्त्व दशा में घटाभावबुद्धि नहीं होती है—अतः हम और तुम दोनों समान हैं फिर हमको तुम क्या उपालंभ देते हो । नैयायिक —( तुममें और हममें यह अन्तर है कि तुम्हारे यहाँ वैशिष्ट्य भी नित्य है—और संबन्धी जो घटाभाव वह भी नित्य है—घट के लाने पर भी दोनों ( संबन्ध-संबन्धी ) बने हुये हैं अतः घट लाने पर भी तुम्हारे ( मीमांसक के ) यहाँ "घटाभाववद् भूतलम्" यह प्रतीति होनी चाहिये, और "मम तु घटे पाकरक्तादशायां" अर्थात् मेरे मत में तो ऐसा है कि घट जब पाक में रक्त हो गया तो श्यामरूप नष्ट हो गया उस काल में श्यामरूपवत्ता बुद्धि नहीं होती है । ( क्योंकि संबन्धी की प्रतीति की नियामिका संबन्ध संबन्धी इन दोनों की सत्ता मानी गयी है, सो पाक से जब घट रक्त हो गया तो उस समय घट में श्यामरूप का समवाय है—क्योंकि समवाय एक है घट में जो रक्त का समवाय है वही श्यामरूप का समवाय है—परन्तु सम्बन्धी श्यामरूप नहीं है अतः हमारे मत में "श्यामो घटः" यह प्रतीति नहीं होती है । )

---

नियमादिति भावः । न च तत्संबन्धसत्त्वे तदसत्त्वमनुपपन्नम्, बाधकाभावात् । रूपवानितिप्रतीत्या रूपत्वावच्छिन्नप्रतियोगिकसमवायाधारताया एव विषयीकर-

यादृवायां च विशिष्टाधारताया अनभ्युपगमात्। गुणे गुणान्यत्वविशिष्टसत्तायाः शुद्धसत्तातोऽनतिरिक्तायाः सत्त्वेपि गुणान्यविशिष्टसत्तात्वावच्छिन्नाधारतायास्तत्रानभ्युपगमात्।

ननु घटो रूपवानिति बुद्धौ यथा भासमानविशेषणविशेष्यसंबन्धोऽतिरिक्तोऽभ्युपेयते तथा घटाभाववद् भूतलमित्यादिप्रतीतावपि विशेषणविशेष्ययोः संबन्धोऽभ्युपगन्तव्यः, तथा च कथमभावाधिकरणयोः स्वरूपसंबन्ध इति सिद्धान्त इत्याशंकते **नवेति**।

एव = अनन्ताधिकरणानां संबन्धत्वकल्पनागौरवभियाऽतिरिक्तसंबन्धांगीकारे। **संबन्धान्तरमिति** स्वरूपसंबन्धव्यवच्छेदाय। वैशिष्ट्यमेकमनेकं वा। एकमपि नित्यमनित्यं वा। तत्र आद्ये आह **तस्य नित्यत्वे इति**। तस्य=वैशिष्ट्यस्य, तस्येत्येकवचनेन वैशिष्ट्यस्यैकत्वमुक्तम्। विषयसत्त्वमुपपादयति **घटाभावस्येति**। तत्र= भूतले। तस्य = घटाभावस्य। अन्यथा=घटाभावस्याऽनित्यत्वे। घटानयनेन घटात्यन्ताभावस्य नाशे इति यावत्। देशान्तरेपि=घटदेशभिन्नदेशेपि। तत्प्रतीतिः=घटाभावबुद्धिः। **न स्यादिति**। घटत्वावच्छिन्नात्यन्ताभावस्यैकत्वादिति भावः। ननु तत्र घटाभावसत्त्वेपि प्रतियोगिदशायां न वैशिष्ट्यमिति नाभावप्रत्यय इत्यत आह **वैशिष्ट्यस्येति**। तत्र=पूर्वं। घटात्यन्ताभावप्रतीतिनियामके घटवति भूतले। सत्त्वादिति। अन्यथा घटानयनात्पुरापि तत्प्रत्ययो न स्यात्, तत्स्वीकारेऽन्यदापि तत्प्रत्ययापत्तिरिति भावः। ननु तत्रात्यन्ताभाववैशिष्ट्ययोरुभयोः सत्त्वेपि घटवत्ताज्ञानेन प्रतिबन्धान्नात्यन्ताभावप्रत्यय इति चेन्न। एवमपि घटज्ञानविरहकाले तत्र घटात्यन्ताभावबुद्ध्यापत्तेर्दुर्वारत्वात्। न चेष्टापत्तिः। तदानीं घटाभावबुद्धेः प्रमात्वापत्तेः, तत्रापीष्टापत्तौ तत्र घटाभावव्यवहारकर्तुरनाप्तत्वापत्तेः। अथ चक्षुःसंयुक्तविशेषणतायास्तत्तद्भावस्वरूपाया अननुगततया एककार्यकारणभावानुपपत्तेः, लाघवेन संबन्धान्तरं सर्वाऽभावसाधारणमस्तु। न च घटकाले घटाभावसन्निकर्षदशायां घटाभावचाक्षुषवद् घटाभावस्यापि चाक्षुषापत्तिरिति वाच्यम्। केवलमभावचाक्षुषस्यालीकतया आपादनाऽसंभवात्। घटाभावचाक्षुषस्यापि नापत्तिः संभवति, भवदुक्तस्वरूपसंबन्धेन घटाभावस्य तत्राभावेन स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकघटाभावाभाववत्ताधिय एव तद्बुद्धौ प्रतिबन्धकत्वात्। न चैतादृशबुद्ध्यभावदशायां तदापत्तिः, इष्टापत्तौ तद्ज्ञानस्य प्रमात्वापत्तिरिति वाच्यम्। तत्कालावच्छेदेन विशिष्टबुद्धिनियामकसंबन्धेन तद्वति तत्कालावच्छेदेन तेन संबन्धेन तद्वगाहिज्ञानस्य प्रमात्वेनास्तज्ज्ञानस्य प्रमात्वाऽसंभवादिति चेन्न। संबन्धान्तरकल्पनायां मानाभावात्। तत्तदभावरूपस्वरूपसंबन्धस्य भेदेपि सम्बन्धतावच्छेदकीभूतस्याऽभावत्वस्यैकत्वेनैककार्यकारणभावोपपत्तेः। न चैवमभावत्वानिलिशाबद्दप्रतीतिविषयतायाः कारणतावच्छेदकसंबन्धत्वस्यैकनिष्ठत्वकल्पनायाश्च लाघवेनैकसंबन्धसिद्धिरिति वाच्यम्। ईदृशसंबन्धसिद्धावप्यस्माकमप्रत्यभावात्, घटत्वावच्छिन्नप्रतियोगिताकाभावप्रकारकप्रतीतिनियामकसंबन्धस्यैवाऽतिरिक्तत्वानिरासादित्यलम्।

नष्टत्वान्न तद्वत्ताबुद्धिः । वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरवम् । इत्थं च तत्तत्कालीनं तत्तद्भूतलादिकं तत्तदभावानां सम्बन्धः ॥११॥

अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥ १२ ॥
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ।

वैशिष्ट्य को यदि अनित्य मानते हो तो ( इससे भूतल में घट लाने के बाद घटाभावबुद्धि क्यों नहीं होती है यह पूर्वदोष तो वारित हो जायगा—क्योंकि घट लाने पर घट का सम्बन्ध भूतल में हो गया—घटाभाव का संबन्ध नहीं रहा-सो संबन्ध के विना संबन्धी जो घटाभाव उसकी प्रतीति कैसे होगी । परन्तु अनन्त वैशिष्ट्य की कल्पना करने में तुम्हें ही गौरव होगा । इस प्रकार जिस २ वस्तुवों का अभाव जिस काल में जिस भूतल में है—तत्तत्कालीन जो तत्तद्-भूतल वही अभाव का संबन्ध है—( इसी को स्वरूप संबन्ध कहते हैं, नैयायिक लोग अभाव का स्वरूप संबन्ध ही मानते हैं ) ।

अभाव का विभाग करते हैं—"अभावस्तु" इत्यादि ग्रन्थ से । अभाव दो प्रकार का है संसर्गाभाव—अन्योन्याभाव भेद से । संसर्गाभाव तीन प्रकार है—प्रागभाव—ध्वंस—अत्यन्ताभाव, यह कारिका का अर्थ हुआ । द्रव्यं न, गुणो न, कर्म न, सामान्यं न, विशेषो न,

---

ननु समवायस्यैकस्य नित्यस्याभ्युपगमे घटस्य रक्ततादशायामपि श्यामरूपवानिति प्रत्ययप्रसंगः, तत्समवायस्य सत्त्वात् । असत्त्वे घटो रक्तरूपवानिति प्रत्ययानापत्तेः । स च समवायो नाना, तथात्वेपि तत्समवायस्य सत्त्वेनापत्तेर्दुर्वारत्वात् । न च पाकाच्छ्यामनाशकाल एव तत्समवायोपि नश्यतीति वाच्यम् । अपसिद्धान्तात् । अतिरिक्तनानासंबन्धकल्पनातः क्लृप्तस्वरूपसंबन्धेन निर्वाहे समवायोच्छेदप्रसंगात् । न च विजातीयरूपप्रतियोगिका एव समवाया नाना कल्प्यन्ते, तत्तत्सजातीयनानारूपाणां तथात्वकल्पनायां गौरवमिति वाच्यम् । यत्र पाकाद् घटे पूर्वश्यामरूपनाशे श्यामरूपोत्पत्तिः तत्रैतत्श्यामरूपसमवायस्य नष्टश्यामरूपसमवायादभिन्नतया तत्तद्दशायामपि तच्छ्यामरूपवानितिप्रत्ययापत्तेर्दुर्वारत्वादित्यत आह मम त्विति । न तद्वत्ताबुद्धिः=न श्यामरूपवत्ताबुद्धिः, प्रत्यक्षे विषयस्य हेतुत्वादिति भावः । अयं भावः—रक्तसमवायश्यामसमवाययोर्भेदे "रक्तघटे श्यामरूपवानिति" प्रत्ययापादनम्, अभेदे वा ! आद्ये श्याम इति प्रत्ययो नासिद्धः इदानीं श्याम इति प्रत्ययस्य श्यामरूपनाशात् श्यामे एतत्कालावच्छेदेन घटवृत्तित्वाभावेनाऽसंभवात् । द्वितीये श्यामसमवायस्यापि कालिकाव्याप्यवृत्तित्वे बाधकाभावेन इदानीं श्याम इति प्रत्ययापादनाऽसंभवात् । तव तु वैशिष्ट्यात्यन्ताभावयोर्नित्ययोर्घटकालावच्छेदेनापि भूतलवृत्तितया घटात्यन्ताभावप्रत्ययापत्तेर्दुर्वा-

अभावं विभजते-अभावस्त्विति। अभावत्वं द्रव्यादिषट्कान्योन्याभाववत्त्वम्। संसर्गेति। संसर्गाभावान्योन्याभावभेदादित्यर्थः। अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात्संसर्गाभावं विभजते—प्रागभाव इति। संसर्गाभावत्वम् अन्योन्याभावभिन्नाभावत्वम्। अन्योन्याभावत्वं तादात्म्यसम्ब-

समवायो न, इत्यादि जो द्रव्यादिषट्क का अन्योन्याभाव, अभाव हुवा और तादृशान्योन्याभाववत्व अभावत्वरूप हुआ। मूल कारिका में अभावपद का संसर्ग के साथ भी अन्वय है—इसी अन्वय के बल से संसर्गाभाव यह अर्थ निकला। वही मुक्तावली में लिखा है कि संसर्गाभाव—अन्योन्याभाव के भेद से (अभाव दो प्रकार का है)। अन्योन्याभाव एक ही प्रकार का है अत उसका विभाग नहीं किया। संसर्गाभाव का विभाग करते हैं "प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च" इस ग्रन्थ से। अन्योन्याभाव से भिन्न जो अभाव वह तो संसर्गाभावरूप हुआ और तादृशाभावत्व संसर्गाभावत्वरूप हुवा। जिस अभाव की प्रतियोगिता तादात्म्य संबन्ध (अभेद संबन्ध) से अवच्छिन्ना हो वह अन्योन्याभाव है। जैसे "घटः पटो न"। जिस

---

त्वात्। ननु घटानयनेपि मन्मते न तदानीं घटाभावप्रत्ययः, घटकालावच्छेदेन तस्य भूतले वृत्तित्वानभ्युपगमात्, अनुभवानुरोधेन तथैव कल्पनादिति चेत्, समीहितमेतदस्माकम्—घटाकालान्यकालेपि घटात्यन्ताभावस्वरूपेणैव प्रत्ययसंभवे वैशिष्ट्यविषयतायां मानाभावात्। न च समवायेपि तुल्यम्। न तावत्तत्तद्रूपाणां संबन्धत्वेपि समवायं विना निर्वाहः, घटो नीलरूपवान् पृथिवी नीलरूपवतीत्याकारकप्रत्यक्षविषयत्वेन लाघवान्नीलत्वाद्यवच्छिन्नप्रतियोगिकैकसंबन्धसिद्धेः। यद्धर्मावच्छिन्नप्रतियोगिताकः समवायः स तद्धर्मावच्छिन्नप्रकारकबुद्धावेव नियामको नान्यबुद्धौ, तेनैतद्घटे नीलान्तरसमवायस्य सत्त्वेपि नायं घटस्तन्नीलवानिति प्रत्यय इति ध्येयम्। द्वितीये त्वाह वैशिष्ट्यस्यानित्यत्वे इति। तथाच स्वरूपसम्बन्धकल्पनैव लघीयसीति भावः। ननु मण्यानयनेपि दाहापत्तिः, मण्यभावस्वरूपस्य प्रागिवेदानीमपि नित्यतया सत्त्वादित्यत आह इत्थं चेति। अभावसंबन्धसम्बन्धस्य नित्यत्वानित्यत्वाभ्यामनिर्वाहे चेत्यर्थः। तत्तत्कालीनेति। यस्मिन्-यस्मिन् काले घटाभावबुद्धिर्जायते तत्तत्कालीनेत्यर्थः। प्रतियोगिकालान्यकालीनेत्यर्थः। प्रतियोगिकालावच्छेदेन तदधिकरणं नाभावस्य संबन्ध इति पर्यवसितोर्थः। यस्मिन् यस्मिन् भूतले घटाभावबुद्धिर्जायते तत्तद्भूतलादिकमित्यर्थः। यस्य यस्याभावस्य बुद्धिर्जायते तत्तदभावानामित्यर्थः। अत्रेदं बोध्यम्—यदधिकरणे प्रतियोगिसंबन्धस्तस्मिन्नत्यन्ताभावसंबन्धत्वं कल्प्यते, अधिकरणान्तरेपि तदभावप्रत्ययेनाधिकरणान्तरस्यापि संबन्धत्वकल्पने गौरवप्रसंगात्, तत्तदधिकरणे विशिष्टबुद्धिनियामकसंबन्धत्वं तत्प्रतियोगिसंबन्धकालान्यकालावच्छेदेन तदत्यन्ताभावस्वरूपे कल्प्यते लाघवादिति विभावनीयम्।

न्धावच्छिन्नप्रतियोगिताकाभावत्वम् । विनाश्यभावत्वं प्रागभावत्वम् । जन्याभावत्वं ध्वंसत्वम् । नित्यसंसर्गाभावत्वम् अत्यन्ताभावत्वम् ।

अभाव का विनाश हो जावे उसे प्रागभाव कहते हैं—जैसे "इह कपाले घटो भविष्यति" । कपाल में घट उत्पन्न होने के बाद "भविष्यति" का विनाश हो जावेगा—अर्थात् घटोत्पत्ति होने के बाद फिर "भविष्यति" यह प्रागभाव की प्रतीति कपाल में नहीं होगी । जन्य ( उत्पन्न होने वाला ) जो अभाव उसे ध्वंस कहते हैं । जैसे "इह कपाले घटो ध्वस्तः" घट पर मुद्गर प्रहार कर देने से घटध्वंस की उत्पत्ति हो गयी—अतः ध्वंस जन्य अभाव सिद्ध हुवा । नित्य जो संसर्गाभाव वह अत्यन्ता भाव है । ( आशय यह है कि यद्यपि सम्बन्धमात्र का संसर्ग है—तथापि प्रकृत में ( अत्यन्ताभाव के लक्षण में ) "संसर्ग" पद से वृत्तिता नियामक सम्बन्ध को ही लेना चाहिये । वृत्तिता नियामक सम्बन्ध वह होता है, जो आधाराधेयभाव का नियामक हो जैसे 'संयोग' समवाय - आदि । अन्योन्याभाव की प्रतियोगिता तादात्म्य सम्बन्ध से अवच्छिन्ना होती है । तादात्म्यसम्बन्ध वृत्ति नियामक नहीं है । और ध्वंस—प्रागभाव की व्यावृत्ति नित्यपद से हो गयी—क्यों कि ध्वंस-प्रागभाव-संसर्गाभाव हैं—परन्तु वे नित्य नहीं हैं । अतः नित्य जो संसर्गावच्छिन्न ( वृत्तिनियामक सम्बन्धा वच्छिन्न ) प्रतियोगितानिरूपक अभाव उसे अत्यन्ताभाव कहते है ।

---

द्रव्यादिषट्केति । अथ द्रव्यादिषट्कत्वावच्छिन्नप्रतियोगिताकभेदो द्रव्यादिष्वपीत्यतिप्रसंगः । न च स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नभेदवत्त्वं द्रव्यत्वाद्यवच्छिन्नप्रतियोगिताकभेदकूटवत्त्वं वा तदिति वाच्यम् । भेदत्वस्याऽभावत्वघटितत्वेनात्माश्रयादिदोषात् । यत्तु षट्कत्वस्य ज्ञानविशेषविषयत्वरूपस्य द्वित्वादिवद्व्यासज्यवृत्तित्वाभावान्नोक्तदोष इति, तदसत्-एको न द्वाविति प्रतीतिवद् द्रव्यं न षट्-गुणो न षट् इति प्रतीतिबलेन तदभ्युपगमस्यावश्यकत्वादिति ।

मैवम् । समूहालंबनविशेषविषयत्वं तद्व्यक्तित्वेनोपादाय तद्व्यक्तित्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नावच्छेदकताकतादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वसंबन्धेन तद्व्यक्तिमत्त्वस्यैव लक्षणत्वात् । तादृशप्रतियोगिताकवत्ता च स्वरूपेण, सप्तमपदार्थस्यैव लक्ष्यतया न स्वाभावाभावात्मके घटादावव्याप्तिः शंकनीया । न च द्रव्यादिषट्कभेदेऽव्याप्तिः, द्रव्यादिषट्कभेदो द्रव्यादिषट्कं नेति प्रतीतितस्तत्सिद्धेः । न चानवस्था दोषाय, प्रामाणिकत्वादिति दिक् । तादात्म्येन द्रव्यादिषट्कप्रतियोगिकवत्त्वं तदित्यपरे ।

असमवेतासमवायिवृत्तिस्वाश्रयप्रतियोगिकभेदसमानाधिकरणधर्मवत्त्वमभावत्वम् । असमवायिवृत्तीत्यस्य समवाय्यवृत्तित्वमर्थः । विशेषाणामसमवायिवृत्तिस्वाश्रयप्रतियोगिकभेदसमानाधिकरणविशेषत्ववत्त्वेपि विशेषत्वस्याऽसमवेतवृत्तित्वाभावान्नातिप्रसंगः । परमाण्वादिलक्षणाऽसमवेतवृत्तिस्वाश्रयप्रतियोगिकभेदसमाना-

धिकरणपृथिवीत्वादिधर्मवत्त्वेपि समवायवृत्तित्वाभावान्नोक्तदोषः। समवायत्वं च न स्वाश्रयप्रतियोगिकभेदसमानाधिकरणमिति न समवायातिप्रसंगः।

मूले-संसर्गान्योन्याभावभेदत इति। संसर्गश्चान्योन्यश्च संसर्गान्योन्यौ तयोरभावस्तस्य भेदस्तस्मात्। द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते इति न्यायलब्धमर्थमाह **संसर्गाभावान्योन्याभावभेदादिति।** भेदेतिप्रसंगवारणायाऽन्योन्याभावभिन्नेति। घटादावतिव्याप्तिवारणायाऽभावत्वमिति। वस्तुतस्तु संसर्गाभावत्वमखण्डोपाधिरेव। न चान्योन्याभावभिन्नाभावत्वं तत्, अन्योन्याभावत्वस्य दुर्निरूप्यत्वात्। न च तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वम्, समवायितादात्म्यस्य समवायाभिन्नतया समवायवत्प्रतियोगिकसंसर्गाभावेऽतिव्याप्तेः। न च संबन्धविधया तादात्म्यनिष्ठायच्छेदकता निवेश्या, तथापि समवायसंबन्धावच्छिन्नसमवायावच्छिन्नप्रतियोगिताकाभावेऽतिव्याप्तेर्दुर्वारत्वात्। एवमन्योन्याभावत्वमप्यखण्डोपाधिरिति ध्येयम्। **विनाशीति।** इदं च भेदध्वंसात्यन्ताभावेषु अतिप्रसंगवारणाय। जन्यभावेऽतिव्याप्तिवारणायाऽभावत्वमिति। विनाशित्वविशिष्टाभावत्वमर्थः। इदं चाभावत्वं सप्तमपदार्थमात्रवृत्तिप्रविष्टम्, तेन नोक्तदोषतादवस्थ्यम्। विनाशित्वं च ध्वंसप्रतियोगित्वम्।

नव्यास्तु प्रागभावे मानाभावः। न च तत्प्रत्यक्षम्। इह घटप्रागभाव इति प्रत्ययस्य वासनाकल्पिततया तदसाधकत्वात्। भविष्यतीतिप्रत्ययस्य वर्तमानकालोत्तरकालोत्पन्नत्वविषयकतया निर्वाहेण तथात्वात्। अभावत्वं विनाशिवृत्ति पदार्थविभाजकोपाधित्वादित्यनुमानस्याऽप्रयोजकतया तदसिद्धेः। **स्यादेतत्।** उत्पन्नस्य पुनरुत्पादवारणाय तदभ्युपगमो दुर्वारः। तदानीमपि सामग्र्या अक्षतत्वात्। न च तदुत्पादोत्तरकालीनतदुत्पादरूपपुनरुत्पादस्याप्रसिद्धतयाऽपादनाऽसंभवः, घटाद्युत्पत्तिद्वितीयक्षणः यद्येतद्घटसामग्र्यव्यवहितोत्तरः स्यात्तदा घटाद्युत्पादवान् स्यादित्याकारकापत्तेः संभवात्। न चेष्टाप्रसिद्धिरिति चेन्। सत्यम्। संभवति तदेदं यदि सामग्र्यव्यवहितोत्तरत्वं तदुत्पादव्याप्यम्, तत्रैव मानाभावात्, किन्तु तद्वत्ताव्याप्यमेव। एवं चोक्तापादकेन द्वितीयादिक्षणे तद्वत्तैवापादनीया न चेयमनिष्टावहा। अथवोत्पत्त्यन्तर्भावेन व्याप्तिरस्तु-तथापि न घटोत्पत्तिक्षणे तदुत्पादः, किन्तु जन्यद्रव्यत्वावच्छिन्नं प्रति द्रव्यत्वेन प्रतिबन्धकतया प्रतिबन्धकाभावरूपहेत्वभावेनैव तदनुत्पत्तेः, अनन्तप्रागभावानां हेतुहेतुमद्भावकल्पनापेक्षया ईदृशकल्पनाया एवोचितत्वात्। न च महाघटनाशानन्तरं यत्र खण्डघट उत्पद्यते तत्र खण्डघटोत्पत्तिकाले तद्घटापत्तिः, कार्याव्यवहितप्राक्कालावच्छेदेन प्रतिबन्धकाभावहेतोः सत्त्वादिति वाच्यम्। तत्र यादृशारम्भकसंयोगनाशाद् घटो नष्टः तादृक्संयोगव्यक्तेरेव हेतुत्वोपगमेन नापत्तिगन्धोपि। न च यत्र सहस्रतन्त्वारब्धपटस्य विंशतितन्तुसंयोगनाशानन्तरं खण्डपट उत्पद्यते, तत्र खण्डपटोत्पत्तिकाले तत्पटोत्पादवारणाय विंशतिसंयोगानां हेतुत्वकल्पनापेक्षया

यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्र घटकालस्य सम्बन्धाघटकत्वादत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः। तत्रोत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित्। अत्र ध्वंसप्रागभाव-

जहां भूतल में घट को हटा लिया और फिर ले आये वहां घटकाल सम्बन्ध (घटाभाव-सम्बन्ध) का आधारक है। अभिप्राय यह है कि (जिस काल में जिस भूतल में घटाभाव बुद्धि होती है—वह जो घटाभाव कालीन भूतल वही तो घटाभाव का सम्बन्ध है। अतः उस घटाभाव सम्बन्ध का घटाभाव काल ही घटक है—न कि घटकाल घटाभाव के सम्बन्ध का घटक है) वही कहा है कि "घटकालस्य सम्बन्धाघटकतया" अर्थात् घटकाल घटाभाव के सम्बन्ध का अघटक होने से अत्यन्ताभाव के नित्य होने पर भी घटस्थितिकाल में "अत्र भूतले घटो नास्ति" ऐसी घटात्यन्ताभाव बुद्धि नहीं होती। कोई लोग ऐसी स्थिति होने पर उत्पाद विनाशशाली सामयिक नामक चतुर्थ अभाव मानते हैं। यहां (अभावों के विषय में) प्राचीन नैयायिकों का

---

तत्प्रागभावहेतुत्वकल्पनमेव साधीय इति वाच्यम्। तत्र तादृशपटत्वावच्छिन्नं प्रति तत्पटनाशत्वेन प्रतिबन्धकत्वकल्पनादिति वदन्ति।

तच्चिन्त्यम्। तत्पटत्वावच्छिन्नं प्रति तत्पटनाशत्वेन जन्यद्रव्यत्वावच्छिन्नं प्रति द्रव्यत्वेन च प्रतिबन्धकत्वकल्पनागौरवेण तत्पटं प्रति तत्पटप्रागभावत्वेन हेतुत्वकल्पनायां लाघवादिति ध्येयम्।

अपसारितमिति। अत्र पुनरानीतमित्येतावतैव निर्वाहेऽस्य कथनं वक्ष्यमाणसामयिकात्यन्ताभावस्योत्पादविनाशयोर्घटापसारणानयने कारणमिति बोधयितुम्। घटकालस्य संबन्धाघटकतयेति। अत्यन्ताभावस्य भूतले वृत्तौ घटाऽकालीनात्यन्ताभावस्वरूपस्य संबन्धतया घटकालस्य संबन्धाघटकत्वादित्यर्थः। घटकालस्य तद्भूतलेऽभाववृत्तावनवच्छेदकत्वादिति पर्यवसितोऽर्थः। न च तत्तत्कालानां तत्तदभाववत्तद्भूतलयोः संबन्धत्वमस्तु, किमभावादीनां संबन्धत्वकल्पनयेति वाच्यम्। भूतलं घटाभाववदित्याकारकघटाभाववन्निखिलभूतलविषयकज्ञानस्याऽनेकतत्तत्कालादिरूपसंबन्धविषयकत्वे गौरवात्, लाघवेन घटत्वावच्छिन्नप्रतियोगिताकाभावत्वविशिष्टे एव संबन्धत्वकल्पनात्। एवं चात्यन्ताभावस्य नित्यतया घटकाले भूतलं घटाभाववदितिप्रतीताविष्टापत्तावपि इदानीं भूतलं घटाभाववदिति प्रतीतिवारणाय तद्भूतले घटात्यन्ताभावस्य वृत्तौ तद्भूतलघटसंयोगान्यकालस्यावच्छेदकत्वं कल्प्यते गत्यन्तरविरहादिति। तत्र—यत्र भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्रेत्यर्थः। उत्पादविनाशशालीति। प्रतियोगिसंसर्गेण प्रतियोगिसंसर्गध्वंसेन चोत्पादविनाशशालित्वमभावस्येत्यर्थः। चतुर्थोयमिति। चतुर्थोयं संसर्गाभाव इत्यर्थः। केचिदित्यस्वरसस्तद्बीजं तु प्रमाणाभावः। प्रसंगादाह- अत्रेति। अस्य

कारणलक्षणे प्रविष्टकारणत्वं न सामान्यतः कार्याधिकरणनिष्ठाभावप्रतियोगितानवच्छेदकाऽन्यथासिद्धयनिरूपकतावच्छेदकधर्मवत्त्वरूपमिह विवक्षितम्, अपि तु पटासमवायिकारणलक्षणे पटसमवायिकारणनिष्ठाभावप्रतियोगितानवच्छेदकतन्तुसंयोगत्वरूपधर्मवत्त्वम्। एवं वेगादीनामपि नाऽभिघाताऽसमवायिहेतुत्वम्, तत्रापि अभिघातवन्निष्ठाभावप्रतियोगितानवच्छेदकस्पन्दत्ववत्त्वम् वक्तव्यमिति न दोषः। वस्तुतस्तु अभिघातान्तर्भावेन न निवेशो वाच्यः, किन्तु संयोगवन्निष्ठाभावप्रतियोगितानवच्छेदकस्पन्दत्ववत्त्वनिवेशेनैव संयोगसाधारण्येन स्पन्दादिहेतुत्वं निर्वहतीत्यन्यत्र विस्तरः। अत्र सामान्यलक्षणविशेषलक्षणेषु निविष्टकारणत्वघटकीभूताभावे प्रतियोगिवैयधिकरण्यं निवेशनीयम्, नातस्तन्तुसंयोगादेर्हेतुत्वानुपपत्तिः। न च तर्हि अन्यथासिद्धयनिरूपकतावच्छेदकत्वनिवेशो व्यर्थः, इष्टापत्तेः, तस्य सामान्यलक्षणे एव निवेशात्।

यत्तु निमित्तहेतुत्वाश्रयभिन्नवृत्तिकारणत्वस्याऽसमवायिकारणे निवेशान्नोक्तदोष इति, तन्न, वक्ष्यमाणनिमित्तहेतुत्वस्यासमवायिहेतुभेदघटितत्वेनाऽन्योन्याश्रयात्।

नन्वत्र प्रत्यासन्नत्वं समवायेन वृत्तित्वरूपमेव, तथा च समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वमसमवायिकारणत्वं फलितम्, एवं च सति पटरूपाऽसमवायिकारणे तन्तुरूपेऽव्याप्तिः, तन्तुरूपस्य पटरूपाऽसमवायिकारणे पटे प्रत्यासन्नत्वाभावादित्यत आह **अत्रेति**।

नन्वेवं "उक्तान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं ज्ञानादिभिन्नं कारणमसमवायिकारणमिति लक्षणं पर्यवसितम्, तच्च न संभवति, द्रव्यत्वादेः स्वप्रत्यक्षेऽसमवायिकारणत्वापत्तेः, द्रव्यत्वस्य प्रत्यक्षसमवायिकारणात्मनि प्रत्यासन्नत्वात्, विषयविधया कारणत्वाच्च। न च कारणत्वमुक्तान्यतरप्रत्यासत्त्या ग्राह्यमिति वाच्यम्। एवंसति कारणत्वमात्रस्यैव लक्षणौचित्यात्, तथैव पर्यवसितलक्षणमाह **इत्थंचेति**। तथाच समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवाय-स्वसमवायिसमवायान्यतरसंबन्धावच्छिन्नकारणताश्रयत्वमसमवायिकारणत्वं फलितम्। अत्र ज्ञानादिभिन्नत्वविशेषणमिच्छादिकं प्रति ज्ञानादिकं समवायेन हेतुरिति मत्वाभिहितम्। वस्तुतो विषयताप्रत्यासत्त्या कारणत्वान्नोपादेयमेव तत्।

**निमित्तकारणमिति**। तथाच समवायिकारणभिन्नत्वे सति असमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणत्वं फलितम्। ननु ईश्वरघटसंयोगे ईश्वरस्य निमित्तत्वानुपपत्तिः, तस्य द्रव्यत्वेन रूपेण संयोगहेतुत्वात् समवायिकारणभेदविरहात्, इष्टापत्तौ तु कार्यमात्रे निमित्तत्वसिद्धान्तापलापापत्तिरिति चेत्। मैवम्। यद्धर्मावच्छिन्नकार्यतानिरूपितसमवायिकारणताशून्यत्वविशिष्टयद्धर्मावच्छिन्नकार्यतानिरूपितासमवायिकारणताशून्यत्वसमानाधिकरणयद्धर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वं, तद्धर्मावच्छिन्नं प्रति तस्य निमित्तत्वम्, अस्ति चेश्वरस्य जन्यत्वावच्छि-

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानामत आह—येनेति। यत्कार्यं प्रति कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तत्कार्य्यं प्रति तद्रूपमन्यथासिद्धमित्यर्थः। यथा घटं प्रति दण्डत्वमिति। द्वितीयमन्यथासिद्धमाह—कारणमिति। यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः, किं तु कारणमादायैवान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम्, यथा दण्डरूपम्। तृतीयमाह—

अन्यथासिद्ध बतलाते हैं—येन सह इत्यादि ग्रन्थ से-

यस्य—जिस कारण की-(जिस कार्य के प्रति) पूर्वभाव-(पूर्ववृत्तित्व) अर्थात् कारणत्वेन सह जिसरूप से (गृहीत होता है)। वह रूप (उस कार्य के प्रति पूर्ववर्ती होते हुवे भी) अन्यथा सिद्ध ही है। जैसे घट के प्रति दण्डत्व। अर्थात् घट के प्रति दण्ड को दण्डत्वेन रूपेण कारणता है अतः घट के प्रति दण्ड कारण दण्डत्व अन्यथा सिद्ध है—क्योंकि घट के प्रति दण्डत्व का कोई भी उपयोग नहीं है।

द्वितीय अन्यथा सिद्ध बतलाते हैं—"कारणमादाय वा यस्य" अथवा कारण के ग्रहणपूर्वक जिसका ग्रहण हो वह भी अन्यथा सिद्ध होता है। अर्थात जिसका जिस कार्य के प्रति स्वतंत्ररूप से अन्वयव्यतिरेक नहीं बन सकता किन्तु कारण को लेकर ही जिसके अन्वयव्यतिरेक का निश्चय जिस कार्य के प्रति किया जावे—वह भी इस कार्य के प्रति अन्यथा सिद्ध माना गया है। जैसे घट के प्रति दण्डरूप। (दण्डरूप का घट के प्रति अन्वय व्यतिरेक अपने कारण दण्ड को लेकर ही बनता है-अतः दण्डरूप भी घट के प्रति दण्डत्व की तरह अन्यथासिद्ध ही है—क्योंकि दण्ड का रूप—दण्ड से अलग नहीं हो सकता है—जिससे कि वह

---

[illegible]

अप्रसिद्धत्वेन तच्छून्यत्वस्य सुतरामप्रसिद्धिः। एवमसमवायिकारणताशून्यत्वमपीत्यव्याप्तिः। अत्रोच्यते। यद्यद्धर्मावच्छिन्नकार्यतानिरूपितसमवायिकारणत्वं यद्यद्धर्मावच्छिन्नकार्यतानिरूपिताऽसमवायिकारणत्वं प्रत्येकं तत्तन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यद्धर्मावच्छिन्नकार्यतानिरूपितयद्यद्धर्मावच्छिन्नकारणत्वं तद्धर्माश्रयं प्रति तद्धर्माश्रयस्य निमित्तकारणत्वमित्युक्तौ न कोपि दोषः।

वस्तुतस्तु स्वसमवायिकारणत्वस्याऽसमवायिकारणत्वाऽन्यतरशून्यत्वे सति कारणत्वं निमित्तकारणत्वं स्वत्वघटितं वाच्यम्, अन्यथा दण्डस्यापि स्वगतरूपसमवायिकारणत्वादसंभवापत्तेः। एवं च घटादिध्वंसनिमित्तकारणे दण्डादावव्याप्तिः घटध्वंससमवायिकारणत्वाप्रसिद्धेः। तथा च वस्तुविशिष्टत्वं निमित्तकारणत्वम्। वै० स्वकारणत्व-स्वाभाववत्त्वोभयसंबन्धेन। स्वाभावश्च समवायिकारणत्वाऽसमवायिकारणत्वाऽन्यतरसंबन्धावच्छिन्नप्रतियोगिताक इति नाप्रसिद्धिः।

**यत्कार्यमिति** । अत्र च कार्यकारणशब्दौ यच्छब्दार्थकौ द्रष्टव्यौ । यमवच्छेदकीकृत्य यस्यान्वयव्यतिरेकौ गृह्येते तस्यावच्छेदकस्य तेनान्यथासिद्धिरित्यर्थः । **तद्रूपमन्यथासिद्धमिति** । तेन कारणेनेति शेषः । न च कदाचिद्दण्डरूपं घटपूर्ववृत्तीति ग्रहेऽवच्छेदकदण्डस्यापि रूपेणान्यथासिद्ध्यापत्तिरिति वाच्यम् । स्वतन्त्रान्वयव्यतिरेकशालिनो यस्येति स्वतन्त्रान्वयव्यतिरेकशून्यं यमिति वा विवक्षणात् । तेन दण्डवच्चक्रं घटनियतपूर्ववर्त्तीति ग्रहेपि न दण्डस्यान्यथासिद्धिः । मूले- **येन सहपूर्वभाव** इत्येकान्यथासिद्धिः । साहित्यमत्र पूर्ववर्त्तिग्रहविषयत्वेन, विशिष्टे पूर्ववर्त्तित्वग्रहे विशेषणेपि पूर्ववर्तित्वग्रहादिति बोध्यम् ।

कारणमादाय वा यस्येति मूले पूर्वभाव इत्यनुषज्यते । अत एव पूर्वभावपदस्य प्रथमवाक्यचरमावयवत्वं द्वितीयवाक्यादित्वं च चारु संगच्छते । वाशब्दः पूर्वभावपदस्याऽऽकर्षणार्थः । **कारणमितीति** । कारणं=पृथगन्वयव्यतिरेकशालिनम्, अन्यथा कारणत्वस्यान्यथासिद्धिकुक्षिनिविशिष्टत्वे आत्माश्रयापत्तेः । **यस्येति** । तथाच स्वतन्त्रान्वयव्यतिरेकशालिनिष्ठविषयतानिरूपितस्वतन्त्रान्वयव्यतिरेकशून्यनिष्ठयद्धर्मावच्छिन्नविशेष्यताशालिनो यद्धर्मावच्छिन्नं प्रति पूर्ववृत्तित्वं गृह्यते तद्धर्मावच्छिन्नस्य तद्धर्मावच्छिन्नं प्रति स्वतन्त्रान्वयव्यतिरेकशालिना तेनान्यथासिद्धिरित्यर्थः । भवति च दण्डरूपं घटपूर्ववर्त्तीतिग्रहीयतथाविषयताशालिनो रूपस्य स्वतन्त्रान्वव्यतिरेकशालिना दण्डेनाऽन्यासिद्धिः । अत्र यन्निष्ठविषयतानिरूपितत्वमात्रनिवेशे दण्डरूपं घटपूर्ववर्त्तीतिग्रहीयरूपत्वनिष्ठविषयतानिरूपितस्वतन्त्रान्वयव्यतिरेकशून्यनिष्ठविशेषताशालिनो रूपस्य रूपत्वेनान्यथासिद्धिप्रसंगः । न चेष्टापत्तिः, कारणेनाऽकारणस्यान्यथासिद्धेरेव तान्त्रिकसंमतत्वात् । तत्र रूपस्येव रूपत्वस्याप्यहेतुत्वात् । न च स्वतन्त्रान्वयव्यतिरेकशालिनिष्ठविषयतानिरूपितयन्निष्ठविषयताशालिनो यद्धर्मावच्छिन्नं प्रतीत्येवास्तु, किं स्वतन्त्रान्वयव्यतिरेकशून्यत्वोत्पादानेनेति वाच्यम् । यत्र दण्डचक्रयोर्घटपूर्ववर्त्तिताग्रहो 'दण्डवच्चक्रं घटपूर्ववर्त्ती-' त्याकारकः, तत्रैतद्ग्रहीयस्वतन्त्रान्वयव्यतिरेकशालिदण्डनिष्ठविषयतानिरूपितचक्रनिष्ठविशेष्यताशालित्वाच्चक्रादेर्दण्डेनान्यथासिद्धिप्रसंगः । युक्तं चैतत्, अन्यथाऽनेनैव दण्डत्वादेरन्यथासिद्धिसंभवे येन सह पूर्वभाव इत्यस्य वैयर्थ्यापत्तेः । अस्मन्नये तु दण्डः पूर्ववर्तीतिग्रहीयस्वतन्त्रान्वयव्यतिरेकशालिदण्डनिष्ठविषयतानिरूपितस्वतन्त्रान्वयव्यतिरेकशून्यनिष्ठविशेष्यताशालित्वाभावाद्दण्डत्वस्येति न वैयर्थ्यम् ।

अथ वह्न्यनुमितिं प्रति अप्रामाण्यग्रहाभावविशिष्टधूमपरामर्शत्वेन हेतुत्वं स्वातन्त्र्येण वाऽप्रामाण्यग्रहाभावस्य हेतुत्वम्, उभयथापि अप्रामाण्यग्रहाभावेन धूमपरामर्शस्याऽन्यथासिद्धिप्रसंगः । तत्रापि अप्रामाण्यग्रहाभावविशिष्टपरामर्शः पूर्ववर्त्तीत्याकारकग्रहीयस्वतन्त्रान्वयव्यतिरेकशाल्यप्रामाण्यग्रहाभावनिष्ठविषयतानिरूपितस्वतंत्रान्वयव्यतिरेकशून्यप्रकारकत्वनिष्ठपरामर्शत्वावच्छिन्नविशेष्यताशालिनो वह्न्यनुमितित्वावच्छिन्नं प्रति पूर्ववर्तित्वग्रहादिति चेत् ।

अन्यं प्रतीति। अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम्, यथा घटादिकं प्रत्याकाशस्य, तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात्, आकाशत्वं हि शब्दसमवायिकारणत्वम्, एवं च तस्य शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम्। ननु शब्दाश्रयत्वेन तस्य कारणत्वे काऽन्यथासिद्धिरिति चेत्? पञ्चमीति

स्वतंत्र घट के प्रति कारण बने। तृतीय अन्यथासिद्ध— अन्य कार्य के प्रति पूर्ववृत्तित्व (कारणत्व) का ग्रहण (निश्चय) करके ही जिसको जिस कार्य के प्रति पूर्ववृत्तित्व का निश्चय किया जाता है—वह उस कार्य के प्रति अन्यथासिद्ध है। जैसे घट के प्रति (आकाश नित्य एवं व्यापक होने के नाते कार्यमात्र के प्रति नियतपूर्ववर्त्ती है तो घट के प्रति भी नियतपूर्ववर्तित्वरूप कारणत्व सिद्ध ही है—परन्तु) आकाश को घटादि के प्रति कारणत्व आकाशत्वेन रूपेण मानना पड़ेगा—आकाशत्व है शब्दसमवायिकारणत्व (सो शब्दसमवायिकारणत्व कहने मात्र से ही आकाश शब्द का कारण है यह सिद्ध हो जाता है) इस प्रकार आकाश को शब्द के प्रति जनकत्व (कारणत्व) का निश्चय करके ही घटादि (कार्य) के प्रति जनकता का निश्चय करते हैं—(तब आकाश शब्द के प्रति ही कारण माना जावेगा—और घटादि के प्रति) अन्यथा सिद्ध ही होगा। प्रश्न— आकाशत्व यदि शब्दसमवायिकारणत्व हो तब आकाश को शब्द के प्रति कारणत्व निश्चय होने से घट के प्रति अन्यथासिद्धत्व बन जाता है—परन्तु आकाशत्व यदि शब्दाश्रयत्वरूप मान लिया जावे, तब तो शब्दाश्रयत्व से शब्द का कारण आकाश नहीं सिद्ध होता अपितु शब्द का आश्रय आकाश सिद्ध होता है तो) शब्दाश्रयत्वेन रूपेण आकाश को (घटादिके प्रति) कारण मानने में

---

न। स्वतन्त्रान्वयव्यतिरेकशून्यनिष्ठाऽखण्डधर्मावच्छिन्नविषयताशालित्वस्य विवक्षितत्वात्। धूमपरामर्शत्वस्याखण्डधर्मानात्मकतया दोषाभावात्। रूपत्वस्याऽखण्डधर्मत्वात्। एतेन कुलालजनको घटपूर्ववर्त्तीतिप्रहीयस्वतन्त्रान्वयव्यतिरेकशालिनिष्ठविषयतानिरूपितस्वतन्त्रान्वयव्यतिरेकशून्यनिष्ठयद्धर्मावच्छिन्नविषयताशालिनो घटपूर्ववर्त्तित्वग्रहास्वतन्त्रान्वयव्यतिरेकशालिना कुलालेनैव कुलालपितुरन्यथासिद्धिसंभवेन "जनकं प्रती"त्याद्यन्यथासिद्धिवैयर्थ्यम् इति निरस्तम्। जनकत्वस्याखण्डत्वाभावात्।

*यद्वा नाऽखण्डधर्मावच्छिन्नत्वस्य निवेशः, किन्तु स्वतन्त्रान्वयव्यतिरेकशून्ये* स्वतन्त्रान्वयव्यतिरेकितावच्छेदकधर्मसामानाधिकरण्यस्य, धूमपरामर्शकुलालपित्रोस्तु न स्वतन्त्रान्वयव्यतिरेकितावच्छेदकाऽप्रामाण्यग्रहाभाववत्त्वकुलालत्वसामानाधिकरण्यम्, एतेन दण्डवद्रासभो घटपूर्ववर्त्तीतिग्रहीयोक्ताखण्डधर्मावच्छिन्नविशेष्यताशालित्वादनेनैव रासभान्यथासिद्धिसंभवे पञ्चमान्यथासिद्धिवैयर्थ्यमित्यपि परास्तम्। रासभादेरुक्तावच्छेदकासामानाधिकरण्यात्। न चैतत्कल्पे स्वतन्त्रान्वयव्यतिरेकिताव-

गृहाण । नन्वाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेदकमिति चेत् ? कवत्वादिकं विशेषपदार्थो वेति । चतुर्थमन्यथासिद्धमाह जनकं प्रतीति । यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा कुलालपितुर्घटं प्रति । तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वे एवान्यथासिद्धिः, कुलालत्वेन जनकत्वे त्विष्टापत्तिः, कुलालमात्रस्य घटं प्रति जनकत्वात् । पञ्चममन्यथासिद्धमाह–

कौन अन्यथासिद्ध आकाश होगा । उत्तर—पञ्चम अन्यथासिद्ध होगा । प्रश्न—(आकाश घट के प्रति कारण न हो) शब्द के प्रति तो आकाश कारण है–तब कारणतावच्छेदक कौन होगा उत्तर—कवत्व आदि । ( आदि पद से खवत्व-गवत्व इत्यादि को ले लेना ।

मतलब यह है कि "क" यह जो वर्णात्मक शब्द तद्वान् आकाश ही होगा–अर्थात् "क" वान् हुआ आकाश-और आकाश ही शब्दमात्र का समवायिकारण है–कारणतावच्छेदक "कवत्व" हुवा क्योंकि कारण में रहने वाला धर्म कारणतावच्छेदक होता है । प्रश्न-(जैसे शब्दकारणता का अवच्छेदक कवत्व को आपने माना वैसे ही-खवत्व-गवत्व को भी कारणतावच्छेदक क्यों न माना जाय विनिगमनाविरहात्–क्योंकि "ख" शब्दवान् भी आकाश हैं 'खवत्व' आकाश में रहा । ऐसे ही "ग" शब्दवान् जब कि आकाश हुवा तो "गवत्व" भी आकाश में रहा तो ये सब भी कारणतावच्छेदक होगें) उत्तर—(अनन्त को कारणतावच्छेदक मानने की अपेक्षया) एक विशेषपदार्थ ही को (कारणतावच्छेदक क्यों न मान लिया जावे) वही मूल में कहा है कि "विशेषपदार्थो वा" । चतुर्थ अन्यथासिद्धि—जिस कार्य के जनक के प्रति पूर्ववृत्तित्व का निश्चय करके ही जिसको जिस कार्य के प्रति पूर्ववृत्तित्व का निश्चय करते हैं—वह उस कार्य के प्रति अन्यथासिद्ध होता है । जैसे कुलालपिता घट के प्रति । कुलालपिताको कुलालपितृत्वेन रूपेण घट के प्रति यदि कारण मानें तो वह कुलाल (कुम्हार) पितृत्व रूप से घट के प्रति अन्यथासिद्ध है । कुलालस्वरूप से यदि कारण मानें तो कारणता में इष्टापत्ति है । (क्योंकि कुलालस्वरूप से) कुलालमात्र ही घट के प्रति कारण होते हैं । अभिप्राय यह है कि कुलालपिता को समझकर घट के प्रति कारण मानते हैं कि यह घट का कारण जो कुलाल-उसका भी कारण है—अर्थात् जब यह घट के कारण का भी कारण है तो घट का कारण तो अवश्य ही है–ऐसी परिस्थिति में कुलालपिता अन्यथासिद्ध माना गया है । और कुलालस्वरूप से यदि घट के प्रति उसे कारण मानें-अर्थात् यह कुम्हार है यह समझकर यदि हम उसे कारण मानते हैं—तब कुलालपिता घट के प्रति कारण ही माना जायगा—क्योंकि कुलालमात्र ही घट के प्रति कारण माने गये है । जिस कुलाल ने अद्यावधि घट निर्माण ही नहीं किया उसमें भी घट की स्वरूपयोग्यत्वरूपा कारणता है ।

---

च्छेदकसामानाधिकरण्यस्यैव निवेशोऽस्तु, तथा च स्वतन्त्रान्वयव्यतिरेकशालिनिष्ठविषयतानिरूपितस्वतन्त्रान्वयव्यतिरेकितावच्छेदकसमानाधिकरणयन्निष्ठयद्धर्मा-

अतिरिक्तमिति। अवश्यक्लृप्तनियतपूर्ववर्त्तिन एव कार्यसंभवे तद्भिन्नमन्यथा-सिद्धमित्यर्थः। अत एव द्रव्यप्रत्यक्षे महत्त्वं कारणम् अनेकद्रव्यवत्त्वमन्यथा-सिद्धम्। तत्र हि महत्त्वमवश्यक्लृप्तं तेनानेकद्रव्यवत्त्वमन्यथासिद्धम्। नच वैप-रीत्ये किं विनिगमकमिति वाच्यम्, महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात् ॥१६॥२०॥ रासभादिरिति। यद्यपि यत्किंचिद्घटव्यक्तिं प्रति रासभस्य नियतपूर्ववर्त्तित्वमस्ति, तथापि घटजातीयं प्रति सिद्धकारणभावै-र्दण्डादिभिरेव तद्व्यक्तेरपि संभवे रासभोऽन्यथासिद्ध इति भावः। एते-

पञ्चम अन्यथासिद्ध—अवश्य क्लृप्त (निश्चित) पूर्ववृत्तिपदार्थ (नियम से पूर्व में रहने वाले पदार्थ)—जैसे दण्ड-चक्र-चीवर कुलाल-मृत्तिका-इत्यादि घटोत्पत्ति में अवश्य निश्चित हैं तथा नियम से घट के पूर्व में रहने वाले हैं-इन्ही से, घटादि कार्य यदि संभव हो तो उससे भिन्न सब अन्यथासिद्ध होते हैं। इसी लिये प्रत्यक्ष में महत्व कारण है-और अनेक द्रव्यवत्व अन्यथासिद्ध है। (अभिप्राय यह है कि परमाणु में तथा द्व्यणुक में न महत्त्व है-और न अनेक द्रव्यवत्व है-अतः इन दोनों का प्रत्यक्ष नहीं होता है। त्र्यणुक में महत्व भी है, अनेक द्रव्य-वत्व भी है अतः उसका प्रत्यक्ष होता है-इसलिये चाक्षुषप्रत्यक्ष का अन्वयव्यतिरेक जैसे महत्व के साथ है-ऐसे ही अनेक द्रव्यवत्व के साथ भी—तब फिर चाक्षुषप्रत्यक्ष में महत्व ही कारण क्यों ? अनेकद्रव्यवत्व कारण क्यों नहीं ? इस शंका का समाधान करते हैं कि "अतएव प्रत्यक्षे महत्त्व कारणम्" इत्यादि ) अर्थात् चाक्षुष प्रत्यक्ष के प्रति महत्व कारणतया अवश्य क्लृप्त है—अतः वह कारण है। और अनेक द्रव्यवत्व वैसा न होने से अन्यथासिद्ध है। प्रश्न—विपरीत मानने में आपके यहाँ क्या विनिगमक (युक्ति) है। (अर्थात् अनेक द्रव्यवत्व को कारण मानलिया जाय—और महत्व को अन्यथा सिद्ध) उत्तर—महत्व को कारण मानने में कारणतावच्छेद महत्वत्व जाति पड़ेगी अतः उसमें लाघव है। (अनेक द्रव्यवत्व को कारण मानने में कारणता वच्छेदक अनेक द्रव्यवत्व पड़ेगा-वह गुरुभूत है, अतः गुरुभूतधर्मावच्छिन्न को कारण मानने में गौरव होता है—और लघुभूत जो धर्म-तद्धर्मावच्छिन्न को कारण मानने में लाघव होता है यह भाव है।

कारिकार्थ—प्रथम-यस्य (जिसको) पूर्वभाव (कारणता) येन सह (जिसके साथ) (ही स्वतन्त्र न हो वह उस कार्य के प्रति अन्यथासिद्ध ) जैसे घट के प्रति दण्डत्व दण्ड में रहने के नाते दण्ड को लेकर ही कारण बन सकता है स्वतंत्र नहीं अतः वह अन्यथासिद्ध ही होगा।

द्वितीय—यस्य (जिसको) पूर्वभाव ( कारणत्व ) कारणमादायैव (कारणको लेकर ही) बने ( स्वतन्त्र नहीं वह भी अन्यथा सिद्ध ) जैसे दण्डरूप भी अपने कारण दण्ड को लेकर ही घट के प्रति कारण बन सकता है स्वतन्त्र नहीं, अतः दण्डरूप भी घट के प्रति अन्यथा सिद्ध ही है।

तृतीय—किसी अन्य के प्रति पूर्वभाव ज्ञात होने पर ही जिसके पूर्वभाव (कारणत्व)

का विज्ञान ( निश्चय किया जावे वह भी अन्यथा सिद्ध होता है ) जैसे घट में आकाश। आकाश को शब्द के प्रति कारणत्व ज्ञात होने पर घट के प्रति कारणत्व का निश्चय होता है अतः वह अन्यथासिद्ध।

चतुर्थ—जनक के प्रति ( घटकार्यका जनक जो कुलाल उसके प्रति ) पूर्ववृत्तिता (कारणत्व) का अपरिज्ञाय ( निश्चय हुवे विना ) यस्य (जिसको) (यत् कार्यं प्रति कारणत्वं) न गृह्यते (न निश्चय होवे) वह भी उस कार्य के प्रति अन्यथासिद्ध है, जैसे घट के प्रति कुलालपिता। पञ्चम— नियतावश्यक पूर्वभाविनं (नियतरूप से आवश्यक जो पूर्वभावी ( पूर्वमें होने वाले पदार्थ ) उनसे अतिरिक्त यद् भवेत् ( जो भी होवें ) वे सब अन्यथासिद्ध हैं। जैसे घट के प्रति रासभ, जबकि घटकार्य आवश्यक पूर्ववर्त्ती जो दण्ड-चक्र-चीवर इत्यादि उन्हीं से संपन्न हो सकता है तो रासभ को घट के प्रति कारण क्यों माना जाय अतः वह घटके प्रति अन्यथासिद्ध है। १६—२०।

ये पांच अन्यथासिद्ध हैं आदिम दण्डत्व—द्वितीय दण्डरूप-तृतीय आकाश—चतुर्थ कुलालपिता-पञ्चम रासभ आदि इनमें यह पञ्चम अन्यथासिद्ध आवश्यक है, यह कारिकार्थ हुवा। यद्यपि यत्किञ्चित् घटव्यक्ति के रासभ भी नियत पूर्ववर्त्ती है- तथापि समस्तघटों के प्रति सिद्ध है कारणभाव (कारणता) जिन्हों को ऐसे दण्ड-चक्र आदि कारणों से ही उस यत्किञ्चित् घट व्यक्ति

---

वच्छिन्नविषयताशालिनो यद्धर्मावच्छिन्नं प्रति पूर्ववर्त्तित्वं गृह्यते तद्धर्मावच्छिन्नस्य तद्धर्मावच्छिन्नं प्रति अन्यथासिद्धिरिति निर्गलितार्थः। चक्रत्वादेश्चोक्तविषयताशालित्वेपि न स्वतन्त्रान्वयव्यतिरेकितावच्छेदकसामानाधिकरण्यमिति वाच्यम्। समवेतत्वसंबन्धेन दधिविशिष्टं दधिपूर्ववर्त्तीतिग्रहीयस्यस्वतन्त्रान्वयव्यतिरेकशालिदधिनिष्ठविषयतानिरूपितस्वतन्त्रान्वयव्यतिरेकितावच्छेदकदधित्वसमानाधिकरणदधिनिष्ठदधित्वाच्छिन्नविशेष्यताशालिदध्नोऽन्यथासिद्ध्यापत्तेरिति रहस्यम्।

**अन्यं प्रतीति।** फलाननुगुणमन्यं प्रतीत्यर्थः। तेन 'स्वर्गं' प्रति यागादेर्घटं प्रति दण्डादेश्चाऽपूर्वभ्रमिपूर्ववर्त्तित्वग्रहोत्तरकालीनग्रहविषयत्वेपि नान्यथासिद्धिः। नन्वेवमाकाशादेर्घटादिकं प्रत्यहेतुत्वमिव संयोगादिकं प्रत्यपि हेतुता विलीयेत, तत्रापि शब्दं प्रति पूर्ववर्त्तित्वग्रहोत्तरमेव संयोगादिकं प्रति पूर्ववर्त्तित्वग्रहादिति चेत्। यद्धर्मे यद्धर्मावच्छिन्ननिरूपितनियतपूर्ववर्त्तितावच्छेदकत्वग्रहोत्तरकालमेव यद्धर्मावच्छिन्ननिरूपितनियतपूर्ववर्त्तितावच्छेदकत्वग्रहः, तद्धर्मावच्छिन्नस्य तद्धर्मावच्छिन्नं प्रति तेन रूपेण हेतुतायामन्यथासिद्धिरित्यर्थात्। आकाशस्याकाशत्वेन रूपेण संयोगत्वावच्छिन्नं प्रति हेतुत्वेऽन्यथासिद्धेरिष्टत्वात्। द्रव्यत्वेन रूपेण संयोगत्वावच्छिन्नं प्रति पूर्ववर्त्तित्वग्रहस्य शब्दत्वावच्छिन्ननिरूपितपूर्ववर्त्तित्वग्रहोत्तरकालीनत्वाभावेन गगनादीनां द्रव्यत्वेन रूपेण संयोगहेतुत्वं निष्प्रत्यूहम्। अथ सिद्धस्य गगनादेरष्टद्रव्यातिरिक्तद्रव्यत्वेन हेतुत्वोक्तावन्यथासिद्ध्यभावः, नहि शब्दपूर्ववर्त्तित्वग्रहोत्तरमेव तद्ग्रहः। किंच शब्दप्रत्यक्षे श्रोत्रत्वेन हेतुता विलीयेत, तत्र शब्दपूर्ववर्त्तित्वग्रहोत्तरमेव तद्ग्रहादिति चेत्, तत्र पंचमान्यथासिद्धेरेव संभवात्। शब्दप्रत्यक्षस्थले

ष्विति। एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्ध आवश्यकः, तेनैव परेषां चरितार्थत्वात्। तथाहि—दण्डादिभिरवश्यक्लृप्तनियतपूर्ववर्तिभिरेव कार्यसंभवे दण्डत्वादिकमन्यथासिद्धम्। न च वैपरीत्ये किं विनिगमकमिति

की भी उत्पत्ति हो जायेगी, रासभ अन्यथासिद्ध ही है। इन पाच अन्यथासिद्धों के मध्य में पञ्चम अन्यथासिद्ध आवश्यक है—उसी से दूसरे भी चरितार्थ हो जायेंगे। तथाहि—अवश्य क्लृप्त नियत पूर्ववर्त्ती दण्ड-चक्र आदिकों से ही जब कि घटात्मककार्य हो सकता है तो (घटकार्य

---

तु कर्णविवरावच्छिन्नाकाशत्वेन हेतुत्वान्नानुपपत्तिः। नचैवं कार्यमात्रे कालदिशोरहेतुत्वापत्तिः, तत्रापि कालिकदैशिकपरत्वापरत्वपूर्ववर्त्तित्वमह एव तद्ग्रहादिति वाच्यम्। विनापि कालिकादिपरत्वापरत्वपूर्ववर्त्तित्वग्रहमाधारत्वेन कार्यसामान्ये हेतुत्वावधारणादिति संक्षेपः।

आकाशस्य घटादिकं प्रत्यहेतुत्वमिव शब्दं प्रत्यप्यहेतुत्वापत्तिः, तत्रापि शब्दपूर्ववर्त्तित्वग्रहाधीनत्वादित्याशयवान् शंकते शब्दं प्रति जनकत्वे इति। कत्वादिकमिति। इदमुपलक्षणम्—स्वाश्रयसमवायित्वसंबन्धेन शब्दत्वव्यक्तेरवच्छेदकत्वं बोध्यम्। विनिगमकाभावादाह विशेषपदार्थो वेति।

पञ्चमान्यथासिद्धिं दर्शयति अवश्यक्लृप्तेति। अवश्यक्लृप्तत्वं च शीघ्रप्रतियोग्युपस्थित्या-शरीरलाघवेन जनकतावच्छेदकसंबन्धलाघवेन च बोध्यम्। अत एव गंधं प्रति न रूपप्रागभावस्य हेतुत्वम्, गंधरूपप्रतियोग्युपस्थितेः शीघ्रतया गंधप्रागभावस्यावश्यक्लृप्तहेतुत्वेन तेन रूपप्रागभावस्यान्यथासिद्धेः। शरीरलाघवेनावश्यक्लृप्तत्वमाह द्रव्यप्रत्यक्षे इति। अथ द्रव्यप्रत्यक्षत्वस्य नानेकद्रव्यवत्त्वं जन्यतावच्छेदकम्, तदवच्छिन्नस्यात्मन्यप्युत्पत्त्या व्यभिचारात्, न चात्मान्यतथाविधप्रत्यक्षत्वम्, गुरुत्वात्, अतो व्यभिचारादेव न तथाविधहेतुहेतुमद्भाव इति क्व शरीरनिबन्धनलाघवप्रत्याशेति चेत्। सत्यम्। व्यासज्यवृत्तिधर्मप्रत्यक्षे यावदाश्रयप्रत्यक्षत्वेन हेतुत्वे यावत्त्वादिनिवेशापत्त्या गौरवात्, लाघवेन आत्मान्यसमवेतवृत्तिविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति स्वाश्रयसमवेतत्वसंबन्धेन रूपाभावस्य प्रतिबन्धकत्वोक्त्यैव घटाकाशसंयोगप्रत्यक्षापत्तेर्वारणसंभवेन रूपाभावेन यावदाश्रयप्रत्यक्षस्यान्यथासिद्धेः।

मध्यमतेनाह तेनैवेति। पंचमान्यथासिद्धेनैवेत्यर्थः। परेषां = चतुर्णामन्यथासिद्धानाम्। दीधितिकृतस्तु—कारणत्वं नान्यथासिद्धिशून्यत्वघटितम्, अन्यथासिद्धिकुक्षिप्रविष्टावश्यकत्वादीनां दुर्वचत्वात्, किन्तु पदार्थान्तरम्, इत्थं चाऽन्यथासिद्धयंकाऽनेकत्वविचारो दूरत एवापास्त-इत्याहुः। यत्तु—कारणत्वस्याऽतिरिक्तत्वेऽपि तदभिव्यंजकस्योक्तधर्मस्य वाच्यतया तद्घटकान्यथासिद्धयेकानेकत्व-

वाच्यम्, दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः सम्बन्धत्वकल्पने गौरवात्। एवमन्येषामप्यनेनैव चरितार्थत्वं संभवतीति बोध्यम् ॥२१॥२२॥

समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम्।
गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥२३॥

समवायीति। स्पष्टम्। गुणकर्मेति। असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं न तु गुणकर्मणोः साधर्म्यमित्यत्र तात्पर्यम्। अथवा असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं तदर्थः, तेन ज्ञानादीनामसमवायिकारणत्वविरहेऽपि न क्षतिः ॥२३॥

के प्रति) दण्डत्व-दण्डरूप आदि सब अन्यथासिद्ध हैं। प्रश्न—विपरीत यदि मान लिया जावे तो उसमें आपके पास क्या विनिगमक है। (दण्डत्व आदि जिन्हें आप अन्यथासिद्ध मानते हैं उन्हें तो कारण मान लिया जावे, और जिन्हें दण्ड-चक्र आदि को आप कारण मानते हैं उन्हें घटादि के प्रति अन्यथासिद्ध मान लिया जावे यह "वैपरीत्य" का अर्थ है) उत्तर—दण्डत्व (दण्डरूप-आदि अन्यथासिद्ध पदार्थों) को कारण मानने में दण्ड घटित परम्परा को (कारणतावच्छेदक) सम्बन्ध की कल्पना करने में गौरव होगा। (अर्थात् दण्ड घट के प्रति स्वजन्यभ्रमिवत्ता सम्बन्ध से कारण होता है—और दण्ड को न मानकर यदि दण्डत्व को घट के प्रति कारण मानते हैं तो स्वाश्रयजन्यभ्रमिवत्ता सम्बन्ध से कारण मानना पड़ेगा—स्वसे दण्डत्व-उसका आश्रय दण्ड तज्जन्य जो भ्रमि तादृशभ्रमिवत्ता घट में है—इस प्रकार दण्डत्व घट के प्रति कारण हो सकता है—परन्तु दण्डत्व के इस कारणतावच्छेदक सम्बन्ध में स्वाश्रयतया जब कि दण्ड प्रविष्ट ही है तो तदपेक्षया लाघवात् दण्ड ही को कारण मान लें—क्योंकि दण्ड के कारणतावच्छेदक सम्बन्ध में दण्डत्व का प्रवेश नहीं है—यह लाघव है) इसी प्रकार अन्यों की भी इसी (पद्धम) से चरितार्थत्व संभव है। २१—२२।

"समवायिकारणत्वं द्रव्यस्यैवेति"

समवायिकारणत्व (समवायिकारण होना) यह केवल द्रव्य का साधर्म्य है (अर्थात् समवायिकारण द्रव्य होगा—द्रव्य से भिन्न कोई भी समवायिकारण नहीं हो सकता है) "असमवायिकारणत्व" यह गुण-कर्म का साधर्म्य है—(अर्थात् असमवायिकारण गुण-कर्म ही होते हैं) यह कारिकार्थ हुआ। प्रश्न—(आत्मा के विशेषगुण ज्ञानादि कहीं भी असमवायी नहीं होते हैं। इसीलिए असमवायिकारण के सामान्य लक्षण में "ज्ञानादिभिन्नत्व" विशेषण अव्याप्तिवारणार्थ दिया जा चुका है। अतः "असमवायिकारणत्व साधर्म्य की ज्ञानादि में अव्याप्ति हो गयी) उत्तर—इसके दो उत्तर हैं कि असमवायिकारणत्व गुण-कर्म का साधर्म्य है (अर्थात् गुण-कर्म-सर्वथा असमवायिकारण होते ही हैं) इसमें तात्पर्य नहीं है—अपितु असमवायिकारणत्व गुण-कर्म से भिन्नों का वैधर्म्य है (अर्थात् गुण-कर्म-से भिन्न पदार्थ असवायिकारण कदापि नहीं होते हैं इसमें तात्पर्य है) (यह प्रथम उत्तर हुवा)। प्रश्न—साधर्म्य के प्रकरण में वैधर्म्य को कहना यह सर्वथा अनुचित है। उत्तर—यह दूसरा उत्तर करते हैं कि अथवा असमवायिकारण में रहने वाली जो सत्ताभिन्न जाति तादृशजातिमत्त्व यही असमवायिकारणत्व

अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।
क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता ॥२४॥

का अर्थ है। (जैसे घट के प्रति कपालसंयोग–पट के प्रति तन्तुसंयोग–असमवायिकारण है–उसमें रहने वाली सत्ताभिन्न जाति-गुणत्व जाति–तद्वत्ता निखिल गुणों में है, तो ज्ञानादि में भी है–क्योंकि ज्ञानादि भी गुणत्वजातिमान् हैं) इससे ज्ञानादि के असमवायिकारण न होने पर भी (ज्ञानादि में असमवायिकारणत्व साधर्म्य की) अव्याप्ति नहीं है।२३।

*"अन्यत्र नित्यद्रव्येभ्यः"* नित्यद्रव्यों से भिन्न पदार्थों का *"आश्रितत्व"* साधर्म्य है। नित्यद्रव्य हैं पृथिव्यादि चार के परमाणु–और आकाश-काल-दिक्-आत्मा-मन ये पाँच–इनसे अतिरिक्त सकल पदार्थों का "आश्रितत्व" साधर्म्य है। "आश्रितत्व" का अर्थ है समवायादि सम्बन्ध से रहना–अन्यथा कालिकविशेषणता (कालिक-सम्बन्ध) से नित्यपदार्थ भी काल में रहते हैं। तब नित्यपदार्थों का भी आश्रितत्व साधर्म्य बन जावेगा–अतः नित्यपदार्थों में इस साधर्म्य की अव्याप्ति हो जावेगी।)

*अब द्रव्य ही का विशेषरूप से साधर्म्य बतलाते हैं—क्षिति (पृथिवी) आदि नव द्रव्यों* का "द्रव्यत्वयोगिता" गुणयोगिता साधर्म्य है।

पृथिवी-जल-तेज-वायु-मन इन पाँच द्रव्यों का परत्ववत्त्व-अपरत्ववत्त्व-मूर्तत्ववत्त्व-

---

विचारो युक्त एवेति,–तन्न संभवति तदेदं यत्तद्घटकावश्यकत्वादीनां सुवचत्वम्। न चावश्यकत्वमतिरिक्तम्। आवश्यकत्वादेरतिरिक्तत्वस्यावश्यकत्वे लाघवेन तस्यैव तथात्वमुचितमित्यन्यत्र विस्तरः।

वैपरीत्ये = दण्डत्वमेव कारणं दण्डोऽन्यथासिद्ध इति वैपरीत्ये। दण्डघटितपरंपरायाः = स्वाश्रयदण्डजन्यभ्रमिवत्तारूपपरंपरायाः। **गौरवादिति।** दण्डस्तु *स्वजन्यभ्रमिवत्तासंबन्धेन कारणमिति लाघवं बोध्यम्।* अन्येषां=चतुर्णाम्॥२१॥२२॥

ज्ञानादावव्याप्त्याऽऽह **गुणकर्मभिन्नानामिति।** मूलाक्षरानुसारेणाह **अथवेति।** असमवायिकारणवृत्तिसत्ताजातिमादायातिप्रसंगवारणायाह **सत्ताभिन्नेति।** द्रव्यत्वादेरसमवायिकारणवृत्तित्वाभावेन न तदादायाऽतिप्रसंगः। रूपघटादिगतद्वित्वमादायातिप्रसंगवारणाय **जातीति।** वृत्तित्वं च समवायावच्छिन्नं *ग्राह्यम्, अतः कालिकेन गुणकर्मवृत्तित्वेऽपि द्रव्यत्वस्य नातिप्रसंगः।* जातिमत्त्वमपि तेनैव संबन्धेन, नातस्तादृशगुणत्वादेः कालिकेन द्रव्यवृत्तित्वेऽपि क्षतिः। एवमन्यत्रापि रीतिरनुसंधेया।

*नित्यद्रव्याणि* = पृथिव्यादिचतुष्टयपरमाणवः, आकाशादिपंच च। आश्रितत्वस्य समवायेन वृत्तित्वार्थकतायां बीजमाह **विशेषणतयेति।** कालिकविशेषणतयेत्यर्थः। **नित्यानामपि**=परमाण्वाकाशादीनामपीत्यर्थः। तथा च नित्या-

अन्यत्रेति । नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः । आश्रितत्वं तु समवायादिसम्बन्धेन वृत्तिमत्त्वम्, विशेषणतया नित्यानामपि कालादौ वृत्तेः ।

इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते—क्षित्यादीनामिति । स्पष्टम् ॥२४॥

क्षितिर्जलं तथा तेजः पवनो मन एव च ।
परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥२५॥

क्षितिरिति । पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं क्रियावत्त्वं वेगवत्त्वं च साधर्म्यम् । नच यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यम्, परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्वस्य विवक्षितत्वात् । मूर्तत्वमपकृष्टपरिमाणवत्त्वम्, तच्च तेषामेव, गगनादिपरिमाणस्य

क्रियावत्त्व-वेगवत्त्व-साधर्म्य है । इन पाँचों द्रव्यों में से प्रत्येकद्रव्य में ये परत्व-अपरत्व-आदि पाँच धर्म रहते हैं) प्रश्न—जिस (उत्पन्न विनष्ट या आद्यक्षणावच्छिन्न) घटादि में परत्वअपरत्व उत्पन्न नहीं हुवे—उसमें अव्याप्ति हो जावेगी । उत्तर—"परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्व" यह परत्वाश्रयत्वअपरत्वाश्रयत्व का अर्थ कर देंगे । (समानाधिकरण शब्द का अर्थ है "तदधिकरणवृत्ति" (उसके अधिकरण में रहने वाली) परत्व-अपरत्व दो प्रकार के हैं—कालिक-दैशिक-"ज्येष्ठत्व" ज्येष्ठ में रहनेवाला यह कालिक परत्व है—"कनिष्ठत्व" कनिष्ठ में रहनेवाला—यह कालिक अपरत्व है । दूरत्व यह दैशिक परत्व है, दूरवर्त्ती पदार्थ में रहने वाला । समीपस्थत्व यह दैशिक अपरत्व है समीपवर्त्ती पदार्थ में रहने वाला ।

लक्षणसमन्वय-परत्व-अपरत्व के अधिकरण जो पृथ्वी-जल-तेज-वायु-मन उनमें रहने वाली जो द्रव्यत्व व्याप्य जाति पृथिवीत्व-जलत्व-तेजस्त्व-वायुत्व-मनस्त्व ये पाँच जाति तादृशजातिमत्त्व इन पाँच ही में जावेगा । (इससे पूर्वोक्त आद्यक्षणावच्छिन्न घटादि में अव्याप्ति नहीं हुवी) अपकृष्ट परिमाणवत्त्व मूर्त्तत्व है-अर्थात् (अपकृष्टपरिमाण छोटेपरिमाण) को मूर्त्तत्व कहते हैं । और वह इन्हीं (पाँच) का है—गगनादि का परिमाण किसी से भी

---

नामपि कालिकविशेषणतया वृत्तित्वेनाऽन्यत्र नित्यद्रव्येभ्य इत्यस्यानुपपत्तिरिति भावः । परमाणूनां संयोगेन वृत्तित्वात्संयोगेनाश्रितत्वस्य नित्यद्रव्यभिन्नानां साधर्म्यमित्यस्यानुपपत्तेराह आश्रितत्वं त्विति । विशेषणतया= कालिकविशेषणतया ॥२४॥

यत्र घटादाविति । परत्वापरत्वयोरपेक्षाबुद्धिजन्यतया यत्र घटादावपेक्षाबुद्धिर्नोत्पन्ना तत्र घटादावित्यर्थः । प्राचीनमतेनाह अपकृष्टपरिमाणवत्त्वमिति ।

कुतोऽप्यपकृष्टत्वाभावात्। पूर्ववत् कर्मवत्त्वं कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्, वेगवत्त्वं वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं च बोध्यम्॥२५॥

कालखात्मदिशां सर्वगतत्वं परमं महत्।
क्षित्यादि पञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥२६॥

अपकृष्ट नहीं है। पहिले की तरह से कर्मवत्त्व का भी अर्थ "कर्मसमानाधिकरण-द्रव्यत्व व्याप्य जाति मत्त्व" (कर्म के अधिकरण में रहनेवाली जो द्रव्यत्व व्याप्य जाति-तादृशजातिमत्त्व यही अर्थ करना। वेगवत्त्व का वेगवान् में रहनेवाली जो द्रव्यत्व व्याप्य जाति तादृशजातिमत्त्व यही अर्थ करना। (ऐसा अर्थ करने से वेगवत्त्व-तथा कर्मवत्त्व की आद्यक्षणावच्छिन्न घट में अव्याप्ति नहीं हुवी) २४-२५।

---

नव्यास्तु क्रियासमवायिकारणतावच्छेदकतया मूर्तत्वस्य जातित्वसिद्धिः। न च भूतत्वेन सांकर्यम्, तस्य जातित्वे मानाभावात्। भूतं भूतमितिव्यवहारश्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वविषयकः। न च तथापि तथाविधकार्यकारणभावे मानाभावः। तदनभ्युपगमे गगनादावपि तदुत्पादापत्तेर्दुर्वारत्वात्। न च क्रियाहेतोरभिघातादेः सत्त्वे मानाभावेन न तदुत्पत्तिरिति वाच्यम्। तथात्वे शब्दासमवायिकारणाभावेन शब्दानुत्पादापत्तेः। निःस्पर्शे मनसि नोदनाभिघातवत् तत्रापि तदुत्पादे बाधकाभावेनाभिघातादौ स्पर्शहेतुत्वाकल्पनात्, तथाकल्पनायां मानाभावाच्चेत्याहुः। अत्र प्रतिभातिक्रियासमवायिकारणतावच्छेदकतया मूर्तत्वस्य जातित्वसिद्धिरिवानुगतमत्या तस्यजातित्वसिद्धेः। न चोक्तधर्मविषयकत्वं। जातिविषयत्वकल्पने लाघवात्, बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वाज्ञानेपि तथाव्यवहाराच्च, तथा च सांकर्यस्य दुःपरिहरत्वेन न तस्य जातित्वमिति। यत्तु क्रियां प्रत्यभिघातस्य न सामान्यतोऽभिघातत्वेन हेतुत्वम्, तथात्वे पर्वतादावपि तृणाभिघातात् क्रियोत्पादापत्तेः, तथाच क्रियाजनकतावच्छेदकस्याभिघातत्वव्याप्यधर्मस्यावश्यकल्पनीयतया तादृशाभिघातस्य गगनादौ सत्त्वे प्रमाणाभावेन तदुत्पादवारणसंभवात्, क्रियात्वेन मूर्त्तत्वेन हेतुतायां मानाभावः। न च क्रियात्वस्य कार्यमात्रवृत्तिधर्मस्य कस्य चित्कार्यतावच्छेदकत्वमुपगन्तव्यम्, न च तदभिघातत्वव्याप्यजात्यवच्छिन्नस्यैवेति वाच्यम्, नोदनेनापि तदुत्पादेन व्यभिचारादिति वाच्यम्। एवमपि सिद्धद्रव्यत्वे तज्जनकतावच्छेदकत्वकल्पनायां लाघवात्। अतिप्रसंगभंगस्योक्तविशेषसामग्र्यभावेन संभवात्। सत्त्वेन विनिगमनाविरहस्य तु व्यापकतावच्छेदकधर्मेण हेतुत्वेऽन्यथासिद्धत्वापातेन निरस्तत्वादिति। तन्न, यादृशवैजात्यावच्छिन्नस्याभिघातजनकत्वं तादृशजात्यवच्छिन्नस्यैव शब्दहेतुत्वम्। अन्यथा तृणाभिघातात्तत्रापि शब्दोत्पादापत्तेः। इत्थंच शब्दासमवायिकारणस्य तस्य स्वीकारावश्यकतया तत्र क्रियोत्पत्तेर्वारणाय मूर्त्तत्वेन हेतुत्वं निष्प्रत्यूहमिति संक्षेपः।

ननूत्पत्तिक्षणे घटादौ कर्मवत्त्वं वेगवत्त्वं चाऽव्याप्तमत आह पूर्ववदिति।२५।

कालेति। कालाकाशात्मदिशां सर्वगतत्वं=सर्वमूर्त्तद्रव्यसंयोगित्वं, परममहत्त्वं च साधर्म्यम्। परममहत्त्वत्वं जातिविशेषः, अपकर्षानाश्रयपरिमाणत्वं वा। क्षित्यादीति। पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वं साधर्म्यम्। तच्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्। अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यम्। तेन ज्ञातो घट इत्यादिप्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात्तद्वत्यात्मनि नातिव्याप्तिः। न वा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः, तस्यापि स्वरूपयोग्यत्वात्, महत्त्व-

कालखात्मदिशाम्। काल-अकाश-आत्मा-दिशा-इन चारों का सर्वगतत्व अर्थात् सर्वमूर्त्तसंयोगित्व; एवं परममहत्त्व (परममहत्परिमाणवत्त्व), साधर्म्य है। परममहत्वत्व जाति विशेष है—अथवा अपकर्ष के अनाश्रय परिमाणत्व ही को परममहत्व समझना। क्षित्यादिपञ्चभूतानि-पृथ्वी जल-तेज-वायु-आकाश इनका भूतत्व साधर्म्य है। और वह भूतत्व है बहिरिन्द्रियग्राह्यविशेष गुणवत्त्व। यहां ग्राह्यत्व "लौकिक प्रत्यक्षस्वरूपयोग्यत्व" है। (यद्यपि सामान्यतः "ज्ञानविषयत्व" ही ग्राह्यत्व होता है। तथापि ज्ञानपद से लौकिक प्रत्यक्षात्मक ज्ञान का ग्रहण है—और विषयता पद से स्वरूपयोग्यत्वरूप विषयता का ग्रहण है।

तब प्रकृत में "ग्राह्यत्व" शब्द का यह अर्थ हुवा कि "लौकिक प्रत्यक्षस्वरूपयोग्यत्व"। अब भूतत्व का अर्थ यह हुवा कि "बहिरिन्द्रियजन्यलौकिकप्रत्यक्ष स्वरूपयोग्य विशेषगुणवत्त्व" अर्थात् बहिरिन्द्रिय से जन्य जो लौकिकप्रत्यक्ष-तादृशप्रत्यक्ष की स्वरूपयोग्यता वाला जो विशेषगुणतद्वत्त्व ही भूतत्व है) प्रश्न—(ग्राह्यत्व यहां पर ज्ञानपद से लौकिक प्रत्यक्ष का ग्रहण क्यों

---

सर्वमूर्त्तसंयोगित्वमिति। घटादिवारणाय सर्वेति। सर्वसंयोगित्वस्याऽसंभवापत्त्या मूर्तेति। ननु यत्र परमाणौ द्रव्यारंभानुगुणक्रिया, ततश्च पूर्वदेशविभागः ततः संयोगनाशः तत्र संयोगनाशकाले एव द्व्यणुकारंभकपरमाण्वन्तरे क्रिया ततः परमाण्वोरारंभकसंयोगकाले तेनैव परमाणुना विभागः—ततो द्व्यणुकोत्पत्तिसमये तेनैव परमाणुनाऽऽरंभकसंयोगनाशः ततो द्व्यणुकनाशः, तथा च क्षणमात्रस्थायिनो द्व्यणुकस्य (मूर्तस्य) सकलान्तःपातिनो विभौ संयोगासंभवेनासंभवापत्तेरिति चेन्न। आरंभकसंयोगनाशस्य कार्यसहभावेन प्रतिबन्धकतया तादृशस्थले कार्योत्पादस्यैवानभ्युपगमात्। यथाचैतत्तथा पाकजप्रक्रियायां व्युत्पादयिष्यते।

तच्चेति। भूतत्वं चेत्यर्थः। मनोरूपेन्द्रियग्राह्यसुखादिरूपविशेषगुणवत्त्वस्यात्मन्यपि सत्त्वादतिप्रसंग इति तद्व्यावृत्तये बहिरिति। बहिरिन्द्रियत्वं च तथाविधपंचान्यतमत्वम्-मनोभिन्नेन्द्रियत्वं वा। पृथिव्यादिमनोयोगे यावदाश्रयप्रत्यक्षरूपकारणाभावेन तस्याप्रत्यक्षत्वेपि वक्ष्यमाणरीत्या स्वरूपयोग्यत्वानपायेनेदृशगुणवत्त्वस्य मनस्यपि सत्त्वादतिप्रसंगः स्यादतो विशेषेति।

कुतोऽप्यपकृष्टत्वाभावात्। पूर्ववत् कर्मवत्त्वं कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्, वेगवत्त्वं वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं च बोध्यम्॥२५॥

कालखात्मदिशां सर्वगतत्वं परमं महत्।
क्षित्यादि पञ्च भूतानि चत्वारि स्पर्शवन्ति हि॥२६॥

अपकृष्ट नहीं है। पहिले की तरह से कर्मवत्त्व का भी अर्थ "कर्मसमानाधिकरण-द्रव्यत्व व्याप्य जाति मत्त्व"। कर्म के अधिकरण में रहनेवाली जो द्रव्यत्व व्याप्य जाति-तादृशजातिमत्त्व यही अर्थ करना। वेगवत्त्व का वेगवान् में रहनेवाली जो द्रव्यत्व व्याप्य जाति तादृशजातिमत्त्व यही अर्थ करना। (ऐसा अर्थ करने से वेगवत्त्व-तथा कर्मवत्त्व की आद्यक्षणावच्छिन्न घट में अव्याप्ति नहीं हुवी) २४-२५।

---

नव्यास्तु क्रियासमवायिकारणतावच्छेदकतया मूर्तत्वस्य जातित्वसिद्धिः। न च भूतत्वेन सांकर्यम्, तस्य जातित्वे मानाभावात्। भूतं भूतमितिव्यवहारश्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वविषयकः। न च तथापि तथाविधकार्यकारणभावे मानाभावः। तदनभ्युपगमे गगनादावपि तदुत्पादापत्तेर्दुर्वारत्वात्। न च क्रियाहेतोरभिघातादेः सत्त्वे मानाभावेन न तदुत्पत्तिरिति वाच्यम्। तथात्वे शब्दासमवायिकारणाभावेन शब्दानुत्पादापत्तेः। निःस्पर्शे मनसि नोदनाभिघातवत् तत्रापि तदुत्पादे बाधकाभावेनाभिघातादौ स्पर्शहेतुत्वाकल्पनात्, तथाकल्पनायां मानाभावाच्चेत्याहुः। अत्र प्रतिभातिक्रियासमवायिकारणतावच्छेदकतया मूर्तत्वस्य जातित्वसिद्धिरित्यनुगतमस्या तस्यजातित्वसिद्धेः। न चोक्तधर्मविषयकत्वं। जातिविषयत्वकल्पने लाघवात्, बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वाज्ञानेपि तथाव्यवहाराच, तथा च सांकर्यस्य दुःपरिहरत्वेन न तस्य जातित्वमिति। यत्तु क्रियां प्रत्यभिघातस्य न सामान्यतोऽभिघातत्वेन हेतुत्वम्, तथात्वे पर्वतादावपि तृणाभिघातात् क्रियोत्पादापत्तेः, तथाच क्रियाजनकतावच्छेदकस्याभिघातत्वव्याप्यधर्मस्यावश्यकल्पनीयतया तादृशाभिघातस्य गगनादौ सत्त्वे प्रमाणाभावेन तदुत्पादवारणसंभवात्, क्रियात्वेन मूर्त्तत्वेन हेतुतायां मानाभावः। न च क्रियात्वस्य कार्यमात्रवृत्तिधर्मस्य कस्य चित्कार्यतावच्छेदकत्वमुपगन्तव्यम्, न च तदभिघातत्वव्याप्यजात्यवच्छिन्नस्यैवेति वाच्यम्, नोदनेनापि तदुत्पादेन व्यभिचारादिति वाच्यम्। एवमपि सिद्धद्रव्यत्वे तज्जनकतावच्छेदकत्वकल्पनायां लाघवात्। अतिप्रसंगभंगस्योक्तविशेषसामग्र्यभावेन संभवात्। सत्त्वेन विनिगमनाविरहस्य तु व्यापकतावच्छेदकधर्मेण हेतुत्वेऽन्यथासिद्धत्वापातेन निरस्तत्वादिति। तन्न, यादृशवैजात्यावच्छिन्नस्याभिघातजनकत्वं तादृशजात्यवच्छिन्नस्यैव शब्दहेतुत्वम्। अन्यथा तृणाभिघातात्तत्रापि शब्दोत्पादापत्तेः। इत्थंच शब्दासमवायिकारणस्य तस्य स्वीकारावश्यकतया तत्र क्रियोत्पत्तेर्वारणाय मूर्त्तत्वेन हेतुत्वं निष्प्रत्यूहमिति संक्षेपः।

ननूत्पत्तिक्षणे घटादौ कर्मवत्त्वं वेगवत्त्वं चाऽव्याप्तमत आह पूर्ववदिति।२५।

कालेति । कालाकाशात्मदिशां सर्वगतत्त्वं = सर्वमूर्त्तद्रव्यसंयोगित्वं, परममहत्त्वं च साधर्म्यम् । परममहत्त्वत्वं जातिविशेषः, अपकर्षानाश्रयपरिमाणत्वं वा । क्षित्यादीति । पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वं साधर्म्यम् । तच्च वहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् । अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यम् । तेन ज्ञातो घट इत्यादिप्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात्तद्वत्यात्मनि नातिव्याप्तिः । न वा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः, तस्यापि स्वरूपयोग्यत्वात्, महत्त्व-

कालखात्मदिशाम् । काल-आकाश-आत्मा-दिशा-इन चारों का सर्वगतत्व अर्थात् सर्वमूर्त्तसंयोगित्व; एवं परममहत्त्व (परममहत्परिमाणवत्त्व),साधर्म्य है । परममहत्वत्व जाति विशेष है—अथवा अपकर्ष के अनाश्रय परिमाणत्व ही को परममहत्व समझना । क्षित्यादिपञ्चभूतानि-पृथ्वी जल-तेज-वायु-आकाश इनका भूतत्व साधर्म्य है । और वह भूतत्व है वहिरिन्द्रियग्राह्यविशेष गुणवत्त्व । यहां ग्राह्यत्व "लौकिक प्रत्यक्षस्वरूपयोग्यत्व" है । (यद्यपि सामान्यतः "ज्ञानविषयत्व" ही ग्राह्यत्व होता है । तथापि ज्ञानपद से लौकिक प्रत्यक्षात्मक ज्ञान का ग्रहण हैं—और विषयता पद से स्वरूपयोग्यत्वरूप विषयता का ग्रहण है ।

तब प्रकृत में "ग्राह्यत्व" शब्द का यह अर्थ हुवा कि "लौकिक प्रत्यक्षस्वरूपयोग्यत्व" । अब भूतत्व का अर्थ यह हुवा कि "बहिरिन्द्रियजन्यलौकिकप्रत्यक्ष स्वरूपयोग्य विशेषगुणवत्त्व" अर्थात् वहिरिन्द्रिय से जन्य जो लौकिकप्रत्यक्ष-तादृशप्रत्यक्ष की स्वरूपयोग्यता वाला जो विशेषगुणतद्वत्त्व ही भूतत्व है ) प्रश्न—(ग्राह्यत्व यहां पर ज्ञानपद से लौकिक प्रत्यक्ष का ग्रहण क्यों

---

सर्वमूर्त्तसंयोगित्वमिति । घटादिवारणाय सर्वेति । सर्वसंयोगित्वस्याऽसंभवापत्त्या मूर्तेति । ननु यत्र परमाणौ द्व्यणुकारंभानुगुणक्रिया, ततश्च पूर्वदेशविभागः ततः संयोगनाशः तत्र संयोगनाशकाले एव द्व्यणुकारंभकपरमाण्वन्तरे क्रिया-ततः परमाण्वोरारंभकसंयोगकाले तेनैव परमाणुना विभागः—ततो द्व्यणुकोत्पत्तिसमये तेनैव परमाणुनाऽऽरंभकसंयोगनाशः-ततो द्व्यणुकनाशः, तथा च क्षणमात्रस्थायिनो द्व्यणुकस्य-( मूर्तस्य ) सकलान्तःपातिनो विभौ संयोगासंभवेनासंभवापत्तेरिति चेन्न । आरंभकसंयोगनाशस्य कार्यसहभावेन प्रतिबन्धकतया तादृशस्थले कार्योत्पादस्यैवानभ्युपगमात् । यथाचैतत्तथा पाकजप्रक्रियायां व्युत्पादयिष्यते ।

तच्चेति । भूतत्वं चेत्यर्थः । मनोरूपेन्द्रियग्राह्यसुखादिरूपविशेषगुणवत्त्वस्यात्मन्यपि सत्त्वादतिप्रसंग इति तद्व्यावृत्तये बहिरिति । बहिरिन्द्रियत्वं च तथाविधपंचान्यतमत्वम्-मनोभिन्नेन्द्रियत्वं वा । पृथिव्यादिमनोयोगे यावदाश्रयप्रत्यक्षरूपकारणाभावेन तस्याप्रत्यक्षत्वेपि वक्ष्यमाणरीत्या स्वरूपयोग्यत्वानपायेनेदृशगुणवत्त्वस्य मनस्यपि सत्त्वादतिप्रसंगः स्यादतो विशेषेति ।

किया-एवं विषयतापद से स्वरूपयोग्यत्वस्य विषयता का ग्रहण क्यों किया केवल पूर्वोक्त प्रकार—"वहिरिन्द्रियजन्य जो ज्ञान-तादृशज्ञान विषयतावद्विशेषगुणवत्त्व" यही भूतत्व का अर्थ ठीक था। उत्तर—प्राह्लत्व यहाँ पर ज्ञानपद से लौकिक प्रत्यक्षात्मक ज्ञान यदि नहीं लेते हैं तो भूतत्व साधर्म्य की आत्मा में अतिव्याप्ति हो जावेगी—क्योंकि "ज्ञातो घट:" इस प्रत्यक्षज्ञान में प्रकारीभूत जो ज्ञान उस ज्ञान का "चक्षुः संयुक्त मनः संयुक्त आत्म समवेत स्मृति विषयत्वरूप, ज्ञानलक्षणा सन्निकर्ष से घट में प्रत्यक्ष होता है—सो वहिरिन्द्रिय (चक्षु) से जायमान जो ज्ञान "ज्ञातोघट:" इत्याकारकज्ञान-उसका विषय विशेषगुण जो "ज्ञान" तद्वत्ता आत्मा में है। और यदि ज्ञानपद से लौकिक प्रत्यक्षात्मक ज्ञान का ग्रहण किया तो "ज्ञातो घट:" यहाँ पर ज्ञान का ज्ञान लक्षणा-सन्निकर्ष से लौकिक प्रत्यक्ष नहीं होता है—अपितु ज्ञानलक्षणासन्निकर्ष के अलौकिक होने के नाते ज्ञान का यहाँ पर अलौकिक प्रत्यक्ष ही होता है—अतः अतिव्याप्ति नहीं है। अभिप्राय यह है कि "ज्ञातो घट" यह ज्ञानविषयकज्ञान होने के नाते अनुव्यवसाय कहलाता है—तथा ज्ञानलक्षणा-सन्निकर्षजन्य जो ज्ञान वह उपनीत भान कहलाता है। "ज्ञातो घट:" इस ज्ञान में विशेष्य जो घट उसमें व्यवसायात्मक प्रथमज्ञान विषय होने के नाते विशेषण होकर भासता है। वहाँ घट के साथ चक्षुः संयोग लौकिकसन्निकर्ष है—और ज्ञानांश में ज्ञानलक्षणा अलौकिक सन्निकर्ष है—अतः ज्ञानमें लौकिक विषयता नहीं है अतः नातिव्याप्तिः। ऐसे ही विषयतापद से स्वरूपयोग्यत्व रूप विषयता का ग्रहण यदि नहीं करेंगे तो "वहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयतावद्विशेषगुणवत्त्व" पृथ्वी आदि चार के परमाणु भी भूतत्व साधर्म्य के लक्ष्य होने के नाते उनमें भूतत्व लक्षणा-गमनप्रयुक्त अव्याप्ति हो जावेगी। तथाहि—वहिरिन्द्रियजन्य जो लौकिक प्रत्यक्ष सो परमाणु के रूपादि का तो लौकिक प्रत्यक्ष होगा नहीं—क्योंकि परमाणु ही का जब कि लौकिक प्रत्यक्ष नहीं होता तो परमाणु के रूप का लौकिक प्रत्यक्ष कैसे होगा—अतः वहिरिन्द्रियजन्य लौकिक प्रत्यक्ष विषय विशेषगुण यदि परमाणु के विशेषगुण होते तो तादृश विशेषगुणवत्त्वरूप भूतत्व परमाणु आदि में जाता—परन्तु वे (परमाणु) सर्वथा प्रत्यक्ष के अविषय हैं—अतः प्रत्यक्षाविषय परमाणु आदि में अव्याप्ति हो गयी। यदि विषयतापद से स्वरूपयोग्यत्वरूप विषयता का ग्रहण किया तो परमाणु तथा परमाणु के रूपादि में लौकिक प्रत्यक्ष की स्वरूपयोग्यता है—अर्थात् परमाणु में चाक्षुषप्रत्यक्ष के और समस्तकारण मौजूद होने पर भी केवल महत्व के न रहने से परमाणु एवं उसके रूपादि का प्रत्यक्ष नहीं होता है, क्योंकि चाक्षुषप्रत्यक्ष के प्रति "महत्त्वा-वच्छिन्न-उद्भूतरूपावच्छिन्न-आलोकसंयोगावच्छिन्न चक्षुः संयोग का कारणता है-सो परमाणु में महत्त्व नहीं है अतः परमाणु का तथा उसके रूपादि का प्रत्यक्ष न होने पर भी चाक्षुषप्रत्यक्ष की स्वरूपयोग्यता तो परमाणु में तथा उसके रूपादि में है ही—सो वहिरिन्द्रियजन्य लौकिक प्रत्यक्षनिरूपित स्वरूपयोग्यतावद्विशेषगुण करके परमाणु के रूपादि भी हो गये—तादृश विशेषगुणवत्त्व परमाणु आदि में भी है अतः परमाणु आदि में अव्याप्ति नहीं है। वही मूल में कहा है कि "तस्यापि स्वरूपयोग्यत्वात्"।

---

सोऽयमिति। तथाच वहिरिन्द्रियजन्यलौकिकसन्निकर्षप्रयोज्यविषयतावच्छेदकजातिमद्विशेषगुणवत्त्वमिति समुदितार्थः, तेन ज्ञातो घट इति प्रत्यक्षस्य घटांशे लौकिकत्वेपि न क्षतिः। लौकिकेत्यस्य फलमाह तेनेति। उक्तविवक्षणेनेत्यर्थः।

लक्षणकारणान्तरासन्निधानाच्च न प्रत्यक्षम् । अथवा आत्मावृत्तिविशेष-गुणवत्त्वं तत्त्वम् । चत्वारीति । पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वम् ॥२६॥

द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् ।
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥२७॥

द्रव्यारम्भ इति । पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वं साधर्म्यम् । न च द्रव्यानारम्भके घटादावव्याप्तिः, द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥

आकाशशरीरिणामिति । आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेष-

अथवा "आत्मावृत्तिविशेषगुणवत्व" यही भूतत्व कह दीजिये—अगाड़ी स्वयं लिखेंगे कि "आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः" अर्थात् आत्मा और भूतवर्ग-पृथिवी जल-तेज-वायु आकाश ये विशेषगुण वाले हैं—सो आत्मा में अवृत्ति (न रहने वाले) जो विशेषगुण पृथिवी आदि पांच के विशेषगुण-तादृशविशेषगुणवत्व इन्हीं परमाणु सहित पांचो में जावेगा-अतः इन पांच के परमाणुओं में अव्याप्ति नहीं हुवी । "चत्वारि स्पर्शवन्तिहि" पृथिवी-जल-तेज-वायु इन चार का स्पर्शवत्व साधर्म्य है । "द्रव्यारंभश्चतुर्षु स्यात्" पृथिवी-जल-तेज-वायु इन चार का "द्रव्यारंभकत्व" साधर्म्य है । शंका-घट किसी भी द्रव्य का आरंभक (उत्पादक) नहीं है अतः घट में द्रव्यारंभकत्व साधर्म्य के अगमनप्रयुक्त अव्याप्ति हो गयी । समाधान-द्रव्यारंभकत्व का जाति घटित अर्थ करने से कोई दोष नहीं है—तथाहि-द्रव्यसमवायिकारण में रहने वाली जो द्रव्यत्वव्याप्यजाति (पृथिवीत्वजाति) तादृशजातिमत्व पृथिवी मात्र में है सो घटादि में भी है—अतः घटादि में अव्याप्ति नहीं है ।

"अथाकाशशरीरिणाम्" आकाश-तथा शरीरी ( आत्मा ) का अव्याप्यवृत्ति विशेषगुण-वत्व-क्षणिकविशेषगुणवत्व-साधर्म्य है । आकाश का विशेषगुण शब्द है, और वह अव्याप्यवृत्ति

---

ज्ञातः=ज्ञानविषयः, न तु ज्ञातताश्रयः, तस्याः निरसयिष्यमाणत्वात् । तद्वति=बहिरिन्द्रियजन्यालौकिकप्रत्यक्षविषयीभूतज्ञानवति । स्वरूपयोग्यत्वस्य फलमाह प्रत्यक्षाविषये इति । लौकिकप्रत्यक्षाविषये इत्यर्थः । परमाण्वादाविति । आदिना द्व्यणुकपरिग्रहः । विवक्षिते तु नायं दोष इत्याह तस्यापि=परमाण्वादिरूपस्यापि । महत्त्वलक्षणकारणान्तरासन्निधानादिति । लक्षणपदं स्वरूपार्थकम्, तथाच द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति स्वाश्रयसमवेतत्वसंबन्धेन महत्वस्य उक्तसंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति महत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य वा हेतुत्वेन फलोपधानाभावेपि न स्वरूपयोग्यत्वापाय इत्यर्थः । लाघवादाह अथवेति । तत्त्वं=भूतत्वम् । स्पर्शवत्त्वमिति । अत्र स्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः ॥२६॥

गुणवत्त्वं साधर्म्यमित्यर्थः। आकाशस्य विशेषगुणः शब्दः, स चाव्याप्यवृत्तिर्यदा किंचिदवच्छेदेन शब्द उत्पद्यते तदाऽन्यावच्छेदेन तदभावस्यापि सत्त्वात्। क्षणिकत्वं च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्।

है। (आकाश सर्वत्र व्यापक है—तब फिर भेरीरूपप्रदेश से भी आकाश अवच्छिन्न (युक्त) है—अर्थात् संबद्ध है) अतः जिस समय यत्किंचिदवच्छेदेन (भेरीरूपप्रदेशावच्छेदेन—अर्थात् भेरीरूपप्रदेशावच्छिन्न आकाश में) शब्द उत्पन्न होता है तब उसी समय आकाश में अन्यावच्छेदेन (घटाद्यवच्छेदेन) अर्थात्शब्दशून्य जो घटात्मक प्रदेश तदवच्छिन्न आकाश में) शब्दाभाव भी रहता है। अर्थात् शब्दाभाव की भी प्रतीति होती है। अभिप्राय यह है कि आकाश व्यापक होने के नाते समस्त प्रदेशों से सम्बद्ध है—अतः जिस (भेरीरूप प्रदेश में शब्द होता है तद्देशावच्छेदेन आकाश शब्दवान् है, और जिस घटादिरूप प्रदेश में शब्द नहीं होता तद्देशावच्छेदेन आकाश शब्दा भाववान् है—अतः एक ही आकाश रूप अधिकरण में शब्द भी है और शब्दाभाव भी है। जहाँ एक ही अधिकरण में प्रतियोगी और तदभाव दोनों रहें वे अव्याप्यवृत्ति होते हैं—जैसे कपिसंयोग तथा कपिसयोगाभाव। तृतीयक्षण में जिसका ध्वंस हो उस ध्वंस के प्रतियोगी को क्षणिक कहते हैं—तथा तादृशप्रति-

---

द्रव्यारंभकत्वं द्रव्यसमवायिकारणत्वम्, तत्र द्रव्यसमवायिकारणतावच्छेदकं च स्पर्शवत्त्वम्। समवायेन जन्यद्रव्यत्वाच्छिन्नं प्रति तादात्म्येन स्पर्शवत्त्वेन हेतुत्वांगीकारात्, अत एव घ्राणारंभकावयवे स्पर्शसिद्धया घ्राणेपि स्पर्शसिद्धिः। तस्य चाऽनुपलब्धिस्तु अनुद्भूतत्वेनाप्युपपद्यते इति प्राञ्चः।

नव्यास्तु स्पर्शवत्त्वेन न कारणत्वं, कारणतावच्छेदकीभूतस्पर्शभेदेन कार्यकारणभावानन्त्यापत्तेः। न च स्वाश्रयसमवायित्वसंबन्धेन स्पर्शत्वजातिः कारणतावच्छेदिका। अनुद्भूतस्पर्शे मानाभावेन व्यभिचारात्, ईदृशकार्यकारणभावसिद्धेः पुरा स्पर्शाऽसिद्धया व्यभिचारबुद्धिसंभवात्, अतो जन्यद्रव्यत्वेन भूतत्वेनैव कार्यकारणभावः कल्पनीयः। आकाशे भूतमिति व्यवहारस्तु गौणः। मूर्त्तत्वेन हेतुत्वोक्तिर्न युक्ता, क्रियासमवायिकारणतावच्छेदकतया सिद्धस्य मूर्त्तत्वस्य पंचवृत्तित्वादित्याहुः। द्रव्यत्वव्याप्यत्वं च द्रव्यत्वन्यूनवृत्तित्वरूपं, तच्च द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्, तेन द्रव्यत्वस्य द्रव्यत्वव्याप्यत्वेपि न क्षतिः। अव्याप्यवृत्तिरिति। सावच्छिन्नवृत्तिरित्यर्थः। अव्याप्यवृत्तित्वं च स्वाधिकरणवृत्त्यन्ताभावप्रतियोगित्वम्। अत्राऽव्याप्यवृत्तित्वं दैशिकं ग्राह्यम्, तेन रूपादेः कालिकाऽव्याप्यवृत्तित्वेपि न क्षतिः। शब्दस्याव्याप्यवृत्तित्वमेवोपपादयति यदेति। किंचिदवच्छेदेन=एतद्देशावच्छेदेन, अन्यावच्छेदेन= देशान्तरावच्छेदेन। क्षणमात्रस्थायित्वरूपं क्षणिकत्वं नास्मन्मतसिद्धमत आह तृतीयेति। स्वतृतीयक्षणवृत्तिध्वंसप्रतियोगित्वमित्यर्थः, नातो ज्ञानादितृतीयक्षणवृत्तिध्वंसप्रतियोगित्वेपि

योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिविशेषगुणनाश्यत्वात्प्रथमशब्दस्य द्वितीयशब्देन नाशः । एवं ज्ञानादीनामपि, ज्ञानादिकं हि यदाऽऽत्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते तदा घटाद्यवच्छेदेन तदभावोऽस्त्येव ।

योगित्व त्रणिकत्व रूप हुवा । प्रत्यक्षयोग्य जो आकाशादिविभुद्रव्यों के विशेषगुण उनका अपने से बाद में उत्पन्न होने वाले विशेषगुणों से नाश होता है, इस प्रकार प्रथम शब्द का द्वितीय शब्द नाशक है । इसी प्रकार ज्ञानादिकों में भी समझना (आदिपद से इच्छादि का संग्रह कर लेना) ज्ञानादिक जिस समय विभु आत्मा में शरीरावच्छेदेन उत्पन्न होते हैं - उसी समय आत्मा में घटावच्छेदेन ज्ञानाभाव भी है । (अभिप्राय यह है कि आत्मा में एक ही काल में ज्ञान और ज्ञानाभाव दोनों अवच्छेदकभेद से रहते हैं अतः ज्ञानादि भी अव्याप्यवृत्ति हैं) एवं दो क्षण

---

घटस्यातिप्रसंगः । अपेक्षाबुद्धेश्चतुर्थक्षणवृत्तिध्वंसप्रतियोगित्वेपि तृतीयक्षणवृत्तिध्वंसप्रतियोग्यपेक्षाबुद्धिभिन्नज्ञानादिमत्त्वस्य साधर्म्यानपायात् । ननु अपेक्षाबुद्धिभिन्नज्ञानमात्रस्य न तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्, प्रहरमात्रममुमर्थं जानन्नेवासमित्याद्यनुभवात्, ज्ञानस्य बहुक्षणावस्थायित्वम् । न चोक्तस्थले धारावाहिकज्ञानस्वीकारान्नानुभवविरोध इति वाच्यम् । ज्ञानानन्त्यकल्पने गौरवात् । यत्र तु नोक्तानुभवस्तत्राऽस्तां तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वमत आह **योग्येति** ।
तथाच नाशकसत्त्वान्नाशः स्यादेव, इत्थं चोक्तस्थलेऽनायत्या ज्ञानधारैव कल्पनीया । अथ स्वत्वाननुगमेन तत्तद्व्यक्तिविश्रान्तहेतुहेतुमद्भावस्य यत्र प्रहरमात्रं जानन्नेवासमित्यनुभवस्तत्राकल्पनादिति चेन्न । प्रतियोगितासंबन्धेन योग्यविभुविशेषगुणनाशं प्रति स्वाव्यवहितपूर्ववर्त्तित्व-स्वसामानाधिकरण्योभयसंबन्धेनोत्तरगुणत्वेन हेतुतया स्वत्वस्य संबन्धमर्यादया निवेशेन तत्तद्व्यक्तिविश्रान्तत्वाभावात् । न चापेक्षाबुद्धेद्वित्वनिर्विकल्पकक्षणे नाशापत्तिरिति वाच्यम् । तद्बुद्धेर्द्वित्वनिर्विकल्पकनाश्यतया सविकल्पकोत्पादक्षणे एव नाशो नतु निर्विकल्पकोत्पादसमयेपीत्यग्रे व्यक्तीभविष्यति ।

एवं शब्दोपि तृतीयक्षणवृत्तिध्वंसप्रतियोगी, शब्दो नष्ट इति प्रतीतेः ।

मीमांसकास्तु—शब्दो नाऽनित्यः-स एवायं गकार इति प्रत्यभिज्ञायास्तत्तद्व्यक्तित्वावच्छिन्नाभेदविषयिण्यास्तदनित्यत्वे भ्रमत्वापत्तेर्नाशादिकल्पने गौरवेण च नित्यत्वसिद्धेः । न चोत्पादविनाशप्रत्ययानुपपत्तिः, तस्य च नित्यत्वाग्रहदशायामुत्पादप्रतीतेः सुवचत्वात् । न च प्रतीतेः प्रमात्वानुपपत्तिः, इष्टापत्तेः । न च प्रमात्वे बाधकाभावः, प्रत्यभिज्ञाया एव बाधकत्वात् । न चोत्पादप्रतीत्या प्रत्यभिज्ञैव बाध्यताम्, वरं चोत्पादविनाशप्रतीत्योर्बाध्यत्वकल्पनामपेक्ष्यैकप्रत्यभिज्ञाया एव बाध्यत्वकल्पनाश्रयणमिति वाच्यम् । लाघवतर्कसहकारेण प्रत्यभिज्ञाया एव बाधकत्वौचित्यात् । तस्मान्नित्य एव शब्द इत्याहुः ।

एवं ज्ञानादिकमपि क्षणद्वयावस्थायि। इत्थं चाव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं चार्थः। पृथिव्यादौ रूपादिविशेषगुणोऽस्तीत्यतोऽव्याप्यवृत्तीत्युक्तम्। पृथिव्यादावव्याप्यवृत्तिः संयोगादिरस्तीत्यतो विशेष-

स्थायी हैं। (अतः क्षणिक हैं) इस प्रकार अव्याप्यवृत्ति विशेष गुणवत्त्व तथा क्षणिक विशेषगुणवत्त्व (आकाश तथा जीवात्मा का साधर्म्य सिद्ध हुआ) प्रश्न—(अव्याप्यवृत्तिविशेषगुणवत्त्व) यहाँ पर 'अव्याप्यवृत्ति' पद क्यों दिया केवल विशेषगुणवत्त्व ही साधर्म्य कर दिया जावे) उत्तर—पृथिवी आदि में रूपादि विशेषगुण हैं। (उनकी पृथिवी आदि में अतिव्याप्ति हो जावेगी) अतः 'अव्याप्यवृत्ति' यह पद दिया। (तो रूपादि अव्याप्यवृत्ति नहीं हैं इसलिये अतिव्याप्ति नहीं है।

प्रश्न—("अव्याप्यवृत्तिविशेषगुणवत्त्व" इस साधर्म्य में विशेषपद क्यों दिया केवल "अव्याप्यवृत्तिगुणवत्त्व" यही साधर्म्य आकाशादि का ठीक है।

---

तच्चिन्त्यम्—उत्पन्नो नष्ट इति प्रत्ययदशायामपि प्रत्यभिज्ञाया उत्पादान्न तस्याः पूर्वकालीनगकारव्यक्त्यभेदावगाहित्वम्, किन्तु गत्वजात्यवच्छिन्नाभेदावगाहित्वमेव। न च प्रत्यभिज्ञायास्तत्तद्व्यक्तित्वावच्छिन्नाभेद एव विषयस्तत्काले च जायमानोत्पादविनाशप्रत्ययस्त्वभिव्यंजकीभूतपवनसंयोगविषयक एवास्तु इति वाच्यम्। स्वस्वघटितोत्पत्त्यारोपाऽसंभवात्। किं चास्मन्मते पवनसंयोगजन्यतावच्छेदकं कत्वम्, भवन्मते च तत्प्रत्यक्षत्वम्। एवमस्मन्मते वायुसंयोगोऽवच्छेदकतया हेतुः, कार्यतावच्छेदकमपि तेनैव संबन्धेन स्वीयककारत्वादिकम्, भवन्मते च स्वीयककारप्रत्यक्षत्वावच्छिन्नं प्रति स्वीयकर्णावच्छिन्नविजातीयसंयोगः कारणमिति गुरुतरकल्पना स्यादिति ध्येयम्। अव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वं न साधर्म्यं वैयर्थ्यादत आह इत्थं चेति। चतुःक्षणवृत्तीति। इदं च जन्यविशेषणम्, त्रिक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वमेव सम्यक्, रूपादेस्त्रिक्षणवृत्तिजन्यावृत्तिजातिमत्त्वाभावान्न तदादायातिप्रसंगः, अतोऽधिकक्षणनिवेशवैफल्यमित्याशंकामपाकर्तुमाह अपेक्षाबुद्धिरिति। क्षणचतुष्टयमिति। तथाच तादृशविवक्षायां ज्ञानादेरप्यसंग्रहापत्तेरिति भावः। न देयमिति। तथाच लक्षणद्वयम्—जन्यपदघटितं तदघटितं च, प्रथमपक्षाभिप्रायेणाह परममहत्त्वस्येति। तादृशगुणत्वादिति। चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्गुणत्वादित्यर्थः। अस्य च तद्वारणायेत्यनेनान्वयः। द्वितीयपक्षाभिप्रायेणाह चतुर्थक्षणे इति। तथात्वादिति। चतुःक्षणवृत्त्यवृत्तिजातिमत्त्वादित्यर्थः। इदमुपलक्षणम्—प्रथमपक्षेप्ययं दोषो बोध्यः। लाघवादाकाशेश्वरजीवसाधारणमिच्छाशब्दाभ्यां संगमनप्रकारमाह त्रिक्षणवृत्तित्वं चेति। अत्रापि जन्यपदोपादानमावश्यकमेव, इतरथा इच्छात्वस्यापि त्रिक्षणवृत्त्यवृत्तित्वाऽसंभवेनाऽप्रसंगात्॥२७॥

स्वकीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यं, परकीयरूपाद्यव्यञ्जकत्व-स्यतदर्थत्वात्। न चैवं नवशरावगन्धव्यंजकजलेऽनैकान्तिकत्वमिति वाच्यं, तस्य सक्तुरसाभिव्यञ्जकत्वात्। यद्वा परकीयेति न देयं, वायूपनीतसुरभि-भागस्य दृष्टान्तत्वसंभवात्। न च घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रव्यञ्ज-कत्वात् तत्र व्यभिचार इति वाच्यं, द्रव्यत्वे सतीति विशेषणात्। विषय इति। उपभोगसाधनं विषयः। सर्वमेव हि कार्यजातमदृष्टाधीनम्, यत्कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परंपरया वा जनयत्येव, न हि बीजप्रयोज-नाभ्यां विना कस्यचिदुत्पत्तिरस्ति। तेन द्व्यणुकादि ब्रह्माण्डान्तं सर्वमेव विषयो भवति। शरीरेन्द्रिययोर्विषयत्वेऽपि प्रकारान्तरेणोपन्यासः शिष्य-बुद्धिवैशद्यार्थः ॥३८॥

है। प्रश्न—दृष्टान्त में गोघृत अपने रूप का भी व्यंजक होने से "गन्धस्यैवाभिव्यंजकत्वात्" यह हेतु नहीं रहा, अतः दृष्टान्तासिद्धि ही जायेगी। उत्तर परकीयरूपाद्यव्यंजकत्व यह हेतु का अर्थ कर देना—अर्थात् परकीय रूपादि का अव्यंजक होता हुवा जो गन्ध का ही व्यंजक होता है—वह पृथिवी ही होता है सो गोघृत वैसा है।

प्रश्न—नये मिट्टी के बर्त्तन के गन्धमात्र के अभिव्यंजक जल में यह हेतु चला गया और वहाँ साध्य (पृथिवीत्व) नहीं है—अतः व्यभिचार हो गया। उत्तर—ऐसा नहीं—उसी जल में सक्तु यदि डाल दिया जाय तो वह जल सत्तू के रस का भी अभिव्यंजक हो जाता है तो उस जल में "गन्धस्यैव अभिव्यंजकत्वात्" यह हेतु न रहने से व्यभिचार नहीं हुवा। अथवा "परकीयरूपाद्यव्यंजकत्व" यहाँ परकीय पद न देना—अथ च दृष्टान्त वायूपनीत सुरभि भाग को बना देना (कोई दोष नहीं है।) प्रश्न—घ्राणेन्द्रियसन्निकर्ष भी गन्धमात्र का व्यंजक है अतः उसमें व्यभिचार हो जायेगा। उत्तर—द्रव्यत्वे सति यह विशेषण हेतु में दे देना—(सो घ्राणे-न्द्रियसन्निकर्ष द्रव्य नहीं है—अतः व्यभिचार न हुवा)। विषय इति। उपभोग के साधन को विषय कहते हैं, सभी कार्य अदृष्ट के अधीन रहते हैं, जो कार्य जिसके अदृष्ट के अधीन रहता है वह उसके उपभोग को साक्षात्—अथवा परम्परा से उत्पन्न करता ही है। क्योंकि विना किसी बीज (कारण) के तथा प्रयोजन के किसी भी कार्य की उत्पत्ति नहीं होती है। अतः द्व्यणुक से लेकर ब्रह्माण्डपर्यन्त सभी विषय हैं। शरीर तथा इन्द्रिय भी यद्यपि विषय हैं—तथापि शिष्य बुद्धि के वैशद्य के लिये प्रकारान्तर से उपन्यास किया ॥३८॥

---

मादाय लक्षणं संगमनीयं ! तत्राह मानुषत्वचैत्रत्वादीति। न चोक्तजातीनां शरीरनिष्ठत्वे मानाभावः। चैत्रो जानातीति प्रतीत्याऽऽत्मनिष्ठत्वकल्पनाया एवो-चितत्वात्। य एव चैत्रः कौमारेऽधितिष्ठत् स एव वार्द्धक्ये मथुरायामधिवसती"-त्यस्यानुपपत्तेश्च। एतेन चैत्रादिशब्दानां शरीरवाचित्वेपि अवच्छेदकतया ज्ञान-वत्त्वस्यापि तत्र संभवान्न पूर्वप्रतीतेरनुपपत्तिरित्यपास्तमिति वाच्यम्। आत्म-

निष्ठत्वे चैत्रत्वस्य जातित्वासंभवात्। "चैत्रो रूपवानिति" प्रत्ययानुपपत्तिप्रसंगाच्च शरीरवाचित्वमेव, जानातीतिप्रतीतेस्तूक्तैव गतिः। "य एव चैत्र" इत्यादौ तु तच्छरीरोपहितात्मनि निरूढलक्षणा, इत्थं च शिवत्वविष्णुत्वादिजातयोऽपि शरीरनिष्ठा एव। एवमहमादिशब्दानामपि शरीरवाचित्वमेवेति।

इत्थम् = अनेनप्रकारेण। प्रकारमाह घ्राणेन्द्रियमिति। अत्र घ्राणत्वमेव पक्षतावच्छेदकमिन्द्रियत्वप्रवेशे प्रयोजनाभावात्। पार्थिवमिति। पृथिवीजन्यमित्यर्थः। समवायेन पृथिवीत्वं साध्यमिति तु तत्त्वम्। तेन पृथिवीजन्यत्वसिद्धावपि न पृथिवीत्वासिद्धिदोषतादवस्थ्यम्। न च पृथिवीजन्यत्वेन पृथिवीत्वानुमानम्, रूपादौ व्यभिचारात्। नवशरावगन्धव्यंजकजले मनसि च व्यभिचारवारणाय "एव"कारः, तादृशजलस्य सक्तुरसाभिव्यंजकत्वान्नोक्तदोषः। गन्धत्व-तत्समवायव्यंजके घ्राणे गन्धेतराव्यंजकत्वविशिष्टगन्धव्यंजकत्वस्य गन्धस्यैवाभिव्यंजकपदाभिधेयस्य हेतोः स्वरूपासिद्ध्यापत्त्या रूपादिषु मध्ये इत्यन्तम्। रसगन्धस्पर्शाः आदिपदार्थाः। तत्सहितैवकारेण च गन्धभिन्नरूपाद्यन्यतमाव्यंजकत्वे सति गन्धव्यंजकत्वादिति हेतुः फलितः। न च घ्राणस्य रूपाद्यव्यंजकत्वमसिद्धम्, घ्राणपक्षकरूपविधेयकानुमितिकारणीभूतरूपवद्वयवारब्धज्ञानविषयीभूतस्य रूपवद्वयवारब्धस्य तादात्म्येन हेतुविधया "घ्राणस्य" रूपव्यंजकत्वादिति वाच्यम्। तादृशरूपाद्यन्यतमविषयकलौकिकसाक्षात्काराऽजनकत्वस्य विवक्षितत्वात्। न चैवमपि पक्षस्यापि कालोपाधितया तादृशोपाधिरूपकालस्य कार्यत्वेन रूपेण रूपादिविषयकलौकिकप्रत्यक्षस्य जनकत्वादसिद्ध एव हेतुः, रूपादिमद्वृत्त्यावच्छिन्नकार्यतानिरूपितकारणत्वाभावस्य विवक्षणे तु चक्षुरादावपि तादृशकारणत्वाभावेन रूपादिमद्वृत्त्यावच्छिन्नकार्यतानिरूपितकारणतारूपप्रतियोग्यप्रसिद्धेः, द्रव्यसमवेतचाक्षुषत्वस्यैव तज्जन्यतावच्छेदकत्वात्। प्रत्यक्षे सामान्यतो विषयत्वेन, तत्तद्व्यक्तिप्रत्यक्षे तत्तद्व्यक्तित्वेन वा हेतुत्वान्न रूपादावपि तादृशप्रतियोगिप्रसिद्धिसंभवः, रूपादिमद्वृत्त्यावच्छिन्नकार्यतानिरूपितकारणत्वाभाववति जन्यज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणताशालिनि गन्धाभिव्यञ्जकत्वशाल्यात्मनि व्यभिचाराच्च। न च गन्धाभिव्यंजकत्वमपि गन्धलौकिकघ्राणजत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वरूपमात्मव्यावृत्तमेव वक्तव्यमिति वाच्यम्, ईदृशगन्धाभिव्यंजकत्वस्य घ्राणमात्रवृत्तितया सत्यन्तवैयर्थ्यात्, दृष्टान्ताऽसिद्धिप्रसंगाच्चेति वाच्यम्। रूपाद्यन्यतमाऽव्यंजकत्वे सतीत्यस्य कार्यत्वातिरिक्तधर्मावच्छिन्नरूपादिमद्वृत्तिनिष्ठकार्यतानिरूपितकारणत्वाभावरूपस्य विवक्षितत्वात्। चक्षुरादेस्तु कार्यत्वातिरिक्तद्रव्यसमवेतचाक्षुषत्वावच्छिन्नरूपादिमद्वृत्तिनिष्ठकार्यतानिरूपितकारणताशालित्वात्, आत्मादेरपि कार्यत्वातिरिक्तजन्यज्ञानत्वावच्छिन्नरूपादिमद्वृत्तिनिष्ठकार्यतानिरूपितकारणताशालित्वान्नातिप्रसंगः। जलादावपि तादृशकारणत्वाभावस्य सत्त्वाद् व्यभिचारवारणाय गन्धव्यंजकत्वनिवेशः। तथाच कार्यत्वातिरिक्तधर्मावच्छिन्नगन्धभिन्न-

रूपाद्यन्यतमविषयकलौकिकसाक्षात्कारनिष्ठकार्यतानिरूपितकारणतानवच्छेदकत्वे सति कार्यत्वातिरिक्तधर्मावच्छिन्नगन्धग्रहवृत्तिकार्यतानिरूपितकारणतावच्छेदको यो धर्मस्तद्वत्त्वादिति हेतुः फलितः। तेन यादृशजलेन सक्तुरसो नाभिव्यंजितस्तत्रापि न व्यभिचार इति संक्षेपः।

घृतेपि कुंकुमगन्धाभिव्यंजकत्ववत् स्वीयरूपादिव्यंजकत्वस्य सत्त्वादसिद्धो दृष्टान्त इति शंकते **नचेति** । **तस्य**=नवशरावगन्धाभिव्यंजकजलस्य। लाघवादाह **यद्वेति** । उपनीताः समानीताः ये सुरभिभागा इत्यर्थः। सुरभित्वोक्तिस्तु सौरभादेर्भानं नाश्रयं विनेति तत्कल्पना साधीयसीति प्रदर्शनाय। **घ्राणेन्द्रियसन्निकर्षस्य**=घ्राणसंयुक्तसमवायस्य । **तत्र**=घ्राणेन्द्रियसन्निकर्षे, घ्राणसंयुक्तसमवाये इति यावत्। परे तु उक्तानुमानस्याऽप्रयोजकत्वान्न पृथिवीत्वसाधकत्वम्। नापि जलत्ववत्त्वम्, सांसिद्धिकद्रवत्ववत्त्वाभावात्। नापि तेजः, उष्णस्पर्शाभावात्। नापि वायुः, सदातनगतिमत्त्वाभावात्। नाप्याकाशादिचतुष्टयं, विभुत्वाभावात्। नापि मनः, अनित्यत्वात्। गुणाश्रयत्वाच्च न गुणादिष्वपि। न च गुणाश्रयत्वमेवाऽसिद्धम्। तस्यासिद्धत्वे संयोगाभावेन संयुक्तसमवायलक्षणसन्निकर्षाऽसंभवाद्गन्धप्रत्यक्षानुपपत्तिप्रसंगात्, अतश्चाऽनायत्या पृथिव्यामेवान्तर्भाव इति प्राहुः। अनुमानाऽप्रयोजकत्वस्यावेदितत्वेन क्लृप्तपदार्थानन्तर्भावे चाऽतिरिक्तपदार्थकल्पनाया एवोचितत्वात्। अतिरिक्तपदार्थकल्पनैव गरीयसीति चेद्, भ्रान्तोसि-नहि अतिरिक्तपदार्थकल्पनायां गौरवसंभावनाऽव्यवतिष्ठते, प्रत्युत द्रव्यत्वजलत्वादिसंबन्धाकल्पनेन लाघवम्, नित्यत्वोक्तिस्तु असंप्रतिपन्ना। न च तस्य नित्यत्वे व्यपेतघ्राणस्यापि गन्धोपलंभापत्तिः। श्रोत्रशब्दस्याऽदृष्टविशेषोपगृहीतकर्णशष्कुल्यवच्छिन्ननभोवाचित्वमिव घ्राणशब्दस्यापि अदृष्टविशेषोपगृहीततादृशपदार्थवाचित्वाभ्युपगमेनोक्तस्थलेऽदृष्टविशेषाभावनिबन्धनगन्धानुपलंभसंभवादिति तु विभावनीयम्। विषयत्वं न जातिः सामान्यादौ सत्त्वादित्यतस्तल्लक्षणमाह **उपभोगसाधनमिति** ।

सुखदुःखान्यतरसाक्षात्कार उपभोगः। तत्साधनं च साक्षात् परम्परया च, तेन द्व्यणुकादेर्नासंग्रहः। यद्यपि परम्परयोपभोगसाधनत्वं परमाणावपि तथाप्यनित्यपृथिव्या एव विभागात्कार्यरूपपृथिवी एव विषयत्वेन दर्शिता। **कार्यजातं**=कार्यसमूहः। जातपदं संपातादायातम्, सर्वमित्यनेनैवाऽशेषत्वलाभादिति भावः। **अदृष्टाधीनं**=अदृष्टजन्यं, तथाच कार्यं प्रति स्वसमवायिसंयुक्तसंयोगेनाऽदृष्टं कारणम्, तेन विभुद्वयसंयोगानङ्गीकारेपि आत्मसंयुक्तपवनसंयोगसंबन्धस्य गगनेपि सत्त्वेन शब्देऽदृष्टजन्यत्वोपपत्तिः। **यददृष्टाधीनं**=यत्पुरुषीयादृष्टाधीनम्। **तत्**=कार्यं। **तदुपभोगं**=तत्पुरुषस्य सुखदुःखान्यतरसाक्षात्कारम्। **बीजप्रयोजनाभ्यां**=कारणफलाभ्याम्। **उत्पत्तिरिति** । उत्पत्तिश्च स्वाधिकरणसमयध्वंसानधिकरणसमयसंबन्धरूपा। स्वपदमुत्पत्त्याश्रयत्वेनाभिमतघटादिपरम्। घटाद्युत्पत्तिलक्षणस्यापि

वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।
स्नेहस्तत्र, द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥३९॥

जलं निरूपयति—वर्णः शुक्ल इति । स्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिः सिद्ध्यति । यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्यतावच्छेदकं, तथापि जन्यस्नेहत्वं तथा बोध्यम् । अथ परमाणौ जलत्वं न स्यात्तत्र जन्यस्नेहाभावात्, तस्य च नित्यस्य स्वरूपयो-

जल का निरूपण करते हैं—जल में अभास्वर शुक्लरूप है—मधुर-रस है—तथा शीतस्पर्श है—और स्नेह तथा सांसिद्धिकद्रवत्व भी जल में रहता है । स्नेह का समवायिकारण हुआ जल-समवायिकारणतावच्छेदकतया जलत्वजाति की सिद्धि हुई । यद्यपि स्नेहत्व नित्यस्नेह-तथा अनित्यस्नेह में रहने के नाते कार्यतावच्छेदक नहीं हो सकता है—तथापि जन्यस्नेहत्व को कार्यतावच्छेदक बना देना । प्रश्न—जन्यस्नेहत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतया-सिद्ध जो जलत्वजाति वह परमाणु में न रहेगी—क्योंकि परमाणु में जन्यस्नेह नहीं है । यदि स्वरूपयोग्यत्वरूपा कारणता माने तो वह भी नहीं मान सकते—क्योंकि नित्य में योग्यत्वरूपा

---

विषयितासंबन्धेन घटाद्यधिकरणीभूतं यत्पूर्वोत्पन्नज्ञानादिकं तद्ध्वंसाधिकरणत्वादुत्पत्तिमात्रेऽसंभवः स्यादतः कालिकसंबन्धेन स्वाधिकरणत्वलाभार्थमाद्यं समयपदम् । एवं भाविघटगोचरज्ञानस्य स्वाधिकरणसमयध्वंसानधिकरणस्य विषयतासंबन्धेऽतिप्रसंगवारणाय द्वितीयं (समय) पदम्-कालिकसंबन्धलाभाय, तथाच स्वाधिकरणसमयध्वंसाधिकरणत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवदनुयोगिकत्व-स्वप्रतियोगिकत्वोभयसंबन्धेन स्वविशिष्टकालिकत्वं स्वोत्पत्तित्वम् । एतच्च महाप्रलयाङ्गीकारमते चरमपदार्थध्वंसोत्पत्तावव्याप्तम्, तत्र तादृशध्वंसाधिकरणं महाकालः ध्वंसात्मकखण्डकालो वा, उभयोरपि ध्वंसाऽप्रसिद्धेः । अतो यदीययत्समयसंबन्धसामान्ये यत्समयवृत्तिध्वंसप्रतियोगित्वाभावः तस्य तत्समयसंबन्धः सा इति । यो यत्कालवृत्तिध्वंसप्रतियोगिवृत्तिस्तस्य तद्वृत्तित्वमुत्पत्तिरित्यपरे । विस्तरस्तु ग्रन्थान्तरादवसेयः । तेन=द्व्यणुकादीनामुपभोगसाधनत्वेन । विषयत्वेपि=उपभोगसाधनत्वेपि । प्रकारान्तरेण = शरीरेन्द्रियत्वादिना । वैशद्यायेति । शरीरत्वेन्द्रियत्वेन ज्ञानसंपत्तये इत्यर्थः । तथाच शरीरेन्द्रियभिन्नत्वे सति उपभोगसाधनत्वं विषयस्य लक्षणम् ॥३८॥

लक्षणं वक्तुं लक्ष्यतावच्छेदकजलत्वजातौ मानमाह स्नेहसमवायिकारणतावच्छेदकतयेति । समवायसंबन्धावच्छिन्नस्नेहत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतयेत्यर्थः । तथा च समवायसंबन्धावच्छिन्नस्नेहत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात् इत्यनुमानेन जलत्वजातिः सिद्धयतीति भावः । जलत्वं जातिः नित्यत्वे सति

ण्यत्वे फलावश्यंभावनियमादिति चेत् । न, जन्यस्नेहजनकतावच्छेदकतया जन्यजलत्वजातेः सिद्धौ, तद्वच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धेः । शुक्लरूपमेव जलस्येति दर्शयितुमुक्तं-वर्णः शुक्ल इति, न तु शुक्लरूपवत्त्वं लक्षणम् । अथवा नैमित्तिकद्रवत्ववदवृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्या-

कारणता यदि मानें तो कभी फल अवश्य ही होना चाहिये। उत्तर—सो ठीक नहीं—जन्यस्नेहत्वावच्छिन्नजन्यतानिरूपित जनकतावच्छेदकतया जन्यजलत्वजाति की सिद्धि करके—फिर जन्यजलत्वावच्छिन्न जन्यतानिरूपितजनकतावच्छेदकतया जलत्वजाति की सिद्धि कर लेना—वह जलत्वजाति परमाणुजल में भी है।

जल में शुक्लरूप भी रहता है यह दिखलाने के लिये "वर्णः शुक्लः" कहा अर्थात् जल का वर्ण (रूप) शुक्ल होता है यही तात्पर्य है शुक्लरूपवत्त्वलक्षण नहीं। यदि वह लक्षण ही मानना अभीष्ट हो तो "नैमित्तिक द्रवत्व के अधिकरण में न रहने वाली-और रूप के अधिकरण में रहने वाली जो द्रव्यत्व साक्षात् व्याप्यजाति तादृशजातिमत्त्व यह शुक्लरूपवत्त्व का अर्थ कर देना -(इससे पृथिवी-तथा तेज में अतिव्याप्ति नहीं हुवी—क्योंकि पृथिवीत्व तथा तेजस्त्व जाति नैमित्तिक द्रवत्ववान् जो घृतरूपा पृथिवी तथा सुवर्णादिरूप तेज उसमें वृत्ति ही है) अथवा अभास्वरशुक्ल से इतर जो रूप उसके अधिकरण में न रहनेवाली तथा रूप के अधिकरण में रहनेवाली जो द्रव्यत्व साक्षात् व्याप्यजाति तादृशजातिमत्त्व यही शुक्लरूपवत्त्व का अर्थ कर देना—इससे स्फटिक में अतिव्याप्ति नहीं है।

---

अनेकसमवेतत्वात् व्यक्त्यभेदादिरूपबाधकविरहाच्चेति जलत्वे जातित्वमपि सिद्ध्यति। स्नेहत्वस्य कार्यतावच्छेदकत्वं न संभवतीत्याशंकते यद्यपीति । नित्यानित्यवृत्तितया=परमाणुस्नेहे द्व्यणुकादिस्नेहे च वृत्तितया । न कार्यतावच्छेदकमिति । कार्यतातिरिक्तवृत्तित्वादिति भावः । कारणं बिना कार्यतावच्छेदकावच्छिन्नसत्त्वरूपव्यभिचारस्तथासति स्यादिति ध्येयम् । कारणस्य कार्यतावच्छेदकावच्छिन्नोत्पत्तेरेव व्यभिचारित्वान्नित्यवृत्तेस्तत्त्वेऽपि न क्षतिः, तथाच जलत्वजातिरेकैवेति नव्याः। ननु नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वे बाधकाभाव इति चेन्न। कारणत्वं यदि अनन्यथासिद्धत्वे सति कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वं तदा एकघटलक्षणकार्याव्यवहितपूर्वक्षणावच्छेदेनापरघटलक्षणकार्याधिकरणे दण्डाभावस्य सत्त्वेन दण्डत्वादेः प्रतियोगितावच्छेदकत्वाद्दण्डघटयोः कार्यकारणभावानुपपत्तिप्रसंगः। अतः कार्यतावच्छेदकावच्छिन्नयावद्व्यक्तीस्तत्तद्व्यक्तित्वेन प्रवेश्य तत्तद्व्यक्त्यव्यवहितपूर्वक्षणावच्छेदेन तत्तद्व्यक्त्यधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपमेव कारणत्वं निर्वाच्यम्, इत्थं च नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वे नित्यव्यक्तेरपि कार्यतावच्छेदकावच्छि-

प्यजातिमत्त्वं वा तदर्थः। तेन स्फटिकादौ नातिव्याप्तिः। रसस्पर्शाविति। जलस्य मधुर एव रसः, शीत एव स्पर्शः। तिक्तरसवदवृत्तिमधुरवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः। तेन शर्करादौ नातिव्याप्तिः। शीतेतरस्पर्शवदवृत्तिस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः। ननु शुक्लरूपवत्त्वमेवेति कुतः, कालिन्दीजलादौ नीलिमोपलब्धेरिति चेत्, न, नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावाज्जले नीलरूपासंभवात्। कालिन्दीजले नीलत्वप्रतीतिस्त्वाश्रयौपाधिकी। अत एव वियति विक्षेपे धवलिमोपलब्धिः। अथ जले माधुर्ये किं मानम्, नहि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते। न च नारिके-

जल रस मधुर ही होता है—और स्पर्श शीतल ही होता है। प्रश्न—मधुररसवत्व इसकी शर्करा मे अतिव्याप्ति है। उत्तर—मधुररसवत्व का "तिक्तरसवत् में अवृत्ति मधुररसवत् मे वृत्ति जो द्रव्यत्वसाक्षात् व्याप्यजाति तादृशजातिमत्व' यह अर्थ कर देना। एवं शीतलस्पर्शवत्व का भी "शीतेतरस्पर्शवत् मे अवृत्ति स्पर्शवत् मे वृत्ति जो द्रव्यत्व साक्षात् व्याप्यजाति तादृशजातिमत्व" यह अर्थ कर देना। प्रश्न—जल मे शुक्ल ही रूप क्यों है—यमुना नदी आदि के जल में नीलिमा की प्रतीति होती है। उत्तर—ऐसा नहीं—नीलरूप का समवायिकारणतावच्छेदक जो पृथिवीत्वजाति वह जल मे नहीं है—अतः नीलरूप भी जल में नहीं है। और यमुना के जल में नीलिमा की जो प्रतीति होती है वह आश्रयोपाधिक है—(अर्थात् उस जल का आश्रय जो पृथिवी बहनीली है अतः उस पृथिवी की नीलिमा ही उस जल में भास रही है)। इसीलिये यमुना के जल को आकाश मे (ऊपर को) उछालने से उस जल की धवलिमा की उपलब्धि (प्रत्यक्ष) स्पष्टरूप से हो जाती है। प्रश्न—जल के माधुर्य में क्या प्रमाण है। क्योंकि प्रत्यक्षप्रमाण से जल में किसी भी रस का अनुभव नहीं होता है। यदि कहें कि नारियल आदि के जल मे माधुर्य मालूम पड़ता है तो वह आश्रयोपाधिक है (अर्थात् आश्रय के कारण उसमें मधुरता प्रतीत होती है) अन्यथा नींबू आदि के

---

न्नान्तःपातितया तदव्यवहितपूर्वकालाप्रसिद्धया कारणत्वानुपपत्तिलक्षणबाधकसंभवादिति। परे तु कार्यतावच्छेदककारणतावच्छेदकभेदेन कार्यकारणभावभेदाद्यत्र नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वं, तत्र यासामव्यवहितपूर्वकालः प्रसिद्धः तासामेव व्यक्तीनां प्रवेशनीयतया नानुपपत्तिलेशोपीत्याहुः। एतच्च व्यामोहमात्रम्, तथाहि—स्वेच्छया व्यक्तिनिवेशे धूमपरामर्शस्य कार्यतावच्छेदककोटौ कृतं धूमलिङ्गकत्वप्रवेशनायासेन। तत्रापि यादृशव्यक्तीरादाय धूमपरामर्शेऽनवच्छेदकधर्मवत्त्वं संभाव्यते तासामेव व्यक्तीनां प्रवेशो वाच्य इत्यलं वाग्जालेन। जन्यस्नेहत्वं = जन्यस्नेहवृत्तिजातिविशेषः। तथाच तदवच्छिन्नाऽसमवायिकारणतावच्छेदकतया स्नेहत्वजातिरिति भावः। अत्र च कालिकसमवाययोः कार्यतावच्छेदकतावच्छेदकसंबन्धत्वमङ्गीकृत्य स्नेहत्वस्यैव कार्यतावच्छेदकत्वमङ्गीकरणीयम्। एतेन जन्यत्वस्य

ध्वंसप्रतियोगित्वरूपत्वे प्रागभावप्रतियोगित्वेन त्रिनिगमनाविरहः, तदनभ्युपगमे तु कालिकेन घटादिमत्त्वमादायापीति कार्यकारणभावानन्त्यकल्पनमापद्यत इति प्रतारणमपास्तम्। **तथा** = कार्यतावच्छेदकम्। जन्यस्नेहजनकतावच्छेदकतया सिद्धायाः जलत्वजातेः परमाण्वादिवृत्तित्वे साधकाभावं मन्वान आशङ्कते **अथेति**।

**परमाणौ** = जलपरमाणौ। **तत्र** = जलपरमाणौ। **जन्यस्नेहाभावात्** = जन्यस्नेह-समवायिकारणत्वाभावात्। परमाणौ तत्स्वरूपयोग्यतया जलत्वमस्तु अत आह **तस्य चेति**। जलपरमाणोश्चेत्यर्थः। ननु जन्यस्नेहसमवायिकारणतावच्छेदकतया सिद्धाया अपि जलत्वजातेः परमाणुवृत्तितायां बाधकाभावेनाऽदोषात्तत्राह **नित्यस्येति**। इदं च कदाचिदपि सामग्रीसमवधानं भविष्यत्येवेति लाभाय। **स्वरूपयोग्यत्वे** = कारणतावच्छेदकधर्मवत्त्वे। इदमत्र तत्त्वम्—बाधकाभावेपि साधकाभावेन तत्र तादृशजातेर्वृत्तित्वे मानाभाव इत्येव वाच्यम्, न तु तत्स्वीकारे बाधकमस्ति-अनुकूलतर्काभावेन नियमस्याप्रयोजकतया बाधकत्वाऽसंभवात्। न च नियमाप्रयोजकत्वेपि आपादकस्य हेतोः सत्त्वे कार्योत्पादवारणं दुर्वारम् जन्यस्नेहत्वावच्छिन्नं प्रति स्वाश्रयसमवेतत्वसंबन्धेनाऽवयवस्नेहत्वेन हेतुत्वा-त्तत्रापादनाऽसंभवात्, नहि एककारणसत्त्वदशायामपरकारणविरहदशा-यामापत्तिरस्तीति कृतं तदभ्युपगमेन। **जन्यजलत्वजातेः** = जन्यजलमात्रवृत्ति-जातेः। **तदवच्छिन्नेति**। जन्यजलत्वावच्छिन्नेत्यर्थः। नन्वेवमपि जन्यस्नेह-समवायिकारणतावच्छेदकतया सिद्धाया जन्यजलत्वजातेर्यथा न परमाणुवृत्तित्वं तथा जन्यजलत्वावच्छिन्नसमवायिकारणतावच्छेदकतया सिद्धाया अपि जलत्व-जातेर्नान्त्यावयविजलवृत्तित्वं साधकाभावात्, तथाच नित्यानित्यसाधारणजलत्वजातौ मानाभाव इति चेन्न। जन्यजलत्वावच्छिन्नजनकतावच्छेदकतया सिद्धजलत्व-स्यान्त्यावयविजलवृत्तित्वानभ्युपगमे स्नेहजनकतावच्छेदकतया सिद्धजात्या सांकर्य-वारणाय तत्रापि तद्वृत्तित्वमुपगन्तव्यमिति सिद्धं सर्वजलसाधारणं जलत्वमिति। वस्तुतो जलत्वस्याऽन्त्यावयवित्वं नाभ्युपगम्यते जलमात्रे जलान्तरसंयोगेन बृहज्जल-जननादिति ध्येयम्। "वर्णः शुक्लः" इत्यस्य लक्षणत्वाऽसंभवेन वैयर्थ्यमाशंक्याह **शुक्लरूपमेवेति**। शुक्लं इति सावधारणम्। जले शुक्लरूपं नान्यरूपमिति बोधः। इत्थं च जलत्वे शुक्लेतररूपासामानाधिकरण्यं शुक्लरूपसामानाधिकरण्यं च लब्धं, तत्रैवाऽप्यशुक्लेऽभास्वरत्वविशेषणं प्रक्षिप्याऽन्त्यशुक्लरूपे शुक्लत्वं विहाय चान्त्य-लक्षणमिति सूचयितुमुक्तमुक्तमिति।

**नन्विति**। स्फटिकादिरूपवृत्तौ तेजसि चातिव्याप्तेः। **अथवेति**। अवृत्त्यन्तं वृत्त्यन्तं व्याप्यान्तं च जातिविशेषणम्। पृथिवीत्वतेजस्त्ववारणायाऽ-वृत्त्यन्तम्। जलत्वसंग्रहाय **नैमित्तिकेति**। वायुत्वादिवारणाय वृत्त्यन्तम्। घटत्वादिवारणाय द्रव्यत्वसाक्षाद्व्याप्येति। तद्दोषतादवस्थ्यवारणाय **साक्षादिति**। द्रव्यत्वसाक्षाद्व्याप्यत्वं च द्रव्यत्वव्याप्यत्वे सति द्रव्यत्वव्याप्याव्याप्यत्वम्।

व्याप्यत्वं च सर्वत्र न्यूनवृत्तित्वरूपम्। एवमत्र सत्यन्तनिवेशो प्रयोजनाभावः, रूपत्वादीनां रूपवद्वृत्तित्वनिवेशेनैव वारणादिति ध्येयम्। जलवायुगतद्वित्ववारणाय जातीति। मूर्तत्वजातेरनभ्युपगमाच्च। जातिमत्ता च समवायेन, तेनान्यसंबन्धमादाय नातिप्रसंगः। तादृशजातिश्च जलत्वमेवेति लक्षणसमन्वयः। मूलाक्षरानुसारेण लक्षणमाह **अभास्वरेति**। अभास्वरशुक्लेतररूपाणि भास्वरशुक्लनीलपीतादीनि, तदसमानाधिकरणा इत्यर्थः। असमानाधिकरणान्तं वृत्त्यन्तं व्याप्यान्तं च जातिविशेषणम्। पृथिवीत्वतेजस्त्ववारणायाऽसमानाधिकरणान्तम्। असंभववारणाय रूपेति। अभास्वरशुक्लेतरेत्यपि असंभववारणाय। तेजस्त्ववारणायाऽभास्वरेति शुक्लविशेषणम्। शुक्लपदं स्पष्टार्थम्। वायुत्वादिवारणाय वृत्त्यन्तम्। शंखत्वस्फाटिकत्ववारणाय द्रव्यत्वसाक्षाद्व्याप्येति। तद्दोषवारणायैव साक्षादिति। अभास्वरशुक्लेतररूपानधिकरणवृत्तित्वेऽपि सत्ताद्रव्यत्वयोरादायाऽतिप्रसंगभंगाय द्रव्यत्वसाक्षाद्व्याप्यत्वोपादानम्। साक्षात्पदं तूक्तदोषवारणायैवेति तु न सम्यक्। तदधिकरणावृत्तित्ववाचिनोऽसमानाधिकरणपदस्योक्ताऽनधिकरणवृत्तित्वावाचकत्वात्। भेदघटितसाक्षाद्व्याप्यत्वनिवेशे गौरवाच्चेति ध्येयम्। **तदर्थः**=वर्णः शुक्लो जले इत्यस्यार्थः। **तेन** = लक्षणद्वयकरणेन। **मधुर एवेति**। अत्र विशेषणसंगतैवकारस्य अयोगव्यवच्छेदोऽर्थः। जलीयरसत्वावच्छिन्ने मधुरत्वजात्ययोगव्यवच्छेदप्रत्यायकत्वं प्रकृते, व्यवच्छेदोऽभावः, इत्थं च रसे मधुरत्वजात्ययोगव्यवच्छेदे बोध्यमाने फलतो मधुरत्वयोगबोधे तात्पर्यं पर्यवसितम्। अतश्च मधुरत्वयोगशालिरसवत्त्वं लक्षणम्, न तु रसे जलीयत्वमपि आत्माश्रयापत्तेः। तच्च शर्करादावतिव्याप्तमत आह **तिक्तरसवद्वृत्तीति**। अत्र तिक्तमधुरपदे लाघवेन तत्तज्जात्यवच्छिन्नवाचकेऽपि निरूढलक्षणया तद्वत्परे। अत्राऽवृत्त्यन्तं वृत्त्यन्तं व्याप्यान्तं च जातिविशेषणम्। पृथिवीत्ववारणायाऽऽद्यं विशेषणम्। तिक्तपदं मधुरान्यरसमात्रोपलक्षकम्। तेजस्त्वादिवारणाय **मधुरवद्वृत्तीति**। अत्र मधुरत्वजात्यैव मधुररसनिवेशः, मधुररसत्वेन तु मधुरत्वरसत्वयोरन्यतरवैयर्थ्यात्। रसवद्वृत्तित्वेन संभवति तेजस्त्वादिवारणे मधुरपदं रसान्तराभावप्रतिपत्त्यौपयिकमिति मान्याः। शर्करात्वादिव्युदासाय **साक्षाद्व्याप्येति**। जलशर्करोभयत्वव्युदासाय जातीति। **शीतेतरेति**। पाठोयं क्वाचित्कः। शीतस्पर्शवत्त्वमात्रस्य लक्षणत्वे दोषाभावात्। **कालिन्दी**=यमुना। नीलोपलब्धेरित्युक्तौ नीलरूपवद्भ्रमो माभूदित्यत आह **नीलिमोपलब्धेरिति**। नीलजनकतावच्छेदिकाया इति। कार्यकारणभावस्तु गन्धकार्यकारणभाववदूहनीयः। ननु तत्रापि नीलिमोपलब्ध्या विजातीयनीलत्वेन पृथिवीत्वेन, विजातीयनीलत्वेन विजातीयजलत्वेन कार्यकारणभावकल्पनान्न दोष इत्यत आह **कालिन्दीजले इति**। **नीलत्वप्रतीतिस्त्विति**। तथाच स्वाश्रयसंयुक्तत्वसंबन्धेन प्रमा, समवायेन तु भ्रमरूपेति भावः।

लजलादौ माधुर्यमुपलभ्यत एवेति वाच्यं, तस्याश्रयौपाधिकत्वात् । अन्यथा जम्बीररसादावम्लाद्युपलब्धेरम्लादिमत्त्वमपि स्यादिति चेत् ? न, हरीतक्यादिभक्षणस्य जलरसव्यञ्जकत्वात् । न च हरीतक्यामेव जलोष्मसंयोगाद् रसान्तरोत्पत्तिरिति वाच्यं, कल्पनागौरवात् । पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्वाच्च जले नाम्लादिकम् । जम्बीररसादौ त्वाश्रयौपाधिकी तथा प्रतीतिः । एवं जन्यशीतस्पर्शजनकतावच्छेदकं जन्यजलत्वंतदवच्छिन्नजन-

रस में खट्टापन मालूम होता है अतः जल में खट्टा रस है यह भी कहा जा सकता है। उत्तर—हरीतकी ( हर्रे ) भक्षण जल के मधुर रस का व्यञ्जक है—प्रश्न—हर्रे में ही जल तथा गर्मी के संयोग से दूसरा रस उत्पन्न हो जाता है। उत्तर—यह तो कल्पनागौरवमात्र है। दूसरी बात यह है कि आम्ल आदि रस का जनकतावच्छेदक जो पृथिवीत्व वह जल में नहीं है अतः जल में आम्ल आदि रस भी नहीं है। और जम्वीर रस आदि में तो आश्रय के कारण वैसी प्रतीति होती है। इसी प्रकार जन्यशीतस्पर्शजनकतावच्छेदकतया जन्यजलत्व

---

भ्रमत्वप्रयोजकबाधमाह **अत एवेति**। आश्रयसंबन्धाभावादेवेत्यर्थः। न च धवलिमधिय एव भ्रमत्वं, विनिगमकाभावादिति वाच्यम्। आश्रयान्वयव्यतिरेकस्यैव विनिगमकत्वात्। कालिन्दीजलादौ नीलरूपसत्त्वे पुनरवश्यं तत्प्रत्यक्षं वियति विक्षेपेपि जलस्य भवेदिति। **प्रत्यक्षेण** = इन्द्रियेण, **तत्र**=जले। **तस्य**= नारिकेलजलादौ मधुररसस्य। **अन्यथा** = आश्रयानुपाधित्वे। **स्यादिति**। युक्तस्तौल्यादितिशेषः। **हरीतक्यादीति**। आदिनाऽऽमलकीपरिग्रहः। **व्यंजकत्वादिति**। तथाच हरीतकीभक्षणोत्तरं प्रत्यक्षेण माधुर्योपलंभादिति भावः। **कल्पनागौरवादिति**। हरीतक्यां रसोत्पत्तिपूर्वरसनाशौ तत्रापि च कार्यकारणभावकल्पनेति गौरवम्। मम तु सिद्धरसव्यंजकत्वकल्पनैव हरीतक्यामिति लाघवमिति भावः। नन्वस्तु जले मधुरो रसः तथापि जंबीरजलादौ प्रत्यक्षसिद्धस्याम्लरसस्यापि स्वीकारे बाधकाभाव इत्यत आह **पृथिवीत्वस्येति**। अम्लजनकतावच्छेदकीभूतपृथिवीत्वस्य जलेऽभावान्नाम्लवत्त्वं जलस्येति भावः। नचैवं शर्करादौ मधुरजनकतावच्छेदकत्वेनापि पृथिवीत्वस्य क्लृप्ततया तदभावाज्जले मधुररसस्याऽभावप्रसंगादिति वाच्यम्। हरीतक्यादिभक्षणोत्तरं जलेपि मधुररसोपलब्धेस्तत्र मधुररसस्वीकारस्यावश्यकत्वाज्जलत्वेनापि मधुररसं प्रति हेतुत्वकल्पनात्। ननु जंबीरजलादावम्लप्रत्यक्षाज्जलत्वेनाऽम्लादिरसे पि हेतुत्वं स्यादत आह **जंबीररसादाविति**। जंबीरादाविति। शंखादिरूपपृथिव्यास्तेजसश्च संग्रहः। स्वसमवायिसंयोगेन जंबीरगताम्लरसप्रतीतिस्तद्गतजले इत्यर्थः। शुष्केपि जंबीरेऽम्लप्रतीतेस्तत्राम्लरसस्यावश्यकत्वे तस्यैव तद्गतजले परंपरया प्रतीतिः

कतावच्छेदकं तु जलत्वं बोध्यम् । घृष्टचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तर्वर्तिशीततरसलिलस्यैव । तेजःसंयोगाज्जले उष्णप्रतीतिरौपाधिकी स्फुटैव, तत्र पाकासंभवात् । स्नेहस्तत्रेति । घृतादावपि तदन्तर्वर्तिजलस्यैव स्नेहः, जलस्य स्नेहसमवायिकारणत्वात् । तेन जल एव स्नेह इति मन्तव्यम् । द्रवत्वमिति । सांसिद्धिकद्रवत्वत्वं जातिविशेषः प्रत्यक्षसिद्धः, तदवच्छिन्नजनकतावच्छेदकमपि तदेवेति भावः । तैलादावपि जलस्य द्रवत्वं, स्नेहप्रकर्षेण च दहनानुकूल्यमिति वक्ष्यति ॥३९॥

जाति की सिद्धि—और जन्यजलत्वावच्छिन्नजनकतावच्छेदकतया जलत्वजाति की सिद्धि जानना चाहिये। घिसे हुवे चन्दन आदि में जो शैत्य का प्रत्यक्ष होता है वह उस चन्दन के अन्दर रहनेवाले अत्यन्तशीत जल के कारण ही होता है। जल में उष्णत्व की प्रतीति जो होती है वह तेजः संयोग से होती है। अतः वह उष्णत्व प्रतीति तेजः संयोगरूप उपाधिकृत है। जल में पाक नहीं होता है। घृत आदि पृथिवी में भी उसके अन्तःप्रविष्ट जल का ही स्नेह है—क्योंकि स्नेह का समवायिकारण जल है—अतः जल में ही स्नेह है ऐसा मानना चाहिये। सांसिद्धिकद्रवत्वत्व जातिविशेष है अथ च वह प्रत्यक्षप्रमाण सिद्ध है। और सांसिद्धिकद्रवत्वत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदक भी जलत्व ही है। तैल इत्यादि में भी जल का ही द्रवत्व है—स्नेह की अधिकता के कारण तेल में जलने की अनुकूलता हो जाती है ( अर्थात् तेल में स्नेहाधिक्य होने के कारण जलने-जलाने—दोनों की शक्ति है ) यह आगाड़ी कहेंगे ॥ ३९ ॥

---

हरीतक्यान्तु मधुररसाभावान्न हरीतकीगतमाधुर्यस्य जले प्रतीतिरिति भावः। जलत्वजातावनुमानान्तरं प्रमाणमाह **एवमिति**। जन्यजलत्वेन हेतुतायां व्यभिचारमाशङ्क्य निराचष्टे **घृष्टे इति**। जलान्वयव्यतिरेकौ दर्शयितुं घृष्ट इत्यभिहितम्। तत्र = जले। **पाकासंभवादिति**। ननु असम्भवः कुतः! विजातीयतेजःसंयोगरूपस्य पाकस्य पृथिव्यामिवात्रापि उष्णस्पर्शरूपकार्येण कल्पनायां बाधकाभावादिति चेत्, सत्यम्, गुणनिरूपणे वक्ष्यामः। **तदन्तर्वर्तिजलस्यैव स्नेह इति**। स्वाश्रयसंयोगेन प्रतीयते इति शेषः। तेन = घृतादौ समवायेन स्नेहनिरासेन। **तदवच्छिन्नेति**। सांसिद्धिकद्रवत्वत्वावच्छिन्नेत्यर्थः। तदेव = जन्यजलत्वमेव। तदवच्छिन्नजनकतावच्छेदकं जलत्वमिति भावः। **तैलादाविति**। आदिना क्षीरपरिग्रहः, न तु घृतस्य तत्र समवायेन नैमित्तिकद्रवत्वस्य सत्त्वात्। **द्रवत्वमिति**। स्वाश्रयसंयोगेन प्रतीयते इति शेषः। वक्ष्यति = स्नेहनिरूपणावसरे इति शेषः ॥ ३९ ॥

नित्यतादि प्रथमवत्किन्तु देहमयोनिजम्।
इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥४०॥

प्रथमवदिति। पृथिव्या इवेत्यर्थः। तथा हि, जलं द्विविधं-नित्यमनित्यं च, नित्यं परमाणुरूपं, द्व्यणुकादिकं सर्वमनित्यमवयवसमवेतं च। अनित्यमपि त्रिविधं शरीरेन्द्रियविषयभेदात्। पृथिवीतो यो विशेषस्तमाह-किन्त्विति। देहमयोनिजम्, अयोनिजमेवेत्यर्थः। जलीयं शरीरं वरुणलोके प्रसिद्धम्। इन्द्रियमिति। जलीयमित्यर्थः। तथाहि रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवत्। रसनेन्द्रियसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम्। विषयं दर्शयति-सिन्धुहिमादिरिति। सिन्धुः समुद्रः। हिमं तुषारः। आदिपदात्सरित्कासारकरकादिः सर्वोऽपि ग्राह्यः।

जल की नित्यता और अनित्यता पृथिवी की तरह है। तथाहि—जल—दो प्रकार का है—नित्य—और अनित्य। परमाणुरूप जल नित्य है और द्व्यणुकादिरूप सब जल अनित्य है—अवयव समवेत है। अनित्य जल तीन प्रकार का है—शरीर-इन्द्रिय-विषय भेद से। पृथिवी से जल में जो विशेषता है उसे कहते हैं "किन्तु देहमयोनिजम्" अर्थात् जलीयशरीर अयोनिज ही है। जलीय शरीर वरुणलोक में प्रसिद्ध है। जलीय इन्द्रिय रसन है। तथाहि—रसनेन्द्रिय-जलीय है—गन्धादि का अव्यञ्जक होते हुवे रस का व्यञ्जक होने से—सत्तू के रस का अभिव्यञ्जक जल जैसे होता है। रसनेन्द्रिय का रस के साथ जो सन्निकर्ष—उसमें व्यभिचार वारण के लिये हेतु कोटि में "द्रव्यत्व" विशेषण भी दे देना। (क्योंकि सन्निकर्ष में रस व्यंजकत्व हेतु है—किन्तु जलीयत्व साध्य नहीं है- अतः साध्याभाववद्वृत्तित्वरूपव्यभिचार है। द्रव्यत्वविशेषण देने पर उक्तसन्निकर्ष में द्रव्यत्व नहीं है अतः हेतु भी नहीं रहा—साध्य भी नहीं रहा व्यभिचार नहीं हुवा) विषयरूप जल को दिखाते हैं "सिन्धुः" इत्यादि। हिम

---

पृथिव्या इत्यस्य पंचमीषष्ठीविभक्तिसाम्येन षष्ठीभ्रमो मा भूदित्यतस्तसिल्प्रत्ययान्तप्रातिपदिकमाह **पृथिवीत इति**। योनिजायोनिजत्वेपि अयोनिजत्वानपायादाह **अयोनिजमेवेति**। एवकारः सावधारणे। ननु अवच्छेदकतया सुखदुःखान्यतरसाक्षात्कारवत्त्वरूपशरीरत्वस्य प्रत्यक्षसिद्धजलादावदर्शनात्कथं तदित्यत आह **वरुणलोके इति**। यद्यपि वरुणादेः शरीरत्वे मानाभावस्तथापि वरुणलोके प्रसिद्धजलस्य शरीरत्वबोधकश्रुतिस्मृतिभीतिसंत्रस्तरसनयाऽन्यथा वक्तुं नालमिति ध्येयम्। जलीयशरीरं च पार्थिवावयवैरुपष्टब्धं बोध्यम्, काठिन्यस्य पृथिवीत्वव्याप्यतया व्याप्यसत्त्वे व्यापकसत्त्वस्यावश्यकत्त्वात्, तथाच तयोः कथं जलत्वमित्याशंकते **नचेति**। **कठिनत्वात्** = कठिनस्पर्शवत्त्वात्। **अदृष्टविशेषेण** =

न च हिमकरकयोः कठिनत्वात्पार्थिवत्वमिति वाच्यम्, ऊष्मणा विलीनस्य तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात्। यद्द्रव्यं यद्द्रव्यध्वंसजन्यमिति व्याप्तेर्जलोपादानोपादेयत्वसिद्धेः, अदृष्टविशेषेण द्रवत्वप्रतिरोधात्, करकादीनां काठिन्यप्रत्ययस्य भ्रान्तित्वात् ॥४०॥

उष्णः स्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्।
नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥४१॥

तेजो निरूपयति-उष्ण इति। उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः। इत्थं च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः। तस्य परमाणुवृत्तित्वं तु जलत्वस्येवानुसन्धेयम्। न चोष्णस्प-

से लेकर समुद्रपर्यन्त अर्थात् तुषार–नदी–बावड़ी—इत्यादि सब विषयरूप जल है। प्रश्न—हिम–करका कठिन होने से पार्थिव हैं जलीय कैसे हैं। उत्तर—गर्मी से पिघलने पर उनमें जलत्व प्रत्यक्षसिद्ध है—क्योंकि यह व्याप्ति है कि जो द्रव्य जिस द्रव्य के ध्वंस से जन्य होता है—वह द्रव्य उस द्रव्य के उपादान से उपादेय होता है। इस व्याप्ति के बल से हिम–करका भी जल का उपादान जो जल का परमाणु उसके कार्य हैं अतः जलत्व उनमें प्रत्यक्षसिद्ध है। और उनमें द्रवत्व का प्रतिरोध अदृष्ट विशेष के कारण होता है। करकादि में काठिन्य प्रत्यय भ्रान्त है ॥४०॥

तेज का निरूपण करते हैं—तेज का स्पर्श उष्ण होता है—और रूप भास्वर शुक्ल होता है—और द्रवत्व नैमित्तिक होता है—और तेज का नित्यत्व-पृथिवी की तरह जानना। उष्णत्व स्पर्शनिष्ठ जाति विशेष है जो कि प्रत्यक्षप्रमाण सिद्ध है। इस प्रकार जन्योष्णस्पर्श समवायिकारणतावच्छेदकतया जन्यतेजस्त्व जाति की सिद्धि—और जन्यतेजस्त्वावच्छिन्न जन्यतानिरूपितजनकतावच्छेदकतया तेजस्त्वजाति की सिद्धि कर लेना—उस तेजस्त्वजाति को जलत्व की तरह

---

भोजकादृष्टविशेषेण। प्रतिरोधात् = विद्यमानस्यापि भावप्रतिबन्धसंभवात्। नाशादित्यपि कश्चित्।

भ्रान्तित्वात् = भ्रमरूपत्वात्। अग्रे काठिन्यभ्रमस्यैव तत्र भावितया भ्रमस्य चाऽविद्यमानतया तस्याऽदृष्टजन्यत्वमेव स्वीकरणीयम् ॥४०॥

तस्य = तेजस्त्वस्य। जलत्वस्येवेति। यथा जन्यजलत्वावच्छिन्नजनकतावच्छेदकतया सिद्धजलत्वजातेः परमाणुवृत्तित्वं, तथैव जन्योष्णस्पर्शसमवायिकारणतावच्छेदकजन्यतेजस्त्वावच्छिन्नजनकतावच्छेदकतया सिद्धतेजस्त्वजातेः परमाणुवृत्तित्वमित्यर्थः।

अभिभवात्=स्वजातीयमहदग्रयुक्तप्रत्यक्षाभावात्। तद्रूपाग्रहे=शुक्लरूपाग्रहे।
चाक्षुषत्वं = चाक्षुषविषयत्वम्। यद्यपि धर्मिग्रहे स्वरूपतो रूपस्य हेतुतया

शैवत्वं चन्द्रकिरणादावव्याप्तमिति वाच्यम् तत्राप्युष्णत्वस्य सत्त्वात्, किन्तु तदन्तःपातिजलस्पर्शेनाभिभवादग्रहः। एवं रत्नकिरणादौ पार्थिवस्पर्शेनाभिभवाच्चक्षुरादौ चानुद्भूतत्वादग्रहः। रूपमित्यादि। वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवाच्छुक्लरूपाग्रहः। अथ तद्रूपाग्रहे धर्मिणोऽपि चाक्षुषत्वं न स्यादिति चेत्? न, अन्यदीयरूपेणापि धर्मिणो ग्रहसंभवात् शङ्खस्येव पित्तपीतिम्ना। वन्हेस्तु शुक्लरूपं नाभिभूतं किन्तु तदीयं शुक्लत्वमभिभूत-

परमाणु में वृत्ति है समझना चाहिये। (जो कि प्रकार ऊपर बतला दिया वही जलत्ववाला प्रकार है)। प्रश्न—"उष्णस्पर्शवत्व" इस तेज के लक्षण की चन्द्रकिरण में अव्याप्ति हो जायेगी। उत्तर—चन्द्रकिरण में भी उष्णस्पर्श है-किन्तु चन्द्रकिरण के अन्दर रहने वाला जो जल उसके स्पर्श से दब जाने के कारण मालूम नहीं पड़ता। इसी प्रकार रत्नकिरण आदि में पार्थिवस्पर्श से उसका उष्णस्पर्श अभिभूत हो जाने के कारण—तथा चक्षु आदि में अनुद्भुत होने के कारण मालूम नहीं पड़ता है। वैश्वानर (अग्नि) तथा मरकत किरण आदि में भी पार्थिवरूप से दब जाने के कारण उसके शुक्लरूप का ज्ञान नहीं हो पाता। प्रश्न—जब इनके रूप का ज्ञान नहीं होता है तो धर्मी जो वैश्वानर-मरकतकिरण आदि हैं उनका भी चक्षु इन्द्रिय से प्रत्यक्ष नहीं होना चाहिये। उत्तर—यह ठीक नहीं-क्योंकि अन्यदीयरूप से भी धर्मी का चाक्षुषप्रत्यक्ष होता है-जैसे पित्त की बीमारी वाले (अर्थात् पित्तदोष दूषित नेत्रोंवाले) पुरुष को शंख का शुक्लरूप पित्त के पीले रूप से दब जाने के कारण चक्षु से ज्ञात नहीं होता है-अथ च शंख का प्रत्यक्ष पित्त के पीले रूप से ही होता है। अन्य लोग ऐसा कहते हैं कि अग्नि का रूप नहीं दबता अपितु उसका शुक्लत्व दबता है-(अग्नि का प्रत्यक्ष अग्नि के रूप

---

तद्ग्रहस्यानुपयोगः, तथापि वस्तुतो रूपवद्द्रव्यचाक्षुषलौकिकविषयिता रूपचाक्षुषविषयिताव्याप्येति सिद्धान्तस्य तदग्रहेपि धर्मिचाक्षुषोपगमेऽपलापापत्तेरित्याशंकितुरभिप्रायः। **अन्यदीयरूपेण** = सम्मिश्रितपार्थिवावयवरूपेण। इत्थं च नोक्तव्याप्यव्यापकभावापलाप इत्याशयः। ननु वस्तुतो यद्रूपवद्द्रव्यं तदीयताद्दग्विषयिता तद्रूपचाक्षुषविषयिताव्याप्येति नियमो भज्यत एवेति शंकामपवदितुं दृष्टान्तमाह **शंखस्येवेति**। तथाच व्यभिचारान्न विशेषनियमः संभवतीति भावः। विशेषनियमेपि न व्यभिचार इति समाधानकर्तॄणां मतमाह **वह्नेस्त्विति**। **नाभिभूतमिति**। नन्वनभिभवे तद्ग्रहापत्तिः, इष्टापत्तावनुव्यवसायापत्तिरत आह **तदीयशुक्लत्वमिति**। तथाच विशेषणस्याभिभवादेव न विशिष्टानुव्यवसायसंभव इति भावः। तदीयशुक्लत्वस्य शुक्लत्वानतिरेकेण तदभिभवे कुत्रापि तद्ग्रहो न स्यात्, मरकतकिरणग्रहस्य मरकतरूपेणैवावश्यकतया विशेषनियमे व्यभिचारो

मित्यन्ये । नैमित्तिकमिति । सुवर्णादिरूपे तेजसि तत्सत्त्वात् । न च नैमित्तिकद्रवत्वं लक्षणं दहनादावव्याप्तं घृतादावतिव्याप्तं चेति वाच्यम् । पृथिव्यवृत्ति-नैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षितत्वात् । पूर्ववदिति । जलस्येवेत्यर्थः । तथाहि तद्-द्विविधं-नित्यमनित्यं च । नित्यं परमाणुरूपम् । तदन्यदनित्यम्, अवयवि च । तच्च त्रिधा-शरीरेन्द्रियविषयभेदात् । शरीरमयोनिजमेव । तच्च सूर्यलोकादौ प्रसिद्धम् ॥४१॥

इन्द्रियं नयनं, वन्हिस्वर्णादिर्विषयो मतः ।

अत्र यो विशेषस्तमाह-इन्द्रियमिति । ननु चक्षुषस्तैजसत्वे किं मानमिति चेत् ? चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्य-

से ही होता है) नैमित्तिकमिति—सुवर्ण आदि रूप तेज में नैमित्तिक द्रवत्व है। प्रश्न—नैमित्तिकद्रवत्ववत्व इस लक्षण की वह्नि आदि तेज में अव्याप्ति है—और घृत आदि रूप पृथिवी में अतिव्याप्ति है। उत्तर—यह ठीक नहीं है—क्योंकि पृथिवी में अवृत्ति ( न रहने वाली ) तथा नैमित्तिकद्रवत्व के अधिकरण में वृत्ति ( रहने वाली ) जो द्रव्यत्व साक्षात् व्याप्य जाति-तादृशजातिमत्त्व यह नैमित्तिकद्रवत्व का अर्थ कर देना। ( ऐसी जाति केवल तेजस्त्व जाति ही मिलेगी—वह तेजस्त्वजाति वह्नि में है और घृतरूपा पृथिवी में नहीं अतः अव्याप्ति नहीं है।

तेज दो प्रकार का है नित्य और अनित्य। नित्य परमाणु रूप है—और परमाणु रूप तेज से अन्य तेज अनित्य है तथा अवयवी है। वह अनित्य तेज तीन प्रकार का है—शरीर-इन्द्रिय—विषय भेद से। तेज का शरीर अयोनिज है—तैजस शरीर सूर्य भगवान् का है और वह सूर्यलोक में प्रसिद्ध है।

चक्षु तैजस इन्द्रिय है। प्रश्न—चक्षु तैजस है इसमें क्या प्रमाण है। उत्तर—अनुमान प्रमाण है। तथाहि—चक्षु तैजस है परकीय स्पर्शादि का अव्यञ्जक होते हुवे परकीय ( घटपटादि )

---

दुर्निवार एवेत्यस्वरसोऽन्ये इत्यनेन सूचितः। "नैमित्तिकं द्रवत्वमिति" अंके तेजसीत्यध्याहारः। अन्वयितावच्छेदकावच्छेदेनान्वयस्यौऽसत्त्वेऽपि बाधात्प्रकृते सामानाधिकरण्येनान्वय इत्यभिप्रायवानाह सुवर्णादीति। एवं सति लक्षणस्यायोग इत्याशंकते नचेति। नैमित्तिकत्वं च न निमित्तजन्यत्वम्, जलीयद्रवत्वस्यापि तथात्वात्, किन्तु विजातीयतेजःसंयोगजन्यतावच्छेदकजातिमत्त्वम्। एवं सांसिद्धिकद्रवत्वत्वं जलजन्यतावच्छेदको जातिविशेषः।

नचैवमपि सर्वद्रवत्वसाधारणद्रवत्वत्वजातौ मानाभावः, अनुगतप्रतीत्या-

ञ्जकत्वात् प्रदीपवत्, प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादत्र दृष्टान्तेऽसिद्धि वारणाय प्रथमं परकीयेति । घटादेः स्वीयरूपव्यञ्जकत्वाद्व्यभिचारवारणाय द्वितीयं परकीयेति । अथवा प्रभाया दृष्टान्तत्वसंभवादाद्यं परकीयेति न देयम्, चक्षुःसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम् । विपर्यं दर्शयति-वह्नीति । ननु सुवर्णस्य तैजसत्वे किं मानमिति चेद् ? न, सुवर्णं तेजसम्, असति प्रतिबन्धके अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्ववत्त्वात्, यन्नैवं तन्नैवम्, यथा पृथिवीति । न चेदमप्रयोजकम्, पृथिवीद्रवत्वस्य जन्यजल-

के रूप का व्यञ्जक होने से प्रदीप की तरह । हेतुकोटि में प्रथम "परकीय" न देने पर दृष्टान्त में अव्याप्ति हो जावेगी—( क्योंकि दृष्टान्त में साध्य-हेतु-इन दोनों का सत्त्व अपेक्षित है—इन दोनों में से एक भी यदि दृष्टान्त में न रहे तो उसे "दृष्टान्त में अव्याप्ति" अथवा "दृष्टान्ता-सिद्धि" कहते हैं । पूर्वोक्तानुमान में प्रथम "परकीय" न देने पर "स्पर्शाद्यव्यञ्जकत्वेसति परकीयरूपव्यञ्जकत्वात्" एतावन्मात्र ही हेतु रह जाता है—सो यह हेतु "प्रदीप" दृष्टान्त में नहीं जा रहा है—क्योंकि प्रदीप अपने स्पर्श का व्यञ्जक ही है—अतः स्पर्शादि अव्यञ्जकत्वविशिष्ट परकीयरूपव्यञ्जकत्व रूप हेतु के प्रदीप में न रहने प्रयुक्त अव्याप्ति हो गयी । यदि प्रथम परकीय-पद दिया तो प्रदीप अपने स्पर्श का व्यञ्जक हो—किन्तु परकीय स्पर्शादि का अव्यञ्जक भी तो है—अतः परकीय स्पर्शाद्यव्यञ्जकत्वविशिष्टपरकीयरूपव्यञ्जकत्व हेतु दृष्टान्त में चला गया अव्याप्ति नहीं हुवी ।

द्वितीयपरकीयपद न देने पर घट अपने रूप का व्यंजक होने से घट में व्यभिचार हो जायेगा । ( क्योंकि घट में तैजसत्व साध्य नहीं है—और परकीयस्पर्शाद्यव्यंजकत्वविशिष्ट रूप व्यंजकत्व हेतु है—सो जहाँ साध्य न रहे और हेतु रह जावे उसे ही तो व्यभिचारक कहते हैं । यदि द्वितीय परकीय पद दिया तो घट में हेतु भी नहीं रहा । क्योकि घट परकीय रूप का व्यञ्जक नहीं है ) अथवा ( प्रदीप को दृष्टान्त न करके ) यदि प्रभा को दृष्टान्त कर दें तब प्रथम परकीय पद देने की कोई आवश्यकता नहीं । चक्षुःसन्निकर्ष में व्यभिचार वारण के लिये हेतु कोटि में द्रव्यत्व विशेषण अवश्य देना चाहिये । ( अन्यथा चक्षुः का जो घट के साथ संयोग सन्निकर्ष है—उस संयोग सन्निकर्ष में तैजसत्व साध्य नहीं रहा, और हेतु है—क्योंकि संयोग सन्निकर्ष परकीय ( घट-पट आदि ) के स्पर्शादि का अव्यंजक है और परकीय ( घट-पट

---

तत्सत्त्वे वा द्रवत्वत्वजातेः परमाणुद्रवत्ववृत्तित्वे साधकाभावेन सर्वसाधारण्ये प्रमाणा-भावादिति वाच्यम् । इष्टत्वात् । जलत्वादिवदस्य सिद्धिसंभवाच्च ।

प्रतिबन्धकदशायामत्यन्तानलसंयोगेपि अनुच्छिद्यमानद्रवत्वात्पयसि व्यभिचार इत्यत आह असतीति । प्रतिबन्धकाभावदशायां क्षुद्रसंयोगेपि अनुच्छिद्यमा-नद्रवत्वात्तत्र व्यभिचारतादवस्थ्यमत आह अत्यन्तेति । अप्रयोजकं-अनुमानमिति

**द्रवत्वस्य चात्यन्ताग्निसंयोगनाश्यत्वात्। ननु पीतिमगुरुत्वाश्रयस्य पार्थिवभागस्यापि तदानीं द्रुतत्वात्तेन व्यभिचार इति चेत्? न, जलमध्यस्थमसीचोदवत्तस्याद्रुतत्वात्। अपरे तु पीतिमाश्रयस्य अत्यन्ताग्निसंयोगेऽपि**

आदि) के रूप का व्यंजक है-अतः व्यभिचार हो जावेगा। द्रव्यत्व विशेषण हेतु कोटि में दिया तो "द्रव्यत्व" संयोग सन्निकर्ष में नहीं है-व्यभिचार नहीं हुवा) यहि सुवर्ण आदि तेज के विषय हैं। प्रश्न-सुवर्ण तेज है इसमें क्या प्रमाण है। उत्तर-सुवर्ण के तैजस होने में अनुमानप्रमाण हैं कि सुवर्ण तेज है किसी प्रतिबन्धक के न रहने पर अत्यन्त अग्नि का संयोग होने पर भी सुवर्ण के द्रवत्व का नाश नहीं होता है इस हेतु से-जो ऐसा नहीं, वह तैजस भी नहीं, जैसे पृथिवी। (अभिप्राय यह है कि जिस वस्तु का द्रवत्व अत्यन्ताग्निसंयोग होने पर भी नष्ट नहीं होता है-वही तत्त्व सुवर्ण द्रव्य है-पृथिवी और जल का द्रवत्व अत्यन्तानल संयोग होने पर नष्ट हो जाता है परन्तु सुवर्ण के द्रवत्व का ही ऐसा नियम है कि अत्यन्त अग्नि संयोग होने पर भी नष्ट नहीं होता है इसलिये पूर्वानुमान से सुवर्ण तैजस है, यह सिद्ध हो जाता है।

प्रश्न-यह अनुमान अप्रयोजक है (अर्थात् इस अनुमान में यह व्यभिचार शङ्का हो सकती है कि पक्ष में "अनुच्छिद्यमान द्रवत्वात्" इत्यादि हेतु रहे और "तैजसत्व" साध्य न रहे)। उत्तर-नहीं-प्रकृत में अनुकूल तर्क है-कि पृथिवी का द्रवत्व-और जन्यजल का द्रवत्व अत्यन्त अग्निसंयोग होने पर नष्ट हो जाता है-(अतः जिसका द्रवत्व अत्यन्ताग्नि संयोग होने पर भी नष्ट न हो उसे अवश्य ही पृथिवी-तथा जल से अतिरिक्त एक तैजस द्रव्य मानना होगा-इससे सुवर्ण तैजस द्रव्य है यह सिद्ध हो गया)। प्रश्न-(जब कि सुवर्ण के साथ अत्यन्ताग्निसंयोग हुवा तब सुवर्ण जैसे पिघलता (द्रुत होता) है-वैसे ही सुवर्ण में मिश्रित जो) पीतिम (पीतरूप) एवं गुरुत्व का आश्रय पार्थिवभाग, उसमें भी द्रवत्व होता है-(और वह द्रवत्व भी सौवर्ण द्रवत्व की तरह अनुच्छिद्यमान है-इससे अनुच्छिद्यमानद्रवत्व हेतु उस पार्थिव भाग में है-पार्थिवत्व साध्य नहीं है) अतः व्यभिचार हुवा। उत्तर-ऐसा नहीं-जैसे जल के मध्य में स्थित जो मषीचोद (स्याहीचूर्ण) उसमें जैसे वास्तविक में द्रवत्व नहीं है-किन्तु जल का द्रवत्व ही उसमें मालूम पड़ता है, वैसे ही सुवर्ण गत द्रवत्व ही उस पार्थिवभाग में मालूम पड़ता है-वास्तविक में पार्थिव भाग में कोई भी द्रवत्व नहीं है। अतः सुवर्णमिश्रित उस पार्थिव भाग में अनुच्छिद्यमान द्रवत्व (अनुच्छिद्यमानद्रवत्व-इस शब्द का अर्थ है कि जिसका द्रवत्व उच्छिद्यमान (नाशवान्) न हो) हेतु भी नहीं रहा-और तैजसत्व साध्य तो है ही नहीं-व्यभिचार नहीं हुवा।

---

शेषः। हेतोर्व्याप्यत्वेऽनुकूलतर्काभाव इत्यर्थः। जलीयमिति भ्रमनिरासायाह **पीतिमेति। दार्ढ्यायाह गुरुत्वाश्रयस्येति। तेन=पार्थिवभागेन। जलमध्यस्थेति। तथाच संमिश्रितद्रव्यत्वात्तदीयद्रवत्वेनाऽत्र द्रवत्वोपचारमात्रम्। एतच्च दर्शितस्थलानुरोधेनोपगन्तव्यमिति भावः।**

पूर्वरूपापरावृत्तिदर्शनात्तत्प्रतिबन्धकं विजातीयद्रवद्रव्यं कल्प्यते । तथा हि-अत्यन्ताग्निसंयोगी पीतिमगुरुत्वाश्रयः,-विजातीयरूप प्रतिबन्धकद्रवद्रव्यसंयुक्तः, अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणत्वात् जलमध्यस्थ-पीतपटवत् , तस्य च पृथिवीजलभिन्नस्य तेजस्त्वनियमात् ॥४१॥

कोई लोग सुवर्ण के तैजसत्व का अनुमान इस प्रकार करते हैं—उनका कहना है कि पार्थिव रूप तो अग्नि संयोग होने पर बदल जाता है जैसे घट का नीलरूप अग्निसंयोग से नष्ट होकर लाल रूप हो जाता है—परन्तु सुवर्ण के अन्दर विद्यमान जो पीतिमाश्रय पार्थिव भाग उसके पूर्वरूप ( पीतरूप ) की परावृत्ति ( बदलना ) अग्निसंयोग होने पर भी नहीं देखते हैं—अतः कोई विजातीयद्रवद्रव्य पूर्वरूप ( पीतरूप ) की परावृत्ति का प्रतिबन्धक अवश्य है—ऐसी कल्पना ( अनुमान ) करते हैं। तथाहि—अत्यन्ताग्निसंयोगी पीतिम—एवं गुरुत्व का आश्रय पार्थिव भाग—विजातीयरूप का प्रतिबन्धक जो द्रवद्रव्य उससे संयुक्त है—क्योंकि अत्यन्ताग्नि संयोग होने पर भी पूर्वरूप ( पीतरूप ) से विजातीय जो रूप उसका अधिकरण न होने से ( अर्थात् सुवर्ण मिश्रित पार्थिव भाग का अत्यन्ताग्नि संयोग होने पर भी वही पीतरूप बना रहता है अतः वह पार्थिव भाग विजातीयरूप का अधिकरण नहीं होने पाता- इससे वह पार्थिव भाग विजातीय द्रवद्रव्य से संयुक्त है ऐसा अनुमान करते हैं ) जल के बीच में स्थित पीतपट की तरह ( अर्थात् जलमध्यस्थपीतपट का पीलारूप अत्यन्ताग्नि संयोग होने पर भी जैसे बदलता नहीं—वहाँ उस पीले रूप से विजातीय रूप का प्रतिबन्धक जैसे जल होता है—ऐसे ही सुवर्णमिश्रितपार्थिव भाग का पीला रूप अत्यन्ताग्निसंयोग होने पर भी बदलता नहीं—सो उस बदलने को रोकनेवाला द्रवद्रव्य कोई अवश्य ही वहाँ है—और उस द्रवद्रव्य को जल या पृथिवी नहीं कह सकते-क्योंकि जल या पृथिवी का द्रवत्व अत्यन्ताग्निसंयोग होने पर नष्ट हो जाता है ) अतः उस द्रवद्रव्य को पृथिवी-जल से भिन्न तेज ही कहना होगा ॥४१॥

---

इतरबाधेन तेजस्त्वसाधयितॄणां मतमाह परे त्विति । गुरुत्वाश्रयान्तः पक्षः । द्रव्यसंयुक्तान्तं साध्यम् । हेतुघटकात्यन्तानलसंयोगस्य स्वरूपासिद्धिवारणाय पक्षेऽत्यन्ताग्निसंयोगीति । नीरूपत्वे द्रवत्वस्य प्रतिबन्धकत्वं न संभवतीत्यतः पीतिमत्त्वेन पक्षो विशेषितः । गुरुत्वाश्रय इति स्वरूपकथनम् । वस्तुतः सुवर्णा-न्तर्गतपार्थिवभागत्वेन पक्षता । एतेन सामानाधिकरण्येन साध्यतायां दृष्टान्ते न सिद्धसाधनम्, अवच्छेदकावच्छेदेन साध्यतायां तु द्रवत्ववद्द्रव्याऽसंयुक्ते घटादौ बाध इति निरस्तम् । पृथिवीजलयोर्द्रवत्ववद्द्रव्यसंयुक्तत्वेन सिद्धसाधनमतो विजातीयेति द्रवविशेषणम् । वस्तुतस्तु सर्वस्यापि द्रवस्य द्रवान्तराद्वैजात्यमस्त्येवेत्यत्र इतर-बाधेनैवोभयभिन्नो द्रव इति निर्णेयम् । तथाच वैजात्याप्रवेशेपि उपपत्तेस्तदुपा-दानमुपरंजकतयेति बोध्यम् । एवं साध्ये द्रव्यपदमपि, द्रवे रूपप्रतिबन्धकत्वमपि तथा । अनलाऽसंयुक्ते क्षुद्राऽनलसंयुक्ते व्यभिचारवारणाय सप्तम्यन्तम्, विजातीय-तेजःसंयोगपरम् । तेन जलादिपरमाणौ न व्यभिचारः । रूपानधिकरणत्वस्य

अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः।
तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ॥ ४२ ॥

वायुं निरूपयति अपाकज इति। अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वादपाकज इति। अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तमनुष्णाशीतेति।

वायु का निरूपण करते हैं—अपाकज अनुष्णाशीतस्पर्श वायु में रहता है। और यह वायु टेढ़ी गति वाला है—स्पर्शादि हेतुओं से वायु का अनुमान होता है। (अपाकज अनुष्णाशीतस्पर्श वाला होना यह वायु का लक्षण हुवा)—उसमें अपाकज विशेषण न देंगे तो अनुष्णाशीतस्पर्श पृथिवी में भी है-अतः वायु के लक्षण की पृथिवी मे अतिव्याप्ति हो गयी-यदि दिया तो पृथिवी का स्पर्श पाकज है-अतः अतिव्याप्ति नहीं। "अपाकजस्पर्शवाला" एतावन्मात्र वायु न

---

रूपसामान्याभाववतोपि संभवात् पूर्वरूपविजातीयेति। यद्यपि पूर्वरूपविजातीयरूपानधिकरणत्वमपि रूपसामान्याभाववतो दृष्टमेव, तथापि पूर्वरूपविजातीयरूपानधिकरणत्वविशिष्टरूपाधिकरणत्वादिति हेतुर्बोध्यः। वस्तुतो रूपसामान्याभाववतस्तथात्वेपि वह्न्यभावाद्रूपाधिकरणत्वप्रवेशे प्रयोजनाभावः। आत्मादौ हेतुसत्त्वेपि साध्यस्यापि सत्त्वेन बाधकाभावेन विजातीयसंयोगघटितहेत्वभावेन वा व्यभिचारानवकाशादिति संक्षेपः। इतरबाधं दर्शयति तस्य चेति। तादृशप्रतिबन्धकद्रवद्रव्यस्येत्यर्थः। तेजस्त्वनियमादिति। तैजसत्ववत्त्वनियमादित्यर्थः। द्रवत्वेनेति शेषः।

अत्रेदमालोचनीयम्—उक्तानुमानेऽनुकूलतर्काभावेन द्रवत्ववद्द्रव्यसंयुक्तत्वे मानाभावः। न च रूपपरावृत्तिदर्शनात्तत्कल्पनम्। मानाभावात्। न च तदनभ्युपगमे तेजःसंयोगात्पूर्वरूपनाशे नवीनोत्पत्तिर्दुर्वारैवेति वाच्यम्। द्रवत्ववद्द्रव्यस्य द्रवत्वस्य वा प्रतिबन्धकत्वापेक्षया सुवर्णस्यैव प्रतिबन्धकत्वे लाघवात्। न च स्वतन्त्रप्रतिबन्धकत्वकल्पनापेक्षया जलमध्यस्थपीतपटे रूपान्तरोत्पादवारणाय द्रवत्ववद्द्रव्यस्य क्लृप्ततया प्रतिबन्धकतानिर्वाहादिति वाच्यम्। प्रतिबन्धकतावच्छेदकाननुगमेनैकप्रतिबध्यप्रतिबन्धकभावाऽसंभवात्। न च परंपरया द्रवत्वत्वजातिरेव प्रतिबन्धकतावच्छेदिका, यद्वा द्रवत्वत्वेन द्रवत्वस्य प्रतिबन्धकतया नाननुगम इति वाच्यम्। तथापि द्रवत्ववद्द्रव्यसंयुक्तत्वस्य सिद्धावपि द्रवत्ववद्द्रव्यस्य तैजसत्वे साधकाभावात्। न चेतरबाधसहकृतेन पृथिवीत्वजलत्वाभावविशिष्टेन द्रवत्वेन तत्सिद्धिरिति वाच्यम्। तेजस्त्वसाधकोष्णस्पर्शाद्यभावेन तदसिद्धेरनुमानाऽप्रयोजकत्वस्याऽसकृदावेदितत्वात्। न च तेजस्त्वासिद्धौ द्रव्यान्तरकल्पनैव स्यादिति वाच्यम्। इष्टापत्तेः। न चाऽतिरिक्तद्रव्यकल्पनायाः गरीयस्त्वमिति वाच्यम्। अतिरिक्तद्रव्यकल्पनायां लाघवस्य विपरीतस्य पृथिवीमन्थे आवेदितत्वादिति ॥४१॥

जलादावपीति। आदिना तेजःपरिग्रहः। एतेन=अपाकजानुष्णाशीतस्पर्शकथनेन,

एतेन वायवीयो विजातीयस्पर्शः दर्शितः। तज्जनकतावच्छेदकं वायुत्वमिति भावः ॥४२॥

एषः—वायुः—स्पर्शादिलिङ्गकः—वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते, विजातीयस्पर्शेन विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां कंपनेन च वायोरनुमानात्। यथा वायुर्न प्रत्यक्षस्तथाग्रे वक्ष्यते।

लक्षण की जलादि में अतिव्याप्ति है-अतः अनुष्णाशीत कहा—तो जलादि में अनुष्णाशीत स्पर्श नहीं है, अपितु शीतस्पर्श है। इससे वायु का स्पर्श सबसे विजातीय होता है यह स्पष्ट ही हो गया। (उस विजातीय स्पर्श का समवायिकारण वायु है) समवायिकारणतावच्छेदक वायुत्व है-(वही वायुत्वजाति है)। इस वायु का स्पर्शादि लिङ्ग (हेतुवों) से आनुमानिक ज्ञान होता है। इस वायु का स्पर्श-शब्द-धृति-कम्प-इन हेतुवों से अनुमान होता है। अभिप्राय यह है कि नवीन नैयायिक स्पार्शन प्रत्यक्ष में स्पर्श को कारण मानते हैं अतः वे वायु का प्रत्यक्ष मानते हैं, किन्तु प्राचीन नैयायिक—वहिरिन्द्रिय से होने वाले द्रव्यप्रत्यक्ष में उद्भूत रूप को कारण मानते हैं—अतः उनके यहाँ वायु का प्रत्यक्ष नहीं होता है-अपितु वायु का स्पर्शादि चार हेतुओं से आनुमानिक ज्ञान होता है। तथाहि—पहिला हेतु स्पर्श है—सो जिस द्रव्य में रूप नहीं है—उस द्रव्य के स्पर्श का भी प्रत्यक्ष हमें त्वगिन्द्रिय से होता है अतः वह स्पर्श जिस

---

तथाच विजातीयस्पर्शवत्त्वं वायोर्लक्षणम्। एतेन अपाकजानुष्णाशीतस्पर्शवत्त्वं पटादावतिव्याप्तम्, अतोऽपाकजानुष्णाशीतस्पर्शवन्मात्रवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं पाकजस्पर्शवदवृत्तिअनुष्णाशीतस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा लक्षणार्थोऽवसेय इति निरस्तम्। पटादौ विजातीयस्पर्शाभावादिति ध्येयम्। **तज्जनकतावच्छेदकमिति**। विजातीयस्पर्शजनकतावच्छेदकमित्यर्थः। तथाच विजातीयस्पर्शजनकतावच्छेदकतया वायुत्वजातिसिद्धिरिति भावः। अस्या परमाणुवृत्तित्वं तु जलत्वस्येवानुसन्धेयम् ॥ ४२ ॥

**स्पर्शादिलिङ्गक इति**। स्पर्शादीनि लिङ्गानि यस्य स तथा। **विजातीयस्पर्शेनेति** तृतीयान्तचतुष्टयस्याऽनुमानादित्यनेनान्वयः। योऽयं रूपवद्द्रव्यासमवेतः स्पर्शः स क्वचिदाश्रितः स्पर्शत्वात्पृथिवीसमवेतस्पर्शवत्। एवमसति रूपवद्द्रव्याभिघाते योऽयं पर्णादिषु शब्दसन्तानः स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः अविभज्यमानावयवद्रव्यसंबन्धिशब्दसन्तानत्वात् दण्डाभिहतभेरीशब्दसन्तानवत्। एवं नभसि तृणतूलस्तनयित्नुविमानादीनां धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगजन्या अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकाधृतिवत्। धृतिश्च गुरुत्ववतां पतनाभावः। एवं रूपवद्द्रव्याभिघातमन्तरेण तृणे कर्म स्पर्शवद्वेगवद्द्रव्याभिघातजन्यं विजातीयकर्मत्वात्, नदीपूराहतकाशादिकर्मवदित्यनुमितिप्रकारो बोध्यः। **वक्ष्यते इति**। "**रूप**

पूर्ववन्नित्यतायुक्तं देहव्यापि त्वगिन्द्रियम् ॥४३॥

पूर्ववदिति। वायुर्द्विविधः—नित्योऽनित्यश्च। परमाणुरूपो नित्यः, तदन्योऽनित्योऽवयवसमवेतश्च। सोपि त्रिविधः—शरीरेन्द्रियविषयभेदात्। तत्र शरीरमयोनिजं पिशाचादीनाम्। परन्तु जलीयतैजस वायवीयशरीराणां पार्थिवभागोपष्टंभादुपभोगक्षमत्वम्, जलादीनां प्राधान्याज्जलीयत्वादिकमिति। अत्र यो विशेषस्तमाह देहव्यापीति। शरीरव्यापकं स्पर्शग्राहक-

रूपरहित द्रव्य के आश्रित है वही रूप रहित द्रव्य वायु है] (ऐसे ह वायु के चलने पर वृक्षों के पत्तों में जो शब्द सुनाई देता है वह शब्द यदि किसी रूपवान् द्रव्य के अभिघात से होता तो रूपवान् द्रव्य का प्रत्यक्ष होता-अतः उस अभिघात का कारण कोई रूपरहित द्रव्य ही है सो वही रूपरहित द्रव्य वायु है) (ऐसे ही आकाश में तृण आदि पदार्थ जो उड़ते रहते हैं सो उन्हें धारण करने वाला जो रूपरहित द्रव्य है वही वायु है) (एवं जिस रूपरहित द्रव्य के अभिघात से शाखा-पत्ते इत्यादियों में कम्पन होता है वही रूपरहित द्रव्य वायु है) वायु का प्रत्यक्ष क्यों नहीं होता, यह आगे कहेंगे। वायु दो प्रकार का है—नित्य तथा अनित्य। परमाणुरूप वायु नित्य है-उससे अन्य अनित्य है—तथा अवयव में समवाय सम्बन्ध से रहता है। और वह अनित्य वायु भी तीन प्रकार का है—शरीर-इन्द्रिय-विषय-भेद से। वायवीय शरीर अयोनिज ही होता है-जैसे पिशाच आदि का। परन्तु जलीय, तैजस तथा वायवीय शरीर पार्थिव भाग से उपष्टंभ (ढक जाने के) कारण उपभोग क्षम होते हैं-तथा जलादि के प्राधान्य से उनमें जलीयत्व आदि की व्यवस्था बनती है। इसमें जो विशेषता है उसे बतलाते हैं कि शरीर में व्यापक तथा स्पर्श का ग्राहक

---

मत्रापि कारणम्, द्रव्याध्यक्षे" इति कारिकाव्याख्यानावसरे इत्यर्थः। मूले—पूर्ववन्नित्यतायुक्तमिति। पूर्ववद्=जलवदित्यर्थः। नित्यतादीत्यादिनाऽनित्यत्वपरिग्रहः। उक्तं=बोध्यम् तदेव स्पष्टयति। वायुर्द्विविध इति। अयोनिजमिति सावधारणम्। पिशाचादीनामिति। वायुलोके प्रसिद्धमिति शेषः। अत्र—त्वगिन्द्रिये। यो विशेषः=अधिष्ठानादि। शरीरव्यापकमिति। अत्र च न संयोगसंबन्धावच्छिन्न-शरीरनिष्ठव्याप्यतानिरूपितसंयोगसंबन्धावच्छिन्नव्यापकतावच्छेदकं त्वक्त्वम्, पुरीतत्यां तदसंभवात्। अत एव पुरीतत्यां मनःप्रवेशे ज्ञानानुदयात् ज्ञानसामान्ये त्वङ्मनःसंयोगस्य हेतुत्वमित्याचक्षते। नापि तादात्म्येन शरीरनिष्ठव्याप्यतानिरूपितं तत्। ईदृशव्याप्यतानिरूपितव्यापकत्वस्येन्द्रियमात्रे सत्त्वेन विशेषाभावात्। न च पुरीततिनाड्यवृत्तिसंयोगेन शरीरस्य व्याप्यत्वे बाधकाभावः। तस्यापि कदाचित् केनचिदिन्द्रियेण समं संयोगसत्त्वेनोक्तविशेषात्। तथापि यद्यत्कालावच्छेदेन पुरीततिनाड्यवृत्तिशरीरसंयोगः, तत्तन्नाड्यवृत्तिसंयोगेन शरीरं वा तत्तत्कालावच्छेदेन त्वक्संयोगः संयोगेन त्वग्वेति कालान्तर्भावेण व्यापकत्वं त्वचो निष्पत्यूहम्।

मिन्द्रियं त्वक्। तच्च वायवीयं रूपादिषु मध्ये स्पर्शस्यैवाऽभिव्यंजकत्वात्, अङ्गसङ्गिसलिलशैत्याभिव्यंजकव्यजनपवनवत् ॥४३॥

प्राणादिस्तु महावायुपर्यन्तो विषयो मतः।
आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥४४॥

विषयं दर्शयति प्राणादिरिति। यद्यप्यनित्यो वायुश्चतुर्विधः, तस्य चतुर्थी विधा प्राणादिरित्युक्तमाकरे, तथापि संक्षेपादेव त्रैविध्ययुक्तम्। प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियाभेदाच्च नानासंज्ञां लभते इति।

आकाशं निरूपयति आकाशस्येति। आकाशकालदिशामेकैकव्यक्तिकत्वादाकाशत्वादिकं न जातिः; किन्तु आकाशत्वं शब्दाश्रयत्वम्। वैशेषिक इति कथनं तु विशेषगुणान्तरव्यवच्छेदाय। एतेन प्रमाणमपि दर्शितम्, तथाहि—शब्दो गुणश्चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात्, स्पर्शवत्।

इन्द्रियं तु भवेच्छ्रोत्रमकः सन्नप्युपाधितः।

इन्द्रिय त्वक है—और वह वायवीय है। क्योंकि रूपादि के मध्य में स्पर्श का ही अभिव्यञ्जक होने से, जैसे व्यजन (पंखे) का पवन शरीर के अङ्गों का सङ्गी (सम्बन्धी) जो स्वेदरूप जल उस जल के ही शैत्य का व्यंजक होता है- तद्वत् ॥ ४३ ॥

प्राणादिवायु से लेकर महावायुपर्यन्त सब वायवीय विषय है। यद्यपि अनित्य वायु चार प्रकार का है—उसका चौथा भेद प्राणादिवायु है—यह आकर (प्रशस्तपादभाष्य) में कहा है—तथापि संक्षेप से यहाँ अनित्य वायु तीन प्रकार का ही कहा है। प्राणवायु यद्यपि एक ही है—तथापि हृदयादि नानास्थानभेद से तथा मुखनिर्गमनादि नानाक्रिया के भेद से उसकी अपान-उदान-इत्यादि नाना संज्ञा (नाम) हो जाते हैं।

आकाश का निरूपण करते हैं। आकाश का शब्द ही विशेषगुण है। आकाश-काल दिशा—ये एक-एक व्यक्ति होने के कारण इनमें आकाशत्वादि जाति नहीं हैं-(क्योंकि एक व्यक्तिमात्र में वृत्ति की जातित्व का खण्डन किया है) किन्तु शब्दाश्रयत्व ही आकाशत्व है-(क्योंकि आकाश शब्दाश्रय है) वैशेषिक यह कथन इसलिये है कि आकाश में शब्द से अतिरिक्त और कोई विशेषगुण नहीं रहता है—(अपितु शब्द ही एक विशेषगुण रहता है) शब्द को आकाश का विशेषगुण कहने से (आकाश के अस्तित्व में) प्रमाण (अनुमानप्रमाण) भी दिखला दिया। तथाहि-शब्द भी स्पर्श की तरह विशेषगुण है क्योंकि चक्षु से ग्रहण के अयोग्य तथा बहिरिन्द्रिय (श्रोत्र) से ग्रहण के योग्य शब्दत्वजाति वाला होने से। (शब्द को जो गुण नहीं मानते जैसे वैयाकरण और मीमांसक-उनके मत का खण्डन करते हैं) दूसरे अनुमान से कि-शब्द किसी द्रव्य में समवायसम्बन्ध से रहता है गुण होने से संयोग की तरह, इस अनुमान से शब्द किसी द्रव्य में समवाय सम्बन्ध से रहता है यह सिद्ध हो गया। अब

पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥४३॥

पूर्ववदिति । वायुर्द्विविधः—नित्योऽनित्यश्च । परमाणुरूपो नित्यः, तदन्योऽनित्योऽवयवसमवेतश्च । सोपि त्रिविधः—शरीरेन्द्रियविषयभेदात् । तत्र शरीरमयोनिजं पिशाचादीनाम् । परन्तु जलीयतैजस वायवीयशरीराणां पार्थिवभागोपष्टंभादुपभोगक्षमत्वम्, जलादीनां प्राधान्याज्जलीयत्वादिकमिति । अत्र यो विशेषस्तमाह देहव्यापीति । शरीरव्यापकं स्पर्शग्राहक-

रूपरहित द्रव्य के आश्रित है वही रूप रहित द्रव्य वायु है] (ऐसे ह वायु के चलने पर वृक्षों के पत्तों में जो शब्द सुनाई देता है वह शब्द यदि किसी रूपवान् द्रव्य के अभिघात से होता तो रूपवान् द्रव्य का प्रत्यक्ष होता-अतः उस अभिघात का कारण कोई रूपरहित द्रव्य ही है सो वही रूपरहित द्रव्य वायु है' (ऐसे ही आकाश में तृण आदि पदार्थ जो उडते रहते हैं सो उन्हें धारण करने वाला जो रूपरहित द्रव्य है वही वायु है) (एवं जिस रूपरहित द्रव्य के अभिघात से शाखा-पत्ते इत्यादियों में कम्पन होता है वही रूपरहित द्रव्य वायु है) वायु का प्रत्यक्ष क्यों नहीं होता, यह आगे कहेंगे । वायु दो प्रकार का है—नित्य तथा अनित्य । परमाणुरूप वायु नित्य है-उससे अन्य अनित्य है-तथा अवयव में समवाय सम्बन्ध से रहता है । और वह अनित्य वायु भी तीन प्रकार का है—शरीर-इन्द्रिय-विषय-भेद से । वायवीय शरीर अयोनिज ही होता है-जैसे पिशाच आदि का । परन्तु जलीय, तैजस तथा वायवीय शरीर पार्थिव भाग से उपष्टंभ (ढक जाने के) कारण उपभोग क्षम होते हैं-तथा जलादि के प्राधान्य से उनमें जलीयत्व आदि की व्यवस्था बनती है । इसमें जो विशेषता है उसे बतलाते हैं कि शरीर में व्यापक तथा स्पर्श का ग्राहक

---

मत्रापि कारणम्, द्रव्याध्यक्षे" इति कारिकाव्याख्यानवसरे इत्यर्थः । मूले—पूर्ववन्नित्यताद्युक्तमिति। पूर्ववद्=जलवदित्यर्थः। नित्यतादीत्यदिनाऽनित्यत्वपरिग्रहः। उक्तं=बोध्यम् तदेव स्पष्टयति। वायुर्द्विविध इति । अयोनिजमिति सावधारणम्। पिशाचादीनामिति । वायुलोके प्रसिद्धमिति शेषः। अत्र=त्वगिन्द्रिये। यो विशेषः=अधिष्ठानादि । शरीरव्यापकमिति । अत्र च न संयोगसंबन्धावच्छिन्न-शरीरनिष्ठव्याप्यतानिरूपितसंयोगसंबन्धावच्छिन्नव्यापकतावच्छेदकं त्वक्त्वम्, पुरीतत्यां तदसंभवात् । अत एव पुरीतत्यां मनःप्रवेशे ज्ञानानुदयात् ज्ञानसामान्ये त्वङ्मनःसंयोगस्य हेतुत्वमित्याचक्षते। नापि तादात्म्येन शरीरनिष्ठव्याप्यतानिरूपितं तत् । ईदृशव्याप्यतानिरूपितव्यापकत्वस्येन्द्रियमात्रे सत्त्वेन विशेषाभावात् । न च पुरीततिनाड्यवृत्तिसंयोगेन शरीरस्य व्याप्यत्वे बाधकाभावः । तस्यापि कदाचित् केनचिदिन्द्रियेण समं संयोगसत्त्वेनोक्ताविशेषात् । तथापि यद्यत्कालावच्छेदेन पुरीततिनाड्यवृत्तिशरीरसंयोगः, तत्तभाड्यवृत्तिसंयोगेन शरीरं वा तत्तत्कालावच्छेदेन त्वक्संयोगः संयोगेन त्वगेवेति कालान्तर्भावेण व्यापकत्वं त्वचो निष्प्रत्यूहम्।

मिन्द्रियं त्वक्। तच्च वायवीयं रूपादिषु मध्ये स्पर्शस्यैवाऽभिव्यंजकत्वात्, अङ्गसङ्गिसलिलशैत्याभिव्यंजकव्यजनपवनवत् ॥४३॥

प्राणादिस्तु महावायुपर्यन्तो विषयो मतः।
आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥४४॥

विषयं दर्शयति प्राणादिरिति। यद्यप्यनित्यो वायुश्चतुर्विधः, तस्य चतुर्थी विधा प्राणादिरित्युक्तमाकरे, तथापि संक्षेपादेव त्रैविध्ययुक्तम्। प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियाभेदाच्च नानासंज्ञां लभते इति।

आकाशं निरूपयति आकाशस्येति। आकाशकालदिशामेकैकव्यक्तिकत्वादाकाशत्वादिकं न जातिः; किन्तु आकाशत्वं शब्दाश्रयत्वम्। वैशेषिक इति कथनं तु विशेषगुणान्तरव्यवच्छेदाय। एतेन प्रमाणमपि दर्शितम्, तथाहि–शब्दो गुणश्चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात्, स्पर्शवत्।

इन्द्रियं तु भवेच्छ्रोत्रमकः सन्नप्युपाधितः।

इन्द्रिय त्वक् है–और वह वायवीय है। क्योंकि रूपादि के मध्य में स्पर्श का ही अभिव्यञ्जक होने से जैसे व्यजन ( पंखे ) का पवन शरीर के अङ्गों का सङ्गी ( सम्बन्धी ) जो स्वेदरूप जल उस जल के ही शैत्य का व्यंजक होता है- तद्वत् ॥ ४३ ॥

प्राणादिवायु से लेकर महावायुपर्यन्त सब वायवीय विषय है। यद्यपि अनित्य वायु चार प्रकार का है–उसका चौथा भेद प्राणादिवायु है–यह आकर ( प्रशस्तपादभाष्य ) में कहा है–तथापि संक्षेप से यहाँ अनित्य वायु तीन प्रकार का ही कहा है। प्राणवायु यद्यपि एक ही है–तथापि हृदयादि नानास्थानभेद से तथा मुखनिर्गमनादि नानाक्रिया के भेद से उसकी अपान-उदान-इत्यादि नाना संज्ञा ( नाम ) हो जाते हैं।

आकाश का निरूपण करते हैं। आकाश का शब्द ही विशेषगुण है। आकाश-काल दिशा–ये एक-एक व्यक्ति होने के कारण इनमें आकाशत्वादि जाति नहीं हैं-( क्योंकि एक व्यक्तिमात्र में वृत्ति को जातित्व का खण्डन किया है ) किन्तु शब्दाश्रयत्व ही आकाशत्व है–( क्योंकि आकाश शब्दाश्रय है ) वैशेषिक यह कथन इसलिये है कि आकाश में शब्द से अतिरिक्त और कोई विशेषगुण नहीं रहता है–( अपितु शब्द ही एक विशेषगुण रहता है ) शब्द को आकाश का विशेषगुण कहने से ( आकाश के अस्तित्व में ) प्रमाण ( अनुमानप्रमाण ) भी दिखला दिया। तथाहि–शब्द भी स्पर्श की तरह विशेषगुण है क्योंकि चक्षु से ग्रहण के अयोग्य तथा बहिरिन्द्रिय ( श्रोत्र ) से ग्रहण के योग्य शब्दत्वजाति वाला होने से। ( शब्द को जो गुण नहीं मानते जैसे वैयाकरण और मीमांसक–उनके मत का खण्डन करते हैं। ) दूसरे अनुमान से कि-शब्द किसी द्रव्य में समवायसम्बन्ध से रहता है- गुण होने से संयोग की तरह, इस अनुमान से शब्द किसी द्रव्य में समवाय सम्बन्ध से रहता है यह सिद्ध हो गया। अब

एवमपि नेदं लक्षणम्, ईदृशाव्यापकत्वस्य शरीरेपि सत्त्वात्। एतद्वारणायेन्द्रियपदोपादाने च स्पर्शग्राहकत्वविशेषणं व्यर्थम्। वस्तुतस्तु शरीरव्यापकत्वविशिष्टेन्द्रियत्वं स्पर्शग्राहकत्वविशिष्टेन्द्रियत्वं चेति लक्षणद्वयं बोध्यम्। तेन कालान्तर्भावेन तादृशाव्यापकत्वाभावेपि न क्षतिः। **स्पर्शग्राहत्वं**=स्पर्शविषयकलौकिकप्रत्यक्षजनकत्वम्। तेन मनसि नातिव्याप्तिः। यद्यपि जन्यविशेषगुणत्वावच्छिन्नं प्रति जन्यज्ञानत्वावच्छिन्नं प्रति वा मनस्त्वेन हेतुतया स्पर्शलौकिकप्रत्यक्षजनकत्वं दुर्वारम्, स्पर्शलौकिकप्रत्यक्षत्वाच्छिन्नकार्यतानिरूपितकारणताविवक्षणे तु असंभवः, परिमाणादिसाधारण्येन द्रव्यसमवेतवृत्तित्वविशिष्टलौकिकविषयतया स्पार्शनत्वावच्छिन्नं प्रति स्वसंयुक्तसमवायेन त्वक्त्वेन हेतुत्वात्। तथापि स्पार्शनत्वव्यापकधर्मावच्छिन्नकार्यतानिरूपितकारणताशून्यत्वे सति स्पार्शनत्वसमानाधिकरणधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वस्य तदर्थत्वात्। न चानेनैव शरीरादेरपि वारणे कृतमिन्द्रियपदोपादानेनेति वाच्यम्। त्वक्संयोगस्य सन्निकर्षविधया द्रव्यस्पार्शनत्वावच्छिन्नं प्रति कारणत्वात्तत्रातिव्याप्तेरित्यलम्। न च केशनखलोमादीनां त्वगिन्द्रियानाधारत्वादसंभव इति वाच्यम्। तेषां संयोगिद्रव्यत्वेन शरीरत्वाभावात्। **त्वगिति**। अस्य त्वचि स्थितमित्यर्थः। एतेन त्वगमात्रिकाऽऽवरणरूपं चर्म नेन्द्रियं नापि वायवीयमिति प्रत्युक्तम्। शैत्याभिव्यंजकत्वस्य फलोपधायकत्वस्य सिद्धये—**अङ्गसङ्गीति**। **अङ्गीसङ्गिसलिलं**=स्वेदः॥ ४२॥

मूले—**प्राणादिः**रित्यत्रादिपदग्राह्याः अपानसमानोदानव्यानाः। **हृदादी**त्यादिना—गुद-नाभि कण्ठ-सर्वशरीरपरिग्रहः। **मुखनिर्गमादीति**। मुखनासिकाभ्यां निष्क्रमणप्रवेशनादीत्यर्थः। आदिना मलादीनामधोनयनस्य-आहारमाकार्य, वन्हेरुद्दीपनस्य-ऊर्ध्वनयनस्य-नाड्यामन्नरसप्रसारणस्य च परिग्रहः। **लभते इति**। तथा च हृन्मात्रावच्छिन्नो वायुः प्राणसंज्ञां लभते इति भावः। एवमन्यत्रापि। न तु संज्ञाभेदेन संज्ञिभेदः-भेदकल्पनायां मानाभावादिति भावः। केचित्तु व्यानातिरिक्तवायवीयेन्द्रिये मानाभावः, व्यानस्यापि सर्वं शरीरव्यापकत्वस्य "व्यानः सर्वशरीरगः" इति वाक्येन कोशकृताऽभिहितत्वात्। न च सर्वशरीरगत्वस्य व्यानेऽभिधानात्सिद्धान्तसिद्धवायवीयेन्द्रियस्य तु तत्तच्छरीरभेदेन भेदोपगमात्कथमभेद इति वाच्यम्। सर्वशरीरग इत्यत्र शरीरपदस्य शरीरावयवपरतयाऽभेदे बाधकाभावात्। तथाचेन्द्रियान्तरकल्पनं निर्युक्तिकमेवेति प्राहुः। आकाशत्वं कालत्वं दिक्त्वं च न जातिः एकव्यक्तिकत्वात्। एकैव व्यक्तिराश्रयो यस्य स एकव्यक्तिकस्तस्य भावस्तत्त्वं तस्मादित्यर्थः। एकव्यक्तिमात्राश्रितत्वादिति हेतुः फलितः। यद्यप्यत्राऽऽकाशत्वं न जातिरित्येव च समुचितं, कालत्वदिक्त्वयोस्तत्तन्निरूपणावसरे जातित्वनिषेधौचित्यात्, तथापि प्रसंगादत्रैव युगपदभिदधाति **आकाशकालदिशामिति**। प्रसंगश्च स्मृतस्योपेक्षानर्हत्वम्। एकहेतुकानुमितिविषयत्वेन तयोरपि स्मृतत्वं

शब्दो द्रव्यसमवेतः गुणत्वात्संयोगवदित्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे-शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्वकप्रत्यक्षत्वात्सुखवत्। पाकजरूपादौ व्यभिचा-

शब्द किस द्रव्य में समवेत है यह अगाड़ी के अनुमानों द्वारा बतलाते हैं—"शब्दो न स्पर्शवद्विशेषगुणः" इस अनुमान से यह बतलाते हैं कि "शब्द-स्पर्शवाले पृथिवी-जल-तेज-वायु—इन चार का विशेषगुण नहीं है"—इसमें हेतु है कि "अग्निसंयोगासमवायिकारणकत्वाभावेसति" इत्यादि। अर्थात् पृथिव्यादिचतुष्टय के जो विशेषगुण रूप-रसादि हैं उनमें कुछ में तो अग्नि-संयोग असमवायिकारण होता है-अतः वे अग्निसंयोगासमवायिकारणक हैं—अर्थात् पाकज हैं। पाक नाम तेजःसंयोग का है—अग्नि भी तेज ही है। अतः पृथिव्यादिचतुष्टय के रूप-रस-आदि-गुण पाक ( अग्निसंयोग ) से जायमान हैं—अर्थात् परिवर्त्तनशील हैं—जैसे घट के साथ अग्नि-संयोग होने पर उसका पूर्वरूप ( श्यामरूप ) नष्ट हो जाता है—और रूपान्तर ( रक्तरूप ) उत्पन्न हो जाता है—अतः घट के रक्तरूप के प्रति अग्निसंयोग असमवायिकारण है। इसी प्रकार

---

बोध्यम् वारत्रयलेखने गौरवं च स्यादिति ध्येयम्। मूले **वैशेषिकपदस्य** वैयर्थ्यमाशङ्क्याह **वैशेषिक इति कथनं त्विति**। इत्थं च मूले शब्द इत्यस्य सावधारणतया शब्द एवेत्यर्थो बोध्यः। **एतेन**=विशेषगुणत्वकथनेन। **प्रमाणं**=आकाशे इत्यादिः। तच्च-शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादित्येवं रूपं बोध्यम्, एतदेव परिशेषानुमानं, दर्शितम्-सूचितम्।

अग्रिमानुमाने स्वरूपासिद्ध्युधारायाऽऽह **तथाहीति**। बहिरिन्द्रियग्राह्यजातिमत्त्वस्य घटादौ सत्त्वाद् व्यभिचारवारणाय चक्षुर्ग्रहणायोग्येति जातिविशेषणम् अन्यथा जातिमद्विशेषणत्वे बहिरिन्द्रियग्राह्यद्रव्यत्वादिकमादायाऽऽत्मनि व्यभिचारापत्तेः। अत एव रसनाद्ययोग्येति नाभिहितं तत्रैव तद्दोषतादवस्थ्यात्। बहिःपदं चात्मनि व्यभिचारवारणाय। अत्र च चक्षुर्ग्रहणायोग्येत्यस्य चाक्षुषलौकिकप्रत्यक्षाऽविषयेत्यर्थः। तेन घटः शब्दावच्छेदक इत्यलौकिकप्रत्यक्षविषये शब्दे न स्वरूपासिद्धिः। **बहिरिन्द्रियग्राह्येत्यस्य** बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयेत्यर्थः। तेन नात्मादौ व्यभिचारतादवस्थ्यम्। यस्य घटस्य न चाक्षुषं वृत्तं अपि तु त्वाचमेव तत्रैतद्धटत्वस्य तादृशतया व्यभिचारवारणाय जातीति। एतच्चानुमानमग्रिमद्रव्यसमवेतत्वसाधकानुमाने स्वरूपासिद्धिनिरासायेति बोध्यम्। **गुणत्वादिति**। तथाचोक्तपरिशेषानुमाने हेतौ विशेष्यासिद्धिनिरासः। विशेषणासिद्धिनिरासायाह **अग्निसंयोगाऽसमवायिकारणकत्वाभावे सतीति**। अग्निसंयोगकारणत्वाभावे सतीत्येव वाच्यम्। अन्यस्य वैयर्थ्यात्। **जलपरमाणुरूपादौ,** आदिना तैजसरूपपरमाणुरूपपरिग्रहः। **प्रत्यक्षत्वादित्यस्य** लौकिकप्रत्यक्षविषयत्वादित्यर्थः। बहिरि-

**रवारणायाकारणगुणपूर्वकेति । जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति । शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वात् रूपवत्,**

अन्यत्र भी समझ लेना। परन्तु 'शब्दगुण' ऐसा नहीं है कि पूर्व शब्द का अग्निसंयोग से नाश होकर शब्दान्तर उत्पन्न हो–इसीलिये शब्दस्पर्शवाले जो पृथिव्यादिचतुष्टय–उनका विशेषगुण नहीं है। एवं पृथिव्यादिचतुष्टय के विशेषगुण कारणगुणपूर्वक हैं "कारणगुणैः कार्ये ये गुणा उत्पद्यन्ते ते कारणगुणपूर्वकाः" अर्थात् कारण के गुणों द्वारा कार्य में जो गुण उत्पन्न होते हैं–वे कार्यगुण कारणगुणपूर्वक कहे जाते हैं–जैसे पटका रूप–पटका कारण जो तन्तु–उस तन्तु में जो रूप होगा–उसी रूप के अनुरूप होगा। परन्तु शब्द ऐसा नहीं है–अर्थात् शब्द के प्रति न तो अग्निसंयोग असमवायिकारण होता है–और न 'शब्द' कारणगुण-पूर्वक ही उत्पन्न होता है। अतः शब्द में अग्निसंयोगासमवायिकारणकत्वाभावविशिष्ट–अकारणगुणपूर्वकत्वविशिष्ट–प्रत्यक्षत्व हेतु है–क्योंकि शब्द का श्रोत्र से प्रत्यक्ष होता है। दृष्टान्त के लिये सुख है–क्योंकि सुख में भी जैसे तीनों अंशों वाला हेतु विद्यमान है–ऐसे ही पक्ष में (शब्द में) भी जानना–जैसा कि पूर्व में कह चुके हैं। पाकजरूप आदि में व्यभिचारवारण के लिये सत्यन्त दल दिया। [ यदि नहीं देंगे तो घट का जो पाकजरूप है वह कारण गुणपूर्वक तो है नहीं-क्योंकि कारण के गुणों द्वारा जहाँ कार्य में गुण उत्पन्न होते हैं–वे ही कारणगुण-पूर्वक कहलाते हैं–सो कार्य जो घट उसके रक्तरूपादिगुणों के प्रति–घटका कारण जो कपाल–उसके गुण कारण नहीं हैं–अपितु 'पाक' कारण है। अतः पाकजरूपादि में अकारणगुणपूर्वकत्व भी है–और प्रत्यक्षत्व भी है–इससे हेतु रह गया–और साध्य नहीं है–व्यभिचार हो गया। सत्यन्त दल दिया तो-पाकजरूपादि में सत्यन्तदल नहीं है–क्योंकि वे अग्निसंयोगासमवायिकारणक ही हैं ] पटरूपादि में व्यभिचारवारण के लिये–अकारणगुणपूर्वक कहा–कहने से वारण हो गया–कि पटरूप–तन्तुरूपपूर्वक है। जलपरमाणुरूप में व्यभिचारवारण के लिये 'प्रत्यक्षत्व' कहा तो परमाणु का प्रत्यक्ष नहीं होता है–अतः हेतु भी न रहा–साध्य भी न रहा–न व्यभिचारः। शब्द-दिक्-काल-मन–इन तीनों का गुण नहीं है–विशेषगुण होने से–रूप की

---

न्द्रिययोग्यत्वात्=बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वात्। तेन नात्मविशेषगुणेषु व्यभिचारः। **इत्थंच** = क्लृप्तानन्तभावे च। **अयावद्द्रव्यभावित्वेनेति**। स्वाश्रय-नाशाजन्यनाशप्रतियोगि यद्यत्द्भिन्नत्वेनेत्यर्थः। यावद्द्रव्यभावित्वं चाश्रयनाशनाश्य-त्वम्। तथाच शब्दो न वायुगुणः आश्रयनाशानाश्यत्वात्, वायुविशेषगुणानां चाश्रयनाशनाश्यत्वदर्शनादिति भावः। दीधितिकृतस्तु क्लृप्तशब्दनिमित्तकारणभाव-स्येश्वरस्यैव तत्समवायित्वमात्रं कल्प्यते विशिष्टधर्मिकल्पनापेक्षया धर्मकल्पनाया-मेव लाघवात्। न च शब्दो जीवजन्यः जीवादृष्टजन्यत्वात् सुखवत् इत्यनुमानेन जीवोपि शब्दसमवायी स्यादिति वाच्यम्। शब्दस्याऽदृष्टजन्यत्वेपि जीवजन्यत्वे साधकाभावात्। न च विनिगमकाभावेन तत्समवायित्वप्रसंगो दुर्वारः, न च जीवानामानन्त्येन स्पष्टमेव विनिगमकमिति वाच्यम्। प्रत्येकं विनिगमकाभावस्य एवमपि दुर्वारत्वात्। न च जीवे तत्कल्पने कारणत्व-

नात्मविशेषगुणः वहिरिन्द्रियग्राह्यत्वात् रूपवत्,—इत्थं च शब्दाधिकरणं नवमं द्रव्यं गगनात्मकं सिद्ध्यति। न च वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वाच्यम्। अयावद्द्रव्यभावित्वेन वायोर्विशेषगुणत्वाभावात्। तत्र च शरीरस्य विषयस्य चाऽभावादिन्द्रियं दर्शयति इन्द्रियमिति। ननु आकाशं लाघवादेकं सिद्धम्, श्रोत्रं पुनः पुरुषभेदाद्भिन्नं कथमाकाशं स्यादिति चेत्तत्राह एक इति। आकाशः एकः सन्नपि उपाधेः—कर्णशष्कुल्या भेदाद्भिन्नं श्रोत्रात्मकं भवतीत्यर्थः।

तरह। आत्मा का भी विशेषगुण नहीं है वहिरिन्द्रिय से ग्राह्य होने से रूप की तरह। इस प्रकार शब्द का अधिकरण नवम द्रव्य गगन सिद्ध होता है। प्रश्न—शब्द को कारणगुणपूर्वक मान लिया जाय कि सूक्ष्मशब्द वायु के अवयवों में उत्पन्न होता है—और फिर स्थूल वायु में अपने अनुरूप शब्द को उत्पन्न कर देता है। उत्तर—पृथिवी आदि चतुष्टय के गुण "द्रव्य-स्थितिकालपर्यन्तस्थितिमान्" होते हैं—यही यावद्द्रव्यभावित्व है—शब्द ऐसा नहीं है—अतः वायु का विशेषगुण शब्द नहीं है ॥१४४॥

---

समवायित्वकल्पनाद्व्यापाताद् गौरवमिति वाच्यम्। कार्यतावच्छेदककारणतावच्छेदकभेदेन कार्यकारणभावभेदाच्छब्दत्वावच्छिन्नकार्यतानिरूपितकारणताया भिन्नतया ईश्वरेपि तत्कल्पनाया दुर्वारत्वात्। अत उभयोरपि कल्पनाया आवश्यकत्वेन विनिगमकाभाव इति सांप्रतम्। शब्दस्य जीवसमवेतत्वकल्पने मनःसंयुक्तसमवायस्य संन्निकर्षस्य सुखादाविव शब्देपि वृत्तेः शब्दलौकिकमानसापत्तेर्दुर्वारत्वात्। न च संस्कारादीनां प्रत्यक्षापत्तिवारणाय तादात्म्येन संस्काराणां प्रतिवन्धकत्वकल्पनमिव शब्दस्य तथा कल्पने नापत्तिरिति वाच्यम्। ईदृशकल्पनाप्रयुक्तगौरवस्यैव विनिगमकत्वात्।

स्यादेतत्—संस्कारत्वेन धर्मत्वेनेत्यादिनानाप्रतिवध्यप्रतिवन्धकभावकल्पनापेक्षया लाघवाद्योग्यसुखादिगुणसाधारणजातिविशेषं प्रकल्प्य तादृशविजातीयगुणत्वेनैव मानसं प्रति हेतुताया एवोचितत्यात्, तादृशवैजात्यस्य शब्देऽकल्पनीयत्वेन न मानसापत्तिः। न च धर्मादौ विषयतया प्रत्यक्षापत्तिवारणाय विजातीयगुणत्वेन तादात्म्येन कारणत्वं विजातीयगुणत्वेन प्रतिवन्धकत्वं वेत्यत्रापि गमकाभावः। न च विजातीयगुणत्वेन प्रतिवन्धकत्वकल्पने विजातीयगुणभेदत्वे कारणतावच्छेदकत्वकल्पनायां गौरवम्, विजातीयगुणत्वे कारणतावच्छेदकत्वकल्पने तु लाघवसंभवेन स्पष्टमेव विनिगमकमिति वाच्यम्। विजातीयगुणत्वेन हेतुत्वोपगमे जनकतावच्छेदकलाघवसंभवेपि गुणमानसत्वस्य जन्यतावच्छेदकत्वकल्पनाया आवश्यकतया गुणत्वनिवेशप्रयुक्तगौरवस्य दुःसमाधेयत्वात्। मानसत्वस्यैव जन्यतावच्छेदकत्वोपगमे तु आत्मत्वादावपि विषयतया मानसोत्पत्त्या तादात्म्येन विजातीयगुणाभावेन व्यभिचारप्रसंगः। मानसत्वस्य गुणभेदजन्यतावच्छेदकत्व-

कल्पने तु तत्कव्यभिचाराभावात्। इयान्परं विशेषो-यदस्माकं जनकतावच्छेदके भवतश्च जन्यतावच्छेदके गौरवमिति वाच्यम्। विनिगमकाभावेन प्रतिबन्धकत्वस्य कारणत्वस्य च सिद्धावपि शब्दे प्रतिबन्धकतावच्छेदकवैजात्यस्वीकारेण कारणतावच्छेदकवैजात्यस्वीकारेण वा शब्दमानसस्योभयथापि वारणादिति चेत्। सत्यम्, उभयथा तद्वारणेपि विजातीयगुणभेदत्वेन हेतुत्वे प्रतिबन्धकतावच्छेदकवैजात्यस्य शब्दे कल्पनाया गुरुत्वाज्जीवनिष्ठत्वाभावः। न चानयैव युक्त्या मास्तु प्रतिबन्धकत्वपक्षः, हेतुतापक्षस्तु स्यादेव, तत्पक्षे कल्पनाविरहात्, अतो जीवनिष्ठत्वकल्पनेपि बाधकाभाव इति वाच्यम्। नहि गुणमानसत्वावच्छिन्नं प्रति विजातीयगुणत्वेन हेतुत्वं वक्तुं शक्यम्। गुणमानसवृत्तिजन्यतावच्छेदकवैजात्यस्य निर्विकल्पकावृत्तितया ज्ञानत्वेन सांकर्यात्। एतेन प्रतिबन्धकत्वपक्षोपि निरस्तः। अतश्च विशिष्यैव प्रतिबन्धकत्वकल्पनाया एवावश्यकतया जीवनिष्ठत्वे शब्दान्तर्भावे प्रतिबन्धकत्वकल्पनायां गौरवस्यैव विनिगमकत्वान्न तन्निष्ठत्वसिद्धिः। किं च विजातीयगुणत्वेन हेतुतापक्षे शब्दे लौकिकमानसापत्तिवारणं दुर्वारम्। आत्मसमवेतमानसापादिकायाः सामान्यसामग्र्याः आत्मत्वादाविव सत्त्वात्, आत्मत्वादिना हेतुत्वे तु शब्दस्येश्वरनिष्ठत्वसिद्धिरित्याहुः।

केचित्तु ज्ञानत्वेन सांकर्यवारणाय जनकतावच्छेदकवैजात्यस्य निर्विकल्पकेपि स्वीकारान्नानुपपत्तिः। न च निर्विकल्पकमानसापत्तिः। अनायत्या निर्विकल्पकत्वेन प्रतिबन्धकत्वाङ्गीकारात्। अनन्तप्रतिबध्यप्रतिबन्धकाभावकल्पनापेक्षया ईदृशकल्पनाया एव युक्तत्वात्।

अथवाऽस्तु रसादीनां चाक्षुषापत्तिवारणाय विषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति विषयतासंबन्धेन चाक्षुषवत्त्वेन हेतुत्वस्वीकारवत्संस्कारादिप्रत्यक्षवारणाय विषयतया मानसत्वावच्छिन्नं प्रति विषयतया मानसवत्त्वेन हेतुत्वाभ्युपगमस्य सयुक्तिकतया तत एव शब्दमानसापत्तेर्वारणात्।

न च विषयस्य प्रत्यक्षे सामान्यतो लौकिकविषयतासंबन्धेन साक्षात्कारवत्त्वेनैव हेतुत्वस्य क्लृप्ततया दृष्टान्तदार्ष्टान्तिके विषयस्य प्रत्यक्षे विषयकारणत्वानुरोधेन तथाकल्पनमिति वाच्यम्। विषयविधयैव चाक्षुषवत्त्वेन हेतुताया व्यवस्थापनीयत्वात्।

अथवा न वयं विषयस्य कारणत्वानुरोधेन तथा हेतुत्वमङ्गीकुर्मः किन्तु ईदृशापत्तिवारणायैवेति नानुपपत्तिरिति शब्दस्य जीवनिष्ठत्वेपि मानसापत्त्यसंभवाद्विनिगमकाभावः। अतश्च क्लृप्तानां विनिगमनाविरहेऽक्लृप्तस्तदाश्रयः सेत्स्यतीति गगननामकं द्रव्यमित्याहुः। तदसत्। ईदृशयुक्त्या शब्दमानसवारणेपि जीवनिष्ठत्वे आत्ममनःसंयोगादीनां फलोपधायकत्वकल्पने गौरवं जागरूकमेव। तच्च जीवोपधायकत्वमिव ममेश्वरोपधायकत्वकल्पनं न गौरवसंपादकम्। भेर्यादिसंयोगानां तत्कल्पनं तूभयवादिसिद्धमेवेति न तत्कल्पना गौरवापादिका। न चेदृशयुक्त्या जीवनिष्ठत्वाभावेपि दिक्कालनिष्ठत्वमीश्वरनिष्ठत्वं वेत्यत्र विनिगमकाभावेनाऽतिरिक्ताकाशसिद्धिरिति वाच्यम्। दीधितिकृन्मते दिक्कालयोरीश्वरानतिरिक्तत्वात्। न

च मयापि जीवनिष्ठत्वे शब्दस्यात्ममनःसंयोगस्योपधायकत्वं न कल्प्यते इति वाच्यम् । आत्मसमवेतविशेषगुणत्वावच्छिन्नं प्रत्येव हेतुतया शब्दं प्रति तदुपधायकत्वस्यार्थसिद्धत्वात् । इत्थं च जीवनिष्ठत्वकल्पने गौरवादीश्वरे एव तत्कल्पनम् । नन्वेवमाकाशानभ्युपगमे श्रोत्रं क्वान्तर्भूतम्, तदभ्युपगमे तु कर्णविवरावच्छिन्नाकाश एवेति चेत्, अस्मन्मते तादृशविवरावच्छिन्नेश्वर एव तथा स्यादिति न काप्यनुपपत्तिः । शब्दग्रहे तादृशविवरावच्छिन्नाकाशसमवाय इवास्मन्मते तादृशविवरावच्छिन्नेश्वरसमवाय एव ग्राहक इति साम्यात् ।

परे तु भेर्यादीनामेव शब्दो गुणः, भेर्यादेस्तद्व्याप्यवच्छेदकत्वस्य भेर्यां शब्द इति प्रतीत्यनुरोधेन स्वीकार्यत्वात् । एवमवच्छेदकतासंबन्धेन शब्दत्वावच्छिन्नं प्रति समवायेन भेरीदण्डसंयोगस्य हेतुत्वकल्पनाया आवश्यकत्वाच्च । मन्मते तु समवायेन शब्दत्वावच्छिन्नं प्रति भेरीतद्दण्डसंयोगानामेव हेतुत्वकल्पनादीश्वरे गगने जीवे वा न तत्समवायित्वं कल्प्यते । न च भेर्यां शब्दसमवायित्वकल्पने भेरीसमवेतनाशत्वावच्छिन्नं प्रति भेरीनाशत्वेन हेतुतायां व्यभिचारः, विनापि भेरीनाशं शब्दनाशादिति वाच्यम् । विद्यमानायां भेर्यां तत्समवेतसंयोगादिनाशाकालिकेन भेरीनाशविशिष्टतत्समवेतनाशत्वे जन्यतावच्छेदकताया आवश्यकतया तत एव व्यभिचारवारणसंभवात् । न च भेर्यां शब्दसमवायित्वस्वीकारे भेरीचक्षुःसंयुक्तसमवायस्य शब्देपि सत्त्वाच्चाक्षुषापत्तिः । चक्षुःसंयुक्तसमवायस्य रूपादाविव रसादावपि सत्त्वाच्चाक्षुषापत्तिवारणाय चाक्षुषत्वावच्छिन्नप्रतिबन्धकतावच्छेदकवैजात्यस्य रसादौ स्वीकाराच्चापत्तिरित्यभिधीयते, तदा मयापि तादृशवैजात्यस्य शब्दे स्वीकारान्न तादृशचाक्षुषापत्तिः । न चैतादृशवैजात्यस्य शब्दे कल्पनायामेव गौरवमिति वाच्यम् । ईदृशकल्पनाया एव युक्तत्वात्, इतरथा गन्धादीनामीश्वरसमवेतत्वं पृथिव्यादेस्तु तदवच्छेदकत्वमित्यस्य वारणं दुर्वारं स्यात् । अथवा चाक्षुषत्वावच्छिन्नं प्रति चाक्षुषत्वेन हेतुत्वोपगमादेव न शब्दचाक्षुषापत्तिः । एतेन तादृशवैजात्यस्य भवतः शब्दे कल्पनं, मम तु शब्दसमवायित्वस्येश्वरे कल्पनं, विपरीतं चाऽनेकभेर्यादौ तत्कल्पनप्रयुक्तगौरवं जागरूकमिति परास्तम् । ममापि तादृशवैजात्यस्य तत्राकल्पनात् । तवानेकत्र शब्दावच्छेदकत्वकल्पनाया मम शब्दसमवायित्वकल्पनातुल्यत्वात् । चाक्षुषत्वावच्छिन्नं प्रति विजातीयगुणत्वेन हेतुतापक्षस्तु नातीव साधीयान् इति प्रागेवावेदितम् ।

मम तु प्रतिभाति-मास्तु ईश्वरे जीवे वा शब्दसमवायित्वम्, न वा दर्शितदिशा भेर्यादावपि, किन्तु तत्समवायित्वं क्वापि नाभ्युपगन्तव्यम्, मानाभावात् । शब्दस्याऽसमवेतत्वकल्पनाया एव युक्तत्वात् । न च तस्य गुणत्वशालितया समवेतत्वम्, नियमे मानाभावात् । गुणत्वस्यैव तत्रानभ्युपगमाद्वा । चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वस्य गुणत्वव्याप्यत्वेऽनुकूलतर्काभावात् । इतरथा वाय्वाद्यन्यतमं द्रव्यं रूपवत् द्रव्यत्वादित्यनुमानेन रूपसिद्धिप्रसंगः । यदि पक्षान्यत्वस्य तत्रोपाधित्वमित्युच्यते-तदा तुल्यं प्रकृतेपि । न च तस्यासमवेतत्वे भेर्यां

कल्पने तु उक्तव्यभिचाराभावात्। इयान्परं विशेषो-यदस्माकं जनकतावच्छेदके भवतश्च जन्यतावच्छेदके गौरवमिति वाच्यम्। विनिगमकाभावेन प्रतिबन्धकत्वस्य कारणत्वस्य च सिद्धावपि शब्दे प्रतिबन्धकतावच्छेदकवैजात्यस्वीकारेण कारणतावच्छेदकवैजात्यस्वीकारेण वा शब्दमानसस्योभयथापि वारणादिति चेत्। सत्यम्, उभयथा तद्वारणेऽपि विजातीयगुणभेदत्वेन हेतुत्वे प्रतिबन्धकतावच्छेदकवैजात्यस्य शब्दे कल्पनाया गुरुत्वाज्जीवनिष्ठत्वाभावः। न चानयैव युक्त्या मास्तु प्रतिबन्धकत्वपक्षः, हेतुतापक्षस्तु स्यादेव, तत्पक्षे कल्पनाविरहात्, अतो जीवनिष्ठत्वकल्पनेऽपि बाधकाभाव इति वाच्यम्। नहि गुणमानसत्वावच्छिन्नं प्रति विजातीयगुणत्वेन हेतुत्वं वक्तुं शक्यम्। गुणमानसवृत्तिजन्यतावच्छेदकवैजात्यस्य निर्विकल्पकावृत्तितया ज्ञानत्वेन सांकर्यात्। एतेन प्रतिबन्धकत्वपक्षोऽपि निरस्तः। अतश्च विशिष्यैव प्रतिबन्धकत्वकल्पनाया एवावश्यकतया जीवनिष्ठत्वे शब्दान्तर्भावे प्रतिबन्धकत्वकल्पनायां गौरवस्यैव विनिगमकत्वान्न तन्निष्ठत्वसिद्धिः। किं च विजातीयगुणत्वेन हेतुतापक्षे शब्दे लौकिकमानसापत्तिवारणं दुर्वारम्। आत्मसमवेतमानसापादिकायाः सामान्यसामग्र्याः आत्मत्वादाविव सत्त्वात्, आत्मत्वादिना हेतुत्वे तु शब्दस्येश्वरनिष्ठत्वसिद्धिरित्याहुः।

केचित्तु ज्ञानत्वेन सांकर्यवारणाय जनकतावच्छेदकवैजात्यस्य निर्विकल्पकेऽपि स्वीकारान्नानुपपत्तिः। न च निर्विकल्पकमानसापत्तिः। अनायत्या निर्विकल्पकत्वेन प्रतिबन्धकत्वाङ्गीकारात्। अनन्तप्रतिबध्यप्रतिबन्धकाभावकल्पनापेक्षया ईदृशकल्पनाया एव युक्तत्वात्।

अथवाऽस्तु रसादीनां चाक्षुषापत्तिवारणाय विषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति विषयतासंबन्धेन चाक्षुषवत्त्वेन हेतुत्वस्वीकारवत्संस्कारादिप्रत्यक्षवारणाय विषयतया मानसत्वावच्छिन्नं प्रति विषयतया मानसवत्त्वेन हेतुत्वाभ्युपगमस्य सयुक्तिकतया तत एव शब्दमानसापत्तेर्वारणात्।

न च विषयस्य प्रत्यक्षे सामान्यतो लौकिकविषयतासंबन्धेन साक्षात्कारवत्त्वेनैव हेतुत्वस्य क्लृप्ततया दृष्टान्तदार्ष्टान्तिके विषयस्य प्रत्यक्षे विषयकारणत्वानुरोधेन तथाकल्पनमिति वाच्यम्। विषयविधयैव चाक्षुषवत्त्वेन हेतुताया व्यवस्थापनीयत्वात्।

अथवा न वयं विषयस्य कारणत्वानुरोधेन तथा हेतुत्वमङ्गीकुर्मः किन्तु ईदृशापत्तिवारणायैवेति नानुपपत्तिरिति शब्दस्य जीवनिष्ठत्वेऽपि मानसापत्त्यसंभवाद्विनिगमकाभावः। अतश्च क्लृप्तानां विनिगमनाविरहेऽक्लृप्तस्तदाश्रयः सेत्स्यतीति गगननामकं द्रव्यमित्याहुः। तदसत्। ईदृशयुक्त्या शब्दमानसवारणेऽपि जीवनिष्ठत्वे आत्ममनःसंयोगादीनां फलोपधायकत्वकल्पने गौरवं जागरूकमेव। तत्र जीवोपधायकत्वमिव ममेश्वरोपधायकत्वकल्पनं न गौरवसंपादकम्। भेर्यादिसंयोगानां तत्कल्पनं तूभयवादिसिद्धमेवेति न तत्कल्पना गौरवापादिका। न चेदृशयुक्त्या जीवनिष्ठत्वाभावेऽपि दिक्कालनिष्ठत्वमीश्वरनिष्ठत्वं वेत्यत्र विनिगमकाभावेनाऽतिरिक्ताकाशसिद्धिरिति वाच्यम्। दीधितिकृन्मते दिक्कालयोरीश्वरानतिरिक्तत्वात्। न

च मयापि जीवनिष्ठत्वे शब्दस्यात्ममनःसंयोगस्योपधायकत्वं न कल्प्यते इति वाच्यम् । आत्मसमवेतविशेषगुणत्वावच्छिन्नं प्रत्येव हेतुतया शब्दं प्रति तदुपधायकत्वस्यार्थसिद्धत्वात् । इत्थं च जीवनिष्ठत्वकल्पने गौरवादीश्वरे एव तत्कल्पनम् । नन्वेवमाकाशानभ्युपगमे श्रोत्रं क्वान्तर्भूतम्, तदभ्युपगमे तु कर्णविवरावच्छिन्नाकाश एवेति चेत्, अस्मन्मते तादृशविवरावच्छिन्नेश्वर एव तथा स्यादिति न काप्यनुपपत्तिः । शब्दग्रहे तादृशविवरावच्छिन्नाकाशसमवाय इवास्मन्मते तादृशविवरावच्छिन्नेश्वरसमवाय एव ग्राहक इति साम्यात् ।

परे तु भेर्यादीनामेव शब्दो गुणः, भेर्यादेस्तत्वाप्यवच्छेदकत्वस्य भेर्यां शब्द इति प्रतीत्यनुरोधेन स्वीकार्यत्वात् । एवमवच्छेदकतासंबन्धेन शब्दत्वावच्छिन्नं प्रति समवायेन भेरीदण्डसंयोगस्य हेतुत्वकल्पनाया आवश्यकत्वाच्च । मन्मते तु समवायेन शब्दत्वावच्छिन्नं प्रति भेरीतद्दण्डसंयोगानामेव हेतुत्वकल्पनादीश्वरे गगने जीवे वा न तत्समवायित्वं कल्प्यते । न च भेर्यां शब्दसमवायित्वकल्पने भेरीसमवेतनाशत्वावच्छिन्नं प्रति भेरीनाशत्वेन हेतुतायां व्यभिचारः, विनापि भेरीनाशं शब्दनाशादिति वाच्यम् । विद्यमानायां भेर्यां तत्समवेतसंयोगादिनाशाद्कालिकेन भेरीनाशविशिष्टतत्समवेतनाशत्वे जन्यतावच्छेदकताया आवश्यकतया तत एव व्यभिचारवारणसंभवात् । न च भेर्यां शब्दसमवायित्वस्वीकारे भेरीचक्षुःसंयुक्तसमवायस्य शब्देपि सत्त्वाच्चाक्षुषापत्तिः । चक्षुःसंयुक्तसमवायस्य रूपादाविव रसादावपि सत्त्वाच्चाक्षुषापत्तिवारणाय चाक्षुषत्वावच्छिन्नप्रतिबन्धकतावच्छेदकवैजात्यस्य रसादौ स्वीकाराश्चापत्तिरित्यभिधीयते, तदा मयापि तादृशवैजात्यस्य शब्दे स्वीकारान्न तादृशचाक्षुषापत्तिः । न चैतादृशवैजात्यस्य शब्दे कल्पनायामेव गौरवमिति वाच्यम् । ईदृशकल्पनाया एव युक्तत्वात्, इतरथा गन्धादीनामीश्वरसमवेतत्वं पृथिव्यादेस्तु तदवच्छेदकत्ववारणं दुर्वारं स्यात् । अथवा चाक्षुषत्वावच्छिन्नं प्रति चाक्षुषत्वेन हेतुत्वोपगमादेव न शब्दचाक्षुषापत्तिः । एतेन तादृशवैजात्यस्य भवतः शब्दे कल्पनं, मम तु शब्दसमवायित्वस्येश्वरे कल्पनं, विपरीतं चाऽनेकभेर्यादौ तत्कल्पनप्रयुक्तगौरवं जागरूकमिति परास्तम् । ममापि तादृशवैजात्यस्य तत्राकल्पनात् । तवानेकत्र शब्दावच्छेदकत्वकल्पनाया मम शब्दसमवायित्वकल्पनातुल्यत्वात् । चाक्षुषत्वावच्छिन्नं प्रति विजातीयगुणत्वेन हेतुतापक्षस्तु नातीव साधीयान् इति प्रागेवावेदितम् ।

मम तु प्रतिभाति-मास्तु ईश्वरे जीवे वा शब्दसमवायित्वम्, न वा दर्शितदिशा भेर्यादावपि, किन्तु तत्समवायित्वं क्वापि नाभ्युपगन्तव्यम्, मानाभावात् । शब्दस्याऽसमवेतत्वकल्पनाया एव युक्तत्वात् । न च तस्य गुणत्वशालितया समवेतत्वम्, नियमे मानाभावात् । गुणत्वस्यैव तत्रानभ्युपगमाद्वा । चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वस्य गुणत्वव्याप्यत्वेऽनुकूलतर्काभावात् । इतरथा वाय्वाद्यन्यतमं द्रव्यं रूपवत् द्रव्यत्वादित्यनुमानेन रूपसिद्धिप्रसंगः । यदि पद्मान्यत्वस्य तत्रोपाधित्वमित्युच्यते-तदा तुल्यं प्रकृतेपि । न च तस्यासमवेतत्वे भेर्यां

जन्यानां जनकः कालो जगतामाश्रयो मतः ।
परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ॥ ४५ ॥

कालं निरूपयति । जन्यानामिति । तत्र प्रमाणं दर्शयितुमाह

काल का निरूपण करते हैं–जन्यमात्र ( कार्यमात्र ) का कारण ( निमित्त कारण ) काल है। काल मे "जगताम्" इत्यादि ग्रन्थ से प्रमाण दिखलाते हैं कि वह काल जगत् का आधार है–तथाहि–काल जगत्मात्र का आधार कैसे है यह प्रतीतिप्रमाण

---

शब्द इति प्रत्ययस्य का गतिः। तत्रावच्छेदकताख्यस्वरूपसंबन्धस्यैव स्वीकरणीयतया तेन संबन्धेन तत्प्रत्ययोपपत्तेः। न चाऽवच्छेदकतासंबन्धावच्छिन्नवृत्तित्वशालिनः संबन्धान्तरावच्छिन्नवृत्तित्वमिति नियमस्य शब्दासमवेतत्वपक्षे भङ्गप्रसङ्गः। इष्टापत्तेः, तादृशनियमस्याऽप्रयोजकत्वात्, असमवेतस्यापि शब्दस्य कालिकेन वृत्तित्वाभ्युपगमाच्च। तादृशसंबन्धावच्छिन्नवृत्तित्वशालिनः समवायावच्छिन्नवृत्तित्वमिति नियमस्तु अभावादौ व्यभिचारी अप्रयोजकश्चेत्यवगन्तव्यम्। इदमत्रावधेयम्—समवायेनैव शब्दस्य भेर्यादावभ्युपगमाद् भेर्यादेरेव तत्समवायित्वम्। असमवेतत्वे चाऽवच्छेदकतासंबन्धस्य कल्पनाया एवावश्यकत्वादिति युक्तमुत्पश्यामः। औपनिषदस्तु **तस्मादाकाशः संभूत** इति श्रुत्या आकाशस्येश्वरजन्यत्वमाचक्षाणाः अनित्यत्वमाहुः। न च लाघवेन नित्यत्वस्य सिद्धतया कथं श्रुतेर्जन्यत्वबोधकत्वसंभव इति वाच्यम्। लाघवस्य प्रमाणानुग्राहकस्य प्रमाणबाधकत्वानुपपत्तेः। लाघवेन नित्यत्वे सिद्धे श्रुतेरन्यथानयनकल्पनमेव युक्तम्, तथाहि ईश्वरस्य कार्यमात्रे जनकस्य न समवायिकारणाद्यनपेक्ष्य कार्यजनकत्वमित्येतद्बोधिका। इत्थं चैवं व्याख्येया श्रुतिः—तस्मादाकाशः संभूत आकाशादिति पूर्वान्वयी। तस्मादीश्वरात्-आकाशात् = आकाशसहकृतात्। आकाशः = शब्दः। आकाशपदस्य शब्दाश्रयशक्तत्वेपि विशेष्ये बाधाद्विशेषणमात्रपर्यवसायित्वात्। संभूतः = उत्पन्नः। वायुर्वायोरित्येकान्वयः। तस्मादित्यनुपज्यते। ईश्वरसहकृताद्वायोः सकाशाद्वायुः संभूत इत्यर्थः। अग्निरग्नेरित्येकान्वयः। उभयत्रापि अग्निपदं तेजोपलक्षकम्। ईश्वरसहकृतात्तेजसस्तेजोत्पत्तिरित्यर्थः। आपोऽद्भ्यः। पूर्ववदेवार्थः। पृथिवीत्यत्रापि पृथिव्या इत्यध्याहारः। यद्वा ईश्वरस्य कार्यजनकत्वेपि निमित्तभूतसहकारेणैव तदुत्पत्तिरित्येकदेशेन बोधयति पृथिवीति। अद्भ्य इति तु काकाक्षिगोलकन्यायेन पृथिवीत्यत्रापि अन्वेति। तथा चायमर्थः—निमित्तभूतजलेभ्यः या पृथिवी संभूता सा तस्मादेव तत्सहकृतादेवेति न काप्यनुपपत्तिरिति कृतमधिकेन। तत्र चेति=आकाशे चेत्यर्थः। भिन्नमिति। तथाच चैत्रादिकर्णशष्कुल्यवच्छिन्नमाकाशं चैत्रादिश्रोत्रमित्यर्थः ॥१४४॥

मूले—जन्यानामिति। तथाच कालिकसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नाधिकरणत्वावच्छिन्नकारणत्वं कालस्य

जगतामिति। तथाहि—"इदानीं घट" इत्यादि प्रतीतिः सूर्यपरिस्पन्दादिकं यदा विषयीकरोति, तदा सूर्यपरिस्पन्दादिना घटादेः संबन्धो वाच्यः, स च संबन्धः संयोगादिर्न संभवतीति काल एव तत्संबन्धघटकः कल्प्यते। इत्थं च तस्याश्रयत्वमपि सम्यक्॥ ४५॥

से दिखलाते हैं—"इदानीं घट" "इस समय में घट है" यह प्रतीति सूर्यपरिस्पन्द को विषय करती है तब सूर्य परिस्पन्द ( सूर्यगति ) के साथ घट का भी कोई सम्बन्ध कहना चाहिये। वह सम्बन्ध संयोग आदि तो हो नहीं सकते ( क्योंकि द्रव्यद्रव्ययोरेव संयोगः ) अतः ऐसा सम्बन्ध कहना चाहिये कि जिस सम्बन्ध का घटक काल हो। ( वह सम्बन्ध है "स्वाश्रयतपन संयोगि संयुक्तत्व" स्वपद से सूर्यपरिस्पन्द—उसका आश्रय तपन ( सूर्य ) उस सूर्य का संयोगी काल—और काल से संयुक्त हुवा घट—संयुक्तत्व घट में रहा। इस प्रकार सूर्य की क्रिया के साथ घट का सम्बन्ध काल के द्वारा ही होता है—( अतः काल का स्वीकार करना परमावश्यक है ) इस प्रकार जगत् का आधार काल है यह बात भी ठीक ही है।

---

लक्षणम्। अथ कालस्य कार्यमात्रं प्रति निमित्तकारणत्वे किं मानमिति चेत्। "तदुत्पत्त्यधिकरणस्य तदुत्पत्तिहेतुत्वम्, तदुत्पत्तिहेतोश्च तद्धेतुत्वम्" इति नियमस्यैव प्रमाणत्वात्। कालस्य कार्योत्पत्त्यधिकरणत्वं तु अद्य कपाले घटो भविष्यतीति प्रत्ययात्। तथाहि-प्रत्ययोपस्थापितं भविष्यत्वं वर्तमानप्रागभावप्रतियोगित्वम् धात्वर्थश्चोत्पत्तिः। उत्पत्तौ च तादृशप्रतियोगित्वस्यान्वयः। अद्यादिकालस्य कपालस्य चाऽऽधेयतया उत्पत्तावन्वयः। प्राचां मते नामार्थधात्वर्थयोरपि भेदेनान्वयोपगमात्। तथाच कपाले घटो भविष्यतीत्यादौ वर्तमानप्रागभावप्रतियोगिनी या एतत्कपालवृत्तिरद्यादिकालवृत्तिरुत्पत्तिस्तदाश्रयो इति शाब्दबोधः। एवंचाऽत्र तत्तत्कार्योत्पत्त्यधिकरणत्वेन कालो विषयीक्रियते। एवं च तत्तत्कार्यविशेषं प्रति तत्तत्कालविशेषस्य हेतुत्वे सिद्धे "यद्विशेषयो"रित्यादिन्यायेन कार्यमात्रं प्रति कालस्य हेतुतासिद्धेः। तत्र=काले। **जगतामाश्रयो मत इति**। कालः सर्ववानिति प्रतीत्या सर्वाधिकरणत्वेन कालः सिद्ध्यतीति भावः। ननु एतादृशप्रतीतिः दिग्विषयिण्येवास्तु अतिरिक्तकालकल्पने गौरवादिति न केवलमनया प्रतीत्या कालः सिद्ध्यति, परन्तु प्रमाणान्तरेण काले सिद्धे प्रकृतप्रतीतिबलात्सर्वाधारत्वं सिद्ध्येदित्याह **इदानीमित्यादिना**। **संभवतीति**। इतीत्यनन्तरं स्वाश्रयतपनसंयोगिसंयोग एव संबन्धो वाच्यः, तत्रेति शेषः। न चाऽऽकाशमेव तत्संबन्धघटकमास्तामिति वाच्यम्। आकाशदिगात्मनां विनिगमनाविरहेणाऽतिरिक्तकालस्य संबन्धघटकत्वात्। **कल्प्यते** इति। अनुमानं तु इदानीं घट इति प्रतीतिः परंपरासंबन्धविषया विशिष्टबुद्धित्वात्। **इत्थंचेति**। अतिरिक्तकालसिद्धौ चेत्यर्थः। **सम्यगिति**। कालः सर्ववानिति प्रतीतेरतिरिक्तकालविषयकत्वस्योचितत्वादिति भावः॥ ४५॥

प्रमाणान्तरं दर्शयति परापरत्वेति। परापरत्वबुद्धेरसाधारणं निमित्तं काल एव। परापरत्वयोरसवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः काल एकः कल्प्यते इति भावः। ननु एकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादत आह क्षणादिरिति। कालस्त्वेकोऽप्युपाधिभेदात्

काल का साधक प्रमाणान्तर दिखलाते हैं—"परापरत्व" इत्यादि ग्रन्थ से। (यह अनुभव होता है कि "चैत्र मैत्र से बड़ा है" जब चैत्र बड़ा है तो मैत्र चैत्र से छोटा है—तो इसका यही अर्थ हुआ कि चैत्र में कालिक परत्व है—और मैत्र में कालिक अपरत्व है। यह कालिक परत्वापरत्व बुद्धि सूर्य की परिस्पन्द (क्रिया) के द्वारा ही सम्पन्न हो सकती है—क्योंकि चैत्रपिण्ड के साथ सूर्यपरिस्पन्द का सम्बन्ध अधिक है अतः चैत्र में कालिकपरत्व है (ज्येष्ठत्व है) और मैत्र के साथ कम है— अतः मैत्र में कालिक अपरत्व है (कनिष्ठत्व है) यह हम ऊपर ही कह चुके हैं कि सूर्य की परिस्पन्द का चैत्र के साथ जो सम्बन्ध (स्वाश्रयतपन संयोगी संयुक्तत्व) है—उसका घटक काल ही है। सो उस कालिक परत्वापरत्व का समवायिकारण चैत्र-मैत्र हुवे—और असमवायिकारण उनके साथ काल का संयोग हुआ—उस संयोग का आश्रय काल भी हुआ—इस प्रकार भी संयोगाश्रयतया काल की सिद्धि हो गयी।

यही मूल में कहा है कि—"परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः कालः कल्प्यते"। प्रश्न—काल यदि एक सिद्ध हो गया तब क्षण, दिन-मास, वर्ष आदि समय का भेद कैसे होगा। उत्तर-काल यद्यपि एक है तथापि उपाधि भेद से क्षण आदि व्यवहार काल में होता है।

---

परत्वापरत्वबुद्धेरिति। ज्येष्ठे परत्वप्रत्ययः, कनिष्ठेऽपरत्वप्रत्ययः, स च परत्वापरत्वगुणविशेषाधीनः, परत्वापरत्वे साऽसमवायिकारणके भावकार्यत्वात्, असमवायिकारणं च तयोः कालपिण्डसंयोग एवेति परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया कालसिद्धिरिति भावः। "परत्वापरत्वयोः" इत्यस्यैव वक्तुमुचितत्वेपि तद्बुद्धिपर्यन्तानुधावनं कालिकपरत्वापरत्वयोः प्रमाणं दर्शयितुम्। रामः परः, लक्ष्मणोऽपर इति विलक्षणप्रतीत्यैव कालिकपरत्वापरत्वयोः सिद्धिरिति भावः। ननु तथापि आकाशदिगात्ममनोभिः पिण्डसंयोगस्याऽसमवायिकारणत्वं स्यात् किं कालकल्पनयेत्यत आह लाघवादिति। आकाशदिग्भ्यां पिण्डसंयोगस्य असमवायिकारणत्वे जीवात्मभिः प्रत्येकं विनिगमनाविरहादात्ममनसोस्त्वनन्तत्वान्न तथात्वम्, किन्तु लाघवादतिरिक्तः काल एव निरुक्ताऽसमवायिकारणसंयोगाश्रयत्वेन कल्प्यते इति भावः। ननु यदि काल एकः तदा क्षणादिव्यवहारः कथं स्यादित्याशंकते नन्वेकस्येति। समयभेदः = समयभेदव्यवहारः। एकस्मिन् विरुद्धनानाव्यवहारविषयत्वाभावादिति भावः। उपाधित इति। तथाचैकस्यैव कालस्य किंचिद्धर्मविशिष्टस्य क्षणत्वम्, किंचिद्धर्मविशिष्टस्य दिनत्वम्, न तु केवलस्येति भावः।

क्षणादिव्यवहारविषयः। उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा—पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्नं कर्म वा।

यहाँ क्षण की उपाधियाँ चार प्रकार से कही गयी हैं—तथाहि-आप अवयव नाशाधीन अवयवी का नाश करते चले जाइये—त्रसरेणु नाश के लिये द्वयणुक नाश अपेक्षित है—अब द्वयणुक नाश कैसे हो यह विचारणीय है। सो परमाणु का तो नाश होगा नहीं—क्योंकि वह नित्य है—अतः द्वयणुक नाश के लिये १—प्रथम क्षण में क्रिया --२-द्वितीय क्षण में उन दोनों परमाणुओं में उस क्रिया के द्वारा विभाग हो जावेगा (अर्थात् दोनों परमाणु अलग-अलग हो जावेंगे) ३-तृतीय क्षण में विभाग से उस पूर्वसंयोग का नाश होगा—जिस परमाणु-द्वय के संयोग से द्वयणुक बना हुवा है। ४-चतुर्थक्षण में उन दोनों परमाणुवों का किसी उत्तर देश के साथ संयोग हो जावेगा—और द्वयणुक नाश भी हो जावेगा। ५-फिर पंचम क्षण में क्रिया नाश होगा।

वही मूल में कहा है कि—"क्षणादिः स्यादुपाधितः" उपाधि बतलाते हैं—स्वजन्यविभागेत्यादि। स्वपद से क्रिया—क्रियाजन्य जो विभाग—उस विभाग का प्रागभाव, जिस काल में क्रिया है उस काल में भी है—और क्रिया के पूर्वकाल में भी है—अर्थात् विभाग प्रागभाव जिस काल में विभाग होगा उस विभाग काल से पूर्व के जितने भी काल हैं सब कालों में है—

---

क्षणत्वव्यवहारौपयिकानुपाधीनाह **उपाधिस्त्विति**। क्रिया—ततो विभागः—विभागात् पूर्वसंयोगनाशः—तत उत्तरदेशसंयोगः इति चत्वारः क्षणाः कल्पनीयाः। तत्र क्रिया प्रथमक्षणः, तत्परिचायकोपाधिमाह **स्वजन्येति**। स्वं क्रिया तज्जन्यो यो विभागस्तत्प्रागभावः क्रियाक्षणे तादृशप्रागभावावच्छिन्नं कर्म प्रथमक्षणव्यवहारयोग्यम्। घटगतैकक्रियानाशोत्तरोत्पन्नतत्समवेतक्रियान्तरजन्यविभागान्तरप्रागभावविशिष्टस्य प्रथमकर्मणः क्षणचतुष्टयस्थायिनः क्षणत्वापत्तिरतः स्वजन्येति। द्वितीयक्षणस्य प्रथमक्षणत्वापत्तिवारणाय प्रागभावेति। तथाच स्वजन्यविभागप्रागभावावच्छिन्नं यत्स्वं तदेव प्रथमक्षणव्यवहारौपयिकोपाधिरिति भावः। नन्वेवं प्रथमक्षणे क्षणव्यवहारोपपादनेपि द्वितीयक्षणे कथं तदुपपादनीयम्, तत्र क्रियाजन्यविभागोत्पत्त्या विभागप्रागभावाऽसंभवात्। न च तत्र द्वितीयक्षणोत्पन्नक्रियान्तरस्यैव स्वजन्यविभागप्रागभावविशिष्टस्य क्षणत्वमिति वाच्यम्। प्रतिक्षणं क्रियोत्पत्तौ मानाभावात्, अतस्तत्रापि क्षणव्यवहारोपपादकमुपाधिमाह **पूर्वसंयोगेति**। विभागमात्रस्योपाधित्वे विभागोत्तरकालेपि द्वितीयक्षणत्वापत्तिः, पूर्वसंयोगमात्रस्योपाधित्वे विभागपूर्वकालेपि द्वितीयक्षणत्वापत्तिरत उभयोपादानम्। स्वजन्यविभागनाश्यपूर्वसंयोगविशिष्टस्वजन्यविभाग इत्यर्थः। स्वपदद्वयं तत्तत्क्रियापरम्। स्वजन्यविभागनाश्यत्वविशेषणेन-स्वजन्यत्वनिवेशनेन च स्वजन्यविभागस्योदासीनपूर्वसंयोगविशिष्टस्य द्वित्रिक्षणवृत्तित्वेपि, उदासीनविभागस्य स्वजन्यविभागनाश्यसंयोग-

न चोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यात् इति वाच्यम्। कर्मान्तरस्यापि सत्त्वादिति। महाप्रलये क्षणादिव्यवहारो यद्यस्ति तदाऽनायत्या ध्वंसेनोपपादनीय इति। दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति।

तब क्रियाकाल भी विभागकाल का पूर्वकाल है—सो क्रियाकाल में भी विभाग प्रागभाव वर्त्तमान है—"क्रियाकाल" इस शब्द का अर्थ है क्रियात्मक जो काल—अर्थात् क्रिया ( कर्म ) रूप जो उपाधि तादृश उपाधिरूप जो काल—सो यह कर्मात्मककाल विभाग प्रागभाव से अवच्छिन्न ( युक्त ) है। यह स्वजन्याविभागप्रागभावावच्छिन्नकर्मरूप उपाध्यात्मक काल वही काल है जिस काल में परमाणु में क्रिया हुयी—अतः स्वजन्यविभागप्रागभावावच्छिन्न-जो कर्म-तादृश कर्मरूप जो उपाधि-तादृश उपाधिरूप काल का नाम ही एक क्षण है।

इसी प्रकार परमाणु में क्रिया होने के बाद ( द्वितीय क्षण में ) परमाणुद्वय में विभाग होता है—विभाग होने के पश्चात "पूर्वसंयोगनाश" होता है—परन्तु पूर्वसंयोगनाशकाल से पूर्वकाल में पूर्वसंयोग से अवच्छिन्न ( युक्त ) होकर विभाग केवल एक क्षण ही रह सकता है—अतः वह विभाग भी एक क्षण का उपाधि है। उसके बाद तृतीय क्षण में पूर्वसंयोग नाश होता है—और उसके अग्रिम क्षण में अर्थात् चतुर्थ क्षण में उन परमाणुद्वय का उत्तरदेश के साथ संयोग होता है—अर्थात् उत्तर संयोग होता है—परन्तु तृतीय क्षण में अर्थात् पूर्व संयोगनाश क्षण में उत्तरसंयोग का प्रागभाव पूर्वसंयोगनाश से अवच्छिन्न होकर बैठा है—अतः पूर्वसंयोग नाशावच्छिन्नोत्तर संयोगप्रागभाव भी एक ही क्षण हुआ—अर्थात् उसे भी क्षण का उपाधि कह सकते हैं। चतुर्थक्षण मे परमाणु द्वय का उत्तर देश के साथ संयोग होता है और कर्म भी चतुर्थक्षण में है—क्योंकि क्रिया ( कर्म ) का नाश तो पंचमक्षण में होगा—सो चतुर्थक्षण में कर्म उत्तर संयोग से अवच्छिन्न होकर है—अतः उत्तर संयोग वच्छिन्ना कर्म भी एक क्षण का उपाधि बन गया। प्रश्न—उत्तर संयोग के बाद क्षण व्यवहार नहीं बनेगा—क्योंकि पंचमक्षण मे क्रिया भी नष्ट हो जाती है। उत्तर—उस क्रिया के विनाश के बाद परमाणु में क्षणव्यवहार का नियामिका दूसरी क्रिया होगी। प्रश्न—कर्म एवं विभाग-आदि उपाधियाँ ही यदि क्षण व्यवहार नियामिका है तो महाप्रलय में क्षण व्यवहार न बन सकेगा—क्योंकि महाप्रलय में कोई भी क्रिया नहीं है। उत्तर-महाप्रलय में भी यदि क्षण व्यवहार होता हो तो अगत्या अनित्य पदार्थों की ध्वंसरूप उपाधि के द्वारा ही वह उत्पन्न हो सकेगा। वस्तुतः "क्षणादिव्यवहारो यद्यस्ति" यहाँ यदि पद से यह सूचित होता है कि नैयायिकों के यहां महाप्रलय ही नहीं होता है—यदि होवे भी तो उसमें क्षणव्यवहार नहीं होता है। दिन आदि का व्यवहार उन-उन क्षणों के समुदायविशेषों से होता है।

---

विशिष्टस्य तथात्वेपि न क्षतिः। तृतीयक्षणे तदुपपादकोपाधिमाह पूर्वसंयोगनाशेति। पूर्वसंयोगनाशस्योत्तरक्षणादावपि सत्त्वादुक्तं उत्तरसंयोगप्रागभावो वेति। उत्तरसंयोगप्रागभावस्य पूर्वपूर्वक्षणादावपि सत्त्वात्पूर्वसंयोगनाशावच्छिन्नेति। स्वजन्यविभागजन्यपूर्वसंयोगनाशविशिष्टस्वजन्योत्तरसंयोगप्रागभाव इति तदर्थः। स तृतीयक्षणोपाधिरित्यर्थः। न च पूर्वसंयोगनाशक्षणे एव कथं नोत्तरसंयोग इति

वाच्यम्। उत्तरसंयोगे पूर्वसंयोगस्य प्रतिबन्धकत्वात्। अथ पूर्वसंयोगोत्तरसंयोगयोः केन रूपेण प्रतिबध्यप्रतिबन्धकभावः। न चाऽवच्छेदकतासंबन्धेनोत्तरसंयोगं प्रति अवच्छेदकतासंबन्धेन पूर्वसंयोगः प्रतिबन्धकः, तेन सत्यपि पृष्ठादौ वस्त्रसंयोगे शरे च पुंखजादिसंयोगे शरीरशरकर्मणा न संयोगानुपपत्तिरिति वाच्यम्। कारणाकारणस्य-संयोगजन्ये कार्याकार्यसंयोगे व्यभिचारात्, शाखादौ यदवच्छेदेनाङ्गुल्यादिसंयोगस्त-दवच्छेदेनैव हस्तादिसंयोगोदयात्। एवमंगुल्यादौ यत्सूक्ष्मभागावच्छेदेन शाखादि-संयोगस्तदवच्छेदेनैव हस्तादावपि शाखादिसंयोगोदयाच्च। अवयवस्य वाऽवयवावय-वादेरपि अवयनिष्ठसंयोगावच्छेदकत्वात्। अथ कर्मजन्यसंयोगं प्रति उक्तप्रत्या-सत्त्या संयोगत्वेन प्रतिबंधकत्वम्। न चैवं मूलावच्छेदेन स्तंभादिसंयोगवत्त्वे दण्डादेः सत्यपि स्तंभाद्यग्रावच्छेदेन देशान्तरसंयोगापत्तिरिति वाच्यम्। मूला-वच्छेदेनैव तत्तद्देशान्तरसंयोगानभ्युपगमात्, अग्रावच्छेदेन देशान्तरसंयोगस्य सर्वसिद्धत्वादिति चेन्न। यत्र दण्डादौ पूर्वसंयोगविनाशकाले उत्तरदेशारंभकावयवेन समं संयोगोत्पत्तिः—उत्तरदेशोत्पत्तिश्च ततस्तदवयवसंयोगावच्छेदकावच्छेदेनैव दण्डादेरुत्तरदेशसंयोगस्तत्र व्यभिचारात्। न च तत्राऽवयवसंयोगज एवोत्तरसंयोगो न तु कर्मज इति वाच्यम्। स्वजन्यसंयोगस्यैव कर्मनाशकतया तत्कर्मणो यावदाश्रय-मवस्थानप्रसंगात्। किं च भूतलाद्युत्तरदेशोपरि सत्यपि गगनादिसंयोगे निष्क्रियजल-तेजोवायुघृतादिसंयोगे च घटादिसंयोगोदयाद्व्यभिचारः। अपि च यत्र पूर्वदेश-संयुक्तांगुल्यां क्रिया ततोऽङ्गुलीपूर्वदेशसंयोगनाशः हस्तपूर्वदेशसंयोगः ततोऽङ्गुल्यास्त-स्मिन्नेव पूर्वदेशेऽवच्छेदकान्तरे पुनः संयोगोऽङ्गुलीपूर्वदेशविभागात् हस्तपूर्वदेश-विभागश्च तत्राङ्गुल्याः पुनः पूर्वदेशसंयोगं प्रति हस्तपूर्वदेशसंयोगस्याङ्गुल्या यस्तत्सूक्ष्मभागावच्छेदेन पुनः पूर्वदेशसंयोगस्तत्सूक्ष्मभागावच्छेदेनैव वर्तमानस्य प्रतिबन्धकत्वापत्तौ च क्षणद्वयापलापापत्तेः।

अथ तदीयकर्मजनितसंयोगं प्रति उक्तप्रत्यासत्त्या आरंभकसंयोगातिरिक्ततन्नि-ष्ठसंयोगत्वेन प्रतिबन्धकत्वमतो न किंचेत्याद्युक्तदोषद्वयावकाशः। आरंभकसंयोगाति-रिक्तत्वविशेषणात्तन्तूनां सत्यपि आरंभकसंयोगे तदविरोधिकर्मणा अप्यन्तरे आरंभ-कसंयोगावच्छेदकावच्छेदेनैव जलालोकादिसंयोगोदयेपि न व्यभिचारः। तत्रारंभक-संयोगनाशोपगमे द्रव्यनाशप्रसंगात् इति चेन्न।

स्तिमितवस्त्रादौ सत्यपि अभिमुखावच्छेदेन जलघृतादिसंयोगे उत्तरसंयोगोद-यात्, पृष्ठलग्नवस्त्रे चाभिमुखावच्छेदेन शरीरसंयोगे सत्यपि शरीरवस्त्रयोरप्यन्तरे वस्त्रकर्मणा जलालोकगगनादिना संयोगोदयाच्च। न च तत्रापि विभागात्तत्तत्संयोग-नाशः कल्प्यते इति सान्निध्यबलाच्च नोपलभ्यत इति वाच्यम्। तथासति संयुक्तद्रव्य-मात्रस्यैव देशान्तरगमनबाधापत्त्याऽनुभवविरोधप्रसंगात्। उच्यते। तदीयकर्मजनित-संयोगत्वावच्छिन्नं प्रति क्रियाविरहविशिष्टतन्निष्ठसंयोगत्वेन प्रतिबन्धकत्वम्। उत्तरदेशोपरि निष्क्रियजलालोकादिसंयोगेपि अन्यदीयकर्मणा संयोगोत्पादात्, शाखायामंगुलीसंयोगसत्त्वेपि अङ्गुलीसंयोगजन्यहस्तसंयोगाच्च व्यभिचारवारणाय तदीयकर्मजनतेति। स्तिमितवस्त्रादौ जलादिसंयोगः पृष्ठलग्नवस्त्रजत्वादौ शरीर-

शरादिसंयोगः न क्रियाविरहविशिष्टः वज्रजत्वादिक्रियोत्पत्तिदशायां तत्संयुक्तजलादि-शरीरशरादेरपि सक्रियत्वात्। न च तदानीं तेषां सक्रियत्वेपि यदाकदाचित्क्रियावि-रहसत्त्वादेव तद्विशिष्टत्वमिति वाच्यम्। क्रियाविरहविशिष्टत्वेन प्रतिबन्धकतया यदाकदाचित्क्रियाविरहसत्त्वेपि तदानीं विशिष्टाभावसत्त्वात्। संयोगस्य क्रियाविरह-विशिष्टत्वं चाऽवच्छेदकताघटितसामानाधिकरण्यसंबन्धेन, तेन क्रियाया अव्याप्य-वृत्तित्वेपि न क्षतिरिति।

स्वतन्त्रास्तु तदीयकर्मजनितसंयोगत्वावच्छिन्नं प्रति तन्निष्ठाऽऽत्मसंयोगत्वे-नैव प्रतिबन्धकत्वम्, लाघवात्। न च गगनादिकमादाय विनिगमनाविरह इति वाच्यम्। गगनत्वादेरुपाधितया आत्मत्वस्य च जातितया लाघवस्यैव विनिगम-कत्वात्। न च पृथिवीजलतेजःसंयोगमादाय विनिगमनाविरह इति वाच्यम्। स्तिमितवस्त्रादौ सत्यपि घृतजलादिसंयोगे भूतलादिसंयोगोदयात्, पृष्ठलग्नवस्त्र-जलादौ सत्यपि शरीरशरादिसंयोगे कपालादौ सत्यप्यारंभककपालाद्यन्तरसंयोगे चाभ्यन्तरे जलाऽऽलोकगगनादिसंयोगोदयाच्च व्यभिचारात्, सर्वत्र पृथिव्यादिसंयो-गकल्पनाप्रसंगाच्च। क्रियामात्रस्याऽऽत्मसंयोगासमवायिकारणकतया आत्मनो विभु-तया चाऽऽत्मसंयोगस्य सर्वत्राऽवश्यं सत्त्वादिति प्राहुः।

अन्ये तु तदधिकरणावच्छिन्नसंयोगस्तदन्याधिकरणावच्छिन्नसंयोगं प्रति प्रतिबन्धकः, इहाऽनयोः संयोग इति प्रतीतेः संयोगाश्रयोभयाधिकरणस्यापि संयोगावच्छेदकत्वात्। समानावच्छेदकत्वं च प्रत्यासत्तिः। नचैवंसति पूर्वदेश-संयोगे तदन्याधिकरणावच्छिन्नत्वविशिष्टसंयोगो मा जायताम्, किन्तु संयोग-सामान्यापत्तिर्दुर्वारैवेति वाच्यम्। तत्तत्क्रियाव्यक्तेस्तत्तद्देशावच्छिन्नसंयोगव्यक्तौ एव हेतुतया विशेषसामग्रीविरहादेवापादनाऽसंभवादित्याहुरित्यन्यत्र विस्तरः।

ननु कर्मजसंयोगं प्रति पूर्वदेशविभाग एव हेतुरस्तु किं पूर्वसंयोगस्य प्रति-बन्धकत्वेन। तदीयकर्मजनिततदवच्छिन्नसंयोगत्वावच्छिन्नं प्रति कालिकसामाना-धिकरण्यप्रत्यासत्त्या क्रियाविरहविशिष्टतदवच्छिन्नतन्निष्ठसंयोगाभावत्वेन, तदवच्छि-न्नतन्निष्ठात्मसंयोगाभावत्वेन वा कारणत्वमपेक्ष्य तादृशप्रत्यासत्त्या क्रियाविरहविशि-ष्टतदवच्छिन्नतन्निष्ठविभागत्वेन तदवच्छिन्नतन्निष्ठात्मविभागत्वेन वा कारणत्वे कार-णतावच्छेदकशरीरलाघवात्, विभागस्य हेतुत्वे कालिकविशेषणतामात्रस्य संयोगा-भावस्य हेतुत्वे च प्रतियोग्यनधिकरणवृत्तित्वविशिष्टकालिकविशेषणत्वस्य कारणत्व-दिशि प्रत्यासत्तिघटकतया प्रत्यासत्तिलाघवाच्च। यत्र पटस्य मूलाऽग्रावच्छेदेनाऽऽ-त्मना क्रमिकसंयोगद्वयं- ततोऽग्रावच्छेदेन पटस्य क्रिययाऽग्रावच्छेदेन पटात्म-विभागः—मूलावच्छेदेन पटे कर्मोत्पत्तिश्चेत्येकः कालः—तत्र तदग्रिमक्षणे एव मूलाग्रोभयावच्छेदेन पटस्योत्तरदेशसंयोगापत्तिः, अग्रावच्छेदेन पटे आत्मविभाग-सत्त्वादतस्तदवच्छिन्नेति विभागसंयोगयोर्विशेषणम्, विशिष्टान्तस्य विभाग-विशेषणत्वादालोकादिकर्मजनिताऽऽलोकादिविभागसत्त्वेपि निष्क्रियवृक्षादिरूपपूर्व-देशविभागोत्पत्तिसमये नोत्तरसंयोगोत्पत्तिः। न च विभागस्य हेतुत्वे पूर्वसंयोग-

नाशसमये एवोत्तरसंयोगापत्तिरिति वाच्यम्। क्षणैकविलंबस्य शपथनिर्णेयत्वादि ष्टापत्तेः सुकरत्वात्। यत्र पूर्वसंयोगनाशोत्पत्तिसमये आश्रयनाशसामग्री तत्राऽनन्तसंयोगादिकल्पनायाश्च फलमुखत्वात्।

अथ यत्र विभागमजनित्वैव क्रियया संयोगो जन्यते तत्र विभागो व्यभिचारी संयोगात्यन्ताभावस्तु तत्राप्यस्ति-तद्यथा कपालक्रियया कपालात्मविभागकाले कपाले वेगघटयोरुत्पत्तिः तदनन्तरं तेन वेगेन घटे वेगोत्पत्तिः—कपालात्मसंयोग-नाशश्चेत्येकः कालः। तदानीं च कपालात्मसंयोगान्न घटात्मसंयोगः विनश्यतोऽसमवायिकारणत्वाभावात्। अथ वेगाद् घटे कर्म ततस्तेन कर्मणा विनैव विभागं घटोत्तरसंयोगः, संयोगं विना विभागाऽसंभवात्। न च क्रियामात्रस्यादृष्टवदात्म-संयोगासमवायिकारणकत्वनियमात्तेन विना कथं घटे वेगात्कर्मेति वाच्यम्। तादृशनियमे मानाभावादिति चेन्न।

तावता आत्मविभागमात्रस्य कारणत्वपक्षे व्यभिचारेपि पूर्वदेशमात्रविभाग-स्य कारणत्वपक्षे व्यभिचाराभावात्। घटे वेगोत्पत्तिसमये अन्ततो वाय्वादिक्रियया वाय्वादिनापि संयोगसंभवात्तेन समं विभागं जनयित्वा एवोत्तरसंयोगजननात्, तदानीं वाय्वादिसंयोगविभागादिकल्पनायाश्च फलमुखत्वात्; कारणाकारणसंयोगा-त्मकाऽसमवायिकारणस्य कार्यसहवर्त्तितया हेतुत्वे मानाभावेन कपालात्मसंयोग-नाशकाले घटात्मसंयोगोत्पत्तौ बाधकाभावेनात्मविभागपक्षेपि व्यभिचारविरहाच्च। न च कारणसंयोगस्य पूर्ववर्त्तितामात्रेण हेतुत्वे विनश्यदवस्थतज्जन्यानन्तसंयोग-विभागतद्ध्वंसतत्कार्यकारणभावकल्पनापत्त्या तदपेक्ष्य कार्यसहवर्त्तितया तस्य कारणत्वमेवोचितमिति वाच्यम्। तस्य फलमुखत्वात्। मैवम्, फलमुखगौरवस्यापि दोषताया भट्टाचार्यैः स्वहस्तितत्वात्। पूर्वसंयोगनाशक्षणे एवोत्तरसंयोगाभ्युपगमे विभागस्यापि कारणत्वे मानाभावाच्च, क्षणैकविलंबस्य शपथनिर्णेयतया विभागोत्पत्ति-समये एवोत्तरसंयोगोत्पत्तौ इष्टापत्तेः सुकरत्वात्। किंच सामान्यतः क्रियाविरह-विशिष्टतदवच्छिन्नतन्निष्ठविभागत्वेन हेतुत्वपक्षे कारणाकारणविभागजन्यनिष्क्रियजला-लोकदादिविभागमादाय निष्क्रियवृक्षाद्यात्मकपूर्वदेशसंयोगसत्त्वेपि वेगोत्पत्तिसमये उत्तरसंयोगापत्तेः, निष्क्रियजन्यालोकाद्यात्मकपूर्वदेशसंयोगसत्त्वेपि कारणाकारणवि-भागजन्यनिष्क्रियजलालोकादिविभागमादाय निष्क्रियवृक्षादिविभागमादायोत्तरसं-योगापत्तेश्चेति संक्षेपः। चतुर्थक्षणोपपादकमुपाधिमाह **उत्तरसंयोगेति**। उत्तरसंयोग-मात्रस्योपाधित्वे पंचमादिक्षणानामपि चतुर्थक्षणत्वापत्तिः, क्रियामात्रस्योपाधित्वे क्षणचतुष्टयस्य चतुर्थक्षणत्वापत्तिरत उभयोपादानम्। स्वजन्यसंयोगावच्छिन्नं स्वमेवोपाधिरिति भावः। **कर्मान्तरस्यापीति**। पंचमक्षणे पुनः कर्मान्तरमुत्पद्यते तदेव प्रथमक्षणोपाधिः, एवं पूर्ववच्चत्वारः क्षणाः कल्पनीया इत्याशयः। ननूक्तक्षण-त्वस्य महाप्रलयेऽनुपपत्तिः, तत्र कर्मादेरभावादत आह **महाप्रलये इति**। **ध्वंसेनैवेति**। स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंस एवोपाधिः, तद्विशिष्टकाल एव क्षण-व्यवहारविषय इति भावः।

दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥
उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।

दिशं निरूपयति दूरान्तिकेति । दूरत्वमन्तिकत्वं च दैशिकं परत्वमपरत्वं बोध्यम् । तद्बुद्धेरसाधारणं बीजं दिगेव । दैशिकपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया लाघवादेका दिक् सिद्ध्यतीति भावः ॥ ४६ ॥

ननु यद्येकैव दिक् तदा प्राचीप्रतीच्यादिव्यवहारः कथमुपपद्यते इत्यत आह उपाधीति। यत्पुरुषस्योदयगिरिसन्निहिता या दिक् सा तस्य प्राची । एवमुदयगिरिव्यवहिता या दिक् सा प्रतीची । एवं यत्पुरुषस्य सुमेरुसन्निहिता या दिक् सोदीची । तद्व्यवहिता या दिक् सा त्ववाची । "सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित" इति नियमात् ।

आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥ ४७ ॥

आत्मानं निरूपयति आत्मेन्द्रियाद्यधिष्ठातेति । आत्मत्वजातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिद्ध्यति । ईश्वरेपि सा जाति-

दिशा का निरूपण करते हैं—पदार्थों में दूर तथा समीप बुद्धि का कारण एक तथा नित्य दिशा कही है । दूरत्व और अन्तिकत्व का अर्थ है दैशिक परत्व और अपरत्व-सो उस दैशिक परत्वापरत्वबुद्धि का असाधारण कारण दिक् ही है । दैशिकपरत्वापरत्व का असमवायिकारण जो दिग्देशसयोग उसका आश्रय दिशा है—अतः दिशा की सिद्धि हो गयी । प्रश्न—दिशा तो एक ही है तब उसमें प्राची-प्रतीची आदि व्यवहार कैसे उत्पन्न होगा । उत्तर—दिशा एक है तो भी उपाधिभेद से उसकी प्राची-प्रतीची आदि सज्ञायें हो जाती हैं । उपाधि बतलाते हैं कि जिस पुरुष की उदयाचल के पास जो दिशा हो उसके लिये वह पूर्व दिशा कहलाती है—एवं ठीक उसके व्यवहित ( पीठ पीछे की ) जो दिशा पश्चिम हुई । वैसे ही जिस पुरुष की सुमेरुपर्वत के पास जो दिशा हो उसके लिये वह उत्तर दिशा हुवी—और ठीक उसके व्यवहित ( पीठ पीछे की ) जो दिशा वह दक्षिण हुई । क्योंकि सुमेरुपर्वत जम्बूद्वीप के जो भारत आदि ९ वर्ष ( खण्ड ) हैं—उन सबके हमेशा उत्तर भाग में ही रहता है ।

आत्मा का निरूपण करते हैं—आत्मा इन्द्रिय-शरीर आदि का अधिष्ठाता ( धारण करनेवाला-नियन्त्रण करने वाला ) है । क्योंकि करण सर्वदा सकर्तृक होता है । सुख-दुःखादि का समवायिकारण जब कि आत्मा है —तो समवायिकारणतावच्छेदकतया आत्मत्वजाति

---

दैशिकपरत्वापरत्वे असमवायिकारणजन्ये भावकार्यत्वाद् घटवत्। असमवायिकारणं च दिक्पिण्डसंयोग एव तदाश्रयतया दिक् सिद्ध्यतीति भाव ॥ ४६ ॥

ननु आत्मत्वजातौ मानाभावः—मनःसंयोगादिसन्निकर्षस्य कारणतावच्छेदके आत्ममनःसंयोगनिष्ठाऽऽत्मविशेषगुणाऽसमवायिकारणतावच्छेदके चाऽऽत्मत्व-

रस्त्येव, अदृष्टादिरूपकारणाभावाच्च न सुखाद्युत्पत्तिः, नित्यस्य स्वरूपयोग्यस्य फलावश्यंभावनियम इत्यस्याप्रयोजकत्वात् ।

परे तु ईश्वरे सा जातिर्नास्त्येव, प्रमाणाभावात् । न च दशमद्रव्यत्वापत्तिः, ज्ञानवत्त्वेन विभजनादित्याहुः ।

की सिद्धि हो गयी। वह आत्मत्वजाति ईश्वर में भी है। प्रश्न—सुख-दुःखादि समवायिकारणतावच्छेदकतया सिद्ध जो आत्मत्वजाति वह जब कि ईश्वर में है तो ईश्वर में सुख-दुःखादि की उत्पत्ति होनी चाहिये। उत्तर—सुख-दुःख आदि का कारण जो अदृष्ट—वह ईश्वर में नहीं है—अतः ईश्वर में सुख-दुःख आदि की उत्पत्ति नहीं होती है। प्रश्न—ईश्वर में भी सुख-दुःख आदि की स्वरूपयोग्यत्वरूपा कारणता मान ली जावे—रहा यह कि ईश्वर में यदि सुख-दुःख आदि की कारणता मान ली—तो ईश्वर की स्थिति नित्य होने के नाते सर्वदा रहेगी—तब उसमें कभी सुख-दुःख आदि कार्योत्पत्ति अवश्य ही होनी चाहिये—क्योंकि "नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावः" ऐसा नियम है। उत्तर—इस नियम का जल परमाणु में व्यभिचार देखा जाता है—क्योंकि जलीयपरमाणु में स्नेह की स्वरूपयोग्यत्वरूपा कारणता होने पर भी स्नेह की उत्पत्ति परमाणु में नहीं मानते—कारण कि जलपरमाणु में स्नेह नित्य है—अतः "नित्यस्यस्वरूपयोग्यत्वे" यह नियम अप्रयोजक है। दूसरे नैयायिक लोगों का कहना है कि सुख-दुःखादि समवायिकारणतावच्छेदकतया सिद्ध जो आत्मत्वजाति—वह ईश्वर में नहीं है—क्योंकि कोई प्रमाण नहीं। प्रश्न—तब ईश्वर को दशमद्रव्य मानना होगा। उत्तर—नहीं—ज्ञानवत्त्वेन विभाग कर दिया जायगा—अर्थात् ज्ञानवान् जो होगा वही आत्मा—सो ज्ञानवान् जीवात्मा भी है और ईश्वर भी है। इस प्रकार ज्ञानवत्त्वेन दोनों आत्मा का संग्रह हो जायगा। इन्द्रियादीति—इन्द्रियों में शरीर में चैतन्य ( ज्ञानवत्त्व ) का सम्पादक परम्परया आत्मा ही है—( अभिप्राय यह है कि शरीर में और इन्द्रियों में वास्तविक में चैतन्य नहीं है—उनमें जो चैतन्य की प्रतीति होती है वह परम्परा से अर्थात् इन्द्रियों में करणतासम्बन्ध से और शरीर में अवच्छेदकतासम्बन्ध से होती है। क्योंकि शरीर और इन्द्रिय जड़ हैं—उनमें चैतन्य का सम्पादन आत्मा के द्वारा ही होता है।

---

स्याऽप्रवेशेन सन्निकर्षनिष्ठकारणतावच्छेदकतया आत्ममनःसंयोगनिष्ठाऽसमवायिकारणतावच्छेदकतया च तदसिद्धेः, तत्तदात्मत्वस्य आत्मवृत्तितत्तद्व्यक्तित्वरूपतया आत्मत्वाघटितत्वात्। आत्मतत्समवेतादिलौकिकमानसप्रत्यक्षं प्रति तादात्म्यसमवेतत्वादिसंबन्धेनात्मत्वेन सामान्यतः कारणत्वस्य सन्निकर्षविचारावसरे निराकरिष्यमाणत्वात्तादृशकारणतावच्छेदकतयापि तत्सिद्धेर्दुर्वचत्वात्। परात्मनः परस्यायोग्यतयाऽनुगतप्रत्ययस्यैवाऽसिद्धत्वेन ततोपि तत्सिद्धेर्दुर्वचत्वात्। वेदपुराणादौ आत्मव्यवहारस्य च ज्ञानादिमत्त्वेनैव संभवात्। न चाऽऽत्मत्वविशिष्टलौकिकविषयतासंबन्धेन अहं सुखीत्यादिमानसत्वावच्छिन्नं प्रति मनःसंयोगादिसन्निकर्षस्य हेतुतया सन्निकर्षकार्यतावच्छेदकसंबन्धघटकतया तत्सिद्धिरिति वाच्यम्।

विजातीयसंयोगत्वादिना सन्निकर्षस्य हेतुत्वनये वस्तुगत्या आत्मनिष्ठत्वोपलक्षितस्य लौकिकविषयत्वस्य कार्यतावच्छेदकसंबन्धतया आत्मत्वस्य तद्घटकत्वात्। तदितरमतेपि तत्तदात्मव्यक्तित्वविशिष्टस्य वस्तुगत्या तत्तद्व्यक्तिवृत्तित्वोपलक्षितस्य लौकिकविषयत्वस्य कार्यतावच्छेकसंबन्धतयाऽऽत्मत्वस्य तत्राऽप्रवेशात्। न चाऽऽत्मविशेषगुणत्वावच्छिन्नं प्रति आत्ममनःसंयोगस्याऽसमवायिकारणतयाऽसमवायिकारणकार्यतावच्छेदकतयैव तत्सिद्धिरिति वाच्यम्। तादृशाऽसमवायिकारणकार्यतावच्छेदकतया ज्ञानत्वादिव्यापकजातिविशेषस्यैव स्वीकारादित्यत आह आत्मत्वजातिस्त्विति। सुखदुःखादीति। आदिपदग्राह्याः ज्ञानेच्छाद्वेषप्रयत्नधर्माधर्मभावनाः। तथा चाऽऽत्मविशेषगुणत्वावच्छिन्नं प्रति आत्मत्वेन समवायिकारणतया समवायिकारणतावच्छेदकतयैवाऽऽत्मत्वजातिसिद्धिरिति भावः। नन्वेतादृशकार्यकारणभावे मानाभावः, ज्ञानादिकं प्रति समवायसंबन्धेन विशेषतो निमित्तकारणानामभावेनैवाऽऽत्मविशेषगुणस्याऽन्यत्रोत्पादाऽसंभवात्। चक्षुःसंयोगादिसन्निकर्षकार्यतावच्छेदकस्य तत्तत्पुरुषसमवेतत्वघटिततया निर्विकल्पकस्याप्यात्मभिन्ने आपादनाऽसंभवात्। आत्ममनःसंयोगस्य वैजात्येन तत्तदात्मनिष्ठतत्तन्मनःसंयोगत्वेन आत्मविशेषगुणं प्रति असमवायिकारणतयाऽसमवायिकारणविरहादेवान्यत्राऽऽत्मविशेषगुणोत्पादाऽसंभवाच्च। सर्वेषामेव समवायिकारणव्यक्तीनां समवायसंबन्धेन स्वसमवेतगुणादिकं प्रति तादात्म्यसंबन्धेन तत्तद्व्यक्तित्वेन समवायिकारणत्वस्यावश्यकतया यावद्विशेषसामग्रीबाधादप्यन्यत्र तदुत्पादवारणसंभवाच्च। एतेन ज्ञानादिसमवायिकारणतावच्छेदकतया तत्सिद्धिरित्यपि प्रत्युक्तमिति चेत्। न। सुखदुःखद्वेषभावनाधर्माधर्मसमवायिकारणतावच्छेदकतया आत्मत्वजातिसिद्धेः। सुखत्वाद्यवच्छिन्नं प्रति आत्मत्वेन समवायिकारणत्वात्। न च तादृशकार्यकारणभावे मानाभावः, सुखादिकं प्रति यथाक्रमं धर्मा-धर्माऽनिष्टसाधनत्वानुभवविहितनिषिद्धकर्मणां समवायसंबन्धेन निमित्तकारणत्वस्यावश्यकत्वादेवाऽतिप्रसंगभंगात्, भावकार्याणां समवायिकारणकत्वनियमस्य तु द्रव्यत्वेन सत्त्वेन तत्तद्व्यक्तिसमवेतसत्त्वं प्रति सत्त्वेन द्रव्यत्वेन वा क्लृप्तवैजात्येनैव कारणत्वमस्तु अदृष्टादेर्निमित्तकारणत्वादेवाऽतिप्रसंगविरहादिति वाच्यम्। क्लृप्ताऽगुरुव्याप्यधर्मसत्त्वे व्यापकधर्मेण कारणत्वाऽकल्पनवत् फलानुपधायकव्यावृत्तेन अल्पफलानुपधायकसाधारणेन वा धर्मेण कारणत्वे सुवचे बहुतरफलानुपधायकसाधारणधर्मेण न कारणत्वकल्पनेति सकलप्रामाणिकसिद्धत्वात्। एवं च चाक्षुषादिसमवायिकारणतावच्छेदकतयापि आत्मत्वजातिसिद्धिः।

नव्यास्तु आत्मत्वजातौ प्रत्यक्षमेव मानम्, सर्वेषामेव स्वस्मिन्नात्मनि आत्मत्वस्याऽहं सुखीत्यादिप्रत्यक्षसिद्धत्वात्। न च परस्य तादृशात्मत्वविषयकप्रत्यक्षसत्त्वे मानाभाव इति वाच्यम्। परेषामेव तत्र साक्षित्वात्। न च तथापि अतीतानागतशरीरिणामात्मनि तादृशात्मत्वविषयकप्रत्यक्षसत्त्वे मानाभावेन तत्राऽऽत्मत्वसत्त्वे मानाभाव इति वाच्यम्। तत्रापि "आत्मा वारे मैत्रेयी"त्यादिसर्वात्मविषयकश्रौतात्मव्यवहारस्यैव मानत्वात्। लाघवाद्विद्यमानशरीरिणामात्म

इन्द्रियाद्यधिष्ठाता=इन्द्रियाणां शरीरस्य च परंपरया चैतन्यसंपादकः। यद्यप्यात्मनि अहं जाने अहं सुखी अहं दुःखीत्यादिप्रत्यक्षविषयत्वमस्त्येव,

यद्यपि "अहं जाने, अहं सुखी" इत्यादि मानसप्रत्यक्ष आत्मा का सबको होता है तब मानसप्रत्यक्षविषयता आत्मा में है ही। तथापि विप्रतिपन्न (भ्रान्त) जो पुरुष है अर्थात् जो

---

प्रत्यक्षसिद्धाया आत्मत्वजातेरेवाऽऽत्मपदशक्यतावच्छेदकत्वात्। न च तत्रात्मपदं ज्ञानादिमति भाक्तमिति वाच्यम्। बाधकाभावात्। एतेन सुखादिसमवायिकारणतावच्छेदकतया सिद्धाया आत्मत्वजातेर्भगवदात्मनि सत्त्वे मानाभावः, तत्र सुखादिविरहात्, सुखाद्युपगमेपि तस्य नित्यत्वात्, भगवतः स्वात्मनि आत्मविषयकप्रत्यक्षसत्त्वे च मानाभावात्। अन्यथा भगवतः प्रत्यक्षबलेन शशविषाणादेरपि सत्त्वस्य सुवचत्वादिति प्रलपितमप्यपास्तम्। सुखादिसमवायिकारणतावच्छेदकत्वेनाऽऽत्मत्वजातेरसाधनात्। किन्तु क्वचिच्च श्रौतादिव्यवहारात्, तादृशव्यवहारस्य च भगवदात्मन्यप्यविशेषात्। सुखादिसमवायिकारणतावच्छेदकत्वेन तत्सिद्धावपि कारणतावच्छेदकातिप्रसंगस्यादोषतया श्रौतादिव्यवहारबलेन तत्र तत्सिद्धेरप्रत्यूहत्वाच्चेति प्राहुरिति संक्षेपः।

साजातिः=आत्मत्वजातिः। अदृष्टादीति। आदिना शरीरपरिग्रहः। समवायेन ज्ञानं प्रति स्वावच्छिन्नभोगजनकादृष्टवत्तासंबन्धेन शरीरस्य कारणत्वात्, अदृष्टपदेन च धर्माधर्मौ विवक्षितौ, अदृष्टत्वेन कारणत्वाभावात्। तथाच धर्माऽधर्मरूपकारणाभावान्न सुखदुःखयोरुत्पत्तिः। मिथ्याज्ञानजन्यवासनारूपकारणाभावच्च नादृष्टोपत्तिः। मिथ्याज्ञानजन्यवासनानाशश्च तत्त्वज्ञानेन। मिथ्याज्ञानस्य मिथ्याज्ञानजन्यवासनाया वाऽहेतुत्वे जीवन्मुक्तात्मन्यपि अदृष्टोत्पत्तिप्रसंग इति ध्येयम्। समवायेन क्रियां प्रति अवच्छेदकतासम्बन्धेन कृतिः कारणम्, एवं समवायेनाऽदृष्टं प्रति स्वजनककृतिमत्त्वसंबन्धेन क्रिया कारणम्, एवं च ईश्वरकृतेः कार्यमात्रे कारणतया क्रियाजनकत्वं निर्विवादमेव- तथाचेश्वरेऽदृष्टोत्पत्त्यापत्तिरेवं चाऽदृष्टादिरूपकारणाभावादित्यसंगतम् इति चेत्। सामान्यकारणताया ईश्वरकृतौ सत्त्वेपि ईदृशविशेषकारणतायास्तत्राऽभावात्। सामान्यकार्यकारणभावश्च कालिकेन कार्यमात्रं प्रति कालिकेन कृतिः कारणमित्याकारकः, तथाच न ग्रन्थासंगतिः।

इदमत्र तत्त्वम्—जीवादृष्टवशेन ईश्वरपरिगृहीतरामकृष्णादिशरीरचेष्टायाः जीवीयकृत्यसाध्यतयाऽवच्छेदकतासंबन्धेनेश्वरकृतिजन्यत्वमावश्यकम्, किन्तु ईश्वरस्याऽशरीरत्वेपि "एकोहं बहुस्यामिति" संकल्पेन कस्य चिच्छरीरमित्युपगमात्, परन्तु जीवाऽसाध्यचेष्टोपपत्तये भूतावेशन्यायेन तच्छरीरेऽवच्छेदकतया ईश्वरकृतिकल्पनात्। अत एवेश्वरस्य शरीराभावेन तदीयशुभाशुभकर्माभावाददृष्टोत्पत्त्यापत्तिरयुक्तेत्याशंका समाहिता। अप्रयोजकत्वादिति। जलपरमाणौ स्नेहानुत्पत्त्या तादृशनियमे मानाभावादिति भावः।

तथापि विप्रतिपन्नं प्रति प्रथमत एव शरीरादिभिन्नस्तत्प्रतीतिगोचर इति प्रतिपादयितुं न शक्यते, इत्यतः प्रमाणान्तरं दर्शयति करणमिति। वास्यादीनां छिदादिकरणानां कर्त्तारमन्तरेण फलानुपधानं दृष्टम्, एवं चक्षुरादीनां ज्ञानकरणानामपि फलोपधानं कर्त्तारमन्तरेण नोपपद्यते इत्यतिरिक्तः कर्ता कल्प्यते ॥ ४७ ॥

शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः।

ननु शरीरस्य कर्तृत्वमस्तु अत आह शरीरस्येति। ननु चैतन्यं

शरीर को ही आत्मा मानता है—उस पुरुष के प्रति सर्वप्रथम "अहं जाने" इत्यादि प्रतीति का विषय शरीरादि से भिन्न आत्मा है यह प्रतिपादन आप नहीं कर सकते हैं—(क्योंकि वह तो शरीर ही को आत्मा माने बैठा है) इसलिये शरीरादि से भिन्न आत्मा का साधक प्रमाणान्तर (अनुमान) दिखलाते हैं—करणमिति—अर्थात् जो करण होता है वह अपने कार्यसाधन में कर्त्ता से सापेक्ष होता है—जैसे छेदन क्रिया के करण कुठारादि को छेदन करने वाले किसी कर्त्ता के बिना छेदन रूप फल का उत्पादक नहीं देखा जाता है - वैसे ज्ञान के करण जो चक्षुरादि हैं उन्हें भी प्रत्यक्षात्मक ज्ञान जनकता बिना किसी कर्त्ता के नहीं बन सकती—अतः शरीरादि से अतिरिक्त कर्त्ता की कल्पना करते हैं। (कि शरीरादि से अतिरिक्त कोई चक्षुरादि का कर्त्ता अवश्य है—और वही आत्मा है) प्रश्न—आपने कहा कि चक्षु आदि करणों का जो कर्त्ता है—वही आत्मा है—सो शरीर ही को कर्त्ता क्यों न मान लिया जाय अतः शरीर ही आत्मा सिद्ध हो गया—इससे चार्वाक की विजय हो गयी—क्योंकि चार्वाक शरीर ही को आत्मा मानता है। उत्तर—चार्वाकमत का खण्डन करते हैं कि—

---

**परंपरया**=जनकतासंबन्धेन अवच्छेदकतासंबन्धेन च। **चैतन्यसंपादकः**=ज्ञानवत्त्वसंपादकः। तथाच जनकतासंबन्धेन ज्ञानं प्रति तादात्म्यसंबन्धेनेन्द्रियं कारणम्। एवमवच्छेदकतासंबन्धेन ज्ञानं प्रति तादात्म्यसंबन्धेन शरीरं कारणमिति भावः। तथा चेन्द्रियाणि शरीरं च जनकत्वाऽवच्छेदकत्वान्यतरसंबन्धेन चेतनाधिष्ठितं अचेतनत्वे सति उक्तान्यतरसंबन्धेन ज्ञानवत्त्वाद् वास्यादिवदित्यनुमानमात्मनि प्रमाणम्। अत्राऽधिष्ठितत्वं सहकृतत्वं, तच्च स्वभिन्नत्वे सति स्वजन्यकार्योपधायकत्वम्। वस्तुतस्तु चेतनाधिष्ठितत्वं चेतनप्रयोज्यतत्तत्क्रियावत्त्वम्, तेन शरीरस्य ज्ञानाकारणत्वेपि चेतनसहकृतत्वं न दुर्घटम्। चेतनप्रयोज्यत्वं च जन्यतज्जन्यसाधारणम्। तेन छिदां प्रति चेतनस्याकारणत्वेपि चेतनजन्यप्रवृत्तिजन्यत्वेन न दृष्टान्तस्य साध्यवैकल्यम्। **तथापि**=प्रत्यक्षविषयत्वेपि। **विप्रतिपन्नं प्रतीति**। विप्रतिपत्तिश्च ज्ञानसमवायिकारणता शरीरवृत्तिर्न वेत्याकारिका बोध्या। **तत्प्रतीतिगोचरः**=अहंसुखीत्यादिप्रतीतिगोचरः। **कल्प्यते इति**। तथाचेन्द्रियाणि सकर्तृकाणि करणत्वात् वास्यादिवत् यत्करणं तत्तत्सकर्तृकमिति व्याप्तेरिति भावः॥४७॥

ज्ञानादिकमेव, मुक्तात्मनां त्वन्मते इव मृतशरीराणामपि तदभावे का क्षतिः, प्राणाभावेन ज्ञानाभावस्य सिद्धेरिति चेन्न। शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः। शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात्। न च पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उत्पाद्यते

"शरीरस्य नचैतन्यम्" अर्थात् शरीर चेतन ( आत्मा ) नहीं हो सकता है—क्योंकि मृतशरीरों में चैतन्य का व्यभिचार पाया जाता है। प्रश्न—चार्वाक कहता है कि चैतन्य नाम है ज्ञान—इच्छादि का—सो वह जैसे तुम्हारे ( नैयायिक के ) मत में मुक्त आत्मा में नहीं ( क्योंकि नैयायिकों के मत में मुक्त आत्मा जड़ है ) वैसे ही हम ( चार्वाक ) भी यह कह देंगे कि मृतशरीर रूपी आत्मा में चैतन्य नहीं है। क्योंकि आप ( नैयायिक ) भी यही उत्तर करेंगे कि जिस आत्मा से प्राण का सम्बन्ध है—उसी से ज्ञान का सम्बन्ध है—और जिस आत्मा में प्राण नहीं उसमें ज्ञान भी नहीं है—अतः मुक्त आत्मा में प्राणाभाव से ज्ञानाभाव की सिद्धि होती है—सो वही उत्तर हम ( चार्वाक ) भी करेंगे कि मृतशरीररूपी आत्मा में प्राण के अभाव से ज्ञानाभाव की सिद्धि हो जायेगी अतः शरीर को आत्मा मानने में पूर्वोक्त व्यभिचार नहीं है। उत्तर—नैयायिक कहता है कि शरीर को चेतन ( आत्मा ) मानने में बाल्यावस्था में देखे हुवे पदार्थों का वृद्धावस्था में स्मरण नहीं बनेगा। क्योंकि शरीर अवयवों के उपचय ( बढ़ने ) अपचय ( घटने ) के कारण उत्पाद विनाश शाली है—अर्थात् बाल्यावस्था में जो शरीर था, वह युवावस्था में या वृद्धावस्था में नहीं रहा, प्रत्युत शरीरान्तर ही उत्पन्न हो गया—अतः बाल्यकाल में अनुभूत विषयों की युवावस्था में या वृद्धावस्था में स्मरण की अनुपपत्ति हो जावेगी। प्रश्न—चार्वाक पूर्वशरीरों में उत्पन्न संस्कार अगले=शरीरों में संस्कारों को उत्पन्न कर देंगे। ( अर्थात् पहिले=शरीरों में उत्पन्न संस्कार अगले=शरीरों में चले जायेंगे तो इससे शरीरों के बढ़ने-घटने प्रयुक्त उत्पादविनाशशाली होने पर भी स्मरणाणुपपत्तिदोष नहीं होगा—क्योंकि पूर्वानुभवजन्य संस्कार लगातार उत्तरोत्तर शरीरों में बराबर बने रहेंगे।

---

पृथिव्यादीनि चत्वार्येव भूतानि तत्त्वानि। तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवच्चैतन्यमुपजायते तेषु विनष्टेषु सत्सु स्वयं विनश्यति। तदाहुः "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ती" ति। तच्चैतन्यविशिष्टदेह एवात्मा। गौरोहं जनामीतिप्रतीत्या "ज्ञानगौरत्वयोः सामानाधिकरण्यानुभवेन" रूपवत्तासिद्धेरिति चार्वाकमतमुत्थापयति नन्विति। चैतन्यं=ज्ञानवत्त्वम्। तथाच समवायेन ज्ञानं प्रति तादात्म्येन शरीरं कारणम्। ईदृशकार्यकारणभावेऽन्वयव्यभिचारमाह मृतेषु व्यभिचारत इति। चार्वाकः शंकते नन्विति। त्वन्मते वेति। देहातिरिक्तात्मवादिनां मते इवेत्यर्थः। तदभावे=ज्ञानाभावे। ननु तव मते मृतशरीरे चैतन्याभावः किंनिबन्धनः, मन्मते तु प्राण-

विशिष्टाऽऽत्मनो विरह एव चैतन्याभावप्रयोजक इत्यत आह **प्राणाभावेनेति**। तथाच लाघवात्प्राणाभाव एव चैतन्यविरहे प्रयोजक इति भावः। **ज्ञानाभावस्य सिद्धेरिति**। तथाच ज्ञानादिकं प्रति प्राणस्यापि हेतुतया मुक्तात्मनि प्राणाभावप्रयुक्तज्ञानाभाववत् मृतशरीरेऽपि प्राणाभावप्रयुक्तज्ञानाभावसंभवादिति भावः। अत्रेदं बोध्यम्–"स्थूलोऽहं कृशोऽहमि"त्यादिलौकिकव्यवहारविषयता आत्मन एव स्थूलकृशादिभावेन मन्तव्या। अथ च स्थूलत्वादिधर्माः देहे प्रत्यक्षसिद्धाः, अत एव चैतन्यविशिष्टदेह एवात्मा, न तु तदतिरिक्तस्तत्र प्रामाण्याग्रहात्। एतन्मते प्रत्यक्षमेव प्रमाणम्। कामिनीसंभोगो–पादेयद्रव्यभक्षणोत्तमवस्त्रपरिधानादिसमुत्पन्नाऽऽनन्द एव मोक्षः। यद्यपि विषयोपभोगजनिते सुखे दुःखोपभोगकालीनत्वस्याऽपरिहार्यतया तत्र परमपुरुषार्थत्वं नास्ति "आत्यन्तिकदुःखध्वंसस्य परमपुरुषार्थत्वेऽविवादात्" तथापि नान्तरीयकदुःखेऽनास्थां प्रकाश्य तत्परिहारेण वा तत्तत्सुखसंभोगस्यैवोचितत्वात्। पश्यतु कष्टकरैः कण्टकशल्कादिभिः परिवृत इति मत्वा मत्स्यार्थी सुस्वादुमत्स्यभक्षणात्पराङ्मुखो भवति! एवं तुषादिनिःसारसंवलित इति मत्वा कोपि पुष्टिकरान् व्रीहीन्परित्यजति। प्रत्युत सर्वं एव कण्टकतुषादिनिःसारांशमपनीय सारांशग्रहणेन तृप्तिसुखमनुभवति। पशुगणद्वारा सस्यापचयो भविष्यतीति कृत्वा को धान्यबीजं नोद्वपति, अत एव सुखानुषङ्ग्यवश्यंभाविदुःखभयेन सुखोपभोगविरतिरतिमूढतैव। एतन्मते कामार्थौ एव पुरुषार्थौ। अङ्गनाऽऽलिङ्गनादिजन्यं सुखमेव पुरुषार्थः। कण्टकादिजन्यं दुःखं नरकम्। लोकसिद्धो राजा ईश्वरः। यदि भारवहनक्लान्तस्य भारापगमे एव सुखानुभव इव दुःखिनो दुःखोच्छेदमात्रे यदि प्रवृत्तिर्भविष्यति उद्बन्धनादिना देहनाशे कृते तद्भवितुमर्हतीति न तदर्थं मुक्तिशास्त्रालोचनमावश्यकमिति संक्षेपः। चार्वाकमतमपहरति **नेति**। **बाल्ये विलोकितस्येति**। बाल्यावस्थायामनुभूतस्येत्यर्थः। **स्थाविरे स्मरणानुपपत्तेरिति**। अनुभवितुर्बाल्यशरीरस्याभावादिति भावः। न च घटानुभवे पटस्मरणादर्शनाद्विषयतासंबन्धेनानुभवस्मरणयोः कार्यकारणभाव आवश्यकः,एवंच सति बाल्यदशायामनुभूतस्यापि स्थाविरे स्मरणं नानुपपन्नमिति वाच्यम्। विषयतासंबन्धमात्रेण कार्यकारणभावे चैत्रदृष्टस्य मैत्रेण स्मरणं स्यात्, तथाच तद्वारणाय समवायघटितसामानाधिकरण्यप्रत्यासत्त्याऽनुभवस्मरणयोः कार्यकारणभावोऽवश्यं वक्तव्यः, एवं च सति कथं बाल्ये विलोकितस्य स्थाविरे स्मरणं तदानीमनुभवितुर्बाल्यशरीरस्याभावात्। ननु बाल्यस्थाविरशरीरयोरेकमेव शरीरमित्यत आह **शरीराणामिति**। उपचयो=वृद्धिः अपचयो=ह्रासः। परिमाणभेददिति यावत्। **उत्पादविनाशशालित्वादिति**। परिमाणभेदेन द्रव्यभेदात्, पूर्वपरिमाणनाशस्याऽऽश्रयनाशहेतुकत्वादिति भावः, तथाच पूर्वपरिमाणनाशः-आश्रयनाशजन्यः परिमाणनाशत्वात् घटपरिमाणनाशवदिति प्रयोगः। **उत्पाद्यते इति**। पूर्वशरीरस्योत्तरशरीरहेतुत्वात् स्वप्रयोज्यसंस्कारवत्त्व-

इति वाच्यम्। अनन्तसंस्कारकल्पने गौरवात्। एवं शरीरस्य चैतन्ये बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यात्, इष्टसाधनताज्ञानस्य तद्धेतुत्वात्, तदानीमिष्टसाधनताऽनुभावकाभावात्। मन्मते तु जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः। न च जन्मान्तरानुभूतमन्यदपि स्मर्यतामिति वाच्यम्। उद्बोधकाभावात्, अत्र तु अनायत्या जीवनाऽदृष्टमेवोद्बोधकं कल्प्यते। इत्थं च संसारस्याऽनादितया आत्मनोप्यनादित्वसिद्धौ अनादिभावस्य नाशाऽसंभवान्नित्यत्वं सिद्ध्यतीति बोध्यम्।

उत्तर—ऐसा नहीं—क्योंकि अनन्त संस्कारों की कल्पना करने में गौरव होगा, और दूसरी बात यह भी है कि शरीर को यदि आत्मा मानेंगे तो बालक की माता के स्तन से दूध पीने में प्रवृत्ति नहीं होगी—क्योंकि "इदं मदिष्टसाधनम्" अर्थात् यह स्तनपान मेरे इष्ट (जीवन) का साधन है—यह ज्ञान ही माता के स्तनपान में बच्चे की प्रवृत्ति का कारण है—सो शरीरात्मपक्ष (चार्वाकमत) में इष्टसाधनता का कोई स्मारक नहीं है—और हमारे (नैयायिक के) मत में आत्मा नित्य है अतएव शरीरादि से भिन्न है—अतः उसी नित्य आत्मा ने माता के स्तनपान में इष्टसाधनता का बच्चे के जन्मान्तरीयशरीरावच्छिन्न होकर अनुभव किया था—वही आत्मा बच्चे के इस नवप्रसूतशरीर में वर्त्तमान है जो कि जन्मान्तरीय अनुभव के संस्कारों द्वारा स्तनपान में इष्टसाधनता का स्मरण करता है। प्रश्न—चार्वाक कहता है कि उस नित्य आत्मा को जन्मान्तरानुभूत और पदार्थों का भी स्मरण होना चाहिये। उत्तर—अन्य पदार्थों के स्मरण का कोई उद्बोधक नहीं है—(यह नियम है कि आत्मा में किसी पदार्थ के अनुभव के बाद अनुभवजन्यसंस्कार रह जाते हैं—फिर कालान्तर में वे संस्कार ही उद्बोधकविशेष के द्वारा उद्बुद्ध होकर उसी आत्मा में अनुभवविषयविषयकस्मृति को उत्पन्न करते हैं। अतः अन्य पदार्थों का स्मरण करानेवाला कोई ऐसा उद्बोधक नहीं है जिससे कि उनका स्मरण हो सके) और प्रकृत में (स्तनपानप्रवृत्ति में) बालक का जीवनरूपी अदृष्ट ही जन्मान्तरीयसंस्कारों का उद्बोधक है। इस प्रकार संसार के अनादि होने से आत्मा का अनादित्व भी सिद्ध ही है—और अनादिभाव पदार्थ का नाश नहीं होता है अतः आत्मा का नित्यत्व सिद्ध हो जाता है।

---

संबन्धेन पूर्वशरीरसमवेतानुभवस्य स्थविरशरीरे सत्त्वाच्चेति भावः। तथाच न स्मरणानुपपत्तिः। तथाच शरीरमेवाऽऽत्मेति सिद्धम्। दूषणान्तरमाह एवमिति। तद्धेतुत्वात्—इच्छाद्वारा प्रवृत्तिहेतुत्वात्। तदानीं स्तन्यपानप्रवृत्तिपूर्वकाले इत्यर्थः। अनुभावकाभावादिति। इन्द्रियसन्निकर्षाभावेन प्रत्यक्षानुत्पत्त्या ज्ञानसामान्याभावादेव इष्टसाधनताविषयकानुमित्यसंभवादिति भावः। स्वमते इष्टसाधनताज्ञानमुपपादयति मन्मते त्विति। प्रवृत्तिरिति। तथाच स्मृत्यनुभवसाधारणेष्टसाधनताज्ञानत्वेन हेतुत्वादिति भावः। अत्र त्विति। इष्टसाधनतास्मारकसंस्कारे इत्यर्थः।

विशिष्टस्याऽऽत्मनो विरह एव चैतन्याभावप्रयोजक इत्यत आह **प्राणाभावेनेति** । तथाच लाघवात्प्राणाभाव एव चैतन्यविरहे प्रयोजक इति भावः । **ज्ञानाभावस्य सिद्धेरिति** । तथाच ज्ञानादिकं प्रति प्राणस्यापि हेतुतया मुक्तात्मनि प्राणाभावप्रयुक्तज्ञानाभाववत् मृतशरीरेऽपि प्राणाभावप्रयुक्तज्ञानाभावसंभवादिति भावः । अत्रेदं बोध्यम्–"स्थूलोऽहं कृशोऽहमि"त्यादिलौकिकव्यवहारविषयता आत्मन एव स्थूलकृशादिभावेन मन्तव्या । अथ च स्थूलत्वादिधर्माः देहे प्रत्यक्षसिद्धाः, अत एव चैतन्यविशिष्टदेह एवात्मा, न तु तदतिरिक्तस्तत्र प्रामाण्याग्रहात् । एतन्मते प्रत्यक्षमेव प्रमाणम् । कामिनीसंभोगो–पादेयद्रव्यभक्षणोत्तमवस्त्रपरिधानादिसमुत्पन्नाऽऽनन्द एव मोक्षः । यद्यपि विषयोपभोगजनिते सुखे दुःखोपभोगकालीनत्वस्याऽपरिहार्यतया तत्र परमपुरुषार्थत्वं नास्ति "आत्यन्तिकदुःखध्वंसस्य परमपुरुषार्थत्वेऽविवादात्" तथापि नान्तरीयकदुःखेऽनास्थां प्रकाश्य तत्परिहारेण वा तदात्वसुखसंभोगस्यैवोचितत्वात । यश्च कण्टकैः कण्टकशल्कादिभिः परिवृत इति मत्वा मत्स्यार्थी सुस्वादुमत्स्यभक्षणात्पराङ्मुखो भवति ! एवं तुषादिनिःसारसंवलित इति मत्वा कोपि पुष्टिकरान् व्रीहीन्परित्यजति । प्रत्युत सर्व एव कण्टकतुषादिनिःसारांशमपनीय सारांशग्रहणेन तृप्तिसुखमनुभवति । पशुगणद्वारा सस्यापचयो भविष्यतीति कृत्वा को धान्यबीजं नोद्वपति, अत एव सुखानुषङ्ग्यवश्यंभाविदुःखभयेन सुखोपभोगविरतिरविमूढतैव । एतन्मते कामार्थौ एव पुरुषार्थौ । अङ्गनाऽऽलिङ्गनादिजन्यं सुखमेव पुरुषार्थः । कण्टकादिजन्यं दुःखं नरकम् । लोकसिद्धो राजा ईश्वरः । यदि भारवहनक्लान्तस्य भाराद्यपगमे एव सुखानुभव इव दुःखिनां दुःखोच्छेदमात्रे यदि प्रवृत्तिर्भविष्यति उद्बन्धनादिना देहनाशे कृते तद्भवितुमर्हतीति न तदर्थं मुक्तिशास्त्रालोचनमावश्यकमिति संक्षेपः । चार्वाकमतमपहरति **नेति** । **बाल्ये विलोकितस्येति** । बाल्यावस्थायामनुभूतस्येत्यर्थः । **स्थाविरे स्मरणानुपपत्तेरिति** । अनुभवितुर्बाल्यशरीरस्याभावादिति भावः । न च घटानुभवे पटस्मरणादर्शनाद्विषयतासंबन्धेनानुभवस्मरणयोः कार्यकारणभाव आवश्यकः,एवंच सति बाल्यदशायामनुभूतस्यापि स्थाविरे स्मरणं नानुपपन्नमिति वाच्यम् । विषयतासंबन्धमात्रेण कार्यकारणभावे चैत्रदृष्टस्य मैत्रेण स्मरणं स्यात्, तथाच तद्वारणाय समवायघटितसामानाधिकरण्यप्रत्यासत्त्याऽनुभवस्मरणयोः कार्यकारणभावोऽवश्यं वक्तव्यः, एवं च सति कथं बाल्ये विलोकितस्य स्थाविरे स्मरणं तदानीमनुभवितुर्बाल्यशरीरस्याभावात् । ननु बाल्यस्थाविरशरीरयोरेकमेव शरीरमित्यत आह **शरीराणामिति** । उपचयो=वृद्धिः अपचयो=ह्रासः । परिमाणभेददिति यावत् । **उत्पादविनाशशालित्वादिति** । परिमाणभेदेन द्रव्यभेदात्, पूर्वपरिमाणनाशस्याऽऽश्रयनाशहेतुकत्वादिति भावः, तथाच पूर्वपरिमाणनाशः-आश्रयनाशजन्यः परिमाणनाशत्वात् घटपरिमाणनाशवदिति प्रयोगः । **उत्पाद्यते इति** । पूर्वशरीरस्योत्तरशरीरहेतुत्वात् स्वप्रयोज्यसंस्कारवत्त्व-

इति वाच्यम् । अनन्तसंस्कारकल्पने गौरवात् । एवं शरीरस्य चैतन्ये बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यात्, इष्टसाधनताज्ञानस्य तद्धेतुत्वात्, तदानीमिष्टसाधनताऽनुभावकाभावात् । मन्मते तु जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः । न च जन्मान्तरानुभूतमन्यदपि स्मर्यतामिति वाच्यम् । उद्बोधकाभावात्, अत्र तु अनायत्या जीवनाऽदृष्टमेवोद्बोधकं कल्प्यते । इत्थं च संसारस्याऽनादितया आत्मनोप्यनादित्वसिद्धौ अनादिभावस्य नाशाऽसंभवान्नित्यत्वं सिद्ध्यतीति बोध्यम् ।

उत्तर—ऐसा नहीं—क्योंकि अनन्त संस्कारों की कल्पना करने में गौरव होगा, और दूसरी बात यह भी है कि शरीर को यदि आत्मा मानेंगे तो बालक की माता के स्तन से दूध पीने में प्रवृत्ति नहीं होगी—क्योंकि "इदं मदिष्टसाधनम्" अर्थात् यह स्तनपान मेरे इष्ट ( जीवन ) का साधन है—यह ज्ञान ही माता के स्तनपान में बच्चे की प्रवृत्ति का कारण है—सो शरीरात्मपक्ष ( चार्वाकमत ) में इष्टसाधनता का कोई स्मारक नहीं है—और हमारे ( नैयायिक के ) मत में आत्मा नित्य है अतएव शरीरादि से भिन्न है—अतः उसी नित्य आत्मा ने माता के स्तनपान में इष्टसाधनता का बच्चे के जन्मान्तरीयशरीरावच्छिन्न होकर अनुभव किया था—वही आत्मा बच्चे के इस नवप्रसूतशरीर में वर्त्तमान है जो कि जन्मान्तरीय अनुभव के संस्कारों द्वारा स्तनपान में इष्टसाधनता का स्मरण करता है। प्रश्न—चार्वाक कहता है कि उस नित्य आत्मा को जन्मान्तरानुभूत और पदार्थों का भी स्मरण होना चाहिये। उत्तर—अन्य पदार्थों के स्मरण का कोई उद्बोधक नहीं है—( यह नियम है कि आत्मा में किसी पदार्थ के अनुभव के बाद अनुभवजन्यसंस्कार रह जाते हैं—फिर कालान्तर में वे संस्कार ही उद्बोधकविशेष के द्वारा उद्बुद्ध होकर उसी आत्मा में अनुभवविषयविषयकस्मृति को उत्पन्न करते हैं। अतः अन्य पदार्थों का स्मरण करानेवाला कोई ऐसा उद्बोधक नहीं है जिससे कि उनका स्मरण हो सके ) और प्रकृत में ( स्तनपानप्रवृत्ति में ) बालक का जीवनरूपी अदृष्ट ही जन्मान्तरीयसंस्कारों का उद्बोधक है। इस प्रकार संसार के अनादि होने से आत्मा का अनादित्व भी सिद्ध ही है—और अनादिभाव पदार्थ का नाश नहीं होता है अतः आत्मा का नित्यत्व सिद्ध हो जाता है।

---

संबन्धेन पूर्वशरीरसमवेतानुभवस्य स्थविरशरीरे सत्त्वाचेति भावः । तथाच न स्मरणानुपपत्तिः । तथाच शरीरमेवाऽऽत्मेति सिद्धम् । दूषणान्तरमाह एवमिति । तद्धेतुत्वात्=इच्छाद्वारा प्रवृत्तिहेतुत्वात् । तदानीं स्तन्यपानप्रवृत्तिपूर्वकाले इत्यर्थः । अनुभावकाभावादिति । इन्द्रियसन्निकर्षाभावेन प्रत्यक्षानुत्पत्त्या ज्ञानसामान्याभावादेव इष्टसाधनताविषयकानुमित्यसंभवादिति भावः । स्वमते इष्टसाधनताज्ञानमुपपादयति मन्मते त्विति । प्रवृत्तिरिति । तथाच स्मृत्यनुभवसाधारणेष्टसाधनताज्ञानत्वेन हेतुत्वादिति भावः । अत्र त्विति । इष्टसाधनतास्मारकसंस्कारे इत्यर्थः ।

तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥४८॥

मनोऽपि न तथा, ज्ञानाद्यनध्यक्षं तदा भवेत् ।

ननु-चक्षुरादीनामेव ज्ञानादिकं प्रति करणत्वं कर्तृत्वं चास्तु विरोधे साधकाभावादत आह तथात्वमिति । चैतन्यमित्यर्थः । उपघाते=नाशे सति । अर्थाच्चक्षुरादीनामेव । कथं स्मृतिरिति । पूर्वं चक्षुषा साक्षात्कृतानां चक्षुषोऽभावे स्मरणं न स्यात्, अनुभवितुरभावात्, अन्यदृष्टस्यान्येन स्मरणाऽसंभवात्, अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावात् ॥४८॥

प्रश्न—चक्षुरादि इन्द्रियों को ही ज्ञानादिकार्य के प्रति करण एवं कर्त्ता मान लिया जावे (चक्षुरादि करण एवं कर्त्ता नहीं हो सकते हैं) इस विरोध में आपके यहाँ कोई साधक युक्तियाँ नहीं हैं (अभिप्राय यह है कि इन्द्रियों को आत्मा मान लिया तो क्या हानि है। कर्त्ता करके चेतन जो आत्मा उसी का ग्रहण है) उत्तर— "तथात्वं चेदिन्द्रियाणाम्" अर्थात् इन्द्रियों को यदि चेतन (आत्मा) मानेंगे तो—इन्द्रियों के उपघात (विनाश) होने पर तत्तदिन्द्रियों द्वारा तत्तत् अनुभूत पदार्थों का स्मरण कैसे होगा। क्योंकि पूर्वकाल चक्षु के द्वारा साक्षात्कार (प्रत्यक्ष) किये गये पदार्थों का चक्षु के अभाव (नष्ट) हो जाने पर स्मरण नहीं हो सकेगा—(क्योंकि जिस इन्द्रियरूपी आत्मा ने अनुभव किया था वह तो नष्ट हो गया अन्य से अनुभूत का अन्य से स्मरण नहीं हो सकता है। (क्यों कि जो अनुभवकर्त्ता होता है वही स्मरण का कर्त्ता होता है) अनुभव-स्मरण का सामानाधिकरण्य (एक अधिकरण में होना) देखा जाता ॥४८॥

---

अनायत्या=अगत्या । जीवनादृष्टमेवेति । अन्यथा इष्टसाधनत्वानुभवाभावेन, उद्बोधकाभावेन स्मरणासंभवेन च प्रवृत्त्यसंभवेन च बालः शुष्ककण्ठो म्रियेतेति भावः । आत्मनो नित्यत्वं साधयति इत्थंचेति । स्तन्यपानप्रवृत्त्यनुकूलेष्टसाधनतास्मरणे चेत्यर्थः । अनादित्वसिद्धाविति । स्तन्यपाने बालस्य प्रवृत्तिर्नेष्टसाधनताज्ञानमन्तरेण, तच्च ज्ञानं नानुभवरूपं, बाधात्, किन्तु स्मृतिरूपम्, स्मृतेश्च स्वसमानाधिकरणपूर्वजन्मसापेक्षतया पूर्वजन्मसत्त्वे पूर्वजन्मन्यपि प्रथमप्रवृत्त्यनुरोधेन तत्पूर्वस्य, एवं तत्पूर्वस्य जन्मनः सिद्धौ अनादित्वमात्मन इति भावः । सिद्ध्यतीति । आत्मा नित्यः अनादित्वे सति भावत्वाद् गगनवदित्याकारकः । अर्थादिति । तथाचै "कर्मेवेन्द्रियाणामि" तिपदं काकाक्षिगोलकन्यायेनोभयत्रान्वेति । सामानाधिकरण्येनेति । आत्मनिष्ठप्रत्यासत्त्या इत्यर्थः । विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावस्य निराकृतत्वादिति भावः ।

विज्ञानमेवेति । आत्मनिरूपणस्य प्रस्तुतत्वादात्मेत्युक्तम्, तन्मते वस्तुमात्रस्यैव विज्ञानरूपत्वात् । अत्र विज्ञानत्वं प्रमेयत्वव्यापकं नवेति विप्रति-

ननु चक्षुरादीनां चैतन्यं मास्तु मनसस्तु नित्यस्य चैतन्यं स्यादत आह मनोपीति। न तथा = न चेतनम्। ज्ञानादीति। मनसोऽणुत्वात्प्रत्यक्षे च महत्त्वस्य हेतुत्वात्, मनसि ज्ञानसुखादिसत्त्वे तत्प्रत्यक्षानुपपत्तिरित्यर्थः। यथा च मनसोऽणुत्वं तथाऽग्रे वक्ष्यते ॥४८॥

नन्वस्तु विज्ञानमेवात्मा, तस्य स्वतःप्रकाशरूपत्वाच्चेतनत्वम्।

प्रश्न—चक्षुरादि इन्द्रियों को चेतन (आत्मा) न माना जाय—परन्तु मन इन्द्रिय तो है—उसे ही आत्मा मान लिया जाय। उत्तर—"मनोऽपि न तथा" मन भी आत्मा नहीं है—क्योंकि मन को यदि आत्मा (चेतन) मानेंगे तो ज्ञान-इच्छादि-का प्रत्यक्ष नहीं हो सकेगा—कारण कि प्रत्यक्ष में महत्त्व कारण है और मन परम अणु है—अतः मन को आत्मा मानने पर मन में ज्ञान सुखादि का सत्त्व मानना होगा—तब ज्ञान-सुखादि के प्रत्यक्ष की अनुपत्ति हो हो जावेगी—क्योंकि प्रत्यक्ष में महत्त्वकारण है यह हम पहिले ही कह चुके हैं। मन का अणुत्व अगाड़ी "मनोनिरूपण" में कहेंगे।

प्रश्न—क्षणिक विज्ञान को आत्मवादी योगाचार का कहना है कि विज्ञान ही को

---

पत्तिर्बोध्या। तत्र विधिकोटिर्योगाचारस्य निषेधकोटिर्नैयायिकानाम्। बौद्धमते हि रूप-विज्ञान-वेदना-संज्ञासंस्काराः पञ्च स्कन्धाः। इन्द्रियाणि पञ्च-पञ्च विषयाः–अविज्ञप्तिश्चेत्येकादश रूपस्कन्धाः। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि पञ्चेन्द्रियाणि। शब्दस्पर्शरूपरसगन्धाः विषयाः। अविज्ञप्तिः शरीरम्। रूप्यन्ते विषयाः एभिः, एवं रूप्यन्ते इति वा रूपाणि इति व्युत्पत्त्या रूपपदमिन्द्रियविषयशरीरपरम्। पृथिवीजलतेजोवायूनामाकाशस्य च धातुसंज्ञा। एतेषां रूपस्कन्धान्तर्गतत्वं बोध्यम्। विज्ञानस्कन्धः सर्वं बाह्याभ्यन्तरं ज्ञानम्। तथाहि—द्विविधं विज्ञानं, प्रवृत्तिविज्ञानमालयविज्ञानं च। श्रावणज्ञानादिभेदभिन्नं घटादिविषयभेदेन च भिन्नं चाऽनेकविधं प्रवृत्तिविज्ञानम्, इदमित्याकारकम्, प्रवृत्तिविज्ञानस्यैव प्रवाहः संसारः। अहमित्याकारं सततानुवर्त्तमानं विज्ञानमालयविज्ञानम्। तच्च सुषुप्तावपि स्वीक्रियते। द्विविधविज्ञानयोरनारतप्रवाहो विज्ञानस्कन्धः। अत एव "विज्ञानस्कन्धोऽहमित्याकारो रूपादिविषयेन्द्रियजन्यो वा दण्डायमान" इति वाचस्पतिमिश्राः। "अहमित्याकारमालयविज्ञानम्, इन्द्रियादिजन्यज्ञानं एतद्द्वयं दण्डायमानं प्रवाहापन्नं विज्ञानस्कन्ध इत्यर्थः" इति। कल्पतरुकृतश्च वेदनास्कन्धः सुखं दुःखं उपेक्षा च विज्ञानस्कन्धस्य रूपस्कन्धेन सह संपर्कात् "इष्टादनिष्टात्तदुभयरहिताच्च" सुखस्य दुःखस्य उपेक्षायाश्चाऽवस्थाविशेषो वेदनास्कन्धः। संज्ञास्कन्धः घटः पटः इत्यादिसंज्ञोल्लेखिसंवित्सन्तानः। अयं च सविकल्पकरूपो-विज्ञानस्कन्धश्च निर्विकल्पकरूपः इत्यनयोर्भेदः। "संज्ञास्कन्धः सविकल्पकरूपः संज्ञासंसर्गयोग्यप्रतिभासः, यथा डित्थः कुण्डली गौरो ब्राह्मणो गच्छतीत्येवंजातीयक इति" भामती। "सविकल्पकरूपः इत्यनेन विज्ञानस्कन्धो निर्विकल्पक इति भेदः स्कन्धयोर्ध्वनितः" इति कल्पतरुः। संस्कारस्कन्धः सुखदुःख-

संवेदनजनिताः रागद्वेषमदमानमोहादयः धर्माधर्मौ च संस्काररूपेण वर्तमानौ। इमे पञ्च स्कन्धाः। रागादयो यस्मादुदियन्ति स समुदयपदाभिधेय आत्मा विज्ञानरूपः क्षणिक इति। इदमत्रावधेयम्—ते च पदार्थाः न नैयायिकमतमतिक्रामन्ति, इन्द्रियादीनां द्रव्यादिष्वन्तर्भावात्। संज्ञाभेदमात्रस्य स्वतन्त्रेच्छत्वेन करणादिति। योगाचारमतावलंबिनामयमाशयः। माध्यमिकमते यया बुद्ध्या जगतः शून्यता आपाद्यते सा बुद्धिस्तु अवश्यं स्वीकर्तव्या, अन्यथा शून्यस्य निःसाक्षिकत्वापत्तेः। अत एव योगाचाराः विज्ञानवादिनः। एते विज्ञानमेव पारमार्थिकं स्वीकुर्वन्ति। चित्तं मनोबुद्धिरिति पर्यायाः। तदुक्तम्—

"चित्तं मनश्च विज्ञानं संज्ञावैकल्यवर्जिताः।
विकल्पधर्मतां प्राप्ताः" इति।

अपि च माध्यमिकमते वादिना विचारावसरे वादिनः आशयं बुद्ध्वा तत्खण्डने शून्यवादो दत्ताञ्जलिः स्यात्, शून्यस्यैव प्रमाणत्वे वादे माध्यमिकानामधिकारो न स्यात्। तदुक्तम्-

त्वयोक्तसर्वशून्यत्वे प्रमाणं शून्यमेव ते।
अतो वादेऽधिकारस्ते न परेणोपपद्यते॥
स्वपक्षस्थापनं तद्वत्परपक्षस्य दूषणम्।
कथं करोत्यत्र भवान् विपरीतं वदेश्च किम्॥ इति।

तथाच विज्ञानसत्तैव पारमार्थिकी। तदुक्तम्-"गुरूक्तं भावनाचतुष्टयं बाह्यार्थस्य शून्यत्वं चाङ्गीकृत्य आन्तरस्य शून्यत्वं चाङ्गीकृतम्। कथमिति नियोगस्य करणाद् योगाचारप्रथा। बाह्यार्थश्च विज्ञानस्य विवर्त एव। उक्तं च यथा हि तेषां परिभाषा

चित्तं प्रवर्तते चित्तं चित्तमेव विमुच्यते।
चित्तं हि जायते नान्यत्, चित्तमेव निरुध्यते॥

दृश्यन्न विद्यते बाह्यं चित्तं चित्तं हि दृश्यते।
देहयोगप्रतिष्ठानं चित्तमात्रं वदाम्यहम्॥
चित्तमात्रं, न दृश्योस्ति द्वेधा चित्तं हि दृश्यते।
ग्राह्यग्राहकभावेन शाश्वतोच्छेदवर्जितम्॥
अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥
बुद्धिस्वरूपमेकं हि वस्त्वस्ति परमार्थतः।
प्रतिभानस्य नानात्वान्न चैकत्वं विहन्यते॥ इति।

स्वयंवेदनं तावदङ्गीकार्यम्। अन्यथा जगदान्ध्यं प्रसज्येतेति। विज्ञानस्य क्षणिकत्वं तावत्सत्त्वेनोपेयम्। अत एव क्षणिकविज्ञानवादिनः-तच्च विज्ञानं द्विविधम्। प्रवृत्तिविज्ञानमालयविज्ञानं च। तत्राऽयं घटः इति प्रवृत्तिविज्ञानम्। तादृशज्ञानस्यैव तद्गोचरप्रवृत्तिजनकत्वात्। तच्च पुनः चक्षुर्विज्ञानश्रोत्रविज्ञानघ्राणविज्ञानजिह्वा

ज्ञानसुखादिकं तु तस्यैवाकारविशेषः। तस्यापि भावत्वादेव क्षणिकत्वम्, पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञाने हेतुत्वात्, सुषुप्त्यवस्थायामालयविज्ञानधारा निराबाधैव, मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनितसंस्का-

आत्मा मान लिया जाय—क्योंकि वह भी स्वतःप्रकाशरूप होने से चेतन है। ज्ञान-सुखादि उसके (विज्ञान के) ही आकार विशेष हैं—और वह विज्ञान भावरूप होने से क्षणिक है। पूर्व २ विज्ञान उत्तरोत्तर विज्ञान में कारण होता है—अतःसुषुप्ति अवस्था में भी आलयविज्ञान की धारा बराबर बनी रहती है। कस्तूरीगन्ध से सुगन्धित वस्त्र की तरह अभिप्राय यह है कि आप वस्त्र की सौ पड़त करके, उसमें से पहिली पड़त में मृगमद (कस्तूरी) को रख दीजिये तो वह कस्तूरी की गन्ध जैसे पहिली पड़त से दूसरी में—दूसरी से तीसरी में—तीसरी से चौथी में इस प्रकार अन्तिम पड़त (सौवीं पड़त) में यथाक्रम उत्पन्न होती चली जाती है—उसी प्रकार पूर्व २ विज्ञान उत्तरोत्तर विज्ञान में स्वानुभवजन्य संस्कारों को उत्पन्न करता रहता है। अतः

---

विज्ञान–कामविज्ञान-मनोविज्ञान-क्लिष्टमनोविज्ञानभेदेन सप्तधा। आलयविज्ञानन्तु अहमित्याकारकम्, तदेवात्मा। यथा समुद्रे पवनप्रेरिता वीचयो नृत्यन्ति, कदाचिदपि विश्रान्तिं न भजन्ते, तथैवालयविज्ञाने "विषय" पवनप्रेरिताः "प्रवृत्ति-विज्ञान"तरङ्गाः नृत्यन्ति, न कदाचिदपि विश्रान्तिं भजन्ते। तदुक्तम्—

तरङ्गा उदधेर्यद्वत्पवनप्रत्ययेरिताः।
नृत्यमानाः प्रवर्त्तन्ते व्युच्छेदश्च न विद्यते॥
आलयौघस्तथा नित्यं विषयपवनेरितः।
चित्रैस्तरङ्गविज्ञानैर्नृत्यमानः प्रवर्तते॥ इति।

अद्वैतमतवदेतन्मतेपि व्यावहारिकसत्तां पारमार्थिकसत्तां चाभ्युपगम्याध्यारोपापवादन्यायेन सर्वे व्यवहाराः संपादनीयाः। अद्वैतमतादविशेष इति तु नाशंकनीयम्। तन्मते विज्ञानं नित्यम्, एतन्मते क्षणिकं प्रवाहविज्ञानसन्तानप्रवाहाविच्छेदरूपं चेति विशेषः। एतन्मते अनुपप्लवा चित्तसन्ततिर्मोक्षः। उपप्लवः संसारः प्रवृत्ति-विज्ञानमिति यावत्, तद्भिन्ना आलयविज्ञानसन्ततिरिति यावत्। चिन्तामणिकृतस्तु उपप्लवो दुःखं तदभावविशिष्टेत्यर्थः। उपप्लवपदस्य प्रवृत्तिविज्ञानपरत्वे दुःख-हेतुरुपप्लवः। तदुक्तम्— "प्रागुक्तभावनाप्रचयबलान्निखिलवासनोच्छेदविगलित-विषयाकारोपप्लवविशुद्धविज्ञानोदय" इति संक्षेपः। तस्य=विज्ञानस्य। स्वतः-प्रकाशरूपत्वादिति। स्वविषयकत्वादित्यर्थः। तथाच विज्ञानं स्वप्रकाशं विज्ञान-त्वाद्यन्नैवं तन्नैवं यथा घटः। एवं विज्ञानं चेतनं स्वप्रकाशत्वाद्, अत्रापि उक्त-व्यतिरेकिदृष्टान्तो बोध्यः। तस्यापि=विज्ञानस्यापि। भावत्वादेव=सत्त्वादेव। तथाच विज्ञानं क्षणिकं "स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगि" सत्त्वादि-त्यनुमानं फलितम्। अथ सत्त्वं-सत्ता सा सती असती वा! आद्ये तत्रापि सत्ता स्वीकार्या सापि आश्रयीभूतसत्तातोऽतिरिक्ताऽनतिरिक्ता वा! आद्ये सा सती

राणामुत्तरोत्तरविज्ञाने हेतुत्वान्नानुपपत्तिः स्मरणादेरिति चेन्न। तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः, यत्किंचिद्विषयकत्वे विनिगमनाविरहः सुषुप्तावपि विषयावभासप्रसंगाच्च, ज्ञानस्य सविषयत्वात्। तदानीं निराकारा चित्सन्त-

स्मरण की अनुपपत्ति रूप दोष भी नहीं है। उत्तर—यह ठीक नहीं—नैयायिक बौद्ध (योगाचार) से कहता है कि यह विज्ञानरूप आत्मा जगत् को विषय करता है—अथवा यत्किञ्चित् पदार्थ को विषय करता है—यदि जगद् विषयक वह विज्ञान है तब तो सर्वज्ञत्व की आपत्ति लग जायेगी, यत्किञ्चित् पदार्थ विषयक है तो विनिगमनाविरह (एक पक्षप्रतिपादकयुक्ति का अभाव) है। अर्थात् तुम यत्किञ्चित्पद से घटका ग्रहण करोगे तो हम यत्किञ्चित् पट का या मठ का ग्रहण करके यह कह सकते हैं कि तुम (बौद्ध) जैसे उस विज्ञान को कहते हो कि घटविषयक है तो हम (नैयायिक) कहेंगे कि वह विज्ञान पट विषयक या मठ विषयक क्यों नहीं है। और दूसरी बात यह है कि जब तुम (बौद्ध) सुषुप्ति अवस्था में भी आलय विज्ञान मानते हो तो सुषुप्ति में भी विषय का स्फुरण होना चाहिये—क्योंकि विज्ञान सविषयक होता है। यदि तुम इसका

---

असती वा! आद्ये तत्रापि सत्तान्तरं स्वीकार्यमित्यनवस्था। अनतिरिक्ता चेदात्माश्रयः। असती चेत्तदा स्वयमसिद्धा कथं सद्व्यवहारं जनयेत्। अतोऽर्थक्रियाकारित्वमेव सत्त्वं वाच्यम्। अत्र रामरुद्रीकृतः। यदा हि बीजात्किमपि कार्यं न जायते तदा तदसदेव, तथाहि-एकमेव बीजं अङ्कुरादीनि बहूनि कार्याणि करोति, तत्किं कृत्स्नमपि युगपदेव करोति क्रमेण वा! युगपदित्युच्यमाने यानि किल कार्याणि कर्तुं बीजं प्रभवेत्, तानि सर्वाणि एकदैव जनयेत्, इष्टापत्तौ च तदुत्तरं तस्याऽसत्त्वमावश्यकमेव, तस्य द्वितीयक्षणे करणीयाभावात्। यदि क्रमेण कुर्यादित्युच्यते, तर्हि क्रमेण किमिति कुर्यात्, नहि बीजं तादृशकार्यकारणभावस्वभावशून्यं येन प्रथमक्षणे एव न तानि कार्याणि कुर्यात्, तथासति द्वितीयादिक्षणेऽपि तदनुत्पत्त्यापत्तेः। द्वितीयक्षणे स्वभावान्तरमुत्पद्यते इति चेद् बीजान्तरमेवोत्पद्यते इति किं न कल्प्यते। तदेवेदं बीजमिति प्रत्यभिज्ञया बीजस्य प्राक्क्षणस्थाद्बीजादभेदोऽवगाह्यते, अतः स्वभावान्तरकल्पनेति चेद्, प्रत्यभिज्ञानस्य साजात्यावलंबनत्वात्। ननु बीजं तावत्कार्यकरणस्वभावयुक्तमपि सहकारिसमवधानविरहेण न युगपत्कार्याणि करोति यथा कुसूलस्थबीजादिः, यदा च पृथिव्युदकसंयोगादिसामग्रीसमवधानं तदैतत्कार्यकरणक्षमं भवति इति चेन्न। सा सामग्री यदि बीजे कंचन विशेषं न जनयेत, न जनयेत्तर्हि कार्यमपि, बीजस्य तत्पूर्वं कार्यकारणस्वभावरहितत्वात्। यदि सामग्रीविशिष्टस्य तस्याङ्कुरजनकत्वमुच्यते, कोपि विशेषस्तत्र सामग्र्याः समाहितो न वा, आद्ये तस्य विशेषस्यैवाऽर्थक्रियाकारित्वमस्तु, द्वितीये कार्यानुत्पत्त्यापत्तिरिति सामग्रीसमवधानक्षणे बीजादौ कश्चन विशेषः स्वीकार्यः, यं कुर्वद्रूपमित्याचख्यौ भगवान् बुद्धः, सत्येवं तस्य विशेषस्यापि क्षणमात्रस्थायित्वमावश्यकमेव, अन्यथा तत्रापि क्रमयौगपद्यव्यवस्थानुपपत्तेः। एवं चार्थक्रियाकारित्वं न क्षणिकक्षणसन्तानेष्वेव सत्त्वम्। ननु तादृशविशेषसहितमेव बीजमारभतामिति न क्षणिक-

**तिरनुवर्तते इति चेन्न। तस्याः स्वप्रकाशत्वे प्रमाणाभावात्, अन्यथा घटादीनामपि ज्ञानत्वापत्तिः। न चेष्टापत्तिः, विज्ञानव्यतिरिक्तवस्तुनोऽभावादिति वाच्यम्। घटादेरनुभूयमानस्यापलपितुमशक्यत्वात्।**

यह उत्तर करते हो कि सुषुप्ति में चित्सन्तति (आलय विज्ञानधारा) निराकार (निर्विषयक) है– यह भी ठीक नहीं-क्यों कि उस विज्ञान धारा के स्वप्रकाशत्व में कोई प्रमाण नहीं है।

कारण कि विज्ञान विषय का ही तो प्रकाश करता है–सुषुप्ति में विज्ञान का जब विषय ही कोई नहीं तो वह विज्ञान प्रकाश किसका करेगा ] अन्यथा (विना प्रमाण के ही) यदि चित्सन्तति को सुषुप्ति अवस्था में निर्विषय मानोगे तो घट आदि पदार्थों को भी आपत्ति लग जायगी—अर्थात् घट-पटादि को भी ज्ञानरूपता की आपत्ति आप को (बौद्ध को) इष्ट है— क्यों कि विज्ञान के अतिरिक्त कोई वस्तु आपके यहाँ नहीं है-कारण कि घट-पटादि सभी विज्ञान रूप हैं—खण्डन नैयायिक कहता है कि घटादि का अनुभव (ज्ञान) यह एक दूसरी चीज है और घटादि उस अनुभव के विषय हैं अर्थात् घटादि अनुभूयमान है इसका अपलाप, कोई

---

स्वव्यवस्थितिरिति चेन्न। विशेषेणापि बीजे विशेषान्तरानाधानेऽसहकारितायास्तुल्यत्वादिति सिद्धेयं व्याप्तिः यत्सत्तत्क्षणिकमिति सौगतानामिति प्राहुः। ननु सुषुप्तावात्मा न सिद्ध्येत्, पूर्वविज्ञानस्य क्षणिकत्वेन नाशात्, तदानीं पुरीतद्बहिर्देशावच्छेदेन मनःसंयोगरूपकारणविरहेण विज्ञानान्तरस्योत्पत्त्यसंभवादत आह **पूर्वपूर्वेति**। **आलयविज्ञानधारा**=अहमित्याकारकविज्ञानसन्ततिः। **मृगमदः**= कस्तूरिका, तेन वासितं संस्कृतं यद्वसनमित्यर्थः। यथा कस्तूरिकागन्धस्य वसने संक्रमो भवति तथा पूर्वविज्ञानजनितसंस्कारस्योत्तरविज्ञाने संभवतीति स्मरणं निराबाधमेवेति भावः। विज्ञानं जगद्विषयकं यत्किंचिद्विषयकं वेति विकल्प्याऽऽद्ये दूषणमाह **तस्येति**। विज्ञानस्येत्यर्थः। द्वितीये दूषणमाह **यत्किंचिदिति**।

जगतो यथाकथंचित्स्वप्नापेक्षया उत्कृष्टसत्ताभ्युपगमेपि परमार्थतः सत्त्वं यथा वेदान्तिभिर्नाङ्गीक्रियते तथा अस्माभिरपि। भेदस्त्वियानेव यत्तैर्ब्रह्मणः परमार्थसत्त्वमिष्यते नास्माभिरिति। एवं स्वप्ने जागरणे वा "न मया दृष्टं रजत"-मित्यादि प्रत्ययोपपत्तिः ऋते सर्वशून्यत्ववादं न कर्तुं शक्यते-तथाहि परैस्तत्र दर्शने रजतविषयकत्वाभावः, रजतविषयकदर्शनाभावो वा आत्मनि प्रत्याय्यते। तच्चानुपपन्नम्-अहं रजतविषयकदर्शनाभाववानिति ज्ञानस्य रजतविषयकदर्शनवानिति ज्ञानप्रतिबन्धकतया तस्य च तन्मतानुसारेणाऽहमंशे प्रमात्वं, रजतविषयकत्वांशे भ्रमत्वं स्थितम्। तत्रैकस्यैव ज्ञानस्यांशभेदेन भ्रमत्वं प्रमात्वं च न युक्तम्। ज्ञानं हि न घटादिरिव सावयवं वस्तु यत्तस्यांऽशादिकल्पना न्याय्या स्यात्। एवं रजतविषयकनिषेधे सर्वस्यापि निषेधो वक्तव्यः, अन्यथाऽर्धजरतीयत्वप्रसंगः। यदि भवन्मतानुसारेणापि निषेध्यं रजतज्ञानं सत्-तदा रजतं रजतत्वं तत्संबन्धस्तद्विषयकत्वं चेत्यादि सर्वमपि वक्तुं पार्येत, नहि तत्तथेति सर्वस्यापि ज्ञानविषयस्य निषेध

आकारविशेष एवायं विज्ञानस्येति चेन्न। किमयमाकारोऽतिरिच्यते विज्ञानात्, तर्हि समायातं विज्ञानव्यतिरिक्तेन। नातिरिच्यते चेत्तर्हि समूहालंबने नीलाकारोपि पीताकारः स्यात्, स्वरूपतो विज्ञानस्याऽविशेषात्। अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेन्न।

नहीं कर सकता है। बौद्ध-घट-पट आदि यावत् पदार्थ विज्ञान के आकार विशेष ही हैं— नैयायिक-क्या यह विज्ञान का आकार विशेष विज्ञान के स्वरूप से भिन्न है या अभिन्न है। यदि भिन्न है तब तो विज्ञान से घट-पटादि-भिन्न हो गये अर्थात् विज्ञानव्यतिरिक्त मार्ग पर आप आ गये। यदि घट पटादि बाह्य वस्तु विज्ञान से अतिरिक्त नहीं है तो "नीलपीते" इत्याकारक समूहालम्बनज्ञान में नीलाकार विज्ञान पीताकार हो जाना चाहिये—क्यों कि नील-पीत-ये दोनों विज्ञान के ही आकार विशेष है—स्वरूपतः विज्ञान में तो कोई भेद है नहीं। (जो नीलाकार विज्ञान है वही पीताकार है) बौद्ध-हम अपोह (अतद्व्यावृत्तिरूप नीलत्व जाति को नीलाकार विज्ञान का धर्म मानते हैं—एवं अपोह (अतद्व्यावृत्ति) रूप पीतत्व जाति को

---

यथोचितः। एवं चाधिष्ठानस्यात्मनः विशेष्यायाः शुक्तेः प्रकारीभूतस्य रजतस्य रजतत्वस्य च बाधात्सर्वत्रैव सर्वस्य बाधदर्शनात् "न मया किमपि ज्ञातं" इतिप्रत्ययबलात् "नाहं किंचिदवेदिष" मिति प्रत्ययप्रामाण्याद्वा जगतः शून्यत्वसिद्धिः। यद्वा यथाऽद्वैतवादिभिः प्रपञ्चस्य मिथ्यात्वं साध्यते तथा अस्माभिरपि। संक्षेपतस्तत्प्रकारश्च प्रपञ्चस्तावन्न शशविषाणवदत्यन्ताऽसत् व्यावहारिकप्रत्यक्षविषयत्वात्। प्रपञ्चस्तावन्न सत् तत्त्वज्ञानेन बाध्यत्वात्। बाधश्चात्र पक्षनिष्ठाभावप्रतियोगित्वम्। पक्षश्च स्वाश्रयत्वेनाभिमतो ग्राह्यः। स्वपदं च प्रपञ्चपरम्। एवं चाऽ"द्वैतमते" ब्रह्मण एव प्रपञ्चाधिष्ठानतया निर्धर्मकत्वेन प्रपञ्चाभाववत्तया च चैतन्यनिष्ठाभाव प्रतियोगित्व प्रपञ्चेऽस्तीति। तथाच प्रपञ्चो न सत् स्वाश्रयत्वेनाभिमत"चैतन्य" निष्ठाभावप्रतियोगित्वात् शुक्तिरूप्यवत्। यथा तादात्म्येन रजताश्रयत्वेनाभिमतायां शुक्तौ वर्तमानो योऽभावस्तत्प्रतियोगित्व रजतस्येति रजतं न सत्। तथा च स्वात्यन्ताभावस्य स्वस्य चैकत्र वर्त्तमानतया प्रतीतिः स्वीक्रियते-तादृशप्रतीतिविषयत्वं बाध्यत्वं, तदेव च मिथ्यात्वं बोध्यम्। एवं च प्रपञ्चो न सत् मिथ्यात्वात् शुक्तिरूप्यवदित्यनुमानं फलितम्। न च स्वरूपाऽसिद्धिः, स्वाधिकरणे स्वात्यन्ताभावविरोधादिति वाच्यम्। "नेह नानास्ति किंचने"तिश्रुत्या स्वाश्रयत्वेनाभिमते स्वात्यन्ताभावं सामानाधिकरण्यबोधनात्। एवं च ब्रह्मभिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वादिति सामान्यानुमानेन घटो मिथ्या दृश्यत्वादिति विशेषानुमानेन वा घटादीनां सर्वेषां पदार्थानां मिथ्यात्वसिद्धिः विनिगमनेति। तथाच विनिगमनाविरहात्सर्वविषयकं स्यात्, निर्विषयकं वा स्यादिति भावः। ज्ञानस्य सविषयकत्वे दूषणमाह सुषुप्ताविति। शक्ते इदानीमिति। सुषुप्तिकाले इत्यर्थः। निराकारा=

अहमित्याकारा निर्विषयकेति यावत् चित्सन्ततिः विज्ञानसन्ततिः। तस्याः= निराकारचित्सन्ततेः। स्वप्रकाशत्वे=विज्ञानरूपत्वे। प्रमाणाभावादिति। ज्ञानत्वस्य विषयिताव्याप्यत्वनियमादिति भावः। अन्यथा=तत्र ज्ञानत्वस्वीकारे। अभावादिति। तथाच घटादीनां विज्ञानरूपत्वे इष्टापत्तिरिति भावः। बाह्यं नास्ति-तथाच घटज्ञानं घटाभिन्नं "घटो वा घटज्ञानाऽभिन्नः घटज्ञानाविषयकप्रतीत्य-विषयत्वात् घटवत् घटज्ञानवच्च। न च स्वरूपासिद्धिः, घटज्ञानाविषयक "घटविषयक"प्रतीत्यविषयत्वस्य घटज्ञाने विरहादिति वाच्यम्। ज्ञानस्य स्वप्रकाशतयाऽसिद्धिविरहात्। एवमात्मापि बाह्यपदार्थः, तन्मते ज्ञानानात्मकस्य सर्वस्यैव बाह्यपदार्थत्वात्। आत्मा ज्ञानाऽभिन्नः ज्ञानाविषयकप्रतीत्यविषयत्वात्। अत्र नैयायिकानामेकवाक्यतैव "अध्यक्षो विशेषगुणयोगत" इत्युक्तेः। एव-मात्मा ज्ञानाऽभिन्नः ज्ञानविषयकप्रतीतिविषयत्वादित्यनुमानमपि अभेदसाधकं बोध्यम्। एवं गुणिनं पक्षयित्वा गुणाभेदः गुणं वा पक्षयित्वा गुण्यभेदः साधनीयः। अत एव शुक्लो घट इत्यादिसामानाधिकरण्यधीरपि संगच्छते। बाह्यवस्तुजातस्य सत्त्वे किं प्रमाणम्। यदि प्रत्यक्षादिकमुच्यते तदा घटस्य स्वसंवित्त्या सहोपलंभ-नियमेनाऽभेद एव किं न कल्प्यते, भेदो हि सहानुपलब्धिव्याप्यः यथा गवाश्वयोः। नहि तयोः सहोपलब्धिनियमोऽस्ति, गोपरिहारेणापि वाजिनः प्रतीतेः। अत एव गोव्यक्तिरश्वतो भिन्नेति सिद्धे भेद-सहानुपलंभयोर्व्याप्यव्यापकभावे व्यापकस्य सहानु-पलंभस्य व्यतिरेकेण ज्ञानविषययोर्भेदोऽपि निवर्त्तते। यश्च ज्ञानविषययोः पार्थक्य-विभासः स तु मृषाकल्पित एव। तथाचोक्तम्—

> सहोपलंभनियमादभेदो नीलतद्धियोः।
> भेदश्च भ्रान्तिविज्ञानैर्दृश्यतेन्दाविवाद्वये॥ इति।

अत्रेदं बोध्यम्। सर्वं भावजातं शून्यमेव, अन्योन्याभावस्वरूपत्वात्। अभावस्याधिकरणरूपतयाऽभावत्वेनैव सर्वेषां प्रतीतेः। प्रतीतिश्च घटः पटो न, घटे पटो नास्तीत्यादिरूपा, तथाच पारमर्षं सूत्रम् "सर्वमभावः-भावेष्वितरेतराभाव-सिद्धेरिति"। व्यवहारे प्रमाविषयत्वेनोपलभ्यमानानां पदार्थानां स्वप्ने बाधदर्शना-त्स्वप्नसृष्टेर्मिथ्यात्वमिव प्रपञ्चस्य मिथ्यात्वं बोध्यम्। ननु स्वाप्निकप्रपञ्चस्य न बहुकालमनुवृत्तिः, व्यावहारिकस्य तु तथेति व्यावहारिक-प्रातिभासिकसत्ताभेदाङ्गी-कारेण प्रातिभासिकस्यैव बाध्यत्वापरपर्यायं मिथ्यात्वम्, व्यावहारिकस्य तु आब्रह्मदर्शनमनुवृत्तिरिति वेदान्तमतानुप्रवेश एव श्रेयानिति चेत्तर्हि सिद्धं मतमपि मनोरथद्रुमेण, कालस्याऽनियामकत्वात्। तिमिरादिरोगोपहतस्याऽनल्पनिद्रस्य वा जनस्य बहुशः स्वाप्नदृष्टिप्रचारस्यैव दृष्टचरत्वात्, जगतः स्वप्न-समानशीलत्वमेव। यदुक्तं वेदान्तमतानुप्रवेश इति—तन्नास्माकमनिष्टम्। सर्वशून्यतायां पर्यवसानम्। न च यदि सर्वं शून्यमेव तदा स्वलोपि प्रेक्षावतां

व्यवहारः कथमुपपद्यतामिति वाच्यम्। तस्य युष्माकमिवाऽस्माकमपि अविद्या-वासनामूलकत्वादिति। इष्टापत्तिं निराकरोति **घटादेरिति। अनुभूयमानस्येति।** अनुभवकर्मण इत्यर्थः। तथाच घटादेरनुभवकर्मत्वमनुभवसिद्धं "घटमनुभवामीति" प्रत्ययात्। ननु अनुभवाश्रयत्वमनुभवसिद्धं "घटोऽनुभवती"त्यप्रत्ययादिति भावः। **आकारविशेषः**=स्वरूपविशेषः। आकारस्य विज्ञानातिरिक्तत्वमनतिरिक्तत्वं वेति विकल्प्याद्ये दूषणमाह **तर्हीति। विज्ञानव्यतिरिक्तेनेति।** तथाच विज्ञान-व्यतिरिक्तवस्तुनोऽभावादित्यस्याऽसंगतिरिति भावः। द्वितीये त्वाह **तर्हीति। समूहालंबने**=नीलपीते इत्याकारके। **स्यादिति।** तदभिन्नाभिन्नस्य तदभिन्नत्व-नियमेन नीलरूपाकारात्मकविज्ञानाऽभिन्न-विज्ञानाऽभिन्नस्य पीताकारस्य नीला-भिन्नत्वं स्यादिति भावः। तदेवोपपादयति **स्वरूपतो विज्ञानस्येति।** विज्ञान-स्वरूपस्येत्यर्थः। **अविशेषात्**=एकत्वात्। ननु नीलाकारः पीताकारश्चाऽभिन्न एव, भेदप्रतीतिस्तु तद्धर्मयोर्नीलत्वपीतत्वयोर्भेदादित्याशंकते **अपोहरूप इति।** अतद्व्यावृत्तिरूप इत्यर्थः। अनीलव्यावृत्तिरूप इति यावत्। घट इत्यनुगतबुद्धेः घटभेदविषयकत्वात्, भेदस्योभयवादिसिद्धतया जातेश्च नवीनायाः कल्पनीयतया न विनिगमनाविरहावसरः। तदुक्तम्—

*प्रसज्यप्रतिषेधश्च गौरगौर्न भवत्ययम्।*
अतिविस्पष्ट एवायमन्यापोहोऽवगम्यते॥ इति।

अपोहः=अन्यापोहः, स्वलक्षणमिति चानर्थान्तरम्। तथाचाऽगोव्यावृत्तिधर्मस्य सकलगोसाधारणतया तस्यैव शक्त्यनुगमकत्वात्। अगोव्यावृत्तिधर्मस्य एकत्र गवि विद्यमानत्ववत् गोमात्रे सत्वात्। तदुक्तम्—"**तथा हि एको गौरगोव्यावृत्ति-स्तथा परेपि गावः**" इति। भवतां विधिरूपस्येव निषेधरूपस्यापि गोत्वस्य संके-तविषयत्वमस्माकमिति। अपोहे विप्रतिपत्तिस्तु - गवादिपदं, व्यावृत्तिवाचकं न वा। अनुगतधर्मे भावत्वं वर्तते नवेत्याकारिका बोध्या। विधिकोटिर्नैयायिकानां निषेध-कोटिश्च सौगतानाम् द्वितीयविप्रतिपत्तौ, प्रथमविप्रतिपत्तौ च विधिकोटिः सौगतानां निषेधकोटिश्च नैयायिकानाम्। सौगतानामयमाशयः—अतव्द्यावृत्तिरन्यापोह-शब्दार्थः। नेदमरजतमिति ज्ञात्वैव रजतार्थिनां प्रवृत्तेः। यद्यपि विषयव्यवस्थाऽनु-व्यवसायाधीना, अनुव्यवसायश्च रजतमहं जानामीत्याकारको न तु अरजतव्यावृ-त्तिमहं जानामीत्याकारकः। अत एव "**नहि शब्दलिंगाभ्यामिह महीधरोद्देशे अनग्निर्न भवतीति स्फुरणम्, अपि तु अग्निरस्ति**" इत्याचार्याः। "अरजत" व्यावृत्तिमहं जानामीत्यनुव्यवसायस्तदा स्याद्यदि व्यवसाये व्यावृत्तिः स्वातन्त्र्येण स्फुरेत्, न त्वेवम्। तथापि अरजतव्यावृत्तिमिति भाने "अरजतव्यावृत्तात्मकं" रजतमिति भाने वा व्यावृत्तात्मकविशिष्टबुद्धौ व्यावृत्तिरपि विशेषणत्वेन भासते

नीलत्वादीनां विरुद्धानामेकस्मिन्नसमावेशात्, इतरथा विरोधावधारणस्यैव दुरुपपादत्वात्। न वा वासनासंक्रमः संभवति, मातृपुत्रयोरपि वासनासंक्रमप्रसंगात्। न चोपादानोपादेयभावो नियामक इति वाच्यम्। वासनायाः संक्रमाऽसंभवात्। उत्तरस्मिन्नुत्पत्तिरेव संक्रम इति चेन्न।

पीताकार विज्ञान का धर्म मानते हैं—इससे नील-पीत में भेद सिद्ध है। नैयायिक—हम तो कहते हैं कि जो नीलाकार विज्ञान है वही तो पीताकार विज्ञान है उभयाकार विज्ञान तो एक ही है सो उस एक विज्ञान में नीलत्व पीतत्व यह विरुद्ध धर्म कैसे रहेंगे—अन्यथा विरोध ही दुरुपपन्न हो जायगा। और पहिले जो आप (बौद्ध) ने कहा कि मृगमद वासना की तरह पूर्व २ विज्ञान उत्तरोत्तर विज्ञान में वासना का संक्रमण करता है सो "न वा वासना संक्रमः संभवति" वासना का संक्रमण भी संभव नहीं है। क्योंकि माता के संस्कार पुत्र में आ जाने चाहिये—अर्थात् माता से अनुभूत पदार्थों का स्मरण गर्भस्थ बालक को होना चाहिये। बौद्ध-उपादान कारण के संस्कार ही उपादेय (कार्य) में आते हैं जैसे पूर्व विज्ञान उत्तर विज्ञान का उपादान कारण है अतः पूर्व विज्ञान के संस्कार उत्तर विज्ञान में जाते हैं। वही कहा है कि "नचोपादानोपादेयभावः" इत्यादि। नैयायिक—हमारा कहना यह है कि पूर्व विज्ञान की वासना का उत्तर विज्ञान में संक्रमण (संचार) संभव ही नहीं क्यों कि आप (बौद्ध) के यहाँ पूर्व विज्ञान क्षणिक होने के नाते पूर्णरूप से नष्ट हो जाता है—उसका कुछ भी अंश नहीं रहता है कि जिसका संक्रमण उत्तर विज्ञान में हो सके। अतः यह सर्वथा असंभव है कि पूर्वविज्ञान उत्तर विज्ञान में वासना प्रदान करता है)। बौद्ध-पूर्वविज्ञान की वासना का उत्तर विज्ञान में उत्पत्ति

---

एव। तदुक्तम् आचार्यैः "नहि अनन्तर्भावितविशेषणा विशिष्टप्रतीतिर्नाम, ततो यथा सामान्यमहं प्रत्येमीत्यनुव्यवसायाभावेपि साधारणाकारस्फुरणाद् विकल्पधीः सामान्यबुद्धिः परेषां, तथा निवृत्तप्रत्ययाद्विना निवृत्तिबुद्धिरस्माक"मिति। एकस्मिन् = विज्ञाने। इतरथा = विरुद्धनीलादीनामेकाधिकरणवृत्तित्वनिश्चये। ननु समूहालंबने चित्राकार एवानुभूयते इति नोक्तदोष इति वासनासंक्रमं मुख्यतया दूषयति नवेति। वासनासंक्रमप्रसंगादिति।

तथाच कार्यकारणभावेपि नानात्वस्य तादवस्थ्यात् स्मरणाद्यनुपपत्तिर्दुर्वारैव, मात्रानुभूतस्य गर्भस्थेन तत्सन्तानेनाऽस्मरणवदिति भावः। उपादानेनानुभूतमुपादेयेन स्मर्यते इत्यपि निरस्यति नचेति। नियामक इति। संस्कारस्येति शेषः। उपादानत्वं चाऽसहकृतकारणत्वम्, उत्तरविज्ञानव्यक्तौ पूर्वविज्ञानव्यक्तिमात्रस्यैव सौगतमते कारणत्वात्, भवति उत्तरविज्ञानव्यक्तौ पूर्वविज्ञानव्यक्तेरुपादानत्वम्, माता पिता वा पुत्रम्प्रति नाऽसहकृतं कारणं, शुक्रशोणितादेरपि कारणत्वात्। संक्रमाऽसंभवात् = गमनाऽसंभवात्। शंकते उत्तरस्मिन्निति। वासनोत्पादके

तदुत्पादकाभावात् । चितामेवोत्पादकत्वे संस्कारानन्त्यप्रसंगः । क्षणिक-विज्ञानेषु अतिशयविशेषः कल्प्यते इति चेन्न । मानाभावात्, कल्पनागौर-

हो जाना ही संक्रम कहलाता है। नैयायिक यह ठीक नहीं--क्योंकि उत्तर विज्ञान में संस्कार का उत्पादक ही जब कोई नहीं तब पूर्व विज्ञान में संस्कार की उत्पत्ति उत्तर विज्ञान में कैसे होगी। बौद्ध-चित (पूर्व २ विज्ञान ही संस्कारों का उत्पादक माना जाय। नैया० विज्ञान अनन्त हैं—अतः प्रत्येक विज्ञान से उत्पन्न होने वाले संस्कार भी अनन्त ही मानने पड़ेंगे—तब संस्कारों को आनन्त्य दोष का प्रसङ्ग (आपत्ति) हो जावेगी। बौद्ध—क्षणिक विज्ञान में एक अतिशय (शक्ति) विशेष की कल्पना करेंगे कि पूर्व २ विज्ञान अपनी शक्ति के द्वारा उत्तरोत्तर विज्ञान में वासना को उत्पन्न करता रहता है। नैया० शक्ति कल्पना में कोई प्रमाण नहीं—दूसरी बात यह है कि यदि शक्ति की कल्पना करो तो भी क्षणिक विज्ञान अनन्त

---

इत्यर्थः। **तदुत्पादकाभावादिति** । तथाहि—उत्तरविज्ञानोत्पत्तिकाले एव पूर्ववि-ज्ञानस्थितसंस्कारादुत्तरविज्ञाने संस्कारोत्पत्तिर्वाच्या, सा च न संभवति संस्का-रस्य संस्कारजनकत्वानभ्युपगमात् । पूर्वविज्ञानस्यैवोत्तरविज्ञानमिवोत्तरविज्ञान-निष्ठसंस्कारं प्रति च जनकत्वसंभवेपि विज्ञानानामानन्त्यात्संस्कारानन्त्यप्रसंगः। एतदेवाह **चितामेवेति** । विज्ञानानामेवेत्यर्थः। **संस्कारानन्त्यप्रसंग इति** । **विज्ञानानामानन्त्यादि**त्यादिः । ननु विज्ञानव्यक्तीनां संस्कारजनकत्वे प्रतिविज्ञानं भिन्नभिन्नसंस्कारव्यक्तिकल्पनागौरवेपि यादृशज्ञानव्यक्त्युत्तरं स्मरणमनुभवसिद्धं तादृ-शज्ञाननिष्ठसंस्कारानुकूला काचिच्छक्तिः पूर्वज्ञानव्यक्तौ स्वीकरणीयेति ज्ञानानन्त्य-प्रयुक्तसंस्कारानन्त्याभावान्न पूर्वोक्तगौरवमित्याशयेनाऽशंकते **क्षणिकविज्ञानेष्विति**। **अतिशयविशेषः** = शक्तिविशेषः—उत्तरोत्तरविज्ञानानुकूलतयेति शेषः। **मानाभा-वादिति** । तादृशाऽतिशये इत्यादिः। **कल्पनागौरवादिति** । तादृशशक्तेरपि भाव-त्वेन क्षणिकतया अनन्तशक्तितत्प्रागभावादिकल्पनागौरवादिति भावः।

अथ सन्तानमाश्रित्य क्रियते तत्समर्थनम् ।
न तस्य भिन्नाभिन्नत्वविकल्पानुपपत्तितः ॥
अभेदपक्षे क्षणवद् व्यवहारो न सिद्ध्यति ।
व्यतिरेके तु चिन्त्योऽसौ वास्तवोऽवास्तवोपि वा ॥
वास्तवत्वे स्थिरो वा स्यात्क्षणिको वेति चिन्त्यताम् ।
अवास्तवत्वे पूर्वोक्तं कार्यं विघटते पुनः ॥
सन्तानर्निर्विशेषः स्यात्सन्तानः क्षणभङ्गुरः ।
न सिद्धयेत्पुनरप्येष व्यवहारः पुरोदितः ॥
अथापि नित्यं परमार्थसन्तं सन्ताननामानमुपैषि भावम् ।

वाच्च। एतेन क्षणिकशरीरेष्वेव चैतन्यं प्रत्युक्तम्, गौरवात् अतिशये माना-भावाच्च। बीजादावपि सहकारिसमवधानाऽसमवधानाभ्यामेवोपपत्तेः कुर्व-द्रूपत्वाकल्पनात्।

हैं उनमें से प्रत्येक की कल्पना करनी होगी—तो अनन्त शक्तियों की कल्पना करने में गौरव भी होगा।

कोई लोग क्षणिक-शरीर को ही चेतन (आत्मा) मानते थे—सो इन पूर्वोक्त दोनों दोषों से वह पक्ष भी खण्डित हो गया। गौरव दोष से—तथा शक्ति विशेष की कल्पना करने में कोई प्रमाण नहीं है। बौद्ध जैसे क्षेत्रस्थ बीज से अङ्कुर उत्पन्न होता है—और कुशूलस्थ बीज से अंकुर उत्पन्न नहीं होता है अतः क्षेत्रस्थ बीज में एक कुर्वद्रूपा शक्ति है जिस शक्ति के द्वारा क्षेत्रस्थबीज अंकुर को उत्पन्न करता है। कुशूलस्थ बीज में वह शक्ति नहीं हैं अतः उससे अंकुर उत्पन्न नहीं होता है—ऐसे ही क्षणिक विज्ञान-या क्षणिक शरीर में कुर्वद्रूपा शक्ति मान ली जाय—जिस कुर्वद्रूपा शक्ति के द्वारा उत्तर विज्ञान में या उत्तर शरीर में संस्कार की उत्पत्ति होती है। नैयायिक—क्षेत्रस्थबीज में कुर्वद्रूपा शक्ति कल्पना व्यर्थ है—वहाँ धरणी सलिल संयोगरूप सहकारी कारण के संवलन होने से अंकुरोत्पत्ति होती है—और कुशूलस्थबीजस्थल में सहकारीकारण का समवधान नहीं है अतः अंकुरोत्पत्ति वहाँ नहीं होती है।

---

व्यक्तिष्व भिन्नो फलितास्तथाशाः सोऽयं समाप्तः क्षणभङ्गवादः॥ इति। **एतेन**= वक्ष्यमाणदोषेण। **क्षणिकशरीरेष्वेवेति**। एवकारेण घटादिव्यावृत्तिः। अथ क्षेत्रस्थबीजादङ्कुरोत्पत्तिः, न कुसूलस्थबीजादतोऽङ्कुरत्वावच्छिन्नं प्रति कुर्वद्रूपत्वेन हेतुत्वमङ्गीक्रियते, कुर्वद्रूपत्वं चाङ्कुरजनकतावच्छेदकतया सिद्धो जातिविशेषः, स च फलोपधायकक्षणिक-समर्थबीजमात्रवृत्तिबीजत्वव्याप्यः कल्प्यते, एवमत्रापि कुर्वद्रूपत्वेनैव क्षणिकशरीरेषूत्तरोत्तरशरीरनिष्ठवासनोत्पादकत्वं स्वीकरणीयमत आह **बीजादाविति**। **उपपत्तेः**=कस्माच्चिद्बीजादङ्कुरोत्पत्तिः, कस्माच्चि नेति नियमो-पपत्तेः। **कुर्वद्रूपत्वाकल्पनादिति**। कुसूलस्थबीजादिषु धरणिसलिलसंयोगादि-रूपसहकार्यभावादेवाङ्कुरानुपपत्तेः, कुर्वद्रूपत्वं तेन रूपेण जनकत्वं न कल्प्यते प्रमाणाभावादिति भावः। कुर्वद्रूपत्वे विप्रतिपत्तिस्तु अङ्कुरकरणाभाववन्ति बीजानि-अंकुरजनकतावच्छेदकबीजवृत्तिजातिशून्यानि न वेत्याकारिका बोध्या। विधिकोटि-नैयायिकानां निषेधकोटिः सौगतानाम्। तादृशजातिश्चाऽपोहरूपा। इदमत्रावधेयम्—यत्सत्तत्क्षणिकमिति व्याप्तिरेवाऽसिद्धा। जलधरपटले अन्त्यशब्दे च तत्साहचर्य-मस्तीति चेत्, जलधरपटलेऽसिद्धा व्याप्तिः, क्षणिकत्वेनैव तस्यावस्थानमित्यस्य शपथनिर्णेयत्वात्। अन्त्यशब्दस्य क्षणिकत्वं च कैश्चिदेवेष्यते। अङ्गीकारपक्षेपि वा न तदुदाहरणेन सामान्यव्याप्तिः साधयितुं शक्या। गुणिनो घटादेः सावयवत्व-दर्शनाद्द्रव्यमात्रस्यैव तया दिशा सावयवत्वं सिद्ध्येत्। तस्माद्व्याप्तौ मानाभावेनाऽ

नुमानमेवाऽसिद्धम् । द्वितीये च किं सामर्थ्यपदाभिधेयं यदि करणत्वं "तदेव कारित्वं" तच्च फलायोगव्यवच्छिन्नकारणत्वरूपं तदाऽऽपाद्याऽऽपादकयोरभेदापत्तिः । कुसूलस्थबीजं यदि समर्थं स्यात्तदा कारि स्यादिति प्रसङ्गे सामर्थ्यस्याऽऽपादकत्वात्, कारित्वस्याऽपाद्यत्वात्, तयोश्चैक्यात् । "आपाद्यापादकयोरपि भेदे सति आपादनप्रवृत्तेः साध्यसाधनयोरिवे"त्यभियुक्तोक्तेः" । एवं विपर्यये क्षेत्रस्थबीजं यद्यसमर्थं स्यादकारि स्यादित्यत्रापि आपाद्यापादकयोरभेदापत्तिर्बोध्या । अथ सामर्थ्यं योग्यता, तथा च नापाद्यापादकयोरभेदापत्तिरिति भेदसिद्धौ क्षणिकत्वसिद्धिरिति चेत्, सत्यं, सा योग्यता सहकारिसाकल्यरूपा- कारणतावच्छेदकीभूतबीजत्वरूपा—कुर्वद्रूपत्वरूपा वा । नाद्यः, सिद्धसाधनात्, तथाहि यदि बीजं सहकारिसमवहितं स्यात्तदा कारि स्यादित्यत्रेष्टापत्तिः । तदुक्तमाचार्येण "यत्सहकारिसमवधानवत्तद्धि करोत्येवेति को नाम नाभ्युपैति यमुद्दिश्य साध्यते । न चाकरणकाले सहकारिसमवधानवत्त्वं नैयायिकेनाभ्युपेयते यतः प्रसंगः प्रवर्त्तेते" ति । न द्वितीयः, व्यभिचारात्-बाधाच्च । तथाहि कुसूलस्थं यदि बीजं स्यात्तदा कारि स्यादिति प्रसंगे व्यभिचारः । क्षेत्रस्थं यदि बीजं न स्यादकारि स्यादिति विपर्यये बाधः । अथ सामर्थ्यं "बीजत्वव्याप्याङ्कुर" कुर्वद्रूपत्वमेव, कुसूलस्थ बीजं कुर्वद्रूपत्वजातिमत्स्यादङ्कुरकारि स्यात् क्षेत्रपतितबीजवत्, एवं क्षेत्रस्थबीजं यदि कुर्वद्रूपत्वजातिमन्नस्यादंकुरकारि न स्यात्, कुसूलस्थबीजवदिति प्रसंगविपर्ययाभ्यां भेदसिद्धौ क्षणिकत्वसिद्धिरिति चेत् । दृष्टान्तस्य "क्षेत्रपतितबीजस्य" साधनविकलत्वात्, तादृशजातिविशेषस्य अंकुरकारिण्यपि अनभ्युपगमात् । अत एव बीजमंकुरारम्भे धरणिसलिलेऽवश्यमपेक्षते । अत एव कृषीवलोऽङ्कुरकामो बीजवापाय प्रवर्तते । अन्यथा अंकुरकुर्वद्रूपस्यैव कारणत्वे कदाचिद्धरणिसलिलसंयोगमन्तरेणापि बीजमङ्कुरं जनयेत् । कृषीवलोपि वा बीजादौ न प्रवर्त्तेत बीजस्याऽङ्कुरेऽकारणत्वात् । तादृशक्षणोत्पादनायैव स तत्र प्रवर्त्तते इति चेन्न । तादृशक्षणोत्पादकस्यापि क्षणत्वेन बीजादेस्तत्राऽकारणत्वात् । तत्रापि क्षणान्तरानुसरणे चाऽनवस्थापातात । अत्राचार्यपादाः—"को हि नाम सुस्थात्मा प्रमाणशून्यमभ्युपगच्छेत्, तद्धि तावन्न प्रत्यक्षेणानुभूयते तथाऽनध्यवसायात् । नाप्यनुमानेन-लिङ्गाभावात् । यदि न कश्चिद्विशेषः, कथं तर्हि करणाकरणे इति चेत्, क एवमाह नेति, परं किं जातिभेदरूपः—सहकारिलाभालाभरूपो वेति नियामकं प्रमाणमनुसरन्तो न पश्यामः" इति । अथ सामर्थ्यं सहकारिवैकल्य-

[illegible] नसिद्धम्, तथा च सहकारि-

[illegible] कारि स्यात्, एवं बीजं

[illegible] यात्, एवं बीजं यदि

सहकारिवैकल्यप्रयुक्तकार्याभाववन्न स्यात्तदा कारि स्यात्, एवं बीजं यदि सहकारि-

वैकल्यप्रयुक्तकार्याभाववन्न स्यात्तदाऽकारि स्यादिति प्रसङ्गविपर्ययौ स्यातां न कश्चिद्दोष इति चेत् विरोधात् सहकार्यभावप्रयुक्तकार्याभाववान् सहकारिविरहे कार्यवांश्चेति व्याहतमिति। किन्तु यत्सहकारिविरहान्न करोति, तदैव सहकारिसत्त्वे करोतीत्यायातम्, तच्च स्थैर्यसिद्धावेव संभवतीति ध्येयम्। एवं घटादीनां स्थैर्ये "सोयं घट" इत्यादि प्रत्यभिज्ञापि प्रमाणम्। तथाहि घटस्य क्षणिकत्वे प्रतिक्षणं घटव्यक्तिभेदेन "स एवायं घटः" इति पूर्वापरकालीनाऽभेदावगाहि प्रत्यक्षं सर्वानुभवसिद्धं न स्यादिति तदुपपत्तये घटादिपदार्थानां स्थैर्यमावश्यकम्। अनुमानमपि विमतो भावः स्थिरः "क्षणिकत्वाभाववान्" सोऽयमित्यादिप्रत्यभिज्ञाविषयत्वाद्यन्नैवं तन्नैवं यथा क्षणिकान्यशब्दः। न च तत्त्व-इदन्त्वोल्लेखिज्ञानत्वस्यैव प्रत्यभिज्ञात्वेन तस्य च ज्वालादिप्रतिभिज्ञायामपि सत्त्वेन व्यभिचारिजातीयत्वेन प्रत्यभिज्ञायामपि सत्त्वेन व्यभिचारिजातीयत्वेन न प्रत्यभिज्ञाविषयत्वस्य ज्वालादावपि सत्त्वात्तत्र च स्थैर्याभावादुक्तहेतोर्व्यभिचारितयाऽप्रयोजकत्वमिति वाच्यम्। विरुद्धधर्मासंसृष्टविषयकप्रत्यभिज्ञाविषयत्वस्य हेतुत्वोपगमात्। नचायं हेतुः स्वरूपासिद्धः, सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गस्यैव दर्शितत्वादिति वाच्यम्। सहकारिसाकल्ये सति बीजे सामर्थ्यं—सहकार्यसमवधाने तत्रैवाऽसामर्थ्यमिति प्रागुक्तदिशा तयोरविरोधादिति। कृतहानाऽकृताभ्यागमप्रसंगोपि क्षणिकत्वे बाधकः। तदुक्तं जयन्तभट्टेन—

कर्मसन्तानिनाऽन्येन यत्कृतं चैत्यवन्दनम्।
ततोऽस्य फलमन्येन भुज्यतेऽकृतकर्मणा॥ इत्यन्यत्र विस्तरः।

एवमगोव्यावृत्तिरूपाऽपोहघटकः अगोपदार्थो "गोस्वरूपलक्षणरूपस्य" गोपिण्डस्य भेदवान्। ततश्च गोपिण्डभिन्नेभ्यो यावद्भ्यो व्यावृत्तिर्विवक्षिता-किंवा गोपिण्डभिन्नाद्यतः कुतश्चिद् व्यावृत्तिर्विवक्षिता। आद्ये—गवान्तरेपि गोव्यहारानुपपत्तिः, गवान्तरस्य यत्किंचिद्गोभिन्नत्वेन "अगोपदार्थस्य" यावदन्तर्गततया तद्व्यावृत्तेस्तत्राऽसत्त्वात्। द्वितीये अश्वादावपि गोव्यवहारापत्तिः, गोभिन्नयत्किंचिन्महिष्यादिव्यावृत्तेस्तत्र सत्त्वात्। गोत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वावच्छिन्नप्रतियोगिताकभेद एव गोव्यवहारे निमित्तमिति चेत्। गोत्वमननुगतमनुगतं वा! आद्ये उक्तव्यवहारानुपपत्तिस्तदवस्थैव। द्वितीये अनुगतमपि गोत्वं विधिरूपं निषेधरूपं वा! आद्ये-सिद्धं नः समीहितम्। द्वितीये च गोस्वलक्षणभिन्नेभ्यो यावद्भ्यो व्यावृत्तिरूपत्वे गवान्तरे गोव्यवहारानुपपत्तिः। तादृशाद्यतःकुतश्चिद्व्यावृत्तिरूपत्वे अश्वेपि गोव्यवहारापत्तिर्दुर्वारैव। न च गोत्वाभाववानगोपदार्थ इति वाच्यम्। तथापि गोत्वाभाववद्व्यावृत्तिर्गोत्वमेवेति दिक्।

अत्र कन्दलीकारा अपि—के पुनरगावो यद्व्यावृत्त्या गवाकारेषु गोत्वमारोप्यते। ये गावो न भवन्ति तेऽगाव इति चेत्। गावः के! येऽगावो न भवन्तीति चेत्, गवाश्वस्वरूपे निरूपिते तद्व्यावृत्तत्वेनाऽगवां स्वरूपं निरूप्यते—अगवां स्वरूपे निरूपिते तद्व्यावृत्तत्वेन गवां स्वरूपनिरूपणमित्येकाप्रतिपत्तौ इतराप्रतिपत्तेरुभया-प्रतिपत्तिः। तदुक्तम्—

सिद्धश्च गौरपोहोत गोनिषेधात्मकश्च यः।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते।
गव्यसिद्धे त्वगौर्नास्ति तदभावे तु गौः कुतः॥ इति प्राहुः।

वार्तिककृतस्तु—न युक्तोऽपोहः—विकल्पानुपपत्तेः। तथाहि योयं गोरपोहः स गोर्व्यतिरिक्तोऽव्यतिरिक्तो वा। व्यतिरिक्तोपि आश्रितोऽनाश्रितो वा। यद्याश्रितस्तदा गुणः आश्रितत्वात्, एवं च गोशब्देन गुणाभिधाने गौर्गच्छतीति सामानाधिकरण्यं न स्यात्। अथाऽनाश्रितः, तर्हि गोरपोह इति षष्ठी न स्यात्, गवापोहयोः परस्परमाधाराधेयभावादिरूपसंबन्धस्य विरहात्। अपरषष्ठ्याश्चाऽनवकाशात्। अथाऽव्यतिरिक्तः, गौरेवाऽपोह इति स्वीकारेपि न कश्चिदुपयोगः। किं चायमपोहो गोव्यक्तिभेदाद् भिद्यते न वा! आद्ये, गोपिण्डवदस्याप्यानन्त्येन शक्तिग्रहाऽसंभवाच्छब्दत आख्यानानुपपत्तिः। द्वितीये यद्येकोऽनेकगोसंबन्धी तदा गोत्वे एव पर्यवसानम्। किं चायमपोहोऽपोहशब्दवाच्योऽथाऽवाच्यः। वाच्योपि स्वरूपेण अपोहेन वा? न स्वरूपतः, तथासति गवाऽश्वादिभेदेनाऽपोहस्यानन्त्येन शक्तिग्रहाऽसंभवेन वाच्यत्वानुपपत्तेः। नाप्यपोहापोहेन, तथासति अपोहे वर्तमानोऽपोहोपि अपोहापोहेन, एवं साप्यपोहापोहेनेत्यनवस्थापातात्। एवं चापोहस्यापोहशब्दाभिधेयत्वाभावेन तदतिरिक्तस्य कस्यचित्स्वार्थत्वासंभवेन च निरर्थक एवाऽपोहशब्द इति यथा यथा सौगतमतं परीक्ष्यते तथा तथा दम्भ एव प्रतीयते इत्याहुः। बौद्धानामयमाशयः—संसारो दुःखमयः, सर्वेषां विवेकिनां जिहासितश्च। अथ च वैराग्यार्थं दुःखरूपतयैव भावनीयमिति हि शाक्योपदेशः, परन्तु तदुच्छेदप्रकारो न वेदादिप्रतिपादितेन पथा वेदानां प्रामाण्यस्यैव सन्दिग्धत्वात्। "तदप्रामाण्यमनृतव्याघातपुनरुक्तिदोषेभ्यः" इति सूत्रेण तदप्रामाण्यस्य समुद्घोषात्। किन्तु चतुर्विधभावनया अपवर्गसिद्धिः। चतुर्विधभावना च सर्वं क्षणिकं क्षणिकं सर्वं दुःखं दुःखं सर्वं स्वलक्षणं स्वलक्षणं सर्वं शून्यं शून्यमिति। एताश्चतस्रो भावनाः सम्यग्बुद्धावस्थापितास्तत्त्वज्ञानद्वारा परनिर्वाणाख्यं मोक्षमासादयन्ति। अथ सर्वं क्षणिकं क्षणिकमित्याकारिकया भ्रमात्मिकया भावनया कथं परनिर्वाणं सेत्स्यतीति चेदत्रसौगताः—अर्थक्रियाकारित्वं विना नैकोपि पदार्थः सत्तावान्। यतो हि अर्थक्रियाकारित्वमेव हि सत्त्वम्, न तु सत्ताजातिः। यथा घटेन जलानयनादिरूपोर्थः—स्वसंवित्तिरूपा क्रिया वा। भावानां स्थिरत्वे च सत्त्वमनुपपन्नम्, अनुक्षणमर्थक्रियाकारित्वविरहात्। अतः स्वमेव स्वसदृशं कार्यं करोति प्रतिक्षणमुत्पद्यन्ते पदार्थाः, तत्र कार्यकारणात्मना विच्छिन्ना परम्परा प्रवहति। इयमेव विच्छिन्नपरम्परा "प्रतीत्यसमुत्पाद"शब्देनोच्यते। तथाच विवादाध्यासितो "घटादिः" क्षणिकः "स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगी" सत्त्वात्। यद्यत्सत् तत्तत्क्षणिकमिति सामान्यव्याप्तिरेव क्षणिकत्वे मानम्। जलधरपटले अन्त्यशब्दे च साहचर्यदर्शनान्न दृष्टान्तासिद्धिः। कार्याणां हि द्वयी स्थितिः-

अस्तु तर्हि क्षणिकविज्ञाने गौरवान्नित्यविज्ञानमेवात्मा, "अविनाशी वा अरेऽयमात्मा सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतेश्चेति चेन्न। तस्य

वेदान्ती शंका करता है कि क्षणिक विज्ञान को आत्मा मानने में गौरव है तो नित्य विज्ञान ही को फिर आत्मा मान लिया जावे-नित्यज्ञान को आत्मा मानने में श्रुति भी प्रमाण है "अविनाशी वाऽरेयमात्मा" "सत्यं ज्ञान मनन्तं ब्रह्म" इत्यादि। अर्थात् अरे मैत्रैयी यह आत्मा अविनाशी है-सत्यस्वरूप है-ज्ञानस्वरूप है-आनन्दस्वरूप है। नैयायिक-यह आप

---

भिन्नभिन्नकार्याणां भिन्नभिन्नकाले उत्पत्तिः, यथा दण्डाद् घटादेः। अनेककार्याणामेककाले उत्पत्तिश्च, यथा घटे रूपरसगन्धस्पर्शानाम्। तथाच कस्यचित्कार्यस्य क्रमिककालोत्पत्तिकत्वम्, कस्यकार्यस्य एककालोत्पत्तिकत्वं प्रसिद्धम्। स्थैर्यपक्षे तु न क्रमसंभवः, समर्थात्कारणाद्युगपदनागतसर्वकार्यापत्तिः। असमर्थता चेत्कारणस्य तदा किंचिदपि कार्यं न स्यात्। युगपत्करणमपि दुर्घटम्, कार्यकरणसमर्थस्य "कार्यकारित्व"स्वभावस्योत्तरकालमप्यनिवृत्तेः। कृतस्य कारणं नास्ति कर्तव्यं चास्य न विद्यते निखिलकार्यकलापस्य कृतत्वादतः क्षणान्तरे न करोतीति चेत्तर्हि तदानीमस्याऽसत्त्वापत्तिः, समस्तार्थक्रियाकारित्वविरहादिति क्षणिकत्वमभ्युपेयम्। एवं विरुद्धधर्माध्यासादपि क्षणिकत्वसिद्धिः। तथाहि—एकमेव वीजादिकार्यं क्षेत्रनिपतितं सत् अंकुरं जनयति कुसूलस्थं पुनर्नेति सामर्थ्यासामर्थ्यरूपविरुद्धधर्माध्यासः स्पष्ट एव। एवञ्च क्षेत्रस्थवीजं कुशूलस्थबीजं यद्येकं स्यात्तदा सामर्थ्यासामर्थ्यरूपविरुद्धधर्मवत्स्यादित्यापत्तेः सुघटत्वात्। तथाच विरुद्धधर्माभावरूपेणापाद्याभावेन हेतुना तयोर्भेदसिद्धौ सत्त्वेन हेतुना क्षणिकत्वसिद्धिः। न च सामर्थ्यासामर्थ्ययोः स्वरूपयोग्यत्वतदभावरूपयोर्विरोधित्वेपि प्रकृतानुपयोगः, कारित्वाकारित्वयोः प्राकृतयोरपि न विरोध इति वाच्यम्। प्रसंगविपर्ययाभ्यां तत्साधनात्—तथाहि—प्रसंगः कुसूलस्थवीजं यद्यंकुरसमर्थं स्यादंकुरं जनयेत् न च करोति, तस्मान्न समर्थमिति। विपर्ययश्च क्षेत्रस्थवीजं यद्यंकुरजननासमर्थं स्यान्न कुर्यात्, करोति च तस्मान्नासमर्थमिति, आभ्यामेव कुसूलस्थक्षेत्रस्थवीजयोर्भेदसिद्धिः। तथाच क्षणिकत्वे एव पर्यवसानं बोध्यम्। प्रतिक्षणविनाशे किं कारणमिति चेत्, न किंचित्। तदुक्तं शान्तिरक्षितेन—

तत्र ये कृतकाः भावास्ते सर्वे क्षणभङ्गिनः।
विनाशं प्रति सर्वेषामनपेक्षतया स्थितिः॥
यद्भावं प्रति यत्रैव हेत्वन्तरमपेक्षते।
तत्तत्र नियतं ज्ञेयं स्वहेतुभ्यस्तथोदयात्॥
निर्निबन्धा हि सामग्री स्वकार्योत्पादने यथा।
विनाशं प्रति सर्वेपि निरपेक्षाश्च जन्मिनः॥ इति।

नित्यविज्ञानाऽऽत्मवादिनामद्वैतवेदान्तिनां मतमुपन्यस्यति। अस्तु इति। क्षणिकविज्ञाने इति। आत्मनः क्षणिकविज्ञानरूपत्वे इत्यर्थः। गौरवादिति।

सविषयकत्वासंभवस्य दर्शितत्वात्, निर्विषयस्य ज्ञानत्वे मानाभावात्। सविषयकत्वस्याप्यननुभवात्, अतो विज्ञानादिभिन्नो नित्य आत्मेति सिद्धम्। "सत्यं ज्ञान"मिति तु ब्रह्मपरं, जीवे तु नोपयुज्यते, ज्ञानाज्ञानसुखित्वदुःखित्वा-

( वेदान्ती ) का कथन ठीक नहीं है—क्योंकि वह नित्यविज्ञान सविषयक है या निर्विषयक है—यदि सविषयक तो यह बताओ कि जगद्विषयक है या यत्किंचिद्वस्तुविषयक है—यदि जगद्विषयक है तो सर्वज्ञत्व की आपत्ति है—और द्वितीयपक्ष में विनिगमनाविरह है यह हम पहिले सविषयकत्व का असम्भव दिखला चुके हैं ( कि नित्यविज्ञानरूप उस आत्मा को सविषयक नहीं मान सकते हैं ) यदि कहो कि निर्विषयक है, तो निर्विषयक ज्ञान में कोई प्रमाण नहीं है। ( वेदान्ती का कहना है कि आत्मा जिन२विषयों का प्रत्यक्ष करता है वह विज्ञानस्वरूप आत्मा तत्तद्विषयक होने से सविषयक है अतः आत्मा को सविषयकत्व निर्विवाद है ) इस पर नैयायिक उत्तर देता है कि "सविषयकत्वस्याप्यननुभवात्" विज्ञानस्वरूप आत्मा सविषयक है ऐसा अनुभव होता नहीं है—अतः ज्ञानादि से भिन्न नित्य आत्मा है यह सिद्ध हो गया। प्रश्न—वेदान्ती-यदि ज्ञान से भिन्न आत्मा आपने ( नैयायिक ने ) स्वीकार कर लिया—तब "सत्यं ज्ञान मनन्तं ब्रह्म" इत्यादि जो आत्मा को ज्ञानस्वरूपता की प्रतिपादक श्रुति हैं उसके साथ आपके कथन का विरोध हो जायेगा। उत्तर-नैयायिक-"सत्यं ज्ञानमनन्तं ब्रह्म" यह श्रुति ब्रह्मपद सामानाधिकरण्य से ब्रह्म को ज्ञानस्वरूपता का प्रतिपादन करती है—न कि जीव को। वही मूल में कहा है कि "सत्यं ज्ञानमिति हि ब्रह्मपरं जीवेषु नोपयुज्यते"। प्रश्न—वेदा० जीव तथा ब्रह्म का

---

अनन्तसंस्कारकल्पने गौरवादित्यर्थः। **नित्यविज्ञानमेवेति।** एवकारेण क्षणिकविज्ञानव्यावृत्तिः। आत्मनो नित्यविज्ञानरूपत्वे श्रुतिं प्रमाणयति **अविनाशीति।** याज्ञवल्क्योक्तिरियम्। अरे-गार्गि-अयमात्मा अविनाशी त्रिकालाऽबाध्यः सत्यादिरूपः। इत्यादीत्यादिपदेन **"नित्यं विज्ञानमानन्दं ब्रह्मेति"** श्रुतिसंग्रहः। एकमेव ब्रह्म **"चैतन्यं"** परमेश्वरजीवभेदाद्द्विविधम्। तत्र मायावच्छिन्नं चैतन्यमीश्वरः। अविद्यावच्छिन्नं चैतन्यं जीवः। आत्ममात्रस्य विज्ञानरूपत्वमीश्वरस्यैव वेति विकल्पाद्ये दूषणमाह **तस्येति। दर्शितत्वादिति। "तस्य जगद्विषयकत्वे"** इत्यादिना दर्शितत्वादित्यर्थः। तथा च जीवस्य तथात्वाऽसंभवान्नात्ममात्रस्य नित्यज्ञानस्वरूपत्वमिति भावः। **मानाभावादिति।** ज्ञानत्वस्य विषयितान्याप्यत्वादिति भावः। ननु जीवस्य न जगद्विषयकत्वं न वा नियतयत्किंचिद्विषयकत्वं, किन्तु यद्विषयकत्वं यत्र जीवेऽनुभवसिद्धं, तत्र तद्विषयकत्वमित्यत आह **अननुभवादिति।** सविषयकत्वस्य जीवात्मनोऽननुभवात्, घटस्य ज्ञानमित्यनुभवात् ज्ञाने घटादिविषयकत्वमंगीकृतम्, **"घटस्यात्मे"**-त्यनुभवाभावाद् घटविषयकज्ञानवानित्यनुभवाच्चात्मनो न घटादिविषयकत्वमतो नित्यज्ञानं नात्मेति भावः। तदेवाह **अत इति।** सविषयकत्वाभावादेवेत्यर्थः। ननु श्रुतिरेव जीवस्य ज्ञानस्वरूपत्वे प्रमाणमत आह **सत्यमिति। ब्रह्मपरमिति।**

दिभिर्भेदसिद्धौ सुतरामीश्वरभेदः सिद्ध्यति। अन्यथा बन्धमोक्षव्यवस्था-नुपपत्तेः। योपीश्वराऽभेदबोधको वेदः, सोपि तदभेदेन तदीयत्वं प्रतिपादयन् स्तौति, अभेदभावनयैव यतितव्यमिति वदति। अत एव "सर्वे आत्मानः

अभेद है अतः जीव को भी ब्रह्मवत् नित्यविज्ञानस्वरूपता निर्विवाद है। उत्तर-नैयायि० ज्ञान-अज्ञान-सुखित्व-दुःखित्व-इत्यादि धर्मों से जीवों का ही जब कि परस्परभेद सिद्ध है- तब जीवों से सुतरां ईश्वर ( ब्रह्म ) का भेद सिद्ध है-( क्योंकि जीव अनेक हैं-और ईश्वर ( ब्रह्म ) एक है।

अन्यथा ( जीव-ईश्वर का भेद नहीं मानेंगे तो ) बन्ध-और मोक्ष की व्यवस्था नहीं बनेगी-( क्योंकि ईश्वर को तो बन्ध मोक्ष होता नहीं-अब यदि जीव को भी ईश्वरस्वरूप ही मानेंगे तो जीव को भी बन्ध-मोक्ष व्यवस्था की अनुपपत्ति हो जावेगी ) और जो भी जीव का ईश्वर ( ब्रह्म ) से अभेदबोधन करने वाले "तत्त्वमसि" इत्यादि उपनिषद् वाक्य हैं-वे भी जीव को तदीयत्व ( ईश्वर स्वरूपता का प्रतिपादन करते हैं। ( अर्थात् उस ईश्वर ( ब्रह्म ) के समान तुम ( श्वेत केतु हो ) इसलिये उस ईश्वर की अभेदभावना से उपासना करनी चाहिये। इसी श्रुति में यह भी बतलाया है कि सब जीवात्मा परमेश्वर में समर्पित हैं-अर्थात् ईश्वर के

---

श्रुतिस्तु ब्रह्मपदसामानाधिकरण्याद् ब्रह्मस्वरूपप्रतिपादनपरेत्यर्थः। जीवे तु नोपयुज्यते इति न तु जीवप्रतिपादनपरेत्यर्थः। ननु जीवब्रह्मणोरैक्यान्नित्यविज्ञानस्वरूपत्वं जीवस्य निराबाधमित्यतो जीवब्रह्मणोर्भेदं साधयति **ज्ञानाज्ञानेति**। कश्चिद्-ज्ञानी—कश्चिदज्ञानी—कश्चित्सुखी--कश्चिद्दुःखी इत्यादिप्रतीतिविषयैर्ज्ञानत्वादिविभिन्नधर्मैर्जीवानां भेदः स्वकार्यः। अत्र एतच्छरीरावच्छेद्यज्ञानादिमान् एतच्छरीरभिन्नशरीरावच्छेद्यविभिन्नः एतच्छरीरावच्छेद्यज्ञानादिमत्त्वात्-यन्नैवं तन्नैवं शरीरान्तरावच्छिन्नात्मवदित्यनुमानेन जीवानां परस्परं भेदसिद्धिर्बोध्या। अयमाशयः ऐकात्म्ये हि यथा बाल्यावस्थायामनुभूतं वृद्धावस्थायामनुसन्धीयते मम सुखमासीत् मम दुःखमासीदिति, एवं देहान्तरानुभूतमपि अनुसन्धीयेत, अनुभवितुरेकत्वात्। न चैवमस्ति-अतः प्रतिशरीरं नानात्मानः। यथा सर्वत्रैकाकाशस्य श्रोत्रत्वे कर्णशष्कुल्याद्युपाधिभेदाच्छब्दोपलब्धिव्यवस्था-तथाऽऽत्मैकत्वेपि देहभेदादनुभवव्यवस्थेति चेत्। विषमोयमुपन्यासः--प्रतिपुरुषं व्यवस्थिताभ्यां धर्माधर्माभ्यामुपगृहीतानां शब्दोपलब्धिहेतूनां कर्णशष्कुलीनां व्यवस्थानाद्युक्ता तदधिष्ठाननियमेन शब्दग्रहणव्यवस्था, ऐकात्म्ये तु धर्माधर्मयोरव्यवस्थानाच्छरीरव्यवस्थाऽभावे किंकृता सुखदुःखोत्पत्तिव्यवस्था, मनःसंबन्धस्यापि साधारणत्वात्। यदि च नानात्मानः तदा सर्वेषामात्मनां सर्वगतत्वेन सर्वशरीरसंबन्धेपि न साधारणो भोगः। यस्य कर्मणा यच्छरीरमारब्धं तस्यैव तद्भोगायतनं न सर्वस्य, कर्मापि यस्य शरीरेण कृतं तस्यैव तद्भवति नापरस्य, एवं शरीरान्तरनियमः कर्मान्तरनियमादिति। तथाच पारमर्षसूत्रम् "**व्यवस्थातो नानात्मानः**" इति। अनैकात्मत्वे ऐकात्म्यश्रु-

समर्पिता" इति श्रूयते। मोक्षदशायामज्ञाननिवृत्तौ अभेदो जायते, इत्यपि न, भेदस्य नित्यत्वेन नाशाऽसंभवात्, भेदनाशेऽपि व्यक्तिद्वयं स्थास्यत्येव। न च द्वित्वमपि नश्यतीति वाच्यम्। तव निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि सत्य-

लिये वे आत्मसमर्पण कर देते हैं। ( सो वह समर्पण अभेदपक्ष में असम्भव है ) प्रश्न-वेदान्ती-मोक्षकाल में जब कि जीवात्माओं का अज्ञान नष्ट हो जाता है तब ईश्वर से उनका अभेद हो जाता है। उत्तर-नैया० यह बात भी ठीक नहीं-क्योंकि भेदनित्य है उसका नाश नहीं हो सकता है ( जिससे कि अभेद हो ) और दूसरी बात यह है कि भेद का नाश होने पर भी जीव-और ब्रह्म ये दो व्यक्ति तो रहेंगी ही। प्रश्न-वेदा० द्वित्व भी मोक्ष दशा में नष्ट हो जाता है-( अर्थात् मोक्षदशा में जीव ब्रह्मस्वरूप जब कि हो जाता है तो तद्गत द्वित्व भी नष्ट हो जाता है ] उत्तर-नैया० सो ठीक नहीं-क्योंकि तुम्हारे निर्धर्मकब्रह्म में सत्यत्व के न

---

त्विविरोध इत्यपि नास्ति, मुमुक्षुणा सर्वं विहायाऽऽत्मप्रतिष्ठेन भवितव्यम्, न चैक एवेति तात्पर्यादिति संक्षेपः। **सुतरामिति**। अनायासेनेत्यर्थः। **ईश्वरभेदः**= ईश्वरजीवात्मनोर्भेदः। **सिद्ध्यतीति**। जीवः ईश्वरभिन्नः सुखित्वात्, ईश्वरो वा जीवभिन्नः एकत्वादित्याद्यनुमानं प्रमाणतया बोध्यम्। जीवात्मनां नानात्व-सिद्धौ ईश्वरस्यैकस्य नानाजीवात्मकत्वाऽसंभवाद्, एकत्वाऽनेकत्वयोर्विरोधादिति भावः। **अन्यथा** = ईश्वरस्य जीवात्मकत्वे। **बन्धमोक्षव्यवस्थानुपपत्तेरिति**। कश्चित्संसारी बद्धः, कश्चित्संसारी मुक्त इति व्यवस्थाऽनुपपन्ना स्यादित्यर्थः। चैत्रमैत्रात्मनोरीश्वररूपयोरैक्यादिति भावः।

अथ तत्तदन्तःकरणावच्छिन्नचैतन्यस्यैकत्वेऽपि तत्तदन्तःकरणस्य नाशे तत्तदन्तःकरणावच्छिन्नचैतन्यस्य मुक्तत्वव्यवहारः, यदन्तःकरणस्य न नाशस्तदन्तः-करणावच्छिन्नचैतन्ये बद्धत्वव्यवहारः इति बद्धमुक्तव्यवस्थाया नानुपपत्तिरिति चेत्। एवमपि मोक्षार्थं प्रयत्नानुष्ठानवैफल्यापत्तेर्दुर्वारत्वात्, एकान्तःकरणनाशेऽपि अन्तः-करणान्तरावच्छिन्ने स्वात्मनि दुःखोत्पत्तेरावश्यकतया प्रवृत्तिफलस्य निर्दुःखत्वस्या-संभवात्, यदि चाऽन्तःकरणस्यैव धर्मः सुखादिर्न चैतन्यस्येत्युच्यते। तदापि मुक्त्यर्थप्रयासो व्यर्थ एव, स्वस्य नित्यत्वात्। यदि च भ्रान्तिनिवृत्त्यर्थं प्रयत्नः कर्तव्य इत्युच्यते, तदापि अन्तःकरणान्तरावच्छिन्ने स्वस्मिन्नेव भ्रान्तेरावश्यकतया प्रयत्नस्य वैफल्यापत्तेर्दुर्वारत्वादिति ध्येयम्। ननु जीवब्रह्मणोः परस्परं भिन्नत्वेऽभेद-प्रतिपादकश्रुतिविरोध इत्यत आह **योपीति**। **वेदः**=श्रुतिः। सा च तत्त्वमसि अहं ब्रह्मास्मी"त्यादिरूपा। **तदभेदेन**=ईश्वराभेदेन। **तदीयत्वम्**=ईश्वरीयत्वम्। ईश्वरस्वरूपत्वमिति यावत्। **अत एव** = अभेदप्रतिपादकश्रुतेस्तदीयत्वबोधनादेव। **आत्मानः**=जीवात्मानः। **समर्पिता इति**। आत्मनि परमेश्वरे इति शेषः।

स्वरूपं तदितिवत्, द्वित्वाभावेपि व्यक्तिद्वयात्मकौ तौ इति सुवचत्वात्। मिथ्यात्वाभावोऽधिकरणात्मकस्तत्र सत्यत्वमिति चेद्, एकत्वाभावो व्यक्तिद्वयात्मको द्वित्त्वमप्युच्यताम्, पृथिवीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनसिद्धत्वात्।

योऽपि तदानीमभेदप्रतिपादको वेदः सोपि निर्दुःखत्वादिना साम्यं प्रतिपादयति, संपदाधिक्ये पुरोहितोयं राजा संवृत्त इतिवत्, अत एव "निरञ्जनः परमं साम्यमुपैति" इति श्रूयते। ईश्वरोपि न ज्ञानसुखात्मा, किन्तु

रहने पर भी उस ब्रह्म को जैसे सत्यस्वरूप मानते हो-उसी प्रकार द्वित्व का अभाव (नाश) होने पर भी (मोक्षदशा में) जीव और ब्रह्म दो व्यक्ति तो अवश्य ही रहेंगे। प्रश्न-वेदा० ब्रह्म में सत्यत्व है मिथ्यात्व का अभाव-और वह मिथ्यात्वाभाव अधिकरण (ब्रह्म) स्वरूप है-(क्योंकि अभाव को हम अधिकरणस्वरूप मानते हैं-अथ च अधिकरण सबका ब्रह्म है) उत्तर-नैया० यदि ऐसा आपका कथन है तो हम भी कहेंगे कि एकत्व का अभाव ही द्वित्व है-और वह अभाव व्यक्तिद्वयस्वरूप है-क्योंकि जैसे पृथ्वी में गन्ध रहने पर भी पृथ्वी-जल दोनों में गन्ध नहीं है-वैसे ही प्रत्येक में एकत्व रहने पर भी जीव-ब्रह्म दोनों में एकत्व नहीं है यह प्रतीति सर्वजन सिद्ध है। और जो मोक्षदशा में जीव-ब्रह्म के अभेद का प्रतिपादक वेद (श्रुति) है "तत्त्वमसि" इत्यादि-वह भी मोक्षावस्थापन्नजीव के निर्दुःख हो जाने के कारण जीव में ईश्वर के साम्य (समानता) का प्रतिपादन करता है। जैसे सम्पत्ति के अधिक हो जाने पर लोग पुरोहित में भी राजा का व्यवहार करते हैं-इसीलिये मोक्षावस्था में निरञ्जन (दुःखरहित) जीव ईश्वर के साथ परम समता तो प्राप्त होता है-इसी अर्थ का बोधक श्रुति

---

जीवानां "**नाथ तवाह**"मिति समर्पणं परमेश्वरभिन्नत्वे एव सम्भवति न त्वभेदे इति भावः।

अथ भेदोपि मिथ्या ब्रह्मभिन्नत्वात्, तथाचाऽज्ञानकाले भेदसत्त्वेपि मोक्षकाले आत्मनोऽभेदः स्यादेवेति सिद्धान्तिमतं निरस्यति **मोक्षदशायामिति**। **इत्यपि न**, युक्तिसिद्धमिति शेषः। तुष्यतु इति न्यायेनाह **भेदनाशेपीति**। भेदसत्त्वे तु व्यक्तिद्वयं निर्विवादमेवेत्यपिना सूचितम्। द्वित्त्वमपीति। अपेक्षाबुद्धिनाशादिति भावः। **तव** = वेदान्तिनः। **निर्धर्मके इति**। तथाच चैतन्यं सत्यत्वाभाववत् निर्धर्मकत्वादिति भावः। अथ निर्धर्मकत्वं स्वभिन्नधर्मशून्यत्वम्, मिथ्यात्वाभावरूपसत्यत्वस्य ब्रह्मरूपतयाऽभावस्याधिकरणात्मत्वात्, सत्यत्वं नानुपपन्नमित्याशंकते **मिथ्यात्वाभाव इति**। ननु एकत्वाधिकरणे कथं तदभावरूपद्वित्त्वमत आह **प्रत्येकमिति**। ननु "ब्रह्मविद् ब्रह्मैव भवतीति" श्रुतेः का गतिरत आह **योपीति**। **तदानीं** = मोक्षदशायाम्। **अत एव** = उक्तश्रुतेः साम्यप्रतिपादकत्वादेव।

ज्ञानाद्याश्रयः, "नित्यं विज्ञानमानन्दं ब्रह्म" इत्यादौ विज्ञानपदेन ज्ञानाश्रय एवोक्तः, "यः सर्वज्ञः स सर्वविदि"त्याद्यनुरोधात् । आनन्दमित्यत्र "अर्शादित्वान्मत्वर्थीयाऽच्प्रत्ययः, अन्यथा पुंलिंगत्वापत्तेः । आनन्दोपि दुःखाभाव उपचर्यते, भाराद्यपगमे सुखी संवृत्तोहमिति वत् । अस्तु वा तस्मिन्नानन्दः, न त्वसौ आनन्दः, "असुख"मिति श्रुतेः । न विद्यते सुखं यस्येति कुतो नार्थ इति चेन्न, क्लिष्टकल्पनापत्तेः, प्रकरणविरोधात्, आनन्दमित्यत्र मत्वर्थीयाच्प्रत्ययविरोधाच्चेति संक्षेपः ।

वाक्य है ( निरञ्जनः परम साम्यमुपैति )। "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि श्रुति में आत्ममात्र को ज्ञानस्वरूपता का निरास करके अब ईश्वर को ज्ञानस्वरूपता का निरास करते हैं "ईश्वरोऽपि न ज्ञानसुखात्मा" ईश्वर भी ज्ञानस्वरूप-एवं सुखस्वरूप नहीं है किन्तु ज्ञानादि का आश्रय है। क्योंकि "नित्यं विज्ञानमानन्दं ब्रह्म" यहाँ पर विज्ञानपद से ज्ञानादि का आश्रय ही लिया गया है-कारण कि "यः सर्वज्ञः स सर्ववित्" यहाँ पर "यः सर्वज्ञः" जो सामान्यरूप से सर्वविषयक ज्ञानवान् है-"स सर्ववित्" विशेषरूप से सर्वविषयक ज्ञानवान्" है-सो यहाँ पर आत्मा को ज्ञानाश्रय सिद्ध किया है-इस अनुरोध से "नित्यं विज्ञानमानन्दं ब्रह्म" "सत्यं ज्ञान मनन्तं ब्रह्म" इत्यादि सर्वत्र श्रुति में ज्ञानपद से ज्ञान का आश्रय ही आत्मा विवक्षित है। "आनन्दम्" इसका भी आनन्दवान् यही अर्थ है-क्यों "अर्श आदिभ्योऽच्" इस सूत्र से मतुप् अर्थ में अच् प्रत्यय करने से आनन्दशब्द का समवायेन ज्ञानाश्रय यही अर्थ है। अन्यथा आनन्द शब्द नित्यपुंल्लिङ्ग होने के नाते "आनन्दो ब्रह्म" ऐसी पुल्लिङ्गत्व की आपत्ति होनी चाहिये थी। दूसरी बात यह है कि आनन्द शब्द दुखाभावरूप अर्थ में उपचरित है-जैसे शिर के ऊपर से भार ( बोझा ) दूर होने पर "मैं सुखी हो गया" ऐसी प्रतीति होती है-ऐसे ही दुःखाभाव होने से सुखित्वप्रत्यय मुक्तावस्था में जीव को होता है। यदि यही मान लिया जाय कि ईश्वर या मुक्तात्मा में आनन्द रहता है तो भी आत्मा आनन्दरूप नहीं सिद्ध होता है-क्योंकि "असुखम्" इस श्रुति में ईश्वर सुख अर्थात् आनन्दस्वरूप नहीं है ऐसा कहा गया है। प्रश्न-नहीं है सुख जिसमें यही "असुखम्" इस श्रुति का अर्थ क्यों न किया जाय। उत्तर-क्लिष्टकल्पनापत्ति हो जायेगी-दूसरे प्रकरण विरोध भी हो जावेगा। और "आनन्दम्" यहाँ पर मत्वर्थीय अच् प्रत्यय का विरोध भी हो जावेगा-"आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन" जो पुरुष ब्रह्म के आनन्द को जानता है वह किसी से नहीं डरता है-यहाँ पर आनन्द तथा उसके अधिकरण का भेद षष्ठी विभक्ति से स्पष्ट सिद्ध हो रहा है। यह वेदान्तमत का संक्षेप है।

---

निरंजनः = निर्दुःखः । न च भेदनाशे प्रतिबन्धकाभावादेव तादात्म्यमप्युत्पद्यतामिति वाच्यम् । अभेदभावनामात्रेण तादात्म्योत्पत्तौ घटपटयोरपि तथात्वापत्तेः । ईश्वरस्य विज्ञानरूपत्वे द्वितीयपक्षे दोषमाह ईश्वरोपीति । ज्ञानाश्रय एवोक्त इति ।

एतेन—प्रकृतिः कर्त्री—पुरुषस्तु पुष्करपलाशवन्निर्लेपः, किन्तु चेतनः, कार्यकारणयोरभेदात् कार्यनाशे सति कार्यरूपतया तन्नाशोपि न स्यादित्यकारणत्वं तस्य, बुद्धिगतचैतन्याभिमानान्यथानुपपत्त्या तत्कल्पनम् । बुद्धिश्च

सांख्यमत खण्डन—'एतेन' इसका 'इतिमतमपास्तम्' इसके साथ सम्बन्ध है । एतेन इसका अर्थ है आत्मा को ज्ञानवत्ता जो पूर्व में सिद्ध कर चुके हैं उस पुर्व युक्ति से—तथा "कृत्यदृष्ठ भोगानामिव" इस अग्रिमयुक्ति से सांख्यमत खण्डित हो गया । सांख्यमत में प्रकृति जगत् की कर्त्री है—और पुरुष कमलपत्र की तरह अलिप्त तथा चेतन है । कार्य तथा कारण का इनके मत में अभेद है—कार्य का नाश होने पर कार्यरूप होने से पुरुष का भी नाश न हो जाय इसलिये पुरुष (जीवात्मा) को अकारण कह दिया । बुद्धिगत जो चैतन्याभियान 'मैं चेतन हूँ' अन्यथा (पुरुष को माने बिना) अनुपपन्न है अतः पुरुष की

---

विज्ञानमस्मिन्निति विज्ञानम् । विपूर्वकज्ञाधातोः "करणाधिकरणयोश्चे"ति सूत्रेणाऽधिकरणार्थे ल्युट्प्रत्ययादिति भावः । अथाऽनन्दवदित्यर्थोपि कथं संगच्छते तव मते ईश्वरे आनन्दाभावादत आह **आनन्दोपीति** । लक्षणाभयादाह **अस्तु वेति** । **तस्मिन्** = ईश्वरे । परमात्मनि नित्यज्ञानमिव नित्यसुखमपि भवतु इत्यर्थः । **असुखमिति** । न सुखं असुखमिति नञ्तत्पुरुषः सुखभिन्नमित्यर्थः । वेदान्ती शंकते **न विद्यते इति** । **क्लिष्टकल्पनापत्तेरिति** । अन्यपदार्थप्रधाने बहुव्रीहौ अन्यपदार्थलाभार्थं नञस्तत्र लक्षणाया आवश्यकत्वादिति भावः । ननु तत्र नञोऽभाववति लक्षणा तवापि दुर्वारा, अन्यथा समानवचनत्वानुपपत्तेरत आह **प्रकरणविरोधादिति** । "अस्थूलं-अनणु-अदीर्घ"मित्यादौ सर्वत्र नञ्तत्पुरुषदर्शनेन तत्सन्निधौ पठितस्य असुखमितिपदस्य बहुव्रीहिस्वीकारे प्रकरणविरोधादित्यर्थः ।

सांख्यमतं दूषयितुमुपन्यस्यति **एतेनेति** । आत्मनो ज्ञानवत्त्वसाधनेनेत्यर्थः । इदमुपलक्षणम् । वक्ष्यमाणयुक्त्या चेत्यपि बोध्यम् । सांख्यमते चेतनत्वं न ज्ञानाश्रयत्वम्, पुरुषे ज्ञानाभावात् । किन्तु जातिविशेषः, तदेवाऽऽत्मत्वमिति । **पुष्करपलाशवत्** = पद्मपत्रवत् । **निर्लेप इति** । तथा च यथा पद्मपत्रमम्भसा लिप्तं न भवति तथा पुरुषः कृतिज्ञानसुखदुःखेच्छादिलेपरहित इत्यर्थः । तथाच पुरुषः कर्तृत्वाभाववान् कारणत्वाभावादित्यनुमानं तत्र प्रमाणं बोध्यम् । स्वरूपासिद्धिं परिहरति **कार्यकारणयोरभेदादिति** । कार्यकारणयोस्तादात्म्यादित्यर्थः । **तन्नाशोपि** = कारणनाशोपि । **न स्यादिति** = मा भवतु इत्यर्थः । **तस्य** = पुरुषस्य । तथाचाऽऽत्मना घटादिकारणत्वे कार्यनाशे सति आत्मनो नाशापत्तिरत आत्मा न कारणमिति भावः । एवं पुरुषस्य घटादिकारणत्वे घटादि-

प्रकृतेः परिणामः, सैव महत्तत्त्वमन्तःकरणमित्युच्यते, तत्सत्त्वासत्त्वाभ्यामेव पुरुषस्य संसारापवर्गौ, तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना संबन्धः, पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाऽग्रहात्। ममेदं कर्त्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया तत्प्रतिबिम्बाद-

कल्पना करते हैं। बुद्धि प्रकृति का परिणाम है—उसको ही महत्तत्व तथा अन्तः करण भी कहते हैं बुद्धि के सत्व (होने) से पुरुष संसारी होता है—और असत्त्व (न होने) से पुरुष को अपवर्ग (मोक्ष) होता है। उस अन्तः करणरूप बुद्धि का चक्षुरादि इन्द्रिय रूप नालिका के द्वारा ज्ञानरूप परिणाम ही घटादि पदार्थों के साथ सम्बन्ध है—

अभिप्राय यह है कि सांख्य मतानुसार "अयं घटः" "अयं पटः" इत्यादि ज्ञान कैसे होता है सो हमारा अन्त करण (बुद्धि) चक्षुरादि इन्द्रियरूप नालिका के द्वारा घट पट आदि पदार्थों तक जाकर ठीक घट के आकार में परिणत हो जाता है—अर्थात् वास्तविक जो उस विषय का स्वरूप होता है उसी स्वरूप में हमारा अन्त करण बदल जाता है—अन्त करण बदलजाता है—अन्त करण का जो उस विषयरूप से बदल जाना इसी को उस विषय का ज्ञान कहते है। पुरुष में 'मै कर्त्ता हूँ', बुद्धि में मैं चेतन हूँ' यह अभिमान—बुद्धि और पुरुष मे भेदज्ञान न होने के कारण होता है। "ममेद कर्त्तव्यम्" मेरा यह कर्त्तव्य है—इस वाक्य में "मम, इदम्, कर्त्तव्यम्, ये तीन अन्श हैं। उनमे 'मम' अन्श पुरुष (जीवात्मा) का है—क्योंकि बुद्धि में प्रतिबिम्बित हुवा पुरुष भासता है—अर्थात् पुरुष का

---

कार्यस्यापि नाशो न स्यात्, कार्यकारणयोरभेदात्, पुरुषस्य नाशरूपविकाराऽसंभवादिति ध्येयम्। ननु एतादृशनिर्विशेषपुरुषस्वीकारे किं प्रमाणमत आह **बुद्धिगतेति**। बुद्धिगतो यश्चैतन्याभिमानः "चेतनोऽहमि"त्याकारकः तस्य, **अन्यथा** "पुरुषस्याऽस्वीकारे" **अनुपपत्त्या** "असिद्धया" **तत्कल्पनं** "तादृशाभिमानोपपत्तये पुरुषकल्पनम्" क्वचित्प्रसिद्धस्यैव चैतन्यस्य बुद्धौ आरोपसंभवात्, तत्प्रसिद्धयर्थं पुरुषस्वीकार इति भावः। ननु का सा बुद्धिर्यस्यां पुरुषसंबन्धाच्चैतन्यं समारोप्यते इत्यत आह **बुद्धिश्चेति**। **प्रकृतेः** = मूलप्रकृतेः। **परिणामः** = अवस्थाविशेषः। **सैव** = बुद्धिरेव। ननु पुरुषस्य कर्तृत्वाभावे तत्र धर्माधर्मयोरुत्पत्त्यभावात्तदधीनसुखदुःखयोस्तत्रानुत्पत्तौ दुःखध्वंसरूपमोक्षः पुरुषस्य न स्यादत आह **तत्सत्त्वासत्त्वाभ्यामिति**। बुद्धिसत्त्वासत्त्वाभ्यामित्यर्थः। तथाच बुद्धिसत्त्वे इन्द्रियमार्गेण बहिर्निर्गतायाः बुद्धेर्घटादिविषयदेशप्राप्तौ घटाद्याकारेण बुद्धेः परिणामो जायते स एव परिणामो वृत्तिरित्युच्यते, एतन्मते वृत्तिरेव प्रत्यक्षं प्रमाणम्। तादृशबुद्धिसंबन्धात्पुरुषस्य संसारः। बुद्धेरसंबन्धादपवर्गः। दुःखसंबन्धतद्ध्वंसरूपौ संसारमोक्षौ न पुरुषस्य किन्तु बुद्धेरेवेति भावः। तथाच पुरुषेण सह घटादिविषयस्य स्वीकारवृत्तेरगृहीताभेदताकत्वसंबन्धः, न संयोगादिरित्याह **तस्या एवेति**

तात्त्विकः, दर्पणस्येव मुखोपरागः, इदमिति विषयोपरागः इन्द्रियप्रणालिकया परिणतिभेदस्तात्त्विकः निःश्वासाभिहतदर्पणस्येव मलिनिमा, कर्त्तव्यमिति व्यापारांशः, तेनांशत्रयवती बुद्धिः, तत्परिणामेन ज्ञानेन पुरुषस्याऽतात्त्विकः संबन्धः, दर्पणमलिनिम्नेव मुखस्य, उपलब्धिरित्युच्यते। ज्ञानवत् सुख-

चैतन्य बुद्धि में प्रतीयमान होता है–परन्तु दर्पण में जैसे मुख का प्रतिविम्ब वास्तविक नहीं है–अर्थात् उस प्रतिविम्ब से दर्पण में किसी प्रकार का भी परिवर्त्तन नहीं होता है–क्यों कि दर्पण स्वच्छ है और न उस प्रतिविम्ब से मुख में ही किसी प्रकार का असर होता है। ऐसे ही बुद्धि में जो पुरुष का प्रतिविम्ब (छाया-आकार) है वह भी मिथ्या है। एवं द्वितीय अंश विषय का है-क्योंकि बुद्धि ही विषयाकारेण परिणत होती है अर्थात् बुद्धि का चक्षुरादि इन्द्रियद्वारा विषय के साथ सम्बन्ध होता है वह सम्बन्ध (उपराग) सत्य है। जैसे निःश्वा-साभिहत फूंकमारने से) मलिनिमा (मालिन्य दोष) का सम्बन्ध सत्य है–वैसेही बुद्धि का विषयाकारेण परिणामरूप से विषय के साथ सम्बन्ध सत्य है। ऐसे तीसरा "कर्त्तव्यम्" यह व्यापार अंश है– कर्त्तव्य अंश का अर्थ है कि किसी विषय की तरफ प्रवृत्ति होना–अर्थात् विषय के लिये प्रयत्न या चेष्टा करना। यह भी बुद्धिधर्म ही है–जैसे कि निःश्वास से अभिहत दर्पण में मालिन्य दोष किसी प्रकार का असर नहीं आने पाता-अर्थात् वाद में दर्पण फिर स्वच्छ का स्वच्छ ही है। ऐसे ही बुद्धि में वर्त्तमान जो घट-पट आदि विषय का ज्ञान उस ज्ञान से पुरुष का वास्तविक सम्बन्ध नहीं है। वही मूल में कहा है कि "तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धः" अर्थात् पुरुष स्वच्छ ही है–क्योंकि उस परिणाम (ज्ञान)

---

बुद्धेरेवेत्यर्थः। यद्वा बुद्धितो ज्ञानस्य भेदमाह **तस्या एवेति**। तथाच बुद्धेः परिणामो ज्ञानं न तु बुद्धिरेवेति भावः। **भेदाऽग्रहादिति**। बुद्धिपुरुषयोर्भेदाऽग्रहा-दित्यर्थः। पुरुषः कर्त्ता इत्यनुभवो बुद्धिपुरुषयोर्भेदाऽग्रहनिबन्धनो भ्रमात्मक एवेति दर्शयति **पुरुषे कर्त्तृत्वाभिमान इति**। पुरुषे "अहं करोमी"तिकर्त्तृत्वप्रकारका-भिमानः बुद्धिश्चेतना इति बुद्धौ चैतन्याभिमानश्च, भेदाग्रहात् विवेकाग्रहादिति यावत्। प्रतीयते इत्यर्थः। इदानीं बुद्धितदुपलब्धेर्भेददर्शनार्थं बुद्धेरंशत्रयं दर्शयति **ममेदमित्यादिना**। मम इदं कर्तव्यमिति अंशत्रयवती बुद्धिरित्यर्थः। **मदंशः**= अस्मच्छब्दार्थः। **पुरुषोपरागः**=पुरुषसंबन्धः। **तत्प्रतिबिंबात्**=तस्य पुरुषस्य बुद्धौ प्रतिबिंबात्। अभेदः समारोपितो भवति स चाऽभेदः अतात्त्विकः अवास्तवः, दर्पणस्य यथा मुखसंबन्धः प्रतिविम्बमात्रम्, न तु तात्त्विकः, तथा बुद्धिपुरुषयोर्भेदाऽ-ग्रहादेकत्वाभिमानः पुरुषोपराग इत्यर्थः। विषयस्य बुद्धया सह संबन्धमाह **इदमिति**। इदमंशो यो घटादिर्विषयः-तस्योपरागः बुद्धया सह संबन्धः "स च ज्ञानात्मकवृत्तिरूपः, तादृशज्ञानं च घट इत्याकारकम्–इन्द्रियप्रणालिकया जायमानः

दुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मा अपि बुद्धेरेव कृतिसामानाधिकरण्येन प्रतीतेः। न च बुद्धिश्चेतना, परिणामित्वादिति-मतमप्यपास्तम्। कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेः, तद्भिन्ने मानाभावाच्च। चेतनोऽहं करोमीति प्रतीतेश्चैतन्यांशे भ्रम इति चेत्, कृत्यंशे किं नेष्यते। अन्यथा

से बुद्धि का सम्बन्ध है। जैसे ज्ञान बुद्धि का धर्म है ऐसे ही सुख-दुःख-इच्छा-द्वेष-प्रयत्न-धर्मा धर्म भी बुद्धि के ही धर्म हैं—क्यों कि कृति (प्रयत्न) के साथ एक अधिकरण में रहने वाले हैं। और बुद्धि चेतन नहीं है परिणामी होने से (अनित्य धर्मों वाली होने से) यह सांख्य मत है—नैयायिक कहता है कि यह भी मत ठीक नहीं है—क्योंकि जैसे कृति-अदृष्ट-भोग इनकी एक अधिकरण में प्रतीति होती है—वैसे ही चैतन्य की भी उसी एक अधिकरण में प्रतीति होती है—क्योंकि चैतन्य ज्ञान से अतिरिक्त और कोई वस्तु नहीं है। और जो चेतन होता है वही कर्त्ता भी होता है—क्योंकि "चेतनोऽहं करोमि" यह प्रतीति होती है—कर्त्ता से भिन्न चेतन मानने में कोई प्रमाण नहीं है। सांख्य कहता है कि "चेतनोऽहं करोमि" यह प्रतीति चैतन्यांश में भ्रम है—क्यों कि चेतन पुरुष है। नैयायिक कहता है कि यदि ऐसा है तो कृति (कर्तृत्व) अंश में भी भ्रम क्यों न मान लिया जाय—कर्तृत्व भी चेतन पुरुष का ही धर्म मान लिया जाय।

---

परिणतिविशेषः स च तात्त्विकः वास्तवः, तथाच बुद्धौ घटाकारज्ञानवत्त्वमेव संबन्धः। स च संबन्धो "ज्ञान" बुद्धेर्धर्मो न तु बुद्धिरिति न्यायमताद्वैलक्षण्यं बोध्यम्। तस्य पारमार्थिकत्वे निःश्वासाभिहतदर्पणस्येव मलिनिमा दृष्टान्तः। विषयनिष्ठक्रियात्मकव्यापारस्य बुद्धया सह संबन्धमाह कर्तव्यमिति। ज्ञानेन = घटमहं जानामीत्यनुव्यवसायेन। पुरुषस्याऽतात्त्विकः संबन्ध इति। अस्य स उपलब्धिरित्युच्यते इत्यनेनान्वयः। अतात्त्विके दृष्टान्तो दर्पणस्य मलिनिम्नेव मुखस्य संबन्ध इति। तथाच ज्ञानेन सह चेतनोऽहं घटं जानामीत्याकारो बुद्धावारोपितस्य पुरुषस्य यः संबन्धोऽतात्त्विकः स उपलब्धिः सैव प्रमेत्युच्यते, न तु बुद्धिरेवोपलब्धिरिति भावः। कृतिसामानाधिकरण्येन प्रतीतेरिति। कृतिसाध्यताज्ञानसाध्यत्वात्प्रवृत्तेः, यत्र ज्ञानं तत्रेच्छा यत्रेच्छा तत्र च कृतिरिति नियमादिति भावः। अथ बुद्धावेव चैतन्यं कल्पनीयम्, कृतं पुरुषस्य चैतन्यवत्तया कल्पनेनेत्यत आह नचेति। तथाच बुद्धिश्चेतनत्वाभाववती परिणामित्वात् "अनित्यत्वात्" घटवदिति सांख्यमतमपास्तमित्यर्थः।

खण्डनयुक्तिमाह नैयायिकः—कृत्यदृष्टभोगानामिति। कृतिः स्वसमानाधिकरणमेवादृष्टं जनयति, तथाऽदृष्टं स्वसमानाधिकरणमेव भोगं जनयति इति कृत्यदृष्टभोगानां सामानाधिकरण्यप्रमितिवत् चेतनोऽहं करोमीति चैतन्यकृत्योः सामानाधिकरण्यप्रमितिप्रतीतेरित्यर्थः। तद्भिन्ने इति = कर्तृभिन्ने।

बुद्धेर्नित्यत्वे मोक्षाभावः, अनित्यत्वे तत्पूर्वमसंसारापत्तिः। ननु अचेतनायाः प्रकृतेः कार्यत्वाद् बुद्धेरचेतनत्वम्, कार्यकारणयोस्तादात्म्यादिति चेन्न। असिद्धेः, कर्तुर्जन्यत्वे मानाभावात्। वीतरागजन्मादर्शनादनादित्वम्, अनादेर्नाशासंभवान्नित्यत्वम्, तत्किं प्रकृत्यादिकल्पनेन। न च—

इससे यह सिद्ध हुआ कि जो चेतन होता है वही कर्त्ता होता है और चेतन द्रव्य ही होता है बुद्धि द्रव्य नहीं है वह ज्ञान रूप है यह नैयायिक का कहना है)। अन्यथा यदि बुद्धि को अतिरिक्त द्रव्य स्वीकार करोगे तो हम (नैयायिक) पूछते हैं कि वह द्रव्यात्मिका बुद्धि नित्य है या अनित्य–बुद्धि को यदि नित्य मानते हैं तो बुद्धि का संयोग सम्बन्ध आत्मा के साथ हमेशा बना रहेगा–इससे आत्मा को मोक्ष प्राप्त नहीं हो सकेगा। अनित्य यदि मानते हैं तो हम पूछते हैं कि जब बुद्धि उत्पन्न होगी तभी बुद्धि का संयोग पुरुष के साथ होगा–और बुद्धि का पुरुष के साथ संयोग होने पर संसार होगा–परन्तु जब तक बुद्धि उत्पन्न ही नहीं हुवी उसके पूर्व में बुद्धि का पुरुष के साथ संयोग न होने से असंसारापत्ति दोष लग जायेगा। असंसारापत्ति में इष्टापत्ति कर नहीं सकते, क्योंकि संसार अनादि है। वही मूल में कहा है कि "अन्यथा बुद्धे नित्यत्वे" इत्यादि। सांख्य बोलता है कि नैयायिक ने जो पहले कहा था कि चैतन्यस्यापि सामानाधिकरण्येन प्रतीतेः" अर्थात् जिसमें कर्तृत्वधर्म रहता है उसी में चैतन्य भी रहता है सो कर्त्ता जब कि बुद्धि है तो उसी को चेतन भी मानो–वह नैयायिक का कहना ठीक नहीं है क्योंकि हमारे यहाँ बुद्धि का कारण जो प्रकृति वह जब अचेतन (जड़) है तो उस अचेतन प्रकृति का कार्य है बुद्धि, उसको भी जड़ ही मानना पड़ेगा वह चेतन कैसे हो सकती है–क्योंकि कार्य कारण में हमारे यहाँ तादात्म्य (अभेद) है। नैयायिक कहता है कि यह तुम्हारा (सांख्य) का कथन ठीक नहीं–क्योंकि–असिद्धिदोष होने से–(इसका अभिप्राय यह है कि सांख्य जब बुद्धि में "प्रकृतिजन्य" हेतु के द्वारा अचैतन्य (जड़त्व) सिद्ध करने जायेंगे तो इस बुद्धिः अचेतना प्रकृतिजन्यत्वात् अनुमान में–हम (नैयायिक) असिद्धि–पक्ष

---

मानाभावादिति। चेतने इत्यादिः। कर्तृत्वाश्रयः चैतन्याभाववान् जन्यत्वाद् घटवदिति बाधकसत्त्वाच्चेतनोहं करोमीतिप्रतीतिश्चैतन्यांशे भ्रम इत्याशंकते चैतन्यांशे इति। कृत्यंशेपीति। बुद्धिः कर्तृत्वाभाववती जन्यत्वादिति बाधकस्य तत्रापि सत्त्वादिति भावः। अन्यथा–कर्तृचेतनयोर्भेदाङ्गीकारे। कर्तृभिन्नस्य चेतनस्य स्वीकारे चेतने च शुभाऽशुभाऽकर्तरि सुखदुःखयोरसंभवात् संसारमोक्षयोरनुपपत्त्या पूर्वोक्तरीत्या बुद्धिसत्त्वासत्त्वाभ्यामेव संसारापवर्गौ वाच्यौ, तथाच बुद्धेर्नित्यत्वे तु तत्सत्त्वनिबन्धनस्य संसारस्य सर्वदाऽऽपत्त्या मोक्षाभाव एव स्यादित्यर्थः। अनित्यत्वे इति। बुद्धेरनित्यत्वे तु तत्र जन्यत्वं स्वीकरणीयम्। अजन्यस्य नाशाऽसंभवात्, तथाच तदुत्पत्तेः पूर्वं तत्सत्त्वनिबन्धनः संसारो न स्यादित्यर्थः। वस्तुतस्तु बुद्ध्युत्पत्तेः पूर्वं तदाश्रिताऽदृष्टतज्जनककर्मणोरभावाद् बुद्धेरनुत्पत्तिः, कार्यमात्रेऽदृष्टस्य हेतुत्वात्। तथाच बुद्धेरनुत्पत्त्या संसारः कदापि न

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥

इत्यनेन विरोध इति वाच्यम् । प्रकृतेः=अदृष्टस्य, गुणैः=अदृष्टजन्यैरिच्छादिभिः । कर्ताहमिति । कर्ताऽहमेवेत्यस्य तदर्थत्वात् ।

तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः ।

इत्यादि वदता भगवता प्रकटीकृतोऽयमुपरिष्टादाशय इति संक्षेपः ।

(बुद्धि) में हेतु की असिद्धि हो जायेगी–अर्थात् स्वरूपासिद्धि हो जायेगी–पक्ष में हेतु का न रहना ही स्वरूपासिद्धि कहलाता है–जैसे प्रकृत में बुद्धि को कर्ता मानते हो तो वह प्रकृति से जन्य नहीं हो सकती है–कारण कि कर्तृत्व नित्यत्व का व्याप्य होता है–सो जहाँ व्याप्य कर्तृत्व रहेगा–वहाँ व्यापक नित्यत्व भी रहेगा–अतः बुद्धि को यदि कर्ता मानेंगे तो उसे नित्य मानना होगा–तब प्रकृतिजन्यत्व हेतु पक्ष (बुद्धि) में नहीं रह सकने के कारण स्वरूपासिद्धि हो जायेगी) वही मूल में कहा है कि–कर्तुर्जन्यत्वेमानाभावात्–कर्ता के जन्य होने में कोई प्रमाण नहीं है। अर्थात् कर्ता वही होगा जो नित्य होगा । कर्ता नित्य होता है इसमें सूत्र प्रमाण है–"वीतराग जन्मादर्शनात्" वीत (नष्ट) हो चुकी है राग (मिथ्या ज्ञान-जन्य वासना) जिस पुरुष की–ऐसे पुरुष का जन्म नहीं देखने में आता है सो इस गौतम सूत्र से कर्ता अनादि प्रतीत होता–और अनादिभावपदार्थ पुरुष का नाश नहीं होता है–इससे कर्ता नित्य ही मानना उचित है। सो प्रकृति आदि को कर्ता मानने में क्या लाभ है–प्रश्न–सांख्य कहता है कि प्रकृति के न मानने में "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः अहङ्कार विमूढात्मा कर्ताऽहमिति मन्यते" इस भगवद्वाक्य से विरोध हो जावेगा–क्योंकि सांख्यमतानुसार इस भगवद् वाक्य का यह अर्थ है कि सत्त्व आदि गुणों के द्वारा प्रकृति से क्रियमाण जो शुभाशुभ कर्म हैं–उन कर्मों का सर्वशः (सर्वतोभावेन) मैं कर्ता हूँ–ऐसा अहङ्कार से मूढ़ जो आत्मा है वह कर्ता न होते हुये भी अपने को मानता है। इससे प्रकृति का अङ्गीकार भी सिद्ध हो रहा है–तथा-कर्तृत्व भी सिद्ध हो रहा है–जब कि प्रकृति को कर्तृत्व इससे सिद्ध हो गया तो प्रकृति के कार्य बुद्धि को भी कर्तृत्व सिद्ध ही है–क्योंकि कार्य कारण का अभेद है। उत्तर–नैयायिक कहता है कि इस भगवद्वाक्य का यह अर्थ नहीं है–अपितु इच्छादि गुणों के द्वारा प्रकृति अर्थात् अदृष्ट से क्रियमाण जो शुभाशुभ कर्म हैं–उन कर्मों का अहंकार से विमूढ़ जो आत्मा (जीवात्मा) है वह मैं कर्ता हूँ–ऐसा अपने को मानता है। यहाँ प्रकृति का अर्थ है अदृष्ट–गुण करके अदृष्टजन्य इच्छादि गुणों का ग्रहण है। सो प्रकृति आदि की कल्पना व्यर्थ है। अतएव "तत्रैवंसति" यहाँ पर आत्मा के कर्तृत्व को बतलाते हुवे भगवान् ने यह स्पष्ट कर दिया कि आत्मा का अपने ही को कर्मों का एकमात्र कर्ता समझना भूल है। यह सांख्यमत का संक्षेप है।

---

स्यादिति ध्येयम् । असिद्धेरिति । बुद्धौ प्रकृतिकार्यत्वाऽसिद्धेरित्यर्थः । अथ कर्तृत्वेन जन्यत्वमनुमेयमिति चेत्तत्राऽऽह, कर्तुरिति । मानाभावादिति ।

धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥४६॥

धर्माधर्मेति । आत्मेत्यनुषज्यते । शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्मणां देहान्तरेण भोगानुपपत्तेः । विशेषेति । योग्यविशेषगुणस्य ज्ञानसुखादेः संबन्धेनाऽऽत्मनः प्रत्यक्षत्वं सम्भवति, न त्वन्यथा, "अहं जाने-अहंकरोमी"-त्यादिप्रतीतेः । ॥४६॥

प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः ।
अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः ५०
विभुर्बुद्ध्यादिगुणवान्—

आत्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते । प्रवृत्तिरत्र चेष्टा, ज्ञाने-

आत्मा धर्म अधर्म का आश्रय है—और उस आत्मा का ज्ञान-सुख—आदि विशेषगुणों के सम्बन्ध से प्रत्यक्ष होता है—और शरीर को यदि धर्म—अधर्म आश्रय मानते हो तो पूर्व जन्म के देह से किये हुवे कर्मों का दूसरे जन्म के देह से भोग नहीं हो सकता है । प्रत्यक्षयोग्य ज्ञान सुखादि विशेष गुणों के सम्बन्ध से आत्मा का प्रत्यक्ष होता है । अन्यथा नहीं । क्योंकि 'मैं जानता हूँ' 'मैं करता हूँ' इत्यादि प्रतीतियों से ज्ञान—कर्तृत्व का आश्रय होने से आत्मा का प्रत्यक्ष होता है । जैसे रथ की गति से सारथि का अनुमान होता है—वैसे ही यह आत्मा परपुरुष के शरीर में चेष्टा द्वारा अनुमेय है । इस आत्मा का परदेह में प्रवृत्ति आदि के द्वारा

---

कर्तृत्वमस्तु जन्यत्वं मास्तु इति व्यभिचारशंकानिराकरणानुकूलतर्काभावादिति भावः । प्रत्युत जन्यत्वविरोध्यनादित्वमेव कर्तुरित्याह **वीतरागजन्माऽदर्शनादिति** । न्यायसूत्रं सरागजन्मदर्शनादिति सूत्रार्थः । **अनादित्वमिति** । स्तन्यपाने बालस्य प्रवृत्तिर्नेष्टसाधनताज्ञानमन्तरेण, तच्च ज्ञानं नानुभवरूपं साक्षात्, किन्तु स्मृतिरूपम्, स्मृतेश्च स्वसमानाधिकरणपूर्वजन्मसापेक्षतया पूर्वजन्मसत्त्वे पूर्वजन्मनि अपि प्रथमप्रवृत्त्यनुरोधेन तत्पूर्वस्य, एवं तत्पूर्वस्य जन्मनः सिद्धौ अनादित्वमात्मन इति भावः । **अनादेरिति** । अनादिभावस्येत्यर्थः । **विरोध इति** । उक्तवचनेनाऽऽत्मनि कर्तृत्वाभावप्रतिपादनादिति भावः । **कर्ताऽहमेवेति** । तथाच तेन स्वतन्त्रकर्तृत्वाभाव एवाऽऽत्मनि प्रतिपाद्यते न तु कर्तृत्वसामान्याभाव इति भावः । **प्रकटीकृतोयमिति** ।

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पंचमम् ॥ भ० गी०

इत्यनेन पंचानां कर्तृत्वं प्रतिपाद्य "तत्रैवं सती" त्यादिनापि स्वतन्त्रकर्तृत्वस्यैवाऽऽत्मनि निषिद्धत्वादिति भावः ।

च्छाप्रयत्नादीनां देहेऽभावस्योक्तप्रायत्वात् चेष्टायाश्च प्रयत्नसाध्यत्वात्, चेष्टया प्रयत्नवानात्मानुमीयते इति भावः। अत्र दृष्टान्तमाह रथेति। यद्यपि रथकर्म चेष्टा न भवति, तथापि तेन कर्मणा सारथिर्यथाऽनुमीयते, तथा चेष्टात्मकेन कर्मणा परात्मानुमीयते इति भावः। अहङ्कारस्येति। अहंकारः। अहमिति प्रत्ययः, तस्याऽऽश्रयः, विषय आत्मा, न शरीरादिरिति। मनइति मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयः, मानसप्रत्यक्षविषयश्चेत्यर्थः। रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात्। ५०

विभुरिति। विभुत्वं परममहत्परिमाणवत्त्वम्।

बुद्धिस्तु द्विविधा मता।

अनुभूतिः स्मृतिश्च स्यात् अनुभूतिश्चतुर्विधा ॥५१॥

प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे।

अनुमान किया जाता है–प्रवृत्ति से यहाँ चेष्टा का ग्रहण है। ज्ञान–इच्छा–प्रयत्न–आदि गुण में नहीं रहते हैं–यह प्रायः कह चुके हैं–"शरीरस्य न चैतन्यम्" इत्यादि ग्रन्थ से चेष्टा प्रयत्न से साध्य होती है–अतः चेष्टात्वरूप हेतु से प्रयत्नवान् आत्मा का अनुमान किया जाता है जैसे रथ की गति से सारथि का यह दृष्टान्तरूप से कहा है। यद्यपि रथकर्म चेष्टा नहीं होती है–तथापि उस रथकर्म से जैसे सारथि का अनुमान किया जाता है–वैसे ही चेष्टात्मक कर्म से परात्मका अनुमान किया जाता है। "अहम्" इत्याकारक ज्ञान को अहङ्कार कहते हैं उस अहङ्कार का आश्रय विषय आत्मा है शरीर आदि नहीं है। एवं आत्मा मन से भिन्न इन्द्रिय से होने वाले प्रत्यक्ष का अविषय है–तथा मानसप्रत्यक्ष का विषय है। रूप आदि के आत्मा में न होने से आत्मा चक्षु आदि इन्द्रियान्तर से प्रत्यक्ष योग्य नहीं है ॥ ५० ॥

यह आत्मा व्यापक तथा बुद्ध्यादिगुण वाला है। परममहत्त्व परिमाणवान विभु होता है–और परममहत्त्व परिमाणवत्त्व विभुत्व है। यह पहिले हम कह भी चुके हैं–परन्तु स्पष्टार्थ फिर कह दिया। बुद्धि–सुख–दुःख–इच्छा आदि जो १४ गुण पहिले कहे जा चुके हैं–तादृशबुद्ध्यादि गुणवाला ही आत्मा है।

---

तदाश्रयत्वे = धर्माधर्माश्रयत्वे। अन्यथा = विशेषगुणं विना। प्रवृत्त्यादिनेति। परकीयशरीरस्यैव पक्षतया तत्र प्रवृत्तिरूपहेतोरसत्त्वात्स्वरूपासिद्धिः, परकीयप्रवृत्त्यादेरतीन्द्रियतया हेतुज्ञानासंभवश्चाऽत आह। प्रवृत्तिरत्रेति। चेष्टा च हिताहितप्राप्तिपरिहारार्था क्रिया। अनुमीयते इति। अनुमानप्रकारश्च तथाच चेष्टा प्रयत्नजन्या चेष्टात्वात् मदीयचेष्टावत्, स्वप्रयत्नः क्वचिद्द्रव्यसमवेतः गुणत्वाद्रूपवदिति। न भवतीति। शरीरवृत्तिक्रियाया एव चेष्टात्वात्। तथापीति। इतरसंयोगाजनकक्रियावत्त्वमेव हेतुरिति ध्येयम्।

अत्रैव प्रसंगाद्बुद्धेः कतिपयं प्रपञ्चं दर्शयति बुद्धिस्त्विति। द्वैविध्यं व्युत्पादयति अनुभूतिरिति। एतासां चतसृणां करणानि चत्वारि "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति सूत्रोक्तानि वेदितव्यानि।

प्रसङ्गवश यहीं पर अब बुद्धि का कतिपय प्रपञ्च (भेद) दिखलाते हैं—बुद्धि दो प्रकार की है—अनुभूति तथा स्मृतिभेद से। उसमें अनुभूति (अनुभव) चार प्रकार की है। इन चार प्रकार की अनुभूतियों के करण भी "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इस गौतमसूत्र में कहे हुये चार ही जानने चाहिये ॥ ५१ ॥

---

अत्रैव = आत्मनिरूपणे एव। प्रसंगादिति। स्मृतिविषयत्वे सति द्वेषाविषयत्वात्। ज्ञानत्वजातिमत्त्वं बुद्धेर्लक्षणम्। सा द्विविधा अनुभवः, स्मृतिश्च। अनुभवत्वं=जातिः। अनुभवत्वस्य प्रत्यक्षादिचतुष्टयसाधारणजातित्वे मानाभावः, स्मृत्यन्यज्ञानत्वेनैवोपपत्तेः। न चाऽनुभवामीत्यनुव्यवसायात्तत्सिद्धिरिति वाच्यम्। शुद्धमनुभवामीत्यनुव्यवसायाभावेन साक्षात्कारत्वस्यैव तद्विषयत्वात्। न च विशेषणज्ञानजन्यतावच्छेदकतया तत्सिद्धिः, स्मृतौ व्यभिचारेण विशेषणज्ञानस्य विशिष्टबुद्धिमात्रे हेतुत्वासंभवादिति वाच्यम्। विशिष्टसाक्षात्कारत्वस्यैव विशेषणज्ञानजन्यतावच्छेदकत्वादिति। विशेषणज्ञानाभावेऽनुमित्यादेरभावस्य परामर्शाद्यभावेनैव संभवात्। न चाप्रसिद्धसाध्यकानुमितेः साध्यप्रकारकत्ववारणायाऽनुमितावपि विशेषणज्ञानस्य हेतुत्वमावश्यकमिति वाच्यम्। साध्यतावच्छेदकरूपेण साध्यप्रकारकानुमितेः साध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयताशालित्वनियमेन विशेषणतावच्छेदकप्रकारकनिश्चयाभावादेव तत्र साध्यप्रकारकानुमितेरनुत्पादात्, सामान्यसामग्रीसहिताया एव विशेषसामग्र्याः कार्योपधायकत्वात्।

अथैवं विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदकतयैवाऽनुभवत्वजातिसिद्धिः, स्मृत्यन्यज्ञानत्वस्य तत्कार्यतावच्छेदकत्वे गौरवात्। न च विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षत्वमेव तस्य जन्यतावच्छेदकम्, अप्रसिद्धसाध्यकानुमितेरपि साध्यप्रकारकत्वापत्तेः। न चाऽप्रसिद्धसाध्यकस्थलीयपरामर्शस्य साध्यविशेष्यकानुमितित्वमेव कार्यतावच्छेदकमिति वाच्यम्। उच्छृङ्खलसाध्यज्ञानसत्त्वे तादृशपरामर्शादेव साध्यप्रकारकानुमितेरुत्पादात्। न च तथापि तज्जातेः प्रत्यक्षानुमितिमात्रसाधारण्यमस्तु शाब्दबोधोपमितिसाधारण्ये मानाभाव इति वाच्यम्। प्रत्यक्षानुमितिमात्रसाधारणस्यैव तस्याभ्युपगमादिति चेन्न।

तथापि प्रत्यक्षादिचतुष्टयसाधारणायास्तस्या असिद्धेः। बाधबुद्धिप्रतिबध्यतावच्छेदकेन प्रत्यक्षव्यावृत्तेन परोक्षत्वेन स्मृतिसाधारणेन सांकर्यापत्त्या प्रत्यक्षानुमितिमात्रसाधारणस्यापि तस्य सिद्धेरसंभवाच्च चतुष्टयसाधारणतज्जातिसिद्धेर्दुर्वारत्वात्। विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदकतया शाब्दव्यावृत्तमनुभवत्वं बाधादिबुद्धिप्रतिबध्यतावच्छेदकतया प्रत्यक्षव्यावृत्तं परोक्षत्वं च द्वयमेव जातिलाघवात्। न चैवं विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदकस्यानुभवत्वस्य

च्छाप्रयत्नादीनां देहेऽभावस्योक्तप्रायत्वात् चेष्टायाश्च प्रयत्नसाध्यत्वात्, चेष्टया प्रयत्नवानात्मानुमीयते इति भावः। अत्र दृष्टान्तमाह रथेति। यद्यपि रथकर्म चेष्टा न भवति, तथापि तेन कर्मणा सारथिर्यथाऽनुमीयते, तथा चेष्टात्मकेन कर्मणा परात्मानुमीयते इति भावः। अहङ्कारस्येति। अहंकारः। अहमिति प्रत्ययः, तस्याऽऽश्रयः, विषय आत्मा, न शरीरादिरिति। मनइति मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयः, मानसप्रत्यक्षविषयश्चेत्यर्थः। रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात्। ५०

विभुरिति। विभुत्वं परममहत्परिमाणवत्त्वम्।

बुद्धिस्तु द्विविधा मता।

अनुभूतिः स्मृतिश्च स्यात् अनुभूतिश्चतुर्विधा ॥५१॥

प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे।

अनुमान किया जाता है-प्रवृत्ति से यहां चेष्टा का ग्रहण है। ज्ञान-इच्छा-प्रयत्न-आदि गुण [देह] में नहीं रहते हैं-यह प्राय: कह चुके हैं-"शरीरस्य न चैतन्यम्" इत्यादि ग्रन्थ से चेष्टा प्रयत्न से साध्य होती है-अत: चेष्टावत्त्वरूप हेतु से प्रयत्नवान् आत्मा का अनुमान किया जाता है जैसे रथ की गति से सारथि का यह दृष्टान्तरूप से कहा है। यद्यपि रथकर्म चेष्टा नहीं होती है-तथापि उस रथकर्म से जैसे सारथि का अनुमान किया जाता है-वैसे ही चेष्टात्मक कर्म से परात्मा का अनुमान किया जाता है। "अहम्" इत्याकारक ज्ञान को अहङ्कार कहते हैं उस अहङ्कार का आश्रय विषय आत्मा है शरीर आदि नहीं है। एवं आत्मा मन से भिन्न इन्द्रिय से होने वाले प्रत्यक्ष का अविषय है-तथा मानसप्रत्यक्ष का विषय है। रूप आदि के आत्मा में न होने से आत्मा चक्षु आदि इन्द्रियान्तर से प्रत्यक्ष योग्य नहीं है ॥ ५० ॥

यह आत्मा व्यापक तथा बुद्ध्यादिगुण वाला है। परममहत्त्व परिमाणवान विभु होता है-और परममहत्त्व परिमाणवत्त्व विभुत्व है। यह पहिले हम कह भी चुके हैं-परन्तु स्पष्टार्थ फिर कह दिया। बुद्धि-सुख-दुःख-इच्छा आदि जो १४ गुण पहिले कहे जा चुके हैं-तादृशबुद्ध्यादि गुणवाला ही आत्मा है।

---

तदाश्रयत्वे = धर्माधर्माश्रयत्वे। अन्यथा = विशेषगुणं विना। 'प्रवृत्त्यादि' नेति। परकीयशरीरस्यैव पक्षतया तत्र प्रवृत्तिरूपहेतोरसत्त्वात्स्वरूपासिद्धिः, परकीयप्रवृत्त्यादेरतीन्द्रियतया हेतुज्ञानासंभवश्चाऽत आह। प्रवृत्तिरत्रेति। चेष्टा च हिताहितप्राप्तिपरिहारार्था क्रिया। अनुमीयते इति। अनुमानप्रकारश्च तथाच चेष्टा प्रयत्नजन्या चेष्टात्वात् मदीयचेष्टावत्, स च प्रयत्नः क्वचिद्द्रव्यसमवेतः गुणत्वाद्रूपवदिति। न भवतीति। शरीरवृत्तिक्रियाया एव चेष्टात्वात्। तथापीति। इतरसंयोगजनकक्रियावत्त्वमेव हेतुरिति ध्येयम्।

अत्रैव प्रसंगाद्बुद्धेः कतिपयं प्रपञ्चं दर्शयति बुद्धिस्त्विति। द्वैविध्यं व्युत्पादयति अनुभूतिरिति। एतासां चतसृणां करणानि चत्वारि "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति सूत्रोक्तानि वेदितव्यानि।

प्रसङ्गवश यहीं पर अब बुद्धि का कतिपय प्रपञ्च (भेद) दिखलाते हैं—बुद्धि दो प्रकार की हैं—अनुभूति तथा स्मृतिभेद से। उसमें अनुभूति (अनुभव) चार प्रकार की है। इन चार प्रकार की अनुभूतियों के करण भी "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इस गौतमसूत्र में कहे हुवे चार ही जानने चाहिये ॥ ५१ ॥

---

अत्रैव = आत्मनिरूपणे एव। प्रसंगादिति। स्मृतिविषयत्वे सति द्वेषाविषयत्वात्। ज्ञानत्वजातिमत्त्वं बुद्धेर्लक्षणम्। सा द्विविधा अनुभवः, स्मृतिश्च। अनुभवत्वं=जातिः। अनुभवत्वस्य प्रत्यक्षादिचतुष्टयसाधारणजातित्वे मानाभावः, स्मृत्यन्यज्ञानत्वेनैवोपपत्तेः। न चाऽनुभवामीत्यनुव्यवसायात्तत्सिद्धिरिति वाच्यम्। शुद्धमनुभवामीत्यनुव्यवसायाभावेन साक्षात्कारत्वस्यैव तद्विषयत्वात्। न च विशेषणज्ञानजन्यतावच्छेदकतया तत्सिद्धिः, स्मृतौ व्यभिचारेण विशेषणज्ञानस्य विशिष्टबुद्धिमात्रे हेतुत्वासंभवादिति वाच्यम्। विशिष्टसाक्षात्कारत्वस्यैव विशेषणज्ञानजन्यतावच्छेदकत्वादिति। विशेषणज्ञानाभावेऽनुमित्यादेरभावस्य परामर्शाद्यभावेनैव संभवात्। न चाप्रसिद्धसाध्यकानुमितेः साध्यप्रकारकत्ववारणायाऽनुमितावपि विशेषणज्ञानस्य हेतुत्वमावश्यकमिति वाच्यम्। साध्यतावच्छेदकरूपेण साध्यप्रकारकानुमितेः साध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयताशालित्वनियमेन विशेषणतावच्छेदकप्रकारकनिश्चयाभावादेव तत्र साध्यप्रकारकानुमितेरनुत्पादात्, सामान्यसामग्रीसहिताया एव विशेषसामग्र्याः कार्योपधायकत्वात्।

अथैवं विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदकतयैवाऽनुभवत्वजातिसिद्धिः, स्मृत्यन्यज्ञानत्वस्य तत्कार्यतावच्छेदकत्वे गौरवात्। न च विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षत्वमेव तस्य जन्यतावच्छेदकम्, अप्रसिद्धसाध्यकानुमितेरपि साध्यप्रकारकत्वापत्तेः। न चाऽप्रसिद्धसाध्यकस्थलीयपरामर्शस्य साध्यविशेष्यकानुमितित्वमेव कार्यतावच्छेदकमिति वाच्यम्। उच्छृङ्खलसाध्यज्ञानसत्त्वे तादृशपरामर्शादेव साध्यप्रकारकानुमितेरुत्पादात्। न च तथापि तज्जातेः प्रत्यक्षानुमितिमात्रसाधारण्यमस्तु शाब्दबोधोपमितिसाधारण्ये मानाभाव इति वाच्यम्। प्रत्यक्षानुमितिमात्रसाधारणस्यैव तस्याभ्युपगमादिति चेन्न।

तथापि प्रत्यक्षादिचतुष्टयसाधारणायास्तस्या असिद्धेः। बाधबुद्धिप्रतिबध्यतावच्छेदकेन प्रत्यक्षव्यावृत्तेन परोक्षत्वेन स्मृतिसाधारणेन सांकर्यापत्त्या प्रत्यक्षानुमितिमात्रसाधारणस्यापि तस्य सिद्धेरसंभवाच्च चतुष्टयसाधारणतज्जातिसिद्धेर्दुर्वारत्वात्। विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदकतया शाब्दव्यावृत्तमनुभवत्वं बाधादिबुद्धिप्रतिबध्यतावच्छेदकतया प्रत्यक्षव्यावृत्तं परोक्षत्वं च द्वयमेव जातिर्लाघवात्। न चैवं विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदकस्यानुभवत्वस्य

इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्। यद्यपि मनोरूपेन्द्रियजन्यं सर्वमेव ज्ञानं, तथापि इन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने करणत्वं तत्प्रत्यक्षमिति विवक्षितम्। ईश्वरप्रत्यक्षं तु न लक्ष्यम्। "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति" सूत्रे तथैवोक्तत्वात्।

प्रत्यक्ष-अनुमिति-उपमिति-शब्दज (शाब्दबोध) यह चार प्रकार का अनुभव है। उसमें प्रत्यक्ष घ्राणज आदि के भेद से छः प्रकार का है। इन्द्रियजन्य ज्ञान ही प्रत्यक्ष है। यद्यपि मनोरूप इन्द्रिय से जन्य तो सभी ज्ञान हैं-तथापि इन्द्रियत्वरूप से इन्द्रियों को जिस ज्ञान में कारणता हो वही ज्ञान प्रत्यक्ष ज्ञान है। "इन्द्रियजन्यज्ञान" यह ईश्वर के प्रत्यक्ष का लक्षण नहीं है-क्योंकि "इन्द्रियार्थसन्निकर्षोत्पन्नम्" इत्यादि गौतमसूत्र में जन्य प्रत्यक्ष (जीवात्मा के प्रत्यक्ष) का ही लक्षण किया है। अथवा जिस ज्ञान में ज्ञान करण न हो वही

---

प्रत्यक्षसाधारणस्योक्तयुक्त्या शाब्दबोधवृत्तित्ववदुपमितिवृत्तित्वेपि मानाभावेन परस्परमनुमितौ सांकर्यापत्तिः परोक्षत्वस्य प्रत्यक्षवृत्तित्वादिति वाच्यम्। सांकर्यवारणायैव विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदकस्यानुभवत्वस्योपमितावपि अभ्युपगमात्। तथापि अनुभवत्वव्याप्यत्वमेव परोक्षत्वमिति न सांकर्यम्। न च बाधबुद्धिप्रतिबध्यतावच्छेदकस्य परोक्षत्वस्य स्मृतावपि सत्त्वेन कथमनुभवत्वव्याप्यत्वमिति वाच्यम्। स्मृतेर्बाधादिबुद्ध्यप्रतिबध्यत्वादित्यलं विस्तरेण।

एतासां चतसृणां=प्रत्यक्षानुमित्युपमितिशाब्दबोधानाम्। इन्द्रियजन्यमिति। अत्र च स्मृत्यादेरपीन्द्रियप्रयोज्यत्वात्तद्वारणाय जन्यपदोपादानम्। इन्द्रियसंयोगादेर्वारणाय ज्ञानमिति। अनुमित्यादिवारणायेन्द्रियेति। सर्वमेव ज्ञानमिति। सर्वमेव जन्यं ज्ञानमित्यर्थः। इन्द्रियत्वेन रूपेणेति। इन्द्रियत्वावच्छिन्नकारणतानिरूपितविषयतासंबन्धावच्छिन्नकार्यताशालित्वं लक्षणार्थः। अयं च ज्ञानपदोपादानलभ्यः, इतरथा विवक्षितकारणतयैवेन्द्रियसंयोगादेर्वारणसंभवेन ज्ञानपदानर्थक्यप्रसंगात्। यत्र ज्ञाने इति, सप्तम्यर्थो निरूपितत्वम्। अव्याप्तिमाशंक्याह— ईश्वरप्रत्यक्षमिति। तथाच जन्यसाक्षात्कारत्वमेव लक्ष्यतावच्छेदकमिति भावः। नन्वनेन रूपेण प्रमितिविभागे किं मानं तत्राह। इन्द्रियार्थेति। तथैव=जन्यप्रत्यक्षप्रमाया एव। उक्तत्वादिति। लक्ष्यत्वलाभादित्यर्थः। अनुमितिशाब्दबोधप्रमाया अपि अर्थसन्निकर्षात्मकगुणजन्यत्वादुक्तमिन्द्रियमिति। त्वङ्मनोयोगजन्यानुमित्यादावतिव्याप्तिवारणायार्थेति। चक्षुःकपालसंयोगजन्यचक्षुर्घटसंयोगे आत्ममनोयोगजन्यानुमित्यादेश्च वारणाय ज्ञानमिति। तन्महिम्ना च विषयतासंबन्धावच्छिन्नं जन्यत्वं लभ्यते। भ्रमवारणायाऽव्यभिचारीति भ्रमभिन्नार्थकम्। तथाचेन्द्रियार्थसन्निकर्षनिष्ठकारणतानिरूपितविषयतासम्बन्धावच्छिन्नकार्यताशालित्वं लक्षणार्थः।

अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। अनुमितौ व्याप्तिज्ञानस्य उपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मृतावनुभवस्य कारणत्वात्तत्र-नातिव्याप्तिः, इदं लक्षणमीश्वरप्रत्यक्षसाधारणम्।

परामर्शजन्यं ज्ञानमनुमितिः।

यद्यपि परामर्शप्रत्यक्षादिकं परामर्शजन्यं तथापि परामर्शजन्यं हेत्व-

ज्ञान प्रत्यक्ष ज्ञान कहलाता है। प्रत्यक्षज्ञान से अतिरिक्त जितने भी ज्ञान हैं - वे सब ज्ञानकरणक हैं-जैसे अनुमति में व्याप्तिज्ञान करण है—उपमिति में सादृश्यज्ञान करण है। शाब्दबोध में पदज्ञान करण है। स्मृति में अनुभव करण है-अतः प्रत्यक्षातिरिक्त समस्त ज्ञान ज्ञानकरणक होने से उनमें अतिव्याप्ति नहीं हुवी। और यह लक्षण ( ज्ञानाकरणकंज्ञानं प्रत्यक्षम् ) ईश्वर-और जीव-इन दोनों के प्रत्यक्षसाधारण है। परामर्श से जन्य ज्ञानको अनुमिति कहते हैं। प्रश्न—इस अनुमितिलक्षण की परामर्श प्रत्यक्ष में अतिव्याप्ति है-क्योंकि परामर्श का प्रत्यक्ष

---

केचित्तु इन्द्रियार्थसन्निकर्षोत्पन्नमिति सूत्रादिन्द्रियत्वेन अर्थत्वेन सन्निकर्षत्वेनेति लक्षणत्रयं लभ्यते इत्याहुः। तच्च द्विधा व्याचष्टे—अव्यपदेश्यमिति। व्यपदेशः शब्दप्रयोगो यस्मादिति व्यपदेश्यं तद्भिन्नं ज्ञानमव्यपदेश्यं-निर्विकल्पकमित्यर्थः। व्यवसायात्मकं-सविकल्पकमित्यर्थः। तुष्यत्विति न्यायेनाह ज्ञानाकरणकं ज्ञानमिति। अनुमित्यादावतिव्याप्तिवारणाय ज्ञानाकरणकमिति। घटादावतिव्याप्तिवारणाय ज्ञानमिति। द्वितीयानुव्यवसायादावव्याप्तिवारणाय ज्ञानाकरणज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वं तदर्थो द्रष्टव्यः। प्रतियोगिप्रसिद्धिं दर्शयति अनुमिताविति। तत्र अनुमित्यादौ। एतत्पक्षे च यो विशेषस्तमाह इदमिति। तथाचास्मिन् पक्षे साक्षात्कारत्वमेव लक्ष्यतावच्छेदकमिति भावः। साक्षाकारत्वं च साक्षात्करोमीतिप्रतीतिसाक्षिको जातिविशेष इति प्राञ्चः। आंशिकालौकिकसाक्षात्कारे चन्दनं साक्षात्करोमीतिप्रतीतिवत्सौरभं साक्षात्करोमीत्यप्रतीतेर्लौकिकविषयताया नियामकत्वं कल्प्यम्, ततश्चैतादृशकल्पनातस्तादृशविषयताया एव तथाविधप्रतीतिविषयत्वकल्पनायां सामंजस्येन लौकिकविषयत्वातिरिक्तसाक्षात्कारत्वे मानाभावादिति नव्याः। एतेन चाक्षुषत्वादि व्याख्यातम्।

परामर्शजन्यं ज्ञानमनुमितिरिति। परामर्शश्च व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयः। तथा च व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिरित्यर्थः। परामर्शसंस्कारवारणाय ज्ञानमिति। प्रत्यक्षादावतिव्याप्तिवारणाय परामर्शजन्यमिति। एवमपि परामर्शप्रत्यक्षेऽतिव्याप्तिरित्याह यद्यपीति। परामर्शजन्यमिति। विषयविधया परामर्शस्य जनकत्वं बोध्यम्। तथाच हेतुतावच्छेदक-

विषयकं यज्ज्ञानं तदेवानुमितिः। नच कादाचित्कहेत्वविषयकानुमितावव्याप्ति-रिति वाच्यम्। तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्।

अथवा व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः। सादृश्यज्ञानकरणकं ज्ञान-

भी परामर्श से जन्य ज्ञान है। उत्तर—हेतु जिसमें विषय न हो ऐसा जो परामर्शजन्यज्ञान वो ऐसा ज्ञान "पर्वतो वह्निमान्" यही ज्ञान होगा–यही अनुमिति है। प्रश्न—जिस पुरुष को "धूमवान् पर्वतो वन्हिमान्" यह अनुमिति हुयी उस अनुमिति में धूमहेतु भी पक्षतावच्छेदक विधया विषय होगया–अतः यह अनुमिति हेत्वविषयक होने से इसमें अव्याप्ति हो गयी। उत्तर–परामर्शजन्य जो हेत्वविषयकज्ञान "पर्वतो वन्हिमान्" यह अनुमितिरूप ज्ञान, इसमें वृत्ति जो अनुभवत्व व्याप्य जाति (अनुमितित्वजाति) तादृश अनुमितित्व जातिमान् सकल अनुमितिरूप ज्ञान हैं तो "धूमवान्पर्वतोवन्हिमान्" यह भी हुआ–इसमें भी अनुमितित्व जाति घटित लक्षण चला गया अतः अव्याप्ति नहीं है। अथवा व्याप्तिज्ञानकरणक जो ज्ञान वह अनुमिति है। सादृश्यज्ञान जिसमें करण हो वह ज्ञान उपमिति है। पदज्ञान करण जिस ज्ञान में होवे वही ज्ञान शाब्द बोध है। वस्तुत यत्किञ्चित् अनुमितिव्यक्ति से "पर्वतो वन्हिमान्" इस अनुमिति को लेकर उस अनुमिति व्यक्ति में रहने वाली और प्रत्यक्ष में न रहने वाली जो जाति (अनुमितित्व तादृश जातिमान् अनुमिति ही होगा। ऐसे ही "अयंघटः" इस प्रत्यक्ष को लेकर उस प्रत्यक्षव्यक्ति में वृत्ति और अनुमिति में अवृत्ति जो जाति (प्रत्यक्षत्वजाति) तादृशजाति मत्त्व यह प्रत्यक्षत्वादिक कह देना चाहिये। जन्य प्रत्यक्ष का विभाग करते हैं—घ्राणजादीति। घ्राणज-रासन-चाक्षुष-स्पार्शन-श्रौत्र-मानस-यह षड्विध (छःप्रकार का) प्रत्यक्ष है। प्रश्न-ईश्वर के प्रत्यक्ष का आपने विभाग नहीं किया अतः न्यूनता हो जावेगी। उत्तर-"इन्द्रियार्थसन्निकर्षोत्पन्नम्" इत्यादि गौतमीय सूत्रानुसार जन्यप्रत्यक्ष का ही निरूपण किया है-अतः उसका ही विभाग भी उचित है॥ ५२॥

---

संबन्धावच्छिन्नव्याप्यवच्छिन्नप्रकारतानिरूपितपक्षविशेष्यताशालिनिश्चयत्वावच्छिन्न-जनकतानिरूपितजन्यताशालिज्ञानत्वस्य विवक्षणीयत्वात्, प्रत्यक्षे च विषयत्वेन हेतुत्वान्नातिव्याप्तिः। अत्र च विषयतया लौकिकप्रत्यक्षत्वावच्छिन्नं प्रति लौकिक-विषयतया प्रत्यक्षत्वावच्छिन्नं प्रति वा तादात्म्येन विषयत्वेन कारणत्वं बोध्यम्। अथवा तत्तद्व्यक्तित्वेन कारणता बोध्या। न च प्रत्यक्षत्वस्य नित्यानित्यसाधारणतया जन्यतावच्छेदकत्वाऽसंभवः, साधारण्येपि बाधकाभावात्, जन्यप्रत्यक्षत्वस्य तथात्वा-भ्युपगमात्। कालिकसमवायोभयसंबन्धस्य कार्यतावच्छेदकताघटकत्वाद्वाऽनुपपत्त्य-भावात्। हेत्वविषयकत्वं चाऽवश्यं निवेशनीयम्। अन्यथा वह्निव्याप्यधूमवत्पर्वत-वान्देशः इत्याकारकविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति विशेषणतावच्छेदक-प्रकारकनिश्चयत्वेनैव परामर्शस्य हेतुतया तत्रातिप्रसंगः स्यादित्यतः परामर्शजन्यत्वा-दिकमित्यत्राऽऽदिपदमुपात्तम्।

ननु प्रत्यक्षत्वेन विषयत्वेन हेतुत्वे मानाभावः। न चैवमतीताऽनागतघट-प्रत्यक्षापत्तिः। वर्तमानव्यवहितविप्रकृष्टघटादिप्रत्यक्षवारणाय सन्निकर्षहेतुताया

आवश्यकत्वेन तत एव तदापत्त्यभावात्। न च विनश्यदवस्थघटोत्पत्तिद्वितीयक्षणे तत्प्रत्यक्षापत्तिः, अनाश्रितसन्निकर्षस्य पूर्वक्षणे सत्त्वात्। एवं विनष्टज्ञानशब्दादीनामपि नित्यसन्निकर्षसत्त्वात्प्रत्यक्षापत्तिरपि दुर्वारैवेति वाच्यम्। सन्निकर्षस्य विषयनिष्ठतया हेतुत्वेन यत्र लौकिकविषयतया प्रत्यक्षमापाद्यते तदव्यवहितपूर्वकालावच्छेदेन कारणतावच्छेदकसंबन्धेन सन्निकर्षसत्त्वस्यापेक्षणादुक्तस्थले तेषां विषयनिष्ठत्वाभावेनापत्त्यभावात्। न चैवमपि घटादिनाशसमये तत्प्रत्यक्षापत्तिः, विषयस्य तु कार्यसहभावेन हेतुतया नापत्तिरिति वाच्यम्। सन्निकर्षस्यैव कार्यसहभावेन हेतुत्वादापत्तिवारणसंभवादिति चेत्। धर्माधर्मसंस्कारगुरुत्वादिप्रत्यक्षवारणाय विषयतया लौकिकप्रत्यक्षवारणाय प्रत्यक्षत्वावच्छिन्नं प्रति हेतुत्वमावश्यकम्। अनन्तप्रतिबध्यप्रतिबन्धकभावकल्पनापेक्षया तथाविधहेतुताकल्पनाया एव लघीयस्त्वात्। नचैवं विषयतया साक्षात्कारत्वस्वरूपस्य विषयत्वस्यावच्छेदकीभूताननुगतसाक्षात्कारभेदेन भेदात्कथमेककार्यकारणभाव इति वाच्यम्। स्वाश्रयविषयत्वसंबन्धेन साक्षात्कारत्वविशिष्टत्वस्य सर्वसाक्षात्कारसाधारणैकलौकिकविषयताया वा कारणतावच्छेदकत्वांगीकारेणोक्तदोषाभावात्। नचैवं कारणतावच्छेदकत्वेन विषयत्वकल्पनवत्प्रतिबन्धकतावच्छेदकत्वेनापि विषयत्वकल्पनापत्तिरिति वाच्यम्। नव्यरीत्या साक्षात्करोमीति प्रतीतिसिद्धविषयतायामेव कारणतावच्छेदकत्वकल्पनायाः समुचितत्वात्। तथात्वे तादृशाभावत्वस्य कारणतावच्छेदकत्वे गौरवाच्च।

अत्रेदं बोध्यम्—यथा धर्मादीनां प्रत्यक्षापत्तिवारणाय विषयत्वेन सामान्यतः कार्यकारणभावः कल्पनीयः, तथा सत्यपि चक्षुःसंयुक्तसमवाये रसगन्धस्पर्शशब्दादेः, सत्यपि घ्राणसंयुक्तसमवाये रूपरसस्पर्शशब्दादेः, सत्यपि रसनासंयुक्तसमवाये रूपगन्धस्पर्शशब्दादेः, सत्यपि त्वक्संयुक्तसमवाये रूपरसगन्धशब्दादेः, सत्यपि मनःसंयुक्तसमवाये तेषां लौकिकप्रत्यक्षाभावाद्विशिष्य तत्तद्व्यक्त्यन्तर्भावेन कार्यकारणभावकल्पने च गौरवाच्चाक्षुषत्वाद्यवच्छिन्नं प्रति चाक्षुषत्वादिना कार्यकारणभावाः कल्पनीयाः। अन्यत्सर्वं पूर्ववत्।

अथैवं सति महत्त्वरूपादीनां प्रत्यक्षविलोपापत्तिरिति चेत्। यदि स्तस्तद्ग्राहकौ स्वतन्त्रान्वयव्यतिरेकौ कस्तदा तद्विलोपनायाऽलम्। यदि न स्तः, तदा तद्विलोपेऽपि का क्षतिः। इदन्तु विचारणीयम्—चाक्षुषत्वादिनापि विशिष्य कार्यकारणभावानामावश्यकत्वेन तत एव सामंजस्ये विषयत्वेन सामान्यहेतुतायां मानाभावः। गुरुत्वादावपि उक्तविशेषकारणाभावेन प्रत्यक्षवारणसंभवात्। "यद्विशेषयोरिति" नियमस्तु अप्रयोजकः। एतेन यद्धर्मावच्छिन्नानुत्पादप्रयोजकत्वं यद्धर्मावच्छिन्नाभावे क्लृप्तम्, तद्धर्मावच्छिन्नं प्रति तद्धर्मावच्छिन्नस्य नियामकत्वम्। अस्ति च प्रत्यक्षत्वावच्छिन्नानुत्पादप्रयोजकत्वं विषयत्वावच्छिन्नाभावे, अतः प्रत्यक्षत्वावच्छिन्नं प्रति विषयत्वावच्छिन्नस्य नियामकत्वम्। न च चाक्षुषविषयत्वावच्छिन्नाभावानामेव नियामकत्वं कल्प्यतामिति वाच्यम्। अनेकेषां प्रत्यक्षत्वावच्छिन्नानुत्पादप्रयोजकत्व-

कल्पनापेक्षया एकस्यैव तादृशाभावस्य प्रयोजकत्वकल्पनायां लाघवात्। इत्थं च तादृशसामान्यहेतुतायां सुकरं मानमित्यपि निरस्तम्। अप्रयोजकत्वादित्यलम्।

अथैवं विशिष्टस्मरणेऽतिव्याप्तिः वह्निव्याप्यधूमवत्पर्वतविशेष्यकस्मृतिं प्रति वह्निव्याप्यधूमवत्पर्वतविशेष्यकनिश्चयत्वेन हेतुत्वात्। न चोपेक्षात्मकज्ञानात्स्मृत्यनुत्पादेनोपेक्षान्यवह्निव्याप्यधूमवत्पर्वतविषयकनिश्चयत्वेनैव स्मृतिहेतुत्वान्नातिव्याप्तिरिति वाच्यम्। उपेक्षात्वस्य दुर्वचत्वेन स्मृतिकारणतावच्छेदककोटौ निवेशाऽसंभवात्। तथाहि उपेक्षात्वं न जातिः, चाक्षुषत्वादिना संकरप्रसंगात्, आंशिकत्वापाताच्च। नापि प्रवृत्तिनिवृत्त्यजनकज्ञानत्वम्, अजिज्ञासितविषयत्वं वा, तादृशादपि स्मृत्युत्पादात्। नापि संस्काराजनकत्वं तत्, उपेक्षाज्ञानव्यावृत्तस्य संस्कारजनकतावच्छेदकरूपान्तरस्याऽभावात्, संस्काराजनकान्यत्वेन हेतुत्वे स्वात्माश्रयापत्तेः। स्मृत्यजनकान्यत्वेन संस्कारजनकत्वे च स्मृतिजनकताज्ञानाधीनं संस्कारजनकताज्ञानं संस्कारजनकताज्ञानाधीनं स्मृतिजनकताज्ञानमित्यन्योन्याश्रयापत्तेः। अत्रोपेक्षात्वस्यानुगतस्य दुर्वचत्वेपि तत्तद्व्यक्तित्वरूपस्योपेक्षात्वस्य सुवचत्वेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदा एव निवेश्यन्ते गत्यन्तराभावादिति चेत्। सत्यम् ईदृशदिशैव भेदो निवेशयितुं शक्यः। तथापि स संस्कारकारणतायामेव निवेश्यते तत एव स्मृतिवारणसंभवात् अत, एव वक्ष्यति—

"उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् इति"। तथाच वह्निव्याप्यधूमवत्पर्वतविषयकस्मृतिं प्रति वह्निव्याप्यधूमवत्पर्वतविषयकनिश्चयत्वेनैव हेतुत्वाद्तिव्याप्तिर्दुर्वारैवेति चेन्न। व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमित्यत्र द्वितीयज्ञानपदस्यानुभवपरत्वात्। एवं च नोक्तातिव्याप्तिः।

न च वह्निव्याप्यधूमवत्पर्वतनिश्चयत्वेन न स्मृतिहेतुत्वम्, अपितु वह्निव्याप्यधूमवत्पर्वतविषयकानुभवत्वेन, तथाच नोक्तस्थतावतिव्याप्तिः, संशयान्यज्ञानत्वात्मनो निश्चयत्वस्यानुभवत्वापेक्षया व्यापकत्वादिति वाच्यम्। तथात्वे सकृदनुभूतस्य स्मरणोत्तरं स्मरणं न स्यात्, अनुभवस्य स्वजन्यसंस्कारसंबन्धेन हेतोरभावात्। तादृशस्थलेऽनुभवजन्यसंस्कारस्याऽऽद्यस्मरणेन नाशात्। न च तथापि वह्निव्याप्यधूमवत्पर्वतविषयकज्ञानत्वेनैव हेतुत्वमस्तु इति वाच्यम्। वह्निव्याप्यधूमवान्न वापर्वत इति संशयात्तथाविधस्मृत्यापत्तेरित्यन्यत्र विस्तरः।

**कादाचित्केति।** पक्षतावच्छेदकविधयेत्यर्थः। **हेतुविषयकानुमितौ**=धूमवान्पर्वतो वह्निमानित्यनुमितौ। **अव्याप्तिरिति।** तथाचाऽलोकलिङ्गकधूमवत्पर्वतपक्षकवह्निविधेयकानुमितौ हेत्वविषयकत्वादव्याप्तिरिति भावः। **तादृशज्ञानवृत्तीति।** परामर्शजन्यहेत्वविषयकज्ञानवृत्तीत्यर्थः। पक्षधर्मताया अप्रवेशेन लाघवाल्लक्षणान्तरमाह **अथवेति।** अत्रापि एकां व्याप्तिमुपादाय तद्व्याप्तिज्ञानकरणकज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वमित्यर्थो बोध्यः।

घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥५२॥
घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः।
तथा रसो रसज्ञायास्तथा शब्दोपि च श्रुतेः ॥५३॥
उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये।
विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम् ॥५४॥

मुपमितिः। पदज्ञानकरणकं ज्ञानं शाब्दबोधः। वस्तुतो यां कांचिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तित्वे सति यां कांचित्प्रत्यक्षव्यक्तिमादाय तदवृत्तिजातिमत्त्वमनुमितित्वम्। एवं यत्किंचित्प्रत्यक्षादिकमादाय तद्व्यक्तिवृत्ति अनुमित्यवृत्तिजातिमत्त्वं प्रत्यक्षत्वादिकं वाच्यमिति। जन्यप्रत्यक्षं विभजते। घ्राणजादीति। घ्राणजं–रासनं–चाक्षुषं–स्पार्शनं-श्रौत्रं–मानसमिति षड्विधं प्रत्यक्षम्। न चेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वम्। जन्यप्रत्यक्षस्यैव निरूणीयत्वात्, उक्तसूत्रानुसारात् ॥५२॥ गोचर इति। ग्राह्य इत्यर्थः। गन्धत्वादिरित्यादिपदात्सुरभित्वादिपरिग्रहः। गन्धस्य प्रत्यक्षत्वात्तवृत्ति जातिरपि प्रत्यक्षा, गन्धाश्रयग्रहणे तु घ्राणस्याऽसामर्थ्यमिति बोध्यम्। तथा रसइति। रसत्वादिसहित इत्यर्थः। तथा शब्दोपि-शब्दत्वादिसहितः। गन्धोरसश्चोद्भूतोबोध्यः ॥५३॥

"घ्राणस्य गोचरो गन्धः" घ्राणेन्द्रिय से होने वाले प्रत्यक्ष के विषय गन्ध और गन्धत्व आदि हैं। तथा रसज्ञा (रसनेन्द्रिय) से रस-रसत्व का प्रत्यक्ष होता है। एवं श्रुति (श्रोत्रेन्द्रिय) से शब्द प्रत्यक्ष होता है। गन्धत्वादि यहाँ पर आदिपद से सुरभित्व-असुरभित्व का भी ग्रहण घ्राण से ही होता है। गन्धका प्रत्यक्ष होने से गन्ध में रहने वाली गन्धत्व जाति का भी प्रत्यक्ष होता है। परन्तु गन्ध का आश्रय जो द्रव्य उसका प्रत्यक्ष करने में घ्राण की सामर्थ्य नहीं है। गन्ध-और रस उद्भूत लेना ॥ ५३ ॥

"उद्भूतरूपं नयनस्य गोचरः" उद्भूतरूप नयन (चक्षु) का गोचर ग्राह्य है। उद्भूतरूपवाले द्रव्य-तथा पृथक्त्व-संख्या संयोग-विभाग परत्व-अपरत्व-स्नेह-द्रवत्व और परिणाम ये सब नयन से ग्राह्य हैं। ग्रीष्म और उष्मा में अनुद्भूतरूप है अतः उसका प्रत्यक्ष नहीं होता है ॥ ५४ ॥

---

अथ प्रत्यक्षादिप्रमाचतुष्टयं प्रति मन एव करणम्, सामग्रीवैलक्षण्यादेव कार्यवैजात्योपपत्तेः, कार्यवैजात्यात्प्रमाणविभागोपपत्तेश्च, तथाच पूर्वोक्तलक्षणान्वयःसंभव इत्यत आह। **वस्तुत इति**। मनसः करणत्वपक्षे ज्ञानाकरणकत्वरूपप्रत्यक्षलक्षणमनुमित्यादावतिव्याप्तमत आह **एवमिति**। यत्किंचिदुपमितिव्यक्तिमादाय

क्रियां जातिं योग्यवृत्तिं समवायं च तादृशम् ।

गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोः ॥५५॥

उद्भूतरूपमिति । ग्रीष्मोष्मादावनुद्भूतं रूपमिति न तत्प्रत्यक्षम् । तद्वन्ति = उद्भूतरूपवन्ति । योग्येति । पृथक्त्वादिकमपि योग्यव्यक्तिवृत्तिग्राह्यम् । तादृशं योग्यवृत्तिम् । चक्षुर्योग्यत्वमेव कथं तदाह गृह्णातीति । आलोकसंयोगः उद्भूतरूपं च चाक्षुषप्रत्यक्षे कारणम् । तत्र द्रव्यचाक्षुषं प्रति तयोः समवायसंबन्धेन कारणत्वम् । द्रव्यसमवेतरूपादिचाक्षुषं प्रति तयोः स्वाश्रयसमवायसंबन्धेन, द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसंबन्धेनेति ॥५४, ५५॥

'क्रिया जाति योग्यवृत्तिः'' प्रत्यक्ष योग्य द्रव्य में रहने वाली क्रिया तथा जाति, और प्रत्यक्षयोग्यद्रव्य में रहने वाला समवाय इनका प्रत्यक्ष आलोक और उद्भूतरूप के सम्बन्ध से चक्षु करता है । पृथक्त्व आदि भी प्रत्यक्षयोग्य जो द्रव्यव्यक्ति उसमें रहने वाले ही लेने चाहिये। और प्रत्यक्षयोग्य व्यक्ति में रहने वाले ही समवाय का भी प्रत्यक्ष होता है । प्रश्न—ये सब चक्षु से प्रत्यक्षयोग्य कैसे हैं । उत्तर—आलोक संयोग-और उद्भूतरूप चाक्षुषप्रत्यक्ष में कारण हैं । उसमें भी द्रव्य के चाक्षुष प्रत्यक्ष में आलोक संयोग-तथा उद्भूतरूप समवाय सम्बन्ध से कारण होते हैं । और द्रव्य मे रहने वाले रूप आदि के प्रत्यक्ष मे वे दोनों स्वाश्रय समवाय सम्बन्ध से कारण है । स्वपद से आलोक संयोग और उद्भूतरूप-उनका आश्रय द्रव्य-उसमे समवाय सम्बन्ध से रूप भी है । द्रव्य में समवेत जो रूप-उस रूप में समवेत जो रूपत्व-उस रूपत्व के प्रत्यक्ष मे आलोकसंयोग-उद्भूतरूप-स्वाश्रयसमवेत समवाय सम्बन्ध से कारण हैं—स्वपद से आलोक संयोग-उद्भूतरूप-उनका आश्रय द्रव्य-उस द्रव्य में समवेत हुवा रूप-उस रूप का समवाय रहा रूपत्व में अर्थात् स्वाश्रयसमवेत समवाय सम्बन्ध से आलोक संयोग-और उद्भूतरूप रूपत्व पर बैठ गये अतः रूपत्व का प्रत्यक्ष होता है ॥ ५५ ॥

---

तद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्त्वमुपमितित्वम् । यत्किंचिच्छाब्दबोधव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्त्वं शाब्दबोधत्वं निर्वाच्यमिति ध्येयम् । घ्राणस्य निर्विषयकत्वादाह ग्राह्य इति । गोचरपदस्य जन्यज्ञानविषयार्थकतया नासंगतिरिति भावः । तद्वृत्तिजातिरपि = गन्धवृत्तिजातिरपि । यो गुणो यदिन्द्रियेण गृह्यते तन्निष्ठा जातिस्तदभावश्च तेनैव गृह्यते इति नियमात् । न तत्प्रत्यक्षमिति । नोष्मादिगतरूपप्रत्यक्षमित्यर्थः । नोष्मादिप्रत्यक्षमिति तु नार्थः, "द्रव्याणि तद्वन्ति" इत्यनेनैव तत्प्रत्यक्षस्य वारणीयत्वात् । न्यूनतां परिहरति पृथक्त्वादिकमपीति ।

**आलोकसंयोग इति**। तथाच द्रव्यचाक्षुषं प्रति आलोकसंयोगः समवायेन कारणम्, अन्यथा अन्धकारे घटादेश्चाक्षुषापत्तिः स्यात्। एतेन तमःस्थितघटादेश्चाक्षुषापत्तिर्दुर्वारेव। न च तत्र तदानीं चक्षुःसंयोगे मानाभावः। चक्षुःसंयुक्तविशेषणताया द्रव्यवृत्त्यभावचाक्षुषं प्रति हेतुतया तमःस्वरूपाभावप्रत्यक्षानुरोधेन तदानीमपि चक्षुः संयोगस्य घटादावावश्यकत्वात् इति निरस्तम्। उद्भूतानभिभूतरूपवन्महाऽऽलोकसंयोगत्वेन हेतुत्वात्। उद्भूतेत्याद्युपादानात् ग्रीष्म-सुवर्ण-तैजसाणूनां संयोगेपि न घटादीनां चाक्षुषग्रहः। तमःस्थिततप्तायःपिण्डादौ च वन्हेः रूपं नाभिभूतमरुणत्वेनैव तद्ग्रहादिति तद्गतं शुक्लत्वसामान्यमेव तथेति नायःपिण्डस्य चाक्षुषासंभवः। वन्ह्यादेर्मणिप्रभादेर्वा चाक्षुषस्थले च तादृशालोकान्तरासत्त्वेपि चक्षुर्वन्ह्यादिसंयोग एव तादृशालोकसंयोगोस्तीत्यदोषः।

नव्यास्तु उक्तरूपेणालोकसंयोगस्य हेतुत्वे गौरवाद् द्रव्यचाक्षुषं प्रति प्रभासंयोगत्वेनैव हेतुत्वम्। प्रभात्वन्तु तेजस्त्वव्याप्यजातिविशेषः। एवं च वन्ह्यादिमध्यवर्त्तिघटादावपि वन्हिसंयुक्तप्रभायाः संयोगोस्तीति न तत्प्रत्यक्षानुपपत्तिः। द्व्यणुकात्मकप्रभायाः संयोगेपि घटाद्यदर्शनान्महत्त्वेन प्रभा विशेषणीयेति प्राहुः।

एवं द्रव्यचाक्षुषं प्रति उद्भूतरूपं समवायेन कारणम्। तेन वाय्वादीनां न चाक्षुषम्। रूपं द्विविधम्—उद्भूतमनुद्भूतं च। तत्र घ्राणरसनचक्षुःपिशाचादीनां भर्जनकपालस्थवन्हेस्तदूष्मणां चानुद्भूतरूपम्। उद्भूतरूपं च घटपटादीनाम्। न च तादृशद्वैविध्ये मानाभावः, उद्भूतत्वानुद्भूतत्वयोः रूपनिष्ठयोर्धर्मद्वयोरनभ्युपगमेपि क्षतिविरहादिति वाच्यम्। द्रव्यचाक्षुषं प्रति सामान्यतो रूपत्वेन कारणत्वे घ्राणादीनामपि चाक्षुषापत्त्या उद्भूतरूपत्वेनैव हेतुत्वम्। तच्चोद्भूतत्वं घ्राणादिरूपव्यावृत्त मित्यवश्याभ्युपेयत्वात्। एवं स्पर्शोपि उद्भूतानुद्भूतभेदेन द्विविधः। तत्र घ्राणरसनचक्षुस्त्वक्पिशाचादीनां प्रभावाष्पयोश्चानुद्भूतस्पर्शः। घटपटादीनां वायुभर्जनकपालस्थवन्ह्यादूष्मसौरादितेजःप्रभृतीनां चोद्भूतस्पर्शः। न च स्पर्शस्य तादृशद्वैविध्ये मानाभावः, उद्भूतत्वानुद्भूतत्वयोः स्पर्शनिष्ठधर्मद्वयोरनभ्युपगमेपि क्षतिविरहादिति वाच्यम्। द्रव्यस्पार्शनं प्रति सामान्यतः स्पर्शत्वेन कारणत्वे घ्राणादीनां प्रभावाष्पयोश्च स्पार्शनापत्त्या उद्भूतस्पर्शत्वेनैव हेतुत्वम्, तच्चोद्भूतत्वं घ्राणादिस्पर्शव्यावृत्तमित्यवश्याभ्युपेयत्वात्। एवं रसोपि उद्भूतानुद्भूतभेदेन द्विविधः। तत्र घ्राणरसनमणिरत्नादीनामनुद्भूतरसः उद्भूतरसश्च गुडादीनाम्। न च तादृशं द्वैविध्ये मानाभावः, रसरासनं प्रति सामान्यतो रसत्वेन कारणत्वे रसनसंयुक्तसमवायसन्निकर्षेण घ्राणमणिरत्नादीनामपि रसोपलब्ध्यापत्त्या उद्भूतरसत्वेनैव तत्र हेतुत्वम्, तच्चोद्भूतत्वं घ्राणादिरसव्यावृत्तमित्यवश्याभ्युपेयत्वात्। एवं गन्धोपि उद्भूतानुद्भूतभेदेन द्विविधः। तत्र घ्राणपाषाणमणिवज्रादीनामनुद्भूतगन्धः। उद्भूतगन्धश्च घटपटचंपकादीनाम्। न च तादृशद्वैविध्ये मानाभावः घ्राणसंयुक्तमहदुद्भूतरसवत्समवायस्य सन्निकर्षतया च न घ्राणादीनां ग्रह इत्येवास्तु किं गन्धनिष्ठोद्भूतत्वकल्पनेन, निर्गन्धस्यापि रसवतो जलस्य सत्त्वेनोक्तयुक्त्या

रसनिष्ठोद्भूतत्वस्यावश्यकत्वादिति वाच्यम्। अनन्तरसानां सन्निकर्षकारणतावच्छेदककोटौ प्रवेशमपेक्ष्योद्भूतगन्धत्वेन गन्धस्य कारणताया एव लघुत्वात्। धूमस्य नीरसत्वे तदीयगन्धग्रहे उक्तसन्निकर्षस्य व्यभिचाराच्चेति न्यायसिद्धान्तः। तत्र रूपनिष्ठोद्भूतत्वानुद्भूतत्वे कः पदार्थः। किमुभयमेव जातिः अथवोद्भूतत्वं जातिः तदभावोऽनुद्भूतत्वम्। अथवाऽनुद्भूतत्वं जातिस्तदभाव उद्भूतत्वमिति चेत्। अत्र सिद्धान्तानुयायिनः—अनुद्भूतत्वं जातिः तदभाव उद्भूतत्वम्, न तूद्भूतत्वं जातिस्तदभावोऽनुद्भूतत्वम्, नीलत्वादिना सांकर्यात्। अथैवमनुद्भूतत्वमपि कथं जातिः, नीलत्वादिना सांकर्यात्। न चानुद्भूतत्वं नीलत्वादीनां सर्वेषां विरुद्धम्, अनुद्भूतरूपस्यातीन्द्रियतया तत्र नीलत्वादिसत्वे मानाभावादिति वाच्यम्। तथासति तत्र रूपत्वादिसत्वेपि मानाभावात्, घ्राणादावनुद्भूतरूपात्मकधर्मिसत्वेपि मानाभावाच्च। पृथिवीत्वादेः रूपत्वावच्छिन्नव्याप्यतया घ्राणाद्यनुद्भूतरूपस्य, तत्र रूपे रूपत्वस्य च सिद्धिरिति यदि विभाव्यते, तदा रूपत्वस्य नीलाद्यन्यतमत्वव्याप्यतया नीलत्वादेरपि तत्रावश्यकत्वात्।

नव्यास्तु नीलत्वादेर्यस्य कस्यचिदेकस्य तद्व्याप्यमिति वाच्यम्। विनिगमकाभावात् विनिगमकाभावेन सर्वेषामेव व्याप्यत्वाभ्युपगमे च नीलत्वपीतत्वादीनां परस्परं संकरप्रसंगात् इति चेत्, सत्यम्। नीलत्वपीतत्वादिव्याप्यं नानैवानुद्भूतत्वं अनुद्भूतत्वाभावकूटवत्त्वमेवोद्भूतत्वं, तद्वद्रूपत्वेनैव द्रव्यचाक्षुषं प्रति जनकत्वं तादृशाभावकूटवत्त्वस्यानुगतत्वात्, उद्भूतत्वस्यैव नीलत्वपीतत्वादिव्याप्यनानाजातित्वे तेन रूपेण द्रव्यचाक्षुषं प्रति जनकत्वे परस्परं व्यभिचारापत्तेः। न च घ्राणादिनिष्ठमनुद्भूतत्वं नीलात्मकं पीताद्यात्मकं वेत्यत्र विनिगमनाविरह इति वाच्यम्। विनिगमकाभावेन व्याप्यवृत्तिनीलपीतादिनानाऽनुद्भूतरूपाणामेव तत्राभ्युपगमात्।

वस्तुतस्तु अनुद्भूतत्वं शुक्लत्वव्याप्यमेव सर्वमेवानुद्भूतरूपं शुक्लमित्यभ्युपगमात्। न च नीलत्वादिमादाय विनिगमनाविरहः। अनुद्भूतत्वस्य रसने चक्षुरात्मकजलतेजोवृत्तिरूपे अपि सत्वेन नीलत्वादिव्याप्यत्वासंभवात्, जलतेजसोः शुक्लरूपवत्त्वनियमात्। शुक्लरूपस्य च घ्राणाद्यात्मकपृथिव्यामपि संभवात्। न च शुक्लत्वव्याप्योत्कर्षापकर्षाभ्यां समं सांकर्यमिति वाच्यम्। अनुद्भूतरूपत्वस्यात्यन्तापकृष्टपरतया तत्रोद्भूतशुक्लसाधारणोत्कर्षवत्त्वे मानाभावात्। न च तथापि भास्वरत्वमादाय सांकर्यं दुर्वारं, तेजसो भास्वररूपवत्त्वनियमेन चक्षुरादिरूपे भास्वरत्वस्यावश्यकत्वात्, तादृशनियमानभ्युपगमे तेजसो रूपवत्त्वनियमस्याप्यसंभवेन तत्राप्यनुद्भूतरूपस्याप्यसिद्धिप्रसंगादिति वाच्यम्। अनुद्भूतत्वस्य भास्वरत्वव्याप्यविरुद्धभेदेन द्विविधत्वात्। तादृशानुद्भूतत्वाभावद्वयवद्रूपत्वेन चाक्षुषं प्रति हेतुता। एवं स्पर्शनिष्ठानुद्भूतत्वमपि शीतत्वादिव्याप्यनानाजातिः, जलस्पर्शनिष्ठानुद्भूतत्वं शीतत्वव्याप्यं तेजःस्पर्शनिष्ठानुद्भूतत्वं उष्णत्वव्याप्यं, पृथिवीवायुस्पर्शनिष्ठानुद्भूतत्वमनुष्णाशीतत्वव्याप्यं, तादृशानुद्भूतत्वाभावकूटवत्स्पर्शत्वमेवोद्भूतस्पर्शत्वम्, तेनैव रूपेण

उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः।
रूपान्यच्चक्षुषो योग्यं, रूपमत्रापि कारणम् ॥५६॥
द्रव्याध्यक्षे,

उद्भूतेति। उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः। सोपि = उद्भूतस्पर्शोपि स्पर्शत्वादिसहितः। रूपान्यदिति। रूपभिन्नं रूपत्वादिभिन्नं यच्चक्षुषो योग्यं तत्त्वगिन्द्रियस्यापि ग्राह्यम्। तथा च पृथक्त्वसंख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ताः एवं क्रियाजातयो योग्यवृत्तयस्त्वचो ग्राह्या इत्यर्थः। अत्रापि = त्वगिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम्। तथाच बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम्।

"उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि" उद्भूतस्पर्श वाले द्रव्य का त्वगिन्द्रिय से प्रत्यक्ष होता है। और स्पर्शत्व सहित वह उद्भूत स्पर्श भी त्वगिन्द्रिय से ग्राह्य है। रूप से भिन्न-रूपत्व से भिन्न जो भी पदार्थ चक्षु से ग्राह्य है—वह त्वगिन्द्रिय से भी ग्राह्य है। पृथक्त्व-संख्या-आदि जो गुण चक्षु से ग्राह्य हैं—एवं प्रत्यक्ष योग्य पदार्थ में रहने वाली जो क्रिया और जाति—जो चक्षु से ग्राह्य हैं वे त्वगिन्द्रिय से भी ग्राह्य हैं। त्वगिन्द्रिय जन्य द्रव्य प्रत्यक्ष में भी रूप कारण है—इसलिए बहिरिन्द्रिय से होने वाले द्रव्यप्रत्यक्ष में रूप कारण है। नवीन नैयायिकों

---

द्रव्यस्पार्शनं प्रति जनकत्वम्, अभावकूटस्यानुगतत्वात्। रसनिष्ठानुद्भूतत्वमपि तिक्तत्वमधुरत्वव्याप्या नाना जातिः।

वस्तुतो रसनिष्ठानुद्भूतत्वं मधुरत्वव्याप्यमेव सर्व एवानुद्भूतरसो मधुर एवेत्युपगमात्। रसनाद्यात्मकजलनिष्ठरसेपि तस्य सत्वेन तिक्तत्वादिव्याप्यत्वस्य तत्राऽसंभवात्, अपां मधुर एव रस इति नियमात्। तादृशानुद्भूतत्वाभावकूटवत्त्वमेवोद्भूतरसत्वम्, तेनैव रूपेण रसरासनत्वावच्छिन्नं प्रति जनकत्वम्। गन्धनिष्ठानुद्भूतत्वं च विनिगमकाभावेन द्वयं, एकं सुरभित्वव्याप्यमपरं चासुरभित्वव्याप्यं तदभावद्वयवद्गन्धत्वमेवोद्भूतगन्धत्वम्, तेनैव रूपेण गन्धघ्राणजत्वावच्छिन्नं प्रति जनकत्वम्। घ्राणपाषाणादिकं च सुरभ्यसुरभ्युभयानुद्भूतगन्धवदेव, विनिगमकाभावादित्याहुः।

अत्र मीमांसकानुयायिनो नव्यनैयायिकाः—तादृशरूपादिद्वैविध्ये मानाभावः, सामान्यतो द्रव्यचाक्षुषं प्रति रूपत्वेन, द्रव्यस्पार्शनं प्रति स्पर्शत्वेन, रसरासनं प्रति रसत्वेन, गन्धघ्राणजत्वावच्छिन्नं प्रति गन्धत्वेनैव लाघवेन हेतुत्वात्। न चैवं घ्राणरसनचक्षुःपिशाचादीनां चाक्षुषापत्तिः, तेषां प्रभावाय्वोश्च स्पार्शनापत्तिः, घ्राणरसनादिवृत्तिरसानामपि रासनापत्तिः, घ्राणपाषाणमणिरत्नादिगन्धानामपि घ्राणजापत्तिश्चेति वाच्यम्। तेषां नीरूपत्व-नीरसत्व-निःस्पर्शत्वनिर्गन्धत्वाद्युपगमात्। एवं यत्रानुद्भूतरूपरसगन्धस्पर्शवत्त्वं नैयायिकसिद्धान्तिभिरभ्युपेयते तत्र नीरूपनी-

नवीनास्तु वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपं कारणं, प्रमाणाभावात्। किन्तु चाक्षुषप्रत्यक्षे रूपं, स्पार्शनप्रत्यक्षे स्पर्शः कारणम्, अन्वयव्यतिरेकात्। वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमितिचेत्, न किंचित्, आत्माऽवृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकमस्तु। रूपस्य कारणत्वे लाघवमिति चेन्न। वायोस्त्वगिन्द्रियेणाऽग्रहणप्रसंगात्। इष्टापत्तिरिति चेत् उद्भूतस्पर्श एव लाघवात्कारणमस्तु। प्रभाया अप्रत्यक्षत्वे त्विष्टापत्तिरेव किं नष्यते, तस्मात्प्रभां पश्यामीतिवत् वायुं स्पृशामीति प्रत्ययस्य सत्त्वाद्वायोरपि प्रत्यक्षत्वं संभवत्येव। वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपस्य न वा स्पर्शस्य हेतुत्वम्। वायुप्रभयोरेकत्वं गृह्यते एव, क्वचित् द्वित्वादिकमपि क्वचित्संख्यापरिमाणाद्यग्रहो दोषादित्याहुः।

का कहना है कि बहिरिन्द्रियजन्यद्रव्यप्रत्यक्ष मात्र में रूप कारण नहीं है क्यों कि उसमें कोई प्रमाण नहीं है। किन्तु चाक्षुष प्रत्यक्ष में रूप-और स्पार्शन प्रत्यक्ष में स्पर्श कारण है—अन्वय-व्यतिरेक से (अर्थात् रूप के अन्वय ( सत्व ) से चाक्षुष प्रत्यक्ष का भी सत्व देखा जाता है। और रूप के व्यतिरेक ( असत्व ) से चाक्षुषप्रत्यक्ष का भी असत्व देखा जाता है। ऐसे ही स्पर्श के अन्वय (सत्व) से स्पार्शन प्रत्यक्ष का सत्व देखा जाता है। और स्पर्श के व्यतिरेक (अभाव) में स्पार्शनप्रत्यक्ष का भी अभाव देखा जाता है ] प्रचीन पूछता है कि बहिरिन्द्रियजन्य द्रव्य प्रत्यक्ष मात्र में एक कौन कारण है। नवीन उत्तर देता है कि कोई नहीं अथवा आत्मा में न रहनेवाला जो शब्द भिन्न विशेषगुण-तादृश विशेषगुणवत्व ही बाह्य द्रव्यप्रत्यक्ष मात्र में कारण है। प्रश्न—रूप को कारण मानने में लाघव है। उत्तर—नहीं-तब वायु का त्वगिन्द्रिय से प्रत्यक्ष नहीं होगा। प्रश्न न हो वायु का प्रत्यक्ष-उसमें इष्टापत्ति करेंगे। उत्तर—यदि ऐसा हो तो बाह्यद्रव्यप्रत्यक्ष मात्र में उद्भूतस्पर्श ही को लाघवात् कारण मान लिया जाय। प्रश्न —प्रभा (प्रकाश) का प्रत्यक्ष नहीं होगा—क्योंकि प्रभा में उद्भूतस्पर्श नहीं है। उत्तर—प्रभा का प्रत्यक्ष नहीं होगा तो न हो वायु के अप्रत्यक्षत्व में इष्टापत्ति की-वैसे ही प्रभा के अप्रत्यक्षत्व में हम (नवीन) भी इष्टापत्ति करेंगे। अतः जैसे "प्रभां पश्यामि" यह प्रभा का चाक्षुषप्रत्यक्ष होता है—वैसे ही "वायुं स्पृशामि" यह वायु का भी स्पार्शन प्रत्यक्ष होता है। बहिरिन्द्रियजन्यद्रव्य प्रत्यक्ष मात्र में न रूप कारण है—अथवा न स्पर्श कारण है। प्रभागत एकत्व संख्या का प्रत्यक्ष त्वचा से होता है। कहीं द्वित्वसंख्या का भी ( ये दो प्रभायें हैं) ( ये पूर्वी-पश्चिमी दो वायु हैं ) और कहीं संख्या-परिमाण आदि का जो प्रत्यक्ष नहीं होता है, वह दोष से—ऐसा नवीन कहते हैं॥ ५६ ॥

---

रसनिर्गन्धनिःस्पर्शाः लाघवात्, तेषां रूपादिसत्त्वे मानाभावाच्च। द्रव्यत्वादेरिव पृथिवीत्वादेरपि रूपादिमत्त्वव्याप्यत्वे मानाभावात्। न चैवं प्रत्यक्षसिद्धरूपादिमदवयव्यनारंभकाः परमाणवो घ्राणादिकमारभन्ते इति नियतारम्भवादिमतं साधु

शोभते; मूलीभूतपरमाणूनामपि रूपादिरहिततयाऽवयवरूपादिविरहादेवाऽवयविनि घ्राणादौ रूपाद्यनुत्पत्तेः सुवचत्वात् । य एव परमाणवः प्रत्यक्षरूपादिमत्पृथिव्यादिकमारभन्ते त एव घ्राणादिकमप्यारभन्ते इत्यनियतारम्भनये तु न संगच्छते, प्रत्यक्षसिद्धरूपादिमदारम्भकत्वान्यथानुपपत्त्या परमाणावपि रूपादेरावश्यकतयाऽवयवरूपादिक्रमेण घ्राणादिष्वपि रूपाद्युत्पत्तौ बाधकाभावादिति वाच्यम् । अनियतारम्भनयेपि समवायसंबन्धेन रूपाद्युत्पत्तिं प्रति तादात्म्यसंबन्धेन घ्राणाद्यारम्भकद्व्यणुकत्वेन प्रतिबन्धकतया तत्र रूपाद्यनुत्पादात् । द्व्यणुके रूपाद्यनुत्पत्तौ अवयववृत्तिरूपाद्यभावादेव घ्राणादौ त्रसरेण्वादितदवयवपरम्परायां च रूपाद्यनुत्पत्तेरसंभवात् । घ्राणाद्यारम्भकत्वं च साक्षात्परम्परासाधारणतदवयवत्वसंबन्धेन घ्राणादिमत्त्वम् । परमाणुवारणाय द्व्यणुकत्वप्रवेश इत्याहुरित्यन्यत्र विस्तरः ।

तथाचेति । एवंच वायोश्चाक्षुषसाक्षात्कारवत्स्पर्शेनापि न साक्षात्कार इति प्राचीनसिद्धान्तः । स न श्रद्धेयः । वायोरस्पार्शनत्वे शरीरवायुसंयोगानन्तरं शीतो वायुः, वायुर्वातीति वायुमुख्यविशेष्यकलौकिकस्पार्शनानुपपत्तेः । न चासौ न स्पार्शनोऽपि तु मानस एवेति वाच्यम् । वायोः शीतस्पर्शं स्पृशामि वायोर्वातं स्पृशामीत्यनुव्यवसायानुपपत्तेः । न चासौ भ्रमो, बाधकाभावात् । न च वायूनां विषयविधया त्वविषयकलौकिकप्रत्यक्षे तत्तद्व्यक्तित्वेन कारणत्वे कल्पनागौरवमेव बाधकमिति वाच्यम् । विषयस्य तत्तद्व्यक्तित्वेन प्रत्यक्षकारणत्वे मानाभावात् । विषयस्य तत्तद्व्यक्तित्वेन कारणताभियाऽतीन्द्रियत्वाभ्युपगमे घटादेरपि तथात्वापत्तेश्च । न चोद्भूतरूपस्य द्रव्यचाक्षुषवत् द्रव्यस्पार्शनेपि हेतुत्वात्कारणाभाव एव बाधक इति वाच्यम् । मानाभावात् । प्रभावाः स्पार्शनवारणायोद्भूतस्पर्शस्य द्रव्यस्पार्शने हेतुत्वस्यावश्यकतया तत एव पिशाचादेर्गगनादेश्चाऽस्पार्शनत्वोपपत्तेः । न च विनिगमनाविरहादेवोद्भूतरूपस्यापि द्रव्यस्पार्शनहेतुत्वमिति वाच्यम् । तथाप्युक्तप्रतीतेर्भ्रमत्वकल्पनाया एव विनिगमकत्वात् । न च वायूष्मणोस्त्वाचाभ्युपगमे तद्वृत्तिसंख्यादेरपि त्वाचापत्तिरिति वाच्यम् । इष्टत्वादित्याशयवतां मतमाह । नवीनास्त्विति । आत्मावृत्तीति । तेनाऽऽत्मकाशकालादेर्व्यावृत्तिः । प्रतिबन्द्युत्तरमाह । उद्भूतस्पर्श एवेति । समानं विरोध्युत्तरं प्रतिबन्दी । क्वचिदिति । सजातीयसंवलनाभावे । दोषादिति । सजातीयसंवलनादिरूपदोषादित्यर्थः ।

अत्र प्राञ्चः—सामान्यतो मानसेतरद्रव्यलौकिकप्रत्यक्षत्वावच्छेदेनैव द्रव्यलौकिकचाक्षुषं प्रति उद्भूतरूपस्य हेतुत्वान्न वायोः स्पार्शनसाक्षात्कारसंभवः, सामान्यसामग्रीसहिताया एव विशेषसामग्र्याः कार्योपधायकत्वात् । न च तादृशकार्यकारणभावे मानाभाव इति वाच्यम् । वाय्वादेः पिशाचादेरात्मनश्च लौकिकचाक्षुषवारणाय द्रव्यलौकिकचाक्षुषं प्रति उद्भूतरूपस्य हेतुत्वावश्यकतया तस्यैव सामान्यतोमानसेतरलौकिकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वात् । असति बाधके सामान्यधर्मावच्छेदेनैव कार्यतादिग्राहकप्रवृत्तेरित्याहुः । तदसत् । मानसेतरद्रव्य-

प्रत्यक्षत्वस्याऽऽत्मेतरद्रव्यप्रत्यक्षत्वमादाय विनिगमनाविरहमस्ततया द्रव्यचाक्षुषत्व-मपेक्ष्य शरीरगुरुतया च द्रव्यचाक्षुषत्वस्यैव उद्भूतरूपकार्यतावच्छेदकत्वौचित्यात्। बाधकसत्वेन सामान्यस्याऽकिंचित्करत्वात्। अपरे तु मूर्तलौकिकप्रत्यक्षत्वद्रव्य-लौकिकचाक्षुषत्वयोः समशरीरतया विनिगमकाभावादुभयमेवोद्भूतस्पर्शस्य कार्य-तावच्छेदकमतो न वायोः स्पार्शनसाक्षात्कारसम्भवः। न च मूर्तलौकिकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वेपि द्रव्यलौकिकचाक्षुषत्वं कार्यतावच्छेदकमावश्यकम्, अन्यथा आत्मनि उद्भूतरूपाभावान्मूर्तप्रत्यक्षोत्पत्त्यसंभवेपि चक्षुःसंयोगलक्षणसन्निकर्षसत्वेन द्रव्यलौकिकचाक्षुषोत्पत्तिप्रसंगस्य दुर्वारत्वात, तथाचेदमेव विनिगमकमिति वाच्यम्। मूर्तलौकिकप्रत्यक्षत्वमात्रस्य कार्यतावच्छेदकत्वेपि मूर्तलौकिकप्रत्यक्षातिरिक्तस्य द्रव्यलौकिकचाक्षुषस्यालीकतया सामान्यसामग्रीविरहादेवाऽऽत्मनो द्रव्यलौकिक-चाक्षुषापत्तेर्वारणसंभवादिति वदन्ति।

चाक्षुषप्रत्यक्षे रूपं कारणम्, स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्युक्तम्। अथ चाक्षुषत्वस्य कार्यतावच्छेदकत्वे स्पार्शनप्रत्यक्षं प्रति उद्भूतरूपस्याजनकतया रसनस्य स्पार्शनवारणाय स्पार्शनं प्रति उद्भूतस्पर्शस्य जनकतायां स्पर्शनिष्ठानुद्भूतत्वा-भावस्याप्यवच्छेदककोटौप्रवेशावश्यकत्वे गौरवापत्तेः। प्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे स्पार्शनप्रत्यक्षं प्रति उद्भूतरूपस्य जनकतया तदभावादेव रसनस्य स्पार्शनाऽसंभवात न तत्प्रवेशः, उद्भूतरूपाऽनुद्भूतस्पर्शवतो जलस्याभावादिति चेन्न।

प्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे त्वाचीयलौकिकविषयतानामपि कार्यतावच्छे-दकसंबन्धकोटौ प्रवेशेन महागौरवात्। ननु तथापि प्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे स्पर्शनिष्ठाऽनुद्भूतत्वत्वावच्छिन्नप्रतियोगिताकानुद्भूतत्वाभावकूटत्वेन द्रव्यस्पार्शनं प्रति हेतुत्वमुपेयम्, गगनादावपि तादृशाभावकूटवत्वेपि उद्भूतरूपात्मककारणान्तर-विरहादेवास्पार्शनत्वोपपत्तेः। चाक्षुषत्वस्य कार्यतावच्छेदकत्वे तु स्पर्शनिष्ठाऽनुद्भूत-त्वाभावकूटवत्स्पर्शत्वेनैव द्रव्यस्पार्शनं प्रति हेतुत्वमुपेयम्, अन्यथा गगनादेरपि स्पार्शनापत्तेः, उद्भूतरूपस्य स्पार्शनाहेतुत्वात्, तथाच स्पर्शत्वप्रवेशात्स्पर्शत्वाऽ-नुद्भूतत्वाभावकूटयोर्विशेष्यविशेषणभावे विनिगमकाभावेन कार्यकारणभावद्वय-प्रसंगाच्च महद् गौरवमिति चेन्न। अपेक्षाबुद्धिभेदेन कूटत्वस्य नानाविधतया तादृशानुद्भूतत्वाभावकूटत्वेन हेतुत्वेऽनन्तकार्यकारणभावापत्तेः। अनुद्भूतत्वा-भावकूटवत्स्पर्शत्वेन हेतुत्वे तु स्वरूपतोऽनुद्भूतत्वाभावकूटानां स्पर्शत्वस्य चैकत्र द्वयमिति न्यायेन व्यासज्यवृत्त्यवच्छेदकतया कूटत्वस्य कारणतावच्छेदककोटाव-प्रवेशात्।

वस्तुतस्तु अनुद्भूतस्पर्शे मानाभावात्सामान्यतः स्पर्शत्वेनैव द्रव्यस्पार्शनं प्रति हेतुत्वम्। नत्वनुद्भूतत्वाभावप्रवेशोपीति क्व गौरवसंभावना। न च तथापि मूर्तलौकिकप्रत्यक्षत्वस्य प्रत्यक्षत्वस्य वा उद्भूतरूपकार्यतावच्छेदकत्वे द्रव्यत्वाचं प्रति स्पर्शस्यापि पृथक् हेतुत्वमावश्यकमतो गौरवमिति वाच्यम्। मूर्तलौकिक-प्रत्यक्षत्वस्य वा कार्यतावच्छेदकत्वेपि ऽभावात्वाचवारणाय द्रव्यत्वाचं प्रति स्पर्शस्य

**त्वचो योगो मनसा ज्ञानकारणम् ।**

**मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥५७॥**

त्वचोयोग इति । त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः किं तत्र प्रमाणम्, सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननमिति । ननु सुषुप्तिकाले किं ज्ञानं भविष्यति अनुभवरूपं स्मरणरूपंवा, नाद्यः—अनुभवसामग्र्यभावात्, तथाहि चाक्षुपादिप्रत्यक्षे चक्षुरादिना सह मनःसंयोगस्य हेतुत्वात्तदभावादेव न चाक्षुपादिप्रत्यक्षम् । ज्ञानादेरभावादेव न मानसं प्रत्यक्षम् । ज्ञानाद्यभावे चाऽऽत्मनोपि न प्रत्यक्षमिति । व्याप्तिज्ञानाभावादेव नानुमितिः । सादृश्यज्ञानाभावान्नो-

"त्वचोयोगो मनसा ज्ञानकारणम्" त्वङ् मनः संयोग ज्ञानसामान्य में कारण है । प्रश्न—त्वङ् मनः संयोग ज्ञान सामान्य में कारण है इसमें क्या प्रमाण है । उत्तर—सुषुप्ति-काल में मन त्वक् को छोड़कर पुरीतत् नाडी में प्रविष्ठ हो जाता है—(अतः त्वक् के साथ मन का संयोग उस काल में नही रहता है—इसलिए सुसुति अवस्था में ज्ञान का न होना ही त्वङ्गमनः संयोग कों ज्ञानसामान्य के प्रति कारण सिद्ध करता है ) ( प्रश्न—यदि सुषुप्तिकाल में त्वङ्गमनः संयोग मान भी लिया जाय तो उस अवस्था (सुषुप्ति) में कौन ज्ञान होगा अनुभवरूप या स्मरणरूप-यदि कहो कि आद्य (अनुभवरूप) ज्ञान होता है—यह नहीं कह सकते क्योंकि अनुभवज्ञान की सामग्री ही उस काल में नहीं है । तथाहि—अनुभव चार प्रकार का होता है, यह हम पहिले बतलाचुके हैं—सो प्रत्यक्षात्मक अनुभव में चक्षु आदि के साथ मनः संयोग कारण है—उसके न होने से चाक्षुष आदि प्रत्यक्ष नहीं हो सकेंगे । मानस प्रत्यक्ष भी ज्ञान इच्छा आदि का ही होता है सो सुषुप्ति में कोई भी ज्ञान-इच्छा वगैरह नहीं है अतः ज्ञानादि के न होने से मानसप्रत्यक्ष भी नहीं हो सकता है । और यदि कहो कि सुषुप्तकाल में आत्मा ही का प्रत्यक्ष होता रहता है सो भी ठीक नहीं—कारण की आत्मा का प्रत्यक्ष ज्ञानादि विशेष गुणों के सम्बन्ध से होता है जैसे अहंजानामि अहं सुखी-इत्यादि । सुषुप्तिकाल कोई भी ज्ञानादि विशेषगुण नहीं हैं । एवं सुषुप्तिकाल में कोई भी ज्ञान न होने से व्याप्तिज्ञान भी नहीं है अतः अनुमिति भी नहीं होगी । सादृश्यज्ञान न होने से उपमिति भी नहीं होगी—

---

पृथक्हेतुताया आवश्यकत्वादिति ध्येयम् । आहुरित्यस्वरसः तद्बीजं तु वायोः प्रत्यक्षतासन्देहेन लाघवाद् वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपत्वेनैव कारणत्वमुचितम् । एवं प्रभाया अप्रत्यक्षत्वे इष्टापत्तौ उपरिदेशे विहंगम इत्यत्र प्रभामण्डलस्यैवोपरि-देशतया तत्प्रत्यक्षं विनोपरिदेशे विहंगम इति प्रत्यक्षानुपपत्तेरित्यादिकं बोध्यम् ।

ज्ञानसामान्ये = जन्यज्ञानसामान्ये । ज्ञानाजननमिति । तत्र प्रमाणमिति पूर्वानुषक्तिः । तथाच सुषुप्तिकाले मनो न ज्ञानजनकं त्वक्संयोगाभावादित्यनुमानबलेन

पमितिः। पदज्ञानाभावान्न शाब्दबोधः इत्यनुभवसामग्र्यभावान्नानुभवः। उद्बोधकाभावाच्च न स्मरणम्। मैवम्। सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्संबन्धेनाऽऽत्मनश्च प्रत्यक्षत्वप्रसंगात्। तदतीन्द्रियत्वे मानाभावात्। सुषुप्तिप्राक्काले निर्विकल्पकमेव जायते इत्यत्रापि प्रमाणाभावात्। अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं, तदा रासनचाक्षुषादिप्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात्, विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च तत्र सत्वात्। परस्परप्रतिबन्धादेकमपि न स्यात्।

अत्र केचित्। पूर्वोक्तयुक्त्या त्वङ्मनःसंयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात्कल्प्यते इति।

पदज्ञान न होने से शब्दबोध भी नहीं होगा—इस प्रकार अनुभव की सामग्री न होने से अनुभवरूप ज्ञान तो सुषुप्ति मे होगा नहीं। और उद्बोधन कोई न होने से स्मरणरूप ज्ञान भी न होगा। उत्तर—यदि त्वङ्मनः संयोग को ज्ञानसामान्य में कारण नहीं मानेंगे तो सुषुप्तिप्राक्काल में अर्थात् सुषुप्तिप्रथमक्षण का जो अव्यवहित प्राक्क्षण उसमें उत्पन्न जो इच्छाज्ञानादि व्यक्ति–वह भी आत्मविषयकप्रत्यक्ष का कारणीभूत विशेष सामग्री है—सो उस इच्छादि व्यक्ति का सुषुप्तिप्राक्काल उत्पत्तिक्षण हुवा और सुषुप्तिप्रथमक्षण स्थितिक्षण हुवा, अतः सुषुप्तिप्रथमक्षण में इच्छा–एवं ज्ञानादि व्यक्ति का प्रत्यक्ष होना चाहिये—एवं सुषुप्तिप्राक्काल में आत्मा के साथ इच्छादि विशेषगुणों का सम्बन्ध होने के नाते आत्मा के भी सुषुप्तिप्रथमक्षण में प्रत्यक्ष की आपत्ति लग जायेगी। और सुषुप्तिप्राक्क्षणोत्पन्न ज्ञान व्यक्ति को अतीन्द्रिय मानने में कोई प्रमाण नहीं है।

प्रश्न—क्या सुषुप्ति के अव्यवहित प्राक्काल मे उत्पन्न हुवा ज्ञान नियम से निर्विकल्पक होता है—तब तो उसका प्रत्यक्ष तथा उसके सम्बन्ध से आत्मा का प्रत्यक्ष नहीं हो सकेगा। उत्तर—वह ज्ञान नियम से निर्विकल्पक ही होता है इसमे भी कोई प्रमाण नहीं है। प्रश्न—ज्ञानमात्र से त्वङ्मनः संयोग यदि कारण है तो रासनप्रत्यक्ष—एवं चाक्षुषप्रत्यक्षकाल में त्वाचप्रत्यक्ष भी होना चाहिये—क्योंकि त्वाचप्रत्यक्ष का कारण जो विषय के साथ त्वक् ( त्वगिन्द्रिय ) का संयोग वह भी है और त्वक् के साथ मनःसंयोग भी है। और यदि एक प्रत्यक्ष की सामग्री को दूसरे प्रत्यक्ष मे प्रतिबन्धक मानें तो परस्पर मे प्रतिबन्धक हो जाने से एक भी प्रत्यक्ष नहीं होगा। उत्तर—कोई ऐसा कहते हैं कि "सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननम्" इस पूर्वोक्त युक्ति से "त्वङ्मनः संयोग" को तो ज्ञानसामान्य के के प्रति कारणत्व सिद्ध ही है और चाक्षुषप्रत्यक्ष की सामग्री स्पार्शनप्रत्यक्ष के प्रति प्रतिबन्धक

---

मनस्त्वक्संयोगस्य ज्ञानजनकत्वात्, मनस्त्वक्संयोगो ज्ञानकारणमन्वयव्यतिरेकानुविधायित्वादिति प्रमाणतया बोध्यम्। पुरीततित्वगिन्द्रियाभावादिति हृदयम्।

अन्ये तु सुषुप्त्यनुरोधाच्चर्ममनःसंयोगस्य ज्ञानहेतुत्वं कल्प्यते, चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न त्वाचप्रत्यक्षमिति । मनोग्राह्यमिति । मनोजन्यप्रत्यक्षविषय इत्यर्थः । मतिर्ज्ञानम् । कृतिः प्रयत्नः । एवं सुखत्वादिकमपि मनोग्राह्यम् । एवमात्मापि मनोग्राह्यः, किन्तु "मनोमात्रस्य" इत्यनेन पूर्वमुक्तत्वादत्र नोक्तः ॥५७॥

होती है सो एक प्रत्यक्ष की सामग्री को दूसरे प्रत्यक्ष के प्रति प्रतिबन्धकत्व की कल्पना अनुभव के अनुरोध से की जाती है । [ इससे पूर्वदोष निरस्त हो जाता है, आपने जो पहिले दोष दिया था कि "रासन-चाक्षुषप्रत्यक्षकाले त्वाच प्रत्यक्षं स्यात्" सो इसका सीधा उत्तर है कि जब आपने एकप्रत्यक्ष सामग्री को दूसरेप्रत्यक्ष के प्रति प्रतिबन्धकत्व की कल्पना कर लिया तो रासन-चाक्षुषप्रत्यक्षकाल में त्वाच प्रत्यक्ष के होने में रासन-चाक्षुषप्रत्यक्ष की सामग्री प्रतिबन्धक हो जावेगी—अतः चाक्षुष आदि प्रत्यक्षकाल में त्वाचप्रत्यक्ष नहीं होगा—तब फिर त्वाचप्रत्यक्ष कब होगा—क्योंकि त्वाचप्रत्यक्ष का कारण जो त्वङ्मनः संयोग वह तो हमेशा रहेगा, तो इसका उत्तर यही है कि जब मन का त्वक् को छोड़कर किसी भी इन्द्रिय से सम्बन्ध नहीं होगा—केवल त्वक् के साथ ही मन का संयोग होगा—तब त्वाचप्रत्यक्ष होगा ] और अन्य (पक्षधामिश्र) ऐसा कहते हैं कि सुषुप्ति के अनुरोध से चर्ममनः संयोग को ज्ञानसामान्य के प्रति हेतुत्व (कारणत्व) की कल्पना करनी चाहिये—पूर्वदोष का वारण हो गया कि चाक्षुषप्रत्यक्षकाल में त्वाचप्रत्यक्ष इसलिये नहीं होता कि उस काल में त्वाचप्रत्यक्ष का कारण त्वङ्मनः संयोग नहीं है ।

"मनोग्राह्यं सुखं दुःखमिच्छा" सुख-दुःख-इच्छा-द्वेष-ज्ञान—तथा प्रयत्न ये सब मन से ग्राह्य ( प्रत्यक्षयोग्य ) हैं । ऐसे ही सुखत्व आदि भी मनोग्राह्य हैं । और आत्मा भी मनोग्राह्य है । किन्तु आत्मा के विषय में "मनोमात्रस्य गोचरः" यह पहिले कहा जा चुका है—अतः यहाँ पौनरुक्त्य के भय से नहीं कहा—यहाँ केवल सुखादि को ही मनोग्राह्य कहा ॥५७॥

---

सुषुप्तिकाले सामग्र्यभावादेव न ज्ञानोत्पत्तिरित्याशंकते । नन्विति । अत्र ज्ञानादेर्न मानसमित्यन्वयः । अभावादित्यत्रापि ज्ञानादेरित्यस्यान्वयो बोध्यः । "न प्रत्यक्षमिति । अध्यक्षो विशेषगुणयोगतः" इतिरीत्या योग्यविशेषगुणसंबन्धेनैवाऽऽत्मनःप्रत्यक्षतया तदन्तर्गतज्ञानादेरभावेन नात्मप्रत्यक्षमित्यर्थः । उद्बोधकाभावादिति । उद्बोधकस्य फलबलकल्प्यत्वादिति भावः । इच्छादिव्यक्तेरिति । इच्छाया आदिरिति तत्पुरुषः, तेन ज्ञानस्येत्यर्थलाभः । तदतीन्द्रियत्वे = ज्ञानातीन्द्रियत्वे । त्वङ्मनःसंयोगस्य चेति । तस्याऽस्वीकारे चाक्षुषमपि न स्यादिति भावः । सुषुप्त्यनुरोधेन = सुषुप्तौ ज्ञानानुत्पादानुरोधेन ।

ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।

चक्षुःसंयोगाद्यनन्तरं घट इत्याकारकं घटत्वादिविशिष्टविषयकं ज्ञानं न संभवति पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात्, विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वात्, तथाच प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानं जायते तदेव निर्विकल्पकम् ।

"ज्ञानं यन्निर्विकल्पाख्यम्" प्रत्यक्षज्ञान दो प्रकार का है—निर्विकल्पक और सविकल्पक उसमें निर्विकल्पक ज्ञान अतीन्द्रिय है । घट के साथ चक्षुःसंयोग होने के बाद "घटः" इत्याकारक घटत्वविशिष्टज्ञान नहीं होता है । कारण कि विशेषण जो घटत्व उसका ज्ञान पूर्व में नहीं होने से । क्योंकि विशिष्टबुद्धि (विशिष्टज्ञान) में विशेषणज्ञान कारण होता है । तथाच सर्वप्रथम घट के साथ चक्षुःसंयोग होने के अनन्तर घट-घटत्व के वैशिष्ट्य ( सम्बन्ध ) को अवगाहन न करने वाला जो ज्ञान उत्पन्न होता है—वही निर्विकल्पक है और उसका प्रत्यक्ष नहीं होता है ।

---

प्रत्यक्षं द्विविधं-निर्विकल्पकं सविकल्पकं च । तत्राऽऽद्ये प्रमाणमाह । चक्षुःसंयोगाद्यनन्तरमिति । आदिना संयुक्तसमवायसंयुक्तसमवेतसमवाययोः संग्रहः । विशिष्टबुद्धिः विशेषणज्ञानसाध्या विशिष्टबुद्धित्वात् रक्तदण्डवानिति-विशिष्टबुद्धिवत्, रक्तो दण्ड इति निश्चयं विना रक्तदण्डवानिति निर्णयानुदयादित्याह । विशेषणज्ञानस्य हेतुत्वादिति । तच्च *विशेषणज्ञानं यदि वैशिष्ट्यावगाहि,* तदा तस्यापि विशिष्टबुद्धित्वेन विशेषणज्ञानान्तरसापेक्षता स्यात्, तस्यापि वैशिष्ट्यावगाहित्वमित्यनवस्था स्यात् अनवस्थाभिया वैशिष्ट्यानवगाहि तत्स्वीकार्यमिति सूचयितुं वैशिष्ट्यानवगाह्येवेत्येवकारः । तदेव निर्विकल्पकमिति । तत्प्रकारकज्ञानस्य तद्विशेष्यकज्ञानस्य च सामग्र्यसमवहितायाः तद्विषयकज्ञानसामग्र्याः *निर्विकल्पकप्रयोजकत्वं बोध्यम्।* निर्विकल्पकत्वं च न जातिः चाक्षुषत्वादिना सांकर्यात्, आंशिकत्वाच्च । लक्षणन्तु प्रकारत्वानिरूपकत्वं विशेष्यत्वानिरूपकत्वं *संसर्गत्वानिरूपकत्वं वेति* स्फुटमेव । न च *निर्विकल्पके त्रिविधविषयताभावसत्त्वेन* निर्विषयकत्वापत्तिः, तत्र तुरीयविषयतास्वीकारात् ।

ननु विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वे मानाभावः, चक्षुःसंयोगद्वितीयक्षणे एव घट इति विशिष्टप्रत्यक्षोपगमे क्षतिविरहात्, नहि तृतीयक्षणे एव तादृशप्रत्यक्षम्, *क्षणविलम्बस्य शपथनिर्णेयत्वात्,* रक्तो दण्ड इति निर्णयं विना रक्तदण्डवानिति निर्णयानुदयेन अन्वयव्यतिरेकाभ्यां भवतु विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणत्वम्, परन्तु विशेषणज्ञानस्य हेतुत्वं निर्युक्तिकमेवेति चेन्न । विशेषणज्ञानस्याहेतुत्वे जातिमानिति प्रत्यक्षकाले घटः इत्याकारकप्रत्यक्षापत्तिः स्यादतः स्वरूपतो घटत्वप्रकारकबुद्धौ तादृशघटत्वज्ञानं कारणम्, घटत्वांशे जातित्वप्रकारकघटत्वविशिष्टबुद्धौ

च तादृशघटत्वज्ञानं कारणमित्यवश्यमभ्युपेयम्। मीमांसकास्तु निर्विकल्पकज्ञानमप्रामाणिकम्, अतीन्द्रियतया प्रत्यक्षायोगात्। अनुमानस्याप्रयोजकत्वात्। न च विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुतायाः प्राथमिकविशिष्टबुद्ध्यन्यथानुपपत्त्या सिद्धिरिति वाच्यम्। विशेष्यविशेषणभासकेन्द्रियसन्निकर्षादित एव विशिष्टबुद्धिनिर्वाहात्, तत्र विशेषणज्ञानहेतुताया एवाऽप्रामाणिकत्वात्, अन्यथा विशेष्यज्ञानत्वेनापि विशिष्टबुद्धिं प्रति हेतुत्वप्रसंगात्।

अथ तत्प्रकारकज्ञानं प्रति तद्विषयकज्ञानस्यानपेक्षितत्वेन भूतले घट इत्याकारकं घटविशेष्यकं निखिलमेव प्रत्यक्षं घटप्रकारकं स्यादिति घटविशेष्यकतथाविधप्रत्यक्षस्य दौर्लभ्यम्, तथाचानुभवविरोधः। अस्मन्मते तु यत्र पूर्वं घटेन्द्रियसन्निकर्षादिकं विद्यते न तु तद्ज्ञानं तत्रैव तथाविधप्रत्यक्षसौलभ्यमिति चेन्न।

घटत्वादिनोपस्थितघटादौ भूतलादिप्रकारकस्य घटविशेष्यकप्रत्यक्षस्य कदाचिदुत्पत्तेरानुभविकतया विशेषणज्ञानस्य हेतुत्वेपि अननुगततत्तत्कालघटितसामग्र्यास्तदंशे तत्प्रकारकप्रत्यक्षोत्पादनियामकताया आवश्यकत्वात्, तत एवाऽस्मन्मते तत्प्रकारकतद्विशेष्यकप्रत्यक्षसौलभ्यात्, अन्यथा इन्द्रियसन्निकर्षादेरविशेषात् क्वचिदेव तद्विशेष्यकप्रत्यक्षं क्वचित्तद्विशेष्यकमित्येतादृशनियमनिर्वाहाय विशेष्यज्ञानहेतुतैव किं न स्वीक्रियते इत्यत्र विनिमगमनाविरहप्रसंगात्। यत्तु प्रमात्मकविशिष्टबुद्धौ विशेष्यविशेषणसंबन्धज्ञानं गुणतया, भ्रमात्मकविशिष्टबुद्धौ विशेष्याऽसंबद्धविशेषणज्ञानं दोषतया हेतुरतस्तादृशनिर्वाहाय विशिष्टबुद्धिसामान्ये विशेषणज्ञानसामान्यहेतुत्वमप्यावश्यकम्, "यद्विशेषयोः कार्यकारणभावः बाधकं विना तत्सामान्ययोरपीति" न्यायात्, सामान्यकारणतानभ्युपगमेपि विशेषकारणतायां व्यभिचारवारणायैव निर्विकल्पकस्वीकारस्यावश्यकत्वादिति। तदसत्। प्रमात्वभ्रमत्वयोरर्थसमाजग्रस्ततया तदवच्छिन्नयोर्गुणदोषहेतुताया एवाऽसिद्धेः। अस्तु वा तादृशगुणदोषयोर्हेतुता, तथापि निर्विकल्पकाऽसिद्धिः, स्वविषयतत्तद्धर्मवत्त्व, स्वविषयतत्तद्धर्माभाववत्त्वरूपविषयनिष्ठप्रत्यासत्त्या एव तयोस्तद्धर्मप्रकारकप्रमाभ्रमोत्पत्तिज्ञानत्वेन हेतुताया उपगन्तव्यतया पुरुषान्तरीयात्, नैयायिकानामन्ततः ईश्वरीयात्तद्धर्मप्रकारकज्ञानादेव प्राथमिकप्रमाभ्रमयोरुत्पादसंभवात्। यत्तु पृथिव्यां जलभेद इत्याकारकसाध्यविशेष्यकानुमितेः साध्यप्रकारकत्ववारणाय विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वमावश्यकम्। तदसत्। तदर्थं अनुमितित्वावच्छिन्नं प्रति विशेषणज्ञानहेतुतायाः कल्पयितुमुचितत्वान्निर्विकल्पकाऽसिद्धिः। वस्तुतस्तु अनुमितावपि विशेषणज्ञानहेतुत्वं निर्युक्तिकमेव, जलभेदत्वावच्छिन्नप्रकारिकाया अनुमितेर्जलभेदत्वादिविशिष्टवैशिष्ट्यावगाहितया तत्र च विशेषणतावच्छेदकप्रकारकज्ञानमुद्रया जलभेदत्वादिप्रकारकज्ञानस्य हेतुत्वात्तादृशकारणविरहादेव दर्शितसाध्यविशेष्यकानुमिति काले साध्यप्रकारकानुमित्यापादनाऽसंभवात्। न च यत्र जलभेदत्वेन घटाद्यवगाहिज्ञानं वर्तते तत्र विशेषणतावच्छेदकप्रकारकज्ञानसत्त्वात् पृथिवी जलादिभेदवतीत्याकारकानुमित्यापत्तिरिति वाच्यम्। इष्टत्वात्। न च यत्र

साध्यवत्ताज्ञानरूपप्रतिबन्धकसत्वात्, साध्यविशेष्यतयापि भानसंभवात्, एकविध-परामर्शाद् द्विविधविषयताशाल्यनुमितेरापत्तिः, तत्स्वीकारे चानुभवविरोध इति वाच्यम्। साध्यतावच्छेदकरूपेण यत्किंचिद्विषयकज्ञानस्यैव साध्यविशेष्यकानुमिति-विरोधित्वोपगमात्, साध्यस्य विशेष्यतया भानाऽसंभवादित्याहुः।

अत्र न्यायमतानुयायिनः—सामान्यतस्तत्प्रकारकबुद्धौ तद्ज्ञानं हेतुः, स्वरूप-तस्तद्विशिष्टबुद्धौ तद्विषयकज्ञानत्वेन हेतुत्वमावश्यकम्, तथाहि जातिमानित्याकारक-घटत्वादिप्रकारकज्ञानीयजातित्वावच्छिन्नघटत्वादिप्रकारतातो घट इति ज्ञानीय-निरवच्छिन्नघटत्वादिप्रकारतायां वैलक्षण्यं दुरपह्नवमेव, तादृशप्रकारता च यदि तत्प्रकारकज्ञानसामग्रीनियम्या तदा केवलजातिमानित्याकारकघटत्वप्रकारकप्रत्यक्षा-पलापप्रसंगः, तस्यापि तादृशप्रकारताशालित्वे बाधकाभावात्। नाप्यसौ घटत्वाद्यंशे किंचित्प्रकारकज्ञानसामग्र्यसमवहिततादृशसामग्रीनियम्या तदा जातिमान्, घट इत्याकारकद्विविधघटत्वादिप्रकारताशालिज्ञानविलोपापत्तिप्रसंगात्। तस्मात्तादृशप्रकारता शालिबुद्धौ स्वरूपतो घटत्वादिविषयकज्ञानस्य हेतुतां स्वीकृत्य यदा जातित्वादिनैव घटत्वाद्युपस्थितिः, तदा जातिमानित्याकारकं ज्ञानम्, यदा स्वरूपतो घटत्वादिविषयकं घट इत्याकारकं सविकल्पकं ज्ञानं, यदा च घटत्वादौ जातित्वादिभानसामग्री स्वरूपतो घटत्वाद्युपस्थितिश्च वर्तते, तदा जातिमान् घटश्चेति ज्ञानमित्येतादृशविशिष्योप-पादनीय इति निर्विकल्पकसिद्धिः।

अथ स्वरूपतो घटत्वाद्युपस्थितिरूपकारणस्य कदाचित्समवायेनैव स्वरूपतो घटत्वप्रकारकं कदाचित्संबन्धान्तरेणेति नियमप्रयोजकत्वाऽसंभवात्, अननुगतकाल-संबन्धादिघटितसामग्रीणां तत्संबन्धावच्छिन्नतादृशप्रकारताविशेषनियामकत्वमवश्यं वाच्यम्, तथाच तादृशप्रकारतासामान्येपि तादृशसामग्र्यैव नियामिका, विशेषा-तिरिक्तस्य सामान्यस्याप्रसिद्धेरित्यलं स्वरूपतो विशेषणज्ञानहेतुतयेति चेन्न।

स्वरूपतो घटत्वप्रकारकज्ञानसामान्याभावेऽनन्ततत्तद्विशेषसामग्र्यभावानां प्रयोजकत्वापेक्षया स्वरूपतो घटत्वोपस्थित्यभावस्यैकस्यैव तथात्वे लाघवात्तादृश-विशेषणज्ञानहेतुताया आवश्यकत्वात्, अन्यथा सर्वत्र विशेषसामग्रीत एव सामंजस्ये सामान्यकार्यकारणभावविलोपप्रसंगात्। घट इत्याकारकज्ञाने नियमतोऽवाधितया-सत्संबन्धेन घटत्वादीनां प्रकारतास्वीकारे क्षतिविरहादननुगतसामग्रीणां तत्तत्संबन्धा-वच्छिन्नप्रकारताशालिज्ञानोत्पादकनियामकताया अपि अनभ्युपगमाच्च।

अथ स्वरूपतो घटत्वादिविशिष्टबुद्धौ स्वरूपतो घटत्वादिज्ञानस्य हेतुत्वे यत्र घटत्वादिना समं मिन्द्रियसन्निकर्षोत्पत्तिकाले जातित्वादिना घटत्वादिधर्मस्यो-पस्थितिरासीत् तत्र तादृशसन्निकर्षाद् घटत्वादिनिर्विकल्पकं न स्यात्, तदंशे जातित्वादिभासकसामग्रीसत्वादिति तत्र प्रहरावधिनिरीक्षमाणस्य पुंसो घट इत्या-कारिका विशिष्टबुद्धिर्न स्यात् स्वरूपतो घटत्वविषयकज्ञानाभावादिति चेन्न।

-तत्र जातित्वेन घटत्वज्ञाने फलानुरोधेन निरवच्छिन्नघटत्वविषयतामभ्युपगम्य तदुत्तरं तथाविधबुद्धिरुपपादनीया। न चैवं निरवच्छिन्नतद्विषयताशालिबुद्धौ

तद्विशेष्यकज्ञानसामग्र्याः प्रतिबन्धकत्वाऽसंभवात्ताद्दशघटत्वादिविषयताया जातित्वादिना घटत्वादिविषयकनिखिलज्ञानसाधारण्यप्रसंग इति वाच्यम्। अननुगतसामग्रीणामेव तथाविधविषयतानियामकत्वोपगमात्। न चैवं तादृशसामग्रीणां किंचिद्धर्मावच्छिन्नघटत्वादिप्रकारतानियामकत्वमास्तां, किमन्तरा निर्विकल्पकेनेति वाच्यम्। अनन्तानुगतसामग्रीणां स्वरूपतस्तत्प्रकारताया नियामककल्पनापेक्षया स्वरूपतस्तद्विषयकज्ञानस्य तथात्वेन लाघवात्, निर्विकल्पसिद्धिरप्रत्यूहैव। तदीयाननुगतनियामककल्पनागौरवस्य च फलमुखत्वेनाऽदोषत्वात्। अथास्तु स्वरूपतो घटत्वादिप्रकारिकायां बुद्धौ स्वरूपतस्तद्ज्ञानत्वेन हेतुता—तथापि निर्विकल्पकासिद्धिः। यत्र निर्विकल्पकमंगीकरोषि तत्र स्वरूपतो घटत्वादिप्रकारकस्मरणमुपगम्यापि तदुत्तरं घटत्वविशिष्टानुभवत्वस्य शक्योपपादनत्वात्। तदीयाननुगतनियामककल्पनागौरवस्य फलमुखत्वेनादोषत्वात्। स्मरणे च विशेषणज्ञानस्यानपेक्षितत्वात्। न च तत्प्रकारकस्मरणं निर्विकल्पकं वेत्यत्राविशेष इति वाच्यम्। निर्विकल्पककल्पने तदीयविलक्षणविषयताकल्पनस्याधिक्यात्। न च स्मरणकल्पने च तज्जनकोद्बोधककल्पनाया आधिक्यमिति वाच्यम्। तत्पूर्ववर्तिक्लृप्तसन्निकर्षव्यक्तीनामेवोद्बोधकत्वस्वीकारात्। तद्व्यक्तीनां च निर्विकल्पकव्यक्तिं प्रति तद्व्यक्तेरन्यदापत्तिवारणाय तद्व्यक्तित्वेन हेतुताया भवन्मते कल्पनीयतया मन्मते स्मृतिं प्रति उद्बोधकविधया तद्व्यक्तित्वेन हेतुताकल्पनाया अप्यवाधिक्यात् इति चेन्न।

तत्र स्मृतिस्वीकारे तदधीनतदानीन्तनतत्समानविषयकसंस्कारव्यक्तीनां कल्पनाया आधिक्येन गौरवान्निर्विकल्पककल्पनाया एवोचितत्वात्। निर्विकल्पकस्य संस्कारजन्यतावच्छेदकानाक्रान्ततया तदधीनसंस्कारव्यक्तिकल्पनाधिक्यविरहात्। यादृशघटत्वादिबुद्धेः प्राक् कदाचिदपि तस्य पुंसस्तथाविधबुद्धिर्नासीत् तत्र संस्काराभावेन स्मरणासंभवान्निर्विकल्पकस्वीकारस्यावश्यकत्वात्। चैत्रत्वादिविशिष्टबुद्धिस्थले जन्मान्तरीयसंस्कारस्याप्यसंभवात्। घटचक्षुःसंयोगादिद्वितीयक्षणे घटत्वप्रकारकस्मरणस्वीकारे तदानीं घटादिचाक्षुषस्पार्शनाद्यापत्तिवारणात् तथाविधस्मृतिसामग्रीणां प्रतिबन्धकत्वकल्पनाधिक्यम्, स्मृतिसामग्रीणां चाननुगतोद्बोधकघटितत्वेनाननुगततयाऽन्यस्थलीयस्मृतिसामग्र्याः प्रतिबन्धकताया अनिर्वाहात्। तदानीं चाक्षुषनिर्विकल्पोपगमेऽनुगतचाक्षुषसामग्रीप्रतिबन्धकताया अन्यत्र क्लृप्ततयैवोपपत्तेर्न प्रतिबन्धकत्वकल्पनाधिक्यमिति निर्विकल्पकसिद्धिः।

यत्तु विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वोपगमे सुखाद्युत्पादानन्तरं सुखत्वादिविषयकनिर्विकल्पकमुत्पाद्य वाऽहं सुखीत्यादिविशिष्टबुद्धिरुपपादनीया, तथाच तादृशनिर्विकल्पकेन सुखादिनाशात्कार्यकाले विषयविरहात्तादृशलौकिकप्रत्यक्षस्याऽसंभव एव। न च तत्र तदुत्तरोत्पन्नसुखविषयिण्येव तादृशविशिष्टबुद्धिरुत्पाद्यते इति वाच्यम्। यत्र सुखाद्यन्तरस्य सामग्री नास्ति तत्र तादृशयुक्त्यभावादिति।

तदसत्। विषयस्य कार्यसहभावेन प्रत्यक्षहेतुत्वानभ्युपगमात्, विनश्यदवस्थसुखमादायापि विशिष्टबुद्धिसंभवात्। तादृशनिर्विकल्पकोपनायकवलादुपनीत-

तच्च न प्रत्यक्षम्। तथाहि वैशिष्ट्यानवगाहि ज्ञानस्य प्रत्यक्षं न भवति, घटमहं जानामीति प्रत्ययात्, तत्राऽऽत्मनि ज्ञानं प्रकारीभूय भासते, ज्ञाने घटः, तत्र घटत्वम्, यः प्रकारः स एव विशेषणमित्युच्यते, विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते, विशेषणतावच्छेदप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम्, निर्विकल्पके च घटत्वादिकं न प्रकारः, तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न संभवति, घटत्वाद्यप्रकारकं च घटादिविशिष्टज्ञानं न संभवति, जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किंचिद्धर्मप्रकारकत्वनियमात्।

तथाहि—(विशेषण-विशेष्य के) वैशिष्ट्य (सम्बन्ध) के अनवगाही ज्ञान का प्रत्यक्ष नहीं होता है। क्योंकि "घटमहं जानामि" इत्याकारक ज्ञान का प्रत्यक्ष होता है। घटमहंजानामि—इसका अर्थ है "घटज्ञानवानहम्" सो यहाँ अहं पद का वाच्य आत्मा है वही विशेष्य है—उस आत्मा में ज्ञान प्रकार (विशेषण) होकर भासता है। और ज्ञान में घट—घट में घटत्व विशेषण होकर भासता है। जो प्रकार होता है उसे ही विशेषण कहते हैं—विशेषण में जो विशेषण उसे विशेषणतावच्छेदक कहते हैं—विशेषणतावच्छेदक प्रकारकज्ञान विशिष्ट वैशिष्ट्यज्ञान में कारण होता है। निर्विकल्पक में घटत्वादि प्रकार नहीं होते हैं—इसलिये घटत्वादिविशिष्ट जो घटादि उन घटादि के वैशिष्ट्य (सम्बन्ध) का भान निर्विकल्पकज्ञान में नहीं होता है—क्योंकि बिना घटत्व को विशेषण माने घटादि विशिष्टज्ञान हो ही नहीं सकता है—कारण कि जाति अखण्डोपाधि से अतिरिक्त जो पदार्थ उस पदार्थ विषयक ज्ञान में कोई धर्म प्रकार (विशेषण) नियम से होता है।

---

भानात्मिकाया एव तादृशविशिष्टबुद्धेरुपगमात्, यत्र च सुखं साक्षात्करोमीत्यनुव्यवसायोनुभवसिद्धस्तत्र तादृशसुखोत्पत्त्यव्यवहितप्राक्कालेऽगत्या सुखत्वादिप्रकारकस्मृतेरेवाभ्युपगमात्। अथ विशिष्टबुद्धिविशेषणज्ञानयोर्विषयभेदेन विभिन्नकार्यकारणभावस्वीकारात् सुखत्वादिविशिष्टबुद्धौ तद्ज्ञानहेतुत्वानभ्युपगमात् तत्र निर्विकल्पकमन्तरेणैव विशिष्टबुद्धिरुत्पद्यते इति प्राहुः।

तच्चेति। निर्विकल्पकं चेत्यर्थः। न प्रत्यक्षमिति। अतीन्द्रियमित्यर्थः। अतीन्द्रियत्वं दर्शयति। तथाहीत्यादिना। ज्ञानस्य प्रत्यक्षं वैशिष्ट्यानवगाहि न भवतीत्यन्वयः। इति प्रत्ययादिति। इत्यनुव्यवसायादित्यर्थः। घटाद्यवगाहित्वेनैव ज्ञानप्रत्यक्षस्यानुभवसिद्धत्वादितिभावः। तत्र = घटमहंजानामीत्यनुव्यवसाये। अहं पदार्थे आत्मा विशेष्यः। तेन = घटत्वाद्यप्रकारकत्वेन। तथाच निर्विकल्पकं विशिष्टवैशिष्ट्यानवगाहि घटत्वाद्यप्रकारकत्वादिति। तथाच विषयतासंबन्धेन मानसत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन निष्प्रकारकज्ञानं निर्विशेष्यकज्ञानं निःसंसर्गकज्ञानं च विरोधीति भावः। अथ निष्प्रकारकज्ञानत्व-निर्विशेष्यकज्ञानत्व-

महत्त्वं षड्विधे हेतुः ।

महत्त्वमिति । द्रव्यप्रत्यक्षे महत्त्वं समवायसंबन्धेन कारणम् । द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे स्वाश्रयसमवायसंबन्धेन, द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसंबन्धेन कारणमिति ।

"महत्त्वं षड्विधे हेतुः" महत्त्व ( महतपरिणाम ) छै प्रकार के प्रत्यक्ष (चाक्षुष-स्पार्शन रासन) इत्यादि में कारण है। इसलिये उसी द्रव्य का प्रत्यक्ष होता है जिसमें महत्त्व रहता है—परमाणु तथा द्व्यणुक में महत्त्व न होने से उनका प्रत्यक्ष नहीं होता है। उसमें भी द्रव्य के प्रत्यक्ष में महत्त्व समवायसम्बन्ध से कारण है। और द्रव्य में जो समवेत ( समवायसम्बन्ध से रहनेवाले ) गुण-कर्म-तथा सामान्य हैं उनके प्रत्यक्ष में महत्त्व स्वाश्रयसमवायसम्बन्ध से कारण है। स्वपद से महत्त्व—उसका आश्रय द्रव्य—उस द्रव्य में समवायसम्बन्ध से गुण-कर्म-तथा सामान्य ( द्रव्यत्व-सत्ता ) रहते हैं—इस सम्बन्ध से महत्त्व द्रव्यसमवेत पदार्थों में भी रह गया—अतः उनका भी प्रत्यक्ष हो जाता है )। द्रव्य में समवेत, जो गुण आदि—उनमें समवेत जो गुणत्व आदि—उनके प्रत्यक्ष में महत्त्व स्वाश्रय-समवेत समवायसम्बन्ध से कारण है—स्व = महत्त्व—उसका आश्रय-द्रव्य—उसमें समवेत-गुणादि, उनमें समवाव सम्बन्ध से गुणत्व आदि रहे—इस सम्बन्ध से महत्त्व-गुणत्व-कर्मत्व आदि में है—अतः उनका भी प्रत्यक्ष होता है।

---

निःसंसर्गकज्ञानत्वैस्त्रिभिर्धर्मैर्मानसत्वावच्छिन्नं प्रति प्रतिबन्धकत्वत्रयकल्पनामपेक्ष्य तदैन्द्रियकत्वाभ्युपगमस्यैव युक्तत्वात् ।

न च निर्विकल्पकस्यैन्द्रियकत्वे तदनुव्यवसायापत्तिरिति वाच्यम् । यत्रादौ निर्विकल्पकं ततो विशिष्टबुद्धिः, तत्र विशिष्टबुद्ध्यनुव्यवसायोत्पत्तिकाले निर्विकल्पकस्याप्यनुव्यवसाये इष्टापत्तेः । तत्र घटं साक्षात्करोमीति विशिष्टप्रत्यक्षानुव्यवसाये निर्विकल्पकाभानस्य शपथमात्रनिर्णेयत्वात् । न चैवमपि यत्र विनश्यदवस्थेन्द्रियसन्निकर्षजन्यनिर्विकल्पकं ततो न विशिष्टप्रत्यक्षं, तत्रापि निर्विकल्पकस्यानुव्यवसायापत्तिर्दुर्वारैवेति वाच्यम् । विषयवैशिष्ट्याविषयकज्ञानादिप्रत्यक्षस्यालीकतया तत्र विषयभानसामग्रीविरहादेव निर्विकल्पकस्याप्यनुत्पादात् । निर्विकल्पकस्याऽप्रत्यासत्तितया विषयभासकसामग्रीविरहात्, विनश्यदवस्थेन्द्रियसन्निकर्षजन्यनिर्विकल्पके मानाभावाच्च । न च यत्र सुखत्वादिनिर्विकल्पकानन्तरं सुखत्वादिविशिष्टप्रत्यक्षोत्पत्तिसमये एव सुखादिनिर्विकल्पस्य साक्षात्कारापत्तिः, विषयभासकलौकिकसन्निकर्षसत्वादिति वाच्यम् । इष्टत्वात् । क्षणविलंबस्य शपथनिर्णेयत्वात् । सुखादिजनकज्ञानविषयीभूतचन्दनसंयोगादेरुपनयमर्यादया सुखसुखत्वादिनिर्विकल्पकेऽग्रहणभावेन ज्ञानेच्छाद्वेषवत् सुखादेरपि सविकल्पकमात्रवेद्यत्वाच्च । विनश्यदवस्थज्ञानजन्यसुखादौ मानाभावात् । मैवम् । अयं घट इति प्राथमिकविशिष्टप्रत्यक्षानन्तरं घटत्वेनेमं साक्षात्करोमीत्यनुव्यवसायोत्पत्त्या तत्र निर्विकल्पकभानस्य

वक्तुमशक्यत्वात्। प्रकारित्वस्य तृतीयार्थत्वात्, विषयितासामान्यस्य तृतीयार्थत्वेऽनेन घटत्वं साक्षात्करोमि. समवायेनेदं साक्षात्करोमीत्यनुव्यवसायापत्तेः। अत एव मानसत्वावच्छिन्नं प्रति विनिगमनाविरहान्निष्प्रकारकज्ञानत्वादिना प्रतिबध्य-प्रतिबन्धकभावकल्पनापि न दोषाय प्रामाणिकत्वात्, अन्यथा गुरुत्वादेरप्यतीन्द्रियत्वविलोपापत्तेरिति संक्षेपः।

मूले-षड्विधे इति। षड्विधसाधारणप्रत्यक्षत्वावच्छिन्ने इत्यर्थः। तेन श्रावणत्वावच्छिन्ने महत्त्वस्य कारणत्वे प्रयोजनविरहेपि न क्षतिः। द्रव्यसमवेतप्रत्यक्षत्वादेरपजन्यतावच्छेदकतया तस्य श्रावणादिसाधारण्यात्। श्रावणान्यत्वनिवेशे गौरवात् प्रयोजनाभावाच्चेति ध्येयम्।

लौकिकविषयतासंबन्धेन चाक्षुषं प्रति प्रत्यक्षं प्रति वा महत्त्वं कारणम्। अथात्र महत्त्वस्य कार्यतावच्छेदकं चाक्षुषत्वं प्रत्यक्षत्वं वा। अत्र केचित्। प्रत्यक्षत्वमेव कार्यतावच्छेदकम्, चाक्षुषत्वस्य कार्यतावच्छेदकत्वे परमाणुद्व्यणुकयोरपि स्पार्शनापत्तेः। उत्कर्षापकर्षत्वयोरनुगतयोरभावात्, त्रसरेणुमहत्त्वापकर्षविशेषाभाववन्महत्त्वत्वेनैव कारणत्वमभ्युपेयम्. तथाचापकर्षाभावमहत्त्वत्वयोर्विशेषण-विशेष्यभावे विनिगमनाविरहेण कार्यकारणभावद्वयापत्त्या तदपेक्ष्य तादृशापकर्षविशेषाश्रयमहत्त्वस्यैव द्रव्यस्पार्शनं प्रति प्रतिबन्धकताया युक्तत्वात्, अपकर्षविशेषावच्छिन्नप्रतियोगिताकाभावत्वेन कारणत्वे लाघवाच्च। न च प्रत्यक्षत्वस्य नित्यानित्यसाधारणतया कथं कार्यतावच्छेदकत्वमिति वाच्यम्। नित्यव्यावृत्ताऽगुरुधर्मेण कार्यतावच्छेदकत्वसंभवे एव तत्साधारणधर्मेण कार्यत्वकल्पनाया अनुदयात्। वस्तुतस्तु जन्यप्रत्यक्षत्वमेव कार्यतावच्छेदकम्। तच्च महत्त्वकार्यतावच्छेदकतया सिद्धो जातिविशेष इत्याहुः।

तच्चिन्त्यम्। अपकर्षविशेषावच्छिन्नप्रतियोगिताकाभावत्वेन कारणत्वे गौरवापत्त्या स्पार्शनसाक्षात्कारजनकतावच्छेदकतया त्रसरेणुमहत्त्वव्यावृत्ता निखिलनित्यानित्यमहत्त्ववृत्तिरेका जातिरेव कल्प्यते लाघवात्, तादृशमहत्त्वाभावादेव परमाणुद्व्यणुकयोः स्पार्शनाऽसंभवादिति ध्येयम्। द्रव्यप्रत्यक्षे इति। द्रव्यवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रतीत्यर्थः। द्रव्यसमवेतानामिति। द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रतीत्यर्थः। स्वाश्रयसमवायसंबन्धेनेति। महत्त्वं कारणमित्यन्वयः। स्वपदग्राह्यमहत्त्वाश्रयद्रव्यसमवायस्य गुणादौ सत्त्वात्सङ्गतिः। द्रव्यसमवेतसमवेतानामिति। द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रतीत्यर्थः। स्वाश्रयसमवेतसमवायसंबन्धेनेति। स्वं महत्त्वं तदाश्रयो द्रव्यं तत्समवेतगुणादिसमवायस्य गुणत्वादौ सत्त्वात्समन्वयो बोध्यः। आत्मादिवारणायेति। आत्मादावतिव्याप्तिवारणायेत्यर्थः। आदिपदेन च धर्मसंग्रहः। कस्यचिन्मतेन धर्मस्योपि सुषुप्त्यनुरोधाद्

इन्द्रियं कारणं मतम्। ५८

इन्द्रियमिति। अत्रापि "षड्विधे" इत्यनुषज्यते। इन्द्रियत्वं न जातिः, पृथिवीत्वादिना सांकर्यात्, किन्तु शब्देतरोद्भूतगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम। आत्मादिवारणाय सत्यन्तम्। उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्वाच्छब्देतरेति। विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वादुद्भूतेति। उद्भूतत्वं न जातिः, शुक्लत्वादिना

"इन्द्रियं करणं मतम्" यहाँ भी "षड्विध" इसका अनुषङ्ग कर लेना—अर्थात् छः प्रकार के प्रत्यक्ष में इन्द्रियकरण हैं। इन्द्रियत्व जाति नहीं है—क्योंकि पृथिवीत्व के साथ साङ्कर्य हो जायगा—[जैसे पृथिवीत्व को छोड़कर इन्द्रियत्व चक्षुरादि में है- इन्द्रियत्व को छोड़कर पृथिवीत्व घटादि में है—दोनों का समावेश घ्राणेन्द्रिय में है] किन्तु शब्द से इतर उद्भूत विशेषगुण के अनाश्रय को ज्ञान कारण जो मनःसंयोग—उसके आश्रय को इन्द्रिय कहते हैं। जैसे चक्षु शब्द से इतर उद्भूतविशेषगुण अनाश्रय है—क्योंकि चक्षु में कोई भी उद्भूतविशेषगुण नहीं है—और ज्ञान का कारण जो चक्षुः मनः संयोग—उसका आश्रय भी चक्षु है—अतः यह इन्द्रियमात्र का लक्षण बन गया। प्रश्न—सत्यन्त विशेषण क्यों दिया-केवल 'ज्ञानकारणमनः संयोगाश्रयत्व' इतना ही इन्द्रिय का लक्षण पर्याप्त होगा। उत्तर—आत्मा में अतिव्याप्तिवारणार्थ सत्यन्त विशेषण दिया—तथाहि—ज्ञान का कारण जो मनः संयोग आत्मा के साथ मन का संयोग उस संयोग का आश्रय आत्मा भी है—अतः सत्यन्त विशेषण दिया तो आत्मा शब्द से इतर उद्भूत विशेष गुण-ज्ञान-इच्छा-आदि का आश्रय ही है—अनाश्रय नहीं है। इसलिये "शब्देतरोद्भूत विशेषगुणानाश्रयत्वविशिष्टज्ञानकारणमनः संयोगाश्रयत्व" आत्मा में नहीं गया—अतः आत्मा में अतिव्याप्ति नहीं है। प्रश्न—"शब्देतर" विशेषण क्यों दिया - केवल उद्भूत विशेष गुणानाश्रयत्वेसति ज्ञानकारणमनः संयोगाश्रयत्व ही लक्षण उचित है। उत्तर—श्रोत्रेन्द्रिय में अव्याप्ति हो जायगी—क्योंकि 'श्रोत्र' शब्दात्मक उद्भूत विशेष गुण का आश्रय ही है—अनाश्रय नहीं है—अतः यह लक्षण श्रोत्र में नहीं

---

ज्ञानकारणत्वात्। एतेन आत्मभिन्नत्वे सतीत्येव कथं नोक्तमित्यपि परास्तम्। सत्यन्तदाने च शब्देतरे ये उद्भूतविशेषगुणाः सुखादयस्तदाश्रयत्वस्यैवाऽऽत्मनि सत्वान्नातिव्याप्तिः। श्रोत्रे सत्वादिति। अन्यथा श्रोत्रेऽतिव्याप्तिः स्यादिति भावः। शब्दतरेत्यत्र शब्दपदं ज्ञानेच्छाकृतीनामुपलक्षकम्। अन्यथा नवीनमते ईश्वरस्यैव श्रोत्रेन्द्रियत्वोपगमाच्छ्रोत्रेऽव्याप्तिप्रसंगात। संयोगे उद्भूतत्वानुद्भूतत्वयोनांगीकारान्तत्रोद्भूतत्वं घटयति। उद्भूतत्वं न जातिरिति। संकरादिति। उद्भूतत्वं विहाय शुक्लत्वमनुद्भूतशुक्ले शुक्लत्वं विहायोद्भूतत्वमुद्भूतनीलादौ द्वयोः समावेश उद्भूतशुक्ले इति भावः। जनकत्वानुपपत्तेरिति। एकैकस्य कारणतावच्छेदकत्वे व्यभिचारात, कूटस्यैकत्राऽवृत्तितया कारणतानवच्छेदकत्वादिति

संकरात् । न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम् । उद्भूतरूपत्वादिना चाक्षुषादौ जनकत्वानुपपत्तेः । किन्तु शुक्लत्वादिव्याप्यं नानैवाऽनुद्भूतत्वं, तदभावकूटश्चोद्भूतत्वम् । तच्च संयोगादावप्यस्ति, तथाच शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादावप्यस्ति अतो विशेषेति । कालादिवारणाय विशेष्यदलम् । इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते

जायेगा—स्व में स्व का लक्षण न जाने से अव्याप्ति दोष होता है। इसलिये 'शब्देतर' यह विशेषण दिया—देने से अव्याप्ति नहीं-क्योंकि शब्द से इतर जो उद्भूत विशेष गुण ज्ञान आदि उनका अनाश्रय भी श्रोत्र है और ज्ञान का कारण जो श्रोत्र के मनः संयोग उसका आश्रय भी श्रोत्र है—अतः इन्द्रिय का लक्षण इन्द्रिय ( श्रोत्र ) में चला गया। प्रश्न—उद्भूत यह क्यों दिया—शब्देतर विशेष गुणानाश्रयत्वे सति ज्ञानकारणमनः संयोगाश्रयत्व यही लक्षण कर दिया जाय। उत्तर-उद्भूत पद न देने पर चक्षुरिन्द्रिय में अव्याप्ति हो जायेगी-क्योंकि शब्द से इतर जो विशेषगुण रूप उसका आश्रय ही चक्षु है-अनाश्रय नहीं है-उद्भूतपद दिया तो चक्षु का रूप अनुद्भूत है-अतः तादृशउद्भूतविशेषगुणानाश्रयत्व चक्षु में होने से अव्याप्ति नहीं हुयी। प्रश्न-उद्भूतत्व क्या वस्तु है जाति है या उपाधि। उत्तर-उद्भूतत्व जाति नहीं है-क्योंकि सांकर्य है-शुक्लत्व को छोड़कर उद्भूतत्व उद्भूतरस में है उद्भूतत्व को छोड़कर शुक्लत्व अनुद्भूतशुक्ल में है-दोनों का एकत्र समावेश वस्त्र के उद्भूतशुक्लरूप में है। अब शंका यह है कि शुक्लत्वादिकाव्याप्य नाना ही उद्भूतत्व उपाधि मान लिया जाय तो क्या हानि है-इसका उत्तर दिया कि उद्भूतरूपत्वेन उद्भूतरूप को चाक्षुषप्रत्यक्ष के प्रति कारणता नहीं बनेगी। अतः शुक्लत्वादि का व्याप्य नाना अनुद्भूतत्व माना जाय-और अनुद्भूतत्वाभावकूट को उद्भूतत्व माना जाय-और वह उद्भूतत्व संयोगादि में भी है-अब यदि विशेषपद नहीं देंगे तो चक्षुरादि इन्द्रिय में अव्याप्ति हो जावेगी-क्योंकि शब्द से इतर जो उद्भूतगुण संयोगादि उनका आश्रय चक्षुरादि इन्द्रिय भी है-अनाश्रय नहीं है। विशेषपद दिया तो संयोगादि विशेषगुण नहीं हैं। ज्ञानकारणमनःसंयोगाश्रयत्व यह विशेष्यदल नहीं देंगे तो कालादि मे अतिव्याप्ति हो जावेगी-क्योंकि कालादि में कोई भी विशेषगुण नहीं है-अतः शब्देतरोद्भूतविशेषगुणानाश्रयत्वरूपइन्द्रियत्वकालादि में चला गया।

---

भावः। तदभावकूटश्चोद्भूतत्वमिति। तथाच तादृशकूटस्यैकत्र वृत्तितया कारणतावच्छेदकत्वान्नोक्तदोष इति भावः। इन्द्रियावयववारणायेति। अस्य मनःपदमित्यनेनान्वयः। तथाचेन्द्रियावयवाऽर्थावयवयोः संयोगस्यापि प्राचांमते ज्ञानकरणतया तमादायेन्द्रियावयवेऽतिव्याप्तिवारणाय मनःपदमिति भावः। सन्निकर्षघटकतयेति। चक्षुःसंयुक्तविशेषणतारूपसन्निकर्षघटकतयेत्यर्थः। कालादेर्वारणायेति। कालादावतिव्याप्तिवारणायेत्यर्थः। न च घटाभावप्रत्यक्षे इति कथं नोक्तमिति वाच्यम्। काले यदि घटः स्यात्तदा समवायेन घटवत्तयोपलभ्येतेति

प्रत्यक्षजनकत्वादिन्द्रियावयववारणाय, नवीनमते कालादौ रूपाभावप्रत्यक्ष सन्निकर्षघटकतया कारणीभूतचक्षुःसंयोगाश्रयस्य कालादेर्वारणाय मनःपदम् । ज्ञानकारणमित्यपि तद्वारणायैव । करणमिति । असाधारणं कारणं करणम् । असाधारणत्वं व्यापारवत्त्वम । ५८ ।

इसलिये कालादि में अतिव्याप्तिवारण के लिये ज्ञानकारणमनःसंयोगाश्रयत्व यह विशेष्यदल दिया—तो काल के साथ जो मनःसंयोग है वह ज्ञान का कारण नहीं है—( अपितु आत्मा के साथ मनःसंयोग—इन्द्रिय के साथ मनःसंयोग इत्यादि संयोग ही ज्ञान के कारण हैं ) अतः काल में अतिव्याप्ति नहीं है। प्रश्न—मनःपद क्यों दिया। उत्तर—इस प्रश्न के प्राचीन-नवीन मतभेद से दो उत्तर किये हैं प्राचीनमत में चक्षुरिन्द्रियावयव और घट का संयोग घटप्रत्यक्ष में कारण होता है—अतः घटप्रत्यक्षात्मक ज्ञान का कारण जो चक्षुरिन्द्रियावयव तथा घटात्मक-विषय का संयोग उस संयोग का आश्रय चक्षुरिन्द्रियावयव भी है—और सत्यन्तदल भी चक्षु-रिन्द्रियावयव में है—अतः चक्षुरिन्द्रियावयव में अतिव्याप्तिवारणार्थ मनःपद दिया। देने पर ज्ञान का कारण मनःसंयोग इन्द्रियमनःसंयोग ही है—इन्द्रियावयवमनःसंयोग नहीं है अतः इन्द्रियवयव में अतिव्याप्ति नहीं है। नवीन मत में "कालोरूपाभाववान्" यह काल में रूपाभाव का प्रत्यक्ष चक्षुःसंयुक्तविशेषतासन्निकर्ष से होगा-क्योंकि चक्षुःसंयुक्त हुवा काल—उसमें विशेषणता 'रूपाभाव' को है। अतः कालो रूपाभाववान् इस प्रत्यक्ष में चक्षुःसंयुक्त विशेषणतासन्निकर्षकारण है—तब इस सन्निकर्ष के अन्तःपाती जो चक्षुःसंयोग वह भी कारण हुवा इसलिये तादृशचक्षुःसंयोगाश्रयत्व भी काल में है—और सत्यन्तदल भी काल में है—सो काल में अतिव्याप्तिवारणार्थं मनःपद दिया—देने पर यह अर्थ हुवा कि ज्ञान सामान्य का कारण जो मनःसंयोग—सो काल के साथ जो मनःसंयोग वह तो ज्ञानसामान्य का कारण नहीं है—जो मनःसंयोग ज्ञान का कारण है—जैसे आत्मा के साथ मनःसंयोग—इन्द्रिय के साथ मनःसंयोग आदि—तादृशसंयोगाश्रयत्व काल में नहीं है अतः काल में अतिव्याप्ति नहीं है। प्रश्न—'ज्ञानकारण' यह पद क्यों दिया। उत्तर—ज्ञानकारण न देने पर केवल "मनः-संयोगाश्रयत्व" इतना ही विशेष्य रहेगा—सो मनःसंयोग काल में है अतः मनःसंयोगाश्रयत्व काल में रहा—और सत्यन्तदल भी काल में है—सो काल में अतिव्याप्तिवारण के लिये "ज्ञानकारण" यह पद दिया। देने पर काल के साथ जो मनःसंयोग वह ज्ञान का कारण नहीं है—अतः काल में अतिव्याप्ति नहीं है। असाधारणकारण को करण कहते हैं। असाधारण नाम व्यापार वाले का है ॥५८॥ प्रकृत में व्यापार नाम है विषय के साथ इन्द्रिय-

---

आपत्ते कालस्यायोग्यतयाऽसंभवात्, काले यदि रूपं स्यात्तदा उपलभ्येतेति आपत्तिस्तु संभवति, नीरूपत्वेनैव कालस्याऽयोग्यतायाः संपादनीयतया रूपसत्त्वेऽ-योग्यत्वानिर्वाहात्। तद्वारणायैवेति । कालमनःसंयोगमादाय काले अतिव्याप्ति-वारणायैवेत्यर्थः।

विषयेन्द्रियसंबन्धो व्यापारः सोपि षड्विधः ॥
द्रव्यग्रहस्तु संयोगात्, संयुक्तसमवायतः ॥५९॥
द्रव्येषुसमवेतानां, तथा तत्समवायतः ॥
तत्रापि समवेतानां, शब्दस्य समवायतः ॥६०॥
तद्वृत्तीनां समवेतसमवायेन ग्रहः ॥

विषयेन्द्रियेति । व्यापारः सन्निकर्षः । षड्विधं सन्निकर्षमुदाहरणद्वारा प्रदर्शयति । द्रव्यग्रह इति । द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम्, द्रव्यसमवेतप्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम् । एवमग्रेपि । वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणम् । द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः कारणम् । द्रव्यसमवेतसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतसमवायः कारणम् । एवमन्यत्रापि विशिष्यैव कार्यकारणभावः ।

सम्बन्धात्मकसन्निकर्ष का । वह सन्निकर्ष छः प्रकार का है उसे उदाहरण द्वारा दिखलाते हैं । घट-पट-आदि द्रव्य के चाक्षुषप्रत्यक्ष के प्रति चक्षु का संयोगसन्निकर्ष कारण है । द्रव्य में समवेत ( समवायसम्बन्ध से रहने वाले ) गुण-कर्म के चाक्षुषप्रत्यक्ष के प्रति चक्षुःसंयुक्तसमवायसन्निकर्ष कारण है । द्रव्य में समवेत ( गुणादि ) उनमें समवेत ( गुणत्व आदि ) के चाक्षुषप्रत्यक्ष के प्रति चक्षुःसंयुक्तसमवेतसमवायसन्निकर्ष कारण है । इसी प्रकार अन्यत्र भी ( त्वाचादिप्रत्यक्षस्थल में भी ) विशेषरूप से अर्थात् प्रत्येक इन्द्रिय से होनेवाले प्रत्यक्ष का

---

ननु विषयेन्द्रियसंबन्धो व्यापार इत्यसंगतम्, शब्दश्रोत्रसंबन्धस्य समवायस्य नित्यतया तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वाऽसंभवादत आह । व्यापारः सन्निकर्ष इति । द्रव्यग्रहस्तु संयोगादित्यत्र ग्रहपदस्य ज्ञानमात्रार्थकत्वे द्रव्यविषयकानुमित्यादेरिन्द्रियसंयोगाजन्यत्वाद्व्याप्तिरतो ग्रहपदस्य प्रत्यक्षपरत्वं पंचम्या जन्यत्वार्थकत्वं चाह-इन्द्रियसंयोगजन्यमिति । तथाच द्रव्यवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रतीन्द्रियसंयोगः समवायेन कारणमित्यर्थः । एवं द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति इन्द्रियसंयुक्तसमवायः कारणम् । एवमग्रेपीति । द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रतीन्द्रियसंयुक्तसमवेतसमवायः कारणमित्यर्थः । ननु द्रव्यप्रत्यक्षे इन्द्रियसंयोगत्वेन हेतुत्वे त्वक्प्रभासंयोगाच्चाक्षुषापत्तिः, एवमन्धकारे घटचक्षुःसंयोगात्स्पार्शनापत्तिश्चेत्यत आह । वस्तुतस्त्विति । द्रव्यचाक्षुषं प्रतीति । द्रव्यवृत्तिलौकिकविषयतासंबन्धेनेत्यादिः । एवमग्रेपि द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेनेत्यस्य द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेनेत्यस्य चान्वयो बोध्यः ।

परन्तु पृथिवीपरमाणुनीले नीलत्वं, पृथिवीपरमाणौ पृथिवीत्वं च चक्षुषा कथं न गृह्यते, तत्र परंपरयोद्भूतरूपसंबन्धस्य महत्वसंबन्धस्य च सत्वात्। तथाहि—नीलत्वं जातिरेकैव घटनीले परमाणुनीले च वर्तते, तथाच महत्वसंबन्धो घटनीलमादाय वर्तत्वे, उद्भूतरूपसंबन्धस्तूभयमादायैव वर्तते, एवं पृथिवीत्वेपि घटादिकमादाय महत्वसंबन्धो बोध्यः। एवं वायौ तदीय-

अलग-अलग कार्यकारणभाव समझना चाहिये। परन्तु अब विचारणीय यह है कि पृथिवी के परमाणुगत नील में नीलत्व का, एवं पृथ्वी के परमाणु में पृथिवीत्व का चाक्षुषप्रत्यक्ष क्यों नहीं होता है—(क्योंकि जिस वस्तु में उद्भूतरूप—तथा महत्त्व रहता है उस वस्तु के साथ चक्षुःसंयोग होने पर उसका चाक्षुषप्रत्यक्ष अवश्य होता है) सो वहाँ (नीलत्व में तथा पृथिवीत्व में) परम्परया (स्वाश्रयसमवेतसमवायसम्बन्ध से) उद्भूतरूप तथा महत्त्व विद्यमान है। तथाहि—नीलत्वजाति तो एक ही है—सो वह घट के नीलरूप में भी है—और परमाणु के नीलरूप में भी समवायसम्बन्ध से वर्तमान है—जैसे (महत्त्व घट में समवायसम्बन्ध से है—और घट का प्रत्यक्ष होता है—ऐसे ही महत्त्व स्वाश्रयसमवेतसमवायसम्बन्ध से नीलत्व में भी है—स्वपद से महत्त्व—उसका आश्रय घट—घट में समवेत नीलरूप—उस नील में समवाय सम्बन्ध से नीलत्व है—इस सम्बन्ध से महत्त्व नीलत्व में है। सो विषयतासम्बन्ध से नीलत्व-जाति में चाक्षुषप्रत्यक्ष है—और उस नीलत्वजाति में स्वाश्रयसमवेतसमवायसम्बन्ध से महत्त्व भी है अतः परमाणुगतनील में भी नीलत्वजाति का प्रत्यक्ष होना चाहिये। इस प्रकार महत्त्व का सम्बन्ध घट के नीलरूप को लेकर नीलत्व के साथ है—और उद्भूतरूप का सम्बन्ध नीलत्वजाति में उभय (घटनील-तथा परमाणुनील) इन दोनों को लेकर है। (उसमें घटनील को लेकर उद्भूतरूप का सम्बन्ध नीलत्व में महत्त्व की तरह पूर्ववत् समझ लेना—और परमाणुनील को लेकर इस प्रकार है कि—स्वपद से उद्भूतरूप—उसका आश्रय परमाणु—उसमें समवेत नीलरूप—उसमें समवायसम्बन्ध से नीलत्वजाति है—सो इस प्रकार परमाणु नील को लेकर उद्भूतरूप का भी सम्बन्ध नीलत्व में स्वाश्रयसमवेतसमवायसम्बन्ध से है। इसी प्रकार पृथिवीपरमाणु में जो पृथिवीत्वजाति है—उस पृथिवीत्व में भी घट आदि को लेकर महत्त्वसम्बन्ध जानना चाहिये—(अर्थात् पृथिवीपरमाणु में जो पृथिवीत्वजाति है वही घट में भी है—सो घटगत पृथिवीत्व में महत्त्व-और उद्भूतरूप स्वाश्रयसमवायसम्बन्ध से है—स्वपद से महत्व तथा उद्भूतरूप—इन दोनों का आश्रय घट-घट में समवायसम्बन्ध से पृथिवीत्व है-इस सम्बन्ध से महत्व तथा उद्भूतरूप घटादि को लेकर पृथिवीत्व में है—और वही पृथिवीत्व जाति पृथिवीपरमाणु में है-जब कि घट में उस पृथिवीत्वजाति का प्रत्यक्ष होता है तो पृथिवी-परमाणु में उस पृथिवीत्वजाति का प्रत्यक्ष क्यों नहीं होता है।

---

ननु विशिष्यैव कार्यकारणभावे आत्मप्रत्यक्षानुरोधेन मनःसंयोगस्य, ज्ञानादि-प्रत्यक्षानुरोधेन मनःसंयुक्तसमवायस्य प्रत्यासत्तित्वेपि चक्षुरादिसंयोग-तत्संयुक्तसम-वाययोः प्रत्यासत्तित्वे प्रमाणाभावः, चक्षुरादिसंयुक्तसमवेतसमवायेनैव त्र्यणुकादेश्चा-

स्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात्। तस्मादुद्भूतरूपावच्छिन्नमहत्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतप्रत्यक्षे, तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतप्रत्यक्षे कारणत्वं वाच्यम्। इत्थं च परमाणुनीलादौ न नीलत्वादिग्रहः, परमाणौ चक्षुःसंयोगस्य महत्वावच्छिन्नत्वा-

एवं वायु में तथा वायु के स्पर्श में सत्ता का चाक्षुषप्रत्यक्ष क्यों नहीं होता है। क्योंकि सत्ता में भी स्वाश्रयसमवायसम्बन्ध से घटसत्ता को लेकर महत्व—एवं उद्भूतरूप है-स्वपद से महत्परिमाण तथा वायु उद्भूतरूप—इन दोनों का आश्रय घट—घट में समवायसम्बन्ध से सत्ता है—इस सम्बन्ध से महत्परिमाण तथा उद्भूतरूप ये दोनों सत्ता में हैं वही सत्ता वायु में तथा वायु के स्पर्श में भी है अतः जब कि घटवृत्ति सत्ता का चाक्षुषप्रत्यक्ष होता है तो वायु तथा वायुस्पर्शवृत्तिसत्ता का भी चाक्षुषप्रत्यक्ष क्यों नहीं होता है। इन सब प्रश्नों का उत्तर करते हैं कि द्रव्य में जो समवेत उनके चाक्षुषप्रत्यक्ष के प्रति—महत्त्वावच्छिन्न – उद्भूतरूपावच्छिन्न- जो चक्षुःसंयुक्त – तादृशचक्षुःसंयुक्तसमवायसन्निकर्ष कारण है। और द्रव्य में जो समवेत—उसमें जो समवेत—उनके चाक्षुषप्रत्यक्ष के प्रति महत्त्वावच्छिन्न—उद्भूतरूपावच्छिन्न जो चक्षुःसंयुक्त तादृशचक्षुःसंयुक्तसमवेतसमवायसन्निकर्ष कारण है। इस प्रकार परमाणुनील में नीलत्व के, पृथिवीपरमाणु में पृथिवीत्व के प्रत्यक्ष की आपत्ति नहीं लग सकती है—क्यों चक्षुःसंयुक्त जो परमाणु उसमें महत्त्व नहीं है—अतः महत्त्वावच्छिन्न जो चक्षुःसंयुक्त—तादृशचक्षुःसंयुक्तसमवेतसमवायसन्निकर्षरूप चाक्षुषप्रत्यक्ष का कारण परमाणुनीलगत नीलत्व में नहीं है अतः परमाणुनील में नीलत्व का चाक्षुषप्रत्यक्ष नहीं होता है। ऐसे ही पृथिवीपरमाणुगतपृथिवीत्व में भी महत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायात्मकसन्निकर्षरूप कारण नहीं

---

क्षुषाद्युपपत्तेरत आह। परन्त्विति। परंपरया—स्वाश्रयसमवेतसमवायेन। स्वं-उद्भूतरूपं तदाश्रयः परमाणुस्तत्समेवतसमवायस्य नीलत्वे सत्वात्। एवं स्वपदमाह्यं महत्वं तदाश्रयघटसमवेतसमवायरूपसंबन्धोपि बोध्यः। उभयमादायेति। घटमादाय परमाणुं चादायेत्यर्थः। महत्वसंबन्ध इति। स्वाश्रयसमवायरूप इत्यर्थः। प्रत्यक्षं स्यादिति। घटमादाय उद्भूतरूपसंबन्धस्य "स्वाश्रयसमवायस्य स्वाश्रयसमवेतसमवायस्य" च सत्वात्। महत्वसंबन्धस्य तूभयभावादेव सत्वादिति भावः। उद्भूतरूपावच्छिन्नेति महत्वावच्छिन्नेति च चक्षुःसंयुक्तपदार्थैकदेशे संयोगेऽन्वेति। तथा च महत्वावच्छिन्नचक्षुः संयुक्तसमेवतसमवायस्य प्रसरेणाद्यभावाच्चाक्षुषानुपपत्त्यचिरतः संयोगस्य प्रत्यासत्तित्वमावश्यकमिति। एवं च महत्वोद्भूतरूपयोर्न स्वातन्त्र्येण कारणत्वं किन्तु सन्निकर्षघटकतयेति ध्येयम्। संयुक्तसमवेतसमवायेन संयुक्तसमवायोपि नान्यथासिद्ध इत्याह। द्रव्यसमवेतचाक्षुषे इति। तादृशेति। महत्वावच्छिन्नेत्यर्थः। तत्रा बाध्वाशौ। तथा च महत्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्यापि प्रत्यासत्तित्वमावश्यकमिति भावः।

भावात् । एवं वाय्वादौ न सत्तादिचाक्षुषं, तत्र चक्षुःसंयोगस्योद्भूतरूपावच्छिन्नत्वाभावात् । एवं यत्र घटस्य पृष्ठावच्छेदेनाऽऽलोकसंयोगः, चक्षुःसंयोगस्त्वग्रावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम् ।

है क्योंकि चक्षुःसंयुक्त जो परमाणु उसमें महत्त्व नहीं है—अतः पृथिवीपरमाणुं नीलगतनीलत्व का प्रत्यक्ष नहीं होता है । ऐसे ही वायु में तथा वायु के स्पर्श में सत्ताजाति का प्रत्यक्ष नहीं होता है । क्योंकि वायु में चक्षुःसंयोग उद्भूतरूपावच्छिन्न नहीं है अर्थात् चक्षुःसंयुक्त जो वायु वह उद्भूतरूपावच्छिन्न नहीं है । एवं जहाँ ( अन्धकार में घट रक्खा हुवा है ) वहाँ घट के मध्य ( उदर ) प्रदेश में आलोक ( प्रकाश ) का संयोग है—और चक्षुःसंयोग घट के बाहरी हिस्से में है—वहाँ पर घट का प्रत्यक्ष नहीं होता है—( यह अन्वय व्यभिचार हुवा—क्योंकि कारणसामग्री सब मौजूद है परन्तु कार्य ( प्रत्यक्ष ) नहीं हो रहा है अतः ) आलोकसंयोगावच्छिन्नत्व चक्षुःसंयोग में विशेषण दे देना चाहिये । ( यहाँ अवच्छिन्नत्व का विशिष्ट=युक्त—यह अर्थ जानना ) [ सो जहाँ महत्त्वावच्छिन्न-उद्भूतरूपावच्छिन्न-आलोकसंयोगावच्छिन्न-चक्षुःसंयोग होगा उसी स्थल में द्रव्य का प्रत्यक्ष होगा—अर्थात् घट के जिस हिस्से में चक्षुःसंयोग हो उसी हिस्से में आलोकसंयोग भी होना चाहिये । प्रकृत में घट के बाहरी हिस्से में चक्षुःसंयोग रहते हुवे भी आलोकसंयोग वहाँ नहीं है, अतः एकदेशावच्छेदेन कारणसामग्री के न होने से कार्य ( प्रत्यक्ष ) भी नहीं होता है इसलिये व्यभिचार नहीं हुआ । ]

---

अथ चक्षुः संयुक्तसमवाय-द्रव्यसमवेतचाक्षुषयोः केन रूपेण कार्यकारणभाव इति चेदत्र केचित्—लौकिकविषयतासंबन्धेन तत्पुरुषीयद्रव्यसमवेतचाक्षुषं प्रति स्वरूपसंबन्धेन तत्पुरुषीयचक्षुः संयुक्तसमवायः कारणम् । न च द्रव्यसमवेतचाक्षुषस्य समूहालंबनरूपस्य "रूपवान् घटः, रूपे रूपत्वं च" गुणकर्मवृत्तिजात्यादावपि सत्त्वाद् व्यभिचार इति वाच्यम् । द्रव्यसमवेतत्वविशिष्टचाक्षुषत्वस्य कार्यतावच्छेदकत्वात्, विशिष्टस्य द्रव्यसमवेते एवोत्पादात् । वस्तुतस्तु चाक्षुषत्वमेव कार्यतावच्छेदकम्, द्रव्यसमवेतत्व विशिष्टस्य लौकिकविषयत्वस्य कार्यतावच्छेदकसंबन्धत्वाच्च न क्वापि व्यभिचारः । न च तथापि परमाण्वादिवृत्तिरूपादेर्गगनादिवृत्त्येकत्वादेश्च तादृशसन्निकर्षेण चाक्षुषापत्तिर्दुर्वारैवेति वाच्यम् । द्रव्यसमवेतत्वविशिष्टलौकिकविषयतासंबन्धेन चाक्षुषं प्रति स्वाश्रयसमवेतत्वसंबन्धेन महत्त्वस्य, द्रव्यसमवेतत्वविशिष्टलौकिकविषयतासंबन्धेन चाक्षुषोत्पत्तौ स्वाश्रयसमवेतसमवेतत्वसंबन्धेनोद्भूतरूपस्य च हेतुत्वात् । महत्त्वस्य कार्यतावच्छेदकसंबन्धकोटौ "द्रव्यसमवेते" द्रव्यान्यत्वमपि विशेषणीयम् तेन त्रसरेणुचाक्षुषे न व्यभिचारः । न च तथापि परमाणौ गगने च सत्ताद्रव्यत्वयोश्चाक्षुषापत्तिः घटादिकमादायैव स्वाश्रयसमवेतत्व संबन्धेन महत्त्वोद्भूतरूपयोः सत्वादिति वाच्यम् । इष्टत्वात् । परमाणुगगनादिचक्षुः संयोगदशायां महत्त्वोद्भूतरूपवद्द्रव्यान्तरचक्षुः संयोगस्याप्यावश्यकतया, तदानीं सत्ताद्रव्यत्वयो

श्चाक्षुषत्वादस्य सर्वसिद्धत्वात्। अत एव परमाणुगगनादिघटितसन्निकर्षजन्यत्वाभावस्य शपथनिर्णेयत्वादित्युक्तम्। न चैवं रूपेण कार्यकारणभावे घटादौ चक्षुःसंयोगविगमेपि तद्दृश्तिगुणादेश्चाक्षुषापत्तिः यदा कदा चिच्चक्षुः संयुक्ततयैव चक्षुः संयुक्तसमवायसंभवः, कारणतावच्छेदकपर्यवसत्त्वस्य कार्योत्पत्तौ अनपेक्षितत्वादिति वाच्यम्। अत्र कारणतावच्छेदकविशिष्टस्यैव कारणस्य पूर्वसत्तायाः अपेक्षितत्वात्। वस्तुतस्तु तत्पुरुषीयचक्षुः संयोगत्वेनैव कारणत्वम्, स्वाश्रयसमवेतत्वं च कारणतावच्छेदकसंबन्धः, एवं च लाघवमपीत्याहुः। तच्चिन्त्यम्। स्वाश्रयसमवेतत्वसंबन्धेन महत्त्वोद्भूतरूपयोः पृथक् कार्यकारणभावद्वयकल्पने द्रव्यस्याऽतिरिक्तप्रतिबन्धकत्वकल्पने च गौरवात्।

साम्प्रदायिकास्तु तत्पुरुषीयचक्षुःसंयुक्तमहदुद्भूतरूपवत्समवायत्वेन महदुद्भूतरूपवत्स्याश्रयसमवेतत्वसंबन्धेन तत्पुरुषीयचक्षुःसंयोगत्वेनैव कारणता तत्पुरुषीयचाक्षुषत्वेन कार्यता, महत्समवेतत्वविशिष्टलौकिकविषयत्वं च कार्यतावच्छेदकसंबन्धः। त्रसरेणुचाक्षुषे व्यभिचारवारणाय लघुतरमपि द्रव्यसमवेतत्वमपहाय महत्समवेतत्वस्य प्रवेशः। न च यत्र चक्षुःसंयुक्तकपाले कपाले चक्षुःसंयोगोत्पत्तिकाले वा घटोत्पत्तिस्तत्र घटोत्पत्तिद्वितीयक्षणे एव तद्घटे महत्समवेतत्वविशिष्टलौकिकविषयतासंबन्धेन चाक्षुषापत्तिः, चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवायलक्षणस्य सन्निकर्षस्य घटे पूर्वक्षणे सत्वात्, इष्टापत्तौ च द्रव्यचाक्षुषं प्रति चक्षुःसंयोगोद्भूतरूपादीनां कारणत्वस्य व्यभिचारप्रसंगादिति वाच्यम। चक्षुःसंयोगस्यातीन्द्रियतया कपाले चक्षुःसंयोगसत्वकाले घटोत्पत्तौ मानाभावात्। न चैवमेतत्कपाले घटो भविष्यतीति कपालवृत्तितया प्रागभावस्य लौकिकप्रत्यक्षानुपपत्तिः, घटोत्पत्तिक्षणे एव घटप्रागभावलौकिकप्रत्यक्षस्य प्राचीनैरुपगमात्, तदानीं च त्वया कपाले चक्षुःसंयोगानभ्युपगमादिति वाच्यम्। सन्निकर्षस्य कार्यसहवृत्तित्वेनाऽहेतुतया सर्वत्र विनश्यदवस्थचक्षुःसंयोगेनैव घटाद्युत्पत्तिक्षणे तत्प्रागभावप्रत्यक्षसंभवात्। प्रागभावे तत्प्रत्यक्षे वा मानाभावाच्चेत्याहुः।

तच्चिन्त्यम्। अनन्तमहत्वानां कार्यतावच्छेदकसंबन्धघटकतया महागौरवात्।

अन्ये तु चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवायस्य महत्समवेतत्वविशिष्टलौकिकविषयत्वं न कार्यतावच्छेदकसंबन्धः, किन्तु द्रव्यान्यद्रव्यसमवेतत्वविशिष्टलौकिकविषयत्वम्। द्रव्यान्यत्वप्रवेशादेव न त्रसरेणुप्रत्यक्षे व्यभिचारः। नचैवं घटादौ द्रव्येपि तादृशलौकिकविषयतया चाक्षुषापत्तिः, चक्षुःसंयुक्तमहदुद्भूतरूपाणां त्रयाणां तत्समवायस्य तत्राप्यविशेषादिति वाच्यम्। द्रव्यान्यत्वविशिष्टलौकिकविषयतासंबन्धेन प्रत्यक्षोत्पत्तौ तादात्म्यसंबन्धेन द्रव्यस्यापि प्रतिबन्धकत्वात्। प्रागुक्तप्राचीनमतेपि तादृशप्रतिबध्यप्रतिबन्धकभावस्यावश्यकत्वात्। महत्वोद्भूतरूपयोः पृथक्कार्यकारणभावकल्पनं च तस्याधिकम्। अतएव कपाले चक्षुःसंयोगसत्वदशायां घटोत्पत्तावपि न क्षतिः, द्रव्यान्यत्वविशिष्टलौकिकविषयतासंबन्धेन

प्रत्यक्षोत्पत्तौ तादात्म्येन द्रव्यस्य प्रतिबन्धकत्वात्। अत्र चातिरिक्तप्रतिबध्यप्रतिबन्धकभावस्य फलमुखत्वात्। न च प्राचीनमतेऽनन्तमहत्त्ववदत्रापि द्रव्यान्यत्वस्य निखिलद्रव्यघटिततया कार्यतावच्छेदकसंबन्धे गौरवं तुल्यमेवेति वाच्यम्। अत्र द्रव्यान्यत्वस्य स्वावच्छिन्नप्रतियोगित्वसंबन्धेन द्रव्यत्ववद्भेदरूपतया द्रव्याघटितत्वादित्याहुः।

स्वतन्त्रास्तु द्रव्यान्यत्वमपि न प्रवेशनीयम्, गौरवात्, अतिरिक्तप्रतिबध्यप्रतिबन्धकभावकल्पनाप्रसंगाच्च। किन्तु द्रव्यत्वविशिष्टलौकिकविषयतामात्रं चक्षुःसंयुक्तमहत्त्वोद्भूतरूपवत्समवायस्य कार्यतावच्छेदसम्बन्धः। न चैवं त्रसरणौ व्यभिचार इति वाच्यम्। प्रतियोगित्वानुयोगित्वसाधारणविशेषणताविशेषस्यैव कारणतावच्छेदकसंबन्धतया तत्रापि चक्षुःसंयुक्तमहदुद्भूतरूपवान् त्रसरेणुरेव तत्रिष्ठरूपादिसमवायस्यैवानुयोगितासंबन्धेन सत्वात्। न चैवं द्व्यणुकेपि द्रव्यसमवेतत्वविशिष्टलौकिकविषयतासंबन्धेन चाक्षुषापत्तिः, चक्षुः संयुक्तमहदुद्भूतरूपवान् त्रसरेणुस्तत्प्रतियोगिकस्यैव "समवायस्या" नुयोगितासंबन्धेन तत्र सत्वादिति वाच्यम्। चक्षुःसंयुक्तमहदुद्भूतरूपवदनुयोगिकत्वविशिष्टसमवायस्यैव प्रतियोगित्वानुयोगित्वसाधारणविशेषणताविशेषसामान्येन सन्निकर्षत्वात्। तथाच कारणतावच्छेदकविशिष्टस्य पूर्वं सत्तायाः कार्योत्पत्त्यप्रयोजकत्वलये तत्पुरुषीयसंयोगत्वेनैव कारणतावच्छेदकीभूतमहदुद्भूतरूपाश्रयानुयोगिकत्वविशिष्टसमवायाश्रयत्वं च तदवच्छेदकसंबन्धः प्रतियोगित्वानुयोगित्वसाधारणविशेषणताविशेष्यसामान्येनैवाश्रयत्वस्य संबन्धघटकतया त्रसरेणौ न व्यभिचारः। शेषं संप्रदायमतवदवसेयमिति माहुः।

ननु द्रव्यलौकिकचाक्षुषं प्रति चक्षुःसन्निकर्षः संयोगएवास्तु—किं द्रव्यान्यद्रव्यसमवेत-द्रव्यान्यद्रव्यसमवेतसमवेतयोर्लौकिकचाक्षुषं प्रति चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवाय-चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवेतसमवायोः सन्निकर्षत्वेन। न च विनिगमनाविरहः। द्रव्यचाक्षुषानुरोधेन चक्षुःसंयोगस्य सन्निकर्षत्वावश्यकत्वात्। लाघवाच्च। न चैवं निमीलितनयनस्यापि गुणादितत्समवेतजातेश्च चाक्षुषापत्तिः, चक्षुःसंयुक्तपरमाण्वादिनित्यरूपादेरपि चाक्षुषापत्तिश्चेति वाच्यम्। द्रव्याऽविषयकगुणादिचाक्षुषस्यालीकतया द्रव्यचाक्षुषसामग्रीविरहादेव तदापत्तिविरहादिति चेन्न।

चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवायस्याऽसन्निकर्षत्वे चक्षुःसंयुक्तघटादेश्चाक्षुषदशायां घटादिद्रव्यविषयकचाक्षुषस्यैव तद्वृत्तिगुणकर्मजातिष्विवाऽसन्निकृष्टपटादिवृत्तिगुणकर्मजातिषु, परमाण्वादिवृत्तिगुणकर्मजातिषु च लौकिकविषयतासंबन्धेनोत्पादापत्तेर्दुर्वारत्वात्। न चाश्रयाविषयकगुणादिचाक्षुषस्यालीकतया स्वाश्रयीभूतस्याऽसन्निकृष्टपटादेश्चाक्षुषसामग्रीविरहादेव तद्वृत्तिगुणादेर्न चाक्षुषमिति वाच्यम्। तावता पटवृत्तिगुणादिचाक्षुषत्वेनापत्यसंभवेपि तादृशपटवृत्तिगुणादौ लौकिकविषयतया चाक्षुषसामान्यापत्तेर्दुर्वारत्वात्। पटाविषयकस्यापि चाक्षुषस्य सत्वात्। एवं चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवेतसमवायस्याऽसन्निकर्षत्वे चक्षुःसं-

कघटादिचाक्षुषोत्पत्तिदशायां तादृशघटादिविषयकचाक्षुषस्येव गुणादितद्वृत्तिजातिविषाऽसन्निकृष्टद्रव्यवृत्तिगुणादिमात्रसमवेतजातौ परमाण्वादिवृत्तिगुणमात्रसमवेतजातौ च लौकिकविषयतासंबन्धेनोत्पादप्रसंगस्य दुर्वारत्वादिति सिद्धान्तानुयायिनः।

इदमत्रावधेयम्। जातिलौकिकचाक्षुषं प्रति स्वविषयसमवेतत्वसंबन्धेनाऽऽश्रयलौकिकचाक्षुषमेव हेतु र्लाघवात्, न तु द्रव्यान्यद्रव्यसमवेत–द्रव्यान्यद्रव्यसमवेतसमवेतयोर्लौकिकचाक्षुषं प्रति चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवाय—चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवेतसमवाययोः सन्निकर्षयोर्हेतुत्वम्। तत्र तयोर्हेतुत्वे तद्बलेन द्रव्येपि द्रव्यान्यद्रव्यसमवेतविषयकचाक्षुषापत्तिवारणाय द्रव्यान्यद्रव्यविषयकप्रत्यक्षं प्रति द्रव्यभेदस्य, द्रव्यतन्मात्रवृत्तिजातिष्वपि द्रव्यान्यद्रव्यसमवेतविषयकचाक्षुषापत्तिवारणाय द्रव्यान्यद्रव्यसमवेतसमवेतविषयकप्रत्यक्षं प्रति समवेतत्वसंबन्धेन द्रव्यान्यस्य च हेतुत्वावश्यकतया गुरुतरकार्यकारणभावचतुष्टयकल्पनापत्तेः। गुरुत्वस्थितिस्थापकत्व-रसत्व-गन्धत्व-स्पर्शत्वानां तद्व्याप्यजातीनां चाक्षुषवारणाय समवेतत्वविशिष्टलौकिकविषयतासंबन्धेन चाक्षुषोत्पत्तिं प्रति तादात्म्यसंबन्धेन गुरुत्वान्य समवेतत्वादिना समवेतसम्बन्धेनगुरुत्वादिना वा कार्यकारणभावपंचकान्तरकल्पनापत्तेश्च। जातिं चाक्षुषं प्रति स्वाश्रयचाक्षुषस्य हेतुत्वे चाश्रयचाक्षुषाभावादेव न तेषां चाक्षुषापत्तिः। केवलव्यक्तिविषयकनिर्विकल्पकानन्तरमेव जातिनिर्विकल्पकं ततो जातिविशिष्टप्रत्यक्षमित्यभ्युपगमाच्च, नाश्रयचाक्षुषस्य जातिचाक्षुषे व्यभिचारः। न तथापि चक्षुःसंयुक्तघटादेश्चाक्षुषोत्पत्तिदशायामसन्निकृष्टद्रव्यवृत्तिगुणकर्मस्वपि लौकिकविषयतासंबन्धेन चाक्षुषोत्पादवारणाय चक्षुः। संयुक्तमहदुद्भूतरूपवत्समवायलक्षणस्य सन्निकर्षस्य कारणत्वमावश्यकम्, जातिचाक्षुषं प्रत्येवाश्रयचाक्षुषस्य हेतुत्वादिति वाच्यम्। व्यासज्यवृत्तिगुणचाक्षुषं प्रति स्वाश्रयसमवेतत्वसंबन्धेन चक्षुःसंयोगाभावस्य प्रतिबन्धकत्वमावश्यकम् तस्य हि प्रतिबध्यतावच्छेदकं न गुणचाक्षुषत्वम्, व्यासज्यवृत्तिगुणचाक्षुषत्वं वा, किन्तु गुणकर्मोभयसाधारणं द्रव्यान्यसत्त्वाक्षुषत्वमेव। यावदाश्रयचक्षुःसंयोगं विनापि द्रव्यस्य सत्तादिजातेश्चाक्षुषोदयात् तद्वद्भिर्भावः। द्रव्यान्यसत्वं च लाघवाच्चक्षुःसंयोगाभावप्रतिबध्यतावच्छेदकतया सिद्धो गुणकर्ममात्रवृत्तिजातिविशेषः। द्रव्यान्यसत्प्रत्यक्षं प्रति तादात्म्यसंबन्धेन द्रव्यान्यसत्वेनापि कारणतया निरुक्तप्रतिबन्धकाभावस्याऽविशिष्टत्वेपि द्रव्यजात्योरनीतानागतगुणकर्मणोर्वा न द्रव्यान्यसच्चाक्षुषापत्तिः। गुणचाक्षुषत्वादेः प्रतिबध्यतावच्छेदकत्वेपि निरुक्तप्रतिबन्धकाभावबलेन द्रव्यादौ गुणचाक्षुषाद्यापत्तिवारणाय गुणचाक्षुषादिकं प्रति गुणत्वादिना कारणत्वावश्यकत्वेन तुल्यत्वात्। न च द्रव्यान्यसच्चाक्षुषत्वस्य प्रतिबध्यतावच्छेदकत्वे यावदाश्रय चक्षुःसंयोगविरहदशायां संयोगद्वित्वादौ द्रव्यान्यसच्चाक्षुषोत्पत्त्यसंभवेपि चाक्षुषसामान्यापत्तिर्दुर्वारा, द्रव्यान्यसच्चाक्षुषातिरिक्तस्य जातिचाक्षुषस्यैव प्रसिद्धत्वादिति वाच्यम्। जातिप्रत्यक्षं प्रति जातित्वेनापि कारणत्वात्। गुणादिचाक्षुषत्वस्य प्रतिबध्यतावच्छेदकत्वेपि यावदाश्रयचक्षुःसंयो-

गविरहदशायां संयोगद्वित्वादौ चाक्षुषसामान्यापत्तिवारणाय गुणादिभिन्नविषयकचाक्षुषं प्रति गुणादिभेदस्य कारणत्वावश्यकतया तुल्यत्वात्। ननु तथापि चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवायलक्षणसन्निकर्षस्याहेतुत्वे चक्षुःसंयुक्तघटादेश्चाक्षुषोत्पत्तिदशायां चक्षुरसंयुक्तस्य चक्षुःसंयुक्तस्य वा परमाण्वादेः चक्षुः संयुक्तपिशाचादेश्च गुणकर्मणोरपि चाक्षुषापत्तिः, स्वाश्रयसमवेतत्वसंबन्धेन चक्षुःसंयोगाभावस्य प्रतिबन्धकस्याभावादिति वाच्यम्। द्रव्यान्यसचाक्षुषं प्रति महदुद्भूतरूपवत्समवायत्वेनापि कारणत्वात्। न चैवं किं लाघवम्, द्रव्यान्यद्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवायलक्षणसन्निकर्षस्य हेतुत्वाकल्पनेपि जातिचाक्षुषं प्रति स्वाश्रयचाक्षुषहेतुत्वस्य तस्यानाभिषिक्तस्य कल्पनात्, तथा च किं सिद्धान्तपरित्यागेनेति वाच्यम्। सिद्धान्तिनये कारणतावच्छेदकगौरवात्, उक्तयुक्त्या द्रव्यान्यविषयकप्रत्यक्षं प्रति द्रव्य भेदस्य द्रव्यान्यद्रव्यसमवेतसमवेतविषयकं प्रति समवेतत्वसंबन्धेन द्रव्यान्यस्य, समवेतत्वविशिष्टलौकिकविषयतासंबन्धेन चाक्षुषोत्पत्तिं प्रति समवेतत्वसंबन्धेन गुरुत्वान्यादीनां पञ्चानां च कारणत्वकल्पनावश्यकतया कार्यकारणभावसमकबुद्धिप्रसंगाच्च। वस्तुतस्तु द्रव्यान्यसचाक्षुषं प्रति महदुद्भूतरूपवत्समवायत्वेनापि कारणत्वं नोपेयम्। किन्तु जातिचाक्षुषं प्रति स्वविषयसमवेतत्वसंबन्धेन यावदाश्रयचाक्षुषस्य कारणत्वम्, तस्यैव कार्यतावच्छेदकं न जातिचाक्षुषत्वम्, किन्तु द्रव्यान्यद्रव्यसमवेतचाक्षुषत्वमतः परमाण्वादिसमवेतगुणकर्मणोर्न चाक्षुषापत्तिः, जातिचाक्षुषवद्रूपादीनां कर्मणां च चाक्षुषमपि नाश्रयचाक्षुषं विना। यद्वा व्यासज्यवृत्तिगुणचाक्षुषं प्रति स्वाश्रयसमवेतत्वसंबन्धेनाऽऽश्रयचाक्षुषाभावस्य प्रतिबन्धकत्वमावश्यकम्, तस्यैव प्रतिबध्यतावच्छेदकं न व्यासज्यवृत्तिगुणचाक्षुषत्वं-अपि तु सामान्यतो द्रव्यान्यचाक्षुषत्वमेवाऽतो न परमाण्वादिसमवेतगुणकर्मणोश्चाक्षुषापत्तिरिति विभावनीयम्।

आलोकसंयोगावच्छिन्नत्वमिति। आलोकत्वं च तेजस्त्वव्याप्यो जातिविशेषः। चक्षुः संयोगे इति। एतेन सामानाधिकरण्यसंबन्धेन संयोगे उद्भूतरूपावच्छिन्नत्व-महत्वावच्छिन्नत्वयोर्निवेशापेक्षया संयुक्ते एव समवायेन उद्भूतरूपावच्छिन्नत्वस्य महत्वावच्छिन्नत्वस्य च निवेशे लाघवमित्यपि निरस्तम्। विभिन्नावच्छेदेनाऽलोकचक्षुः संयोगाभ्यां मूलोक्तरीत्या चक्षुः संयोगे आलोकनिष्ठावच्छेदकतानिरूपकत्वस्य विवक्षणीयतया तत्रैव महत्वोद्भूतरूपवैशिष्ट्यं निवेशितम्, संयुक्ते विशेषणद्वयमिति स्वीकारे अर्धजरतीयन्यायापत्तेः।

यद्यपि द्रव्यचाक्षुषं प्रति नालोकसंयोगत्वेन हेतुतासंभवः, विनाप्यालोकसंयोगं विडालादेस्तमसि द्रव्यग्रहात्। न च विडालचक्षुरवच्छेदेनालोकान्तरं तत्रास्तीति वाच्यम्। तथा सति विडालेनेव जनान्तरस्यापि तादृशालोकसंयोगदशायां तमःस्थितघटादेर्ग्रहणप्रसंगात्। तमःसाक्षात्कारानुरोधेन पुरुषान्तरचक्षुः संयोगस्यापि तदानीं सत्वस्य प्रागावेदितत्वात्। नापि मानुषीयद्रव्यचाक्षुषत्वावच्छिन्नं प्रति आलोकसंयोगत्वेन हेतुत्वम्, विनाप्यालोकसंयोगं साञ्जनचक्षुषां पुंसां तमसि

षात्तुषोत्पादेन व्यभिचारात्। तथापि येषां कदापि अंजनसंयोगान्न चाक्षुषं, तत्पुरुषीयद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येवाऽऽलोकसंयोगत्वेन हेतुत्वम्, यस्य पुरुषस्य सत्यञ्जनसंयोगे तमस्यपि द्रव्यचाक्षुषम्, तत्पुरुषीयद्रव्यचाक्षुषत्वावच्छिन्नं प्रति तत्पुरुषीयाञ्जनसंयोगाभावविशिष्टाऽऽलोकसंयोगाभावत्वेन प्रतिबन्धकत्वात्, तदवच्छिन्नाभावो हेतुः, स च विशिष्टाभावो विनाप्यालोकसंयोगमञ्जनसंयोगदशायां केवलालोकसंयोगदशायां चाऽस्तीत्यदोषः। विडालादिचाक्षुषत्वावच्छिन्नं प्रति तु विडालादिचक्षुः संयोगत्वेनैव हेतुत्वम्, नहि तत्राऽऽलोकाद्यपेक्षेति। अत्रेदं चिन्त्यते= चक्षुः संयोगस्याऽऽलोकसंयोगावच्छिन्नत्वं न तावदालोकसंयोगसमानाधिकरणत्वम्, विभिन्नावच्छेदेन चक्षुरालोकयोः संयोगसत्वेपि भित्यादिचाक्षुषापत्तितादवस्थ्यात्, नापि स्वरूपसंबन्धविशेषो, मानाभावात्। अन्यथा भूतलनिष्ठयोर्घटपटसयोगयोरपि परस्परावच्छेद्यतापातात्। न च द्रव्यचाक्षुषजनकतावच्छेदकतयैव "चक्षुः संयोगस्या' ऽऽलोकसंयोगावच्छिन्नत्वरूपस्वरूपसंबन्धस्य सिद्धिः। कारणतावच्छेदकतया चक्षुः संयोगनिष्ठस्य कस्यचिद्धर्मस्य सिद्धावपि तत्रालोकसंयोगनिरूपितत्वासिद्धेः। न चालोकसंयोगावच्छेदकदेशावच्छिन्नचक्षुः संयोगत्वेन हेतुत्वम्, कारणतावच्छेदकस्य पूर्वसत्वापेक्षणात्, आलोकसंयोगस्यापि हेतुत्वाच्च,आलोकसंयोगावच्छिन्नचक्षुः संयोगत्वेनैव चक्षुः संयोगावच्छिन्नाऽऽलोकसंयोगत्वेनापि हेतुत्वसंभवात्" न तद्विगमे प्रत्यक्षमिति वाच्यम्। यत्रैकस्यैव पटस्यार्धं तमसि अर्धं चालोके तदवच्छेदेन चक्षुःसंयोगेपि तत्पटप्रत्यक्षापत्तेः। आलोकसंयोगावच्छेदकीभूता या दीर्घतन्तुव्यक्तिस्तदवच्छेदेन तमसि तत्पटचक्षुः संयोगसत्वात्, न हि तत्तन्त्ववच्छेदेन तत्र पटे न चक्षुः संयोगो न वाऽऽलोकसंयोग इति शक्यते वक्तुम्, मानाभावात्।

तस्माद्विलक्षणचक्षुः संयोगत्वेनैव द्रव्यचाक्षुषं प्रति हेतुत्वम्। कारणतावच्छेदकतयैव तादृशवैलक्षण्यसिद्धेः, तच्च चाक्षुषोपधायकचक्षुः संयोगमात्रवृत्ति इति नातिप्रसंगः। न च यत्र विनश्यदवस्थालोकसयोगदशायां चक्षुः संयोगोत्पत्त्याऽऽलोकसंयोगनाशदशायां घटस्य प्रत्यक्षं तत्रोत्तरकालमालोकविगमेपि तत्र प्रत्यक्षापत्तेः, तादृशचक्षुःसयोगस्यापि चाक्षुषप्रयोजकवैजात्यवत्वादिति वाच्यम्। क्षणमात्रमिष्टत्वात्।

यत्तु तत्पुरुषीयद्रव्यचाक्षुषं प्रति तत्पुरुषीयविलक्षणचक्षुः संयोगत्वेनैव विलक्षणाऽऽलोकसंयोगत्वेनापि हेतुत्वम्, विनिगमकाभावादिति। तन्न। किंचिदवयवावच्छेदेनाऽऽलोकसंयुक्तस्यैकेनेवापरेणापि प्रत्यक्षापत्त्या पुरुषभेदेनाऽऽलोकसंयोगनिष्ठानामनन्तवैजात्यानां कल्पनागौरवस्यैव विनिगमकत्वात्। नन्वेवं द्रव्यचाक्षुषं प्रति उद्भूतरूपस्य हेतुत्वं न स्यात्, पिशाचादौ विलक्षणचक्षुः संयोगविरहादेव न चाक्षुषमित्यस्यापि वक्तुं शक्यत्वात्। न च तस्य विलक्षणसंयोगत्वेनैव हेतुत्वम्, न तु चक्षुःप्रतियोगिकविलक्षणसंयोगत्वेन, गौरवात्, तथा च चक्षुषोपि चाक्षुषापत्तिः, तत्रापि विलक्षणसंयोगसत्वादिति वाच्यम्। हेत्वन्तरकल्पनामपेक्ष्य लाघवेन कृप्तकारणाभावस्य चक्षुः संयोगस्यैव चक्षुः प्रतियोगिकविलक्षणसंयोगत्वेनैव हेतुत्वौचित्यादिति चेन्न।

एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणम्। द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवायः। द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः। अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वं च पूर्ववदेव बोध्यम्।

एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः, गन्धसमवेतस्य घ्राणजप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः कारणम्।

रासनप्रत्यक्षे रसनासंयुक्तसमवायः, रससमवेतरासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणम्।

एवं द्रव्य का जहाँ त्वगिन्द्रिय के द्वारा स्पार्शन प्रत्यक्ष हुआ वहाँ त्वक्संयोग कारण है। एवं द्रव्य में समवेत जो स्पर्श उसके प्रत्यक्ष में त्वक्संयुक्त समवाय सन्निकर्ष कारण है। एवं द्रव्य में समवेत ( स्पर्श ) उसमें समवेत स्पर्शत्व आदि के प्रत्यक्ष में त्वक्संयुक्त समवेतसमवाय सन्निकर्ष कारण है। यहाँ ( त्वक्संयोग में ) भी महत्त्वावच्छिन्नत्व-उद्भूतस्पर्शावच्छिन्नत्व-चाक्षुष प्रत्यक्ष की तरह दे देना। ऐसे ही गन्ध के प्रत्यक्ष में घ्राणसंयुक्त समवाय सन्निकर्ष कारण है। गन्ध समवेत गन्धत्व के घ्राण से जायमान प्रत्यक्ष में घ्राणेन्द्रियसंयुक्तसमवेत-समवायसन्निकर्ष कारण है। इसी प्रकार रस के प्रत्यक्ष में रसना संयुक्तसमवायसन्निकर्ष कारण है। रस में समवेत ( रसत्व ) के रासन प्रत्यक्ष में रसनासंयुक्तसमवेतसमवाय सन्निकर्ष

---

द्रव्यवृत्त्यभावचाक्षुषं प्रति हि तादृशचक्षुःसंयोगवद्विशेषणता एव प्रत्यासत्ति र्वाच्या। अन्यथा अन्धकारेपि चक्षुःसंयुक्तवाय्वादिविशेषणता प्रत्यासत्त्या वाय्वादौ रूपाभावचाक्षुषप्रसंगात्, एवं चाऽऽलोकसंयोगदशायां यथा वाय्वादौ रूपाभाव-प्रत्यक्षं तदा वाय्वादेरपि चाक्षुषापत्तिः, अभावप्रत्यक्षानुरोधेन तदानीं वाय्वादा-वपि विलक्षणसंयोगसत्वादतो द्रव्यचाक्षुषं प्रति उद्भूतरूपत्वेनापि हेतुत्वमावश्यकम् एवं परमाण्वादौ महत्वाभावप्रत्यक्षं प्रति चक्षुः संयुक्तविशेषणतायां द्रव्यचाक्षुषप्रयो-जकस्य चक्षुः संयोगनिष्ठवैलक्षण्यस्यावश्यं प्रवेशः। अन्यथा तमस्यपि परमाणुचक्षुः संयोगेन महत्वाभावचाक्षुषप्रसंगात्। तथा च परमाणौ चक्षुः संयोगदशायां महत्वा-भावस्येव परमाणोरपि चाक्षुषापत्तिः, अतो महत्वस्यापि चाक्षुषोपयोगित्वमावश्यकम् परमाणोरस्पार्शनत्वस्य मनसोऽप्रत्यक्षत्वस्य चोपपत्तये द्रव्यसाक्षात्कारसामान्यं प्रत्ये व महत्वत्वेन हेतुत्वस्य वक्तव्यत्वाच्चेति संक्षेपः।

स्पार्शनप्रत्यक्षे त्वगिन्द्रियसन्निकर्षं दर्शयति=**एवमिति**। तथा च द्रव्य-वृत्तिलौकिकविषयतासंबन्धेन स्पार्शनं प्रति त्वक्संयोगः कारणमित्यर्थः। एवं द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन स्पार्शनं प्रति त्वक्संयुक्तसमवायः— द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन स्पार्शनं प्रति त्वक्संयुक्तसमवेतसम-वायः कारणमित्यपि बोध्यम्। **अत्रापि**=स्पार्शनप्रत्यक्षेपि। त्वक्संयोगे इति शेषः।

शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणम्। अत्र सर्वत्र प्रत्यक्षं लौकिकं बोध्यम्। वक्ष्यमाणमलौकिकप्रत्यक्षमिन्द्रियसंयोगादिकं विनापि संभवति।

एवमात्मप्रत्यक्षे मनःसंयोगः, आत्मसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवायः, आत्मसमवेतसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः कारणम्।

कारण है। शब्द के प्रत्यक्ष में श्रोत्रावच्छिन्नसमवाय सन्निकर्ष कारण है। शब्द के प्रत्यक्ष में श्रोत्रावच्छिन्नसमवाय सन्निकर्ष कारण है। शब्द में समवेत (शब्दत्व) के श्रावण प्रत्यक्ष में श्रोत्रावच्छिन्नसमवेतसमवायसन्निकर्ष कारण है। इस प्रकरण में सब जगह प्रत्यक्षशब्द से अलौकिक प्रत्यक्ष का ही ग्रहण करना चाहिये। वक्ष्यमाण (आगे कहा जानेवाला) अलौकिक प्रत्यक्ष तो इन्द्रियसंयोगादि सम्बन्ध के बिना भी होता है। ऐसे ही आत्मा के प्रत्यक्ष में मन· संयोग कारण है। आत्मा में समवेत (सुखादि) के मानस प्रत्यक्ष में मनः संयुक्तसमवायसन्निकर्ष कारण है। आत्मा में समवेत (सुखादि) सुखादि में समवेत (सुखत्वादि) के मानस-

---

पूर्ववदिति। चक्षुःसन्निकर्षेऽपीत्यर्थः। बोध्यमिति। अन्यथा परमाणुस्पर्शस्पार्शन प्रत्यक्षप्रभास्पर्शस्पार्शनप्रत्यक्षयोरापत्तेरिति भावः। एवमग्रेपि घ्राणसंयोगे रसनासंयोगे महत्त्वावच्छिन्नत्वं देयम्, अन्यथा परमाणुगन्धघ्राणजप्रत्यक्षतत्समवेतरसरासन प्रत्यक्षयोरापत्तेः। श्रोत्रावच्छिन्नसमवाय इति। केवलश्रोत्रानुयोगिक समवाय इत्यर्थः। महत्त्वावच्छिन्नत्व निवेशे प्रयोजनाभावा दिति भावः। न च तत्राऽवच्छिन्नत्वान्तनिवेशो व्यर्थः। केवलसमवायस्य सन्निकर्षत्वे श्रोत्रदेशेऽनुत्पन्नशब्दस्यापि श्रावणत्वापत्तेः। न च तादृशविशेषणेपि कथं तद्वारणम्, विशिष्टसमवायशुद्धसमवाययोरैक्यादिति वाच्यम्। कर्णविवरावच्छिन्नाकाशानुयोगिकत्वविशिष्टसमवायत्वेनैव संसर्गत्वात्। अत्र चेति। उक्तकार्यकारणभावे चेत्यर्थः। आत्मप्रत्यक्षे इति। लौकिकविषयतासंबन्धेन प्रत्यक्षे इत्यर्थः। अन्यथा कालिकसामानाधिकरण्यमात्रस्य प्रत्यासत्तित्वे संसारस्याऽनष्टतया सर्वदैवाऽवश्यं क्वचिन्मनःसंयोगसत्त्वेनाव्यावर्त्तकत्वात्, एवंरूपेण कार्यकारणभावाना व्यर्थतापत्तेः। अथ लौकिकविषयत्वस्य कार्यतावच्छेदकसंबन्धत्वे आत्ममानसस्य समूहालंबनरूपस्याऽऽसमवेतगुणादौ, आत्मसमवेतादिमानसस्य च समूहालंबनरूपस्याऽऽत्मादावपि लौकिकविषयतया सत्त्वेन व्यभिचारापत्तेरिति चेन्न। आत्मत्वविशिष्टविषयत्वात्मसमवेतत्वविशिष्टविषयत्वाऽऽत्मसमवेतसमवेतत्वविशिष्टविषयत्वसंबन्धैर्मानसोत्पत्ति प्रति यथाक्रममात्ममनःसंयोगा-ऽऽत्ममनःसंयुक्तसमवाया-ऽऽत्ममनःसंयुक्तसमवेतसमवायत्वेन विषयनिष्ठतया कार्यसहभावेन हेतुत्वमतो न व्यभिचारः, आत्मत्वविशिष्टविषयतासंबन्धेनाऽऽत्मभिन्ने मानसस्य बाधितत्वात्। आत्मत्वा-

दिविशिष्टमपहाय वस्तुगत्या आत्मादिनिष्ठत्वोपलक्षितविषयतैव कार्यतावच्छेदक-संबन्धो वाच्यः, नातो विशेषणविशेष्यभावभेदेन कार्यकारणभावभेदप्रसंगः। आत्मादिमानसोत्पत्तिदशायां गगनादितत्समवेतादावपि तादृशविषयतासंबन्धेन मानसोत्पत्तिवारणाय कारणतावच्छेदककोटावात्मत्वनिवेशः। समवाय्यसमवायि-कारणयोर्विशेषणज्ञानादिरूपनिमित्तकारणस्य च समवायसंबन्धावच्छिन्नोत्पत्ति प्रत्येव नियामकतया विषयतासंबन्धेनोत्पत्स्यतिप्रसंगस्य ततो वारणाऽसंभवात्। न चाऽऽत्मादिमानसोत्पत्तिदशायां गगनादौ मनःसंयोगे मानाभावः, देशान्तरेण समं संयोगोत्पत्तिदशायां सर्वेष्वेव विभुष्ववश्यं संयोगोत्पत्तिरिति नियमे माना-भावादिति वाच्यम्। तथासति गगनादीनां सर्वमूर्त्तसंयोगित्वव्याघातात्, अनन्त-संसारे सर्वदैवावश्यमात्मादिमानसोत्पत्तेः, खण्डप्रलयेपि ब्रह्माण्डान्तरे मानसोत्पत्तेः। अत एवाऽऽत्मत्वजातिरति प्रामाणिकी, सन्निकर्षनिष्ठकारणतावच्छेदकतयैव तत्सिद्धेः। आत्ममनःसंयोगनाशोत्पत्तिक्षणे आत्मादिमानसवारणाय कार्यसह-भावनिवेशः। सामान्यतो द्रव्यलौकिकप्रत्यक्षं प्रति महत्वस्य कारणतया च मनसि आत्ममनःसंयोगसत्वेपि न तादृशविषयतया मानसोत्पादः। न च तथापि यदात्म-तत्समवेतज्ञानादेः कुतो न परस्य प्रत्यक्षमिति वाच्यम्। तत्पुरुषीयमानसत्वस्य कार्यतावच्छेदकतया तदापादनाऽसंभवात्। अथ सामान्यतः आत्ममनःसंयोग-त्वादिना कारणत्वे आत्ममनःपूर्वसंयोगनाशोत्पत्तिक्षणे तदुत्तरं आत्ममनःसंयोगा-न्तरोत्पत्तिक्षणे च आत्मतत्समवेतादौ तादृशविषयतया मानसोत्पादापत्तिः, आत्मनो विभुतया तदानीमपि आत्मनि पुरुषान्तरीयमनःसंयोगसत्वात्, स्वकीययोरात्ममनसोः संयोगस्य कार्यसहभावेनाऽसमवायिकारणस्य समवायसंबन्धेनैवोत्पत्तिं प्रत्येव नियामकतया विषयतासंबन्धेनोत्पत्स्यतिप्रसंगस्य तदभावेन वारणाऽसंभवात्। न च समवायसंबन्धेनोत्पत्तिं विना विषयतासंबन्धेनोत्पत्त्यसंभव इति वाच्यम्। परात्मन्येव समवायसंबन्धेनोत्पत्त्या विषयतासंबन्धेन स्वात्मन्युत्पादस्य सुवचत्वादिति चेन्न। स्वात्मनि कालान्तरे पुरुषान्तरीयमनःसंयोगसत्वेपि स्वीयमनःसंयोगनाशो-त्पत्तिक्षणे पुरुषान्तरीयमनःसंयोगे मानाभावात्, विभूनां सर्वमूर्तसंयोगित्वनियमेपि देशान्तरेण समं संयोगनाशोत्पत्तिदशायां सर्वेष्वेव विभुषु अवश्यं संयोगोत्पत्तिरिति नियमे मानाभावादिति।

केचित्तु मानससाक्षात्कारजनकतावच्छेदकतया आत्मनिष्ठसंयोगेषु बहिर्द्रव्य-निष्ठसंयोगव्यावृत्तं परात्मनिष्ठसंयोगव्यावृत्तं च वैजात्यं कल्प्यते, तत्तदात्मभेदेनाऽ-नन्तकार्यकारणभावकल्पनामपेक्ष्य लाघवात्, तथाच सामान्यत एवाऽऽत्मनिष्ठ-लौकिकविषयत्वाऽऽ-त्मसमवेतनिष्ठलौकिकविषयत्वाऽऽ-त्मसमवेतसमवेतनिष्ठलौकिक-विषयत्वसंबन्धेन मानसोत्पत्तिं प्रति यथाक्रमं विलक्षणसंयोगत्व-विलक्षण संयोगा-श्रयात्मसमवायत्व - विलक्षणसंयोगाश्रयात्मसमवेतसमवायत्वेनैव कार्यसहभावेन हेतुत्वम्। सामान्यतो द्रव्यलौकिकप्रत्यक्षं प्रति महत्वस्य कारणतया च विलक्षण-मनःसंयोगस्य मनस्यपि सत्वेपि आत्मनिष्ठलौकिकविषयतया न मानसोत्पत्तिप्रसंगः। मनःसमवेतस्य मनःसमवेतसमवेतस्य च मानसप्रत्यक्षवारणाय कारणतावच्छेदक-

कोटावात्मत्वप्रवेशः । विलक्षणसंयोगावच्छिन्नाधारत्व-विलक्षणसंयोगावच्छिन्नाधारतावत्समवेतत्व-विलक्षणसंयोगावच्छिन्नाधारतावत्समवेतसमवेतत्वसंबन्धेन मनस्त्वेनैव वा यथाक्रमं कार्यसहभावेन हेतुत्वम् । मनसि च मनसा नाधारतेति नोक्तातिप्रसंगः । अत एवात्मत्वजातेरनभ्युपगमेऽपि न क्षतिः । न च विलक्षणसंयोगावच्छिन्नाधारत्वादिसंबन्धेन मनस्त्वेन वा हेतुत्वम्, आत्मत्वेन वेत्यत्र विनिगमनाविरहः । आत्मनिष्ठवायुसंयोगे एव वैलक्षण्यस्य सुवचत्वात् इति वाच्यम् । वायुत्वेन हेतुत्वे जलत्वादिना विनिगमनाविरहापत्तेः । मनस्त्वेन कारणतायां चानेनैव मनसःसिद्धतया न जलत्वादिना विनिगमनाविरहः । आत्ममनसोर्विलक्षणसंयोगनाशोत्पत्तिसमये आत्मतत्समवेतादौ लौकिकविषयतया परकीयमानसापत्तिवारणाय कार्यसहभावप्रवेशः । इत्थं चाऽऽत्मादिमानसोत्पत्तिसमये तत्कालोत्पन्नमानसाविषयेषु मनःसंयुक्तपरात्मादिषु मनःसंयोगस्याविशेषेऽपि न लौकिकविषयतया मानसापत्तिः, मनःसंयोगनिष्ठवैलक्षण्यस्य फलबलकल्प्यतया परात्मनि तदानीं विलक्षणसंयोगविरहात्, तत्सत्वे तत्रापि तदानीं लौकिकविषयतया मानसोत्पादस्येष्टत्वादित्याहुः ।

इदं पुनरिहावधेयम् । मानसप्रत्यक्षं प्रति आत्ममनःसंयोगात्ममनःसंयुक्तसमवायाऽऽत्ममनःसंयुक्तसमवेतसमवायानां सन्निकर्षाणां हेतुत्वे एव मानाभावः ।

अथैवमात्मतत्समवेतादावपि बहिर्द्रव्यतत्समवेतादावपि न कुतो लौकिकविषयतासंबन्धेन मानसोत्पत्तिः, समवायिकारणानां तत्तद्व्यक्तित्वेन कारणत्वस्य समवायसंबन्धेनोत्पत्तिं प्रत्येव नियामकतया विषयतासंबन्धेनोत्पत्तिं प्रति अतिप्रसंगस्य तेन वारणासंभवात् । न चाऽऽत्मनिष्ठलौकिकविषयत्वाऽऽत्मसमवेतनिष्ठलौकिकविषयत्वाऽऽत्मसमवेतसमवेतनिष्ठलौकिकविषयत्वसंबन्धेन मानसोत्पत्तिं प्रति यथाक्रमं तादात्म्य-समवेतत्व-समवेतसमवेतत्वसंबन्धेनाऽऽत्मत्वेन कारणत्वान्नायमतिप्रसंग इति वाच्यम् । तथापि आत्मतत्समवेतादिषु लौकिकविषयतया मानसोत्पत्तिसमये तत्कालोत्पन्नमानसाविषयेष्वपि परात्मतत्समवेतादिषु लौकिकविषयतया मानससामान्यापत्तेर्दुर्वारत्वात् । आत्मत्वस्याविशेषात् । मानसेतरज्ञानसामग्र्या देश्च समवायसंबन्धेन मानसोत्पत्तिं प्रत्येव प्रतिबन्धकत्वादिति चेन्न ।

तदात्मनिष्ठलौकिकविषयत्व-तदात्मसमवेतनिष्ठलौकिक विषयत्व-तदात्मसमवेतसमवेतनिष्ठलौकिकविषयत्वसंबन्धेन मानसोत्पत्तिं प्रति यथाक्रमं तादात्म्य-समवेतत्व-समवेतसमवेतत्वसंबन्धेन तदात्मत्वेन कारणत्वात् । इत्थं चात्मादिमानसोत्पत्तिसमये तत्कालोत्पन्नमानसाविषयेषु परात्मादिषु न लौकिकविषयतया मानससामान्यापत्तिः । *सांप्रदायिकमते मनःसंयोगादिसन्निकर्षकारणत्वपक्षोऽपीदृश्या तस्य* निरसनीयत्वात् ।

इयांस्तु विशेषो यत्तत्र स्वीयमनःसंयोग-परकीयमनःसंयोगानादाय तदतिप्रसंगवारणम्, अत्र तु आत्मपरात्मानौ आदाय । न चैवमप्यात्मभेदेन कार्यकारणभावभेदस्याविशिष्टतया किमपराद्धं सांप्रदायिकोक्तरीत्या सन्निकर्षाणां कारणत्वेनेति वाच्यम् । सन्निकर्षाणां कारणत्वे कारणतावच्छेदकगौरवात्, मनःसंयुक्तसमवाय-

विशेषणतया तद्वदभावानां ग्रहोभवेत् ॥६१॥
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते।
प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥६२॥

अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसंबद्धविशेषणता हेतुः। वैशेषिकमते तु समवायो न प्रत्यक्षः।

अत्र यद्यपि विशेषणता नानाविधा–तथाहि–भूतलादौ घटाद्यभावः संयुक्तविशेषणतया गृह्यते। संख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया,

प्रत्यक्ष में मनः संयुक्त समवेत समवाय सन्निकर्ष कारण है। अभाव के प्रत्यक्ष में और समवाय के प्रत्यक्ष में इन्द्रियसंबद्धविशेषणतासन्निकर्ष कारण है (जैसे घटाभाववद् भूतलम्" यहाँ पर चक्षुरिन्द्रियसम्बद्ध हुवा भूतल-उसमें विशेषणता घटाभाव को है–ऐसे ही "घटत्वसमवान् घटः" यहाँ पर चक्षुरिन्द्रियसम्बद्ध हुवा घट-उसमें विशेषण समवाय है–अतः विशेषणता समवाय को है।

वैशेषिकों के मत में समवाय का प्रत्यक्ष नहीं होता है। यहाँ यद्यपि विशेषणता नाना प्रकार की है—तथाहि-जैसे "घटाभाववद्भूतलम्" इत्याकारक जो भूतलादि में घटाभाव का प्रत्यक्ष चक्षुःसंयुक्तविशेषणतासन्निकर्ष से होता है। (चक्षुःसंयुक्त हुवा भूतलादि-उसमें विशेषणता घटाभाव को है) संख्या आदि में रूपादि के अभाव का प्रत्यक्ष संयुक्तसमवेत विशेषणता-

---

मनःसंयुक्तसमवेतसमवाययोः कार्यतावच्छेदके तत्तत्पुरुषीयत्वस्य प्रवेशेन तयोः कार्यतावच्छेदकगौरवाच्च। न च तथापि तत्तदात्मभेदेनान्तकार्यकारणभावकल्पनामपेक्ष्योक्तरीत्या मनःसंयोगनिष्ठवैजात्येन सन्निकर्षहेतुतैव लघीयसीति वाच्यम्। फलमुखगौरवस्यापि दोषतया मनःसंयोगनिष्ठवैजात्येन सन्निकर्षकारणताया निराकृतत्वात्। फलमुखगौरवस्यापि दोषत्वेन मनः संयोगादिसन्निकर्षाणां मानसप्रत्यक्षजनकत्वे मानाभावः, तस्याऽदोषत्वे तु मनःसंयोगनिष्ठवैजात्येन मनःसंयोगादिसन्निकर्षाणामेव तत्र हेतुत्वमिति दिक्। विशेषणतासन्निकर्षस्योदाहरणं दर्शयति। **अभावप्रत्यक्षे इति।** यद्यपि समवायप्रत्यक्षे अभावप्रत्यक्षे चेत्येव वक्तुमुचितम्, क्रमिकत्वात्, तथापि अभावप्रत्यक्षस्य सर्वमतसिद्धतया तस्यैव प्रथमोपादानम्। **इन्द्रियसंबद्धविशेषणतेति।** यद्यपि इन्द्रियसंयुक्तविशेषणता-इन्द्रियसंयुक्तसमवेतविशेषणतेत्यादिक्रमेण विशेषणताबाहुल्यम्, तथापि विशेषणतात्वमनुगतम्, तेनैकरूपेण विभागः। विशेषणता च न प्रकारतारूपा, अतो भूतले घटाभाव इत्यत्रापि विशेषणतैव सन्निकर्षः, नातः षड्विधत्वहानिरिति ध्येयम्। पृथिव्यां गन्धस्य समवायो न जले इति प्रतीत्या समवायस्य नानात्ववादिनव्यमतेऽतीन्द्रियवृत्तिसमवायस्याऽप्रत्यक्षत्वेपि योग्यवृत्तिसमवायस्य प्रत्यक्षत्वादाह। **वैशेषिकमते इति। समवायो न प्रत्यक्षइति।** संबन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात्, समवायस्य चैकतया एकदा भाविभूतसकलाश्रयव्यक्तीनां ज्ञानाऽसंभवादिति भावः। न्याय-

संख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया, शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया, कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया, कत्वादौ घत्वाभावः श्रोत्रावच्छिन्नसमवेतसमवेतविशेषणतया, एवं कत्वावच्छिन्नाभावे गत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया, घटाभावादौ पटाभावः चक्षुःसंयुक्तविशेषणविशेषणतया, एवमन्यत्राप्यूह्यम्। तथापि विशेषणतात्वेन एकैव सा गण्यते, अन्यथा षोढा सन्निकर्ष इति प्राचां प्रवादो व्याहन्येतेति।

यदि स्यादिति। अत्राभावप्रत्यक्षे योग्यानुपलब्धिः कारणम्—तथाहि—भूतलादौ घटादिज्ञाने जाते घटाभावादिकं न ज्ञायते, तेनाऽभावोपलंभे प्रतियोग्युपलंभाभावः कारणम्।

सन्निकर्ष से होता है। (जैसे चक्षुःसंयुक्त हुवा भूतल—उसमें समवेत हुवी संख्या—उसमें विशेषणता रूपादि के अभाव को है) संख्यात्वादि में रूपाभाव का प्रत्यक्ष संयुक्तसमवेत समवेत विशेषता सन्निकर्ष से होता है। (जैसे चक्षुः संयुक्त हुवा भूतल—उसमें समवेत हुवी संख्या—उसमें समवेत है संख्यात्व—उसमें विशेषणता है रूपादि के अभाव को—क्योंकि रूपादि का अभाव संख्यात्व में विशेषण है) शब्दाभाव का प्रत्यक्ष श्रोत्रावच्छिन्नविशेषणतासन्निकर्ष से होता है—अर्थात् श्रोत्र से अवच्छिन्ना कही जाती है। 'क' आदि शब्दों में खत्व आदि के अभाव का प्रत्यक्ष श्रोत्रावच्छिन्न समवेत विशेषणतासन्निकर्ष से होता है। (क्योंकि श्रोत्रावच्छेदेन समवेत जो 'क' शब्द उसमें विशेषणता है खत्वाभाव को)। एवं कत्वावच्छिन्नाभाव में गत्वाभाव आदि का श्रोत्रावच्छिन्नविशेषणविशेषणतासन्निकर्ष से ग्रहण होता है। ऐसे ही घटाभाव में पटाभाव चक्षुःसंयुक्तविशेषणविशेषणतासन्निकर्ष से ग्रहण होता है—(क्योंकि चक्षु संयुक्त हुवा भूतल—उसमें विशेषण घटाभाव हुवा—और घटाभाव में विशेषण पटाभाव है—अतः घटाभाव निरूपित विशेषणता पटाभाव में है) इसी प्रकार अभावप्रत्यक्ष में स्थलानुसार और भी सम्बन्धों की कल्पना कर लेना। इसप्रकार विशेषणता यद्यपि अनेक प्रकार की है—तथापि विशेषणतात्वरूप से वह विशेषणता एक ही है—अन्यथा छः ही प्रकार का सन्निकर्ष है—यह प्राचीनों का (प्रवाद) कथन असंगत हो जावेगा।

"यदि स्यादुपलभ्येत" मीमांसकों (कुमारिलभट्ट) का कहना है कि "विशेषणतया तद्वद्भावानां ग्रहोभवेत्" अर्थात् विशेषणतासन्निकर्ष से अभावों का प्रत्यक्ष होता यह नैयायिकों का कहना सर्वथा असंगत है—क्योंकि अभाव का प्रत्यक्ष होता ही नहीं। अतः अभाव प्रत्यक्ष के अनुरोध से विशेषणतासन्निकर्ष का स्वीकार व्यर्थ है। प्रश्न—समवाय के प्रत्यक्ष के लिये

---

मतं तु संयोगप्रत्यक्षे एव यावदाश्रयप्रत्यक्षस्य हेतुत्वाङ्गीकारेण न समवायस्य प्रत्यक्षत्वानुपपत्तिः। एवं च तादृशकार्यकारणभावे मानाभावः। एतेन "तथासति" घटपटसंयोगवद्घटाकाशसंयोगप्रत्यक्षापत्तिरिति निरस्तम्।

तत्र योग्यताप्यपेक्षिता, सा च प्रतियोगिसत्वप्रसञ्जितप्रतियोगिकत्व-रूपा । तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जितः उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुः । तथाहि—यत्राऽऽलोकसंयोगादिकं वर्तते, तत्र "यदि अत्र घटः स्यात्तर्हि उपलभ्येते" त्यापादयितुं शक्यते, तत्र

विशेषणता सन्निकर्ष का स्वीकार आवश्यक है । उत्तर—समवाय को हम पदार्थ ही नहीं मानते । प्रश्न-नैयायिक कहता है मीमांसक से कि फिर तुम्हारे यहाँ अभाव का ग्राहक प्रमाण कौन होगा—उत्तर—हम ( मीमांसक ) अभाव की प्रतीति का कारण अनुपलब्धि नामक प्रमाण को मानते हैं—और वह अभाव की प्रतीति प्रत्यक्षात्मिका नहीं होती है—अपितु परोक्षात्मिका नहीं होती है । नैयायिक लोगों का कहना है कि हमारे यहाँ तो अभाव का प्रत्यक्ष ही होता है—और समवाय को भी हम पदार्थ मानके हैं अतः इन दोनों के प्रत्यक्ष के अनुरोध से विशेषणता सन्निकर्ष मानना आवश्यक है—उसमें भी हम अभावप्रत्यक्ष में अनुपलब्धि को सहकारी कारण मानसे हैं और अभाव का प्रत्यक्ष तो विशेषणतासन्निकर्ष से ही होता है—इसी अभिप्राय से "यदि स्यादुपलभ्येत" इस कारिका की व्याख्या करते हैं ।

यह विषय संस्कृत टीका में स्पष्ट किया है । यहाँ ( इन्द्रिय तथा विशेषणतासन्निकर्षजन्य ) अभावप्रत्यक्ष में योग्यतानुपलब्धि सहकारी कारण है । तथाहि—भूतल आदि ( अधिकरण ) में घट आदि का प्रत्यक्षात्मक ज्ञान होने पर घटाभाव आदि का प्रत्यक्ष नहीं होता है । इससे यह सिद्ध हुवा कि अभाव के उपलंभ ( प्रत्यक्ष ) में प्रतियोगी का उपलंभाभाव ( उपलब्ध्यभाव ) अर्थात् अनुपलब्धि ( प्रत्यक्ष न होना ) सहकारी कारण है । अर्थात् जहाँ प्रतियोगी का प्रत्यक्ष नहीं होगा—वहीं पर उसके अभाव का प्रत्यक्ष होता है । प्रश्न—प्रतियोगी का उपलंभाभाव यदि प्रतियोगी के अभाव प्रत्यक्ष में कारण है तो जलादि परमाणु में पृथिवीत्व का उपलंभ ( प्रत्यक्ष ) नहीं होता है सो वहाँ जलादिपरमाणु में पृथिवीत्वोपलंभा भाव है—अतः वहाँ पृथिवीत्वाभाव का प्रत्यक्ष होना चाहिये । उत्तर—वहाँ ( प्रतियोग्युपलंभाभाव में ) योग्यता भी अपेक्षित है अर्थात् योग्यताविशिष्ट जो प्रतियोग्युपलंभाभाव वही प्रतियोगी के अभावप्रत्यक्ष में कारण है । योग्यता को दिखलाते हैं—"सा च" इस ग्रंथ से—प्रतियोगी जो घट-पर आदि उनकी सत्व ( सत्ता ) का जो प्रसञ्जन ( आरोप ) 'यदि यहाँ घट ( प्रतियोगी ) होता' इत्याकारक आरोप-उस आरोप से आरोपित जो प्रतियोगी 'तो उसका उपलंभ ( प्रत्यक्ष होता' इस आरोप का विषय घटोपलंभ ( घटप्रत्यक्ष ) रूप प्रतियोगी है । और वह घटोपलंभ हैं प्रतियोगी जिसका—( घटोपलंभाभाव का ) उस उपलंभाभाव में रहनेवाला जो तादृशप्रतियोगिकत्वात्मकधर्म—वही योग्यतापदार्थ है-तादृशयोग्यताविशिष्ट प्रतियोग्युपलंभाभाव प्रतियोगी के अभाव प्रत्यक्ष में कारण है । तथाहि—जहाँ आलोकसंयोगादिक हैं अर्थात् आलोकसंयोगावच्छिन्नमहत्त्वावच्छिन्नोद्भूत-

---

एवमन्यत्रापीति । अत्रेदं बोध्यम् । अभावस्तु विशेषणतया गृह्यते परन्तु अधिकरणैः सह इन्द्रियाणां पृथक् पृथक् संबन्धः उक्तदिशा कल्पनीय इति भावः ॥६१॥

अत्र मीमांसकाः "विशेषणतया तद्वदभावानां ग्रहो भवेदित्य"

घटाभावादिप्रत्यक्षं भवति। अन्धकारे तु नापादयितुं शक्यते, तेन घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम्, स्पार्शनप्रत्यक्षं तु भवत्येव, आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्याऽऽपादयितुं शक्यत्वात्। गुरुत्वादिकं यदयोग्यं तदभावस्तु न प्रत्यक्षः, तत्र गुरुत्वादिप्रत्यक्षस्याऽऽपादयितुमशक्यत्वात्। वायौ रूपाभावः, पाषाणे सौरभाभावः, गुडे तिक्ताभावः, श्रोत्रे शब्दाभावः, आत्मनि सुखाभावः, एवमादयस्तत्तदिन्द्रियैर्गृह्यन्ते, तत्तत्प्रत्यक्षस्याऽऽपादयितुं

*रूपावच्छिन्न* चक्षुःसंयोग है वहाँ "यदि यहाँ घट होता तो उसकी उपलब्धि (प्रत्यक्ष) होता, ऐसा आपादन नहीं कर सकते हैं—अतः वहाँ घटाभाव का प्रत्यक्ष होता है। और अन्धकार में ऐसा आपादन नहीं कर सकते हैं—अतः अन्धकार में घटाभावादि का चाक्षुष प्रत्यक्ष नहीं नहीं होता है स्पार्शनप्रत्यक्ष तो घटादि का अन्धकार में भी होता ही है—क्योंकि आलोकसंयोग के बिना भी घट के *स्पार्शनप्रत्यक्ष* का आपादन कर सकते हैं। *गुरुत्व-धर्म-अधर्म* आदि जो प्रत्यक्ष के अयोग्य हैं—उनके अभाव का भी प्रत्यक्ष नहीं होता है—क्योंकि "घटे यदि गुरुत्वं स्यात् तर्हि उपलभ्येत" अर्थात् घट में यदि गुरुत्व होता तो उसका प्रत्यक्ष होता—ऐसा आपादन नहीं हो सकता है—( कारण कि गुरुत्व स्वयं ही प्रत्यक्ष के अयोग्य है—अनुमेय होने से।

इसी प्रकार वायु में *रूपाभाव का—पाषाण में सुगन्ध के अभाव का—गुड़ में* तिक्तरस के अभाव का—श्रोत्र में शब्द के अभाव का—आत्मा में सुख के अभाव आदि का प्रत्य

---

संगतम्, अभावप्रत्यक्षे यदि प्रमाणं स्यात्तदनुरोधेन विशेषणतापि सन्निकर्षः स्यात्, इति तैर्विशेषणतासन्निकर्षो न स्वीक्रियते। न च *समवायप्रत्यक्षानुरोधेन* सः स्वीकर्तव्य इति वाच्यम्। तैः समवायानङ्गीकारात्। एवं च सन्निकर्षाभावादभावप्रत्यक्षान्यथानुपपत्त्याऽनुपलब्धिनामकं प्रमाणान्तरं स्वीक्रियते-अभावप्रतीतिरपि परोक्षैव स्वीक्रियते इति।

परन्तु विशेषणतायाः सन्निकर्षत्वस्वीकारेणैवाऽभावस्य प्रत्यक्षसंभवात्कि*मनुपलब्धेः प्रमाणान्तरत्वेनेति भावो नैयायिकानाम्।* अनुपलब्धेरभावग्राहकत्वाभावे भूतलादौ घटवत्ताभ्रमदशायामपि घटाभावप्रत्यक्षापत्तिः, विशेषणतासन्निकर्षसत्वात्। न चाभावग्राहकसन्निकर्षसत्वेपि घटवत्तानिश्चयस्य प्रतिबन्धकत्वेन घटभ्रमदशायां न घटाभावप्रत्यक्षापत्तिरिति वाच्यम्। प्रतिबध्यतावच्छेदककोटौ *लौकिकसन्निकर्षजन्यत्वस्य* निवेशनीयतया घटाभावप्रत्यक्षस्य लौकिकसन्निकर्षजन्यत्वेन प्रतिबध्यतावच्छेदकानाक्रान्तत्वादित्याशंकां अभावप्रत्यक्षे योग्यानुपलब्धेः सहकारिकारणत्वं स्वीकृत्य परिहरति। अत्रेति। कारणमिति। कारणमेवेत्यर्थः। *न तु करणमिति यावत्।* *तथाचानुपलब्धिसहकृतेनेन्द्रियेणैवाऽभावप्रत्यक्षसंभवेऽनुपलंभप्रमित्यन्तरं* तत्करणत्वेनाऽनुपलब्धिरूपप्रमाणं च न स्वीकार्यं गौरवादिति भावः। यद्यपि अनुपलब्धेः कारणत्वकल्पनं, विशेषणतासन्निकर्षकल्पनं, चापेक्ष्याऽनुपलब्धौ

शक्यत्वात्। संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता, अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यताऽपेक्षिता। अतः स्तम्भादौ पिशाचादिभेदोपि चक्षुषा गृह्यते एव। एवं प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधम्। तत्र लौकिकप्रत्यक्षे षोढा सन्निकर्षो वर्णितः ॥६२॥

(प्रत्यक्ष) उन-उन इन्द्रियों से होता है—जिन-जिन इन्द्रियों से उन-उन अभावों के उन-उन प्रतियोगियों का प्रत्यक्ष होता है) क्योंकि पूर्वोक्त उन-उन अभावों के प्रत्यक्ष का आपादन (आरोप) हो सकता है। (कारण कि इन अभावों के प्रति योगी जो रूपादि हैं उनके उपलंभाभाव में "प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्व" रूपयोग्यता है—अतः "वायौ यदि रूपंस्यात् तर्हि चक्षुषा उपलभ्येत" ऐसा आपादन हो सकता है) संसर्गाभाव के प्रत्यक्ष में प्रतियोगी की प्रत्यक्ष योग्यता अपेक्षित है। और अन्योन्याभाव के प्रत्यक्ष में तो अधिकरण की योग्यता अपेक्षित है—इसीलिये स्तंभ आदि (अधिकरण) में पिशाच आदि का भेद चक्षु से गृहीत होता है। (क्योंकि यहाँ पिशाच आदि प्रतियोगी में प्रत्यक्ष योग्यता नहीं है) ५८-५९-६०-६१-६२ ॥

---

प्रमाणत्वकल्पनमेवोचितम्, तथापि अनुपलब्धेर्व्यापाराभावेन व्यापारवत्कारणत्वघटितप्रमाणत्वाऽसंभवात्, अभावज्ञानस्याऽधिकरणविषयकस्याऽननुभवेनाऽनुपलब्धिजन्याभावज्ञानेऽधिकरणभानानुपपत्तेश्चाभावज्ञानस्य प्रत्यक्षरूपताया एव स्वीकरणीयत्वात्, तथासति चाभावस्य विषयतयाऽधिकरणस्य च संयोगादिना, एकस्मिन्नेव ज्ञाने भानसंभवान्नानुपपत्तिरिति भावः। कारणत्वमेवोपपादयति तथाहीत्यादिना। घटादिज्ञाने = घटादिभ्रमे। अत्र = प्रतियोग्युपलंभाभावे। ननु घटादिसत्वं नोपलंभव्याप्यमन्धकारविशिष्टगृहे घटादिसत्वेपि उपलंभाभावादित्यत आह। तथाहीत्यादि। अत्र = अधिकरणे। शक्यते इति। तथाच केवलघटसत्वस्य उपलंभाव्याप्यत्वेपि आलोकसंयोगादिसमवहितस्य घटसत्वस्योपलंभव्याप्यत्वात्तादृशव्यापकताश्रयोपलंभस्याऽभावः कारणमिति भावः। रूपाभाव इति। चक्षुःसंयुक्तविशेषणतयेति शेषः। सौरभाभाव इति। घ्राणसंयुक्तविशेषणतयेति शेषः। तिक्ताभाव इति। रसनासंयुक्तविशेषणतयेति शेषः। शब्दाभाव इति। श्रोत्रावच्छिन्नविशेषणतयेति शेषः। सुखाभाव इति। मनःसंयुक्तविशेषणतयेति शेषः। तत्तदिन्द्रियैः=क्रमेण चक्षुर्घ्राणरसनश्रोत्रमनोभिः। संसर्गाभावप्रत्यक्ष इति। तथाच अभावे योग्यमात्रप्रतियोगिकत्वं विवक्षितमिति भावः। अधिकरणयोग्यतेति। योग्याधिकरणवृत्तित्वमित्यर्थः। पिशाचादिभेदोपि = पिशाचभिन्न इति भेदोपीत्यर्थः ॥६२॥

अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः ।
सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥६३॥

अलौकिकसन्निकर्षस्त्विदानीमुच्यते अलौकिकस्त्विति । व्यापारः सन्निकर्षः । सामान्यलक्षण इति सामान्यं लक्षणं यस्येत्यर्थः । अत्र लक्षणपदेन यदि स्वरूपमुच्यते, तदा सामान्यरूपा प्रत्यासत्तिरित्यर्थो लभ्यते । तच्चेन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतं बोध्यम् ।

इस प्रकार लौकिक-अलौकिक के भेद से प्रत्यक्ष दो प्रकार का है—उसमें से लौकिक प्रत्यक्ष मे छः प्रकार के सन्निकर्ष का वर्णन कर दिया—अब अलौकिक सन्निकर्ष का वर्णन करते हैं—"अलौकिकस्तु व्यापारः" इत्यादि ग्रन्थ से। अलौकिक व्यापार ( सन्निकर्ष ) तीन प्रकार का कहा गया है—सामान्य लक्षण—ज्ञान लक्षण—योगज। व्यापार नाम सन्निकर्ष का है। सामान्य लक्षण शब्द का अर्थ है कि सामान्य-घटत्वादि जाति, और घटादि व्यक्ति, ये हैं लक्षण, अर्थात् स्वरूप—जिसका,—इससे "सामान्यस्वरूपप्रत्यासत्ति, ( सन्निकर्ष ) रूप अर्थ का लाभ होता है। और यह सामान्य स्वरूप सम्बन्ध—इन्द्रिय सम्बद्ध विशेष्यक जो "अयं घटः" इत्याकारक ज्ञान—उसमें प्रकारीभूत धर्म जानना चाहिये—( वह प्रकारीभूत धर्म-जातिरूप हो या व्यक्तिरूप होइत्यन्यदेतत् ) अभिप्राय यह है कि पुरोवर्ती घट के साथ चक्षुःसंयोग होने के अनन्तर "घट घटत्वे" इत्याकारक निर्विकल्पक ज्ञान होता है उसके बाद "अयंघटः" इत्याकारक सविकल्पक ज्ञान होता है। यह ज्ञान घट को विशेष्यविधया और घटत्व को प्रकार ( विशेषण ) विधया विषय करता है। अतः इन्द्रिय सम्बद्ध विशेष्य ( घट ) का जो ज्ञान "अयंघटः" इत्याकारक ज्ञान—इसमें प्रकारीभूत सामान्य हुवा घटत्व—उस घटत्वरूप सामा लक्षणा सन्निकर्ष के द्वारा 'घटाः' इत्याकारक सकल घट विषयक अलौकिक प्रत्यक्ष होता है

---

प्रत्यक्षंद्विविधम्—लौकिकम्, अलौकिकं च। सन्निकर्षषट्कजन्यं लौकिकम् तच्च व्याख्यातमेव। अलौकिकसन्निकर्षजन्यमलौकिकम्। अलौकिकसन्निक माह। मूले—अलौकिकस्त्विति। अवधारणार्थकस्तु शब्दः "त्रिविध" इत्युत्त योजनीयः। सामान्यलक्षणायाः सामान्यरूपत्वे जन्यत्वघटितव्यापारत्वाऽसंभवादाह व्यापारः—सन्निकर्ष इति। सामान्यं च तल्लक्षणं चेति कर्मधारये सामान्यलक्षण मित्येव स्यात्, तथा च पुंल्लिङ्गतया निर्देशोऽसंगत इत्यतोबहुव्रीहिमाह। सामान्य लक्षणं यस्येति। यत्पदार्थश्चात्र सन्निकर्षः। लक्षणपदस्याऽर्थद्वयम्। स्वरूपम् निरूपकं "विषयः" च। आद्ये-आह। अत्रेति। बहुव्रीहिसमासे इत्यर्थः। घटकत्व सप्तम्यर्थः। ननु धूमत्वादिरूपायाः सामान्यलक्षणाया चक्षुराद्यनिरूपितत्वात्कथं तत्र "चक्षुरादि" प्रत्यासत्तित्वमत आह। तच्चेति। तथाच न केवलं सामान्यं प्रत्यासत्तिः, किन्तु ईदृशप्रकारताविशिष्टसामान्यमेवेति भावः। ईदृशसामान्यस्य पदार्थान्तरस्वीकारे गौरवदोष इत्याह। तथाहीति। यत्र यथा अस्य प्रकार- त्वः। तत्र=तादृशज्ञाने। निरूपितत्वं सप्तम्यर्थः। अन्वयश्चास्य

तथाहि-इन्द्रियसंबद्धो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं यत्र जातं, तत्र ज्ञाने धूमत्वं प्रकारः, तत्र धूमत्वेन रूपेण सन्निकर्षेण धूमा इत्येवरूपं सकलधूमविषयकं ज्ञानं जायते। अत्र यदीन्द्रियसंबद्धमित्येवोच्यते तदा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्याद् धूमत्वेन सहेन्द्रियसंबन्धाभावात्।

---

उसी को तथाहि—से दिखलाते हैं—जहाँ इन्द्रिय संयुक्त ( संबद्ध ) धूम आदि हैं—वे धूम आदि हैं विशेष्य जिसमें ऐसा ज्ञान 'धूमः' यह ज्ञान है -इस ज्ञान में प्रकार धूमत्व है—उस धूमत्वरूप सामान्य लक्षणासन्निकर्ष के द्वारा "धूमाः" ऐसा सकलधूमविषयक अलौकिक प्रत्यक्ष होता है। प्रश्न—'इन्द्रियसम्बद्धविशेष्यक ज्ञानप्रकारीभूत सामान्य' यहाँ पर 'इन्द्रिय संबद्धवृत्तित्व ही क्यों नहीं कहा—लाघव होने से, क्योंकि जैसे तादृश ज्ञान प्रकारीभूत सामान्य धूमत्व आदि पड़ते हैं—वैसे ही इन्द्रिय सम्बद्ध धूम हुवा—उसमें धूमत्व वृत्ति है—अतः धूमत्वेन "धूमाः" यह सकल धूम विषयक ज्ञान हो जायेगा। उत्तर—जहाँ धूलीपटल के साथ इन्द्रिय सम्बन्ध हुवा—और उस धूलीपटल में धूमत्व का भ्रम हुआ—उसके बाद सकल धूम विषयक "धूमाः" यह ज्ञान होता है—परन्तु अब नहीं होगा—क्योंकि धूमत्व के साथ इन्द्रिय सम्बन्ध नहीं है -अर्थात् इन्द्रिय सम्बद्ध जो धूलीपटल उसमें वृत्ति धूमत्व नहीं है।

---

प्रकारपदार्थघटकप्रकारत्वेन सह। तथाच चक्षुःसंयुक्तविशेष्यकचाक्षुषप्रकारतापन्नधूमत्वस्य चक्षुर्निरूपितत्वेन संयोगादेरिव तस्यापि प्रत्यासत्तित्वमिति भावः। तत्र=तदैव। धूमत्वेनेति। चक्षुःसंयुक्तविशेष्यकचाक्षुषप्रकारतापन्नधूमत्वेनेत्यर्थः। एतेन धूमत्वरूपसामान्यलक्षणायाः नित्यत्वेन सर्वदा विद्यमानतया सर्वदा सकलधूमविषयकप्रत्यक्षापत्तिरित्यपि समाहितम्। धूमत्वे सर्वदा तादृशप्रकारतावैशिष्ट्याभावादिति ध्येयम्। अत्रायं क्रमः आदौ लौकिकसन्निकर्षः ततो धूमधूमत्वे इति निर्विकल्पकं विशेषणज्ञानात्मकम्। ततो धूम इति सविकल्पकम्, ततो धूमत्वप्रत्यासत्त्या "धूमा" इत्येवं रूपं निखिलधूमविशेष्यकमलौकिकं प्रत्यक्षं भवतीति।

न च सकलधूमभानाभावे का क्षतिरिति वाच्यम्। महानसीयधूमे वह्निव्याप्तिग्रहकाले पर्वतीयधूमानुपस्थितौ तत्र सन्निकर्षाभावात्पर्वतीयधूमविशेष्यकव्याप्तिग्रहाभावे वन्हिव्याप्तिविशिष्टधूमवत्वाज्ञानादनुमितिर्न स्यात्, एवं प्रत्यक्षे धूमे वन्हिसंबन्धस्य गृहीतत्वादन्यधूमस्य चाऽनुपस्थितत्वाद् धूमो वन्हिव्याप्यो न वेति संशयानुपपत्तिश्च स्यात्। सामान्यस्य प्रत्यासत्तित्वस्वीकारे तु धूमत्वसामान्यलक्षणया पर्वतीयधूमस्योपस्थितौ पर्वतीयधूमनिष्ठव्याप्तेरपि ग्रहात्, पर्वतीयधूमदर्शनरूपोद्बोधकेन स्मृतायाः वन्हिव्याप्तेः पर्वतीयधूमे ग्रहादनुमितिः। एवं सामान्यप्रत्यासत्त्या कालान्तरीय देशान्तरीयधूमोपस्थितौ धूमो वन्हिव्याप्यो न वेति संशयोपि नानुपपन्न इति ध्येयम् कार्यकारणभावस्तु—अलौकिकमुख्यविशेष्यतासंबन्धेन तत्प्रकारकतदाश्रयप्रत्यक्षं प्रति समवायसंबन्धेन इन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूततद्धर्मो हेतुरित्याकारकः। ननु तादृशप्रत्यक्षं प्रति समवायसंबन्धेन इन्द्रियसंबद्धतद्रूपमेव हेतुरस्तु किं तद्विशेष्यक-

**मन्मते इन्द्रियसंबद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानं तत्र प्रकारीभूतं धूमत्वंप्रत्यासत्तिः । इन्द्रियसंबन्धश्च लौकिको ग्राह्यः । इदं च बहिरिन्द्रियस्थले बोध्यम् । मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिः ॥६३॥**

और मेरे मत में इन्द्रिय सम्बद्ध धूलीपटल हुवा—धूलीपटल है विशेष्य जिसमें ऐसा ज्ञान "धूमः" यह ज्ञान है—इसमें प्रकारीभूत सामान्य धूमत्व ही सामान्य लक्षण सन्निकर्ष है । और 'इन्द्रियसम्बद्धवि-शेष्यक' इसका अर्थ है इन्द्रियसम्बन्धवद्विशेष्यक—सो यहाँ इन्द्रिय का सम्बन्ध लौकिक ही लेना चाहिये । और बहिरिन्द्रिय से जहाँ घट ज्ञान होने के अनन्तर घटत्वरूप सामान्य लक्षण सन्निकर्ष के द्वारा सकल घट का ज्ञान हुवा—उसी स्थल में इन्द्रियसम्बद्धविशेष्यक ज्ञान प्रकारीभूत सामान्य को प्रत्यासत्ति विधया कारण जानना चाहिये । मानसस्थल में तो केवल ज्ञान प्रकारी भूत सामान्य को ही प्रत्यासत्ति (सन्निकर्ष) स्वीकार करना उचित है । परन्तु यहाँ समान

---

ज्ञानप्रकारीभूतेत्यनेनेत्यत आह । **अत्रेति** । लाघवादित्यादिः । प्रत्यासत्तावित्यर्थः । घटकत्वं सप्तम्यर्थः । तस्येन्द्रियसंबद्धमित्यनेनाऽन्वयः । तथाच निरुक्तप्रत्यासत्तिघटकेन्द्रियसंबद्धसामान्यस्य प्रत्यासत्तित्वस्वीकारेणैव सर्वदा सकलधूमविषयकप्रत्यक्षापत्तेर्वारणे तादृशप्रकारताविशिष्टसामान्यस्य प्रत्यासत्तित्वे गौरवादिति भावः । तत्र= तदा । **इन्द्रियसंबन्धाभावादिति** । धूलीपटलस्यैवेन्द्रियसंयुक्तत्वादिति । तादृशप्रकारताविशिष्टस्य सामान्यस्य प्रत्यासत्तित्वे नोक्तदोष इत्याह । **मन्मते त्विति** । न नु यत्र धूमचक्षुः संयोगः—ततो धूमचाक्षुषं संयोगनाशश्च-ततस्तादृशचाक्षुषरूप "ज्ञानलक्षणाप्रत्यासत्ति" इन्द्रियसंबन्धविशिष्टधूमविशेष्यक "प्रथम" चाक्षुषप्रकारतापन्नधूमत्वप्रत्यासत्त्या सकलधूमविषयकचाक्षुषापत्तिरत आह । **इन्द्रियसंबन्धश्चेति** । एवं च ज्ञानलक्षणस्य लौकिकत्वाभावान्नापत्तिरिति भावः ।

अथ लौकिकसन्निकर्षाणामननुगमः । न च संयोगस्यैव निवेशोऽस्तु, तथा चेन्द्रियसंयोगवद्विशेष्यकज्ञानप्रकारीभूतमेव सामान्यं प्रत्यासत्तिरिति वाच्यम् । संयोगमात्रनिवेशे संयुक्तसमवायेन जायमानरूपचाक्षुषे व्यभिचारः, अलौकिकमुख्यविशेष्यतासंबन्धेन तत्कचाक्षुषवति रूपे इन्द्रियसंयोगवद्विशेष्यकज्ञानप्रकारतापन्नरूपत्वविरहात्, रूपे चक्षुः संयोगविरहात् । न च लौकिकसन्निकर्षस्य नानात्वेपि कार्यकारणभावभेदान्न व्यभिचार इति वाच्यम् । तथापि धूमत्वप्रकारकचाक्षुषं प्रति चक्षुः संयोगवद्धर्मिकचाक्षुषप्रकारतापन्नधूमत्वस्य कारणत्वे, घटीयनीले धूमत्वभ्रमोत्तरं निखिलधूमत्वाश्रयचाक्षुषानुपपत्तिः, घटीयनीले चक्षुःसंयोगविरहात् । यदि चक्षुः संयुक्तसमवायवद्विशेष्यकचाक्षुषप्रकारतापन्नधूमत्वं हेतुरित्युच्यते, तदा धूमे धूमत्वप्रकारकचाक्षुषोत्तरं यावद्धूमविषयकचाक्षुषे व्यभिचारः, धूमे चक्षुः संयुक्त-

परन्तु सामानां भावः सामान्यम्, तच्च क्वचिन्नित्यं यथा धूमत्वादि, क्वचिच्चाऽनित्यं यथा घटादि, यत्रैको घटः संयोगेन भूतले समवायेन कपाले वा ज्ञातस्तदनन्तरं सर्वेषामेव तद्घटवतां भूतलादीनां कपालादीनां वा ज्ञानं भवति। तत्रेदं बोध्यम्। सामान्यं येन संबन्धेन ज्ञायते तेन संबन्धेनाधि-

पदार्थों के ( भाव ) प्रकारी भूत धर्म को ही सामान्य शब्द से कहते हैं। वह सामान्य कहीं नित्य है जैसे भूमत्व आदि– कहीं अनित्य है जैसे घट आदि। जहाँ एक ही घट संयोगसम्बन्ध से भूतल में और समवाय सम्बन्ध से कपाल में ज्ञात हुवा वहाँ ज्ञात होने के बाद "सर्वाणि भूतलानि संयोगेन घटवन्ति" एवं "सव कपालाः समवायेन घटवन्तः" इस प्रकार से संयोग सम्बन्ध से सकल घटवत् भूतलों का—एवं समवाय सम्बन्ध से सकल घट वाले कपालों का ज्ञान होता है— "तत्रेदं बोध्यम्" इस का अभिप्राय यह है कि ऐसे स्थलों में ज्ञायमान अनित्यसामान्य ही आश्रय

---

समवायाभावात्, अन्धकारादौ धूमत्वभ्रमजन्यचाक्षुषे व्यभिचाराच्चेति चेन्न। लौकिकविषयतासंबन्धावच्छिन्नचाक्षुषत्वावच्छिन्नकार्यतानिरूपिता या चक्षुर्जनकता तदवच्छेदकसंबन्धत्वेन चक्षुःसन्निकर्षमात्रस्यैवानुगमादिति ध्येयम्। यत्र चक्षुः संयोगे विद्यमानेपि दोषवशान्न धूमत्वप्रकारकं चाक्षुषं, किन्तु धूमत्वप्रकारकं स्मरणं तदुत्तरं धूमत्वसामान्यलक्षणाजन्यचाक्षुषापत्ति वारणाय ज्ञाने तदिद्रियजन्यत्वमपि निवेशनीयम्। तथा च तदिन्द्रियजन्यतावच्छेदकतया सिद्धस्य चाक्षुषत्वादेर्निवेशः। तथाच तत्पुरुषीयधूमत्वप्रकारकचाक्षुषं प्रति तत्पुरुषीयचक्षुः सन्निकृष्टधार्मिकचाक्षुष-प्रकारतापन्न धूमत्वं हेतुरिति फलितम्। कार्यस्याऽलौकिकमुख्यविशेष्यत्वं, कारणस्य तु समवायः प्रत्यासत्तिः। न च कार्यतावच्छेदककोटौ यावद्धूमविषयकत्वं विवेशनीयम्। यावद्धूमविषयकत्वस्य जन्यतावच्छेदकत्वानुपगमेपि विनिगमनाविरहेण यावस्तु धूमेषु कारणसत्वेन तत्र विषयतासंबन्धेन ज्ञानोत्पत्त्यैव यावद्धूमविषयकत्व-निर्वाहादिति ध्येयम्।

एवं घटत्वादिकमन्तर्भाव्यापि कार्यकारणभावो बोध्यः। ननु अणुत्वेन यत्किंचिदणूपस्थितौ अणुत्वसामान्यलक्षणया सकलाणुगोचरोमानसबोधो न स्यात्, अणुत्वेन सह मनसः लौकिकसन्निकर्षस्य, ज्ञाने इन्द्रियजन्यत्वस्य चाभावादत आह। इदंचेति। निरुक्तप्रकारताविशिष्टसामान्यमित्यर्थः। अवधारणार्थकश्चशब्दः "वहिरिन्द्रियस्थले" इत्युत्तरं योजनीयः। बोध्यमिति। प्रत्यासत्तिविधया कारणमिति बोध्यमित्यर्थः। मानसस्थले त्विति। अवधारणार्थकस्तुशब्दः सामान्यमित्युत्तरं योजनीयः। तथाच केवलज्ञानप्रकारताविशिष्टसामान्यं प्रत्यासत्तिरिति भावः ६३।

ननु संयोगसंबन्धेन घटादिप्रकारकभूतलविशेष्यकं चाक्षुषं न स्यात्, तद्घटादेस्तादृशप्रकारतावत्त्वेपि तस्य सामान्यरूपत्वाभावादित्याशंकां परिहरति। परन्त्वित्यादिना। समानानां भाव इति। तथाच प्रकृते सामान्यपदं यौगिकमेव

करणानां प्रत्यासत्तिः। किन्तु यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्वेषां तद्घटवतां भानं न स्यात्, सामान्यस्य तदानीमभावात्। किंचेन्द्रियसंबद्धविशेष्यकं घट इति ज्ञानं जातं तत्र परदिने इन्द्रियसंबन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्वात्तादृशज्ञानं कुतो न जायते, तस्मात्सामान्यविषयकं ज्ञानं प्रत्यासत्तिः, नतु सामान्य-

के प्रत्यक्ष में प्रत्यासत्ति होता है। परन्तु यहाँ इतना और ज्ञातव्य है कि सामान्य जिस सम्बन्ध से अर्थात् चक्षु आदि इन्द्रियसम्बन्धवद्विशेष्यकज्ञान में सामान्य जिस सम्बन्ध से विशेषण होता है—वह सामान्य उसी सम्बन्ध से अर्थात् इन्द्रियसम्बन्धवद् विशेष्यकज्ञान की प्रकारता के अवच्छेदक=नियामक जो सम्बन्ध उसी सम्बन्ध से अपने अधिकरणों (आश्रयों) के अलौकिक प्रत्यक्ष में प्रत्यासत्ति (अलौकिक सान्निकर्ष) हो सकता है—जैसे "संयोगेनघटवद्भूतलम्" इस ज्ञान में घट में प्रकारता संयोग सम्बन्ध से अवच्छिन्न=युक्त है अतः यह उस प्रकारता के नियामक संयोगसम्बन्ध से ही अवच्छिन्न जो प्रकारता उस प्रकारता से विशिष्ट घटात्मक अनित्यसामान्य अपने अधिकरण समस्तभूतलों के अलौकिक प्रत्यक्ष में सन्निकर्ष हो सकता है—अन्यसम्बन्ध से नहीं अन्यथा कालिक सम्बन्ध से घट पट में भी है—काल आदि में भी है—अतः इससे 'घटवान् पटः' 'घटवान् कालः' यह आपत्ति लग जायगी।

इस प्राचीनमत से ज्ञायमान सामान्य को प्रत्यासत्ति बतलाकर अब नवीनमत से सामान्य ज्ञान को अलौकिकप्रत्यक्ष में सन्निकर्ष बतलाते हैं—अर्थात् प्राचीनमत को दूषित करते हैं—"किन्तु यत्र" तथा "किञ्च" इस ग्रन्थ से। प्रश्न—जहाँ "संयोगेन घटवद् भूतलम्" इत्याकारक भूतल में संयोगसम्बन्ध से घट का चाक्षुष प्रत्यक्ष हुवा—उसके बाद किसी कारणवश वह घट नष्ट

---

ननु पारिभाषिकमिति भावः। तच्चेति। निरुक्तसामान्यं चेत्यर्थः। क्वचिदिति। किंचिदित्यर्थः। एवमग्रेपि। घटत्वादिरूपयत्किंचित्सामान्यं नित्यमित्यर्थः। तद्घटवतामिति। संयोगेन तद्घटवतां समवायेन तद्घटवतामित्यर्थः भूतलादीनामिति। आदिना संयोगेन तद्घटाधिकरणद्रव्यान्तरस्य संग्रहः। तत्रेदं बोध्यमिति। तादृशस्थले निरुक्तप्रकारताविशिष्टघटादिकमनित्यसामान्यं प्रत्यासत्तिरिति बोध्यमित्यर्थः। तथाच नोक्ताशंकेति भावः। ननु समवायेन घटत्वप्रकारकचाक्षुषोत्तरं कालिकेन घटत्वाश्रयकालमुख्यविशेष्यकयावद्विषयक चाक्षुषापत्तिः, निरुक्तप्रकारताविशिष्टघटत्वस्य कालिकेन काले सत्वादत आह। परन्त्विति। येन संबन्धेनेति। इन्द्रियसंबद्धे इति शेषः। प्रत्यासत्तिरिति। बोध्यमिति शेषः। तथाचाऽलौकिकमुख्यविशेष्यतया समवायसंबन्धावच्छिन्न घटत्वप्रकारकचाक्षुषं प्रति समवायसंबन्धावच्छिन्न चाक्षुषप्रकारतायन्नघटत्वं समवायेन हेतुरतो नातिप्रसंग इति भावः। प्राचीनमतेन ज्ञायमानस्य प्रत्यासत्तित्वमुपपाद्य नव्यमतं सिद्धान्तयितुं प्राचीनमतं दूषयति। किन्त्विति। सत्वादिति। तादृशविशिष्टसामान्यस्य शुद्धसामान्यात्मति-

**आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते ॥**

**मित्याह । आसत्तिरिति । आसत्तिः = प्रत्यासत्तिरित्यर्थः । तथा च सामान्य-लक्षण इत्यत्र लक्षणशब्दस्य विषयोर्थः । तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते ।**

हो गया–सो वहाँ उस घट के नाश होने के बाद भी पूर्वोक्त चाक्षुषप्रत्यक्षात्मक अनुभवजन्य संस्कार बल से "भूतलं तद्घटवत्" यह स्मरण होने के अनन्तर सामान्यलक्षणाप्रत्यासत्ति के द्वारा तद्घटवाले समस्त अधिकरणों (भूतलों) का "तद्घटवन्ति भूतलानि" इत्याकारक अलौकिक भान होता है–सो वह ज्ञायमानसामान्य को प्रत्यासत्ति पक्ष में नहीं हो सकेगा–क्योंकि कारणीभूत सामान्य (तद्घट) नहीं है. (नष्ट हो चुका) सो कारण के व्यतिरेक (न होने पर) कार्य का होना यह व्यतिरेक व्यभिचार कहलाता है–यह प्राचीनमत में प्रथमदोष व्यतिरेक व्यभिचार हुवा। किञ्च दूसरी बात यह है कि इन्द्रियसम्बद्धविशेष्यक "अयं घटः" यह ज्ञान आज हुवा-वहाँ कल अर्थात् दूसरे दिन घट के साथ इन्द्रियसम्बन्ध के विना भी 'सर्वे घटाः' इत्याकारक अलौकिकभान प्राचीन मत में होना चाहिये–कारण कि आज हमको जो चक्षुरिन्द्रिय का घट के सम्बन्ध होकर "अयं घटः" यह ज्ञान हुवा–उस ज्ञान में प्रकारीभूतसामान्य (घटत्व) नित्य होने के कारण सर्वदा रहेगा तो कल भी रहेगा–तो सामान्यरूप कारण जब कि है तो कार्य (अलौकिक प्रत्यक्ष) क्यों नहीं होता है यह अन्वयव्यभिचार प्राचीन नत में दूसरा दोष हुवा–अतः सामान्य ज्ञान को ही प्रत्यासत्ति (सन्निकर्ष मानना चाहिये चाहिये–सो अब सामान्यलक्षणाशब्द का अर्थ हो गया–सामान्यविषयक ज्ञानं। प्रश्न–प्राचीन कहता है कि सामान्यज्ञान को प्रत्यासत्ति माननेसे तुम्हारे यहाँ दोनों दोष कैसे वारित हो गये। उत्तर—नवीन कहता है कि प्रथमपक्ष में घट के नाश होने पर भी घट का ज्ञान तो है ही। द्वितीय पक्ष में सामान्य-घटत्व के नित्य-होने पर भी इन्द्रियसम्बन्ध के विना उसका ज्ञान सर्वथा असंभव है वही कहा है कि "सामान्य-विषयकं ज्ञानं प्रत्यासत्तिर्नतु सामान्यम्"। प्रश्न–सामान्यलक्षणशब्द से सामान्यविषयकज्ञान यह अर्थ कैसे आया। उत्तर–लक्षण शब्द का ही विषय अर्थ है अतः सामान्यविषयकज्ञान को प्रत्यासत्तित्व का लाभ हो गया। वही कहा है कि "तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरि-

---

रेकादिति भावः। वस्तुतः प्राचीनमते इन्द्रियभेदेन विषयभेदेन च कार्यकारणभावानन्त्य प्रसंगो बोध्यः। **लक्षणशब्दस्य विषयोऽर्थ** इति। तथाच सामान्यं विषयो यस्येति बहुव्रीहिलभ्यार्थमाह। **सामान्यविषयकं ज्ञानमिति**। इन्द्रियसंबद्धविशेष्यकं सामान्य प्रकारकज्ञानमित्यर्थः। तथाच तत्पुरुषीयघटत्वादिप्रकारकचाक्षुषं प्रति तदीयचक्षुः-सन्निकृष्टधर्मिकतदीयघटत्वादिप्रकारकचाक्षुषत्वेन हेतुत्वम्। अलौकिकमुख्य विशेष्य-त्वं कार्यतावच्छेदकसंबन्धः। कारणतावच्छेदकसंबन्धश्च स्वप्रकारीभूतसामान्याश्रयनिष्ठ विशेष्यत्वम्। वस्तुतो नव्यमते तत्प्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति "निर्विकल्पकादि-साधारण" तद्विषयकज्ञानत्वेनैव हेतुत्वम्, न तु तत्प्रकारकज्ञानत्वेन, गौरवात्। अत्र च स्वप्रकारीभततत्तत्सामान्याश्रयनिष्ठविशेष्यत्वं कार्यतावच्छेदकसंबन्धः,

तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्षते ॥६४॥

ननु चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्तते तत्र सकलघटादीनां चाक्षुषप्रत्यक्षं स्यादत आह तदिति। अस्यार्थः—यदा बहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किंचिद्धर्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानस्य सामग्री अपेक्षिता, सा च सामग्री चक्षुःसंयोगालोकसंयोगादिकं, तेनान्धकारादौ चक्षुरादिना तादृशज्ञानं न जायते ॥६४॥

त्यर्यो लभ्यते"। प्रश्न—जहाँ चक्षुःसंयोग के बिना ही सामान्य (घटत्व) का शाब्दिक-या स्मरणात्मक ज्ञान हो गया है वहाँ "सर्वेघटाः" इत्याकारक सकल घटों का अलौकिक चाक्षुष प्रत्यक्ष होना चाहिये। उत्तर—आप जब चक्षुरादि बहिरिन्द्रिय से सामान्य लक्षणा के द्वारा अलौकिक चाक्षुषप्रत्यक्ष करना चाहें—उस समय यत्किञ्चित् धर्मी (उस घट में) उस सामान्य (घटत्व) का चक्षु आदि इन्द्रिय से उत्पन्न होने वाले ज्ञान की सामग्री अपेक्षित है। (उस सामग्री के बिना वह ज्ञान नहीं हो सकता है) वह सामग्री चक्षुः संयोग आदि है। अतः पूर्वोक्त स्थल में चक्षुः संयोग के बिना अलौकिक चाक्षुष प्रत्यक्ष नहीं हो सकता है। आलोकसंयोग भी सामग्र्यन्तर्गत है—अतः अन्धकार में घट आदि का चक्षु से अलौकिक चाक्षुष प्रत्यक्ष नहीं होता है। ६४॥

---

कारणतावच्छेदकसंबन्धश्च स्वविषयीभूततत्तत्सामान्याश्रयनिष्ठविषयत्वरूपः। अतो नातिप्रसंगः।

नन्वेवं निर्विकल्पकोत्तरं जातस्य घटत्वविशिष्टप्रत्यक्षस्यापि यावद्घटविषयकत्वापत्तिः, इष्टत्वात्। सामान्यप्रकारकत्वेन हेतुत्वोपगमेऽपि निर्विकल्पकतृतीयक्षणे यावद्घटावगाहिप्रत्यक्षोत्पत्त्या क्षणविलंबस्य शपथनिर्णेयत्वात्। न च विशेष्यतासंबन्धेन तत्प्रकारकप्रत्यक्षत्वावच्छिन्नं प्रतीत्येवोच्यतां, किं निष्ठान्तेनेति वाच्यम्। घटत्वपटत्व "निर्विकल्पक" ज्ञानोत्तरं घटः पटश्चेति समूहालंबनस्य यावद्घटविषयकप्रत्यक्षस्यानुपपत्तिः, समूहालंबनात्मकतादृशघटत्वप्रकारकप्रत्यक्षस्य विशेष्यतासंबन्धेन पटेऽप्युत्पत्त्या तत्र स्वविषयीभूतघटत्वाश्रयनिष्ठविषयतासंबन्धेन घटत्वज्ञानविरहात्। तदुपादाने तु तादृशसमूहालंबनस्य स्वप्रकारीभूतघटत्वाश्रयनिष्ठविशेष्यतासंबन्धेन घटेऽप्युत्पत्त्या न व्यभिचारः। अत्रेदं बोध्यम्—नव्यमते सामान्यविषयकं ज्ञानं प्रत्यासत्तिः। कार्यकारणभावश्च नात्मनिष्ठप्रत्यासत्त्या "विषयनिष्ठप्रत्यासत्यस्यैव हेतुत्वमिति" प्राचीनप्रवादानुरोधात्, किन्तु विषयनिष्ठप्रत्यासत्त्यैव। एवं चात्र कल्पे तत्पुरुषीयत्वनिवेश आवश्यकः, अन्यथा घटचक्षुःसंयोगकाले निर्विकल्पकक्षणे वा सामान्यलक्षणाजन्यप्रत्यक्षापत्तिः, पुमन्तरीयज्ञानमादाय तादृशज्ञानविषयीभूतघटत्वाश्रयनिष्ठविषयतायाः घटे सत्वात्। यद्यपि विशिष्टबुद्धौ विशेषणज्ञानस्य समवायघटितसामानाधिकरण्यप्रत्यासत्त्या कारणतया तद्विरहान्न तदापत्तिः, तथापि घटत्वप्रकारकज्ञानदशायां कालिकेन पुरुषान्तरस्य घटत्वप्रकारकं ज्ञानं तत्र

समवायेन घटत्वप्रकारकज्ञानवतः पुरुषस्य कालिकेन तदाश्रयप्रत्यक्षापत्तिः । तदानीं कालिकेतरसंबन्धानवच्छिन्नतन्निष्ठविषयताशालिपुमन्तरीयज्ञानरूपहेतोः सत्वात्, तादृशज्ञानस्य चोक्तसंबन्धेन घटे सत्वात् । नचैवं नव्यमते किं लाघवमिति वाच्यम् । इन्द्रियभेदेन कार्यकारणभावभेदविरहादिति ध्येयम् । ननु "तदिन्द्रियजन्यत्व" चाक्षुषत्वादेरनिवेशे घटादेः स्पार्शनोत्तरं यावद्घटविषयकचाक्षुषापत्तिः, घटत्वज्ञानसत्वादित्याशंकते । नन्विति । स्पार्शनादिसहकृतेन घटत्वादिज्ञानेन घटादिचाक्षुषाद्यजननात्तदिन्द्रियजन्येति बोधविशेषणं मूले । धूमादौ वाष्पत्वादिभ्रमजनकदोषदशायां चक्षुःकरणकबोधसामग्रीसत्वेपि धूमत्वादिप्रकारकतदाश्रयचाक्षुषाभावात्तद्धर्मेति । तथाच धूमचक्षुःसंयोगसत्वेपि धूमादौ धूमत्वादिग्रहप्रतिबन्धकदोषसमवधाने तादृशसहकारिविरहादेव नापत्तिरिति भावः । सा च सामग्रीति । अवधारणार्थकश्चशब्दः संयोगादिकमित्युत्तरं योजनीयः । अयंभावः सामान्यलक्षणाजन्य घटत्वादिप्रकारकचाक्षुषत्वव्यापकं घटत्वादिप्रकारकलौकिकचाक्षुषत्वम्, इति व्याप्यधर्मावच्छिन्ने कार्ये जननीये व्यापकधर्मावच्छिन्नकार्यसामग्री अपेक्षितेति सामान्यलक्षणाजन्ये समवायादिना घटत्वप्रकारकघटत्वाश्रयविशेष्यकचाक्षुषे जननीये घटत्वप्रकारतानिरूपितयत्किंचिद्घटनिष्ठलौकिकविशेष्यताशालिसामग्री, एवं तादृशसंबन्धेन स्पार्शनादिपूर्वं निरुक्तलौकिकविशेष्यताशालिसामग्री अपेक्षिता । सा च सामग्री महत्वावच्छिन्नोद्भूतरूपावच्छिन्नालोकसंयोगावच्छिन्न चक्षुःसंयोगरूपा । एवं महत्वावच्छिन्नोद्भूतस्पर्शावच्छिन्नत्वक्संयोगरूपा च । तत एव तत्पुरुषीयचक्षुःसंयोगादिघटितसामग्रीविरहदशायां तत्पुरुषीयसामान्यप्रत्यासत्तिजन्यघटत्वादिप्रकारकचाक्षुषापादनं न संभवतीति नव्यमते अतिरिक्तकार्यकारणभावस्य अकल्पनात्, इन्द्रियभेदेन कार्यकारणभावविरहाच्च लाघवमक्षतमेवेति ध्येयम् ।

अथ सामान्यलक्षणाजन्यज्ञाने लौकिकसन्निकर्षस्य केन रूपेण हेतुत्वम्, घटचक्षुःसंयोगाभावदशायां घटे घटत्वाभावभ्रमदशायां पटचक्षुःसंयोगदशायामपि घटत्वेन पटांशे लौकिकविषयताशालियावद्घटविषयकप्रत्यक्षोत्पत्ते व्यभिचारान्न घटचक्षुःसंयोगस्य सामग्रीत्वम्, एवं घटत्वप्रकारतानिरूपितविशेष्यतासंबन्धेन प्रत्यक्षमनागतघटे, तत्र समवायेन चक्षुःसंयोगस्य व्यभिचारादिति चेन्न । घटत्वप्रकारकघटविशेष्यकप्रत्यक्षं प्रति घटत्वज्ञानस्य हेतुता । विशेषसामग्री चाऽननुगत-.सत्संयोगादिरेव । कारणता तु तस्य लौकिकप्रत्यक्षं प्रति चक्षुःसंयोगत्वादिना क्लृप्तेनैव । अथवा घटत्वप्रकारतानिरूपितघटमुख्यशालिचाक्षुषं प्रति घटत्वप्रकारतानिरूपितमुख्यविशेष्यताश्रयचक्षुःसंयोगत्वादिनैव हेतुत्वम् । पटे घटत्वभ्रमदशायां पटसंयोग एव तादृश इति न व्यभिचार इति संक्षेपः ।

ननु सामान्यं यदि न प्रत्यासत्तिः, किन्तु तद्ज्ञानं, तदा ज्ञानलक्षणलक्षणया सह एतस्याः को भेद इत्याशंकते । नन्विति । यदि ज्ञानरूपेति । अत्र यदि शब्दः सामान्यलक्षणापीत्युत्तरं योजनीयः । तस्यैवेति । एवकारेण तदाश्रयस्य व्यवच्छेदः । तथाच कार्यकारणभावभेदात्तयोर्भेदः । तत्प्रकारकतदाश्रयप्रत्यक्षं प्रति तद्विषयकज्ञानं

विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।

ननु ज्ञानलक्षणाप्रत्यासत्तिर्यदि ज्ञानरूपा, सामान्यलक्षणाऽपि ज्ञानरूपा तदा तयोर्भेदो न स्यादत आह । विषयीति । सामान्यज्ञानरूपा हि प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति, ज्ञानलक्षणाप्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिः । अत्रायमर्थः । प्रत्यक्षे सन्निकर्षं विना भानं न संभवति । तथाच सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च भानं कथं भवेत्, तदर्थं सामान्यलक्षणा स्वीक्रियते । न च सकलवह्नि-

प्रश्न—सामान्य लक्षणासन्निकर्ष भी पूर्वोक्तरीत्याज्ञानस्वरूप ही सिद्ध हुवा–और ज्ञान लक्षणा प्रत्यासत्ति ( सन्निकर्ष ) तो ज्ञानरूप है ही–तब फिर इन दोनों सन्निकर्षों में क्या अन्तर हुवा । उत्तर—सामान्यलक्षणा सन्निकर्ष अपने आश्रय के अलौकिक प्रत्यक्ष में कारण होता है अर्थात् सामान्य के सकल आश्रयों का प्रत्यक्ष सामान्य लक्षणा के द्वारा होता है— जैसे घटत्वज्ञानरूप सामान्यलक्षणा से घटत्वाश्रय सकल घटों का अलौकिक प्रत्यक्ष होता है (सर्वे घटाः) इत्याकारक । और ज्ञानलक्षणा सन्निकर्ष जिसका विषयी (ज्ञान होता है उसी का व्यापार सन्निकर्ष होता है—आश्रय का नहीं । जैसे "सुरभि चन्दनम्" यहाँ पर चन्दन को देखकर सौरभ (सुगन्ध) का ही स्मरणात्मक ज्ञानरूप ज्ञानलक्षणा सन्निकर्ष के द्वारा अलौकिकभान होता है–न कि सौरभाश्रय चन्दन का–क्योंकि 'चक्षुःसंयुक्तमनः संयुक्तात्मसमवेतस्मृतिविषयत्व' यही ज्ञानलक्षणा वस्तु है । सो चन्दन को देखने के बाद सुगन्ध की स्मृति होती है अतः तादृशस्मृतिविषयत्वरूप ज्ञानलक्षणा सौरभ का ही सन्निकर्ष है–चन्दन का नहीं–क्योंकि चन्दन का तो चाक्षुष ही हो रहा है । नैयायिकों का अभिप्राय यह है कि सामान्य लक्षणा अलौकिक सन्निकर्ष न मानने पर समस्त सामान्याश्रयों का भान नहीं हो सकेगा–क्योंकि प्रत्यक्षमात्र में सन्निकर्ष कारण है । वही कहा है कि "प्रत्यक्षे सन्निकर्षं विना" इत्यादि । इसलिये सामान्य लक्षणा के बिना धूमत्वेन समस्त धूमों का वन्हित्वेन समस्त वन्हियों का अलौकिक प्रत्यक्ष कैसे होगा—इसके लिये सामान्य लक्षणा का स्वीकार करना आवश्यक है । प्रश्न—सकलवन्हि तथा

---

हेतुरिति सामान्यलक्षणायाः कार्यकारणभावः । अलौकिकविषयतासंबन्धेन तद्विषयकप्रत्यक्षं प्रति विषयतासंबन्धेन तद्ज्ञानं हेतुरितिज्ञानलक्षणायाः कार्यकारणभावः । एवं तद्धर्मप्रकारकतदाश्रयप्रत्यक्षत्व, तद्वृत्तिधर्माप्रकारकलौकिकसन्निकर्षाजन्यतद्विषयकप्रत्यक्षत्वयोः कार्यतावच्छेदकयोर्भेदादित्यपि बोध्यम् । सामान्यलक्षणास्वीकारे बीजमाह । अयमर्थ इति । अयं भावइ त्यर्थः । भानं = विषयता न संभवतीति । प्रत्यक्षनिरूपितविषयत्व सन्निकर्षं विना स्यातु नार्हतीत्यर्थः । तथा च सन्निकर्षस्य प्रत्यक्षनिरूपितविषयताव्यापकत्वेन व्यापकीभूतसन्निकर्षाभावे व्याप्यभूतविषयताया अभावप्रसंगादिति भावः ।

धूमभानाऽभावे का क्षतिरिति वाच्यम्। प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वा-दन्यधूमस्य चाऽनुपस्थितत्वाद् धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः। मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसंशयः संभवति। न च सामान्यलक्षणास्वीकारे प्रमेयत्वेन सकलप्रमेयज्ञाने जाते सार्वज्ञापत्तिरिति वाच्यम्। प्रमेयत्वेन सकलप्रमेयज्ञाने जातेपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्वज्ञाभावात्।

एवं ज्ञानलक्षणाया अस्वीकारे सुरभिचन्दनमितिज्ञाने सौरभभानं कथं भवेत्। यद्यपि सामान्यलक्षणयाऽपि सौरभभानं संभवति, तथापि सौरभत्वस्य भानं ज्ञानलक्षणया। एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटस्यानुव्यवसाये भानं ज्ञानलक्षणया।

सकलधूम का भान यदि न हो तो क्याहानि है। उत्तर—'धूमो वन्हिव्याप्यो न वा' यह सशयपक्षता अनुपपन्न हो जावेगी-क्योंकि प्रत्यक्षीभूत महानसीय आदि धूम में तो वन्हि का व्याप्तिरूप सम्बन्ध ही निश्चित है-और अन्य कालान्तरीय-देशान्तरीय, धूम की उपस्थिति ही नहीं है-तो फिर संशय होगा किस धूम में। और मेरे मत (नैयायिक के) में सामान्यलक्षणा से सकल धूमों की उपस्थिति होने पर कालान्तरीय-देशान्तरीय धूम में व्याप्तिनिश्चय न होने प्रयुक्त वह्नि व्याप्ति का संशय हो जायेगा। प्रश्न—सामान्यलक्षणा यदि स्वीकार कर ली गयी तब प्रमेयत्वरूप सामान्य लक्षणा के द्वारा समस्त प्रमेयो का ज्ञान हो जाने से सार्वज्ञ्य सर्वज्ञता) की आपत्ति हो जावेगी। उत्तर—प्रमेयत्वरूप सामान्यलक्षणा के द्वारा सामान्यतः यावत प्रमेय का ज्ञान होने पर भी घटत्व-पट आदि तत्तद्विशेषधर्मों के द्वारा घट-पट आदि सकल धर्मीरूप पदार्थ अज्ञात होने के नाते सार्वज्ञ्यदोष की आपत्ति नहीं है। इसी प्रकार ज्ञानलक्षणा यदि नहीं मानेंगे तो "सुरभिचन्दनम्" इस ज्ञान में सौरभ का भान कैसे होगा-अतः ज्ञानलक्षणा भी मानना चाहिये। प्रश्न—'सुरभि चन्दनम्' यहाँ पर सौरभत्वरूप सामान्यलक्षणा के द्वारा सौरभ का ज्ञान हो सकता है तो फिर ज्ञानलक्षणा क्यों मानना। उत्तर—उक्तस्थल में सौरभ का भान सामान्यलक्षणा से होने पर भी सौरभत्व का भान ज्ञानलक्षणा से ही होगा—अतः "सुरभि-चन्दनम्" यहां पर सौरभत्व के भान के लिये ज्ञान लक्षणा माननी चाहिये। इसी प्रकार जहाँ धमत्वरूप से धूलीपटल का ज्ञान हुवा-अर्थात् "धमत्वेन धलीपटल महं जानमि" यह अनुव्यव-साय हुवा-इस अनुव्यवसाय में धूलीपटल का भान ज्ञानलक्षणा से ही होगा—अतः ज्ञानलक्षणा

---

सामान्यलक्षणायाः कारणत्वानंगीकारे दोषं प्रदर्श्य ज्ञानलक्षणायाः कारणत्वानंगीकारे दोषमाह। **एवमिति। कथं भवेदिति।** चन्दनखण्डस्य चाक्षुषे जायमाने उपस्थितसौरभभानं न स्यात्, सौरभांशे लौकिकचक्षुःसन्निकर्षाभावात्। चन्दनखण्डे चक्षुसंयोगदशायां सौरभांशे चक्षुःसंयुक्तसमवायसत्वेपि तस्य लौकिक-

त्वाभादिदित्यर्थः। न सामान्यलक्षणयैव सौरभमानसंभवः।, सौरभत्वप्रकारक-लौकिकप्रत्यक्षसामग्र्याः सहकारिण्या विरहेण सौरभत्वसामान्यलक्षणयापि-सौरभभानाऽसंभवात्। शंकते। **यद्यपीति। सामान्यलक्षणयापीति।** सामान्यलक्षणयैवेत्यर्थः। **सौरभभानं संभवतीति।** सौरभत्वप्रकारेण सकल-सौरभस्य भानं संभवतीत्यर्थः। एवंच ज्ञानलक्षणा न स्वीकार्येति भावः। सौरभत्वप्रकारकलौकिकप्रत्यक्ष-सौरभत्वावच्छिन्नप्रकारकप्रत्यक्षाऽन्यतरसामग्रीसहका-रेणैव तस्याः फलजनकत्वांगीकारात्, प्रकृते च द्वितीयसामग्र्याः सहकारिण्याः सत्वादित्यभिप्रायः। **सौरभत्वस्य भान मिति।** स्वरूपतःसौरभत्वस्य भानमित्यर्थः। तेन प्रमेयत्वादिसामान्यलक्षणया सौरभत्वादेर्भानेपि न क्षतिः। तथा च सुरभि चन्द-नमितिचाक्षुपे सौरभत्वांशे धर्मान्तरस्याऽगृहीततया सामान्यलक्षणप्रत्यासत्त्याऽ-निर्वाहादिति भावः। न न्वेवमपि सौरभत्वपर्यन्तानुधावनं व्यर्थम्, सौरभत्वप्रकार-तानिरूपितसौरभविशेष्यताशालिचाक्षुपे सौरभत्वप्रकारकलौकिकप्रत्यक्षसामग्र्याः अपेक्षणीयतया प्रकृते तदसंभवेन सौरभभानार्थं सौरभत्वसामान्यलक्षणातो भानासंभ-वेन सौरभभानार्थं ज्ञानलक्षणाया आवश्यकत्वादिति चेन्न। नव्यमते प्रकारसाधा-रणविशेष्ये लौकिकचाक्षुपसामग्र्या अनपेक्षणात्, सौरभमुख्यचाक्षुषं प्रत्येव सौर-भांशे तस्याः हेतुत्वादिति। **एवमिति। अनुव्यवसाये इति।** धूपत्वेन धूलीपट-लज्ञानप्रकारक "धूमवानहमित्यनुव्यवसाये"इत्यर्थः। **ज्ञानलक्षणया** ज्ञानलक्षणयैव। तत्र धूलीपाटलेन सह लौकिकसन्निकर्षाभावात्, स्वविषयधूमत्ववत्त्वसंबन्धेन सामान्यलक्षणायास्तत्राऽभावाच्च धूलीपटलस्तत्वस्याऽज्ञानाच्च। ज्ञानलक्षणाप्रत्यासत्तिस्तु चक्षुःसंयुक्तमनः संयुक्तात्मसमवेतस्मृतिविषयस्वरूपा।

ज्ञानलक्षणायाः कार्यकारणभावस्तु विषयतासंबन्धेन "लौकिकालौकिक-साधारण" तत्प्रकारकप्रत्यक्षं प्रति विषयतासंबन्धेन तद्ज्ञानं हेतुरित्याकारकः। अत एव प्राथमिकस्य घटत्वचैत्रत्वादिप्रकारकप्रत्यक्षस्य घटत्वचैत्रत्वादिनिर्विकल्पकं बिनाऽनुपपत्तेस्तत्सिद्धिरप्यावश्यकी। अयं भावः—लौकिकसन्निकर्षं विनापि सोयमित्यादिप्रत्यभिज्ञायां स्मरणाद्युपनीततत्तायाः, घटो नास्तीत्यभावप्रत्यक्षादौ प्रतियोग्यादीनां, तत्तदिन्द्रियग्रहणयोग्यतां बिनापि सुरभि चन्दनमित्याकारकचाक्षु-षादौ सौरभादीनां घटमहं जानामीत्याकारकमानसादौ घटादीनां ज्ञानलक्षणाप्रत्या-सत्तितो भानाद् ज्ञानस्य सन्निकर्षमुद्रया प्रत्यक्षहेतुताकल्प्यते "ज्ञानरूपसन्निकर्ष-जन्यप्रत्यक्षमेवो" पनीतभानमुच्यते इत्यन्यत्र विस्तरः।

**चिन्ताविशेषोपि सहकारीति।** चिन्ताविशेष=योगाभ्यासजनितधर्म-विशेषो-भयसहकृतमनसा युञ्जानस्य सूक्ष्मपदार्थविषयकं मानसं भवति। यथादि-न्द्रियस्य यद्योग्यं तत्सर्वं सूक्ष्ममसन्निकृष्टं मूर्तं भव्यं च योगाभ्यासजनितधर्म-विशेषसहकृततत्तदिन्द्रियेण गृह्यते। परन्तु चक्षुरादियोग्यं त्वगादिना न गृह्यते। अतएव।

योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥६५॥
युक्तस्य सर्वदाभानं चिन्तासहकृतोऽपरः।

योगज इति। योगाभ्यासजनितो धर्मविशेषः श्रुतिपुराणादिप्रतिपाद्य इत्यर्थः। युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्मस्यापि द्वैविध्यमिति भावः ॥६५॥

युक्तस्येति युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादि निखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति, द्वितीयस्य तु चिन्ताविशेषोपि सहकारीति।

इति श्री विश्वनाथ पञ्चानन भट्टाचार्य विरचितायां सिद्धान्तमुक्तावल्यां प्रत्यक्ष परिच्छेदः समाप्तः।

अवश्य मानना चाहिये। "योगज" अलौकिक सन्निकर्ष युक्त-युञ्जान-के भेद से दो प्रकार का है। योगाभ्यास से उत्पन्न हुवा "योगज अलौकिक सन्निकर्ष" रूप धर्मविशेष श्रुति-पुराण आदि से प्रतिपाद्य है। युक्त-युञ्जान-रूप योगी दो प्रकार के हैं-अतःउनका धर्म जो योगज है-वह भी दो प्रकार का है। इससे यह सिद्ध हुवा कि एक युक्त योगी होता है--दूसरा युञ्जान योगी होता है—उसमें भी युक्त योगी को योगज धर्म की सहायता से युक्त मन के द्वारा आकाश-परमाणु आदि सकल पदार्थों का ज्ञान सर्वदा ही होता रहता है और दूसरे युञ्जान योगी को आकाश-परमाणु आदि समस्त पदार्थों का ज्ञान चिन्ताविशेष (ध्यान विशेष) करने पर ही होता है।

श्री ज्वालाप्रसाद विरचित सिद्धान्त मुक्तावली भाषाटीका प्रत्यक्ष खण्ड समाप्त।

---

तत्राप्यतिशयो दृष्टः स्वस्वार्थानतिलंघनात्।

स्थूलसूक्ष्मादिबुद्धौ स्यात् न रूपे श्रोत्रवृत्तितेति प्रशस्तदेवः अस्यार्थः— तत्र = योगाभ्यासजनितधर्मविशेषे। अतिशयोपि = सामर्थ्यविशेषोपि। दृष्टः = प्रमितः। स्वस्वार्थानतिलंघनादिति लाब्लोपे पञ्चमी स्वस्वर्थाननतिलंघ्येत्यर्थः। तत्तदिन्द्रिययोग्ययावदर्थान्विषयीकृत्येत्यर्थः। उक्ताऽर्थमेव विवृणोति। स्थूलसूक्ष्मादिति। बुद्धौ=प्रत्यक्षे। सामर्थ्यविशेषाभावमुपपादयति। न रूपे इति। स्यादिति। नास्तीत्यर्थः। श्रोत्रवृत्तिता।

ज्वालाप्रसादकृते प्रत्यक्षे च सविस्तरे समाप्तिमगमच्चैव मुक्तावलिविलासनी।

शुभं भूयात्।

❀ श्रीः ❀

# अनुमितेः प्रमान्तरत्वनिरूपणम्।

श्रीरस्तु अथ लिंग परामर्शानन्तरं विलक्षणप्रमित्युदयात्, तत्करणतयैव विलक्षणप्रमाणान्तरता, लिङ्गपरामर्श एवानुमानमित्यभिधीयते।

अथ वन्हिव्याप्यधूमवान्पर्वत इति परामर्शानन्तरं तदात्मकविशेषदर्शन-मूलकपर्वतोवन्हिमानिति प्रत्यक्षनिर्णयादेव वन्हिगोचरप्रवृत्त्युपपत्तेरनुमित्यात्मक-विलक्षणप्रमितेरेवासिद्धेः, कुतोलिंगपरामर्शस्य प्रमाणान्तरता। न च वन्ह्यादि-सन्निकर्षं विना तद्गोचरप्रत्यक्षाऽसंभवात्, अनुमित्यात्मकप्रमित्यन्तरस्वीकार आवश्यक इति वाच्यम्। परामर्शघटितानुमितिसामग्रीकाले साध्यभासकसामग्र्या "ज्ञानसन्निकर्षस्या" वश्यकत्वात्। न चेतरत्वव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्याकारकव्यतिरेकिसाध्यकपदामर्शदशायामितरभेदरूपसाध्यभासकज्ञानानैयत्या-त्, तादृशपरामर्शात्प्रमित्यन्तरस्वीकार आवश्यक इति वाच्यम्।

तादृशपरामर्शदशायामितरभेदादिज्ञानानैयत्येपि तत्राऽभावत्वादिसामान्य-धर्मज्ञानाऽवश्यम्भावात्, सामान्यलक्षणासन्निकर्षादेव इतरभेदगोचरप्रत्यक्षसंभवादिति चेन्न। वन्हिमनुमिनोमीत्याकारकानुव्यवसायसाक्षिकोऽनुमितित्वं जातिविशेषः, तदवच्छिन्नजनकतयाऽनुमानस्य प्रमाणान्तरत्वमव्याहतमेव। वस्तुतोऽ नुमितेर्मा-नसप्रत्यक्षत्वे वन्ह्यादेरनुमितिदशायामपरामृष्टस्य स्मर्यमाणस्य मानसप्रत्यक्षोत्पत्ति-वारणायाऽ नुमित्यन्यमानसत्वावच्छिन्नं प्रति अनुमितिसामग्रीत्वेन विरोधित्वं वाच्यं, अतस्तदपेक्षया लाघवेन मानसत्वावच्छिन्नं प्रत्येवानुमितिसामग्रीत्वेन प्रतिबन्धकत्वं युक्तमतोनानुमितेर्मानसत्वम्। अनुमितेर्मानसत्वे वन्ह्यन्तरस्य चाक्षुषसामग्रीदशायां वन्हेर्मानसान्तरमिवानुमितिरपि नोत्पद्येत, लाघवेन मानस-सामान्यं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकत्वात्, अनुमित्यन्यमानसत्वावच्छिन्नं प्रति तथात्वे गौरवादित्यास्तां विस्तरः। अथेति। प्रत्यक्षनिरूपणानन्तरमित्यर्थः।

तथा च प्रत्यक्षनिरूपणानन्तरमुपजीवकत्वरूपा संगतिः सूचिता। उपजीवकत्वं, कार्यत्वम्। संगतिसामान्यलक्षणं तु अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञान-विषयस्मरणप्रयोजकनिरूप्यनिष्ठसंबन्धः। न च कार्यत्वस्य षड्विधसंगतिमध्येऽ नन्तर्भावात्कुतः संगतित्वम्। तथाहि—

सप्रसंग उपोद्घातो हेतुताऽ वसरस्तथा।

निर्वाहकैककार्यैक्ये षोढा संगतिरिष्यते इति-वाच्यम्। हेतापदस्याऽऽश्रयत्व निरूपकत्वान्यतरसंबन्धेन हेतुतापरतया कार्यत्वस्य हेतुतायामन्तर्भावादिति। यद् यन्निरूपणानन्तरं निरूपणीयं भवति तत् तन्निरूपितसंगतिमद् भवतीति नियमः, नाऽसंगतं प्रयुञ्जीतेति वृद्धोक्तिरपि संगच्छते इत्यन्यत्र विस्तरः। मूले व्यापार-

व्यापारस्तुपरामर्शः करणं व्याप्तिधीर्भवेत् । ६६
अनुमायां,

अथानुमितिं व्युत्पादयति । व्यापारस्त्विति । अनुमितौ व्याप्तिज्ञानं करणम्, परामर्शोव्यापारः । तथाहि येन पुरुषेण महानसादौ धूमे वन्हेर्व्याप्तिर्गृहीता, पश्चात् स एव पुरुषः क्वचित्पर्वतादावविच्छिन्नमूलां धूमलेखां पश्यति, तदनन्तरं धूमोवन्हिव्याप्य इत्येवं रूपं व्याप्तिस्मरणं तस्य

अनुमिति का व्युत्पादन करते हैं । अनुमिति के प्रति व्याप्तिज्ञान करण होता है । परामर्श व्यापार होता है । तथाहि—जिस पुरुष ने महानस ( रसोई ) आदि स्थान में वन्हिनिरूपित ( वन्हि की ) 'यत्र-यत्र धूमस्तत्र-धूमस्तत्र वन्हिः' अर्थात् 'जहाँ-जहाँ धूम रहता है, वहाँ वहाँ वन्हि अवश्य रहती है' इत्याकारक साहचर्यरूपा व्याप्ति का धूम में निश्चय किया—बाद में वही पुरुष कभी पर्वत आदि स्थान में विच्छिन्न ( भग्न ) नहीं है मूल जिसका अर्थात् एकदम लम्बायमान धूम रेखा ( शिखा ) को देखता है यह धूम रेखा का दर्शनात्मक ज्ञान ही चाक्षुष प्रत्यक्षात्मक ज्ञान कहलाता है—इसका आकार है 'धूमवान् पर्वतः' । देखने के बाद "धूमो वन्हिव्याप्यः" अर्थात् 'धूमो वन्हि निरूपित व्याप्याश्रयः' ऐसा व्याप्तिस्मरण उस पुरुष

---

स्त्विति । अवधारणार्थकस्तुशब्दो व्यापार इत्युत्तरं योजनीयः । तथा च परामर्शोव्यापार एवेत्यर्थः । नवीनमतसिद्धं परामर्शनिष्ठकरणत्वं नाभिप्रेतमिति भावः । प्राचीनमते व्यापारवदसाधारणं करणम्, नवीनमते फलायोगव्यवच्छिन्नं कारणंकरणमिति विशेषः । करणे निर्दिष्टे एव व्यापारे जिज्ञासोदया त्पश्चान्निर्दिष्टमपि करणं प्रथमं दर्शयति । अनुमिताविति । परामर्शोव्यापार इति । अनुमिता-वित्यादिः । व्यापारश्च तज्जन्यत्वे सति तज्जन्यजनकः । परामर्शोहि व्याप्तिज्ञानजन्यः "परामर्शे व्याप्तिज्ञानं कारणम्, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्" व्याप्ति-ज्ञानजन्यानुमितिजनकोपि । व्याप्तिज्ञाने करणत्वम्, परामर्शे च व्यापारत्वमुदाहरण-द्वारा दर्शयति । तथाहीत्यादिना । पश्यतीति । अनेन धूमवान्पर्वत इति पक्षधर्मताज्ञानं दर्शितं भवति । तदनन्तरं पक्षधर्मताज्ञानानन्तरं । व्याप्तिस्मरणं भवतीति । तादृशपक्षधर्मताज्ञानस्य व्याप्त्यनुभवजन्यो योव्याप्तिसंस्कारस्तस्यो-द्बोधकत्वात् । एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति हि व्युत्पत्तिः । प्रकृते एकसंबन्धिज्ञानं धूमज्ञानं अपरसम्बन्धिन्या व्याप्तेः स्मारकम्, उद्बोधकविधयेति यावत् । तस्य । संस्कारवतः पुरुषस्य । पश्चादिति । तस्येत्यादिः । विशेषण-ज्ञानादिक्रमेणेति शेषः । तदनन्तरं । परामर्शानन्तरं । व्याप्यनिश्चयानन्तरमिति यावत् । अनुमितिः व्यापकनिश्चयात्मिका । अनुमितिकरणत्वेनाऽनुमानं व्याप्ति

भवति पश्चाच्च वन्हिव्याप्यधूमवानयमिति ज्ञानं भवति स एव परामर्श इत्युच्यते । तदनन्तरं पर्वतोवन्हिमानित्यनुमितिर्जायते ।

ज्ञायमानं लिंगं तु करणं न हि ।
अनागतादिलिंगेन न स्यादनुमितिस्तदा । ६७

अत्र प्राचीनास्तु व्याप्यत्वेन ज्ञायमानं लिङ्गमनुमितिकरणमिति वदन्ति तद्दूषयति । ज्ञायमानमिति । लिंगस्यानुमित्यकरणत्वे युक्तिमाह ।

को होता है । स्मरण के बाद 'वन्हिव्याप्य धूमवानयम्' अर्थात् 'वन्हि का व्याप्य जो धूम उस धूम वाला यह पर्वत है' यह ज्ञान होता है—इसी ज्ञान को परामर्श कहते हैं । ( सो यह नियम है कि जहाँ व्याप्य का निश्चय हो जावेगा—वहाँ व्यापक का निश्चय अवश्य ही हो जावेगा—क्योंकि व्याप्यनिश्चाधीन ही व्यापक निश्चय होता है ) अतः परामर्श के बाद 'पर्वतो वन्हिमान्' यह ज्ञान होता है—इसी ज्ञान का नाम अनुमिति है । प्राचीन लोग कहते हैं जिस लिङ्ग में कभी पूर्व में व्याप्ति गृहीत हो चुकी हो ऐसा व्याप्यत्वेन ज्ञानमान जो लिङ्ग वही अनुमिति का करण होता है—इस प्राचीनमत को नवीन दूषित करते हैं कि ज्ञायमान लिङ्ग अनुमिति का कारण नहीं है—क्योंकि यदि ज्ञानमान लिङ्ग को अनुमिति का करण

---

ज्ञानमिति सिद्धम् । न च महानसे वन्हिधूमयोर्व्याप्तिग्रहकाले धूमसामान्ये व्याप्तिनिश्चयसत्येव पर्वते धूमदर्शनोत्तरं वन्हिव्याप्योधूम इति स्मरणाद्वन्हिव्याप्य-धूमवान्पर्वतः इति परामर्शः संभवति, महानसे व्याप्तिप्रत्यक्षदशायां लौकिक-सन्निकर्षाभावाद् धूमान्तरस्य प्रत्यक्षासंभवेन, धूमसामान्ये व्याप्तिनिश्चयो न संभवति, पर्वतीयधूमे च व्याप्तेरननुभूततया कथं व्याप्तिस्मरणं कथं वा परामर्श इति वाच्यम् । लौकिकसन्निकर्षाभावेपि सामान्यलक्षणया वन्हित्वेन निखिलवह्नीनां-धूमत्वेन निखिलधूमानां वन्हिसामानाधिकरण्यत्वेन निखिलवन्हिसामानाधिकरण्यस्य च प्रत्यक्षसंभवात्, पर्वतीयधूमे पि व्याप्तेर्गृहीतत्वेन धूमदर्शनेन व्याप्तिस्मरणसंभवेन परामर्शानुपपत्तेरभावादिति तत्वम् ।

व्याप्तिपक्षधर्मताविशिष्टोहेतुर्लिंगम् विषयितासम्बन्धेन तद्विशिष्टं ज्ञानं "परामर्शरूपं" अनुमतिहेतुः, असतिबाधके विशेषणांशेपि कारणताग्रहात्, विनिगम-काभावेनापि च "परामश्यमान" लिङ्गस्यापि करणत्वमित्युभयोर्हेतुतासिद्धौ लिंगस्यैवा-नुमितिकरणत्वम्, "परार्शरूपव्यापारवत्वात् परामर्शस्य विषयविधया लिंगजन्यत्वात्," न तु परामर्शस्य व्यापाराभावादित्याह । अत्रेति । लिंगमनुमितिकरणमिति । तथा चोद्देश्यतासंवन्धेनानुमितिं प्रति हेतुतावच्छेदकसंवन्धेन लिंगं कारणमित्यर्थः । अनागतेन लिंगेनेति । अस्याऽनुमितिर्न स्यादित्यनेनाऽन्वयः, पिपीलिकाण्ड-संचारेण सुवृष्टिमनुमितवतः पुरुषस्य देशोयं सुभिक्षवान् सुवृष्टेरित्यनुमितिर्न स्या दितिभावः । एवमियं शाला धूमवती श्यामवर्णत्वात्, इत्यनुमानेन

अनागतादीति। यद्यनुमितौ लिंगकरणं स्यात्तदाऽनागतेन लिंगेन विनष्टेन च लिंगेनानुमितिर्न स्यादनुमितिकरणस्य लिंगस्य तदानीमभावात् ॥६७॥

व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते।

व्याप्यस्येति। व्याप्तिविशिष्टस्येत्यर्थः। व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानमनुमितिजनकं, तच्च व्याप्यः पक्षे इति ज्ञानं, पक्षो-

मानेंगे तो "इयं पाकशाला वह्निमीति भविष्यति भाविधूमात्" तथा "इयं पाकशाला वह्निमती आसीत् अतीतधूमात्" इत्यादि स्थल में अनागत तथा विनष्ट धूम हेतुओं के द्वारा अनुमिति नहीं होनी चाहिये—क्योंकि अनुमिति का करण जो अनागत एवं अतीत लिङ्ग (धूम) वह उस काल में वहाँ नहीं है। इस अभिप्राय से नवीन कहते है कि लिङ्ग ज्ञान ही अनुमिति का करण है—ज्ञायमान लिङ्ग अनुमिति का करण नहीं है ]

साध्य का व्याप्य पक्ष में रहता है ऐसी जो धी (बुद्धि) उसी को परामर्श कहते हैं। *साध्य निरूपित व्याप्ति विशिष्ट हेतु का जो पक्ष के साथ वैशिष्ट्य (सम्बन्ध) का अवगाही ज्ञान* (परामर्शरूप) वह अनुमिति का जनक है। वह परामर्शरूप ज्ञान दो प्रकार का है। साध्यव्याप्यः पक्षे—*अर्थात् साध्य का व्याप्य (साध्यनिरूपि व्याप्तिविशिष्ट हेतु) पक्ष में रहता है*—यह एक ज्ञान है। साध्यवाप्यवान् पक्षः अर्थात् साध्य का जो व्याप्य—उस वाला पर्वत है। यह दूसरा

---

धूमनिश्चयवतः पुरुषस्य "इयं शाला वह्निमती धूमादित्यनुमितिर्न स्यादित्यर्थः। अनुमित्यनुत्पत्तौ हेतुमाह। अनुमितिकरणस्येति। लिंगस्य। सुवृष्टिरूपहेतोः—धूमरूपहेतोश्च। तदानीं। अनुमितिप्राक्क्षणे। अभावादिति। व्यतिरेक व्यभिचारादिति यावत्। तथा च वर्तमानमहविशेष्यताविशिष्टं लिंगं अनुमितिकरणत्वाभाववत्, उद्देश्यतासंबन्धेनानुमितिमन्निष्ठभेदप्रतियोगितावच्छेदकत्वादिति फलितम्। न च समवायेनानुमितिं प्रति स्वविषयकज्ञानवत्वसंबन्धेन लिंगस्य कारणत्वे नोक्तव्यभिचार इति वाच्यम्। तथापि तेन संबन्धेन लिंगस्यैवाऽभावादिति ध्येयम्।

इदन्तु बोध्यम्। अतीतादिलिंगकस्थले प्राचीनैरनुमितिर्नेष्यते परन्तु तन्मते संयोगसमवायादिनानासंबन्धानां कारणतावच्छेदकसंबन्धत्वकल्पने अनन्तवर्तमान कालानां निवेशने च गौरवमेव दूषणं बोध्यम्। ६७।

परामर्शलक्षणमाह। मूले व्याप्यस्येति। ननु मूलाद् व्याप्तिविशिष्टहेतुविशेष्यकपक्षवृत्तित्वप्रकारकज्ञानं परामर्श इत्यर्थो लभ्यते। तथा च वह्निव्याप्यधूमःपर्वत "वह्निव्याप्यधूमः पर्वतवृत्तिः" इति ज्ञानस्यैव परामर्शत्वमायातम्, न तु वह्निव्याप्यधूमवान्पर्वत इति ज्ञानस्य, अस्य पर्वतवृत्तित्वाप्रकारकत्वादित्यत आह। वैशिष्ट्यावगाहिज्ञानमिति। सबन्धावगाहिज्ञानमित्यर्थः तथा च साध्यव्याप्यहेतु-पक्षोभयसंबन्धावगाहिज्ञानं परामर्श इति मूलार्थः। एवं च वह्निव्याप्यधूमवान् पर्वत इतिज्ञानस्यापि लाभः। अनुमितिजनकमिति। व्यापारविधया अनुमितिकारणमित्यर्थः॥

व्याप्यवानिति ज्ञानं वा, अनुमितिस्तु पक्षे व्याप्य इति ज्ञानात् पक्षे साध्यमित्याकारिका, पक्षोव्याप्यवानिति ज्ञानात् पक्षः साध्यवानित्याकारिका। द्विविधादपि परामर्शात् पक्षः साध्यवानित्येवानुमितिरित्यन्ये ।

ज्ञान है—इन दोनों ज्ञानों में विशेषण विशेष्य भाव का ही विपर्यास है। और 'पक्षे साध्य व्याप्यः' इस आधेयता सम्बन्धेन पक्ष प्रकारक परामर्शात्मक ज्ञान से 'पक्षे साध्यम्' इत्याकारक आधेयता सम्बन्धेन पक्ष प्रकारक अनुमिति होती है। और 'पक्षो व्याप्यवान्' इस पक्ष विशेष्यक ज्ञान से पक्षः साध्यवान् इत्याकारक पक्षविशेष्यक ही अनुमिति होती है। अन्य लोगों का मत है कि पक्षविशेष्यक तथा पक्षविशेषणक दोनों परामर्शों से 'पक्ष साध्यवान्' यह पक्षविशेष्यक ही अनुमिति होती है।

---

तच्चेति। व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं चेत्यर्थः। व्याप्यःपक्षे इति ज्ञानमिति। वह्निव्याप्यधूमः पर्वते इति पक्षप्रकारकं ज्ञानमित्यर्थः। पक्षोव्याप्यवानितिज्ञानंचेति। पर्वतोवह्निव्याप्यधूमवानिति पक्षविशेष्यकज्ञानं चेत्यर्थः। अवधारणार्थकश्च-शब्दः, उक्तज्ञानद्वयमेवानुमितिहेतुरिति भावः। ननुपरस्परजन्ये व्यभिचार इत्यत आह। अनुमितिस्त्विति। तथा च पक्षप्रकारकपरामर्शात् पक्षप्रकारकानुमितिः, पक्षविशेष्यकपरामर्शात् पक्षविशेष्यकानुमितिरिति भावः।

अथ वह्निव्याप्यधूमवान् पर्वतः वह्निव्याप्यधूमे पर्वत इति पक्षविशेष्यकव्याप्य विशेषणकः परामर्शो, वह्निव्याप्यधूमः पर्वते वह्निव्याप्यधूमः पर्वतवानित्यादिव्याप्य-विशेष्यक पर्वतविशेषणकः परामर्शोवाऽनुमितिहेतुः, समशरीरत्वेन विनिगन्तुमशक्य त्वात् इति चेन्न। यत्र साध्यव्याप्यत्वापेक्षया पक्षतावच्छेदकं लघु तत्र पक्षविशेषणकोव्याप्यविशेष्यकः परामर्श एव हेतुः न तु पक्षविशेष्यकः। यथा पर्वतो वह्निमान् धूमादित्यादौ, तत्र वह्निव्याप्यधूमवान् पर्वत इति पक्षविशेष्यकपरामर्शस्य हेतुत्वे तादृशपरामर्शधर्मिकवह्निव्याप्याभाववद्विशेष्यकवन्हिव्याप्यप्रकारकत्वरूपाऽप्रामाण्यज्ञानाभावस्य वन्हिव्याप्याभाववत्पर्वतविशेष्यक वन्हिव्याप्यप्रकारकत्वादिरूपाऽप्रामाण्याज्ञानाभावस्य च कारणतावच्छेदकघटकत्वावश्यकतया महागौरवापत्तेः। न च वन्हिव्याप्योधूमः पर्वते इत्यादि पक्षविशेषणकपरामर्शस्य हेतुत्वे तादृशपरामर्शधर्मिक पर्वताभाववद्विशेष्यकपर्वतप्रकारकत्वारूपाऽप्रामाण्यज्ञानाभावस्य पर्वताभाववद्वह्निव्याप्यविशेष्यकपर्वतप्रकारकत्वादिरूपाऽप्रामाण्याज्ञानाभावस्य कारणतावच्छेदकघटकत्वावश्यकतया समानमेवेति वाच्यम्। पर्वताभाववद्विशेष्यकपर्वतप्रकारकत्वादिकमपेक्ष्य वन्हिव्याप्याभाववद्विशेष्यकवन्हिव्याप्यप्रकारकत्वादिरूपाऽप्रामाण्यग्रहस्य गुरुत्वात्। यत्र तु साध्यव्याप्यत्वापेक्षया पक्षतावच्छेदकं गुरु तत्र पक्षविशेष्यकोव्याप्यविशेषणक-परामर्श एव हेतुः, न तु पक्षविशेषणकः, यथा वन्हिव्याप्यालोकवत्सधर्मापर्वतो-वन्हिमान् धूमादित्यादौ, तत्र वन्हिव्याप्यो धूमः वन्हिव्याप्यालोकवत्सधर्मापर्वते

इत्यादि पक्षविशेषणकपरामर्शस्य हेतुत्वे तादृशपरामर्शधर्मिकवन्हिव्याप्यालोकवत्स-धर्मापर्वताभाववद्विशेष्यकतादृशपर्वतप्रकारकत्वादिरूपाऽप्रामाण्यज्ञानाभावानां कारण-तावच्छेदकघटकत्वावश्यकतया महागौरवापत्तेः, तादृशाऽप्रामाण्यमपेक्ष्य वन्हिव्या-प्याभाववद्विशेष्यकवन्हिव्याप्यप्रकारकत्वादिरूपाऽप्रामाण्यस्य लघुत्वात् । यत्र च साध्य-व्याप्यत्वं पक्षतावच्छेदकं च समशरीरं तत्र पक्षविशेष्यकः पक्षविशेषणकः परामर्श-द्वयमेव विनिगमनाविरहात्तृणारणिमणिन्यायेन हेतुः ।

अत्र प्राञ्चः । कारणनिष्ठाऽप्रामाण्यग्रहाभावो हि न कारणतावच्छेदकं, किन्तु सर्वत्र स्वतन्त्रमेव कारणम् । न च तथापि वन्हिव्याप्यधूमवान्पर्वत इति पक्षविशेष्यकपरामर्शस्य हेतुत्वे निरुक्तगुरुतराऽप्रामाण्यज्ञानाभावस्य "तादृशाऽ-प्रामाण्यज्ञानानुत्तरा"नुमितिं प्रति पृथक्कारणतायामेव गौरवम्, फलमुखगौरवस्या-दोषत्वेपि अणुरपीति न्यायेन लघुपक्षतावच्छेदकस्थले व्याप्यविशेष्यकपरामर्शस्य, गुरुपक्षतावच्छेदकस्थले पक्षविशेष्यकपरामर्शस्य हेतुताया एव युक्तत्वादिति वाच्यम् । पर्वतोवन्हिमान् धूमादित्यादिलघुपक्षतावच्छेदकस्थले वन्हिव्याप्योधूमः पर्वत इति पक्षविशेषणकपरामर्शस्यैव नियमतोहेतुत्वेपि ज्ञानत्वावच्छेदेन ज्ञानत्वादि-विशिष्टधर्मिकवन्हिव्याप्याभाववद्विशेष्यकवन्हिव्याप्यप्रकारकज्ञानत्वादिरूपगुरुतराऽप्रा-माण्यज्ञानाभावस्य तादृशाऽप्रामाण्यज्ञानानुत्तरानुमितिं प्रति पृथक् कारणताया आवश्यकत्वात्, पक्षतावच्छेदकांशेऽ प्रामाण्यग्रहाभावस्याप्यनुमितिघटकतया यत्र वन्हिव्याप्यवत्पर्वतः पक्षः तत्र तादृशाप्रामाण्यज्ञानसत्वे पक्षविशेष्यकात् पक्षविशेषण-काच्च परामर्शादनुमितेरनुत्पादात् । न च तथापि तद्ज्ञानत्वधर्मितावच्छेदक-कवन्हिव्याप्यधूमवान् पर्वत इति पक्षविशेष्यकपरामर्शव्यक्तिधर्मिकतादृशगुरुतराऽ-प्रामाण्यग्रहाभावस्य कारणताकल्पनायामेव गौरवम्, वन्हिव्याप्योधूमः पर्वते इति पक्षविशेषणकपरामर्शस्यैव हेतुत्वे तद्ज्ञानत्वधर्मितावच्छेदककतादृशपक्षविशेष्य-कपरामर्शव्यक्तिधर्मिकपर्वताभाववति पर्वतप्रकारकत्वादिरूपलघुतराऽप्रामाण्यज्ञाना-भावस्यैव हेतुतया यथोक्तनिरुक्तगुरुतराऽप्रामाण्यज्ञानाभावस्य हेतुत्वानावश्यकत्वादिति वाच्यम् । तद्ज्ञानत्वधर्मितावच्छेदककतद्ज्ञानव्यक्तिधर्मिकाऽप्रामाण्यज्ञानानां तद्व्यक्तित्वावच्छिन्नाभावस्यैव हेतुतया विषयाप्रवेशेन लाघवगौरवविरहात् । अतः पक्षतावच्छेदकस्य लघुत्वे गुरुत्वेपि च सर्वत्रैव विनिगमनाविरहात् पक्षविशेष्यको व्याप्यविशेष्यकः परामर्शो हेतुरिति वदन्ति ।

नव्यास्तु यद्यपि अप्रामाण्यग्रहाभावः स्वातन्त्र्येण हेतुः, तदा पक्षतावच्छेदकस्य लघुत्वे गुरुत्वेपि च सर्वत्रैव पक्षविशेष्यकपरामर्श एव हेतुः, प्रसिद्धसाध्यकानुमितेः पक्षविशेष्यकत्वनियमेन, तस्य फलीभूतानुमितिसमानविशेष्यकत्वात् । असति कारणतावच्छेदकशरीरगौरवादौ शीघ्रोपस्थितिकत्वादिरूपलाघवात् कार्यसमान-विशेष्यकत्वरूपलाघवस्यापि कारणतायां विनिगमकत्वात्, अणुरपीतिन्यायात् । अत एव विधिवादे क्रियानुकूलकृतीष्टसाधनताज्ञानं न प्रवर्तकम्, किन्तु क्रियेष्टसाधन-ताज्ञानं, भिन्नविशेष्यकतया गौरवादिति मणिकृतः । नच तथापि ह्रदे धूमाभाव इति व्यतिरेकिसाध्यकानुमितौ पक्षविशेष्यकोव्यतिरेकिपरामर्शो हेतुः व्याप्यविशेष्य-

कोव्यतिरेकिपरामर्शोवा, तत्रानुमितेः पक्षविशेष्यकतया समानविशेष्यकत्वस्याविनिगमकत्वादिति वाच्यम्। साध्यप्रसिद्धिदशायां ह्रदोधूमाभाववनितिपक्षविशेष्यकानुमितौ समानविशेष्यकत्वरूपविनिगमकवलेन पक्षविशेष्यकव्यतिरेकिपरामर्शस्यैतदव्यवहितोत्तरानुमितित्वावच्छेदेन हेतुत्वसिद्धेः, कार्यकारणभावान्तरकल्पनापत्त्या ह्रदे धूमाभाव इति साध्यविशेष्यकानुमितावपि पक्षविशेष्यकव्यतिरेकिपरामर्शस्यैव हेतुत्वात्। वस्तुतस्तु असति अवच्छेदकशरीरगौरवादौ असति चैकत्र समानविशेष्यकत्वलाघवेन कार्यसमानप्रकारकत्वस्यापि कारणतायां विनिगमकतया तत्र पक्षविशेषणकपरामर्श एव हेतुः। अत एव पक्षविशेषणकानुमितौ पक्षविशेषणकपरामर्शः, पक्षविशेष्यकानुमितौ च पक्षविशेष्यकः परामर्शो हेतुरिति पक्षधर्ममिश्राः। यदि चाऽप्रामाण्यज्ञानाभावो न स्वातन्त्र्येण हेतुः परामर्शनिष्ठानुमितिकारणतावच्छेदकस्तदा प्राचीनमतमेव सम्यगिति प्राहुः।

स्वतन्त्रास्तु यदि अप्रामाण्यज्ञानाभावः स्वातन्त्र्येण हेतुः, तथापि प्राचीनमतमेव सम्यक्। पर्वतोवन्हिमानित्यादौ लघुतरपक्षतावच्छेदके वन्हिव्याप्यधूमवान् पर्वत इति पक्षविशेष्यकपरामर्शस्य हेतुत्वे वन्हिव्याप्यनिश्चयत्वस्य कारणतावच्छेदकतया महागौरवापत्तेः, वन्हिव्याप्यत्वावच्छिन्नप्रकारत्वेतरकोटित्वानिरूपितस्य वन्हिव्याप्यनिश्चयत्वघटकतया तदपेक्ष्य पर्वतत्वावच्छिन्नप्रकारत्वेतरकोटित्वानिरूपितत्वघटितस्य पर्वतत्वावच्छिन्नप्रकारतानिरूपितत्वघटितस्य पर्वतनिश्चयत्वस्य लघुत्वात्। न चाऽभावत्वावच्छिन्नप्रकारत्वानिरूपितत्वमेव वन्हिव्याप्यनिश्चयत्वघटकमिति वाच्यम्। अभावत्वावच्छिन्नत्वं हि न तत्पर्याप्तावच्छेदकताकत्वं, वन्हिव्याप्यवान्न वा पर्वतः, वन्हिव्याप्यधूमवान्न वा पर्वत इत्यादिज्ञानादनुमित्यापत्तेः, किन्तु तद्वृत्त्यवच्छेदकताकत्वमात्रं, तथा च वन्हिव्याप्याभाववान् पर्वत इत्यभावत्वरूपेण धूमादौ वन्हिव्याप्यत्वावगाहिपरामर्शादनुमितिर्न स्यात्। न च सामान्यतः कोटिद्वयानिरूपितत्वमेव वन्हिव्याप्यनिश्चयत्वघटकमिति वाच्यम्। तथापि कोटितानिष्ठाऽनन्तद्वित्वघटिततया 'यथोक्तपर्वतनिश्चयत्वमपेक्ष्य" अति गुरुत्वात्। न च कारणतावच्छेदकगौरवेपि समानविशेष्यकतया पक्षविशेष्यकपरामर्श एव हेतुरुचित इति वाच्यम्। असति अवच्छेदकशरीरगौरवादावेव समानविशेष्यकत्वस्य कारणतायां विनिगमकत्वादिति प्राहुरित्यलम्।

तत्सिद्धं यत्र पक्षतावच्छेदकं लघु तत्र, पक्षप्रकारकोव्याप्यविशेष्यकः परामर्शः यत्र व्याप्यत्वं लघु तत्र पक्षविशेष्यकोव्याप्यप्रकारकः परामर्शः। एवं पक्षप्रकारकात् परामर्शात् पक्षप्रकारकानुमितिः। एवं पक्षविशेष्यकपरामर्शात् पक्षविशेष्यकानुमितिरिति।

वस्तुतोऽन्वयपरामर्शात् "पक्षविशेष्यकात् साध्यविशेष्यकाद्वा" पक्षविशेष्यकानुमितिर्जायते, व्यतिरेकिसाध्यकस्थले तु विशेषणज्ञानादिविरहेण साध्यप्रकारकानुमितेरनुत्पत्त्या साध्यविशेष्यकानुमितिरुत्पद्यते। तथा च विशेष्यत्वात्वाऽन्यविधेयतावच्छेदकतासंबन्धेनानुमितिं प्रति प्रकारतासंबन्धेन ज्ञानस्य प्रतिबन्धकत्वं कल्प्यते। तेन इतरत्वव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवीत्यादिपरामर्शात् पृथिव्यामितरभेद

ननु वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं विनापि यत्र पर्वतोधूमवानिति प्रत्यक्षं ततोवह्निव्याप्योधूम इति स्मरणं तत्र ज्ञानद्वयादेवानुमितेर्दर्शनात्, व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं न सर्वत्र कारणम्, किन्तु व्याप्यतावच्छेद-

प्रश्न—मीमांसक कहता है कि–जहां 'वन्हिव्याप्यधूमवान् पर्वतः' यह परामर्शात्मक ज्ञान नहीं है—अपितु 'धूमवान् पर्वतः' यह प्रत्यक्ष है—और 'वन्हिव्याप्यो धूमः' यह स्मरण है– वहां इन दो ज्ञानों से ही अनुमिति देखने में आती है—अतः व्याप्तिविशिष्ट जो धूम उस (धूम) के वैशिष्ट्य (सम्बन्ध) का पर्वत में अवगाही जो 'वन्हिव्याप्यधूमवान् पर्वतः' यह परामर्शात्मक ज्ञान—इस ज्ञान को सर्वत्र अनुमिति के प्रति अर्थात् अनुमितित्वावच्छिन्न समस्त अनुमिति के प्रति कारण नहीं कह सकते हैं—किन्तु व्याप्यतावच्छेदक प्रकारक ज्ञान को ही कारण (कारण मानना) आवश्यक है। (सो 'धूमवान् पर्वतः' यह भी व्याप्यतावच्छेदक प्रकारक ज्ञान है—क्योंकि वन्हि का व्याप्य हुवा धूम व्याप्यतावच्छेदक हुवा धूमत्व—वह धूमत्व

---

इत्याकारकानुमितेर्नानुपपत्तिः, नहि तत्र पृथिवी इतरभिन्ना इत्यनुमितेः संभवः, विशेषणतावच्छेदकीभूतेतरभेदत्वप्रकारकज्ञानविरहात्। तत्रैव साध्यज्ञानं विरोधीति मन्तव्यम्। वन्हयादिभावसाध्यकस्थले तु पूर्वं साध्यज्ञानावश्यंभावेन "प्रतिबन्धकसद्भावेन विशेष्यतया वन्हयादिविधेयकानुमितेरप्रसिद्धत्वादित्यशयवानाह द्विविधादपीति पक्षविशेष्यकात् पक्षप्रकारकादपीत्यर्थः। तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितिं प्रति प्रकृतहेतुतावच्छेदकसंबन्धातिरिक्तसंबन्धानवच्छिन्न साध्यव्याप्यहेतुविषयतानिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नाधेयत्वसंबन्धातिरिक्तसंबन्धानवच्छिन्न पक्षनिष्ठविषयताशालिनिश्चयः कारणमितिभावः। अत्र पक्षप्रकारकानुमितिर्यथाऽप्रमाणिकी तथा पक्ष प्रकारकपरामर्शोपि अप्रामाणिकः। अत एव "तथाचायं" मित्युपनयप्रयोगः न तु तथाचाऽस्मिन्निति। तथा च पक्षविशेष्यकपरामर्श एव कारणमिति ध्येयम्।

गुरुः प्रत्यवतिष्ठते। नन्विति। ज्ञानं विनापीति। अस्याऽनुमितेर्दर्शनादित्यनेनाऽन्वयः। यत्र। आत्मनि। स्मरणं। निश्चयः। स्मरणत्वनिवेशे व्याप्त्यनुभवादनुमित्यनुत्पादापत्तेः। तत्र तस्मिन्नात्मनि। ज्ञानद्वयादेवेति। विशिष्टज्ञानं विनापीत्यर्थः। अनुमितेर्दर्शनादिति। परामर्शोत्पत्तिकाले एवा नुमितेरनुभवसिद्धत्वादिति भावः। व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं परामर्शः। सर्वत्र। अनुमितित्वावच्छिन्नं प्रति न कारणमिति। व्यतिरेकव्यभिचारादिति हेतुः पूरणीयः तथा च धूमलिंगकानुमितिं प्रति धूमत्वावच्छिन्नविशेष्यताकव्याप्तिनिश्चयः—धूमत्वावच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयश्च स्वतन्त्रकारणम्।

कप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वस्यावश्यकत्वात्, तत्र विशिष्टज्ञान-कल्पने गौरवमिति चेन्न।

व्याप्यतावच्छेदकाऽज्ञानेपि वन्हिव्याप्यवानितिज्ञानादनुमित्युत्पत्तेः, लाघवाच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन हेतुत्वम् किं च धूमवान् पर्वत

'धूमवान् पर्वतः' इस ज्ञान में—धूमांश में धूमत्व प्रकार ( विशेषण ) है। और 'वन्हिव्याप्यो धूमः' यह व्याप्ति स्मरण भी व्याप्यतावच्छेदक प्रकारक ज्ञान है—क्योंकि व्याप्यतावच्छेदक जो धूमत्व—वह 'वन्हिव्याप्यो धूमः' यहाँ धूमांश में प्रकार है ) और दूसरी बात यह है कि आप ( नैयायिक ) को विशिष्ट वैशिष्ट्यावगाही तृतीय ज्ञान ( परामर्श ) की कल्पना में गौरव भी होगा।

उत्तर—नैयायिक खण्डन करता है कि यदि व्याप्यतावच्छेदक ज्ञान को कारण मानोगे तो जिस स्थल में व्याप्यतावच्छेदक ( धूमत्व ) का ज्ञान नहीं है—उस स्थल में वन्हिव्याप्यवान् इस ज्ञान से अनुमिति होती है। ( और 'वन्हिव्याप्यवान् पर्वतः' ) इस ज्ञान में व्याप्यतावच्छेद ( धूमत्व ) प्रकार नहीं है—अतः यह ज्ञान व्याप्यतावच्छेदक प्रकारक न होने के नाते आपके

---

व्याप्तिज्ञान-पक्षधर्मताज्ञान-परामर्श-त्रितयसाधारणमनुगतधर्ममाह। किन्त्विति। अनुमितिं प्रतीतिविशेषः। आवश्यकत्वादिति। अस्मदुक्तकारणतावच्छेदकद्वयस्य अनुमित्यव्यवहितपूर्ववर्त्तितावच्छेदकत्वेन उभयवादिसिद्धानुमितिनियतपूर्ववर्त्तिताव-च्छेदकताकत्वादित्यर्थः। नैयायिकसिद्धयथोक्तविशिष्टपरामर्शस्यापि अस्मदुक्तकारण-तावच्छेदकाक्रान्तत्वात्। तथा च नैयायिकसिद्धे कारणतावच्छेदके अन्यथासिद्धय निरूपकत्व नियतपूर्ववर्तितावच्छेदकत्वयोर्द्वयोः कल्पनामपेक्ष्य नियतपूर्ववर्तितावच्छेद कत्वेनोभयवादिसिद्धस्यास्मदुक्तकारणतावच्छेदकस्याऽन्यथासिद्धयनिरूपकत्व कल्प-नायांलाघवादिति भावः।

यद्यपि न्यायनये वन्हिव्याप्यवानयमिति व्याप्यतावच्छेदकीभूतधर्माप्रकारक-परामर्शाद् यत्रानुमितिस्तत्र व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानाभावेन मीमांसकाभिमतकारणतावच्छेदकेऽपि अन्यथासिद्धयनिरूपकत्व नियतपूर्ववर्त्तिता-वच्छेदकत्वयोर्द्वयोः कल्पनमविशिष्टम्, तथापि अस्यदोषस्य स्वयमेव वक्ष्यमाणतया नासंगतिरिति ध्येयम्।

विप्रतिपत्तिस्तु व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वं अनुमितिजनकता-वच्छेदकं न वा इत्याकारिका बोध्या। एवं तादृशनिश्चयासमानकालीनं वन्हिव्या-प्योधूमः धूमवान् पर्वत इति ज्ञानं अनुमित्युपधायकं न वेत्याकारिकापि।

ननु ज्ञानद्वयस्थले परामर्शः कल्पनीयस्तथा च न व्यभिचारोपीत्यत आह। विशिष्टज्ञानकल्पने इति। गुरुमतं दूषयति। नेति। व्याप्यतावच्छेदकाऽ-ज्ञानेपीति। "अयमालोको धूमोवेति संशयकाले" व्याप्यतावच्छेदकीभूत धूमत्वाऽऽ

इति ज्ञानादनुमित्यापत्तिः, व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकपक्षधर्मताज्ञानस्य सत्वात्। न च गृह्यमाणव्याप्यतावच्छेदकप्रकारक पक्षधर्मताज्ञानस्य हेतुत्वमिति वाच्यम्। चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानादनुमितिः

मत से अनुमित्युत्पादन में असमर्थ है—परन्तु इस ज्ञान से अनुमिति होती है यह सर्वमत सिद्ध है। आप (मीमांसक) के मत में यह व्यतिरेक व्यभिचार है) और दूसरी बात यह है कि व्याप्यतावच्छेदक प्रकारक पक्षधर्मता ज्ञान की अपेक्षा व्याप्तिप्रकारक पक्ष धर्मता ज्ञान को कारण मानने में लाघव है—(क्योंकि आप (मीमांसक) को व्याप्यतावच्छेदक प्रकारक ज्ञान को कारण मानने में कारणतावच्छेदक कुक्षि में अवच्छेदक पद अधिक देना पड़ता है—और हम (नैयायिक) को व्याप्ति प्रकारक ज्ञान को कारण मानने में अवच्छेदक पद नहीं देना पड़ता। 'व्याप्यता' - और 'व्याप्ति' पर्याय वाचक हैं—अतः व्याप्तिप्रकारक के स्थान में व्याप्यता प्रकारक यह लगाकर व्याप्यताप्रकारकपक्षधर्मताज्ञान कारण है यह भी कह सकते हैं—और मीमांसक को व्याप्यतावच्छेदकप्रकारक पक्ष धर्मताज्ञान को कारण मानना पड़ता है—यह अवच्छेदक पद प्रवेश प्रयुक्त गौरव है] और मीमांसक को केवल "धूमवान् पर्वतः" इस ज्ञान से भी अनुमिति होनी चाहिये—क्योंकि इस ज्ञान में धूमांश में व्याप्यतावच्छेदक जो धूमत्व वह प्रकार (विशेषण) है—अतः व्याप्यतावच्छेदकीभूत जो धूमत्व तादृशधूमत्वप्रकारक पक्षधर्मताज्ञान केवल 'धूमवान् पर्वतः' यह ज्ञान भी है। मीमांसक कहता है पूर्वोक्त स्थल में दोषवारण के लिये 'गृह्यमाण व्याप्यतावच्छेदक प्रकारक पक्षधर्मताज्ञान को कारण मानेंगे—

नैयायिक फिर दोष देता है कि चैत्र को 'वन्हिव्याप्योधूमः' यह स्मरणात्मक व्याप्तिज्ञान है—मैत्र को 'धूमवान् पर्वतः' इत्याकारक व्याप्यतावच्छेदक प्रकारक पक्षधर्मताज्ञान है तो उससे अनुमिति होनी चाहिये। और यदि तत्पुरुषीय गृह्यमाण व्याप्यतावच्छेदकप्रकारक तत्पुरुषीय

---

लोकत्वादिप्रकारकनिश्चयाभावेपी त्यर्थः। **वन्हिव्याप्यवानिति ज्ञानादिति।** वन्हिव्याप्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यता शालि- निश्चयादित्यर्थः। **अनुमित्युत्पत्तेरिति।** तथा च व्यतिरेक व्यभिचार इतिभावः। ननु फलबलात्तत्रापि व्याप्यतावच्छेदकप्रकारके ज्ञाने कल्पनीयमत आह। **लाघवाच्चेति।** व्याप्यतावच्छेदकप्रकारकज्ञानत्वापेक्षया व्याप्तिप्रकारकत्वस्य लघुत्वाद- त्यर्थः। तेनोक्तव्यभिचारस्योभयवादिमते साम्येपि न क्षतिः। व्याप्यतावच्छे- दकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वे केवलपक्षधर्मताज्ञानादनुमितिः स्यादित्याह। **किंचेति। सत्वादिति।** तथा चाऽन्वयव्यभिचार इति भावः। **गृह्यमाणेति।** वर्तमानव्याप्तिग्रहविषयीभूतेत्यर्थः। अस्य च व्याप्यतावच्छेदकेन सहान्वयः। **मैत्रस्येति।** अस्याऽनुमितिः स्यादित्यनेन सहाप्यन्वयः। मैत्रीयपक्षधर्मताज्ञान- विषयीभूतधूमत्वस्य चैत्रीयव्याप्तिग्रहविषयत्वादिति भावः। कार्यकारणभावांद्विविध- विषयनिष्ठप्रत्यासत्त्या आत्मनिष्ठप्रत्यासत्त्या च, आद्ययथा विशेष्यतासम्बन्धेन,

स्यात् । यदि तु तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारकं तत्पुरुषीयपक्षधर्मताज्ञानं तत्पुरुषीयानुमितौहेतुरित्युच्यते तदाऽनन्तकार्यकारणभावः ।

पक्षधर्मताज्ञान तत्पुरुषीय अनुमिति में कारण है यह कहते हो—अर्थात् जिस पुरुष को व्याप्तिस्मरण हुआ उसी पुरुष का पक्षधर्मताज्ञान उसी पुरुष की अनुमिति में कारण होता है ऐसा कहने से "चैत्रस्य व्याप्तिग्रहे" इत्यादि ग्रन्थ से कहा हुवा दोष वारित हो सकता है—परन्तु मीमांसक को प्रतिपुरुष भेद से अनन्त कार्यकारणभाव की कल्पना करनी होगी। और मेरे ( नैयायिक के ) मत में जिस आत्मा में समवाय सम्बन्ध से व्याप्तिप्रकारक पक्षधर्मता ज्ञान ( परामर्श ) वन्हिव्याप्यधूमवानयम् इत्याकारक उत्पन्न होता है उसी आत्मा में समवायसम्बन्ध से 'पर्वतो वन्हिमान्' इस अनुमिति को उत्पन्न करेगा—अतः तत्पुरुषीयत्व निवेश की कोई आवश्यकता नहीं—इससे अनन्त कार्यकारणभाव नहीं है। मीमांसक शंका करता है कि हम व्याप्तिप्रकारक ज्ञान ( धूमो वन्हिवाप्यः ) को—और 'धूमवान् पर्वतः' पक्षधर्मता ज्ञान को स्वतन्त्र ( पृथक् २ ) कारण है—अतः इस कारणकूट के रहने पर ही अनुमति होती है—ऐसी परिस्थिति में तत्पुरुषीयत्व निवेश की भी कोई आवश्यकता नहीं है—तथा परामर्श तृतीय ज्ञान को कारण मानने की भी कोई आवश्यकता नहीं। नैयायिक समाधान करता है कि यदि ऐसा मीमांसक का कथन है तो उसमें भी कार्यकारणभाव दो मानने होंगे—( समवायसम्बन्ध से अनुमितित्वावच्छिन्न के प्रति समवाय सम्बन्ध से व्याप्तिप्रकारकज्ञान कारण है यह एक कार्यकारणभाव—और समवायसम्बन्ध से अनुमिति के प्रति पक्षधर्मताज्ञान कारण है, यह

---

तत्पुरुषीयतद्विधेयकानुमितिं प्रतिविशेष्यतासंबन्धेन तत्पुरुषीयतद्विधेयव्याप्यहेतुप्रकारकनिश्चयः कारणम्। विशेष्यस्य संसर्गतया भानेन विशेष्यस्य कार्यतावच्छेदककोटौ कारणतावच्छेदककोटौ वा न निवेशः। परन्तु तत्पुरुषीयत्वनिवेश आवश्यकः, अन्यथा चैत्रस्य परामर्शान्मैत्रस्यानुमित्यापत्तेः। तथाचाऽत्रापि पुरुषभेदेनाऽनन्तकार्यकारणभावः। द्वितीयं दर्शयति। **मन्मते त्विति। नाऽनन्तकार्यकरणभाव इति।** तत्पुरुषीयत्वानिवेशादिति भावः। अयमेव सामान्यकार्यकारणभावः। धूमपरामर्शसत्त्वे घटानुमित्यनुदयात् पर्वतोद्देश्यकवन्हिविधेयकानुमितौ पर्वतादिविशेष्यकवन्हिव्याप्यधूमप्रकारकनिश्चयोहेतुरिति विशिष्यकार्यकारणभावः कल्पनीयः।

अथ वन्हिव्याप्यालोकवान् पवत इत्यादिपरामर्शादपि पर्वतो वन्हिमानित्यनुमितेरुदयात्, तत्र धूमपरामर्शकारणताया व्यभिचार इति चेन्न। तादृशव्यभिचारवारणाय परामर्शजन्यतावच्छेदककोटौ धूमलिंगकत्वं निवेशनीयम्। तत्र धूमलिंगकत्वं च न धूमपरामर्शजन्यत्वम्, स्वजन्यतावच्छेदककोटौ स्वजन्यत्वनिवेशे आत्माश्रयप्रसंगात्। न च धूमलिंगकत्वं जातिविशेषः, तादृशजातिसिद्धिश्च धूमपरामर्शजन्यतावच्छेदककोटिप्रविष्टत्वेनेति वाच्यम्। तुल्ययुक्त्या आलोकपरामर्शजन्यतावच्छेदककोटिप्रविष्टाऽऽलोकलिंगकत्वस्यापि जातित्वेन तयोः प्रत्येकं परामर्शजन्यानुमितौ परस्परं व्यभिचारेण धूमालोकोभयलिंगकपरामर्शजन्यानुमितौ

इति ज्ञानादनुमित्यापत्तिः, व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकपक्षधर्मताज्ञानस्य सत्वात् । न च गृह्यमाणव्याप्यतावच्छेदकप्रकारक पक्षधर्मताज्ञानस्य हेतुत्वमिति वाच्यम् । चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानादनुमितिः

मत से अनुमित्युत्पादन में असमर्थ है—परन्तु इस ज्ञान से अनुमिति होती है यह सर्वमत सिद्ध है। आप ( मीमांसक ) के मत में यह व्यतिरेक व्यभिचार है ) और दूसरी बात यह है कि व्याप्यतावच्छेदक प्रकारक पक्षधर्मता ज्ञान की अपेक्षा व्याप्तिप्रकारक पक्ष धर्मता ज्ञान को कारण मानने मे लाघव है—( क्योंकि आप ( मीमांसक ) को व्याप्यतावच्छेदक प्रकारक ज्ञान को कारण मानने में कारणतावच्छेदक कुक्षि में अवच्छेदक पद अधिक देना पड़ता है—और हम ( नैयायिक ) को व्याप्ति प्रकारक ज्ञान को कारण मानने में अवच्छेदक पद नहीं देना पड़ता। 'व्याप्यता' - और 'व्याप्ति' पर्याय वाचक हैं—अतः व्याप्तिप्रकारक के स्थान में व्याप्यता प्रकारक यह लगाकर व्याप्यताप्रकारकपक्षधर्मताज्ञान कारण है यह भी कह सकते हैं—और मीमांसक को व्याप्यतावच्छेदकप्रकारक पक्ष धर्मताज्ञान को कारण मानना पड़ता है—यह अवच्छेदक पद प्रवेश प्रयुक्त गौरव है ] और मीमांसक को केवल "धूमवान् पर्वतः" इस ज्ञान से भी अनुमिति होनी चाहिये—क्योंकि इस ज्ञान में धूमांश में व्याप्यतावच्छेदक जो धूमत्व वह प्रकार (विशेषण) है—अतः व्याप्यतावच्छेदकीभूत जो धूमत्व तादृशधूमत्वप्रकारक पक्षधर्मताज्ञान केवल 'धूमवान् पर्वतः' यह ज्ञान भी है। मीमांसक कहता है पूर्वोक्त स्थल में दोषवारण के लिये 'गृह्यमाण व्याप्यतावच्छेदक प्रकारक पक्षधर्मताज्ञान को कारण मानेंगे—

नैयायिक फिर दोष देता है कि चैत्र को 'वन्हिव्याप्योधूमः' यह स्मरणात्मक व्याप्तिज्ञान है—मैत्र को 'धूमवान् पर्वतः' इत्याकारक व्याप्यतावच्छेदक प्रकारक पक्षधर्मताज्ञान है तो उससे अनुमिति होनी चाहिये। और यदि तत्पुरुषीय गृह्यमाण व्याप्यतावच्छेदकप्रकारक तत्पुरुषीय

---

लोकत्वादिप्रकारकनिश्चयाभावेपी त्यर्थः । **वन्हिव्याप्यवानिति ज्ञानादिति ।** वन्हिव्याप्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यता शालिनिश्चयादित्यर्थः । **अनुमित्युत्पत्तेरिति ।** तथा च व्यतिरेक व्यभिचार इतिभावः । ननु फलबलात्तत्रापि व्याप्यतावच्छेदकप्रकारकं ज्ञानं कल्पनीयमत आह । **लाघवाच्चेति ।** व्याप्यतावच्छेदकप्रकारकज्ञानत्वापेक्षया व्याप्तिप्रकारकत्वस्य लघुत्वादित्यर्थः । तेनोक्तव्यभिचारस्योभयवादिमते साम्येपि न क्षतिः । व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वे केवलपक्षधर्मताज्ञानादनुमितिः स्यादित्याह । **किंचेति । सत्वादिति ।** तथा चाऽन्वयव्यभिचार इति भावः । **गृह्यमाणेति ।** वर्तमानव्याप्तिग्रहविषयीभूतेत्यर्थः । अस्य च व्याप्यतावच्छेदकेन सहान्वयः । **मैत्रस्येति ।** अस्याऽनुमितिः स्यादित्यनेन सहाप्यन्वयः । मैत्रीयपक्षधर्मताज्ञानविषयीभूतधूमत्वस्य चैत्रीयव्याप्तिग्रहविषयत्वादिति भावः । कार्यकारणभावोद्विविधविषयनिष्ठप्रत्यासत्त्या आत्मनिष्ठप्रत्यासत्त्या च, आद्ययथा विशेष्यतासंबन्धेन,

स्यात्। यदि तु तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारकं तत्पुरुषीयपक्षधर्मताज्ञानं तत्पुरुषीयानुमितौहेतुरित्युच्यते तदाऽनन्तकार्यकारणभावः।

पक्षधर्मताज्ञान तत्पुरुषीय अनुमिति में कारण है यह कहते हो—अर्थात् जिस पुरुष को व्याप्तिस्मरण हुआ उसी पुरुष का पक्षधर्मताज्ञान उसी पुरुष की अनुमिति में कारण होता है ऐसा कहने से "चैत्रस्य व्याप्तिग्रहे" इत्यादि ग्रन्थ से कहा हुवा दोष वारित हो सकता है—परन्तु मीमांसक को प्रतिपुरुष भेद से अनन्त कार्यकारणभाव की कल्पना करनी होगी। और मेरे ( नैयायिक के ) मत में जिस आत्मा में समवाय सम्बन्ध से व्याप्तिप्रकारक पक्षधर्मता ज्ञान ( परामर्श ) वन्हिव्याप्यधूमवानयम् इत्याकारक उत्पन्न होता है उसी आत्मा में समवायसम्बन्ध से 'पर्वतो वन्हिमान्' इस अनुमिति को उत्पन्न करेगा—अतः तत्पुरुषीयत्व निवेश की कोई आवश्यकता नहीं—इससे अनन्त कार्यकारणभाव नहीं है। मीमांसक शंका करता है कि हम व्याप्तिप्रकारक ज्ञान ( धूमो वन्हिवाप्यः ) को—और 'धूमवान् पर्वतः' पक्षधर्मता ज्ञान को स्वतन्त्र ( पृथक् २ ) कारण है—अतः इस कारणकूट के रहने पर ही अनुमति होती है—ऐसी परिस्थिति में तत्पुरुषीयत्व निवेश की भी कोई आवश्यकता नहीं है—तथा परामर्श तृतीय ज्ञान को कारण मानने की भी कोई आवश्यकता नहीं। नैयायिक समाधान करता है कि यदि ऐसा मीमांसक का कथन है तो उसमें भी कार्यकारणभाव दो मानने होंगे—( समवायसम्बन्ध से अनुमितित्वावच्छिन्न के प्रति समवाय सम्बन्ध से व्याप्तिप्रकारकज्ञान कारण है यह एक कार्यकारणभाव—और समवायसम्बन्ध से अनुमिति के प्रति पक्षधर्मताज्ञान कारण है, यह

---

तत्पुरुषीयतद्विधेयकानुमितिं प्रतिविशेष्यतासंबन्धेन तत्पुरुषीयतद्विधेयव्याप्यहेतुप्रकारकनिश्चयः कारणम्। विशेष्यस्य संसर्गतया भानेन विशेष्यस्य कार्यतावच्छेदककोटौ कारणतावच्छेदककोटौ वा न निवेशः। परन्तु तत्पुरुषीयत्वनिवेश आवश्यकः, अन्यथा चैत्रस्य परामर्शान्मैत्रस्यानुमित्यापत्तेः। तथाचाऽत्रापि पुरुषभेदेनाऽनन्तकार्यकारणभावः। द्वितीयं दर्शयति। मन्मते त्विति। नाऽनन्तकार्यकरणभाव इति। तत्पुरुषीयत्वानिवेशादिति भावः। अयमेव सामान्यकार्यकारणभावः। धूमपरामर्शसत्वे घटानुमित्यनुदयात् पर्वतोद्देश्यकवन्हिविधेयकानुमितौ पर्वतादिविशेष्यकवन्हिव्याप्यधूमप्रकारकनिश्चयोहेतुरिति विशिष्यकार्यकारणभावः कल्पनीयः।

अथ वन्हिव्याप्यालोकवान् पर्वत इत्यादिपरामर्शादपि पर्वतो वन्हिमानित्यनुमितेरुदयात्, तत्र धूमपरामर्शकारणताया व्यभिचार इति चेन्न। तादृशव्यभिचारवारणाय परामर्शजन्यतावच्छेदककोटौ धूमलिंगकत्वं निवेशनीयम्। तत्र धूमलिंगकत्वं च न धूमपरामर्शजन्यत्वम्, स्वजन्यतावच्छेदककोटौ स्वजन्यत्वनिवेशे आत्माश्रयप्रसंगात्। न च धूमलिंगकत्वं जातिविशेषः, तादृशजातिसिद्धिश्च धूमपरामर्शजन्यतावच्छेदककोटिप्रविष्टत्वेनेति वाच्यम्। तुल्ययुक्त्या आलोकपरामर्शजन्यतावच्छेदककोटिप्रविष्टाऽऽलोकलिंगकत्वस्यापि जातित्वेन तयोः प्रत्येकं परामर्शजन्यानुमितौ परस्परं व्यभिचारेण धूमालोकोभयलिंगकपरामर्शजन्यानुमितौ

एकत्र समावेशतया सांकर्यप्रसंगात्। न चोभयलिंगकपरामर्शजन्यानुमितौ तादृश-जातिद्वयास्वीकारेण नोक्तदोष इति वाच्यम्। तादृशजातिद्वयास्वीकारेऽनुमितेर-नुदयप्रसंगात्। न च तत्रोभयलिंगकत्वाख्यां जातिं स्वीकृत्योभयलिंगकानुमितिं प्रति उभयपरामर्शत्वेन हेतुत्वस्य कल्पनीयतया तत्रानुमित्युत्पत्तौ बाधकाभाव इति वाच्यम्। तथाप्युभयलिंगकानुमितौ तादृशजातिद्वयसत्त्वे बाधकाभावेन तत्रोपदर्शित-सांकर्यवारणस्याऽशक्यत्वात्। न च धूमलिंगजत्वमनुमितौ विषयताविशेषः। तादृशविषयतायां मानाभावात्। एवं परामर्शादावपि वन्ह्यादिनिरूपितविलक्षण-विषयताशालिनिश्चयत्वेन हेतुत्वकल्पनस्योचिततयाऽनुमितिजनकतावच्छेदककोटौ व्याप्त्यादिविषयतानिवेशे प्रयोजनाभावाच्च।

अत्र केचित् धूमलिंगकत्वं धूमपरामर्शाव्यवहितोत्तरक्षणोत्पत्तिकत्वम्। अव्यवहितोत्तरत्वं च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वम्। सत्यन्तनिवेशादतीतधूमपरामर्शानन्तरं दशम-क्षणोत्पन्नाऽऽलोकलिंगकपरामर्शजन्यानुमितौ न व्यभिचारः। विशेष्यदलनिवेशात् धूमपरामर्शपूर्वक्षणोत्पन्नायामालोकलिंगकपरामर्शजन्यानुमितौ न व्यभिचार इत्याहुः।

तच्चिन्त्यम्। तथा सति धूमपरामर्शतृतीयक्षणोत्पन्नानुमितौ धूमपरा-मर्शजन्यतावच्छेदकानाक्रान्तत्वप्रसंगात्, तत्र तृतीयक्षणस्य स्वाधिकरणप्रथमक्षण-ध्वंसाधिकरणीभूतो यो द्वितीयक्षणस्तद्ध्वंसाधिकरणत्वसत्त्वात्। न च स्वाधिकरण-क्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षण-ध्वंसाधिकरणत्वमेव "तृतीयक्षणसाधारणाऽ" व्यवहितोत्तरत्वं वाच्यम्, तथा सति नोपदर्शितानुपपत्तिः, तत्र स्वाधिकरणप्रथमक्षणध्वंसाधिकरणीभूतो यो द्वितीयक्षण-स्तद्ध्वंसाधिकरणीभूतो यस्तृतीयक्षणस्तद्ध्वंसानधिकरणत्वस्य तृतीयक्षणे सत्त्वादिति वाच्यम्। तथापि अपेक्षाबुद्ध्यात्मकपरामर्शस्य त्रिक्षणावस्थापितया तच्चतुर्थक्षणो-त्पन्नानुमितेरसंग्रहात्। न च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षण-ध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वमेव तद्वाच्यमिति वाच्यम्। तथा सति धूमपरामर्शचतुर्थक्षणोत्पन्नाऽऽलोकपरामर्शजन्यानुमितौ व्यभिचारस्य दुर्वारत्वादिति।

दीधितिकृतस्तु स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षण-ध्वंसाधिकरणत्वमव्यवहितोत्तरत्वम्। धूमपरामर्शजन्यानुमितेर्धूमपरामर्शध्वंसाधि-करणीभूततृतीयक्षणध्वंसानधिकरणीभूततृतीयक्षणोत्पन्नतया नाऽसंग्रहः। एवमन्यत्रा-पीत्याहुः। तदसत्। स्वपदं धूमपरामर्शपरं, तत्तद्धूमपरामर्शपरं वा। नाद्यः सर्वस्यैव क्षणस्य स्वपूर्वोत्पन्नधूमपरामर्शध्वंसाधिकरणतया तद्ध्वंसानधिकरणत्वस्याऽ-प्रसिद्धेः। न द्वितीयः तत्तद्व्यक्तिभेदेनानुमितिपरामर्शयोःकार्यकारणभावस्यावश्यकतया तत्तद्व्यक्तित्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वेनैव हेतुत्वमस्तु किमव्यवहितोत्तरत्वनिवेशेनेति न किंचिदेतत्।

मन्मते तु समवायसंबन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवाय-संम्बन्धेनाऽनुमितिं जनयतीति नाऽनन्तकार्यकारणभावः।

यदि तु व्याप्तिप्रकारकं ज्ञानं पक्षधर्मताज्ञानं च स्वतन्त्रं कारण-मित्युच्यते तदा कार्यकारणभावद्वयम्, वन्हिव्याप्योधूमः, आलोकवान् पर्वत

दूसरा कार्यकारणभाव—इन दो कार्यकारणभावों की कल्पनाप्रयुक्तगौरव मीमांसक को अवश्य ही होगा—और मेरे नैयायिक के मत में समवाय सम्बन्ध से अनुमितित्वावच्छिन्न के प्रति समवायेन परामर्श कारण होता है—अतः दो कार्यकारणभाव नहीं हैं) (रहा कि यह कार्य-कारणभावद्वय नैयायिक को भी मानना होगा तब उस पर नैयायिक कहता है) कि 'वन्हिव्याप्यो-धूमः' 'आलोकवांश्चपर्वतः' इन दो स्वतन्त्र ज्ञानरूप कारणों से भी 'पर्वतोवन्हिमान्' यह अनुमिति होनी चाहिये। (वस्तुतः जिस हेतु का पक्ष में दर्शन हो—उसी हेतु में यदि व्याप्ति-

---

अपरे तु स्वसामानाधिकरण्य स्ववृत्तिप्रागभावप्रतियोगित्व कालिकविशेषणता एतत्त्रितयसंबन्धेन धूमपरामर्शवत्वमेव धूमलिंगकत्वम्। अत्र स्वत्वं परिचायकम्, एकवृत्तिप्रागभावप्रतियोगित्वादेरन्यसंबन्धत्वाभवात्। नातः उपदर्शितविकल्पाव-काशः। आलोकपरामर्शजन्यानुमितौ न कालिकविशेषणताघटितत्रितयसंबन्धेन धूमपरामर्शवत्वम्, विभिन्नकालीनयोराधाराधेयभावानुपगमात्, तथा च न तत्र धूमपरामर्शव्यभिचार इत्याहुः। तदपि न सम्यक्। धूमपरामर्शतृतीयक्षणो-त्पन्नानुमितेरसंग्रहात्। तत्र धूमपरामर्शस्य तृतीयक्षणे विनष्टतया कालिकसंबन्धेन तृतीयक्षणोत्पन्नानुमितेस्तद्वत्वाभावादिति। आचार्यास्तु वन्हिव्याप्यधूमविशिष्टपर्वत धर्मिकवन्ह्यनुमितिंप्रति पर्वतधर्मिकवन्हिव्याप्यधूमवत्तानिश्चयत्वेन हेतुत्वम्, अतोनान्य लिंगकवन्ह्यनुमितौ व्यभिचार इति प्राहुः। व्याप्तिमनन्तर्भाव्यधूमविशिष्टपर्वतधर्मिक वन्ह्यनुमितिं प्रति निरुक्तनिश्चयत्वेन हेतुत्वमित्यपि कश्चिदित्यन्यविस्तरः। **व्याप्तिप्रकारकं ज्ञान मिति।** इदं च स्वतन्त्रमित्यनेनान्वितम् तथा च वन्हिव्याप्यो-धूम इति ज्ञानं स्वतन्त्रं कारणमित्यर्थः। **पक्षधर्मताज्ञानं।** धूमवान् पर्वत इति ज्ञानं। **स्वतन्त्रं कारणमिति।** तथा च समवायेनानुमितिं प्रति व्याप्तिप्रकारकनिश्चयः पक्षधर्म-तानिश्चयश्च समवायेन कारणमित्युच्यते इत्यर्थः एवं च तत्पुरुषीयत्वमपि न निवेशनीय-मिति भावः। ननु न्यायमतेपि व्याप्तिज्ञानस्य करणविधया, परामर्शस्य व्यापारविधया कारणत्वमावश्यकमिति कार्यकारणभाव द्वयमापतितमेवेत्यत आह। **वन्हिव्याप्यइति। अनुमितिः स्यादिति।** व्याप्तिप्रकारकनिश्चयस्य पक्षधर्मतानिश्चयस्य च सत्वादिति भावः। अत्र तद्धर्मावच्छिन्नलिंगकानुमितिं प्रति तद्धर्मावच्छिन्नविषयकव्याप्तिनिश्च-यस्य तद्धर्मावच्छिन्नविषयकपक्षधर्मतानिश्चयस्य च समवायेन कारणत्वे न कोपि दोष इति विभावनीयम्। अत्रेदं बोध्यम्। अन्तराभाससमानविषयतयोः केषांचिन्मते

एकत्र समावेशतया सांकर्यप्रसंगात्। न चोभयलिंगकपरामर्शजन्यानुमितौ तादृशजातिद्वयास्वीकारेण नोक्तदोष इति वाच्यम्। तादृशजातिद्वयास्वीकारेऽनुमितेरनुदयप्रसंगात्। न च तत्रोभयलिंगकत्वाख्यां जातिं स्वीकृत्योभयलिंगकानुमितिं प्रति उभयपरामर्शत्वेन हेतुत्वस्य कल्पनीयतया तत्रानुमित्युत्पत्तौ बाधकाभाव इति वाच्यम्। तथाप्युभयलिंगकानुमितौ तादृशजातिद्वयसत्वे बाधकाभावेन तत्रोपदर्शितसांकर्यवारणस्याऽशक्यत्वात्। न च धूमलिंगजत्वमनुमितौ विषयताविशेषः। तादृशविषयतायां मानाभावात्। एवं परामर्शादावपि वन्ह्यादिनिरूपितविलक्षणविषयताशालिनिश्चयत्वेन हेतुत्वकल्पनस्यौचिततयाऽनुमितिजनकतावच्छेदककोटौ व्याप्त्यादिविषयतानिवेशे प्रयोजनाभावाच्च।

अत्र केचित् धूमलिंगकत्वं धूमपरामर्शाव्यवहितोत्तरक्षणोत्पत्तिकत्वम्। अव्यवहितोत्तरत्वं च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वम्। सत्यन्तनिवेशादतीतधूमपरामर्शानन्तरं दशमक्षणोत्पन्नाऽऽलोकलिंगकपरामर्शजन्यानुमितौ न व्यभिचारः। विशेष्यदलनिवेशात् धूमपरामर्शपूर्वक्षणोत्पन्नायामालोकलिंगकपरामर्शजन्यानुमितौ न व्यभिचार इत्याहुः।

तच्चिन्त्यम्। तथा सति धूमपरामर्शतृतीयक्षणोत्पन्नानुमितौ धूमपरामर्शजन्यतावच्छेदकानाक्रान्तत्वप्रसंगात्, तत्र तृतीयक्षणस्य स्वाधिकरणप्रथमक्षणध्वंसाधिकरणीभूतो यो द्वितीयक्षणस्तद्ध्वंसाधिकरणत्वसत्वात्। न च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वमेव "तृतीयक्षणसाधारणाऽ" व्यवहितोत्तरत्वं वाच्यम्, तथा सति नोपदर्शितानुपपत्तिः, तत्र स्वाधिकरणप्रथमक्षणध्वंसाधिकरणीभूतो यो द्वितीयक्षणस्तद्ध्वंसाधिकरणीभूतो यस्तृतीयक्षणस्तद्ध्वंसानधिकरणत्वस्य तृतीयक्षणे सत्वादिति वाच्यम्। तथापि अपेक्षाबुद्ध्यात्मकपरामर्शस्य त्रिक्षणावस्थापितया तच्चतुर्थक्षणोत्पन्नानुमितेरसंग्रहात्। न च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वमेव तद्वाच्यमिति वाच्यम्। तथा सति धूमपरामर्शचतुर्थक्षणोत्पन्नाऽऽलोकपरामर्शजन्यानुमितौ व्यभिचारस्य दुर्वारत्वादिति।

दीधितिकृतस्तु स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वमव्यवहितोत्तरत्वम्। धूमपरामर्शजन्यानुमितेर्धूमपरामर्शध्वंसाधिकरणीभूततृतीयक्षणध्वंसानधिकरणीभूततृतीयक्षणोत्पन्नतया नाऽसंग्रहः। एवमन्यत्रापीत्याहुः। तदसत्। स्वपदं धूमपरामर्शपरं, तत्तद्धूमपरामर्शपरं वा। नाद्यः सर्वस्यैव [illegible] मानधिकरणत्वस्याऽ [illegible] भावस्यावश्यकतया [illegible] तोत्तरत्वनिवेशेनेति [illegible]

न किंचिदेतत्।

भन्मते तु समवायसंबन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवाय-संम्बन्धेनाऽनुमितिं जनयतीति नाऽनन्तकार्यकारणभावः।

यदि तु व्याप्तिप्रकारकं ज्ञानं पक्षधर्मताज्ञानं च स्वतन्त्रं कारण-मित्युच्यते तदा कार्यकारणभावद्वयम्, वन्हिव्याप्योधूमः, आलोकवान् पर्वत

दूसरा कार्यकारणभाव—इन दो कार्यकारणभावों की कल्पनाप्रयुक्तगौरव मीमांसक को अवश्य ही होगा—और मेरे नैयायिक के मत में समवाय सम्बन्ध से अनुमितित्वावच्छिन्न के प्रति समवायेन परामर्श कारण होता है—अतः दो कार्यकारणभाव नहीं हैं) (रहा कि यह कार्य-कारणभावद्वय नैयायिक को भी मानना होगा तब उस पर नैयायिक कहता है) कि 'वन्हिव्याप्यो-धूमः' 'आलोकवांश्चपर्वतः' इन दो स्वतन्त्र ज्ञानरूप कारणों से भी 'पर्वतोवन्हिमान्' यह अनुमिति होनी चाहिये। (वस्तुतः जिस हेतु का पक्ष में दर्शन हो—उसी हेतु में यदि व्याप्ति-

---

अपरे तु स्वसामानाधिकरण्य स्ववृत्तिप्रागभावप्रतियोगित्व कालिकविशेषणता एतत्त्रितयसंबन्धेन धूमपरामर्शवत्त्वमेव धूमलिंगकत्वम्। अत्र स्वत्वं परिचायकम्, एकवृत्तिप्रागभावप्रतियोगित्वादेरन्यसंबन्धत्वाभवात्। नातः उपदर्शितविकल्पाव-काशः। आलोकपरामर्शजन्यानुमितौ न कालिकविशेषणताघटितत्रितयसंबन्धेन धूमपरामर्शवत्त्वम्, विभिन्नकालीनयोराधाराधेयभावानुपगमात्, तथा च न तत्र धूमपरामर्शव्यभिचार इत्याहुः। तदपि न सम्यक्। धूमपरामर्शतृतीयक्षणो-त्पन्नानुमितेरसंग्रहात्। तत्र धूमपरामर्शस्य तृतीयक्षणे विनष्टतया कालिकसंबन्धेन तृतीयक्षणोत्पन्नानुमितेस्तद्वत्वाभावादिति। आचार्यास्तु वन्हिव्याप्यधूमविशिष्टपर्वत धर्मिकवन्ह्यनुमितिंप्रति पर्वतधर्मिकवन्हिव्याप्यधूमवत्तानिश्चयत्वेन हेतुत्वम्, अतोनान्य लिंगकवन्ह्यनुमितौ व्यभिचार इति प्राहुः। व्याप्तिमनन्तर्भाव्यधूमविशिष्टपर्वतधर्मिक वन्ह्यनुमितिं प्रति निरुक्तनिश्चयत्वेन हेतुत्वमित्यपि कश्चिदित्यन्यविस्तरः। **व्याप्तिप्रकारकं ज्ञान** मिति। इदं च स्वतन्त्रमित्यनेनान्वितम् तथा च वन्हिव्याप्यो-धूम इति ज्ञानं स्वतन्त्रं कारणमित्यर्थः। **पक्षधर्मताज्ञानं**। धूमवान् पर्वत इति ज्ञानं। **स्वतन्त्रं कारणमिति**। तथा च समवायेनानुमितिं प्रति व्याप्तिप्रकारकनिश्चयः पक्षधर्म-तानिश्चयश्च समवायेन कारणमित्युच्यते इत्यर्थः एवं च तत्पुरुषीयत्वमपि न निवेशनीय-मिति भावः। ननु न्यायमतेपि व्याप्तिज्ञानस्य करणविधया, परामर्शस्य व्यापारविधया कारणत्वमावश्यकमिति कार्यकारणभाव द्वयमापतितमेवेत्यत आह। **वन्हिव्याप्यइति**। **अनुमितिः स्यादिति**। व्याप्तिप्रकारकनिश्चयस्य पक्षधर्मतानिश्चयस्य च सत्वादिति भावः। अत्र तद्धर्मावच्छिन्नलिंगकानुमितिं प्रति तद्धर्मावच्छिन्नविषयकव्याप्तिनिश्च-यस्य तद्धर्मावच्छिन्नविषयकपक्षधर्मतानिश्चयस्य च समवायेन कारणत्वे न कोपि दोष इति विभावनीयम्। अत्रेदं बोध्यम्। अन्तराभाससमानविषयतयोः केषां चिन्मते

व्याप्तिः साध्यवदन्यस्मिन्नसंबन्ध उदाहृतः ॥६८॥

इति ज्ञानादप्यनुमितिः स्यात् । इत्थं च यत्र ज्ञानद्वयं तत्रापि विशिष्टज्ञानं कल्पनीयम् , फलमुखगौरवस्यादोषत्वात् ।

व्याप्योनाम व्याप्त्याश्रयस्तत्र व्याप्तिःकेत्यत आह । व्याप्तिरिति । वन्हिमान् धूमादित्यादौ साध्योवन्हिः, साध्यवान् महानसादिः, तदन्यो-

निश्चय पूर्व में हो चुका हो—पक्षेतु प्रकारक पक्षधर्मता दर्शन हो—तद्धेतु धार्मिक व्याप्तिज्ञान ही अनुमितित्वावच्छिन्न के प्रति कारण होता है—प्रकृत में आलोकप्रकारक पक्षधर्मता ज्ञान है ( आलोकवान् पर्वतः ) और व्याप्तिज्ञान धूम विशेष्यक है—अतः इनसे अनुमिति कदापि नहीं होती है ) इसलिये नैयायिक कहता है कि जहाँ दो ज्ञान हैं वहाँ भी विशिष्टज्ञान (परामर्श) की कल्पना करनी चाहिये—फलमुख गौरव दोष नहीं है। 'व्याप्यस्यपक्षवृत्तित्वधीः' इस परामर्शलक्षण में 'व्याप्य' पद का अर्थ है—'व्याप्त्याश्रय' उसमें व्याप्ति क्या है—कि साध्यवत् से अन्य में जो हेतु का असम्बन्ध ( अवृत्तित्व ) ( वृत्तित्वाभाव ) वही व्याप्ति है। ( एक बात यह और जान लेनी चाहिये कि व्याप्तिलक्षण का लक्ष्य सर्वथा व्याप्य हेतु ही हुवा करता है—और व्याप्य हेतुसे भिन्न हेतु में अर्थात् व्यापक को जहाँ हेतु बना दिया जावे—उस व्यापक हेतु में लक्षण यदि चला जावे तो वहाँ अतिव्याप्तिदोष समझना चाहिये ] लक्षण-समन्वय—वन्हिमान् धूमात् यहाँ पर साध्य हुवा वन्हि-साध्यवाले महानस ( रसोईघर ) तथा पर्वत आदि हैं—उनसे अन्य ( भिन्न ) जलहृद आदि हैं—उनमें अवृत्ति धूम है—अतः अवृत्तित्व अर्थात् वृत्तित्वाभाव धूमहेतु में है इस प्रकार धूम में लक्षणसमन्वय हो गया।

---

अभेदः, केषां चिन्मते अवच्छेद्यावच्छेदकभावः। यथा वन्हिव्याप्य धूमवान् पर्वत इति ज्ञानीयपर्वतनिष्ठविशेष्यतानिरूपितप्रकारताधूमेऽस्ति वन्हिव्याप्तिनिष्ठप्रकारतानि रूपितविशेष्यतापि धूमेऽस्तीति तयोरभेदः इत्येकंमतम्। तयोरवच्छेद्यावच्छेदकभाव इत्यपरंमतम्। एवं च साध्यव्याप्तिनिष्ठप्रकारतानिरूपित विशेष्यत्वाऽभिन्न 'हेतुनिष्ठ' प्रकारतानिरूपितपक्षनिष्ठविशेष्यताशालिज्ञानम्, साध्यव्याप्तिनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्न "हेतुनिष्ठ" प्रकारतानिरूपितपक्षनिष्ठ विशेष्यताशालिज्ञानं वा परामर्शः। ईदृशपरामर्शरूपकारणाभावाद् ज्ञानद्वयस्थले नानुमित्यापत्तिरिति भावः। ननु ज्ञानद्वयस्थले विशिष्टज्ञानकल्पने कल्पनागौरवं न्यायमते दूषणं भविष्यतीत्यत आह। इत्थं चेति। लाघवादिना विशिष्टज्ञानस्य हेतुतायाः सिद्धौ चेत्यर्थः। अदोषत्वादिति। फलं विशिष्टज्ञानस्य कारणतानिश्चयः तदधीनं तत्प्रयोज्यं गौरवं गौरवज्ञानं तस्ये त्यर्थः। अदोषत्वादिति। *प्रतिबन्धकत्वाऽसम्भवादित्यर्थः*। तादृश-कारणतानिश्चयोत्तरकालीनत्वादिति भावः। पूर्वपक्षव्याप्ति निरूपणे उपोद्घातसंगति दर्शयति। व्याप्योनामेति। प्रकृतसिद्ध्युपपादकत्वमुपोद्घातः। प्रकृतसिद्धिः, परामर्श-

जलह्रदादिः, तदवृत्तित्वं धूमस्य, इति लक्षणसमन्वयः। धूमवान् वन्हेरित्यादौ साध्यवदन्यस्मिन् तप्तायःपिण्डादौ वन्हेः सत्वान्नातिव्याप्तिः। अत्र येन संबन्धेन साध्यं तेन सम्बन्धेन साध्यवान् बोध्यः। अन्यथा समवायेन वन्हिमान् वन्हेरवयवः, तदन्यो महानसादिः, तत्र धूमस्य वर्त्तमानत्वाद-व्याप्तिप्रसंगात्। साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान्

धूमवान्वन्हेः यहाँ पर साध्य हुवा धूम—साध्य वाले महानस आदि हैं—उनसे भिन्न अयो-गोलक (तप्तलोहपिण्ड) उसमें वन्हि हेतु को वृत्तित्व ही है—अतः अतिव्याप्ति नहीं है। (साध्य उसे कहते हैं जिसकी सिद्धि पक्ष में की जाय) सो यहाँ लक्षण में जिस सम्बन्ध से साध्य की विवक्षा हो उसी सम्बन्ध से साध्यवान् जानना। अन्यथा अर्थात् जिस किसी सम्बन्ध से यदि साध्यवान् की विवक्षा करेंगे तो—जिस किसी सम्बन्ध से समवायसम्बन्ध का ग्रहण करके समवायसम्बन्ध से साध्यवान् (वन्हिमान्) वन्हि का अवयव हुवा—उस (वन्ह्यवयव) से भिन्न महानस आदि—वहाँ धूम को विद्यमान् होने के नाते वृत्तित्वा भाव धूम में नहीं रहा अव्याप्ति हो गयी। और जिस सम्बन्ध से साध्य हो उसी सम्बन्ध से साध्यवान् यदि कहा तो "पर्वतो वन्हिमान् धूमात्" यहाँ वन्हि साध्य संयोगसम्बन्ध से है अर्थात् वन्हि को संयोगसम्बन्ध से पर्वत में सिद्ध कर रहे हैं तो साध्यवान् संयोगसंबन्ध से महानस-पर्वत-आदि हुवे उनसे (महानस आदि से) अन्य जलहृद—उसमें अवृत्तित्व धूम को होने से अव्याप्ति नहीं है। साध्यवदन्य का 'साध्यवत्त्वावच्छिन्नप्रतियोगिताक भेदवान्' यह अर्थ करना चाहिये। प्रश्न—साध्यवदन्य यहाँ पर साध्यवत् और अन्य ये दो शब्द हैं—सो साध्यवत् शब्द का तो साध्यवत् अर्थात् साध्यवाला ही अर्थ है 'अन्य' शब्द का अर्थ है भेदवान्—तो 'साध्यवद्भेदवान्' यह साध्यवदन्य का यथाश्रुत अर्थ हुवा—फिर 'साध्यवत्त्वावच्छिन्नप्रतियोगिताक भेदवान्' यह अर्थ साध्यवदन्य का आप कैसे करते हैं। उत्तर—साध्यवत्पद से उस अर्थ की विवक्षा करनी चाहिये कि जिससे कि सकल साध्यवालों का संग्रह हो जावे—सो इसी लिये साध्यवत् पद का निरूढलक्षणा के द्वारा 'साध्यवत्त्वावच्छिन्नप्रतियोगिताक' यह अर्थ करते हैं। और अन्यपद का अर्थ है भेदवान्—अर्थात् भेदाधिकरण—तब यह अर्थ हुवा कि साध्यवत्त्वावच्छिन्नप्रतियोगि-ताक जो भेद तादृशभेदाधिकरण—और अन्य पद का अर्थ जो भेदाधिकरण—उसका निरूपि-तत्वसम्बन्ध से असम्बन्ध पद का अर्थ जो वृत्तित्वाभाव उस वृत्तित्वाभाव के प्रतियोगी वृत्तित्व में अन्वय करके यह व्याप्ति लक्षण संपन्न हुवा कि "साध्यवत्त्वावच्छिन्नप्रतियोगिताक भेदाधि-

---

सिद्धिः तदुपपादकत्वं व्याप्तौ इति समन्वयः। तदुक्तं चिन्तं प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः इति। तथा च साध्यवत्प्रतियोगिकभेदाधिकरणनिरूपितवृत्तित्वाभावो हेतौ व्याप्तिः। अत्र। लक्षणे। **येन सम्बन्धेनेति**। तृतीयार्थोऽवच्छिन्नत्वम्। **साध्यमिति**। साध्यत्वमित्यर्थः। यत्संबन्धावच्छिन्ना साध्यतेत्यर्थः। साध्यतावच्छेद-कोयः संबन्धइति यावत्। **तनैव संबन्धेनेति**। साध्यतावच्छेदकसंबन्धेनैवेत्यर्थः।

बोध्यः । तेन यत्किंचिद्वन्हिमतोमहानसादेर्भिन्ने पर्वतादौ धूमसत्त्वेपि न क्षतिः । येन संबन्धेन हेतुता तेनैव संबन्धेन साध्यवदन्यावृत्तित्वं बोध्यम्, तेन साध्यवदन्यस्मिन् धूमावयवे धूमस्य समवायेन सत्त्वेपि न क्षतिः। साध्यवदन्यावृत्तित्वं च साध्यवदन्यवृत्तित्त्वत्वावच्छिन्नप्रतियोगिताकाभावः, तेन धूमवान् वन्हेरित्यत्र साध्यवदन्यजलह्रदादिवृत्तित्वाभावेपि नातिव्याप्तिः।

करणनिरूपित वृत्तित्वाभाव" । अत्र यदि साध्यवत् पद का साध्यवत्त्वावच्छिन्नप्रतियोगिताक यह अर्थ नहीं करेंगे तो यह लक्षण होगा कि 'साध्यवद्प्रतियोगिकभेदाधिकरणनिरूपितवृत्तित्वाभाव' सो इस लक्षण की 'वन्हिमान् धूमात्' इस स्थल में अव्याप्ति हो जायेगी—क्योंकि साध्य हुवा वन्हि–वन्हिमान् हुवे महानस आदि—वन्हिमन्महानस आदि का जो भेद वन्हिमन्महानसन्न इत्याकारक भेद—उस भेद का अधिकरण पर्वत उसमें धूमवृत्ति ही है अतः वृत्तित्व ही धूम में रहा—वृत्तित्वाभाव नहीं रहा। और यदि साध्यवत्पद का साध्यवत्त्वावच्छिन्नप्रतियोगिताक यह अर्थ किया तो 'वन्हिमन्महानसन्न' यह भेद वन्हिमन्महानसत्वावच्छिन्नप्रतियोगिताक भेद है—साध्यवत्त्वावच्छिन्नप्रतियोगिताक नहीं है—साध्यवत्त्वावच्छिन्नप्रतियोगिताक भेद करके साध्यवान्न अर्थात् वन्हिमान्न यही भेद मिलेगा—उस भेद वाला जलह्रद ही होगा—जलह्रद-निरूपित वृत्तिता-मीन-शैवाल-में-वृत्तित्वाभाव धूम में रहा—अतः अव्याप्ति नहीं। यही मूल में कहा है कि—"तेन यत्किञ्चिद्वन्हिमतो महानसादेर्भिन्ने पर्वतादौ धूमस्य सत्त्वेऽपि न क्षतिः" तेन-अर्थात् 'साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरण' यह अर्थ करने से। न क्षतिः—अर्थात् अव्याप्ति नहीं हुयी। जिस सम्बन्ध से हेतुता हो—अर्थात् जिस सम्बन्ध से हेतु पक्ष में रहता हो उसी सम्बन्ध से साध्यवदन्यनिरूपित वृत्तिता भी लेना चाहिये। (निरूपितत्व यह षष्ठी का अर्थ जानना अर्थात् जो साध्यवदन्य में वृत्ति होगा उस वृत्ति पदार्थ में ही साध्यवदन्य की वृत्तिता रहेगी जैसे 'वन्हिमान् धूमात्' यहाँ पर साध्यवदन्य हुवा जलह्रद उसकी वृत्तिता मीन—शैवाल में है—ऐसे ही और स्थलों में भी जानना।]

अर्थात् पक्ष में हेतु हेतुतावच्छेदकसम्बन्ध से रहता है—(हेतुतावच्छेदकसम्बन्ध का अर्थ है कि हेतु की हेतुता का अवच्छेदक (नियामक) जो सम्बन्ध, उसी हेतुतावच्छेदकसम्बन्ध से अवच्छिन्न (नियम्य) साध्यवदन्यनिरूपितवृत्तिता को भी समझना। और वृत्तिता में हेतुतावच्छे-

---

साध्यनिष्ठावच्छेदकता च साध्यतावच्छेदकसंबन्धावच्छिन्नासाध्यतावच्छेदकावच्छिन्ना च ग्राह्या। तेन। अवच्छेदकतायां साध्यतावच्छेदकीभूतधर्म-संबन्धावच्छिन्नत्व निवेशेन प्रतियोगितायां साध्यवत्त्वावच्छिन्नत्वनिवेशेन चेत्यर्थः। अवच्छेदकतायां तन्निवेशफलमाह। यत्किंचिद्वन्हिमत इति। महानसीयवन्हिमत इत्यर्थः अस्य भिन्ने इत्यनेनाऽन्वयः। इदमुपलक्षणम्, समवायेनवन्हिमद्भिन्ने इत्यपि बोध्यम्। प्रतियोगितायां तन्निवेशफलमाह। महानसादेरिति। न क्षतिः। नाव्याप्तिः। तेनैव संबन्धेन हेतुतावच्छेदकसंबन्धेनैवेत्यर्थः। वस्तुतो वृत्तितायां हेतुतावच्छेदक संबन्धा

दकसम्बन्ध का निवेश न करने से वन्हिमान् धूमात् इस स्थल में अव्याप्ति हो जावेगी—क्योंकि साध्य वन्हि-साध्यवान् पर्वत आदि—उनसे अन्य जैसे जलहृद होता है ऐसे ही धूमावयव भी हुवा उसमें ( धमावयव में ) धूमहेतु समवायसम्बन्ध से वृत्ति ही है अतः साध्यवदन्य धूमावयव निरूपित समवायसम्बन्धावच्छिन्ना वृत्तिता ही धूमहेतु में है—वृत्तित्वाभाव नहीं रहा—अतः व्याप्यहेतु में व्याप्तिलक्षण यदि न जावे तो वही अव्याप्तिदोष कहलाता है। और वृत्तिता में हेतुतावच्छेदक सम्बन्ध का निवेश किया तब अव्याप्ति नहीं—क्योंकि साध्यवदन्य धूमावयव को भी यदि लेवें तो उसमें ( धूमावयव में ) धूमहेतु हेतुतावच्छेदक संयोग सम्बन्ध से वृत्ति न होने से वृत्तित्वा भाव धूमहेतु में आ गया—( क्योंकि अवयव-अवयवी का समवायसम्बन्ध ही होता है ) वही मूल में कहा है कि "तेन साध्यवदन्यस्मिन् धूमावयवे धूमस्य समवायसम्बन्धेन सत्त्वेऽपि नक्षतिः"। तेन-साध्यवदन्यनिरूपितवृत्तिता में हेतुताच्छेदक सम्बन्ध का निवेश करने से। नक्षतिः-वन्हिमान् धूमात् में अध्याप्ति नहीं है। साध्यवदन्यावृत्तित्व का अर्थात् साध्यवदन्य-निरुपित वृत्तित्वाभाव का "साध्यवदन्यनिरूपित वृत्तित्वत्वावच्छिन्न प्रतियोगिताकाभाव" यह अर्थ करना चाहिये। अन्यथा 'धूमवान् वन्हेः' यहाँ पर व्यापकहेतु ( वन्हि ) में व्याप्ति-लक्षण गमन प्रयुक्त अतिव्याप्ति हो जावेगी—क्योंकि साध्य हुआ धूम-साध्यवान् पर्वतादि उनसे अन्य जहृद है—उसमें वन्हिहेतु अवृत्ति है अतः वृत्तित्वाभाव ( असद्धेतु ) वन्हिहेतु में चला गया। और यदि साध्यवदन्यावृत्तित्व के उक्त अर्थ की विवक्षा की तब अतिव्याप्ति नहीं हुई—क्योंकि साध्यवदन्य से किसी भी अधिकरणविशेष का उल्लेख यदि कर दिया जावे—जैसे साध्यवदन्य जहृद निरूपितवृत्तित्वं नास्ति इत्यादिरूप से—तो इस अभाव को यत्किञ्चिद्वृत्तित्वा-भाव-अर्थात् वृत्तित्वविशेषाभाव कहते हैं—सो साध्यवदन्यजहृदनिरूपितवृत्तित्वाभाव वन्हिहेतु में होने पर भी साध्यवदन्यनिरूपितवृत्तित्वं नास्ति यह वृत्तित्वसामान्याभाव वन्हिहेतु में नहीं है क्योंकि साध्यवदन्यनिरूपितवृत्तित्वं नास्ति यह वृत्तित्वसामान्याभाव उसी हेतु में रहेगा—जहाँ साध्यवदन्यनिरूपित कोई भी वृत्तिता न रहती हो प्रकृत में साध्यवदन्य अयोगोलक निरूपित वृत्तिता जब कि वन्हिहेतु में है-तब तादृश वृत्तित्व सामान्याभाव उसमें कदापि नहीं रह सकता। जैसे घटोनास्ति यह घटसामान्याभाव वहीं पर रहेगा जहाँ कोई भी घट न रहता हो।

अब "धूमवान् वन्हेः" यहां प्रकृतिवन्हिहेतु में जब कि साध्यवदन्य अयोगोलक निरूपित वृत्तिता है तो साध्यवदन्यनिरूपितवृत्तित्वं नास्ति इत्याकारक साध्यवदन्यनिरूपितवृत्तित्वाभाव कदापि नहीं रह सकता—इसलिये अतिव्याप्ति न हुई। साध्यवदन्यनिरूपितवृत्तित्वंनास्ति इत्या-कारक जो साध्यवदन्यनिरूपित वृत्तित्वसामान्याभाव इसी का वास्तविक अर्थ है "साध्यवदन्य-निरूपित वृत्तित्वत्वावच्छिन्न प्रतियोगिताकाभाव"। ( जैसे घटसामान्याभाव का अर्थ है घटत्वावच्छिन्न प्रतियोगिताकाभाव। प्रश्न—घटाभाव में जब कि दो पद हैं घट और अभाव तो इनसे 'घटत्वावच्छिन्न प्रतियोगिता का भाव' यह कहाँ से आया। उत्तर—निरूढ़ लक्षणा के द्वारा यह अर्थ आया-अर्थात् अन्यपद के समभिव्याहार में प्रतियोगी की तद्धर्मावच्छिन्नं प्रति-योगिताक ( प्रतियोगितावच्छेदकावच्छिन्न प्रतियोगिताक ) इस अर्थ में अनादितात्पर्यवती निरूढलक्षणा होती है। प्रश्न हम मानते हैं कि प्रतियोगि पद की "प्रतियोगितावच्छेदका-वच्छिन्न प्रतियोगिताक" इस अर्थ में निरूढलक्षणा है—परन्तु इस अर्थ की उत्पत्ति कैसे

अत्र यद्यपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्वादित्यादौ विशिष्टसत्तायाःशुद्ध-सत्तायाश्चैक्यात्, साध्यवदन्यस्मिन् गुणादाववृत्तित्वं नास्ति, तथापि हेतुता-

हुई। उत्तर—घटाभाव काप्रतियोगी हुआ घट क्योंकि "यस्याभावः स प्रतियोगी" यह नियम है। प्रतियोगिका घट में रही—प्रतियोगिता का अवच्छेदक हुआ घटत्व—क्योंकि प्रतियोगी में रहनेवाला धर्म प्रतियोगितावच्छेदक होता है—"यो धर्मो यस्या अवच्छेदकः सा तद्धर्मावच्छिन्ना भवति" इस नियम से घट में रहनेवाली घटाभाव की प्रतियोगिता—प्रतियोगितावच्छेदकीभूत धर्म जो घटत्व-उससे अवच्छिन्ना हो गई—तब घटाभाव का घटत्वावच्छिन्न प्रतियोगिता का भाव यह अर्थ स्पष्ट आ गया। इसी प्रकार साध्यवदन्यनिरूपित वृत्तित्वंनास्ति इस अभाव का प्रतियोगी तादृशवृत्तित्व हुआ तो प्रतियोगिता तादृशवृत्तित्व में रही—प्रतियोगितावच्छेदक तादृशवृत्तित्वत्व हुआ—प्रतियोगिता-प्रतियोगिता का अवच्छेदक जो तादृश वृत्तित्वत्व उसमे अवच्छिन्ना होकर यह अर्थ निकल आया कि साध्यवदन्यनिरूपित वृत्तित्वत्वावच्छिन्न प्रतियोगिता का भाव ] अब आशंका करते हैं कि इस सम्पूर्ण लक्षण की द्रव्यत्व को जहाँ साध्य किया गुण-कर्मान्यत्व विशिष्ट सत्ता को हेतु किया—"द्रव्य गुणकर्मान्यत्वविशिष्ट सत्त्वात्" यहाँ अव्याप्ति हो गयी—क्योंकि सत्ता और गुणकर्मान्यत्व ( गुणकर्म भेद ) विशिष्ट सत्ता एक है - [ जैसे पुस्तक और उसी पुस्तक को यदि हाथ में उठा लें तो वही हस्तविशिष्ट पुस्तक हुयी—दोनों एक हैं ] तब साध्य हुआ द्रव्यत्व साध्यवान् घट आदि—उससे अन्य हुआ गुण-कर्म—उनमें जब शुद्ध सत्ता वृत्ति है तो वृत्तिता शुद्ध सत्ता में रही—तब विशिष्ट सत्ता में भी साध्यवदन्य गुण निरूपित वृत्तिता ही रही—तादृश वृत्तित्वाभाव नहीं रहा। वही मूल में कहा है कि "सत्तायाः विशिष्टसत्तायाश्चैक्यात् साध्यवदन्यस्मिन्गुणादौ अवृत्तित्वं नास्ति" समाधान इस अव्याप्तिवारण के लिये साध्यवदन्यनिरूपित वृत्तितानवच्छेदक यद्धेतुतावच्छेद के तद्वत्त्वम् व्याप्तिः। प्रकृत में वारण हुवा कि साध्यवदन्यगुणनिरूपितवृत्तिता यद्यपि विशिष्ट सत्ता में "विशिष्टं शुद्धान्नातिरिच्यते" इस न्याय से—तथापि उस वृत्तिता का अवच्छेदक सत्तात्व ही होगा—विशिष्टसत्तात्व नहीं—क्योंकि शुद्ध सत्ता द्रव्य-गुण-कर्म-तीनों में रहती है और विशिष्ट सत्ता द्रव्य ही में—सो विशिष्ट सत्ता जो गुण-कर्म में रहती है वह सत्तात्व रूप से—न कि विशिष्ट सत्तात्व रूप से—अतः तादृश वृत्तितावच्छेदक सत्तात्व ही होगा—विशिष्ट सत्तात्व नहीं—तब साध्यवदन्यगुणनिरूपित वृत्तिता का अवच्छेदक सत्तात्व हुवा—अनवच्छेदक हेतुतावच्छेदक विशिष्ट सत्तात्व हुवा—तद्वत्ता विशिष्ट सत्ता में होने से अव्याप्ति नहीं है। अब सप्तम लक्षण

---

वच्छिन्नत्वंननिवेशनीयम्, किन्तु हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयताप्रतियोगिक-स्वरूपसंबन्धावच्छिन्नत्वंसाध्यवदन्यवृत्तित्वनिष्ठप्रतियोगितायां निवेशनीयम्,अन्यथाऽनुपदमेव सत्तावान्जातेरित्यादावव्याप्तेर्वक्ष्यमाणत्वादिति ध्येयम्। साध्यवदन्येति। तथा च साध्यवत्प्रतियोगिकभेदाधिकरणनिष्ठावच्छेदकताभिन्नासती या वृत्तितात्व-निष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका ईदृशावच्छेदकताद्वयनिरूपिका या वृत्तित्वनिष्ठा प्रतियोगिता तादृशप्रतियोगिताकोभाव इत्यर्थः। विशिष्टसत्तायाः।

वच्छेदकरूपेणाऽवृत्तित्वं बोध्यम्। हेतुतावच्छेदकं तादृशवृत्तितानवच्छेदक मिति फलितोर्थः॥ ६८॥

का आकार यह हुवा कि "साध्यतावच्छेदक सम्बन्धावच्छिन्ना या साध्यनिष्ठाऽऽधेयता-तादृशाधेयता निरूपिता अधिकरणता-तादृशाधिकरणत्वावच्छिन्न (साध्यवत्त्वावच्छिन्न) प्रतियोगिताकभेदाधिकरण-निरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्ना वृत्तिता तादृशवृत्तिनवच्छेदकं यद्धेतुतावच्छेदकं तदवच्छिन्नत्वं व्याप्तिः॥ ६८॥

---

गुणकर्मान्यत्वविशिष्टसत्तायाः। शुद्धसत्तायाश्चैक्यादिति। तथा च सत्तानिष्ठ-गुणवृत्तित्वस्याऽभावोविशिष्टसत्तायां नांगीक्रियते, विशेष्यवृत्तिधर्मस्य विशिष्टेऽभावानंगीकारादिति भावः। गुणादावृत्तित्वं नास्तीति। तथा च गुणानिरू-पितवृत्तित्वस्यैव विशिष्टसत्तायां सत्वादव्याप्तिरिति भावः। तथापीति। साध्यव-त्प्रतियोगिकभेदाधिकरणनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकं यद्धेतुताव-च्छेदकं तद्वत्वं फलितोर्थः।

साध्यवदन्यावृत्तित्वज्ञानमेवाऽनुमितौ हेतुः, न तु साध्याभाववदवृत्तित्वज्ञानं, व्यापकसामानाधिकरण्यज्ञानं वा। न च साध्याभाववदवृत्तित्वमपेक्ष्य साध्यवद-न्यावृत्तित्वं गुरु, साध्याभावघटितलक्षणापेक्षया साध्यवद्भेदघटितलक्षणस्य गुरुत्वा-दिति वाच्यम्। साध्याभावपदेन साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्याभावस्या-वश्यं वक्तव्यतया, यत्र तादात्म्यसंबन्धेन वन्हिमानेव साध्यः, तत्र वन्हिमदन्यावृत्ति-त्वज्ञानस्य हेतुत्वावश्यकत्वात्, तादात्म्यसंबन्धस्यान्योन्याभावातिरिक्ताभावप्रतियो-गितानवच्छेदकत्वात्। न च तथापि तादात्म्यसंबन्धेनवन्हिमद्विधेयकानुमितिं प्रति एव वन्हिमदन्यावृत्तित्वज्ञानस्य हेतुत्वावश्यकत्वेपि संयोगसंबन्धेन वन्हिविधेयका-नुमितिं प्रति न तस्य हेतुत्वम्, वन्ह्यभाववदवृत्तित्वज्ञानस्यैव लाघवेन तत्र हेतुत्वा-दिति वाच्यम्। अप्रामाण्यज्ञानाभावस्य पृथक्हेतुतानये व्याप्तिज्ञानस्याऽव्यवहितो-त्तरत्वसंबन्धेन स्वविशिष्टानुमितिं प्रत्येव हेतुत्वात्, साध्यतावच्छेदकसंबन्धेन साध्यविषयकत्वस्य कार्यतावच्छेदककोटावनिवेशनीयत्वात्। नचैवं वन्हिमदन्या-वृत्तित्वज्ञानस्य संयोगेन वन्हिविधेयकानुमितौ, तादात्म्येन वन्हिमद्विधेयकानुमितौ च हेतुत्वात् अनुमितेर्नियमतो द्विविधविषयकत्वापत्तिः, आकारसाम्येपि अनुव्यव-सायवैलक्षण्येनेष्टापत्तेरसंभवादिति वाच्यम्। तादात्म्यसंबन्धेन वन्हिमद्विधेयकानुमितिं प्रति वन्हिमदन्यावृत्तित्वज्ञानस्यैव हेतुत्वात्। न चैवं तव गौरवमिति वाच्यम्। यत्र तादात्म्यसंबन्धेनवन्हिमतः साध्यत्वं तत्र स्वाव्यवहितोत्तरानुमितिं प्रति तद्धेतुतायाः साध्यभाववदवृत्तित्वज्ञानस्य हेतुतावादनयेपि अवश्यमभ्युपेयत्वात्। अत एव स्वरूपतोद्रव्यत्वादिविधेयकानुमितिरपि नानुपपन्ना, तत्र स्वरूपतोद्रव्यत्वा-दिप्रकारकद्रव्यान्यावृत्तित्वज्ञानस्यैव हेतुत्वात्, तादात्म्यसंबन्धेन द्रव्यादिविधेय-कानुमितिं प्रति द्रव्यवदन्यावृत्तित्वज्ञानस्य हेतुत्वादिति। परन्तु एतन्मते वन्ह्यधिकरण

ननु केवलान्वयिनि ज्ञेयत्वादौ साध्ये साध्यवदन्याऽप्रसिद्धत्वाद-व्याप्तिः, किं च सत्तावान् जातेरित्यादौ साध्यवदन्यस्मिन् सामान्यादौ हेतुतावच्छेदकसंबन्धेन समवायेन वृत्तेरप्रसिद्धेरत आह अथचेति। हेतुमति

अब पूर्वोक्त समग्र पूर्वपक्ष व्याप्ति को दूषित करते हैं "ननु केवलान्वयिनि ज्ञेयत्वादौ" इत्यादि ग्रन्थ से। पूर्वोक्त समग्र लक्षण की "इदं ज्ञेयं वाच्यत्वात्" इत्यादि स्थल में केवलान्वयी ज्ञेयत्वादि को साध्य करने पर साध्य ( ज्ञेयत्व ) वत् से अन्य अप्रसिद्ध होने के नाते अव्याप्ति है—क्योंकि साध्य जो ज्ञेयत्व ( ज्ञानविषयता ) वह केवलान्वयी है अर्थात् सर्वत्र है—अतः ज्ञानविषयतारूप जो ज्ञेयत्व तद्वान् ही सब पदार्थ हैं—क्योंकि संसार में कोई पदार्थ भी ऐसा नहीं कि जो किसी के भी ज्ञान का विषय न हो—अन्ततोगत्वा ईश्वर के ज्ञान के विषय तो सब ही हैं—अत ज्ञानविषयतारूप साध्यवान ही सब हैं उनसे अन्य अप्रसिद्ध है। एवं 'सत्तावान् जातेः' इत्यादि स्थल में अव्याप्ति है। क्योंकि साध्यवाले हैं द्रव्य-गुण-कर्म—उनसे अन्य अर्थात् उनके भेद के अधिकरण सामान्य-विशेष वगैरह हैं—उनमें हेतुतावच्छेदक समवायसम्बन्ध से वृत्तित्व ही अप्रसिद्ध है—( अर्थात् हेतुतावच्छेदक सम्बन्ध से यहाँ 'से' यह जो तृतीया है—उसका अर्थ है 'अवच्छिन्नत्व' उसका अन्वय वृत्तिता में है तब यह मतलब हुवा कि सामान्यादिनिरूपित हेतुतावच्छेदक समवायसम्बन्धावच्छिन्ना वृत्तिता अप्रसिद्ध है—क्योंकि सामान्य आदि में समवाय सम्बन्ध से कोई भी पदार्थ वृत्ति नहीं है। यदि वृत्ति होता तो उसमें वृत्तिता प्रसिद्ध होती—जैसे घट में समवाय सम्बन्ध से घटत्व रहता है तो घटनिरूपित समवायसम्बन्धावच्छिन्ना वृत्तिता घटत्व-द्रव्यत्व आदि में प्रसिद्ध है। )

अब फिर यह प्रश्न जाग्रत रह गया कि 'साध्यव्याप्यहेतुमान्' यहाँ पर व्याप्ति क्या चीज है—तो उसे बतलाते हैं अथवा इस ग्रन्थ से। अथवा "हेतुमन्निष्ठविरहाप्रतियोगिना साध्येन

---

वन्ह्यधिकरणाधिकरणादीनां सर्वेषामेव वन्हिमत्त्वत्वादिरूपेण तादात्म्यसंबन्धेनानुमितौ द्विविधविषयतावारणाय तद्वदन्यावृत्तित्वज्ञानस्य हेतुत्वावश्यकतया गौरवापत्तेः। अतः तादात्म्यान्यसंबन्धेनानुमितौ साध्यात्यन्ताभाववदवृत्तित्वज्ञानं, तादात्म्यसंबन्धेनानुमितौ साध्यान्यावृत्तित्वज्ञानं हेतुः न तु साध्यवदन्यावृत्तित्वज्ञानम्। अभावप्रत्ययोर्हीत्यादिनियमाभ्युपगमे च स्वरूपतोऽन्यत्वादिविधेयकानुमितिर्न स्वीकरणीयेत्येवञ्चायां लाघवादिति संक्षेपः ॥६८॥

सिद्धान्तलक्षणप्रणयने बीजमाह। नन्विति। केवलान्वयिनि। निरवच्छिन्नवृत्तिकात्यन्ताभावाप्रतियोगिनि। केचित्तु "केवलान्वयिनि" केवलान्वयित्वग्रहदशायामित्याहुः।

ज्ञेयत्वादौ साध्ये इति। ज्ञेयं वाच्यत्वादित्यादवित्यर्थः। साध्यवदन्यस्याऽप्रसिद्धत्वादिति। ज्ञेयत्ववदन्यस्याऽप्रसिद्धत्वादित्यर्थः। ननु केवलान्वयित्वज्ञानकाले संशयपक्षतारूपकारणविरहान्नानुमितिः, अथवा केवलान्वयित्वज्ञानमेवानुमितिकारणमित्यतोदोषान्तरमाह। किंचेति।

**ननु प्रमेयवन्हिमान् धूमादित्यादौ प्रमेयवन्हित्वावच्छिन्नत्वमसिद्धम् । गुरुधर्मस्यानवच्छेदकत्वादिति चेन्न । कंबुग्रीवादि मान्नास्तीत्यादिप्रतीत्या कंबुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताविषयीकरणेन गुरुधर्मस्याप्यवच्छेदकत्व-स्वीकारादिति संक्षेपः ॥६९॥**

प्रश्न—"प्रतियोगितावच्छेदक सम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरण वृत्त्यभाव-प्रतियोगितासामान्ये" इत्यादि लक्षण की पर्वतः प्रमेयवन्हिमान् धूमात्" यहाँ प्रतियोगिता में "प्रमेयवन्हित्वावच्छिन्नत्व अप्रसिद्ध है क्योंकि प्रमेयवन्हित्व गुरु धर्म होने के नाते प्रतियोगिता का अवच्छेदक नहीं हो सकता है—प्रमेयवन्हित्व यदि प्रतियोगितावच्छेदक होगा—तो प्रमेयवन्हिर्नास्ति इस अभाव का होगा—सो इस अभाव का प्रतियोगितावच्छेदक लाघवात् वन्हित्व ही को मानते हैं—"संभवति लघौ धर्मे गुरौ तदभावात्" लघुधर्म में यदि अवच्छेदकता का संभव हो सके तो गुरुधर्म में नहीं मानना—यह प्राचीनों का सिद्धान्त है—अतः अप्रसिद्ध निबन्धन अव्याप्ति हो जावेगी।

---

वन्ह्यभावप्रतियोगितायां यद्धर्मावच्छिन्नत्वाभावविरहाद् वह्निमान् धूमादित्यादावव्याप्तिः स्यात्। एवं यत्संबन्धावच्छिन्नत्वाभावमात्रमुच्यते तदा संयोगेन घटाभावीय प्रतियोगितायां यत्संबन्धावच्छिन्नत्वाभावविरहादुक्ताव्याप्तितादवस्थ्यादिति ध्येयम् । तथा च तादृशप्रतियोगितात्वव्यापकोभयाभावः तत्प्रतियोगितायाः परंपरयाऽवच्छेदकतावद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति निष्कर्षः। धूमवान्वन्हेरित्यादावतिव्याप्ति वारणाय सामान्यपदं व्यापकत्वार्थकम्। लक्षणमिदं प्रतियोगिताधर्मिकोभयाभावघटितम्, तस्याऽव्याप्तिमाशंकते। **नन्विति । प्रमेयवन्हित्वावच्छिन्नत्वमप्रसिद्धमिति ।** तथा चा तिव्याप्तिरितिभावः। **अनवच्छेदकत्वादिति ।** प्रतियोगितानवच्छेदकत्वादित्यर्थः। तेन गुरुधर्मस्य साध्यतावच्छेदकत्वेपि अवच्छेदकतासंबन्धेन प्रतियोगिताप्रकारकमहं प्रति तादात्म्यसम्बन्धेन गुरुधर्मस्य प्रतिबन्धकत्वादिति भावः। इदं च प्राचीनमतम्, तेषामयमाशयः अवच्छेदकता द्विविधा स्वरूपसंबन्धरूपा अनतिरिक्तवृत्तित्वरूपा च। तत्राऽऽद्या प्रतियोग्यंशे प्रकारिभूतधर्मे, यथा घटाभावप्रतियोगितावच्छेदकता घटत्वे, क्वचिच्चा ऽप्रकारीभूतधर्मेपि, यथा कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकता-घटत्वे, न तु कंबग्रीवादिमत्वे, उक्तगौरवज्ञानस्य कम्बुवादिमत्वेऽ वच्छेदकत्वग्रहविरोधित्वात्। घटत्वं कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकं स्वनिष्ठापादकताकापत्तीयविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्धर्मियैः किंचिदवधिकगुरुत्वाभावस्तद्वत्वात इत्यनुमानसाम्राज्याच्च। स्वं उदासीनपटत्वं, न तु घटत्वम्, तस्य धर्त्तुमशक्यत्वादिति ध्येयम्। एवं च कंबुग्रीवादिमत्वे स्वरूपसंबन्धरूपाऽवच्छेदकत्वविरहादनतिरिक्तवृत्तित्वरूपावच्छेदकत्वम्, तच्च प्रतियोगितानतिरिक्तवृत्तित्वम्, "प्रतियोगित्वाभाववदवृत्तित्वमिति यावत्"। अत्र प्रतियोगित्वाभावः प्रतियोगिता-

उत्तर—यह प्राचीनों का कहना ठीक नहीं है—नवीनों का कहना है कि "गुरुरपि धर्मोऽवच्छेदकः प्रतियोगितायाः" इस सिद्धान्तानुसार 'कम्बुग्रीवादिमान्नास्ति' इस प्रतीति से कम्बुग्रीवादिमत्त्वावच्छिन्ना प्रतियोगिता विषय की जाती है-क्योंकि उक्तप्रतीति का "कम्बुग्रीवादिमत्त्वावच्छिन्न प्रतियोगिताक अभाव" यही अर्थ करना होगा—जैसे घटाभाव का घटत्वावच्छिन्नप्रतियोगिताक अभाव यह अर्थ होता है-अतः उक्त प्रतीति से जैसे 'कम्बुग्रीवादिमत्त्व' गुरुधर्म प्रतियोगिता का अवच्छेदक होता है-ऐसे ही 'प्रमेय वन्हिर्नास्ति' इस प्रतीति से भी "प्रमेयवन्हित्वावच्छिन्नप्रतियोगिता" विषय होने से प्रतियोगिता में प्रमेयवन्हित्वाघच्छिन्नत्व प्रसिद्ध ही है। क्योंकि यहां पर भी प्रमेयवन्हित्व जब कि गुरुधर्म प्रतियोगिता का अवच्छेदक होता है-अतः प्रमेयवन्हिमान् में अव्याप्ति नहीं है ॥ ६६ ॥

पहिले "व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते" इस परामर्श लक्षण में निविष्ट व्याप्य शब्द का अर्थ है व्याप्याश्रय-सो उसमें व्याप्ति क्या चीज-यह तो अब तक के ग्रन्थ से बतला

---

निरुक्तत्यक्तित्वावच्छिन्न प्रतियोगिताकः, प्रतियोगितात्वावच्छिन्न प्रतियोगिताकोवेत्यन्यदेतत्। "व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वे तु प्रतियोगितातिरिक्तवृत्तित्वे सति प्रतियोगितासमानाधिकरणं यत्तदन्यत्वम्"। एवमन्यूनानतिरिक्तवृत्तित्वमपि तत्। अन्यूनत्वं व्यापकत्वम्। अनतिरिक्तवृत्तित्वं व्याप्यत्वम्। तथा च प्रतियोगिताव्यापकत्वे सति प्रतियोगिताव्याप्यत्वम्। एवं प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमपि तत्, प्रतियोगितावच्छेदकाभाववदवृत्तित्वं तदर्थः। स्वव्यापकतत्कत्वमपि तत्, प्रतियोगितावच्छेदकं यद्धर्मव्यापकं तत्त्वमिति तदर्थ इति। प्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तत्त्वमिति यावत्। प्रतियोगितावच्छेदकावच्छिन्नाभाववदवृत्तितानवच्छेदकत्वमित्यपि। नवीनास्तु कंबुग्रीवादिमान्नास्तीति प्रतीतिबलाद्गुरुधर्मस्य प्रतियोगितावच्छेदकत्वं स्वीकुर्वन्ति, उक्तानुमानं चाऽप्रयोजकमतः स्वरूपसंबन्धरूपावच्छेदकतापक्ष एव श्रेयानिति वदन्ति, तन्मतेनाह। **कंबुग्रीवादिमान्नास्तीति।** स्वरूपसंबन्धरूपावच्छेदकत्वस्वीकर्तृभिः ज्ञानभेदेन विषयताभेदमवलंब्य वन्ह्यभाववान् ह्रद इति निश्चयीय प्रतिबन्धकतावच्छेदकता वन्ह्यभावाद्येकदेशविषयतायामपि स्वीक्रियते, वन्ह्यभाववान्ह्रद इतिज्ञानीयविषयताया निरूपकतासंबन्धेन ज्ञानान्तरेऽ सत्त्वेन वन्ह्यभाव इति निश्चयस्य प्रतिबन्धकत्वापत्तिरहादिति ध्येयम्। **कंबुग्रीवादिमत्त्वावच्छिन्नप्रतियोगितेति।** यथा जलं वन्ह्यभाववदिति ज्ञानविरहकाले जलं वन्हिमदिति भ्रमोजायते तथा उक्तगौरवज्ञानविरहकाले कंबुग्रीवादिमान्नास्तीति प्रतीत्या कंबुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकत्वेनाऽभावभ्रमोजायते इति गुरुधर्मस्य प्रतियोगितावच्छेदकत्वं प्राचीनैरपि स्वीकरणीयम्। कंबुग्रीवादिमान्नास्तीति प्रतीतेर्घटत्वावच्छिन्नप्रतियोगिताकत्वावगाहित्वे तदानीमुत्पन्नायाः कंबुग्रीवादिमान्नास्तीतिधियो बाधनिश्चयविधया कंबुग्रीवादिमानस्तीति विशिष्टधीविरोधित्वानुपपत्तेः। कंबुग्रीवादिमत्त्वावच्छिन्नस्य विशिष्टबुद्धौ तदवच्छिन्नप्रतियोगिताकाभावनिश्चयस्य विरोधित्वादिति नवीनाः।

सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।
स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥७०॥

पक्षवृत्तित्वमित्यत्र पक्षत्वं किं तदाह । सिषाधयिषयेति सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता तद्वान्पक्ष इत्यर्थः । सिषाधयिषामात्रं

चुके हैं । अब पक्षवृत्तित्व में पक्ष को बतलाते हुवे-पक्षता को विशेषरूप से "सिषाधयिषया" इत्यादि ग्रन्थ से बतलाते हैं-साध्य के सिद्ध करने की इच्छा को अर्थात् 'पर्वते वन्ह्यनुमितिर्मे जायताम्' इत्याकारक अनुमित्सा (अनुमितीच्छा) को सिषाधयिषा कहते हैं । साध्यनिश्चय को सिद्धि कहते हैं । उस सिषाधयिषा से शून्य सिद्धि जहाँ नहीं है अर्थात् सिषाधयिषा विरह विशिष्ट जो सिद्धि-उस सिद्धि का अभाव पक्षता है-और वह सिषाधयिषाविरहविशिष्टसिद्धय भावरूप-पक्षता-जहां है वह पक्ष है ।

अभिप्राय यह है कि "पर्वतो वन्हिमान्" इस सिद्धि के रहते "पर्वतो वन्हिमान्" यह अनुमति नहीं होती है । क्योंकि पक्ष में साध्य निश्चय को ही अनुमिति कहते हैं—यह साध्य निश्चय यदि हमको वैसे ही ( प्रत्यक्षादिना ही ) हो गया अर्थात् प्रत्यक्षात्मक ही साध्य निश्चय यदि हो गया तो पक्ष में साध्य निश्चय हो जाना-यही तो अनुमिति है-वह फिर व्यर्थ है-रहा यह कि अनुमित्यात्मक साध्य निश्चय परोक्षात्मक है-और सिद्धिरूप साध्य निश्चय अपरोक्ष है-परन्तु साध्य निश्चय तो उभयत्र समान ही है-इसीलिये सिद्धि के रहने पर सिषाधयिषा को उत्तेजक माना है-कि सिद्धि के रहने पर वही परोक्षरूप ( अनुमित्यात्मक ) ही साध्य निश्चय होगा-वहाँ सिद्धि रूप ( प्रत्यक्षात्मक ) साध्य निश्चय अकिंचित्कर हो जावेगा-अन्यथा 'पर्वतो वन्हिमान्' इस अनुमिति में 'पर्वतो वन्हिमान्' यह सिद्धि प्रतिबन्धक होती है और सिद्ध्यभाव कारण होता है । परन्तु सिद्धि रहने पर भी यदि 'पर्वते वन्ह्यनुमितिर्जायताम्' यह सिषाधयिषा

---

संक्षेप इति न च तथापि तकगौरवज्ञानस्य विरोधित्वात्, कंबुग्रीवादिमान्नास्तीतिप्रतीत्या वच्छेदकत्वं नावगाह्यते किन्तु कंबुग्रीवादिमन्निष्ठप्रतियोगिताकाभावमात्रमिति वाच्यम् । तथा सति भूतलादौ यत्किंचिद्घटसत्वे कंबुग्रीवादिमान्नास्तीतिप्रत्ययापत्तेः । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वादेव यत्किंचिद्घटवति भूतले कंबुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावप्रकारकधीर्नप्रमा, तादृशाभावाभाववति तादृशाभावप्रकारकत्वात्, प्रमा च घटसामान्यशून्ये भूतले । एतेन तदभाववद्विशेष्यकत्वं न भ्रमत्वघटकं, भ्रमत्वस्य प्रकारभेदेन भिन्नत्वात्, समवायेन गगनादिभ्रमे वैयर्थ्याच्च । किन्तु तत्प्रकारताकत्वमात्रम् । तथा च प्रकृतेपि कंबुग्रीवादिमत्प्रतियोगिताकाभावप्रकारतामात्रेण तादृशधीर्भ्रमोभविष्यतीति निरस्तमित्याशयेन संक्षेप इत्युक्तम् ॥ ६९ ॥

पक्षवृत्तित्वमित्यत्रेति । "व्याप्यस्यपक्षवृत्तित्वधीः परामर्शउच्यते" इति मूले इत्यादिः । तथा च परामर्शनिरूपितोपोद्घातसंगतिरिति भावः । व्याप्तिनिरूपिता

न पक्षता, विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात्। अत एव साध्यसन्देहोऽपि न पक्षता, विनापि सन्देहं तदनुमानात्। सिद्धौ सत्यामपि

हो गयी तो वहाँ 'पर्वतो वन्हिमान्' यह अनुमिति अवश्य होती है-कारण कि सिषाधयिषा उत्तेजक होकर बैठी है।

प्रश्न—प्राचीन लोगों से अभिमत सिषाधयिषामात्र को ही पक्षता मान लिया जाय-अथवा साध्य सन्देह को ही पक्षता मान लिया जाय।

उत्तर—सिषाधयिषामात्र को यदि पक्षता मानेंगे तो "गगनं मेघवत् घनगर्जनात्" इस अनुमिति की अनुपपत्ति हो जावेगी। कारण कि घर के अन्दर बैठे हुये पुरुष को "गगने मेघानुमितिर्मे जायताम्" इस इच्छा के बिना भी घनगर्जनमात्र से मेघानुमिति होती है कि "गगनं मेघवत् घनगर्जनात्" गगन मेघवाला है-घनगर्जन होने से। अतः सिषाधयिषारूप पक्षता कारण न होने से कार्य अनुमिति नहीं हो सकेगी-इसीलिये "साध्य सन्देहः पक्षता" यह प्राचीनों का लक्षण भी ठीक नहीं है क्योंकि मेघरूप जो साध्य तत्सन्देहरूप पक्षता के बिना भी गृहाभ्यन्तरस्थित पुरुष को घनगर्जन से मेघानुमिति होती है-परन्तु अब उसकी भी अनुपपत्ति हो जावेगी क्योंकि साध्य सन्देह रूप पक्षता रूप कारण नहीं है।

---

एककार्यकारित्वसंगतिर्बोध्या। व्याप्तिज्ञानजन्याया अनुमितेः *किमन्यत्कारणमिति* जिज्ञासयैव पक्षतानिरूपणात्। अत्र एककार्यकारित्वं च एककार्यानुकूलत्वम्, तच्च जनकजनकतावच्छेदकसाधारणप्रयोजकत्वम्, तच्च कारणतावच्छेदकावृत्ति अन्यथासिद्धिचतुष्टयरहितत्वेसति नियतपूर्ववर्तित्वम्, तेन व्याप्तिपक्षतयोः "अनुत्पात्मक" एककार्यकारित्वलाभः। व्याप्तेः कारणतावच्छेदकत्वेपि एतादृशानुकूलत्वसत्त्वे बाधकाभावादिति ध्येयम्। **तद्वानिति**। सिषाधयिषाविरहविशिष्टसिद्ध्यभाववानित्यर्थः। सिद्ध्यभाववत्ता च स्वप्रतियोगिविशेष्यत्वाभाववत्वसंबन्धेन। एतेन सिद्धिदशायां पर्वतादौ पक्षव्यवहारोदुर्वारः, समवायसंबन्धावच्छिन्नप्रतियोगिताकसिद्ध्यभावस्य स्वरूपेण सत्वादिति निरस्तम्। न च तत्पुरुषीयसिद्धिविशेष्यत्वाभाव एव तं प्रति पक्षव्यवहार*निमित्तम्। तस्यानुमित्यहेतुत्वात्*, अनुमितिहेतोरेव पक्षतायाः, पक्षपदप्रवृत्तिनिमित्तत्वात्, पक्षताऽनुमितिहेतुरित्यादिव्यवहारादिति ध्येयम्। **सिषाधयिषामात्रमिति**। मात्रपदेन सिद्ध्यभावव्यवच्छेदः। तथा च समवायेन तत्पक्षकतत्साध्यकानुमितिं प्रति समवायेन सिषाधयिषा कारणम्। कारणतावच्छेदकं च "यद्यदनुमित्सासत्त्वे तदपक्षसाध्यकानुमितिः" तत्तदनुमित्साविरहकूटत्वावच्छिन्नाभावत्वम् नातः प्रत्यक्षादिभिन्नं वन्हिज्ञानं जायतां वन्ह्यनुमितिर्जायतां—वन्हिभिन्नान्यविधेयकानुमितिर्जायतामित्याद्यनुमित्सानामननुगमः।

**घनगर्जितेन**। विजातीयशब्दवत्वेन। **मेघानुमानात्**। मेघानुमितेः। अनुमितिश्च गगनं मेघवद्विजातीयशब्दवत्वादित्याकारिका बोध्या। न च फलबलाद् *गगने*

सिषाधयिषासत्वेऽनुमितिर्भवत्येव अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणम्। तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि

प्रश्न—"सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता" इस पक्षता लक्षण में सिषाधयिषाविरहविशिष्टत्व सिद्धि का विशेषण क्यों दिया–सिद्ध्यभावमात्र को पक्षता कह दिया जाय।

उत्तर—सिद्धि के रहने पर भी सिषाधयिषा के सत्त्वकाल में अनुमिति होती है–परन्तु अब विशिष्टान्तविशेषण न देने पर अनुमिति की अनुपपत्ति हो जावेगी–कारण कि सिद्ध्यभाव रूप पक्षता रूप कारण नहीं है–अतः विशिष्टान्त सिद्धि का विशेषण दिया–देने से अनुमिति की उपपत्ति हो गयी–क्योंकि सिषाधयिषा और सिद्धि जब दोनों हैं तब यह सिद्धि तो सिषाधयिषा से विशिष्ट ही है–सिषाधयिषाविरहविशिष्ट जो भी सिद्धि हो–उसका अभाव यहाँ है–अतः विशेषणाभाव प्रयुक्त विशिष्टाभाव यहाँ जानना चाहिये–अतः पक्षता की उपपत्ति से अनुमिति की उपपत्ति हो गयी। और उस विशिष्टाभाव में तीन प्रयोजक है–जैसे जहाँ सिद्धि नहीं है–और ( तत्र सिषाधयिषायां सत्याम् ) वहाँ सिषाधयिषा के होने पर पक्षता बन जाती है–क्योंकि वहाँ उभयाभाव प्रयुक्त विशिष्टाभाव रूप पक्षता जानना चाहिये–कारण कि वहाँ सिषाधयिषा के होने से सिषाधयिषाविरह रूप विशेषण भी नहीं है अतः विशेषणाभाव भी है–और विशेष्य जो सिद्धि उसके न होने से विशेष्याभाव भी है अतः उभयाभाव प्रयुक्त विशिष्टाभाव रूप पक्षता

---

मेघानुमितिर्जायतामितीच्छा कल्पनीयेति वाच्यम्। हस्तिघोटकवत्वादिना "मदीयशत्रुः संपन्नः" इत्यनुमितौ व्यतिरेकव्यभिचारतादवस्थ्यात्, शत्रुविशेष्यक संपन्नत्वप्रकारकानुमितीच्छायाः कल्पयितुमशक्यत्वात्। **अतएव**। वक्ष्यमाणदोषादेव। **साध्यसन्देहोपि**। साध्यप्रकारकसंशयोपि, स च पर्वतोवन्हिमान्नवेत्याकारकः। **तदनुमानात्**। मेघानुमितेः।

अयं भावः। साध्यनिश्चयसत्वे बाधनिश्चयसत्वे वाऽनुमितिर्न भवतीति तयोर्विघटनाय संशयस्यानुमितिकारणत्वमावश्यकम्। एवं च साध्यनिश्चयस्य बाधनिश्चयस्य वा संशयं प्रति प्रतिबन्धकत्वादुभयसत्वे संशयरूपकारणाभावादेव नानुमितिः। प्राचीनमते स्वातन्त्र्येणानुमितिं प्रति सिद्धेःप्रतिबन्धकत्वं नास्ति, संशयस्य सिद्धिं प्रति प्रतिबन्धकत्वात्संशयोत्तरं सिद्ध्यात्मकपरामर्शाऽसंभवात्। सिद्धेश्च साध्यसंशयं प्रति प्रतिबन्धकत्वात्सिद्ध्यात्मकपरामर्शोत्तरं संशयाऽसंभवात्सिद्धिसत्वे आपत्तिविरहात्। परन्तु साध्यसंशयोत्तरं स्मृत्यात्मकसिद्ध्यात्मकपरामर्शसत्वे ऽनुमितिर्भवत्येव, प्रत्यक्षं प्रत्येव ग्राह्यसंशयस्य प्रतिबन्धकतया स्मरणात्मकसिद्धिं प्रति साध्यसंशयस्याऽप्रतिबन्धकत्वात्इति ध्येयम्। कार्यकारणभावस्तु विशेष्यतासंबन्धेनानुमितिं प्रति विशेष्यतासंबन्धेन साध्यसंशयः कारणमित्याकारकः। न च साध्यप्रकारकसंशयस्य पक्षतात्वे वन्हिः पर्वते न वा, वन्हिः पर्वतनिष्ठाभावप्रतियोगी न, वा, इत्यादिसंशयानां पक्षतात्वानुपपत्तिरिति वाच्यम्। समानविषयकत्वेन प्रतिबन्धकत्वस्वीकर्तृ प्राचीनमते पर्वतोवन्हिमानिति निश्चयः—पर्वतो

पक्षता। यत्र सिषाधयिषाऽस्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता। यत्र-सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता, सिषाविरहविशिष्ट-सिद्धेः सत्वात्।

समझना। और जहाँ सिद्धि नहीं है ( तत्र सिषाधयिषाया असत्यामपि पक्षता ) अर्थात् जहाँ सिद्धि–एवं सिषाधयिषा दोनों नहीं हैं–वहाँ विशेष्याभावप्रयुक्त विशिष्टाभाव जानना–अर्थात् सिषाधयिषा के न होने से सिषाधयिषाविरहरूपविशेषण तो है–परन्तु सिद्धि रूप विशेष्य के न होने से विशेष्याभाव प्रयुक्त विशिष्टाभाव ही कहना चाहिये। [ यह हमने सिषाधयिषा के सत्व-असत्वपक्ष में उभयाभाव प्रयुक्त–तथा विशेष्याभावप्रयुक्त–विशिष्टाभावरूप पक्षता बतला दी है ] अब सिद्धि के सत्व-असत्वपक्ष में पक्षता की उपपत्ति करते हैं–"यत्र सिषाधयिषाऽस्ति" इत्यादि ग्रन्थ से। अर्थात् जहाँ सिषाधयिषा है–और सिद्धि भी है–वहाँ केवल सिषाधयिषा-विरहरूपविशेषण के होने से विशेषणाभाव प्रयुक्त विशिष्टाभावरूप पक्षता जानना चाहिये। और जहाँ सिषाधयिषा है सिद्धि नहीं है–वहाँ तो पूर्ववत् उभयाभावप्रयुक्तविशिष्टाभाव रूप पक्षता ही समझनी चाहिये। यही मूल में कहा है कि "यत्र सिषाधयिषाऽस्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता"। और जहाँ सिद्धि है–सिषाधयिषा नहीं है–वहाँ विशिष्टा-भावरूप पक्षता नहीं बनती है–अतः ऐसे स्थल में अनुमिति भी नहीं होती है–क्योंकि वहाँ सिषाधयिषा के विरह से विशिष्ट होकर अनुमिति की प्रतिबन्धिका जो सिद्धि–वही है–'सिषाध-यिषाविरहविशिष्टसिद्धेः सत्वात्" ( प्रतिबन्धक के रहने पर कार्य नहीं होता है जहाँ कोई उत्तेजक हो, सो प्रकृत में उत्तेजक जो सिषाधयिषा वह है ही नहीं–अतः अनुमिति का प्रतिबन्ध होना उचित ही है )।

---

वन्हिमान्नवेति संशयस्येव पर्वते वन्हिर्नवा, वन्हिःपर्वतनिष्ठाभावप्रतियोगी न वेत्यादि-संशयानामपि विरोधी, तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्य-तावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्न प्रतिबन्धकतानिरूपितप्रतिबध्यताशाली संशयः तत्पक्षकतत्साध्यकानुमितौ कारणम्। तादृशसंशय" एव पक्षता। तथा च निखिलसंशयानां संग्रहः। सिषाधयिषाविरहरूपविशे-षणस्य प्रयोजनमाह। **सिद्धौ सत्यामपीति।** पर्वतोवन्हिमानिति साध्यनिश्चयसत्वे-पीत्यर्थः। प्रतिबन्धकसत्वे पीति यावत्। **सिषाधयिषासत्वे** इति पर्वते वन्ह्यनुमितिर्जा-यतामितिच्छासत्वे इत्यर्थः। उत्तेजकसत्वे इति यावत्। उत्तेजकत्वं च प्रतिबन्धकसत्वे कार्यजनकत्वम्। प्रतिबन्धकत्वं च कारणीभूताभावप्रतियोगित्वं। **अनुमितिर्भवत्ये-ति।** पर्वतोवन्हिमानित्यनुमितिर्भवत्येवेत्यर्थः। **अतः।** अनुमित्युपपत्यर्थम्। सिषाधयिषाविरहवैशिष्ट्यं च स्वरूपसंबन्धेन सिषाधयिषाविरहाधिकरणे समवायेन-वृत्तित्वरूपसामानाधिकरण्यसंबन्धेन बोध्यम्। सिषाधयिषाविरहविशिष्टसिद्ध्यभाव-रूपपक्षता च क्वचिद्विशेषणाभावप्रयुक्ता–क्वचिद्विशेष्याभावप्रयुक्ता क्वचिदुभया-

**ननु यत्र परामर्शानन्तरं सिद्धिः ततः सिषाधयिषा तत्र सिषाधयिषाकाले**

शंका—( अब विचारणीय विषय यह है कि जहाँ अनुमिति का कारण परामर्श एवं अनुमिति की प्रतिबन्धिका सिद्धि–तथा अनुमिति की उत्तेजिका सिषाधयिषा ये तीनों हैं–उस स्थल में अनुमिति की उपपत्ति के लिये वास्तविक में सिषाधयिषा विरह विशिष्टत्व विशेषण सिद्धि का दिया है–अन्यथा सिद्ध्यभावमात्र को पक्षता कहने से पूर्वोक्त स्थल में ( अर्थात् जहाँ कारण–प्रतिबन्धक–उत्तेजक–ये तीनों हैं उस स्थल में ) सिद्धि होने से सिद्ध्यभाव नहीं है–अतः अनुमिति नहीं हो सकेगी–अथ च प्रतिबन्धक सिद्धि के होने पर भी अनुमिति होती है–कारण कि उत्तेजक सिषाधयिषा बैठी है–परन्तु इन तीनों को जो रहना चाहिये सो शरीरावच्छिन्न एक आत्मा में–वह भी एक काल में–इसका अभिप्राय यह है कि चैत्र को यदि परामर्श–और सिद्धि दोनों हैं–तो चैत्र ही को सिषाधयिषा के होने पर अनुमिति होगी। यद्यपि चैत्र की आत्मा में अनुमिति का कारण परामर्श अवश्य है–तथापि अनुमिति का प्रतिबन्धक सिद्धि भी साथ ही में है–अतः प्रतिबन्धक के रहने पर अनुमिति तब ही होगी–जब कि उत्तेजक सिषाधयिषा भी उसी आत्मा में रहेगी। और उत्तेजकता सिषाधयिषा की तब ही बन सकती है–जब कि जिस काल में चैत्र को परामर्श और सिद्धि हुवे हैं–यदि उसी काल में चैत्र को सिषाधयिषा भी होवे–अर्थात् चैत्रीय आत्मा ( एक आत्मा ) में तीनों की स्थिति एक काल में अपेक्षित है। परन्तु वह तीनों की स्थिति एक काल में बनती ही नहीं है–अतः 'सिषाधयिषा विरहविशिष्टत्व' विशेषण व्यर्थ

---

भावप्रयुक्ता चेत्याह। **तथा चेति। यत्र सिद्धिर्नास्तीति।** सिद्ध्यभावोस्तीत्यर्थः। **सिषाधयिषायां सत्यामिति।** तथा चोभयाभावप्रयुक्तविशिष्टाभाव इति भावः। **असत्यामिति।** तथा च विशेष्याभावप्रयुक्तविशिष्टाभाव इति भावः। **सिद्धौ सत्यामिति।** विशेषणाभावप्रयुक्तोविशिष्टाभाव इति भावः। **सिद्धावसत्यामिति।** उभयाभावप्रयुक्तः स इति भावः। **सत्वादिति।** विशेषणविशेष्योरुभयोःसत्वादितिभावः। इदमुपलक्षणम्। सिद्धिधर्मिकयद्यदप्रामाण्यज्ञानसत्वे सिद्धिदशायामनुमितिः, तत्तदप्रामाण्यज्ञानाभावसमुदायस्यापि सिद्धौ विशेषणत्वं बोध्यम्। अतएव मिश्रैरनुमितिग्रन्थे, ऽप्रामाण्यज्ञानास्कन्दितायाः सिद्धेरप्रतिबन्धकत्वमुक्तम्।

सिद्धिसत्वे सिषाधयिषाधीनानुमितेरुपपादनाय विशिष्टान्तं विशेषणमुपात्तम्, तच्च तदैवोपपद्यते यदि सिद्धिसिषाधयिषापरामर्शानां त्रयाणां अनुमित्यव्यवहितपूर्वक्षणेऽवस्थानं संभवेत्, तच्चासंभवि, विभुसमवेतयोग्यविशेषगुणानां द्विक्षणानस्थायितया त्रयाणां युगपदनवस्थानात्, यत्राऽपेक्षाबुध्यात्मकस्य परामर्शस्य साध्यनिश्चयस्य वा प्रथममुत्पादस्तत्रैव तृतीयक्षणे त्रयाणामवस्थानमिति तु न संभवदुक्तिकम्, अपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं स्वीकुर्वाणैस्तदव्यवहितोत्तरक्षणे विशेषगुणोत्पत्त्यनभ्युपगमादित्याशंकते। **नन्विति।** एव मन्यत्रापि यत्र परामर्शसिषाधयिषासिद्धयः क्रमेण भवन्ति, एवं सिद्धिसिषाधयिषापरामर्शाः, एवं सिषाधयिषापरामर्शसिद्धय-

परामर्शनाशान्नानुमितिः, यत्र सिद्धिपरामर्शसिषाधयिषाः क्रमेण भवन्ति तत्र सिषाधयिषाकाले सिद्धेर्नाशात्प्रतिबन्धकाभावादेवानुमितिः, यत्र सिषाधयिषासिद्धिपरामर्शाः तत्र परामर्शकाले सिषाधयिषैव नास्ति, एवमन्यत्रापि सिद्धिकाले परामर्शकाले च न सिषाधयिषा, योग्यविभुविशेषगुणानां यौगपद्यनिषेधात् तत्कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेः विशेषणमिति चेन्न।

है। यही आशंका "ननु यत्र परामर्शानन्तरम्" इस ग्रन्थ से लेकर "तत्कथं सिषाधयिषा विरह विशिष्टत्वं सिद्धेर्विशेषणम्" इत्यन्त ग्रन्थ से करते हैं ) तथाहि–जहाँ परामर्श के बाद सिद्धि है–अर्थात् प्रथम क्षण में परामर्श–और द्वितीय क्षण में सिद्धि इसके बाद ( तृतीय क्षण में ) सिषाधयिषा है–वहाँ सिषाधयिषाकाल में ( तृतीय क्षण में ) परामर्श का नाश हो जाने से ही अनुमति नहीं होगी–क्योंकि कारण ही नहीं है। एवं जिस आत्मा में १–क्षण में सिद्धि २–क्षण में परामर्श–३–क्षण में सिषाधयिषा–इस क्रम से होती है–उस आत्मा में (तृतीय क्षण में) सिषाधयिषा काल में सिद्धि का नाश हो जाने से ही अनुमीति हो जावेगी–क्यों कि प्रतिबन्धक सिद्धि है ही नहीं–अथ कारण परामर्श है ही। यही कहा है कि–"यत्र सिद्धि–परामर्श-सिषाधयिषाः क्रमेण भवन्ति" इत्यादि। जिस आत्मा में सिषाधयिषासिद्धि परामर्श हैं उस आत्मा में परामर्श काल ( तृतीय क्षण ) में सिषाधयिषा ही क्षणिक होने से नष्ट हो चुकी–अथ च प्रतिबन्धक सिद्धि है अतः वहाँ भी सुतरां अनुमिति नहीं होगी। इसी प्रकार अन्यत्र भी जहाँ क्रम से सिषाधयिषा परामर्श सिद्धि हैं–वहाँ भी सिद्धिकाल में उत्तेजक सिषाधयिषा है नहीं–अथ च प्रतिबन्धक ( सिद्धि ) है–अत. अनुमिति नहीं होती है। ऐसे ही जहाँ परामर्श काल मे सिषाधयिषा नहीं है–जैसे सिषाधयिषा–सिद्धि–परामर्श वहाँ भी उत्तेजक सिषाधयिषा के न रहने से अनुमिति नहीं होगी। और यदि परामर्श–सिद्धि–सिषाधयिषा–इन तीनों में से दो को एक क्षण में रक्खें या तीनों ही को एक क्षण में रक्खें तब तो कारण सामग्री का संवलन ठीक रूप से हो सकता है–क्यों कि अनुमिति पूर्व क्षण में परामर्श भी है–और पक्षता भी है–कारण कि अब तो यह सिद्धि सिषाधयिषा से विशिष्ट ही है–सिषाधयिषा विरह विशिष्ट

---

इच्चेतत्रेत्यर्थः। **सिद्धिकाले परामर्शकाले चेति**। सिद्धिपरामर्शोभयक्षणे इत्यर्थः।

**कथमिति**। किमर्थमित्यर्थः। **प्रत्यक्षमिति**। अनुमितीष्टसाधनताविषयकमिति शेषः।

अथ सिद्धिविषयिणीइच्छा सिषाधयिषा, तस्याः सिद्धिविषयकेच्छात्वेनोत्तेजकत्वे द्रव्यत्वेन द्रव्यज्ञानं जायतामितीच्छासत्वे सिद्ध्यात्मकपरामर्शाद्वन्ह्यनुमितिः स्यादतः प्रकृतसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविधेयतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नोद्देश्यताकत्वप्रकारिकानुमितिविशेष्यिका इच्छा सिषाधयिषापदेन वाच्या। तथा सति वन्हिभिन्नान्यविधेयकानुमितिर्जायतां,प्रत्यक्षादिभिन्नं वन्हिज्ञानं जायतामितीच्छासत्वे सिद्ध्यात्मकपरामर्शसत्वेऽनुमितिर्न स्यादतस्ता-

यत्र वन्हिव्याप्यधूमवान् पर्वतोवन्हिमानिति प्रत्यक्षं स्मरणं वा ततः सिषाधयिषा तत्र पक्षतासंपत्तये तद्विशेषणस्यावश्यकत्वात्।

इदं तु बोध्यम्। यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिंगकानुमितिः, तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिंगकानुमितौ पक्षता। तेन सिद्धिपरामर्शसत्त्वे यत्किंचित् ज्ञानं जायतामितिच्छायामपि

जो कालान्तरीय–देशान्तरीय सिद्धि हो–उसका अभाव यहाँ है ही–अतः सिषाधयिषा विरह विशिष्टत्व का भी यही सार्थक्य बन जाता है–अन्यथा परामर्श–सिद्धि–सिषाधयिषा स्थल में सिद्ध्यभावरूप पक्षता कैसे बनेगी–इस शंका के ऊपर कहते हैं. कि 'प्रत्यक्ष योग्य विभु (आकाशात्मा) के विशेष गुण जो ज्ञान इच्छादि है। उनके यौगपद्य (एककालोत्पत्तिकत्व) का निषेध है–अर्थात् ये एक क्षण में दो विशेष गुण–या तीन–उत्पन्न नहीं होते हैं–अतः सिषाधयिषा विरह विशिष्टत्व सिद्धि का विशेषण क्यों देना सिद्ध्यभाव मात्र को पक्षता कह दीजिये। समाधान—जिस आत्मा में "वन्हि व्याप्य धूमवान् पर्वतो वन्हिमान्" इत्याकारक साध्यनिश्चय (सिद्धि) के सहित एक ही समूहा लम्बनात्मक प्रत्यक्षरूप–अथवा स्मृतिरूप परामर्श ज्ञान प्रथमक्षण में उत्पन्न हुवा–उसके बाद द्वितीय क्षण में "पर्वते वन्ह्यनुमितिर्मे जायताम्" इत्याकारक सिषाधयिषा हुवी–वहाँ पक्षता सम्पत्ति के लिये सिषाधयिषा विरह विशिष्टत्व सिद्धि का विशेषण आवश्यक है। अभिप्राय यह है कि यहाँ सिषाधयिषा के पूर्व क्षण में सिद्धि-विशिष्ट परामर्शात्मक ज्ञान है–यही ज्ञान द्वितीय क्षण में सिषाधयिषा रूप उत्तेजक के होने से अनुमिति का कारण हो जाता है–और यही ज्ञान सिषाधयिषा के न होने से सिद्धि रूप से प्रतिबन्धक हो जाता है, ऐसी परिस्थिति में यदि सिषाधयिषा विरह विशिष्टत्व विशेषण न देंगे तो 'सिद्ध्यभाव मात्र' पक्षता नहीं हो सकती–क्योंकि सिद्धि ही परामर्श के साथ बैठी है–अतः उक्त विशेषण देना चाहिये–देने पर यह सिद्धि द्वितीय क्षण में सिषाधयिषा से विशिष्ट ही है–सिषाधयिषा विरह विशिष्ट जो भी कालान्तरीय सिद्धि हो–उस सिद्धि का अभाव प्रकृत में होने से पक्षता बन गयी। "अत्रेदं बोध्यम्" मूल है। यहाँ यह भी जानना चाहिये–कि जिस २ सिषाधयिषा के सत्त्वकाल में तथा सिद्धि के सत्त्वकाल में याल्लिङ्गक (यद्धेतुक) अनुमिति होती है– उस २ सिषाधयिषा के विरह से विशिष्ट सिद्धि का अभाव उसी लिङ्गक (हेतुक) अनुमिति में पक्षता होती है, इससे "वन्हिव्याप्य धूमवान् पर्वतो वन्हिमान्" इत्याकारक सिद्ध्यात्मक परामर्श सत्त्वकाल में "यत्किञ्चिज्ज्ञानं जायताम्" इस इच्छा के न होने पर भी "पर्वतो

---

दृशतादृशेच्छानामप्युत्तेजकत्वं वाच्य मित्यननुगमइत्यत आह। अत्रेदं बोध्यमिति। यद्यदिच्छासत्त्वे "सिद्ध्यसत्त्वे" स्वकारणमात्रादेवानुमितिः "निष्फल" तदिच्छाऽभावस्य कारणतावच्छेदककोटौ निवेशे गौरवं स्यादतः सिद्धौ सत्यामित्युक्तम्। यत्र घटानुमित्सासत्त्वे सिद्ध्यनात्मकवन्हिपरामर्शसत्त्वे वन्ह्यनुमितेः प्रामाणिकतया यत्र सिद्ध्यात्मकवन्हिपरामर्शः-ततोघटानुमित्सा-ततः सिद्ध्यनात्मकवन्हिपरामर्शः

**नानुमितिः, वन्हिव्याप्यधूमवान्पर्वतोवन्हिमानिति प्रत्यक्षसत्वे प्रत्यक्षातिरिक्तं वन्हिज्ञानं जायतामितिच्छासत्वे तु भवत्येव। एवं धूमपरामर्शसत्वे आलोकेन वन्हिमनुमिनुयामितीच्छायामपि नानुमितिः।**

वन्हिमान्'' इस अनुमिति की आपत्ति नहीं है—क्योंकि यह इच्छा इस अनुमिति में उत्तेजक नहीं है। और ''वन्हिव्याप्यधूमवान् पर्वतो वन्हिमान्'' इत्याकारक प्रत्यक्षात्मक परामर्श सत्वकाल में ''प्रत्यक्षादिभिन्नं वन्हि ज्ञानंजायताम्'' इस इच्छा के होने पर तो ''पर्वतो वन्हिमान्'' यह अनुमिति अवश्य ही होती है—कारण कि यह इच्छा प्रत्यक्षादिज्ञान से भिन्न ज्ञान मात्र में उत्तेजक होने के नाते अनुमिति में भी उत्तेजक है।

एवं ''वन्हिव्याप्यधूमवान् पर्वतोवन्हिमान्'' इत्याकारक सिद्ध्यात्मक धूमलिङ्गकपरामर्श-सत्वकाल में ''आलोकेन वन्हिमनुमिनुयाम्'' इस इच्छा के होने पर भी अनुमिति नहीं होती है—क्योंकि यद्धेतुक सिद्ध्यात्मकपरामर्श हो-तद्धेतुक ही यदि इच्छा होगी तो वही इच्छा तद्धेतुक अनुमिति में उत्तेजक होती है—प्रकृत में ऐसा नहीं है। वही मूल में कहा है कि ''एवं धूमपरामर्शसत्वे आलोकेन वन्हिमनुमिनुयाम्'' इत्यादि। सिषाधयिषा के विरहकाल में सिद्ध

---

ततोऽनुमितिस्तस्याः सिद्ध्यनात्मकपरामर्शक्षणे आपत्तिसंभवे कारणतावच्छेदक-गौरवाभिधानमनुचितम्, यादृशयादृशेच्छान्तर्गतायाः घटानुमित्सायाः अप्युत्तेज-कतया तादृशेच्छासत्वे परामर्शोत्तरक्षणेऽनुमितेःप्रामाणिकतया तादृशतादृशेच्छा-विरहकूटविशिष्टसिद्ध्यभावस्य घटानुमितद्धिरो सत्वादिति। तन्न। सिषाधयिषाया-स्तत्तद्व्यक्तित्वेनोत्तेजकतया सिद्ध्यात्मकतादृशपरामर्शकालीनतादृशेच्छाव्यक्ति-दशायामनुमितेरप्रामाणिकतया तादृशेच्छाव्यक्तेरुत्तेजककोटावप्रवेशादिति ध्येयम्। तत्पक्षकतत्साध्यकतल्लिंगकानुमितिं प्रत्येव तल्लिंगकतत्पक्षकतत्साध्यकानुमितित्वप्रकार-केच्छात्वाद्यवच्छिन्नाभावस्याऽनुगतरूपेण निवेशलाभार्थं यादृशयादृशेत्युक्तम्।

वस्तुतोऽनुमित्साया अनुगतरूपेणोत्तेजकत्वे यत्र वन्हिव्याप्यधूमवान्पर्वतो-वन्हिमान् इति सिद्ध्यात्मकपरामर्शः ततोऽनुमितिर्जायतामितीच्छा, ततोवन्ह्यनु-मितिः तत्रानुमितित्वप्रकारकेच्छात्वेनाप्युत्तेजकतया यत्रोक्तपरामर्श एव सिद्ध्य-नात्मकद्रव्यत्वादिसाध्यक समूहालंबनरूपः, ततोऽनुमितिर्जायतामितिच्छयावन्ह्यनु-मित्यापत्तेः। न चेष्टापत्तिः। प्रकारान्तरेण स्वविषयपर्यवसानसंभवे अनुमित्सानाम-वगतार्थगोचर ज्ञानानर्जकत्वात्। अतस्तत्तद्व्यक्तित्वेनेच्छाया उत्तेजकत्वं वाच्यम् एवं च समूहालंबनस्थलीयतदिच्छाव्यक्तीनामुत्तेजककोटावप्रवेशान्नदोष इति। तेन। यादृशयादृशेच्छासत्वे इत्यादि निर्वचनेन। सिद्धिविषयिण्या इच्छाया अनुत्तेजकत्वेनेति यावत्। **यत्किंचिद्ज्ञानं जायतामिति।** द्रव्यत्वेन द्रव्यज्ञानंजायतामित्यर्थः। **नानुमितिः।** नानुमित्यापत्तिः ननु अनुमितित्वप्रकारकेच्छात्वेनैवोत्तेजकत्वं वाच्यम्, तावतैव यत्किंचिद्ज्ञानं जायतामितिच्छावारणसंभवादत आह। प्रत्यक्षाति-

सिषाधयिषाविरहकाले यादृशसिद्धिसत्त्वे नानुमितिः, तादृशसिद्धि-

सिद्धि के रहने पर अनुमिति न होती हो—वह सिद्धि विशेषरूप से उस-उस अनुमिति की प्रति-
बन्धक होती है—ऐसा कहना चाहिये। वही मूल में कहा है "विषाधयिषाविरहकाले यादृश-

---

रिक्तंवन्हिज्ञानं जायतामितीच्छायामिति। अनुमितित्वाप्रकारिकायामपीति शेषः। भवत्येवेति। अस्यानुमितिरित्यनेन संबन्धः। तथा चा नुमितित्व-प्रकारकेच्छात्वेनोत्तजकत्वे तत्रानुमितिर्न स्यादिति भावः। तल्लिंगकत्वस्य फलमाह। एवमिति। धूमपरामर्शसत्त्वे इति। वन्हिव्याप्यधूमवान्पर्वतोवन्हिमानिति सिद्ध्यात्मकधूमपरामर्शसत्त्वे इत्यर्थः। नानुमितिरिति। नानुमित्यापत्तिरित्यर्थः।

न च तत्तदनुमितिसाव्यक्तीनामुत्तेजककोटावप्रवेशादेव न तत्राऽनुमितिरिति वाच्यम्। तादृशधूमपरामर्शसत्त्वे आलोकेन वन्हिमनुमिनुयामितीच्छासत्त्वे वन्हिव्याप्यालोकवान् पर्वतोवन्हिमानिति परामर्शाद्वन्ह्यनुमितिः, तत्राऽऽलोकलिंगकपरामर्शोत्तरं वन्ह्यनुमित्यापत्तेः, पर्वतपक्षकवन्ह्यनुमितौ तदिच्छाव्यक्तेरप्युत्तेजकत्वात्, अन्यथा तत्रैव सिद्ध्यात्मकालोकपरामर्शाद् वन्ह्यनुमितिर्न स्यादिति भावः। एवं च प्रकृते धूमलिंगकेच्छाविरहविशिष्टसिद्ध्यभावरूपकारणविरहान्न धूमलिंगकानुमितिः, धूमान्यलिंगकपरामर्शविरहाच्च न धूमान्यलिंगकानुमित्यापत्तिः। विशेषसामग्रीसमवहितायाः एव सामान्यसामग्र्याः फलोपधायकत्वेन नानुमितिसामान्यापत्तिरिति भावः। तल्लिंगकानुमित्साया उत्तेजकत्वेपि तत्कार्यतावच्छेदकं न प्रकृतपक्षसाध्यकानुमितित्वमात्रम्, किन्तु तल्लिंगकत्वमपि कार्यतावच्छेदककोटौ प्रवेशनीयम्, अन्यथा वन्हिव्याप्यधूमवान् पर्वतोवन्हिमानिति परामर्शसत्त्वे आलोकेन वन्हिमनुमिनुयामितीच्छासत्त्वे आलोकलिंगकसिद्ध्यात्मकपरामर्शसत्त्वे प्रकृतपक्षसाध्यानुमितेरुत्पादेन धूमलिंगकानुमित्साविरहविशिष्टसिद्ध्यभावरूपकारणविरहेण व्यतिरेकव्यभिचारः स्यात्, अतएवोक्तं "यल्लिंगकानुमिति" रितिध्येयम्। न च तल्लिंगकानुमितित्वप्रकारकेच्छात्वेनोत्तजकत्वे वन्ह्यनुमितिर्जायतामितीच्छाया उत्तेजकत्वं न स्यात्, तदिच्छाव्यक्तेस्तल्लिंगकत्वाप्रकारकत्वादिति वाच्यम्। तल्लिंगकत्वाप्रकारिका अथ च यत्किंचिल्लिंगकत्वप्रकारिका या इच्छा तदतिरिक्ताया अनुमित्साया एव विवक्षितत्वात्। न च यत्राऽनुमित्सोत्तरं व्याप्तिस्मरणं ततः सिद्ध्यात्मकपरामर्शः ततोऽनुमितिर्न स्यात्, सिषाधयिषाविरहविशिष्टसिद्धेः सत्वादिति वाच्यम्। तत्रानुमित्सान्तरोत्पत्तिस्वीकारेण विशिष्टाभावसंपादनादित्यन्यत्र विस्तरः।

यादृशसिद्धिसत्त्वे नानुमितिः, तादृशसिद्धिस्तादृशानुमितौ प्रतिबन्धिका इत्युक्तौ पर्वतोवन्हिमानित्यनुमितौ पर्वतोवन्हिमानिति सिद्धेरपि प्रतिबन्धकत्वं न स्यात्, तादृशसिद्धिसत्त्वेपि सिषाधयिषया ऽनुमित्युत्पादादतआह। सिषाधयिषाविरहकाले इति। विशिष्यैवेति। पक्षतावच्छेदकं साध्यतावच्छेदकं च विशेष-

विशिष्यैव तत्तदनुमितिप्रतिबन्धिका वक्तव्या, तेन पर्वतस्तेजस्वी, पाषाणमयो वन्हिमानिति ज्ञानसत्त्वेपि अनुमितेर्न विरोधः।

सिद्धि सत्त्वे नानुमितिः" इत्यादि। इससे "पर्वतस्तेजस्वी" "पाषाणमयो वन्हिमान्" इत्याकारक सिद्ध्यात्मक ज्ञान होने पर भी "पर्वतो वन्हिमान्" इस अनुमिति का विरोध नहीं होता है। (अभिप्राय यह है कि "तद्विशेष्यक तत्प्रकारक अनुमिति के प्रति" तद्विशेष्यक तत्प्रकारक सिद्धि प्रतिबन्धक होती है-सो प्रकृत में ऐसा नहीं है-क्योंकि "पर्वतो वन्हिमान्" यह अनुमिति यो पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवन्हित्वावच्छिन्नप्रकारताशालिनी है-इधर दोनों सिद्धियों में विपरीत है-अर्थात् प्रथम सिद्धि में तेज में रहनेवाली प्रकारता तेजस्त्वावच्छिन्ना है-द्वितीय सिद्धि में विशेष्यता पाषाणमयत्वावच्छिन्ना है)। परन्तु प्रतिबध्यप्रतिबन्धकभावस्थल में यह

---

तोनिवेश्यैवेत्यर्थः तथा च पक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविधेयताकानुमितिं प्रति पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयः "सिषाधयिषाविरहविशिष्टः" प्रतिबन्धकः। पर्वतोवन्हिमानित्यादिसिद्धिदशायां वन्हिमान् पर्वतोघटवानित्यनुमितेरुदयात्, प्रतिबध्यतावच्छेदककोटौ प्रकारतामुपेक्ष्य विधेयतानिवेशः। विधेयता च न प्रकारतानियता, किन्तु वन्हिमनुमिनोमीति अनुव्यवसायसाक्षिकोविषयता विशेषः। तथा च समवायसंबन्धेन पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितसंयोगसंबन्धावच्छिन्नवन्हित्वावच्छिन्नविधेयताशाल्यनुमितिं प्रति समवायसंबन्धेन पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्नवन्हित्वावच्छिन्नप्रकारताशालिनिश्चयस्य प्रतिबन्धकत्वम्। तेन।

विशिष्य प्रतिबध्यप्रतिबन्धकभावस्वीकारेण। ज्ञानसत्त्वेपि। निश्चयसत्त्वेपि अनुमितेः। पर्वतोवन्हिमानित्यनुमितेः। न विरोध इति। पर्वतस्तेजस्वीति निश्चयस्य वन्हित्वावच्छिन्नप्रकारताकत्वाभावात्, पाषाणमयोवन्हिमानिति निश्चयस्य च पर्वतत्वावच्छिन्नविशेष्यताकत्वाभावादिति भावः। अत्र प्रतिबध्यता-प्रतिबन्धकतावच्छेदककोटौ धर्मित्वसाध्यत्वयोरवच्छेदकत्वे निरवच्छिन्नत्वेन विशेषणीये। व्यावृत्तिस्तु स्वयमूहनीया। अथ विशेष्यतावच्छेदकतासंबन्धेन तत्पुरुषीयवन्हिविधेयकानुमितिं प्रति विशेष्यतावच्छेदकतासंबन्धेन तत्पुरुषीयवन्हिप्रकारकनिश्चयस्य "सिषाधयिषाविरहविशिष्टस्य" प्रतिबन्धकत्वम्, न तु आत्मनिष्ठप्रत्यासत्त्या तथात्वम्, तथा सति धर्मितावच्छेदकविधया पर्वतत्वमहानसत्वाद्यनेकधर्मान्तर्भावेणाऽनन्तप्रतिबध्यप्रतिबन्धकभावकल्पनापत्तेः। न च तवापि पुरुषभेदेनाऽनन्तप्रतिबध्यप्रतिबन्धकभावः। तत्पुरुषस्यापि क्वचित्पक्षतया तद्भेदेनप्रतिबध्यप्रतिबन्धकभावनानात्वस्य त्वयापि स्वीकरणीयत्वादिति चेन्न। यत्रवन्हिव्याप्यधूमवन्तो चत्वरपर्वतौ वन्हिमन्तौ इति सिद्ध्यात्मकपरामर्शः ततः पर्वते वन्ह्यनुमितिर्जायतामितीच्छा ततः

पर्वते इव चत्वरेऽपि वह्न्यनुमितिः स्यात्, विशेष्यतावच्छेदकतासंबन्धेन सिषाधयिषाविरहविशिष्टस्य साध्यनिश्चयस्य चत्वरत्वेऽपि विरहात्, तादृशसिषाधयिषाव्यक्तेरनुत्तेजकत्वे पर्वते प्यनुमितिर्न स्यादिति ध्येयम्। साध्यविशेष्यकानुमितौ साध्यविशेष्यकसिद्धिर्विरोधिनी समवायसंबन्धेन संयोगसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नपर्वतनिष्ठप्रकारतानिरूपितवन्हित्वावच्छिन्नविधेयताशाल्यनुमितिं प्रति तादृशसंबन्धावच्छिन्नपर्वतनिष्ठप्रकारतानिरूपितवन्हित्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वम्। विधेयता च विशेष्यवृत्तिरपि। अथ वा साध्यविशेष्यकानुमितिं प्रति सिद्धिमात्रं विरोधि। साध्यज्ञानमेव वा साध्यविशेष्यकानुमितौ विरोधीत्युक्तमेव परामर्शनिरूपणे इति। **अनुमितिस्तु द्विविधा**—पक्षतावच्छेदसाध्ययोः सामानाधिकरण्यमात्रावगाहिनी। पक्षतावच्छेदके साध्यावच्छेदकत्वावगाहिनी च। तत्र एकधर्मिणि साध्यपक्षतावच्छेदकयोः संबन्धावगाहनमेव तदुभयसामानाधिकरण्यावगाहनम्, न तु पक्षतावच्छेदके साध्याधिकरणवृत्तित्वावगाहनम्, साध्ये पक्षतावच्छेदकाधिकरणवृत्तित्वावगाहनं वा, पर्वतोवह्निमानित्यनुमितौ तद्विषयताया अननुभवात्, तदभ्युपगमे प्रयोजनाभावाच्च। सामानाधिकरण्यमात्रावगाहित्वं च संयोगत्वमात्रावच्छिन्न संसर्गताकपर्वतधर्मिकवन्ह्यवगाहित्वम्। यत्तु अवच्छेदकत्वानवगाहित्वे सति सामानाधिकरण्यावगाहित्वं तत्, तच्च न कस्य चिदपि जन्यतावच्छेदकम्। अवच्छेदकत्वभासकसामग्र्यामसत्यामनुमितिसामग्रीसत्वे ऽर्थादेव तदवच्छिन्ननिष्पत्तेरिति तन्न तथासति पर्वतत्वावच्छेदेन तत्सामानाधिकरण्येन च परामर्शद्वयात् पर्वतत्वावच्छेद्यत्वावगाहि तदनवगाह्यनुमित्योर्युगपदुत्पादप्रसंगात्, सामग्रीसत्वात्।

अवच्छेदकत्वावगाहिन्यामनुमितौ चावच्छेदकत्वं प्रकारतया न भासते, तादृशानुमितेरपि पर्वतो वन्हिमानित्याकारकतया तत्रावच्छेदकत्वप्रकारतायां अनुभवविरुद्धत्वात्। नापि पक्षतावच्छेदकांशेऽवच्छेदकतासंबन्धेन साध्यं प्रकारः, पर्वतो वन्हिमानित्याद्यनुमितौ पर्वतत्वांशे निष्प्रकारकत्वस्यैवानुभवात्। पर्वतत्वांशे वह्नेः प्रकारत्वे तादृशानुमिते "वह्निमद्वान् वह्निमानि" त्याकारकतापत्तेः। किन्तु पक्षांशे स्वावच्छेदकपर्वतत्ववत्व-संयोगाद्युभयसंबन्धेन साध्यं प्रकारः, तावतैव पक्षतावच्छेदके साध्यावच्छेदकत्वनिर्वाहात्। अथवा साध्यसंसर्गे पक्षतावच्छेदकावच्छिन्नत्वं संबन्धघटकतया भासते "अवच्छिन्नत्वं च व्यापकत्वरूपम्।" इदमेव पक्षतावच्छेदकेऽवच्छेदकत्वभानम्, एवं च पर्वतत्वावच्छिन्नत्वविशिष्टसंयोगादिः पर्वतोवह्निमानित्यनुमितौ वन्ह्यादेः पर्वतादौ संबन्धः इति पर्यवसितम्। तथा च यत्र शुद्धसंयोगादिसंबन्धावगाहिनी अनुमितिः सा सामानाधिकरण्येनानुमितिः। पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगादिसंसर्गावगाहिनी तु पर्वतत्वा वच्छेदेनेत्युच्यते। असति बाधके "उद्देश्यता" अवच्छेदावच्छेदेन विशिष्टबुद्धौ उद्देश्यतावच्छेदकव्यापकत्वं विधये विधेयसंसर्गे वा भासते इति नियमादिति भावः। एवं साध्यसिद्धिरपि द्विविधा पक्षतावच्छेदकसामानाधिकरण्येन पक्षतावच्छेदकावच्छेदेन च, तत्र कीदृश्यनुमितिं प्रति कीदृशी सिद्धिः प्रतिबन्धिकेत्याह। **परन्त्विति।**

परन्तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितेर्दर्शनात्, पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेव प्रतिबन्धिका, पक्षतावच्छेदकसामानाधिकरण्येनाऽनुमितिं प्रति तु सिद्धिमात्रं विरोधि।

ध्यान भी आवश्यक है कि 'पक्षतावच्छेदक सामानाधिकरण्येन' अर्थात् पर्वत के किसी एक शिखररूपी यत्किञ्चित् भाग में वन्हिरूप साध्य की सिद्धि होने पर भी ( तदवच्छेदेन ) पक्षतावच्छेदकावच्छेदेन—अर्थात् पर्वत के समस्त भाग में अनुमिति देखते हैं—अतः पक्षतावच्छेदकावच्छेदेन अनुमिति के प्रति—पक्षतावच्छेदकावच्छेदेन अर्थात् पर्वत के समस्त भाग में होने वाली साध्य सिद्धि ( वन्हि का चाक्षुष प्रत्यक्ष ) ही प्रतिबन्धिका कहनी चाहिये। और पक्षतावच्छेदकसामानाधिकरण्येन अर्थात् पर्वत के शिखररूपी यत्किचित् भाग में होने वाली अनुमिति के प्रति तो सिद्धिमात्र विरोधी है। [ अभिप्राय यह है कि पक्ष के यत्किचित् भाग में होने वाली अनुमिति के प्रति पक्षतावच्छेदकावच्छेदेन—तथा पक्षतावच्छेदकसामानाधिकरण्येन—ये दोनों सिद्धियाँ प्रतिबन्धक होती है। और पक्षतावच्छेदकावच्छेदेन अनुमिति के प्रति पक्षतावच्छेदकावच्छेदेन सिद्धि ही प्रतिबन्धक होती है ] ( अनुमिति नाम है—पक्ष में साध्य निश्चय हो जाना )।

---

साध्यसिद्धावपीति। पर्वतत्वावच्छेद्यत्वमविषयीकृत्य साध्यसिद्धावपीत्यर्थः। तदवच्छेदेन। पक्षतावच्छेदकीभूतपर्वतत्वावच्छेद्यत्वं विषयीकृत्य।

अनुमितेर्दर्शनादिति। अनुमित्युत्पादादित्यर्थः। साध्यसिद्धिरेवेति। एव कारेण सामानाधिकरण्येन सिद्धेर्व्यवच्छेदः। तथा च पर्वतत्वावच्छेद्यत्वावगाहिपर्वतधर्मिकवन्ह्यनुमितिं प्रति पर्वतत्वावच्छेद्यत्वावगाहिपर्वतधर्मिकवह्निमत्तानिश्चयः प्रतिबन्धक इति भावः। पक्षतावच्छेदकसामानाधिकरण्येनेति। पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितित्वं च यद्रूपेण साध्यतावच्छेदकसंबन्धत्वं तादृशधर्ममात्रावच्छिन्नसंसर्गताक पक्षधर्मिकसाध्यानुमितित्वम्, तथा च संयोगमात्रावच्छिन्नसंसर्गताकपर्वतधर्मिकवह्निविधेयकानुमिति प्रति संयोगत्वविशिष्टसंसर्गताकपर्वतधर्मिकवह्निमत्तानिश्चयत्वेनैकरूपेणसिद्धिद्वयं प्रतिबन्धकम्, पर्वतत्वावच्छेदेनानुमितौ तु संयोगनिष्ठासंसर्गता न संयोगत्वमात्रावच्छिन्ना किन्तु पर्वतत्वव्यापकवह्निप्रतियोगिकत्व-संयोगत्वोभयधर्मावच्छिन्नैवेति सामानाधिकरण्येन सिद्धिसत्वेपि अवच्छेदावच्छेदेनानुमित्युत्पत्तिः। अयं स्थाणुर्वा पुरुषोवेति संशयोत्तरं-अयं न पुरुषइति विपरीतनिश्चयोत्तरं वा सत्यपि सन्निकर्षादौ व्याप्यदर्शनं विना प्रत्यक्षनिश्चयानुत्पत्त्या प्रत्यक्षं प्रत्यपि व्याप्यदर्शनस्य हेतुतया पुरुषत्वप्रत्यक्षसामग्र्या इव पुरुषत्वानुमितिसामग्र्या अपि सत्वात् कथं न पुरुषत्वविधेयकानुमितिरिति शंका

इदं तु बोध्यम् । यत्रायं पुरुषो न वेति संशयानन्तरं पुरुषत्वव्याप्य-करादिमानयमिति ज्ञानं, तत्राऽसत्यामनुमित्सायां पुरुषस्य प्रत्यक्षं भवति, नत्वनुमितिः, अतोऽनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री कामिनी-जिज्ञासादिवत्स्वातन्त्र्येण प्रतिबन्धिका, एवं परामर्शानन्तरं विना प्रत्यक्षेच्छां पक्षादेः प्रत्यक्षानुत्पत्तेः, प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री भिन्नविषयक-प्रत्यक्षे प्रतिबन्धिका ॥७०॥

प्रश्न—( इदं तु बोध्यम् ) इतना यहाँ और जानने योग्य विषय है कि जिस स्थल में दोषवशात् "अयं पुरुषो न वा" यह संशय हुआ—उसके बाद 'पुरुषत्वव्याप्यकरादिमानयम्' यह परामर्श हुआ—अर्थात् संशय से प्रत्यक्षसामग्री वहाँ है—यह दिखला दिया गया है—और परामर्श तो अनुमिति का कारण है ही—अतः उस स्थल में प्रत्यक्ष होना चाहिये—कि अनुमिति।

उत्तर—वहाँ अनुमित्सा के न होने से पुरुष का प्रत्यक्ष ही होता है—अनुमिति नहीं होती है—अतः अनुमित्सा ( अनुमितीच्छा ) के विरह ( अभाव ) से विशिष्ट जो समानविषयक प्रत्यक्षसामग्री—कामिनी जिज्ञासा की तरह स्वातन्त्र्येण अनुमिति की प्रतिबन्धिका होती है। ( अभिप्राय यह है कि कामिनी जिज्ञासा जैसे कार्यमात्र के प्रति प्रतिबन्धक होती है—ऐसे ही प्रत्यक्ष और अनुमिति का यदि समान विषय हो जावे—जैसे प्रकृत में पुरुष का ही प्रत्यक्ष सामग्री है और पुरुष का ही अनुमिति सामग्री है—अतः समानविषयक स्थल में अनुमित्सा के न रहके पर प्रत्यक्ष सामग्री बलवती होती है—अतः वहाँ प्रत्यक्ष ही होगा—अनुमिति नहीं होगी )। ऐसे ही भिन्न विषयक प्रत्यक्ष में प्रत्यक्षेच्छाविरहविशिष्ट अनुमितिसामग्री प्रतिबन्धक होती है—परन्तु कब—परामर्श के बाद में प्रत्यक्ष की इच्छा न हो—तब—अतः वहाँ पक्ष—आदि का—आदि पद से साध्य को ले लेना—अर्थात् वहाँ पक्ष और साध्य का "पर्वतो वन्हिमान्" इत्याकारक प्रत्यक्ष नहीं होता है—अपितु पर्वतो वन्हिमान् इत्याकारक अनुमिति ही होती है। यही कहा है कि "एवं परामर्शानन्तरंविनापि प्रत्यक्षेच्छाम्" इत्यादि ग्रन्थ से। पक्षताप्रकरण समाप्त ॥ ७० ॥

---

समाधत्ते। इदं तु बोध्यमित्यादिना। पुरुषस्य प्रत्यक्षं भवति। साक्षात्करोमीत्यनुव्यवसायादिति भावः। नत्वनुमितिः। अनुमिनोमीत्यनुव्यवसायाभावादिति भावः। पुरुषत्वस्यानुमितिर्मे जायतामितीच्छासत्त्वे तु अनुमितिरेव भवति अत उक्तं असत्यामनुमित्सायामिति। तथा च सा उत्तेजिकेति भावः। स्वातन्त्र्येण। ग्राह्याभावानवगाहित्वेन। तथा च यथा कामिनीजिज्ञासा कामिनीज्ञानान्यज्ञानमात्रे प्रतिबन्धिका, तथा समानविषयकानुमितिं प्रति अनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री प्रतिबन्धिकेति भावः। ननु अनुमितौ प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वे पर्वतादिप्रत्यक्षसामग्र्याः "परामर्शानुव्यवसायसामग्र्याश्च" सत्वात्, पर्वते-

वह्न्यनुमितिरपि न स्यादत आह। **एवमिति।** तथा च भिन्नविषयकप्रत्यक्षं प्रति प्रत्यक्षेच्छाविरहविशिष्टभिन्नविषयकानुमितिसामग्रीप्रतिबन्धिकेति भावः। तथा च प्रत्यक्षसामग्र्याः समानविषयकानुमितिं प्रत्येव प्रतिबन्धकतया नोक्तानुमित्यनुपपत्तिः। अत्र कालिकेन प्रतिबध्यप्रतिबन्धकभावो बोध्यः। तत्पुरुषीयत्वं च निवेश्यमित्यास्तां विस्तरः।

अत्रेदं विचारणीयम्। यथानुमितिं प्रति साध्यनिर्णयत्वेन प्रतिबन्धकत्वकल्पनापेक्षया लाघवात् साध्यानुमितित्वेनैव प्रतिबन्धकत्वमस्तु। न चैवं सति प्रत्यक्षात्मकसाध्यनिर्णयानन्तरं अनुमित्युत्पादप्रसंग इति वाच्यम्। पर्वतो वह्निमानिति प्रत्यक्षसामग्रीकाले तथाविधाया अनुमितेरापत्तिवारणाय तादृशसामग्र्याः प्रतिबन्धकत्वापेक्षया लाघवेन वह्न्याद्यनुमितिं प्रति अनुमित्यन्यवह्निनिर्णयाभावस्य कार्यकालवृत्तितया हेतुत्वस्वीकारात्, तादृशनिश्चयाभावस्य कार्याव्यवहितप्राक्कालेऽसत्वादेव साध्यनिर्णयानन्तरमपि अनुमित्युत्पादवारणसंभवादिति चेन्न। तादृशप्रत्यक्षसामग्र्याः प्रतिबन्धकतामकल्पयित्वा तादृशनिर्णयाभावस्य कार्यकालवृत्तितया हेतुत्वकल्पने विनश्यदवस्थसन्निकर्षादिजन्यपर्वतो वह्निमानिति प्रत्यक्षानन्तरं पर्वते वह्निज्ञानं जायतामितीच्छा तदनन्तरमनुमित्युपपत्तये तादृशनिर्णयप्रतिबन्धकतायां अनुमितित्वप्रकारकत्वादिकमनिवेश्याऽनुमितिगोचरेच्छात्वेनैवोत्तेजकत्वं स्वीकरणीयम्, तथा च प्रत्यक्षसामग्रीदशायां तथा विधेच्छासत्वेऽनुमित्यापत्तिः। न च प्रत्यक्षगोचरेच्छाविशिष्टप्रत्यक्षसामग्र्याः समानविषयकप्रत्यक्षान्यज्ञानं प्रति पृथक् प्रतिबन्धकताया आवश्यकतया तादृशप्रतिबन्धकत्वादेव तदानीं नानुमित्यापत्तिरिति वाच्यम्। प्रत्यक्षसामग्रीदशायां वह्निज्ञानं जायतां वह्न्यनुमितिर्जायतामित्युभयेच्छाकालेऽनुमित्युत्पादात्, प्रत्यक्षत्वप्रकारकेच्छाया एव इच्छाविशिष्टसामग्रीप्रतिबन्धकतायां निवेशात्, तत्तत्स्थलेऽनुमित्यापत्तेर्वारयितुमशक्यत्वात्। न च स्ववृत्ति अनुमित्यन्यवह्निमत्ताज्ञानप्रतियोगित्वसंबन्धेन कृतिविशिष्टप्रागभावस्य सामानाधिकरण्यसंबन्धावच्छिन्नप्रतियोगिताकाभाव इच्छायां विवेशनीयः, उक्तस्थले च तादृशेच्छाव्यवहितोत्तरक्षणे तत्तद्विषयीभूतप्रत्यक्षोत्पादेन तादृशसंबन्धेन इच्छायां सत्वान्नानुमित्यापत्तिरिति वाच्यम्। प्रत्यक्षानुत्पत्तिकालेऽनुमित्यापत्तिवारणाय तदपेक्षया स्ववृत्तितादृशज्ञानप्रतियोगित्वसंबन्धेन कृतिविशिष्टप्रागभावत्वेन प्रतिबन्धकत्वकल्पने प्रत्यक्षात्मकसिद्ध्यनन्तरमनुमितिवारणाय साध्यवत्तानिर्णयत्वेन सिद्धेः प्रतिबन्धकत्व कल्पने च लाघवात्, एवं सामग्र्यप्रतिबन्धकत्वे यत्र भाविवह्निमत्ताज्ञानमप्रमा इत्यप्रामाण्यग्रहोत्तरं प्रत्यक्षोत्पत्तिः तत्र तदानीं अनुमित्यापत्तिः, अप्रमाण्यज्ञानास्कन्दितसाध्यनिर्णयानन्तर अनुमित्युपपत्तये अप्रामाण्यज्ञानानास्कन्दिततादृशनिर्णयाभावत्वेनैव हेतुताया वाच्यतया उक्तस्थले च तादृशविशिष्टाभावस्य कार्यकाले सत्वादित्यधिकमन्यत्रानुसन्धेयम्। एवं यत्र पर्वतो वह्निमानित्यनुमितिसामग्री प्रत्यक्षसामग्री च तत्काले घटानुमितिसामग्री तत्प्रत्यक्षसामग्री च तत्र परस्परविरोधेन कस्याप्यनुत्पत्त्या सामग्रीप्रतिबन्धकत्वस्यावश्यकत्वात्। अन्यथा

अनुमित्यन्यनिर्णयाभावस्य कार्यकाले तदव्यवहितप्राक्काले च सत्वात् अनुमित्यापत्तेः, सामग्रीप्रतिबन्धकत्वे तु वन्हिप्रत्यक्षसामग्रीत्वेन वन्ह्यनुमितौ, वन्हिप्रत्यक्षं प्रति च घटानुमितिसामग्रीत्वेन वन्हिप्रत्यक्षे प्रतिबन्धकत्वात, नानुमितेर्न वा प्रत्यक्षस्योत्पत्तिरिति, एवं घटानुमितिप्रत्यक्षयोश्च अनुमित्यत्यनिर्णयाभाव इति।

प्राभाकरास्तु सिद्धकालेऽनुमितिस्वीकारे क्षतिविरहात, अनुमितौ सिद्ध्यभावस्य हेतुत्वे मानाभाव इत्याहुः। अत्र केचित् एतन्मते उत्पन्नानुमितिव्यक्तीनां पुनरुत्पादवारणाय तत्तदनुमितिं प्रति तत्तत्प्रागभावव्यक्तीनां हेतुत्वकल्पने गौरवम्, सिद्धेः प्रतिबन्धकत्वे तु सामान्यतामग्रीविरहादेवा ऽऽपत्त्यभावात्। न च तत्तद्यक्तेस्तदुत्पत्तिक्षणे एव अन्यात्मनि उत्पादवारणाय प्रागभावव्यक्तेर्हेतुत्वमावश्यकमिति वाच्यम्। तत्प्रागभावस्य हेतुत्वेपि तदनुमितिं प्रति तत्तदनुमितिपूर्वमनुमित्यन्तरोत्पादकाले तत्तदनुमित्युत्पादारणाय तदव्यवहितपूर्वक्षणवृत्तिपरामर्शव्यक्तेर्हेतुताया आवश्यकत्वात्, अन्यत्रैतादृशपरामर्शव्यक्तिविरहेणैव तदनुमितेरापत्त्यसंवात्। न च तत्परामर्शहेतुतया उत्पन्नस्य पुनरुत्पादोपि वारयितुं शक्यते इतिवाच्यम्। तत्परामर्शव्यक्तेस्तदव्यवहितोत्तरक्षणोत्पन्नानुमित्तिकालेपि सत्वा दनुमित्यव्यवहितोत्तरक्षणे ऽनुमित्यापत्तेदुर्वारत्वात्। अथोत्पन्नां पदार्थान्तराणा पुनरुत्पाद वारणाय तादात्म्यसंबन्धेन जन्यत्वावच्छिन्नं प्रति प्रतियोगितासंबन्धेन प्रागभावत्वेनानुगतरूपेण कारणत्वकल्पनस्यावश्यकतया तत एवोत्पन्नानुमितिव्यक्तीनांमपि पुनरुत्वाद्वारणसंभवात्, सिद्ध्यभावहेतुत्वकल्पनमनर्थकम्। इतिचेन्न तथापि समयादिसंबन्धेनकार्योत्पादकसामग्रीबलात्समवायदिना तत्तद्यक्तेः पुनरुत्पादस्य वारयितुमशक्यत्वात्। न च तादात्म्येन कार्योत्पादकसामग्रीसमवहितायाः एव समवायेन कार्योत्पादकसामग्र्याः प्रयोजकत्वान्नापत्तिः, तदानीं तादात्म्यसंबन्धेन उपदर्शितकार्योत्पादकसामग्रीविरहादिति वाच्यम्। उपदर्शितसामग्र्या अपि तदानीं व्यक्त्यन्तरेऽव्येव सत्वात, सामग्रीव्याप्तौ एकसंबन्धेन कार्योत्पादकसामग्र्यां एककालीनत्वसंबन्धेनापरसामग्रीवैशिष्ट्यनिवेशात्, प्रकृतस्थले तादृशसंबन्धेन तथाविधसामग्रीविशिष्टायाः समवायादिना कार्योत्पादकसामग्र्या अक्षततया आपत्ते दुर्वारत्वात्, तस्मात्प्रागभावस्य तत्तद्व्यक्तित्वेनैव पुनरुत्पादवारकहेतुता कल्पनीया, सिद्धेः प्रतिबन्धकतामते उपदर्शितलाघवमस्त्येवेत्याहुः।

अन्ये तु अनुमितिं प्रति सिद्धेः प्रतिबन्धकत्वं नाधिकम्, येन गौरवमाशंकनीयम्, किन्तु पर्वतोवन्ह्यभाववानिति विशिष्टबुद्धौ पर्वतोवन्हिमानिति निर्णयस्य बाधमुद्रया प्रतिबन्धकत्वे कल्पनीये इच्छादिरूपोत्तेजकस्य हेतुतामते तादृश "पर्वतोवन्ह्यभाववानिति" निर्णयत्वबदन्यत्वमेव कार्यतावच्छेदकं वाच्यम्, तच्च पर्वतोवन्हिमानित्यनुमितिसाधारणमपीति तादृशप्रतिबन्धकतयैवोपपत्तिः। न चैवमपि सिद्धिकाले अनुमित्सासत्वे यादृशसामग्रीबलादनुमितिः, तादृशसामग्रीबलादनुमित्सां विनैवानुमित्यापत्तिवारणाय तत्स्थलीयानुमितौ अनुमित्सायास्तेजकत्वकल्पनाधिक्यमिति वाच्यम्। अनुमित्साविशिष्टज्ञाने अनुमित्साया उत्तेजकत्वे अनुमिति प्रति

विरोधिसामग्रीप्रतिबन्धकतायामनुमित्साया उत्तेजकत्वानभ्युपगमेन लाघवादित्याहुः।

केचित्तु अनुमितिं प्रति पक्षताया हेतुत्वे सिद्धिकालीनाऽप्रामाण्यज्ञानव्यक्त्य-भावानां परामर्शहेतुताया मनिवेशेन लाघवम्, तदानीं सिद्धिरूप प्रतिबन्धकसत्वे-नैवानुमितिवारणसंभवादित्याहुः। तदसत्। तन्मते सिद्धौ अप्रामाण्यग्रहसत्वे ऽनुमित्युपपत्तये सिद्धिप्रतिबन्धकतायां तादृशाऽप्रामाण्यग्रहव्यक्तीनामुत्तेजकत्वेन तौ ल्यादिति।

अन्ये तु अनुमितिं प्रति पक्षताया हेतुत्वे पर्वतोवन्हिमानित्यनुमितौ वन्हि-मान्पर्वतोघटवांश्च, वन्हिमत्पर्वतवान्देश इत्याकारकविशिष्टवैशिष्ठ्यावगाहिप्रत्यक्ष-सामग्रीणामिच्छाविशिष्टानां प्रतिबन्धकत्वाकल्पनेन लाघवम्। तादृशसामग्रीकाले विशेष्यतावच्छेदकप्रकारक-विशेषणतावच्छेदकप्रकारकनिश्चयस्य पर्वतोवह्निमानित्या-कारकस्यावश्यकतया पक्षताया असत्वेनैवानुमितिवारणसंभवात्। न च मन्मतेपि तादृशसामग्र्याः पृथक् प्रतिबन्धकत्वं नास्ति तादृशसामग्रीकाले एकत्र द्वयमितिरीत्या पर्वतत्वं धर्मितावच्छेदकीकृत्य तादृशबोधस्य सामग्रीसत्वेन तत्प्रतिबन्धकतयैवोप-पत्तेः, तादृशसामग्र्याः प्रतिबन्धकत्वस्य भवन्मतेपि ठल्कृप्तत्वादिति वाच्यम्। एकत्र द्वयमितिरीत्या तादृशप्रत्यक्षसामग्रीणां एकत्र द्वयमितिरीत्या बोधोजायता-मितीच्छावैशिष्ट्यं निवेश्य एकप्रतिबन्धकतायाः क्लृप्तत्वात्, तादृशप्रतिबन्धकतया विशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छा विशिष्टवैशिष्ट्यबोधसामग्रीकाले ऽनुमितिवारण-संभवात्, तादृशेच्छावैशिष्ट्यं निवेश्य तथाविधबोधसामग्र्याः प्रतिबन्धकत्वान्तर-कल्पनाया आवश्यकत्वात्। न च पर्वतोवन्हिमान् पर्वतोघटवानित्यादिप्रत्यक्षस्य पर्वतोवन्हिमानित्यनुमितिसमानविषयकतया इच्छावैशिष्ट्यमनिवेश्यैव एकत्र द्वय-मितिरीत्या तादृशबोधस्य सामग्र्याः प्रतिबन्धकत्वकल्पनात् विशिष्टवैशिष्ट्यबोधत्व-प्रकारकेच्छाविशिष्टवैशिष्ट्यबोधसामग्रीकालेपि तथाविधप्रतिबन्धकत्वसत्वमावश्यक-मिति वाच्यम्। तथाविधमानससामग्रीप्रतिबन्धकतायां इच्छानिवेशस्यावश्यकतया विशिष्टवैशिष्ट्यबोधेच्छाविशिष्टतादृशसामग्रीप्रतिबन्धकताधिक्यस्यावश्यकत्वात्। न चैकत्र द्वयमिति रीत्या बोधोजायतामितीच्छा विशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छा-साधारणरूपेणैकत्र द्वयमितिरीत्या तादृशबोधसामग्रीप्रतिबन्धकतायां निवेश्या तादृशसामग्रीप्रतिबन्धकतयैवोपपत्तिरितिवाच्यम्। तथा सति विशिष्टवैशिष्ट्य-बोधत्वप्रकारकेच्छाकाले विशेष्यतावच्छेदकप्रकारकज्ञानाद्यसत्वेपि अनुमित्यनुदय-प्रसंगादित्याहुः।

यत्तु सिद्धेरप्रतिबन्धकत्वमते साध्यतावच्छेदकसंबन्धेन वन्हिहेतुकपरामर्शस्य वन्ह्यनुमितिं प्रति हेतुत्वकल्पने गौरवम्, मन्मते सिद्धेस्तत्र नियमतः सत्वेनानुमितेर-प्रामाणिकतया न तादृशपरामर्शस्यानुमितिहेतुत्वकल्पनमिति। तदसत्। सिद्धेः प्रतिबन्धकत्वमतेपि सिषाधयिषाकाले तादृशपरामर्शादनुमितेः प्रामाणिकतया तद्धेतुताकल्पनस्यावश्यकत्वात्। अथैवमपि भिन्नविषयकप्रत्यक्षादिकं प्रति प्रत्यक्षादि-गोचरेच्छाविरहविशिष्टपरामर्शघटितानुमितिसामग्रीप्रतिबन्धकत्वाकल्पनेन लाघवम्, तादृशपरामर्शकाले ऽसत्यामनुमित्सायां मन्मतेप्रत्यक्षादेरेवोत्पादात्, इच्छाविशिष्ट-

अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः।
कालात्ययापदिष्टश्च हेत्वाभासास्तु पंचधा ॥७१॥

हेतुप्रसंगाद् हेत्वाभासान् विभजते। अनैकान्त इत्यादि। तल्लक्षणं

अब सद्धेतुनिरूपित प्रसङ्गसङ्गतिवशात् हेत्वाभासों का विभाग करते हैं—हेत्वाभास का

---

नुमितिसामग्रीरूपप्रतिबन्धकत्वेनैव तद्वारणसंभवात्। इतिचेत्तर्हि—एतन्मतेपि तादृशपरामर्शादनुमित्यभ्युपगमेन प्रत्यक्षादिगोचरेच्छाविरहविशिष्टायास्तद्धेतुकानुमितिसामग्र्याः प्रतिबन्धकत्वं न कल्प्यते। न च भवन्मते सिषाधयिषाशून्यकालेपि तादृशपरामर्शादनुमित्युत्पादे बाधकाभावः, सिद्धेरप्रतिबन्धकत्वादिति वाच्यम्। तादृशपरामर्शजन्यानुमितौ सिषाधयिषाया हेतुत्वोपगमात्, तदभावस्यैव बाधकत्वात्। एवमपि सिद्धिप्रतिबन्धकत्वकल्पनापेक्षया लाघवाभावादिति संक्षेपः।

इदमत्रावधेयम् अनुमितिस्तावत् द्विविधा। स्वार्थानुमितिः परार्थानुमितिश्च। स्वीयसंशयनिवृत्तिफलिकाऽनुमितिः स्वार्थानुमितिः। सहचारज्ञानप्रयोज्यं "पंचावयववाक्याऽप्रयोज्यं" यदनुमितिकरणं तदेव स्वार्थानुमानम्। तत्तु उक्तप्रायम्। न्यायप्रयोज्यानुमानं परार्थानुमानम्। परस्य "प्रतिवादिनः" अर्थः-प्रयोजनं "साध्यसंशयनिवृत्तिरूपं साध्यानुमितिरूपं वा" यस्मात्, तत्परार्थम्। अथवा परः "संशयभिन्न" अर्थः प्रयोजनं यस्मादिति विग्रहः। परार्थं च तदनुमानं चेति परार्थानुमानम्। न्यायत्वं च प्रतिज्ञादिपंचकसमुदायत्वम्। एवं च यादृशयादृशानुपूर्व्यावच्छिन्ने न्यायव्यवहारः तादृशतादृशानुपूर्वीमत्वमिति तत्वम्।

अवयवत्वं च न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम्। अवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि। प्रतिज्ञा च पक्षेसाध्यनिर्देशः-पर्वतोवन्हिमानितिवाक्यम्। पंचम्यन्तत्वेसति लिंगप्रतिपादकवाक्यं हेतुः-यथा धूमादिति। व्याप्यवद्विशेष्यकव्यापकवत्प्रकारकाऽभेदसंसर्गकबोधजनकवाक्यमुदाहरणम्। यथा योयो धूमवान् स स वन्हिमानितिवाक्यम्। पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यव्याप्यहेतुप्रकारताशालिबोधजनकं वाक्यमुपनयः। यथा वन्हिव्याप्यधूमवानयमिति। व्याप्तिपक्षधर्मताविशिष्ट हेतुविशिष्ट हेतुत्वान्वितसाध्यस्य पक्षे वैशिष्ट्यावहिबोधजनकोन्यायावयवोनिगमनम्। यथा तस्मात्तथेति। प्रतिज्ञादिपंचवाक्यै स्तत्तद्वाक्यार्थविषयकं ज्ञानं जन्यते, तेन च वन्हिव्याप्योधूमइतिज्ञानं जन्यते तेन च परामर्शोजन्यते इति न्याये एव परामर्शप्रयोजकत्वम्।

सद्धेतुनिरूपणानन्तरं हेत्वाभासनिरूपणे संगतिमाह। हेतुप्रसंगादिति। सद्धेतुनिरूपितप्रसंगसंगत्या इत्यर्थः। सद्धेतुश्च व्याप्तिपक्षधर्मताविशिष्टोहेतुः। प्रसंगश्च स्मृतनिष्टस्मरणप्रयोजकसंबन्धः। संबन्धश्चस्ववृत्तिव्याप्तिपक्षधर्मत्वाभावरूपः। स्वपदं सद्धेतुपरम्। तथा च सद्धेतोः स्ववृत्तिव्याप्तिपक्षधर्मत्वाभावरूपसंबन्धपुरष्कारेणाऽ सद्धे-

**तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वम् । तथाहि—व्यभिचारादि-विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वात्ते दोषाः ।**

लक्षण है कि यद्विषयकत्वेन ज्ञान अनुमिति का ( विरोधी ) प्रतिबन्धक हो ऐसा यत्पदग्राह्य जो है वही हेत्वाभास है। लक्षणसमन्वय करते हैं—"य.—विषयोयत्र-तद्-यद्विषयकंज्ञानम्" अर्थात् दोष ( हेत्वाभास ) है विषय जिसमें वह ज्ञान-दोषविषयकज्ञान हुवा—वह ज्ञान स्ववृत्ति जो धर्म ( यद्विषयकत्व ) तेन रूपेण प्रतिबन्धक होगा—सो वही अर्थ आ गया कि "यद्विषयकत्वेन ज्ञानस्य अनुमितिप्रतिबन्धकत्वम्" अर्थात् "यद्विषयकत्वेन ज्ञान अनुमिति का प्रतिबन्धक हो" जैसे "पर्वतो वन्हिमान् प्रमेयत्वात्" यहाँ पर "वन्ह्यभाववद्वृत्ति प्रमेयत्वरूप" व्यभिचार का "वन्ह्यभाववद्वृत्तिप्रमेयत्वम्" इत्याकारक ज्ञान "पर्वतो वन्हिमान्" इस अनुमिति का विरोधी होता है—अभिप्राय यह है कि "पक्ष में साध्य के परोक्षनिश्चय को" अनुमिति कहते हैं—उस अनुमिति का असाधारण कारण व्याप्ति ज्ञान होता है—प्रकृत में उस व्याप्तिज्ञान का आकार है "वन्ह्यभाववदवृत्ति प्रमेयत्वम्" और इस व्याप्तिज्ञान के प्रति "वन्ह्यभाववद्वृत्ति प्रमेयत्वम्" यह व्यभिचारज्ञान प्रतिबन्धक होता है—क्योंकि "तद्धर्मिक तद्वत्ताबुद्धि के प्रति तद्धर्मिकतदभाववत्तानिश्चय प्रतिबन्धक होता है" ऐसा नियम है। सो प्रकृत में प्रमेयत्वधर्मिक वन्ह्यभाववद्वृत्तित्वाभावरूप जो व्याप्ति—उस व्याप्तिनिश्चय के प्रति प्रमेयत्वधर्मिक वन्ह्यभाववद्वृत्तित्वाभावाभावरूप व्यभिचार निश्चय प्रतिबन्धक होता है और यह तादृशवृत्तित्वाभावाभाव तादृशवृत्तित्वरूप है—जैसे घटाभावाभाव घटस्वरूप होता है। अतः यह व्यभिचारनिश्चय व्याप्तिनिश्चय प्रतिबन्धक द्वारा अनुमिति का प्रतिबन्धक होता है। यही मूल में कहा है कि—"तथाहि व्यभिचारादि विषयकत्वेन ज्ञानस्य" अर्थात् पूर्वोक्त व्यभिचार ज्ञान व्यभिचारविषयकत्वेनरूपेण पूर्वोक्त अनुमिति के प्रति-प्रतिबन्धक होता है। अतः

---

तुस्मारकतया सद्धेतुनिरूपणानन्तरमसद्धेतोः स्मृतत्वमुपपद्यते। "व्याप्तिपक्षधर्मता-विशिष्टहेतुरूप" सद्धेतुनिरूपणानंतरं व्याप्तिपक्षधर्मत्वाभाववान् हेतुः क इति जिज्ञासोद-यादिति भावः। इदमुपलक्षणम्। तत्त्वनिर्णयविजयरूपैककार्यकारित्वसंगतिरपिबोध्या। **हेत्वाभासान्** । दुष्टहेतून्। हेतुवदाभासन्ते इति व्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुपरत्वं बोध्यम्। **विभजते इति** । तद्धर्मन्यूनवृत्तिधर्मप्रकारेण धर्मिप्रतिपादनं विपूर्वकभजत्या-तोरर्थः। तथा च विभागानुकूल कृतिमान् मूलकार इति बोधः। हेत्वाभाससामान्य-लक्षणमाह। तल्लक्षणंत्विति। हेतोराभासा इति व्युत्पत्त्या हेतुनिष्ठदोषलक्षणंत्वित्यर्थः। यद्यपि दुष्टहेतूनामेव विभजनाद् दुष्टहेतुलक्षणमेवाकांक्षितम्, तथापि दोषलक्षणे कृते दोषवत्त्वरूपदुष्टलक्षणस्य स्फुटतया लाभान्नासंगतिरिति ध्येयम्। यद्विषयकत्वेनेति। यः विषयो यत्रेति यद्विषयकं, तस्य भावोयद्विषयकत्वम्, तेन। यद्विषयकत्वं च यन्निष्ठ विषयतानिरूपितविषयित्वम्। ज्ञानस्येत्यत्र षष्ठ्यर्थो निष्ठत्वम्, तस्य यद्विषयकत्वेऽन्वयः। यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वम्, तस्यापि यद्विषयकत्वेऽन्वयः। अनुमितेः प्रतिबन्धकं, अनुमिति प्रतिबन्धकम्, तस्य भावोऽनुमितिप्रतिबन्धकत्वम्। अनुमिति

**यद्विषयकत्वं च यादृशविशिष्टविषयकत्वम्, तेन बाधभ्रमस्यानुमितिः**

(ते दोषाः) वे व्यभिचारादि दोष हैं। "व्यभिचारादि विषयकत्वेन" यहाँ आदि पद से बाध वगैरह दोषों का भी संग्रह कर लेना-क्योंकि "ह्रदोवन्हिमान्" इस स्थल में होनेवाला ह्रदधर्मिक वन्ह्यभावरूप बाधबुद्धि (बाधनिश्चय) ह्रदधर्मिक वन्हिमत्तारूप अनुमितिरूपबुद्धि के प्रति प्रतिबन्धक होने से बाध आदि भी दोष हैं। यद्विषयकत्व का यादृशविशिष्ट विषयकत्व यह अर्थ जानना चाहिए अर्थात् 'यादृश' पद-'यद्रूप' परक है-'विशिष्ट' पद 'अवच्छिन्न' परक है-'विषयकत्वपदवषयित्व' परक है-अतः यादृशविशिष्ट विषयकत्व' इस समुदाय का 'यद्रूपावच्छिन्नविषयतानिरूपितविषयित्व' इस अर्थ में तात्पर्य समझना चाहिये। तेन-अर्थात् यद्विषयकत्व का यादृशविशिष्ट विषयकत्व यह अर्थ करने से,

---

निष्ठप्रतिवध्यतानिरूपितप्रतिबन्धकत्वमित्यर्थः। तस्य तृतीयार्थोऽवच्छेदकत्वेऽन्वयः। अनुमितिपदं च समूहालंबनानुमितिपरम्। एवं च ज्ञाननिष्ठं यन्निष्ठविषयतानिरूपित विषयित्वं प्रकृतानुमितित्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकतावच्छेदकं तत्वं हेत्वाभाससामान्यलक्षणम्। व्यभिचारे लक्षणं योजयति। **तथाहीति।** **व्यभिचारादिविषयकत्वेन।** धूमाभाववद्वृत्तिवन्हिविषयकत्वेन। **ज्ञानस्य।** धूमाभाववद्वृत्तिर्वन्हिरिति ज्ञानस्य। **अनुमितिविरोधित्वात्।** पर्वतोधूमवान्धूमव्याप्यवन्हिमांश्चेति-समूहालंबनानुमितित्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकतावत्वात्। तथा च धूमवान् वन्हेरित्यादौ धूमाभाववद्वृत्तिर्वन्हिरित्याकारकनिश्चयनिष्ठा धूमाभाववद्वृत्तिवन्हित्वावच्छिन्नविषयतानिरूपितविषयिता सा प्रकृतानुमितिप्रतिबन्धकतावच्छेदिका अस्तीति तत्वस्य धूमाभाववृत्तिवन्हौ सत्वाल्लक्षणसमन्वय इति भावः। अथ यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वम् तच्च अनतिरिक्तवृत्तित्वरूपम्, स्वरूपसंबन्धरूपं वा। नाद्यः। तदा यद्विषयकत्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तत्त्वमित्येव लक्षणं स्यात्, तथा चाऽसंभवः, वन्ह्यभावविशिष्टह्रदस्य शुद्धह्रदानतिरिक्ततया वन्ह्यभावविशिष्टह्रदादिरूपबाधविषयकत्वस्य शुद्ध "वन्ह्यभावाविशेषित" ह्रदविषयक ज्ञानेपि सत्वेनप्रतिबन्धकतानतिरिक्तवृत्तित्वाभावात्। न द्वितीयः। तदा यद्विषयकत्वं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसंबन्धरूपाऽवच्छेदकतावत् तत्वमिति लक्षणं, तथाचाऽसंभवविरहेपि पर्वतोवन्हिमानित्यत्र वन्ह्यभावेऽतिव्याप्तिः, वन्ह्यभावविषयकत्वस्यापि पर्वतोवन्हिमानित्यनुमितिवन्धकवन्ह्यभाववान् पर्वत इति भ्रमात्मकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकतावत्वात्। स्वरूपसंबन्धरूपावच्छेदकतावादिना ज्ञानभेदेन विषयिताभेदः स्वीक्रियते, एवं च वन्ह्यभाववान्पर्वत इति भ्रमात्मकज्ञानीयवन्ह्यभावविषयितायाः वन्ह्यभाव इत्यदिज्ञानान्तरे विरहेण वन्ह्यभावविषयकत्वस्यापि पर्वतोवन्हिमानित्यनुमितिप्रतिबन्धकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकतावत्वात्। यद्विषयकत्वं प्रकृतानुमितिप्रति-

विरोधित्वेपि न क्षतिः, तत्र पर्वतोवन्ह्यभाववानितिविशिष्टस्याऽ प्रसिद्धत्वान्न हेतुदोषः ।

'पर्वतो वन्ह्यभाववान्' यह बाधभ्रम को 'पर्वतो वन्हिमान्' इस निर्दुष्ट हेतुक अनुमिति की विरोधिता होने पर भी क्षति ( पर्वतो वन्ह्यभाववान् इस बाधभ्रम के विषय वन्ह्यभावरूप एक देश में अतिव्याप्ति ) नहीं है—अभिप्राय यह है कि यद्यपि प्रमात्मकज्ञान और भ्रमात्मकज्ञान दोनों ही प्रतिबन्धक होते हैं—उदाहरण जैसे 'पर्वतो वन्हिमान्' इस अनुमिति के प्रति 'पर्वतो वन्ह्यभाववान्' यह भ्रमात्मकज्ञान प्रतिबन्धक होता है, और 'ह्रदोवन्हिमान्' इस अनुमिति के प्रति 'ह्रदोवन्ह्यभाववान्' यह प्रमाज्ञान प्रतिबन्धक होता है—तथापि अन्तर इतना ही है कि भ्रमात्मकज्ञान ( पर्वतो वन्ह्यभाववान् ) को विशिष्ट ( विशेषणविशिष्टविशेष्य ) विषयकत्वेन प्रतिबन्धकता नहीं है—क्योंकि भ्रमस्थल में वन्ह्यभावरूप विशेषणविशिष्ट पर्वत रूपविषय अप्रसिद्धवस्तु है—अतः भ्रमात्मकज्ञान को विशिष्टविषयकत्वेन प्रतिबन्धकता न मानकर निरूप्यनिरूपकभावापन्नविषयताशालिनिश्चयत्वेन मानी जाती है—जैसे 'पर्वतो वन्ह्यभाववान्' इसको 'वन्हित्वावच्छिन्नविषयता निरूपितअभावत्वावच्छिन्नविषयतानिरूपित पर्वतत्वावच्छिन्न विषयताशालिनिश्चयत्वेन' प्रतिबन्धकता है—और प्रमाज्ञान को तो दोनों रूप से अर्थात् विशिष्ट विषयकत्वेनरूपेण—और निरूप्यनिरूपकभावापन्नविषयताशालिनिश्चयत्वेनरूपेण प्रतिबन्धकता होती है। अतः हमने दोनों ज्ञानों में प्रतिबन्धकता उपपन्न करने के लिये द्वितीयत्व का ही

---

बन्धकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकतापर्याप्तधिकरणमित्यर्थविवक्षणे तु तदोषतादवस्थ्यम्, वन्ह्यभावविषयकत्वस्यापि "प्रत्येकस्य" प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणत्वात्, अन्यथा समुदायेपि प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणत्वस्य दुर्घटत्वापत्तेः। अतः प्रथमं यद्विषयकत्व परिष्करोति। यादृशविशिष्टविषयकत्वमिति। यद्रूपावच्छिन्नविषयित्वमित्यर्थः। यद्रूपावच्छिन्नविषयित्वमित्यर्थकरणे तु अवच्छेदकत्वमनतिरिक्तवृत्तित्वरूपं ग्राह्यम्। तथा च यद्रूपावच्छिन्नविषयित्वं प्रकृतानुमितिव्यापकप्रतिबध्यताप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्रूपावच्छिन्नत्वं पर्यवसितम्। ह्रदोवन्हिमान्धूमादित्यादौ वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितायाः वन्ह्यभाववान्ह्रदइति ज्ञाने एव सत्वेनअनुमितिप्रतिबन्धकताशून्य ह्रद इति ज्ञानावृत्तित्वेन प्रतिबन्धकतानतिरिक्तवृत्तितया वन्ह्यभाववद्ह्रदत्वमादाय वन्ह्यभाववद्ह्रदे लक्षणसमन्वयेनोक्तासंभवानवकाशात्। तेन। यद्रूपावच्छिन्नविषयित्वविवक्षणेन। इदमुपलक्षणम्। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षणेन चेत्यपि बोध्यम्। अन्यथा स्वरूपसंबन्धरूपावच्छेदकत्वनिवेशे यद्रूपावच्छिन्नविषयित्वविवक्षणेपि पर्वतोवन्हिमानित्यत्र वन्ह्यभावाद्येकदेशेऽतिव्याप्तेर्दुर्वारतया तेनेत्यादेरसंगतत्वापत्तेः। बाधभ्रमस्य। पर्वतोवन्ह्यभाववानिति बाधभ्रमस्य। अनुमिति विरोधित्वेपि। अनुमितिप्रति-

अनुसरण किया— ] वही मूल में कहा है कि—"यादृशविशिष्टविषयकत्वेन" अब यहाँ इतना और समझ लेना चाहिये कि यद्विषयकत्व का यादृशविशिष्टविषयकत्व यह अर्थ है—और यद्विषयकत्वेन में जो तृतीयाविभक्ति है उसका अवच्छेदकत्व अर्थ है—और वह अवच्छेदकत्व प्रकृत में "अनतिरिक्तवृत्तित्व"रूप लेना और उसका अन्वयप्रतिबन्धकता के अगाड़ी कर देना। इससे लक्षण शरीर यह हो गया कि "यद्रूपावच्छिन्नविषयतानिरूपितविषयिताप्रकृतानुमिति प्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नत्वम्" इससे 'पर्वतो वन्हिमान् धूमात्' इस स्थल में अतिव्याप्ति नहीं हुई—अर्थात् एतत्स्थलीय धूम हेतु को दुष्टता की आपत्ति नहीं हुई।

प्रश्न—यह लक्षण शरीर न करने पर अर्थात् 'यद्विषयकत्वेन ज्ञानस्य अनुमिति विरोधित्वं तत्त्वम्' यह लक्षण करने पर कैसे उक्तस्थल में धूम हेतु दुष्ट हो जाता है।

उत्तर—"यद्विषयकत्वेन" इत्यादि जो दोष लक्षण है वह जिस हेतु में चला जायगा—उस लक्षण का लक्ष्य वही हेतु हो जायगा—अथ च वह हेतु दुष्ट हेतु कहा जायगा—क्योंकि 'वन्हिमान् धूमात्' यहाँ पर उक्तदोषलक्षणानुसार वन्ह्यभाव दोष बन जाता है—तथाहि—यत् पद से ग्राह्य जो वन्ह्यभाव—वह है विषय जिसमें—ऐसा ज्ञान 'वन्ह्यभाववान् पर्वतः' यह ज्ञान भी हुआ—यह ज्ञान वन्ह्यभावविषयकत्वेन 'पर्वतोवन्हिमान्' इस अनुमिति के प्रतिप्रतिबन्धक होता है—'तत्' पद से लिया वही वन्ह्यभाव—जो कि यत्पद से लिया था—तत्त्व वन्ह्यभाव में रहा वन्ह्यभाव में दोष लक्षण सिद्ध हो गया—अतः वन्ह्यभाव में दोष लक्षण की अतिव्याप्ति हो गयी। और "यद्रूपावच्छिन्नविषयतानिरूपितविषयित्व" इत्यादि लक्षण करने पर अतिव्याप्ति नहीं होती है—क्योंकि अब 'यद्रूप'पद से यदि वन्ह्यभावत्व को लेते हैं तो वन्ह्यभावत्वावच्छिन्नविषयिता तो वन्ह्यभावः इसी ज्ञान में रहेगी वह ज्ञान प्रतिबन्धक नहीं है—और यदि वन्ह्यभावविशिष्टपर्वतत्व को 'यद्रूप'पद से लेते हैं तो वह वस्तु ही अप्रसिद्ध है—अत इस लक्षण में किसी प्रकार भी अतिव्याप्ति नहीं है। वही मूल में कहा है कि "तत्र पर्वतो वन्ह्यभाववान् इति विशिष्टस्याप्रसिद्धत्वात् न हेतु दोषः।"

---

बन्धकत्वेपि। नचतिः। न वन्ह्यभावेऽतिव्याप्तिः। इदमुपलक्षणम्। ह्रदोवन्हिमानित्यनुमितिप्रतिबन्धकह्रदोवन्ह्यभाववानितिप्रमाविषयवन्ह्यभावे इत्यपि बोध्यम्। वन्ह्यभावत्वावच्छिन्नविषयितायाः प्रतिबन्धकतातिरिक्तवृत्तित्वादितिभावः। विशिष्टेपिनातिव्याप्तिरित्याह। तत्रेति। वन्ह्यभाववत्पर्वतत्वावच्छिन्नविषयितायाः प्रतिबन्धकतानतिरिक्तवृत्तित्वेपि तद्रूपस्याप्रसिद्धत्वा दिति भावः।

नचैवमपि वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितायाः "ह्रदोवन्हिमान्नवेति संशये वन्ह्यभावान् ह्रदोवन्हिमानित्याहार्यज्ञाने, ह्रदोवन्ह्यभाववानिति ज्ञानमप्रमेति अप्रामाण्यज्ञानास्कन्दितज्ञाने संस्कारे च सत्वेन तत्र प्रतिबन्धकताया अभावेन वन्ह्यभाववद्ह्रदत्वावच्छिन्न विषयितायाः प्रतिबन्धकतातिरिक्तवृत्तित्वादसंभव इति वाच्यम्

ज्ञानस्येत्यत्र ज्ञानपदमनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयपरम्[१], षष्ठ्यर्थो वृत्तित्वम्, तस्य यद्रूपावच्छिन्नविषयित्वेन्वयः, एवंचाऽनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयित्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्त्वमिति विवक्षयाऽसंभवानवकाशात्। अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयितायाः आहार्यज्ञानादावसत्वात्। निश्चये अनाहार्यत्वनिवेशेनाऽऽहार्यज्ञानव्यावृत्तिः। अप्रामाण्यज्ञानानास्कन्दितत्वनिवेशेनाऽप्रामाण्यज्ञानास्कन्दितज्ञानव्यावृत्तिः। निश्चयत्वनिवेशेन संशयसंस्कारयोर्व्यावृत्तिः[२]।

अथैवमपि असंभवो दुर्वार एव, केवलयद्रूपावच्छिन्नविषयितायाः "संशयादौसत्त्वेन" प्रतिबन्धकतातिरिक्तवृत्तितया अनाहार्यानप्रामाण्यज्ञानवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयितायां प्रतिबन्धकतानतिरिक्तवृत्तित्वरूप प्रतिबन्धकतातिरिक्तवृत्तित्वाभावविरहाद्, विशेष्यवृत्तिधर्मस्य विशिष्टेऽभावानंगीकारादिति चेन्न। यद्रूपावच्छिन्नविषयितायां प्रतिबन्धकताव्याप्यत्वे भासमाने तुल्यवित्तिवेद्यतया प्रतिबन्धकतायां यद्रूपावच्छिन्नविषयताव्यापकत्वं भासते। एवं चाऽनाहार्याऽप्रामाण्यज्ञानानास्कन्दित निश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयिता व्यापकत्वस्य प्रतिबन्धकतायामक्षततयाऽशोक्तासंभवः। तथा च अनाहार्याप्रामाण्यज्ञानानास्कन्दित-

---

१—जन्यतासंबन्धेन इच्छावदन्यत्वमनाहार्यत्वम्। जन्यतासंबन्धेन बाधकालीनेच्छावदन्यत्वमिति तु सम्यक्। आहार्यत्वं च स्वविरोधिधर्मधर्मितावच्छेदकस्वप्रकारकज्ञानत्वं, बाधकालीनेच्छाजन्यत्वं वा। अप्रामाण्यज्ञानानास्कन्दितत्वं च स्वविषयत्व स्वसामानाधिकरण्य कालिकैतत्त्रितयसंबन्धावच्छिन्नप्रतियोगिताकतत्तदप्रामाण्यज्ञानाभाव कूटवत्त्वम्। दोषज्ञानस्य सर्वस्यापिप्रमात्वेन तत्राप्रामाण्यज्ञाने भ्रमत्वेतिईश्वरावृत्तिज्ञानशून्यत्वं वा तत्। निश्चयत्वं संशयान्यज्ञानत्वम्। तच्च स्वसामानाधिकरण्य स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वोभय संबन्धेनप्रकारिताविशिष्टप्रकारितावदन्यत्वमिति दिक्।

२—नव्यास्तु तत्तदप्रामाण्यज्ञानाभावस्य आहार्यत्वाभावस्य संशयत्वाभावस्य च तत्तद्व्यक्तित्वेन प्रवेशे गौरवमतोऽनुगतरूपेणैवाऽप्रामाण्यज्ञानाद्यभावाः निवेशनीयाः। तथा च यद्यदप्रामाण्यज्ञानसत्वे पर्वतोवन्ह्यभाववानिति बाधनिश्चयसत्वे पर्वतोवन्हिमानिति बुद्धिः प्रामाणिकी तत्तदप्रामाण्यज्ञानाभावविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वम्, एवं संशयादीना मप्यनुगमः। नचैवंयत्तदर्थयोरननुगमील्लक्षणाननुगम इति वाच्यम्। अभावविशिष्टान्यत्वस्य यद्रूपावच्छिन्नविषयकज्ञाने निवेशनीयत्वात्। ज्ञानेवै०स्वाभाववत्व स्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितावत्वोभयसंबन्धेन। स्वाभाववत्वं च स्वरूपविशेष्यतान्यतरसंबन्धेन, अभावपदेनाऽऽहार्यत्वाभाव संशयत्वाभावाऽप्रामाण्यज्ञानाभावा उपादेया इति प्राहुः।

इदमुपलक्षणम्। निश्चयेऽव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वमपि निवेशनीयम्, तेन ह्रदे वन्ह्यभावोऽव्याप्यवृत्तिरित्यव्याप्यवृत्तित्वज्ञानकाले वन्ह्यभाववान् ह्रद इति

न च वन्ह्यभावव्याप्यपाषाणमयत्ववानिति परामर्शकाले वन्हिव्याप्यधूमस्याभासत्वं न स्यात्, तत्र वन्ह्यभावव्याप्यवान् पक्ष इति विशिष्टस्याऽप्रसिद्धत्वादिति वाच्यम्। इष्टापत्तेः। अन्यथा बाधस्यापि अनित्यदोषतापत्तेः। तस्मात्तत्र वन्ह्यभावव्याप्यपाषाणमयत्ववान्पर्वत इति परामर्श-

प्रश्न—पूर्वग्रन्थ से यह सिद्ध हुआ कि विशिष्ट ही दोष है—और विशिष्ट को दोष मानने में "वन्ह्यभावव्याप्यपाषाणमयत्ववान पर्वतः" इत्याकारकपरामर्शकाल में वन्हिव्याप्य धूम को आभासत्व ( हेत्वाभासत्व ) दुष्टत्व अर्थात् सत्प्रतिपक्षितत्व की अनुपपत्ति हो जावेगी—कारण कि वन्ह्यभावव्याप्यवान् पर्वतः इस ज्ञान का विषय जो 'वन्ह्यभावव्याप्यविशिष्टपर्वत' वह अप्रसिद्ध है।

उत्तर—पर्वतो वन्हिमान् धूमात् इस स्थल में धूम में दुष्टत्व न मानना ही हमें इष्ट है। [ अभिप्राय यह कि जिस काल में 'पर्वतो वन्हिमान्' इस अनुमिति का कारणीभूत 'वन्हिव्याप्यधूमवान् पर्वतः' यह परामर्श है—अथ च इस अनुमिति का विरोधी परामर्श 'वन्ह्यभावव्याप्यपाषाणमयत्ववान पर्वतः' यह भी है—अर्थात् क्षणभेद से दोनों ही परामर्श विद्यमान में—उस स्थल में वन्हिव्याप्यधूम हेतु सत्प्रतिपक्षदोष से दुष्ट न हो सकेगा—यह पूर्व पक्षी सिद्धान्ती से कह रहा है—सिद्धान्ती ने उत्तर दिया कि मुझे इष्ट है—क्योंकि व्याप्य हेतु दुष्ट होता ही नहीं है ] अन्यथा यदि इष्टापत्ति नहीं करेंगे—अर्थात् अनुमिति का प्रतिबन्धक

---

निश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयिता व्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्वं हेत्वाभाससामान्यलक्षमितिनिष्कर्षः[1]।

प्रकारविधया अनुगमस्तु प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्यभावीयाऽवच्छेदकतानिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदक

---

निश्चयस्याप्रतिबन्धकत्वेपि नासंभवः। न च वृक्षः कपिसंयोगीत्यत्र कपिसंयोगाभाववद्वृत्तेऽतिव्याप्तिः, अव्याप्यवृत्तित्वज्ञानानास्कन्दितस्य कपिसंयोगाभाववान् वृक्ष इति निश्चयस्यानुमितिप्रतिबन्धकत्वादिति वाच्यम्। अव्याप्यवृत्तित्वप्रमानास्कन्दितत्वस्यैव निवेशात्। एवं च वृक्षेकपिसंयोगाभावेऽव्याप्यवृत्तित्वप्रमास्कन्दितस्यापि निश्चयस्याऽव्याप्यवृत्तित्वप्रमानास्कन्दिततया तत्र प्रतिबन्धकताविरहान्नातिव्याप्तिरिति ध्येयम्।

१—अनुगमस्तु प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिरूपवत्वम्। रूपे प्रतिबन्धकतावृत्तित्वं च स्वावच्छिन्नविषयितासमानाधिकरणभेदप्रतियोगितावच्छेदकत्व संबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसंबन्धेन। स्वद्वय रूपपरम्। तादृशरूपं च वन्ह्यभाववद्ध्रदत्वादिकम्।

काले वन्हिव्याप्यधूमस्य नाभासत्वं, भ्रमादनुमितिप्रतिबन्धमात्रं हेतुस्तु न दुष्ट इति। इत्थं च साध्याभाववद्वृत्तिहेत्वादिकं दोषः, तद्वत्त्वं च हेतौ येन-केनापि सम्बन्धेनेति नव्याः।

जो भ्रम–उस भ्रम के विषय एक देश को भी यदि आप दोष मानेंगे तो बाध दोष अनित्य दोष माना जायगा–क्योंकि बाध का व्याप्य ही तो सत्प्रतिपक्ष है–और बाध वस्तुतः नित्य दोष है–कारण कि जहाँ वास्तविक में साध्य नहीं है वहीं बाध होता है–जैसे 'ह्रदो वन्हिमान" इस स्थल में। और पर्वतो वन्हिमान धूमात् यहाँ साध्याभाव भ्रम होने पर हेतु हेतु ( धूम ) दुष्ट नहीं हो सकता है–अत उस स्थल में 'वन्ह्यभावव्याप्यपाषाणमयत्ववान' इस परामर्श काल में वन्हिव्याप्यधूम को आभासत्व ( दुष्टत्व ) नहीं है। इत्थं–अर्थात् यादृशविशिष्ट-विषयकत्वेन ज्ञान को प्रतिबन्धकता है तादृशविशिष्ट ही दोष होता है–अत केवल साध्याभाव-वद्वृत्तित्व को दोष न मानकर साध्याभाववद्वृत्तित्वविशिष्टहेत्वादिक ही दोष है–और दोषवत्ता हेतु में व्यभिचारादि स्थलों में तादात्म्यसम्बन्ध से है–और बाधादि स्थल में स्वज्ञानविषय-प्रकृत हेतुतावच्छेदकवत्त्व सम्बन्ध से लेना–ऐसा नवीनों का कहना है। ( परेतु ) किसी के

---

ताद्रूप्यवत्त्वम्। अभावप्रतीति स्तु यद्रूपावच्छिन्नविषयित्वाधिकरणवृत्तिभेदप्रतियोगिता-वच्छेदकत्वनास्तीति।

सत्प्रतिपक्षस्याऽनित्यदोषत्ववादी शंकते। नचेति। विशिष्टस्याऽप्रसिद्धत्वा-दिति। वन्ह्यभावव्याप्यपाषाणमयत्ववत्पर्वतत्वस्य यद्रूपपदेन धर्तुमशक्यदितिभावः। इष्टापत्तेरिति। सद्धेतोः सत्प्रतिपक्षत्वे मानाभावादित्यर्थः। अत्र सत्प्रतिपक्षस्य बाधव्याप्यतया व्याप्यसत्वे व्यापकसत्वस्याऽऽवश्यकतया सद्धेतौ बाधितत्वापत्तिः स्यादित्याह। अन्यथेति। सद्धेतोः सत्प्रतिपक्षितत्वस्वीकारे इत्यर्थः। अनित्यदोष-त्वापत्तेरिति। पक्षे साध्याभावभ्रमदशायां सद्धेतोरपि बाधितत्वापत्तेरित्यर्थः। तत्र। पर्वतोवन्हिमानित्यनुमितौ। नाभासत्वम् न दुष्टम्। वन्हिधूमस्य व्यभिचारी, पक्षे साध्यस्य बाध इत्यादिव्यवहारात, साध्याभाववद्वृत्तित्वमेव व्यभिचारः, साध्याभाव एव बाधः, तथा च साध्याभाववद्वृत्तित्वविषयितायाः साध्याभावविषयित्वस्य वा प्रति-बन्धकतातिरिक्तवृत्तितया कथं दोषत्वमित्याशंकां निरस्यति। इत्थं चेति। पारिभाषि-कावच्छेदकत्वस्य लक्षणघटकत्वे चेत्यर्थः। हेत्वादिकमित्यत्रादिपदात् साध्याभाववत्पक्ष एव बाध इति बोध्यम्। ननु साध्याभाववत्पक्षात्मकबाधादीनां हेत्ववृत्तित्वात् कथं हेतौ दुष्टताव्यवहार इत्यत आह। तद्वत्त्वं चेति। दोषवत्वं चे त्यर्थः। येन केनापि-संबन्धेनेति। स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसंबन्धेनेत्यर्थः। एवं वन्ह्यभाववद्-ह्रदादिरूपोदोषः तद्विषयकं ज्ञानं वन्ह्यभाववान्ह्रदो धूमश्चेति समूहालंबनरूपम्। तद्विषयधूमत्ववत्त्वं धूमे इति।

**परे तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्त्वं हेत्वाभासत्वम्, सत्प्रतिपक्षे च विरोधिव्याप्त्यादिकमेव तथा, तद्वत्त्वं च हेतोर्ज्ञानरूपसंबन्धेन। नचैवं वन्हिमान् धूमादित्यादौ पक्षे बाधभ्रमस्य साध्याभावविषयकत्वेनानुमितिविरोधित्वाद् ज्ञानरूपसम्बन्धेन तद्वत्त्वस्यापि सत्वात् सद्धेतोरपि**

मत में "यद्विषयकत्वेन ज्ञान अनुमिति का विरोधी हो तद्वत्त्व ही हेत्वाभास का लक्षण है। सत्प्रतिपक्षस्थल में विरोधिव्याप्ति आदिक ही अनुमिति की विरोधी हैं-अतः वे ही दोष हैं कारण कि विरोधी व्याप्ति को ही सत्प्रतिपक्ष कहते हैं-और तद्वत्त्व अर्थात् विरोधि व्याप्तिमत्त्वज्ञानरूप "स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्व" सम्बन्ध से हेतु में होने के नाते हेतु को दुष्टत्व की उपपत्ति हो गयी।

प्रश्न—इस प्रकार "पर्वतो वन्हिमान" इस स्थल में "पर्वतो वन्ह्यभाववान" इत्याकारक पक्ष में बाध भ्रम साध्याभाव (वन्ह्यभाव) विषयकत्वेन "पर्वतो वन्हिमान" इस अनुमिति का विरोधी है-और "स्वज्ञानविषय" इत्यादि पूर्वोक्त ज्ञानरूप सम्बन्ध से वन्ह्यभाववत्त्व धूम हेतु में होने से सद्धेतु ( धूम ) को बाधितत्व की आपत्ति लग जायगी।

---

सत्प्रतिपक्षितेति सद्धेतौ "धूमे" वन्हिव्याप्यपाषाणमयत्ववत्पर्वतस्याऽप्रसिद्धावपि प्रतिबन्धकीभूतभ्रमविषयवन्ह्यभावव्याप्त्यादिरेव दोषः, वन्ह्यभावव्याप्तिस्तु प्रसिद्धैव, इति मतमुपन्यस्यति। **परे त्विति**। **ज्ञानस्येति**। ज्ञानपदं तादृशनिश्चयपरम्, तच्च कामिनीत्वे-कामिनीज्ञानत्वे वा दोषलक्षणाऽतिव्याप्तिवारणाय, तद्वति दुष्टलक्षणातिव्याप्तिवारणाय, ज्ञानपदानुपादाने कामिनीजिज्ञासायाः कामिनीज्ञानान्यज्ञानमात्रं प्रति प्रतिबन्धकतया कामिनीजिज्ञासानिष्ठा याऽ नुमितिप्रतिबन्धकता तदवच्छेदकताया स्तत्र सत्त्वात्। यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वम्, तच्च स्वरूपसंबन्धविशेषः, नत्वनतिरिक्तवृत्तित्वम्, तथासति विरोधिव्याप्त्यादेर्दोषत्वानुपपत्तेः। तथा च यद्विषयकत्वं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकतावत् तद्वत्त्वं दुष्टत्वम्। पक्षधर्मतापरिग्रहाय "विरोधिव्याप्त्यादिक" मित्यत्रादिपदम्, विरोधिव्याप्त्यादेरिव पक्षधर्मतायामपि अनुमितिप्रतिबन्धकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकतावत्त्वात्। एवकारेण विरोधिव्याप्तिविशिष्टहेतुविशिष्टपक्षस्य व्यवच्छेदः। **तथा**। दोषः। ननु वन्ह्यभावव्याप्तेर्यत्पदेनोपादातुं शक्यत्वेपि तस्या धूमे पाषाणमयत्वे चाऽवृत्तितया धूमस्य दुष्टत्वं न स्यादत आह। **तद्वत्त्वं चेति**। दोषवत्त्वं चेत्यर्थः। **ज्ञानरूपसंबन्धेनेति**। स्वविषयकज्ञानविषयत्वसंबन्धेनेत्यर्थः। **एवं**। स्वरूपसंबन्धरूपावच्छेदकत्वप्रवेशे। **तत्र**। बाधकालीनधूमादिसद्धेतौ। **अत्र**। प्रतिपरामर्शकालीने धूमादिसद्धेतौ। **तत्कल्पनात्**। ज्ञानस्य संबन्धत्वकल्पनात्। **तत्रेति**। बाधभ्रमकालीने सद्धेतावित्यर्थः। **व्यवहाराभावादिति**।

बाधितत्वापत्तिरिति वाच्यम्। तत्र ज्ञानस्य सम्बन्धत्वाकल्पनात्, अत्र सत्प्रतिपक्षित इति व्यवहारेण तत्कल्पनात्, तत्र बाधित इतिव्यवहारा·भावादित्याहुः।

अनुमितिविरोधित्वं चानुमितितत्करणान्यतरविरोधित्वम्, तेन व्यभिचारिणि नाव्याप्तिः, दोषज्ञानं च यद्धेतुविषयकं तद्धेतुकानुमितौ प्रतिबन्धकं, तेन एकहेतौ व्यभिचारज्ञाने हेत्वन्तरेणानुमित्युत्पत्तेः, तदभा·

उत्तर—तत्र-वहाँ-( सद्धेतु स्थल में ) ज्ञान को सम्बन्धत्व की कल्पना नहीं करते हैं। क्योंकि "धूमो बाधितः" ऐसा व्यवहार नहीं होता है। और सत्प्रतिपक्षस्थल में "धूमः सत्प्रतिपक्षितः" यह व्यवहार होने के नाते ज्ञानरूप सम्बन्ध की कल्पना करते हैं। लक्षणघटक अनुमितिपद से लक्षणा के द्वारा "अनुमिति-तत्करण अन्यतर" यह अर्थ करके "अनुमिति विरोधित्व" का "अनुमिति तत्करणान्यतर विरोधित्व" यह अर्थ समझना चाहिये-अन्यथा यदि अनुमिति पद को अन्यतर परक नहीं करेंगे तो व्यभिचार में अव्याप्ति हो जावेगी-तथाहि-एक हेतु ( वन्हि ) में "वन्हिर्धूमव्यभिचारी" यह व्यभिचारग्रह रहने पर भी हेत्वन्तर ( इन्धन ) से-अर्थात् हेत्वन्तर लिङ्गक "धूमव्याप्येन्धनवान् पर्वतः" इत्याकारक परामर्श से-"पर्वतो धूमवान्" इस अनुमिति की उत्पत्ति होती है-अतः व्यभिचार ज्ञान अनुमिति का प्रतिबन्धक नहीं हुआ-यह दोष का लक्षण व्यभिचार में नहीं गया-अव्याप्ति हो गयी। और दूसरी

---

प्रत्युत नायं बाधितः पुरुषस्तु भ्रान्त इत्येव व्यवहारादिति भावः। सकलाभियुक्तपुरुष·साधारणस्य नियतव्यवहारस्याऽसिद्धत्वात्, मिथ्याज्ञानादिजन्यसंस्कारवतां पुरुषाणां दुष्टे अदुष्टत्वस्य, अदुष्टे दुष्टत्वस्य व्यवहारदर्शनात् ज्ञानस्य नियतसंबन्ध·त्वाऽसाधकत्वात्। तथा च बाधभ्रममादाय सद्धेतावतिव्याप्तिर्दुर्वारैवेत्यस्वरसः आहुरित्यनेन सूचितः।

यद्रूपावच्छिन्नविषयित्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्व·मिति लक्षणम्, अत्रानुमितिपदं अनुमितिसामान्यपरं यत्किंचिदनुमितिपरं वा आद्ये सामान्यपदस्य व्यापकतावाचितया अनुमितित्वव्यापकप्रतिबध्यता निरूपितप्रतिबन्धकतानतिरिक्तवृत्तीत्यर्थः स्यात्, तथा चाऽसंभवः, अनुमितित्व व्यापकप्रतिबध्यताया एवाऽप्रसिद्धेः। द्वितीये यत्किंचिदनुमितिपरमित्यस्य प्रकृतपक्षसाध्यानवगाह्यनुमितिपरमित्यर्थःस्यात् तदाऽतिप्रसंगः। ह्रदो वन्हिमानित्यनुमितिनिष्ठाऽनुमितित्वसमानाधिकरणप्रतिबध्यतानिरूपित प्रतिबन्धकता नतिरिक्तवृत्तित्वस्य वन्ह्यभाववद्ह्रदविषयित्वे सत्वात्, वन्ह्यभाववद्ह्रदादेःपर्वतो· वन्हिमानित्यत्र दोषताप्रसंगः। अतः प्रकृतपक्षसाध्यकानुमिति परत्वमावश्य·कम् तथा च व्यभिचारादावव्याप्तिः, व्यभिचारनिश्चयस्याऽनुमितिविरोधित्वा भावात्, लक्षणया अनुमितिजनकज्ञानमात्रपरत्वे च बाधादावव्याप्तिः, बाधि

**बाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्यानुमितिविरोधित्वाभावेऽपि न क्षति-रिति संक्षेपः ।**

बात यह है कि तद्धर्मिक तद्वत्ताबुद्धि के प्रति तद्धर्मिक तदभाववत्ताबुद्धि प्रतिबन्धक होती है–प्रकृत में पर्वत धार्मिक धूमवत्ता जो बुद्धि 'पर्वतो धूमवान्' यह अनुमिति रूप बुद्धि–इसके प्रति "पर्वतो धूमाभाववान" यह बुद्धि ही प्रतिबन्धक होगी–किन्तु "धूमाभाववद्वृत्तिर्वन्हिः" यह व्यभिचार ज्ञान पर्वत में धूमाभाव का अवगाही न होने से अर्थात् "पर्वतो धूमाभाववान्" इत्याकारक न होने से "पर्वतो धूमवान्" इस अनुमिति का विरोध नहीं हुवा अतः इस प्रकार भी व्यभिचार में अव्याप्ति हो गयी–परन्तु अनुमिति पद को यदि अनुमिति तत्करणान्यतरपरक किया तो अव्याप्ति नहीं है–क्योंकि अन्यतर के अन्तर्गत अनुमिति का करण जो व्याप्तिज्ञान उसका प्रतिबन्धक व्यभिचार ज्ञान तदभाववत्ता निश्चयमुद्रया है। वही मूल है कि "तेन न क्षतिः" तेन अर्थात् लक्षणघटक अनुमितिपद को अन्यतरपरक करने से–क्षति-व्यभिचार में अव्याप्ति–नहीं हुवी ।

---

ज्ञानस्य परामर्शाप्रतिबन्धकत्वादतोऽजहत्स्वार्थलक्षणयाऽनुमितितत्करणान्यतरपरमाह। **अनुमितिविरोधित्वं चेति** । **तेन** । अनुमितितत्करणान्यतरपरत्वकथनेन । **व्यभिचारिणि** । धूमाभाववद्वृत्तिवन्हौ । **नाव्याप्तिरिति** । व्यभिचारनिश्चयस्य व्याप्तिज्ञानविरोधित्वादितिभावः । ननु अनुमितिपदस्यानुमितितत्करणान्यतरपरत्वेपि व्यभिचारेऽव्याप्तिस्तदवस्थैव, यत्र धूमव्यभिचारी वन्हिरिति व्यभिचारनिश्चयः । ततो धूमव्याप्यतद्वन्हिमानयमिति परामर्शाद्धूमानुमितिदर्शनेन व्यभिचारनिश्चयस्य ऽनुमितितत्कारणान्यतरविरोधित्वाभावादत आह **दोषज्ञानं** चेति । व्यभिचारज्ञानं चेत्यर्थः । **तद्धेतुकानुमितौ** । तद्धेतुकानुमितितत्करणान्यतरस्मिन् । **तेन** । हेतुविशेषान्तर्भावान्तर्भावेन प्रतिबध्यप्रतिबन्धकभावकथनेन । **व्यभिचारज्ञाने** इति । धूमाभाववद्वृत्तिर्वन्हिरिति निश्चयेपीत्यर्थः । **हेत्वन्तरेण** । धूमव्याप्यतद्वन्हिमानितिपरामर्शेण । **अनुमित्युत्पत्तेरिति** । पर्वतोधूमवानित्यनुमित्युत्पत्तेरित्यर्थः । व्यभिचारज्ञानस्यानुमितिविरोधित्वाभावेपीतियोजना । अनुमितितत्करणान्यतरविरोधित्वाभावेपीत्यर्थः । **न क्षतिः** । न व्यभिचारेऽव्याप्तिः । ननु तद्धर्मावच्छिन्नधर्मिकव्यभिचारनिश्चयस्य साक्षादेव तद्धर्मावच्छिन्नहेतुकानुमितिं प्रत्येव प्रतिबन्धकत्वमास्तां किमनुमितिपदस्य लक्षणास्वीकारेणेत्यत आह । **तदभावाद्यनवगाहित्वाच्चेति** । पक्षे साध्याभावाद्यनवगाहित्वाच्चेत्यर्थः । व्यभिचारज्ञानस्यानुमितिप्रतिबन्धकत्वाभावेपीत्यपरायोजना । **न क्षतेरिति** । अनुमितिपदस्य नानुमितितत्करणान्यतरपरत्वानुपपत्तिरित्यर्थः ।

तथा च निरुक्तव्यभिचारज्ञानस्य ग्राह्याभावानवगाहितया तद्धेतुकानुमितिं प्रति प्रतिबन्धकत्वासंभवेनाऽनुमितिपदस्यानुमितितत्करणान्यतरलक्षणाकल्पनमावश्यकमिति भावः। वस्तुतोऽनुमितिपदमेव पक्षः साध्यवान्, साध्यव्याप्यहेतुमांश्चेति समूहालंबनानुमितिपरम्। तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनी अथ च साध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारताशालिनी याऽनुमितिः, तादृशानुमितिपरमित्यर्थः। तादृशानुमितित्व व्यापकप्रतिबध्यतेत्यादि लक्षणम्।

एतेन प्रकृतानुमितितत्कारणान्यतरविरोधित्वनिवेशे पर्वतोवन्हिमान्धूमादित्यादौ पर्वतोवन्हिमान्ह्रदश्चतथेतिसमूहालंबनानुमितिमादाय वन्ह्यभाववद्ह्रदेऽतिव्याप्तिः, तादृशान्यतरत्वव्यापकप्रतिबध्यतानिवेशे तु बाधादावव्याप्तिः, पक्षाऽप्रसिद्ध्यादौ उभयविरोधिन्येव लक्षणसमन्वयादिति समाहितम्। तथा च अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तिरच विशिष्टयद्रूपावच्छिन्नविषयिता व्यापिका या प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदककावच्छिन्न प्रकारताशाली अथ च प्रकृतसाध्यतावच्छेदकवच्छिन्ननिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारताशालीयोमह एतादृशमहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्वंलक्षणम्। अनुगमस्तुपक्षतावच्छेदकविशिष्टानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिरूपवत्वम्। अनुमितौ पक्षतावच्छेदकवै० स्वावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्व स्वावच्छिन्नविशेष्यतानिरूपितसाध्यव्याप्यहेतुतावच्छेदकावच्छेदकावच्छिन्नप्रकारताकत्वोभयसं०। रूपे प्रतिबन्धकतावृत्तित्वं च स्वावच्छिन्नविषयित्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसंबन्धेनेति।

अथ यद्विषयकत्वेनेत्यत्र यद्विषयत्वेनेत्येवे कथं नोक्तम्, वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयताया अपि निरूपकतासंबन्धेन प्रतिबन्धकतायामवच्छेदकत्वादिति चेन्न। असंभवापत्तेः, वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयतायां मानाभावात्। वन्ह्यभाववान् ह्रदइतिज्ञाने हि वन्ह्यभावत्वावच्छिन्ना प्रकारता ह्रदत्वावच्छिन्ना विशेष्यता च, न तु वन्ह्यभाववद्ह्रदत्वावच्छिन्ना कापि विषयता स्वस्य स्वधर्मितावच्छेदकघटकत्वापत्तेः। नचैवं वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वमपि अप्रामाणिकम् वन्ह्यभाववानह्रद इति ज्ञानस्य वह्नित्वावच्छिन्नविषयित्व अभावत्वावच्छिन्नविषयित्व ह्रदत्वावच्छिन्नविषयिताभिरेवोपपत्ते रिति वाच्यम्। वन्ह्यभाववान् ह्रद इति ज्ञानं विषयितया वन्ह्यभाववद्ह्रदवदिति प्रतीत्यनुरोधेन तस्या अतिरिक्तत्वोपगमात्। न हि तादृशप्रत्यये केवलह्रदत्वावच्छिन्नविषयिता नियामिका, तथा सति ह्रद इति ज्ञानं विषयितया वन्ह्यभाववद्ह्रदवदिति प्रतीति प्रसंगात्। अतो वन्ह्यभाववान् ह्रद इति प्रमायां विशिष्टविषयकत्वं स्वीक्रियते, तादृशप्रमानिष्ठह्रदत्वावच्छिन्नविशेष्यितायां वन्ह्यभाववद्ह्रदत्वावच्छिन्नविलक्षणनिरूपकताकत्वं [illegible] निरूपकत्वं चाऽतिरिक्तमेवेति ध्येयम्।

अथ यत्पदस्य यद्रूपावच्छिन्नपरत्वे यत्पदेन किं धर्तव्यम्, दोषतावच्छेदकं वन्ह्यभाववद्ह्रदत्वमिति चेत्, तद्यदि वन्ह्यभावह्रदत्वोभयं तदा एकत्रद्वयमितिरीत्या वन्ह्यभावह्रदत्ववानिति ज्ञानेपि वन्ह्यभावह्रदत्वोभयावच्छिन्नविषयिता- जायमाने सत्वात्, तादृशज्ञानस्य निर्धर्मिकतया ह्रदोवन्हिमानित्यनुमित्यप्रतिवन्धकत्वाद- सम्भवः। न च सामानाधिकरण्यसम्बन्धेन वन्ह्यभावविशिष्टह्रदत्वमेव यद्रूपपदेन ग्राह्यम्, ह्रदोवन्ह्यभाववानिति ज्ञाने विशिष्टवैशिष्ट्यबोधमर्यादया उद्देश्यविधेयभावमहिम्ना वा उद्देश्यतावच्छेदकह्रदत्वादौ वन्ह्यभावादेः सामाना- धिकरण्येन भानादिति वाच्यम्। तथा सति ह्रदत्ववानिति ज्ञाने वन्ह्यभावविशिष्ट- ह्रदत्ववानिति ज्ञाने वा निर्धर्मितावच्छेदकके वन्ह्यभावविशिष्टह्रदत्वस्याक्षततया प्रतिवन्धकतातिरिक्तवृत्तित्वेनाऽसम्भवापत्तेः। न च यद्रूपावच्छिन्नप्रकारितानिरूपत[1] यद्रूपावच्छिन्नविशेष्यित्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्न- विशिष्टतद्रूपावच्छिन्नत्वमर्थः, तथा च नोक्तदोषावकाश इति वाच्यम्। घटादौ पृथिवीभेदे साध्ये पृथिवीत्ववद्घटादेर्बाधतया तत्राऽव्याप्तेः, घटःपृथिवीतिप्रतिबन्धक- ज्ञानीयपृथिवीत्वप्रकारताया निरवच्छिन्नत्वेन यद्रूपावच्छिन्नेत्यनेन दुःसंग्रहत्वात्। न च साध्यादिभेदेन दोषलक्षणभेदात्तत्रत्यलक्षणे यत्प्रकारितैव निवेश्या, न तु यद्रूपावच्छिन्नप्रकारिता, शब्दैक्यस्यानुपादेयत्वादिति वाच्यम्। तथा सति घटः पृथिवीभिन्नोमेयत्वादित्यादौ पृथिवीत्ववद्वृत्तिमेयत्वरूपव्यभिचारे व्याप्तेःऽपृथिवी- निरूपिताऽधेयत्वप्रकारतानिरूपितमेयत्वत्वावच्छिन्नविशेष्यतानिरूपकत्वस्य वृत्ति- प्रमेयमित्याद्यप्रतिवन्धकज्ञानसाधारण्यात्। यद्रूपावच्छिन्नप्रकारितानिवेशे चैतत्स्थ- लीयस्यैव बाधस्याऽसंग्रहापत्तेः। किं च ह्रदोवन्ह्यभाववानित्यत्रप्रकारितानिष्ठं वन्ह्य- भावत्वावच्छिन्नत्वं किम् वन्हिअभावत्वोभयावच्छिन्नत्वम् उत वन्हिविशिष्टाभाव- त्वावच्छिन्नत्वम्, तदुभयमपि पूर्वोक्तदूषणग्रस्तमिति। मैवम् यद्रूपावच्छिन्न- विषयिताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपवत्वमित्यस्य यादृशसमुदायवृत्ति- समुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तादृशसमुदायत्वविशिष्टवत्वमर्थः। यादृशसमुदायत्वपदेन च वन्ह्यभाववान् ह्रद इति ज्ञानीयविषयतारूपं वन्हि-वन्हित्व-अभाव-अभावत्व-ह्रद- ह्रदत्वगतं विलक्षणसमुदायत्वं गृह्यते, तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्ति- कावच्छेदकताकनिरूपकताकविषयित्वं वन्ह्यभाववान् ह्रदइति ज्ञाने एव स्वीक्रियते, न तु सामानाधिकरण्यसम्बन्धेन वन्ह्यभावविशिष्टह्रदत्ववानिति ज्ञाने, तदुत्तरं वन्ह्य- भावविशिष्टह्रदविषयकज्ञानवानित्यनुव्यवसायाभावात्। तादृशानुव्यवसायं प्रति तादृशसमुदायत्ववृत्तिनिरूपकताकविषयिताशालिज्ञानत्वेन हेतुतया तादृशविषयिताया अपि वन्हि-वन्हित्व-अभाव-अभावत्व-ह्रद-ह्रदत्वगतसमुदायत्वे सत्वात्।

अत्र लक्षणे मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, प्रकृतानुमितिप्रतिबन्धकताया मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयिताव्यापकत्वात्, अतोविशिष्टान्तराघटि-

---

[1] टि० प्रकारितानिरूपितत्वं प्रकारित्वावच्छिन्नत्वम्।

**यादृशसाध्यपक्षकहेतौ यावन्तोदोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम् । पञ्चत्वकथनं तु तत्संभवस्थलाभिप्रायेण ॥७१॥**

प्रश्न —'यद्विषयकत्वेन' इत्यादि प्रतिबन्धकताघटितलक्षण "निर्वन्हिः पर्वतो वन्हिमान्" इत्यादिआहार्यस्थलीय दोषों में अव्याप्त हो जायेगा–तब उन दोषों का संग्रह कैसे होगा।

उत्तर —इसके लिये लक्षणान्तर यह कर देना कि "यत्पक्षक–यत्साध्यक–तद्धेतुकस्थल में जितने भी दोष हो सकते हों तावदन्यान्यत्व" को ही हेत्वाभासत्व कह देना। हेत्वाभासों को पञ्चत्व का कथन —जिस स्थल में पाञ्चों हेत्वाभासों का संभव हो सके उस स्थल के अभिप्राय से किया है। जैसे "वायुर्गन्धवान् स्नेहात्" "जलं गन्धवत् उष्णस्पर्शवत्वात्" इसी प्रकार

---

त्वमपि निवेशनीयम्, तच्च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं अथ च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्ति यद्रूपं तत्तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं यद्रूपे निवेशनीयमित्यालोच्य संक्षेप इत्युक्तमित्यन्यत्र विस्तरः।

अथ पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितितत्करणान्यतरविरोधित्वमवश्यं वाच्यम्, अन्यथा पर्वतोवन्हिमान् धूमादित्यादौ कांचनमयत्वाभाववत्पर्वतेऽतिव्याप्तिः, तस्यापि कांचनमयत्वसहितपर्वतत्वरूपकिंचिद्धर्मावच्छिन्नपक्षसाध्यकानुमितिप्रतिबन्धकज्ञानविषयत्वात्। तथा च निर्वन्हिः पर्वतोवन्हिमानित्याहार्यस्थले वन्हिमत्पर्वतरूपाश्रयासिद्धावव्याप्तिः, निर्वन्हिः पर्वतोवन्हिमानिति ज्ञानस्याहार्यतया नुमितिरूपत्वाभावेन प्रकृतानुमितेरप्रसिद्धेरत आह। **यादृशेति**। यद्रूपाच्छिन्नार्थकम्। तथा च निर्वन्हिःपर्वतोवन्हिमानित्यत्र वन्हिमान् पर्वतइत्याश्रयासिद्धिज्ञानं प्रसिद्धम्, वन्ह्यभाववान् पर्वत इतिप्रतिबध्यज्ञानमपिप्रसिद्धम्। तत्र दोषाणां वन्हिमत्पर्वतरूप वन्हिव्याप्यवत्पर्वतरूप पर्वतवृत्तिवन्हिरूप पर्वतवृत्तित्वव्याप्यवद्वन्हिरूपाणां यावत्वेनोपादानं कृत्वा तावदन्यान्यत्वस्य तत्र सत्वाल्लक्षणसमन्वयः। अत्रसर्वमाकाशवदित्यादौ आकाशाभाववत्सर्वरूपबाधभिन्नत्वस्याप्रसिद्ध्या व्याप्तिवारणाय तादृशदोषनिरूपितविषयितान्यतमविषयितानिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्वं विवक्षणीयम्। ननु साध्यादिभेदेन लक्षणभेदे ह्रदोवन्हिमान् धूमादित्यादिस्थलीयस्य सामान्यलक्षणस्य क्वचिद्दोषद्वयसाधारण्येन क्वचिद्दोषत्रयसाधारण्येन पंचविधहेत्वाभाससाधारण्याऽसम्भवात्तादृशलक्षणाक्रान्तानां पञ्चविधत्वोक्त्यसंगतिरित्यत आह। **पञ्चत्वकथनमिति। तत्संभवस्थलाभिप्रायेणेति।** यत्र पंचानामेवहेत्वाभासानांसम्भवस्तत्स्थलीयलक्षणाक्रान्तस्य पंचविधत्वाभिप्रायेणेत्यर्थः। तथा गौरश्वोघटत्वादित्यादौ। अत्र अश्वत्वाभाववद्वृत्तिघटत्वंव्यभिचारः। अश्वत्वव्यापकीभूताभावप्रतियोगिघटत्वं अश्वत्वाऽसमानाधिकरणघटत्वंवाविरोधः। अश्वत्वव्याप्यवान्,

**आद्यः साधारणस्तु स्यादसाधारणकोऽपरः।**
**तथैवानुपसंहारी त्रिधानैकान्तिकोभवेत्॥ ७२॥**
**एवं च साधारणाद्यन्यतमत्वमनैकान्तिकत्वम्। साधारणः साध्य-**

अनैकान्तिक ( व्यभिचार ) का भी साधारण-असाधारण-अनुपसंहारी-एतदन्यान्यत्व-अर्थात् एतत् त्रितयभिन्नभिन्नत्व यही लक्षण ठीक है। साध्यवत् से अन्य में वृत्ति जो हेतु उसे 'साधारण' कहते हैं। वह साधारण ( व्यभिचार ) निश्चय "साध्यवदन्यावृत्तिर्हेतुः" इस हेतु धर्मिक साध्यवदन्यनिरूपितवृत्तित्वाभावरूप व्याप्तिग्रह अर्थात् व्याप्तिनिश्चय का प्रतिबन्धक होता

---

अश्वत्वाभावव्याप्यवांश्च सत्प्रतिपक्षः। घटत्वाभाववतीगौरसिद्धिः। अश्वत्वाभाववती गौर्बाध इति ध्येयम्। ७१

हेत्वाभाससामान्यलक्षणमुक्त्वाऽनैकान्तिकादीनां लक्षणान्याह। **एवंचेति।** **साधारणादीति**। आदिनाऽसाधारणा नुपसंहारिणोः संग्रहः। तथा च साधारणाऽसाधारणानुपसंहारि एतदन्यतमत्वं अनैकान्तिकत्वम्। एकस्य साध्यस्य तद्भावस्य वा अन्तः सहचारः यस्मिन्निति ऐकान्तिकः "व्याप्तिग्राहकसहचारवान्। न ऐकान्तिकः अनैकान्तिकः। अनैकान्तिकः सव्यभिचारः। यत्किंचिद्धर्मावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयकालीन यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका यद्रूपावच्छिन्नविषयताशालिनिश्चयकालीन हेतुतावच्छेदकावच्छिन्नप्रकारता शालिनिश्चयधर्मितावच्छेदकावच्छिन्नविशेष्यताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्वं व्यभिचारसामान्यलक्षणम्। अनुमितिपदं साध्यव्याप्योहेतुः हेतुमान्पक्षः इति समूहालंबनानुमितिपरम्। यथाश्रुतानुमितिपरत्वे साधारण्यासंग्रहप्रसंगात्। साध्यव्याप्तिपदेन व्यतिरेकव्याप्तिरपिग्राह्या। तेनाऽनुपसंहारित्वस्य संग्रहः। धूमवान् वन्हेरित्यादौ यद्रूपपदेन धूमाभाववद्वृत्तिवन्हित्वमादाय व्यभिचारे "धूमाभाववद्वृत्तिवन्हौ" लक्षणसमन्वयः। प्रथमनिश्चयो पर्वतोवन्हिमानित्याकारकः। द्वितीयनिश्चयः धूमाभाववद्वृत्तिर्वन्हिरित्याकारक इति। अयं गौरश्वत्वादित्यादौ यद्रूपपदेन गोत्वव्यापकीभूताभावप्रतियोग्यश्वत्वत्वमुपादायाऽसाधारण्ये "गोत्वव्यापकीभूताभावप्रतियोग्यश्वत्वे" लक्षणसमन्वयः। प्रथमनिश्चयः अयमश्वः इत्याकारकः। द्वितीयनिश्चयो "गोत्वव्यापकीभूताभावप्रतियोगिअश्वत्व" मित्याकारक इति।

सर्वमनित्यं प्रमेयत्वादित्यादौ यद्रूपपदेन नित्यत्वव्यापकीभूताभावाऽप्रतियोगिमेयत्वत्वमुपादायाऽनुपसंहारित्वे "नित्यत्वव्यापकीभूताभावाप्रतियोगिमेयत्वे" लक्षणसमन्वयः। प्रथमनिश्चयोमेयत्ववान्घट इत्याकारकः। द्वितीयनिश्चयो नित्यत्वव्यापकीभूताभावप्रतियोगिमेयत्वमित्याकारकोबोध्य इति।

वदन्य वृत्तिः, तेन च व्याप्तिज्ञानप्रतिबन्धः क्रियते । असाधारणः साध्यासमानाधिकरणो हेतुः, । तेन च साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते ।

अन्ये तु सपक्षावृत्तिरसाधारणः, सपक्षश्च निश्चित साध्यवान् । इत्थं च शब्दोऽनित्यः शब्दत्वादित्यादौ यदा पक्षे साध्यनिश्चयस्तदा नाऽसाधारण्यं, तत्र हेतो निश्चयादिति वदन्ति ।

है–[ जैसे "पर्वतो धूमवान् वन्हेः" यहाँ पर वन्हिहेतु में जो धूमवदन्य अयोगोलकनिरूपितवृत्तिता रूप जो साधारण व्यभिचार उसका निश्चय–अर्थात् वन्हि धूमवत् से अन्य अयोगोलक में रहता है–यह साधारणनिश्चय–वन्हिहेतु में जो धूमवदन्य निरूपित वृत्तित्वाभावरूप व्याप्तिनिश्चय–उसका प्रतिबन्धक होता है ] साध्य के असमानाधिकरण जो हेतु उसे 'असाधारण' कहते हैं । इससे यह हेतुधर्मिक साध्यसामानाधिकरण्य रूप सिद्धान्त व्याप्तिज्ञान प्रतिबन्धक होता है–जैसे "ह्रदोवन्हिमान् जलत्वात्" यहाँ जलत्व हेतु साध्य ( वन्हि ) के असमानाधिकरण होने के नाते असाधारण व्यभिचारी है–अतः यह साध्यासमानाधिकरणरूप असाधारणनिश्चय–जलत्व हेतु में जो वन्हि ( साध्य ) का सामानाधिकरण्यरूप भ्रमात्मक व्याप्तिज्ञान–उसका प्रतिबन्धक होता है । ( तथा ) वैसे ही "शब्दोनित्यः शब्दत्वात्" यहाँ भी शब्दत्व हेतु में नित्यत्व का असामानाधिकरण्य होने के नाते शब्दत्व असाधारणव्यभिचारी है । "शब्दोऽनित्यः शब्दत्वात्" यहाँ शब्दत्व हेतु वस्तुतः असाधारण नहीं है–अपितु शब्दत्व में असाधारण्य का भ्रम है । अन्य कोई लोग सपक्ष में अवृत्ति हेतु को ही असाधारण कहते हैं । सपक्ष नाम है निश्चित् साध्यवान् का–अर्थात् जिसमें साध्य का निश्चय हो–इत्थञ्च ( इस प्रकार ) "शब्दोऽनित्यः शब्दत्वात्" यहाँ पक्ष में ( शब्द में ) जब कि अनित्यत्वरूप साध्य का निश्चय हो तब शब्दत्व हेतु सपक्षावृत्ति न होने के कारण–अर्थात् सपक्ष में वृत्ति होने के कारण असाधारण

---

मूलोक्तसाधारणादिलक्षणानां प्राचीनानुमतत्वेन नवीनमतरीत्या साधारणादीनां लक्षणमाह । साध्यवदन्यवृत्तिरिति । हेतुरिति शेषः । तेनचेति । साध्यवदन्यवृत्तिहेतुरिति ज्ञानेन चेत्यर्थः । व्याप्तिज्ञानप्रतिबन्ध इति । साध्यवदन्यावृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्ध इत्यर्थः । इदमुपलक्षणम् । साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वमपि साधारण्यं बोध्यम् । तेन च सिद्धान्तव्याप्तिघटकहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमिति ज्ञानं प्रतिबध्यते । तेन । साध्यासामानाधिकरणोहेतुरिति ज्ञानेन । साध्यसामानाधिकरण्यग्रह इति । व्याप्तिघटकीभूतसाध्यसामानाधिकरण्यांशग्रह इत्यर्थः । असाधारणस्याऽनित्यदोषत्ववादिनां मतमाह । अन्येत्विति । ननु सपक्षः-पक्षभिन्नसाध्यवान्, तथा च पक्षभिन्नावृत्तिरसाधारण इत्यर्थः फलितः, एवं च पक्षे "साध्यनिश्चयदशायामपि" पक्षभिन्नत्वाभावात्कथमसाधारण्यस्यानित्यदोषत्वमित्यत आह । सपक्षश्चेति । पक्षेसाध्यसंशयदशायामेवाऽसाधारण्यस्यहेत्वाभासता, न तु निश्चयदशायां, तदा-

अनुपसंहारी च अत्यन्ताभावाऽप्रतियोगिसाध्यकादिः। अनेन च व्यतिरेक व्याप्तिज्ञानप्रतिबन्धः क्रियते। विरुद्धस्तु साध्यव्यापकीभूताभाव-प्रतियोगी, अयं च साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकः।

नहीं है–क्योंकि उस काल में निश्चित साध्य वाले पक्ष में हेतु का भी निश्चय है–ऐसा कहते हैं–( अन्येतु )। अत्यन्ताभाव का अप्रतियोगी है साध्य जिस हेतु का–उस हेतु को अनुपसंहारी कहते हैं। और इस अनुपसंहारी के ज्ञान से व्यतिरेक व्याप्ति ज्ञान का प्रतिबन्ध किया जाता है–अर्थात् अनुपसंहारी ज्ञान व्यतिरेक व्यप्ति ज्ञान का प्रतिबन्धक होता है–जैसे "सर्वमनित्यं प्रमेयत्वात्" यहाँ पर जब कि यह ज्ञान है कि "सर्वमनित्यम्" तो उस काल में अनित्यत्वाभाव कभी भी नहीं मिलेगा–अतः अत्यन्ताभाव का अप्रतियोगी साध्य हो गया–तत्कत्व प्रमेयत्व हेतु में चला गया। साध्य का व्यापकीभूत जो अभाव–उस अभाव का प्रतियोगी जो हेतु उसे विरुद्ध कहते हैं–जैसे "ह्रदो वन्हिमान् जलत्वात्" यहाँ जलत्वरूप हेतु साध्याभाव ( वन्ह्यभाव ) का व्यापकीभूत जो अभाव जलत्वाभाव उसका प्रतियोगी होने के नाते विरुद्ध कहलाता है। और यह विरोध ज्ञान पक्ष में साध्याभावग्रह का सामग्री होने के नाते–अर्थात् साध्याभाव का ग्राहक होने के कारण पक्ष में साध्यवत्ता ज्ञान का प्रतिबन्धक होता है।

---

पक्षस्यैव सपक्षत्वेन निश्चितसाध्यवद्व्यावृत्तत्वाभावादित्यनित्यदोषत्वं तस्येत्याह। इत्थंचेति। असाधारण्यघटकसपक्षत्वस्य निश्चयघटितत्वे चेत्यर्थः। तत्र। निश्चित-साध्यवति पक्षे। निश्चयादिति। वृत्तित्वनिश्चयादित्यर्थः। वदन्तीत्यस्वरसः, तद्बीजन्तु हेतोः सपक्षाऽवृत्तित्वनिश्चयोनानुमितितत्करणान्यतरविरोधी इति हेतोः सपक्षा-वृत्तित्वस्य न हेत्वाभासत्वम्, परन्तु हेतोः सपक्षावृत्तित्वज्ञाने उदाहरणाभावेन पंचावयववाक्यादुबोधासंभवेन परामर्शासंभवात् परस्यानुमितिर्नसंभवतीति तस्यो-पाधिवद्दूषकत्वमिति ध्येयम्। निश्चितसाध्यवदवृत्तित्वज्ञानस्य नीलघटाभाववत्ता-ज्ञानस्य घटवत्ताज्ञाने इव साध्यसामानाधिकरण्यज्ञाने प्रतिबन्धकताविरहेणाऽसाधा-रण्यस्य हेत्वाभासत्वानुपपत्तिरित्यस्वरसबीजमिति केचित्। अत्यन्ताभावाप्रतियोगि-साध्यकादिरिति। केवलान्वयिसाध्यकादिरित्यर्थः। आदिपदादत्यन्ताभावाप्रति-योगिसाधनपरिग्रहः। यथासर्वमनित्यं प्रमेयत्वादित्यादौ। साध्येऽत्यन्ताभावाप्रति-योगित्वनिश्चयात्साध्याभावज्ञानाऽसंभवेन व्यतिरेकव्याप्तिज्ञानप्रतिबन्धः फलमित्याह। अनेनेति। साध्यमत्यन्ताभावाप्रतियोगीतिनिश्चयेनेत्यर्थः। केवलान्वयिसाध्यकेऽन्वय-व्याप्तिज्ञानादेवानुमितिरिति भावः। साध्यस्यव्यतिरेकव्याप्तिः-साध्याभावघटिता, यथा वन्ह्यभावव्यापकीभूताभावप्रतियोगित्वं वन्हेर्व्यतिरेकव्याप्तिः। साध्याभावस्यव्यतिरेक-व्याप्तिः साध्याभावाभावघटिता, साध्याभावस्यसाध्यरूपतया साध्यघटितेति यावत्। तामेवाह। साध्यव्यापकीभूतेति। साध्याभावनिरूपितव्यतिरेकव्याप्तिविशिष्टेत्यर्थः। यत्रयत्रसाध्याभावाभावः तत्रतत्रहेत्वभाव इति "साध्याभावस्यव्यतिरेक" सहचारो-

सत्प्रतिपक्षे तु प्रतिहेतुः साध्याभावसाधकः, अत्र हेतुरेक एवेति विशेषः, साध्याभावसाधक एवहेतुः साध्यसाधकत्वेनोपन्यस्त इत्यशक्तिविशेषोपस्थापकत्वाच्च विशेषः।

प्रश्न—विरुद्ध और सत्प्रतिपक्षित इन दोनों हेतुओं में क्या अन्तर है-क्योंकि विरोध ज्ञान भी पक्ष में साध्याभाव का ग्राहक होने के कारण पक्ष में साध्यवत्ता ज्ञान का प्रतिबन्ध करता है-और सत्प्रतिपक्ष निश्चय भी साध्याभाव का ग्राहक होने से साध्यवत्ता ज्ञान का प्रतिबन्ध करता है।

उत्तर—सत्प्रतिपक्षस्थल में हेत्वन्तर साध्याभाव का साधक होता है-और विरुद्धस्थल में एक ही हेतु-यह अन्तर है। विरुद्ध-और सत्प्रतिपक्षित-इन दोनों हेतुओं में यह भी अन्तर है कि विरुद्धस्थल में साध्याभाव को सिद्ध करनेवाला हेतु ही साध्यसिद्धि के लिये भी उपन्यस्त हो रहा है-यह उस प्रयोक्ता पुरुष की अशक्ति विशेष का सूचक है-सत्प्रतिपक्ष स्थल में एक ही हेतु दोनों ( साध्य-साध्याभाव ) का साधक न होने के कारण अशक्ति विशेष की उपस्थिति

---

द्रष्टव्यः। तथा च साध्यव्यापकीभूतोयोहेत्वभावः, तत्प्रतियोगित्वम्, तदभावत्वमिति- यावत्। तथा च साध्यव्यापकीभूतोयोहेत्वभावः, स्वदभावोव्यापकाभाव एव स च हेतुरूपस्तद्‌ज्ञानस्यसाध्याभावानुमितिजनकत्वेन साध्यानुमितिप्रतिबन्धकत्वमित्याशयेनाह। **अयंचेति**। साध्यव्यापकीभूताभावप्रतियोगीहेतुरिति निश्चयश्चेत्यर्थः। **साध्याभावग्रहसामग्रीत्वेनेति**। साध्याभावानुमितिजनकसाध्याभावनिरूपितव्यतिरेक व्याप्तिप्रकारकत्वेनेत्यर्थः। साध्यानुमिताविति शेषः। यथा ह्रदोवह्निमान् जलादित्यादित्यादौ, वह्निव्यापकीभूताभावप्रतियोगिजलरूपोविरोधोदोषः। अत्रेदं बोध्यम्। वह्निव्यापकीभूताभावप्रतियोगिजलमितिविरोधविषयकनिश्चयस्य जलवान्ह्रद इति निश्चयविशिष्टत्वेन प्रतिबन्धकत्वम्। न च वह्निव्यापकीभूताभावप्रतियोगिजलस्य विरोधरूपत्वे तत्र सामान्यलक्षणाव्याप्तिः, प्रकृतानुमितिप्रतिबन्धकतायां वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयिताव्यापकत्वविरहात्, तादृशजलत्वावच्छिन्नविषयितायाः जलवान्ह्रद इति निश्चयासमानकालीने वह्निव्यापकीभूताभावप्रतियोगिजलमितिनिश्चयेपि "अनुमित्यप्रतिबन्धके" सत्वादिति वाच्यम्। यद्रूपावच्छिन्नविषयिताशालिनिश्चये प्रकृतानुमित्यप्रतिबन्धकत्व पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वोभयाभावस्वद्रूपवत्वं हेत्वाभासत्वमितिविवक्षणान्नाऽव्याप्तिरिति। नन्वेवं सत्प्रतिपक्षाद्विरोधस्य भेदो न स्यादत आह। **सत्प्रतिपक्षे** त्विति। **प्रतिहेतुः**—प्रतिकूलो द्वितीयोहेतुः—स्वभिन्नहेतुरित्यर्थः। **अत्र**। विरोधस्थले। **इति विशेष** इति। तथा च सत्प्रतिपक्षे द्वौहेतू अत्र एक एव हेतुरिति विशेष इत्यर्थः। ननु अनुमितिप्रतिबन्धरूपफलैक्येपि हेतुद्वये सत्प्रतिपक्षः, हेत्वैक्ये विरुद्ध इत्युच्यते तदा पक्षभेदात् साध्यभेदाद्व्याप्तिभेदाच्च एकजातीयस्यापि नानासत्प्रतिपक्षत्वापत्तिरित्यत आह।

**सत्प्रतिपक्षः साध्याभावव्याप्यहेतुमान्पक्षः। अगृहीताप्रामाण्यक साध्यव्याप्यवत्त्वोपस्थितिकालीनाऽगृहीताऽप्रामाण्यक तदभावव्याप्यवत्त्वोपस्थितिविषयस्तथा इत्यन्ये। अत्र च परस्पराभावव्याप्यवत्ता ज्ञानात्परस्परानुमिति प्रतिबन्धः फलम्।**

नहीं होती है। साध्याभावव्याप्यवत् पक्ष को सत्प्रतिपक्ष कहते हैं। अभिप्राय यह है कि जहाँ वादी प्रथम पक्ष में वन्ह्यादिरूप साध्यसाधन के लिये पञ्चावयव वाक्य का प्रयोग करता है–उसके बाद प्रतिवादी उसी पक्ष में वन्ह्यभाव को सिद्ध करने के लिये फिर पृथक् से पञ्चावयव वाक्य का प्रयोग करता है उसी समय सत्प्रतिपक्ष व्यवहार होता है–तो वहाँ दोनों ही हेतु विनिगमनाविरहात् सत्प्रतिपक्षित माने जाते हैं। अन्य कोई ऐसा व्यवहारौपयिक सत्प्रतिपक्ष का लक्षण करते हैं कि "अप्रामाण्यज्ञान शून्य जो परामर्शरूप साध्यव्याप्यवत्त्वोपस्थिति+तादृश उपस्थिति कालीन जो अप्रामाण्य ज्ञान शून्य विपरीत परामर्शरूप साध्याभावव्याप्यवत्त्वोपस्थिति–उस उपस्थिति का विषय ही सत्प्रतिपक्ष है–और परस्पर अभावव्याप्यवत्तारूप जो सत्पतिपक्ष–उसका ज्ञान परस्पर में अनुमिति का प्रतिबन्धक होता है। [ जैसे "वन्हिव्याप्य धूमवान् पर्वतः" यह ज्ञान 'वन्ह्यभाव' का अभावव्याप्यवत्ता ज्ञान होने के नाते "पर्वतो

---

**साध्याभावसाधक एवेति।** **अशक्तिविशेषोपस्थापकत्वादिति।** वस्तुगत्या साध्याभावसाधके हेतावेव तव साध्यसाधकत्वभ्रम इति भ्रमरूपाऽशक्ति सूचकत्वं विरुद्धस्य, नत्वेवं सत्प्रतिपक्षस्येति भावः। **चेति।** चशब्दस्यानुक्तसमुच्चायकतया साध्यतदभावोभयानुमितिप्रतिबन्धरूपफलकत्वाभावादित्यर्थः। तथा च सत्प्रतिपक्षस्य साध्यतदभावोभयानुमितिप्रतिबन्धफलकत्वात्, विरुद्धस्य एकानुमितिप्रतिबन्धफलकत्वादिति फलभेदादुभयोर्भेद इति भावः। **सत्प्रतिपक्ष इति।** सत्प्रतिपक्षहेतोर्दोष-इत्यर्थः। **साध्याभावव्याप्यवान्पक्ष इति।** एवं साध्यवदन्यत्व व्याप्यवत्पक्ष, आधेयतासंबन्धेनपक्षविशिष्टसाध्याभावव्याप्य तादृशसंसर्गकपक्षविशिष्टसाध्यवदन्यत्व-व्याप्य—साध्यव्यापकीभूताभावप्रतियोगिहेतुमत्पक्षाणां परिग्रहः। तत्तद्ज्ञानस्याप्यनुमितिविरोधित्वेन तद्विषयस्य सत्प्रतिपक्षतौचित्यात्।

ननु एषामननुगमेन हेत्वाभासस्य पक्षविधत्वानुपपत्तिरितिचेन्न। पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका सती विशिष्टपक्ष-विशिष्टसाध्यग्रहत्वाव्यापिका निरुक्तपक्षसाध्यवैशिष्ट्यग्रहत्वव्यापिका या प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदक विषयित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका च यद्रूपावच्छिन्नविषयिता तद्रूपवत्त्वस्य विवक्षणाम्। ह्रदो वन्हिमान् धूमादित्यादौ वन्ह्यभावव्याप्यजलवद्ह्रदे यद्र पपदेन वन्ह्यभावव्याप्यजल-

वद्वृद्दत्वमादाय लक्षणसमन्वयः। स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन हेतोर्दुष्टत्वं बोध्यम्।

अगृहीताप्रामाण्यकेत्यादिलक्षणस्य सत्प्रतिपक्षदोषनिर्वचनपरत्वं न संभवति एतादृशलक्षणज्ञानस्य साध्याभावव्याप्यानवगाहितया एतादृशलक्षणस्य हेत्वाभासत्वासम्भवात्, "अनुमितिविरोधिज्ञानविषयस्यैव हेत्वाभासत्वात्"। सन् प्रतिपक्षो विरोधिपरामर्शो यस्य "परामृष्यमाण" हेतो रसौ सत्प्रतिपक्षइतिविग्रहः। तथा च प्रकृतपरामर्शस्य विरोधिपरामर्शस्य च सत्वदशायामेव सद्धेतौ असद्धेतौ च सत्प्रतिपक्षव्यवहारोभवतीति तादृशविग्रहानुसारेणव्यवहारौपयिकं लक्षणमाह। **अगृहीताऽप्रामाण्यकेति।** साध्यव्याप्यवत्तापरामर्शशून्यतादशायामपरपरामर्शसत्वेपि सत्प्रतिपक्षव्यवहारविरहात् कालीनान्तमुपस्थितिविशेषणम्। तादृशोपस्थितिविशिष्टा या तादृशोपस्थिति स्तद्विषयत्वमर्थः। वै० स्वावच्छेदकत्तणावच्छिन्नत्व स्वसामानाधिकरण्योभयसं०। तेन कालान्तरीयपरामर्शमादाय पुरुषान्तरीयपरामर्शमादाय च नातिप्रसंगः। परामर्शद्वयसत्वेपि अन्यतरस्मिन्नप्रामाण्यग्रहकाले सत्प्रतिपक्षव्यवहाराभावादुभयत्राऽप्रामाण्यज्ञानानास्कन्दितत्वनिवेशः। अन्ये इत्यस्वरसः, तद्बीजंतु व्यवहारमात्रोपयोगिनो निरुक्तलक्षणस्य हेत्वाभासनिरूपण प्रस्तावे उपयोगाभाव इति ध्येयम्। सत्प्रतिपक्षस्य दूषकताबीजंदर्शयति। **अत्र चेति।** न च द्वितीयस्य परामर्शस्योत्पादनसमये पूर्वपरामर्शेनानुमितिजननात्परार्थानुमानस्थले सत्प्रतिपक्षस्य दोषता न सम्भवतीति वाच्यम्। यत्रादौपर्वतोवन्हिमानितिसाध्यनिश्चयः ततोवन्हिव्याप्यवत्तापरामर्शः ततो विरोधिपरामर्शः तत्र सिद्धितुरीयक्षणेऽ नुमित्यनुदयादस्य विरोधिपरामर्शमात्राधीनत्वात्तत्र सत्प्रतिपक्षस्य दूषकत्वं बोध्यम्। एवं यत्रादौबाधनिश्चयः ततः साध्यव्याप्यवत्तापरामर्शः ततोविरोधिपरामर्श स्तत्रापि सत्प्रतिपक्षस्य दूषकत्वं बोध्यम्।

अत्र च यत्रयुगपत्समूहालंबनपरामर्शः सिद्ध्यादिप्रतिबन्धकवशात्क्रमेण वा साध्यव्याप्यवत्तापरामर्शः साध्याभावव्याप्यवत्तापरामर्शश्च तत्र पक्षे युगपदेव साध्यतदभावयोरुभयोरनुमितिः, सामग्रीसत्वात् ग्राह्याभावव्याप्यवत्तानिश्चयस्याऽनुमिताबप्रतिबन्धकत्वात्। अथ तथापि ग्राह्याभावनिश्चयस्य कार्यसद्भावेन विशिष्टबुद्धिप्रतिबन्धकतया कथमेकदा साध्यतदभावयोरनुमितिः, एकधर्मितावच्छेदककतदभावोभयकोटिकप्रत्यक्षस्यैव संशयतयाऽ नुमितिमात्रस्य निश्चयरूपत्वात्, संशयत्वस्य प्रत्यक्षत्वव्याप्यत्वात्। संशयत्वस्य विशेष्यताविशेषरूपत्वनयेपि तादृशविशेष्यताविशेषस्य प्रत्यक्षत्वव्याप्यत्वात्। न चैतावता पक्षतावच्छेदकावच्छेदेनसाध्यतदभावयोरनुमित्यसम्भवेपि पक्षतावच्छेदकसामानाधिकरण्येन युगपत्साध्यतदभावयोरनुमितौ न किमपि बाधकम्, विशेष्यतावच्छेदकसामानाधिकरण्येन ग्राह्याभावादिनिश्चयस्य विशेष्यतावच्छेदकसामानाधिकरण्येन विशिष्टबुद्ध्यप्रतिबन्धकत्वादिति वाच्यम्। यत्र पक्षतावच्छेदकावच्छेदेन साध्यतदभावव्याप्यवत्तापरामर्शस्तत्र पक्षतावच्छेदकसामानाधिकरण्येनापि साध्यतदभावयोरनुमित्यसंभवात्, पक्षतावच्छेदक-

सामानाधिकरण्येनानुमितिं प्रति पक्षतावच्छेदकसामानाधिकरण्येन साध्यतदभाव-व्याप्यवत्तापरामर्शस्यैव हेतुत्वात् । यत्र पक्षतावच्छेदकावच्छेदेनसाध्यतदभाव-व्याप्यवत्तापरामर्शः तत्रानुमित्यनभ्युपगमे चापत्तेर्दुर्वारत्वात्, ग्राह्याभावव्याप्य-वत्तानिश्चयस्य त्वयाऽनुमितौ प्रतिबन्धकत्वानभ्युगमात् । यत्र पक्षतावच्छेदक-सामानाधिकरण्येन साध्यतदभावव्याप्यवत्तापरामर्शः तत्र पक्षतावच्छेदकसामाना-धिरण्येन साध्यतदभावानुमितेः "समुच्चयरूपायाः" नैयायिकैरभ्युपगमेन न्याय-मताविशेषप्रसंगाच्चेति चेन्न । पक्षतावच्छेदकावच्छेदेन तत्सामानाधिकरण्येना-नुमितिं प्रति तादृशतादृशपरामर्श एव हेतुरिति नियमे मानाभावात्, असति बाधके पक्षतावच्छेदकावच्छेदकावच्छेदेन व्याप्यवत्तापरामर्शादपि तत्सामाना-धिकरण्येन, पक्षतावच्छेदकसामानाधिकरण्येन व्याप्यवत्तापरामर्शादपि तदवच्छे-देनानुमितेरभ्युपगमात्, एवं च सर्वत्रैव सत्प्रतिपक्षस्थले पक्षतावच्छेदकसामाना-धिकरण्येनैव साध्यतदभावयोरनुमितिः, न तु पक्षतावच्छेदकावच्छेदेन, पक्षता-वच्छेदकसामानाधिकरण्येन साध्यतदभावानुमितेरेव कार्यसहवर्त्तितया तत्प्रतिबन्ध-कत्वात् । न्यायनये च ग्राह्याभावव्याप्यवत्तानिश्चयस्यानुमितौ प्रतिबन्धकतया पक्षतावच्छेदकावच्छेदेन साध्यतदभावव्याप्यवत्तापरामर्श स्तत्रानुमित्यनभ्युपगमादेव न न्यायमताविशेषः । न च तथापि यत्र पक्षतावच्छेदकसामानाधिकरण्येन साध्य-स्यतदभावस्य वा सिद्धिः, पक्षतावच्छेदकावच्छेदेन साध्यतदभावव्याप्यवत्तापरामर्शः तत्र साध्यतदभावयोर्नानुमितिसंभवः, ग्राह्याभावनिश्चयस्य कार्यसहभावेन प्रतिबन्ध-कताव्याघातापत्त्या पक्षतावच्छेदकावच्छेदेनानुमित्यसंभवात्, तत्रानुमित्यभ्युपगमे च यस्याऽसिद्धिः तस्य पक्षतावच्छेदकावच्छेदेनानुमित्यात्मकस्य तत्र दुर्वारत्वात्, ग्राह्याभावव्याप्यवत्तानिश्चयस्य त्वयानुमितौ प्रतिबकत्वानभ्युपगमादिति वाच्यम् । पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति ग्राह्याभावव्याप्यवत्तानिश्चयमात्रस्य प्रतिबन्धकत्वानभ्युपगमेपि पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदका-वच्छेदेन ग्राह्याभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकताया मयाप्यभ्युपगमात्, यस्या-ऽसिद्धिस्तस्य पक्षतावच्छेदकसामानाधिकरण्येनानुमित्युत्पत्तौ बाधकाभावेपि तन्निश्चयस्यैव कार्यसहभावेन यस्य सिद्धिस्तस्य पक्षतावच्छेदकावच्छेदेनानुमित्युत्पत्तौ प्रतिबन्धकताया मयातदनभ्युपगमेपि चाऽऽपादनाऽसंभवाच्च । अथ तथापि पक्षता-वच्छेदकावच्छेदेन तत्सामानाधिकरण्येन चानुमितिं प्रति तादृशतादृशपरामर्श एव हेतुरिति नियम स्तदा का गतिरिति चेत्—तथापि एकधर्मितावच्छेदककोभयप्रकारक-ज्ञानस्यैव प्रतिबन्धकतावच्छेदकीभूतग्राह्याभावनिश्चयस्व "संशयान्यत्वरूप" घटक-भेदप्रतियोगितया यत्र पक्षतावच्छेदकावच्छेदेन साध्यतदभावव्याप्यवत्तापरामर्शः तत्र पक्षे साध्यतदभावानुमितेरपि ग्राह्याभावानिश्चयत्वेन कार्यसहवर्तितयाप्रतिबन्ध-कत्वासंभवात्, संशयपदवाच्यतायां सन्देह्मीत्यनुव्यवसायविषयतायां च प्रत्यक्षत्वस्य तावेपि ग्राह्याभावनिश्चयत्वघटकभेदप्रतियोगिकोटौ प्रत्यक्षत्वनिवेशे गौरवात्त तादृशानु-मितौ ग्राह्याभावाऽनिश्चयत्वस्येष्टत्वात् । पक्षतावच्छेदकसामानानाधिकरण्येन साध्य-तदभावव्याप्यवत्तापरामर्शजन्यायाः पक्षतावच्छेदकसामानाधिकरण्येन साध्यतदभावा-

अत्र केचित्। यथा घटाभावव्याप्यवत्ताज्ञानेपि घटचक्षुः संयोगे सति

वन्ह्यभाववान्" इस अनुमिति का प्रतिबन्धक होता है—ऐसे ही "वन्ह्यभावव्याप्यपाषाणमयत्ववान् पर्वतः" इस ज्ञान को भी वन्हि के अभावव्याप्यवत्ता ज्ञान होने के नाते "पर्वतो वन्हिमान्" इस अनुमिति के प्रति प्रतिबन्धकता है ]। रत्नकोशकार के यहाँ सत्प्रतिपक्ष निश्चय को अनुमिति

---

नुमितेर्यथोक्त ग्राह्याभावनिश्चयत्वेऽपि क्षतिविरहात्, विशेष्यतावच्छेदकसामानाधिकरण्येन ग्राह्याभावनिश्चयस्य विशेष्यतावच्छेदकसामानाधिकरण्येन विशिष्टबुद्धावप्रतिप्रतिबन्धकत्वात्। एवं संशयत्वं यदि प्रागुक्तविशेष्यताविशेषः तदापिनानुपपत्तिः, तादृशविशेष्यिताविशेषस्य पक्षतावच्छेदकावच्छिन्न सत्प्रतिपक्षद्वयस्थलीयपक्षतावच्छेदकावच्छिन्नसाध्यतदभावानुमितावप्यभ्युपगमात्, तस्य प्रत्यक्षत्वव्याप्यत्वे मानाभावात्, अत एव विप्रतिपत्तिवाक्यजन्यतत्तदभावोभयप्रकारकशाब्दबोधेपि तादृशी विशेष्यिता। न चैवं सन्देह्मीत्यनुव्यवसायापत्तिः। तादृशविशेष्यताशालिप्रत्यक्षस्यैव तथानुव्यवसायनियामकत्वात्। न चैवमनुमिरत्यादौ तत्सत्वे किं मानमिति वाच्यम्। ग्राह्याभावव्याप्यवत्तानिश्चयस्यानुमितावप्रतिबन्धकतया सामग्रीसत्वेन सत्प्रतिपक्षस्थले साध्यतदभावानुमितेर्दुर्वारत्वात्। अन्यायत्याऽनुमितावपि तदभ्युपगमात्।

अथ तथापि अन्यतरकोट्यंशे विरोधसंसर्गकैकधर्मितावच्छेदककतत्तदभावोभयकोटिकज्ञानमेव संशयः, तदन्यग्राह्याभावग्रह एव प्रतिबन्धकः इति मते सत्प्रतिपक्षस्थले सर्वत्र न साध्यतदभावयोरनुमितिसंभवः, यत्र पक्षतावच्छेदकावच्छेदेन केवल संयोगस्वरूपसंबन्धघटितसाध्यतदभावव्याप्तिविशिष्टवत्तापरामर्शरूपसत्प्रतिपक्षस्तत्रैव साध्यतदभावयोरनुमित्यसंभवात्, तत्र हि न पक्षतावच्छेदकसामानाधिकरण्येन साध्यतदभावयोरनुमितिः, पक्षतावच्छेदकसामानाधिकरण्येन परामर्शविरहात्, नापि पक्षतावच्छेदकावच्छेदेन साध्यतदभावयोः संशयरूपानुमितिः, विरोधिव्याप्तिज्ञानविरहात्, नापि पक्षतावच्छेदकावच्छेदेन निश्चयरूपैव साध्यतदभावयोरनुमितिः, ग्राह्याभावनिश्चयस्य कार्यसद्भावेन विशिष्टबुद्धौ प्रतिबन्धकत्वव्याघातादिति चेन्न। तन्मतस्य निर्युक्तत्वेनानुपादेयत्वात्। यदि च तदेव मतं प्रामाणिकं, तदा मास्तु यत्र पक्षतावच्छेदकावच्छेदेन केवलस्वरूपसंयोगघटितसाध्यतदभावव्याप्तिविशिष्टवत्तापरामर्शरूपः सत्प्रतिपक्षस्तत्र साध्यतदभावयोरनुमितिः, विरोधाऽसंसर्गकग्राह्याभावव्याप्तिविशिष्टवत्तानिश्चयस्यानुमितावपि प्रतिबन्धकत्वात्, किंतु यत्र विरोधसंसर्गघटितसाध्यतदभावव्याप्तिविषयकपरामर्शस्तत्र संशयरूपा साध्यतदभावयोरनुमितिर्दुर्वारैव, विरोधसंसर्गकग्राह्याभावव्याप्तिविशिष्टवत्तानिश्चयस्यानुमितिप्रतिबन्धकत्वे मानाभावात्, व्याप्तिभेदेनैव ग्राह्याभावव्याप्तवत्तानिश्चयस्य प्रतिबध्यप्रतिबन्धकभावभेदादिति रत्नकोषकारमतं निरसितुं तन्मतं दर्शयति। अत्र केचिदित्यादिना। तद्वत्ताबुद्धौ तदभावव्याप्यवत्तानिश्चयस्यप्रतिबन्धकत्वे व्यभिचारमाह। यथेति।

घटवत्ताज्ञानं जायते, यथा च शंखे सत्यपि पीतत्वाभावशंखत्ववत्ताज्ञाने सति पित्तादिदोषे पीतः शंख इति धीः, एवं कोटिद्वयव्याप्यवत्तादर्शनेपि कोटिद्वयस्य प्रत्यक्षरूपः संशयोभवति, तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव, यत्र चैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्नसंशयः, फलबलेन चाधिकबल-समबलभावः कल्प्यते इत्याहुः।

के प्रति प्रतिबन्धकता नहीं है उनका यह सिद्धान्त है कि जैसे भूतल में घटाभावव्याप्यवत्ता का ( घटाभावव्याप्यवद्भूतलम् ) इत्याकारक ज्ञान होने पर भी यदि घट के साथ चक्षुः संयोग हो गया तो वहाँ भूतल में "घटवद्भूतलम्" इत्याकारक घटवत्ता ज्ञान होता है। एवं शंख में पीतत्वाभावव्याप्य जो शंखत्व तद्वत्ता ज्ञान होने पर भी अर्थात् ( पीतत्वभावव्याप्यशंखत्व वाला शंख है ) ऐसा वास्तविक ज्ञान होने पर भी-यदि पित्त दोष से दूषित चक्षुः हो जावे तो उसी व्यक्ति को 'पीतः शंखः' यह धी ( ज्ञान ) होता है-एवं अन्धकारस्थित पुरुष को "पुरुषत्व-पुरुषत्वाभाव-उभयव्याप्यवत्ता ज्ञान होने पर भी-अर्थात् पुरुषत्वव्याप्यकर-चरणादिमानयम्-पुरुषत्वाभावव्याप्यशाखादिमानयन्-इत्याकारक जो पुरुषत्व-पुरुषत्वाभाव रूप कोटिद्वय-तद्व्याप्यवत्ता दर्शन होने पर भी पुरुषत्व-पुरुषत्वाभावरूप कोटिद्वय का प्रत्यक्षात्मक संशय ही होता है कि "अयं पुरुषोनवा" अर्थात् अयं पुरुषत्ववान्-पुरुषत्वाभाववान् वा, ऐसे ही विरुद्ध कोटिद्वयव्याप्यवत्ताज्ञानरूप सत्प्रतिपक्ष निश्चय होने पर भी संशयाकार अनुमिति होती है यह रत्नकोषकार का सिद्धान्त है-अर्थात् सत्प्रतिपक्ष निश्चय संशयानुमिति में कारण ही है-प्रतिबन्धक नहीं है। जिस स्थल में एककोटिव्याप्यवत्ता ज्ञान है-वहाँ वह ज्ञान अधिक बल होने से द्वितीय कोटिमान का प्रतिबन्धक हो जावेगा-अतः संशय नहीं होता है-अधिक-सम-बल-भाव की कल्पना फल-बल से की जाती है-ऐसा रत्नकोशकार

---

इतिधीरिति। तथा च स्थलद्वये व्यभिचारेण तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वे मानभाव इति भावः। ननूक्तस्थलद्वयानुरोधेन लौकिकसन्निकर्षाजन्यत्वं दोषविशेषाजन्यत्वं च प्रतिबध्यतावच्छेदककोटौ निवेशनीयम्, अतो न व्यभिचार इत्यतो दोषान्तरमाह। एवमिति। कोटिद्वयव्याप्यदर्शनेपीति। स्थाणुत्वव्याप्यशाखादिमानयम्, पुरुषत्वव्याप्यकरादिमानयमितिनिश्चयेपीत्यर्थः। कोटिद्वयस्य। स्थाणुत्वपुरुषत्वयोः। संशयोभवतीति। अयं स्थाणुर्वापुरुषोवेति संशयोभवतीत्यर्थः। सत्प्रतिपक्षस्थले इति। साध्यतदभावव्याप्यवत्तापरामर्शकाले इत्यर्थः। संशयरूपानुमितिर्भवत्येवेति। अयं साध्यवान्नवेति संशयाकारानुमितिर्भवत्येवेत्येवेत्यर्थः। अनुमितिं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वे मानाभावात्। तत्तत्परामर्शस्य तत्तद्विधेयकानुमितित्वमेव कार्यतावच्छेदकम्, न तु निश्चयत्वमपि तद्घटकम्। परन्तु एकैकपरामर्शसत्वे कोट्यन्तरभासकसामग्र्यभावान्निश्चयात्मिका अनुमिति-

अत्र केचित्। यथा घटाभावव्याप्यवत्ताज्ञानेपि घटचक्षुः संयोगे सति

वन्ह्यभाववान्" इस अनुमिति का प्रतिबन्धक होता है—ऐसे ही "वन्ह्यभावव्याप्यपाषाणमयत्ववान् पर्वतः" इस ज्ञान को भी वन्हि के अभावव्याप्यवत्ता ज्ञान होने के नाते "पर्वतो वन्हिमान्" इस अनुमिति के प्रति प्रतिबन्धकता है]। रत्नकोशकार के यहाँ सत्प्रतिपक्ष निश्चय को अनुमिति

---

नुमितेर्यथोक्त ग्राह्याभावनिश्चयत्वेऽपि क्षतिविरहात्, विशेष्यतावच्छेदकसामानाधिकरण्येन ग्राह्याभावनिश्चयस्य विशेष्यतावच्छेदकसामानाधिकरण्येन विशिष्टबुद्धावप्रतिप्रतिबन्धकत्वात्। एवं संशयत्वं यदि प्रागुक्तविशेष्यताविशेषः तदापिनानुपपत्तिः, तादृशविशेष्यताविशेषस्य पक्षतावच्छेदकावच्छिन्न सत्प्रतिपक्षद्वयस्थलीयपक्षतावच्छेदकावच्छिन्नसाध्यतदभावानुमितावभ्युपगमात्, तस्य प्रत्यक्षत्वव्याप्यत्वे मानाभावात्, अत एव विप्रतिपत्तिवाक्यजन्यतत्तदभावोभयप्रकारकशाब्दबोधेपि तादृशी विशेष्यिता। न चैवं सन्देह्मीत्यनुव्यवसायापत्तिः। तादृशविशेष्यताशालिप्रत्यक्षस्यैव तथानुव्यवसायनियामकत्वात्। न चैवमनुमित्यादौ तत्सत्वे किं मानमिति वाच्यम्। ग्राह्याभावव्याप्यवत्तानिश्चयस्यानुमितावप्रतिबन्धकतया सामग्रीसत्वेन सत्प्रतिपक्षस्थले साध्यतदभावानुमितेर्दुर्वारत्वात्। अनायत्याऽनुमितावपि तदभ्युपगमात्।

अथ तथापि अन्यतरकोट्यंशे विरोधसंसर्गकैकधर्मितावच्छेदकतत्तदभावोभयकोटिकज्ञानमेव संशयः, तदन्यग्राह्याभावग्रह एव प्रतिबन्धकः इति मते सत्प्रतिपक्षस्थले सर्वत्र न साध्यतदभावयोरनुमितिसंभवः, यत्र पक्षतावच्छेदकावच्छेदेन केवल संयोगस्वरूपसंबन्धघटितसाध्यतदभावव्याप्तिविशिष्टवत्तापरामर्शरूपसत्प्रतिपक्षस्तत्रैव साध्यतदभावयोरनुमित्यसंभवात्, तत्र हि न पक्षतावच्छेदकसामानाधिकरण्येन साध्यतदभावयोरनुमितिः, पक्षतावच्छेदकसामानाधिकरण्येन परामर्शविरहात्, नापि पक्षतावच्छेदकावच्छेदेन साध्यतदभावयोः संशयरूपानुमितिः, विरोधिव्याप्तिज्ञानविरहात्, नापि पक्षतावच्छेदकावच्छेदेन निश्चयरूपैव साध्यतदभावयोरनुमितिः, ग्राह्याभावनिश्चयस्य कार्यसहभावेन विशिष्टबुद्धौ प्रतिबन्धकत्वव्याघातादिति चेन्न। तन्मतस्य निर्युक्तत्वेनानुपादेयत्वात्। यदि च तदेव मतं प्रामाणिकं, तदा मास्तु यत्र पक्षतावच्छेदकावच्छेदेन केवलस्वरूपसयोगघटितसाध्यतदभावव्याप्तिविशिष्टवत्तापरामर्शरूपः सत्प्रतिपक्षस्तत्र साध्यतदभावयोरनुमितिः, विरोधाऽसंसर्गकग्राह्याभावव्याप्तिविशिष्टवत्तानिश्चयस्यानुमितावपि प्रतिबन्धकत्वात्, किंतु यत्र विरोधसंसर्गघटितसाध्यतदभावव्याप्तिविषयकपरामर्शस्तत्र संशयरूपा साध्यतदभावयोरनुमितिर्दुर्वारैव, विरोधसंसर्गकग्राह्याभावव्याप्तिविशिष्टवत्तानिश्चयस्यानुमितिप्रतिबन्धकत्वे मानाभावात्, व्याप्तिभेदेनैव ग्राह्याभावव्याप्तवत्तानिश्चयस्य प्रतिबध्यप्रतिबन्धकभावभेदादिति रत्नकोषकारमतं निरसितुं तन्मतं दर्शयति। अत्र केचिदित्यादिना। तद्वत्ताबुद्धौ तदभावव्याप्यवत्तानिश्चयस्यप्रतिबन्धकत्वे व्यभिचारमाह। यथेति।

घटवत्ताज्ञानं जायते, यथा च शंखे सत्यपि पीतत्वाभावशंखत्ववत्ताज्ञाने सति पित्तादिदोषे पीतः शंख इति धीः, एवं कोटिद्वयव्याप्यवत्तादर्शनेऽपि कोटिद्वयस्य प्रत्यक्षरूपः संशयोभवति, तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव, यत्र चैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्नसंशयः, फलबलेन चाधिकबल-समबलभावः कल्प्यते इत्याहुः ।

के प्रति प्रतिबन्धकता नहीं है उनका यह सिद्धान्त है कि जैसे भूतल में घटाभावव्याप्यवत्ता का ( घटाभावव्याप्यवद्भूतलम् ) इत्याकारक ज्ञान होने पर भी यदि घट के साथ चक्षुः संयोग हो गया तो वहाँ भूतल में "घटवद्भूतलम्" इत्याकारक घटवत्ता ज्ञान होता है । एवं शंख में पीतत्वाभावव्याप्य जो शंखत्व तद्वत्ता ज्ञान होने पर भी अर्थात् ( पीतत्वभावव्याप्यशंखत्व वाला शंख है ) ऐसा वास्तविक ज्ञान होने पर भी—यदि पित्त दोष से दूषित चक्षुः हो जावे तो उसी व्यक्ति को 'पीतः शंखः' यह धी ( ज्ञान ) होता है—एवं अन्धकारस्थित पुरुष को "पुरुषत्व-पुरुषत्वाभाव-उभयव्याप्यवत्ता ज्ञान होने पर भी—अर्थात् पुरुषत्वव्याप्यकरचरणादिमानयम्—पुरुषत्वाभावव्याप्यशाखादिमानयन्—इत्याकारक जो पुरुषत्व-पुरुषत्वाभाव रूप कोटिद्वय-तद्व्याप्यवत्ता दर्शन होने पर भी पुरुषत्व—पुरुषत्वाभावरूप कोटिद्वय का प्रत्यक्षात्मक संशय ही होता है कि "अयं पुरुषोनवा" अर्थात् अयं पुरुषत्ववान्—पुरुषत्वाभाववान् वा, ऐसे ही विरुद्ध कोटिद्वयव्याप्यवत्ताज्ञानरूप सत्प्रतिपक्ष निश्चय होने पर भी संशयाकार अनुमिति होती है यह रत्नकोषकार का सिद्धान्त है—अर्थात् सत्प्रतिपक्ष निश्चय संशयानुमिति में कारण ही है—प्रतिबन्धक नहीं है । जिस स्थल में एककोटिव्याप्यवत्ता ज्ञान है—वहाँ वह ज्ञान अधिक बल होने से द्वितीय कोटिभान का प्रतिबन्धक हो जावेगा—अतः संशय नहीं होता है—अधिक—सम-बल-भाव की कल्पना फल-बल से की जाती है—ऐसा रत्नकोशकार

---

इतिधीरिति । तथा च स्थलद्वये व्यभिचारेण तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वे मानभाव इति भावः । ननूक्तस्थलद्वयानुरोधेन लौकिकसन्निकर्षाजन्यत्वं दोषविशेषाजन्यत्वं च प्रतिबध्यतावच्छेदककोटौ निवेशनीयम्, अतो न व्यभिचार इत्यतो दोषान्तरमाह। **एवमिति । कोटिद्वयव्याप्यदर्शनेपीति** । स्थाणुत्वव्याप्यशाखादिमानयम्, पुरुषत्वव्याप्यकरादिमानयमितिनिश्चयेपीत्यर्थः। **कोटिद्वयस्य** । स्थाणुत्वपुरुषत्वयोः। **संशयोभवतीति** । अयं स्थाणुर्वापुरुषोवेति संशयोभवतीत्यर्थः । **सत्प्रतिपक्षस्थले** इति । साध्यतदभावव्याप्यवत्तापरामर्शकाले इत्यर्थः। **संशयरूपानुमितिर्भवत्येवेति** । अयं साध्यवान्नवेति संशयाकारानुमितिर्भवत्येवेत्येवेत्यर्थः । अनुमितिं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वे मानाभावात्। तत्तत्परामर्शस्य तत्तद्विधेयकानुमितित्वमेव कार्यतावच्छेदकम्, न तु निश्चयत्वमपि तद्घटकम्। परन्तु एकैकपरामर्शसत्वे कोट्यन्तरभासकसामग्र्यभावान्निश्चयात्मिका अनुमिति-

तत्र । तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशब्दबोधादेरनुदयात् लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य प्रतिबन्धकता लाघवात्, न तु उपनीतभानविशेषे शाब्दबोधे च पृथक् प्रतिबन्धकता गौरवात् । तथा च प्रतिबन्धकसत्त्वात्कथमनुमितिः, न हि लौकिकसन्निकर्ष-

कहते हैं—परन्तु यह उनका कथन ठीक नहीं है—क्योंकि साध्याभावव्याप्यवत्ता निश्चय होने पर साध्यप्रकारक उपनीतभान विशेष-अथवा तत्प्रकार शब्दबोध आदि किसी भी ज्ञान का उदय नहीं होता है—अतः साध्यप्रकारक उपनीतभानविशेष के प्रति साध्याभावव्याप्यवत्तानिश्चय को पृथक् प्रतिबन्धक मानना—और तादृश शब्दबोध में तादृशाभावव्याप्यवत्तानिश्चय की पृथक् प्रतिबन्धकता की कल्पना करने में गौरव होगा—इसलिये अनुगतरूप से लाघवात् लौकिक सन्निकर्षाजन्य-दोषविशेषाजन्यज्ञानमात्र में तदभावव्याप्यवत्ता निश्चय को प्रतिबन्धकता कहना ही उचित होगा—तथा च (साध्याभावव्याप्यवत्ता निश्चयरूप विरोधी परामर्शरूप) प्रतिबन्धक के होने से कैसे (पर्वत में वह्निमत्ताज्ञानरूप) अनुमिति होगी।

प्रश्न—आप यदि यह कहें कि ("तदभावव्याप्यवत्ता"रूप विरोधी निश्चय के रहने पर भी) लौकिक सन्निकर्षस्थल में प्रत्यक्ष जैसे होता है (अतः उसके लिये प्रतिबध्यकोटि में "लौकिक सन्निकर्षाजन्यत्व" का निवेश करके तदभावव्याप्यवत्ता निश्चयरूप विरोधी निश्चय में प्रतिबन्धकता की उपपत्ति की है) ऐसे ही सत्प्रतिपक्षस्थल में प्रतिबध्यकोटि में "अनुमिति-भिन्नत्व" का निवेश करके सत्प्रतिपक्ष निश्चय में प्रतिबन्धकता की उपपत्ति कर दी जाय।

---

भवति, उभयपरामर्शसत्त्वे च कारणबलादुभयकोट्योर्विरोधितया भाने अर्थात्संशयो भवतीति भावः। रत्नकोषकृतायमाशयः। बाधादिबुद्धेर्विरोधिविषयकत्वमात्रं न प्रतिबन्धकत्वे तन्त्रम्, किन्तु निश्चितप्रामाण्यकत्वे सति विरोधिविषयकत्वम्, अन्यथा संशयमात्रोच्छेदापत्तेः, सत्प्रतिपक्षस्थले चोभयव्याप्यवत्ताज्ञानयोरेव प्रामाण्याऽनिश्चयान्नानुमितिप्रतिरोध इति ध्येयम्। अथ संशयं प्रति तादृशनिश्चयस्याऽप्रतिबन्धकत्वे एककोटिव्याप्यवत्तानिश्चयेऽपि कथं न संशय इत्यत आह। यत्रचेति। ननु समानबलत्वं न्यूनाधिकबलत्वं वा सामग्र्याःकथमवधारणीयमत आह। फलबलेनेति। सामग्रीसंबलनस्थले एकस्याः सामग्र्याः फलानुत्पत्त्या न्यूनाधिकबलभावः उभयोः फलोत्पत्त्या समबलभावोऽवधारणीय इत्यर्थः। कल्प्यते इति। तथा च तत्रपीतत्वप्रकारकनिश्चयस्यैवोत्पत्त्या शुक्लत्वग्रहे पित्तादिदोषस्य प्रतिबन्धकत्वकल्पनेन पीतः शंखः इति प्रत्यक्षसामग्र्य अधिकबलत्वम्, दूरत्वदोषे सत्यपि कोटिद्वयव्याप्यवत्वज्ञानस्थले संशयस्यैवोदयात्तत्र "स्थाणुत्वपुरुषत्वभासकसामग्र्योः" समबलत्वं कल्प्यते इति भावः। तथा च यद्यद्व्यक्तिसत्त्वे विशिष्टबुद्धिर्न जायते तत्तद्व्यक्तेरेव विशिष्टबुद्धिप्रतिबन्धकत्वम्, एवं च कोट्यन्तरविशेषदर्शनमद्धितविशेषदर्शनव्यक्तीनां प्रतिबन्धकत्वाकल्पनात्संशयानुमितिनिष्पत्त्यूहैवेति तत्त्वम्। अगृहीता[illegible]कत्वे

स्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयाकारानुमितिः प्रामाणिकी, येनाऽनुमितिभिन्नत्वेनापि विशेषणीयम् । यत्र च कोटिद्वयव्याप्यवत्ताज्ञानं तत्रोभयत्राऽप्रामाण्यज्ञानात्संशयोनान्यथा, अगृहीताऽप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति ।

उत्तर—"नहिं लौकिकसन्निकर्षस्थले प्रत्यक्षमिव" अर्थात् विरोधी निश्चय रहने पर भी लौकिक सन्निकर्ष के होने पर प्रत्यक्ष जैसे अनुभव सिद्ध है–अतः ऐसे ही सत्प्रतिपक्षस्थल में संशयाकार अनुमिति प्रामाणिक नहीं है–जिससे 'अनुमिति भिन्नत्व' विशेषण ( प्रतिवध्यता ) में दिया जाय ।

प्रश्न—और जहाँ ( "पुरुषत्वव्याप्यकरादिमानयम्" "पुरुषत्वाभावव्याप्य शाखादिमानयम्" इत्याकारक ) पुरुषत्व–पुरुषत्वाभावरूप जो कोटिद्वयव्याप्यवत्ताज्ञान है वहाँ "अयं पुरुषो नवा" यह संशय कैसे होता है ।

उत्तर—वहाँ उभयत्र ( कोटिद्वय व्याप्यवत्ता ज्ञान में अप्रामाण्यज्ञान होने से ही संशय होता है–अन्यथा नहीं–अतः अप्रामाण्यज्ञान शून्य विरोधि ज्ञान ही प्रतिबन्धक होता है । यह रत्नकोशकारमत का निरास हुवा ।

---

सति विरोधिविषयकत्वमेव बाधादिबुद्धेः प्रतिबन्धकत्वे प्रयोजकं, न तु निश्चितप्रामाण्यकत्वसहितमित्याशयेन दूषयति । **तन्नेति** । लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यविशिष्टबुद्धित्वावच्छिन्नं प्रत्येव अनाहार्याऽप्रामाण्यज्ञानानास्कन्दिततदभावव्याप्यवत्तानिश्चयत्वेनाऽनुगतैकप्रतिबन्धकत्वकल्पनमुचितम्, तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वे ऽनन्तप्रतिवध्यप्रतिबन्धकभावकल्पनापत्तेः । तदेवाह । **तदभावव्याप्यवत्ताज्ञाने सतीति** । **तदुपनीतभानविशेषेति** । अलौकिक प्रत्यक्षेत्यर्थः । **ज्ञानमात्रे** । विशिष्टबुद्धिमात्रे । **तस्य** । तदभावव्याप्यवत्तानिश्चयस्य । **गौरवादिति** । प्रतिवध्यप्रतिबन्धकभावद्वयकल्पने गौरवादित्यर्थः । **तथा चेति** । अनुगतरूपेण प्रतिबन्धकत्वे चेत्यर्थः । **प्रतिबन्धकसत्वादिति** । सत्प्रतिपक्षस्थले तदभावव्याप्यवत्तानिश्चयरूपप्रतिबन्धकसत्वादित्यर्थः । **कथमनुमितिरिति** । अनुमितेरपि तत्प्रतिवध्यतावच्छेदकाक्रान्तत्वादितिभावः । ननु तदभावव्याप्यवत्तानिश्चयोत्तरं लौकिकसन्निकर्षजन्यविशिष्टबुद्धेः, दोषविशेषाधीनविशिष्टबुद्धेश्चानुभविकतया तदनुरोधेन प्रतिबध्यतावच्छेदककोटौ लौकिकसन्निकर्षाजन्यत्वं दोषविशेषाजन्यत्वं च यथा दीयते तथा संशयाकारानुमितेरपि आनुभविकतया तदनुरोधेनाऽनुमित्यन्यत्वमपि प्रतिबध्यतावच्छेदककोटौ निवेशनीयमत आह । **नहीति** । **प्रामाणिकी** । उभयमतसिद्धा । ननु तद्व्याप्यवत्तानिश्चयविरहविशिष्टतदभावव्याप्यवत्तानिश्चयस्य तद्वत्ताबुद्धौ प्रतिबन्धकत्वं वाच्यम्, तद्व्याप्यवत्तानिश्चयस्यानुत्तेजकत्वे कोटिद्वयव्याप्यवत्ता-

निश्चयकाले प्रत्यक्षात्मकस्यापि संशयस्योत्पादाऽसंभवात्, संशयानुभवापलापप्रसंगात्, एवं च सम्प्रतिपक्षसंवलनदशायां उत्तेजकसत्त्वेन संशयानुमितिर्दुर्वारैवेत्यत आह। **यत्रचेति। अप्रामाण्यज्ञानादिति।** तथाचाऽनयोरेकतरं बाध्यं विरुद्धार्थग्राहकत्वादिति रीत्या सामान्यत स्तत्राऽप्रामाण्यग्रहे विशिष्योभयत्रैवाऽप्रामाण्यसंशयेन ऽत्यत्तसंशयोभवतीति भावः। **अगृहीताऽप्रामाण्यकस्यैवेति।** एवकारेण निश्चित-प्रामाण्यकत्वस्यव्यवच्छेदः। तच्चाग्रे स्फुटीभविष्यति। अप्रामाण्यसंशयात् संशयरूपाऽनुमितिस्तु न संभवति, अगृहीताऽप्रामाण्यकपरामर्शरूपकारणविरहात्, कारणान्तरकल्पने मानाभावादिति ध्येयम्।

अथ ग्राह्याभावव्याप्यवत्तानिश्चयस्यानुमितिप्रतिबन्धकत्वनयेपि यत्र सामान्यतोऽभावस्वरूपेणाऽभावव्याप्यवत्वस्य द्रव्यत्वरूपेणद्रव्यव्याप्यवत्वस्य च पर्वते परामर्शः, अथ च वन्ह्यभावातिरिक्ताभावस्य वन्ह्यतिरिक्तद्रव्यस्य च पर्वते बाधनिश्चयः वन्ह्यभावत्ववन्हित्वाभ्यां लाघवज्ञानं वा, तत्र पर्वते वन्हितदभावोभयप्रकारकानुमितिर्दुर्वारैव, प्रतिबन्धकविरहात्, बाधादिज्ञानसहकारेण व्यापकतानवच्छेदकप्रकारेणाप्यनुमितेरभ्युपगमादिति चेन्न। तन्नये तादृशस्थले कदाचित्पर्वतोवन्ह्यभाववान् द्रव्यवांश्च, कदाचित्तु पर्वतोवन्हिमान् अभाववांश्चेत्येवानुमिति, न पुनरनुमितिसामग्र्यानुत्पत्तिः पर्वतोवन्हितदभाववानित्यनुमितेरुत्पत्तिर्वा। न च सामग्रीसत्वात्तादृशानुमित्यापत्तिरपि दुर्वारैवेति वाच्यम्। यदा पर्वतोवन्ह्यभाववांश्चेत्यनुमितिस्तदा तदनुमितेरेव वन्ह्यभावनिश्चयात्मकतया कार्यसहभावेन वन्ह्यनुमितौ प्रतिबन्धकत्वात् यदा च वन्हिमान् अभाववांश्चेत्यनुमितिः तदा तदनुमितेरेव वन्हिनिश्चयात्मकतया कार्यसहभावेन वन्ह्यभावानुमितौ प्रतिबन्धकत्वात्। तन्नये तदभावकोटिकज्ञानस्य ग्राह्याभावनिश्चयत्वघटकसंशयान्यत्वस्य प्रतियोगिकोटावनिवेशात, संशयत्वस्य विशेष्यताविशेषत्वपक्षेपि प्रत्यक्ष एव सत्वाभ्युपगमात्, अन्यत्र तत्सत्वे मानाभावात्। अथ तथापि ग्राह्याभावव्याप्यवत्तानिश्चयस्य प्रत्यक्षं प्रति प्रतिबन्धकतायामिच्छाया उत्तेजकत्वपक्षेऽनुमितिं प्रति ग्राह्याभावव्याप्यवत्तानिश्चयो न प्रतिबन्धक इति रत्नकोषकारमतमेव सम्यक्, तत्पक्षे तस्योपमितिस्मृतिप्रतिबन्धकतायांप्रत्यक्षान्यशाब्दान्यत्वतद्विशिष्टबुद्धित्वस्यैवप्रतिबध्यताबच्छेदकतया तदपेक्ष्य लाघवेनतद्विशिष्टोपमितित्वतद्विशिष्टस्मृतित्वयोरेव तत्प्रतिबध्यतावच्छेदकत्वौचित्यात्। न चैवं प्रतिबध्यप्रतिबन्धकभावद्वयापत्तिरिति वाच्यम्। तत्रापि प्रत्यक्षान्यत्व-शाब्दान्यत्व-तद्विशिष्टबुद्धित्वानां परस्परं विशेष्यविशेषणभावे विनिगमकाभावेन गुरुतरप्रतिबध्यप्रतिबन्धकभावत्रयापत्तेः दुर्वारत्वादिति चेन्न। प्रत्यक्षान्यत्व शाब्दान्यत्व विशिष्टबुद्धित्वानामेकत्र द्वयमिति रीत्याऽवच्छेदकतया विशेषणविशेष्यभावविरहात्। तत्पक्षे बाधनिश्चयप्रतिबध्यतावच्छेदकतया सिद्धस्य प्रत्यक्षशाब्दव्यावृत्तोपमितिअनुमितिस्मृतिसाधारणपरोक्षत्वजातिविशेषस्यैव ग्राह्याभावव्याप्यवत्तानिश्चयस्यापि प्रतिबध्यतावच्छेदकतया प्रवेशात्, तज्जातिविशेषस्यानुमितिव्यावृत्तत्वे बाधनिश्चयस्याप्यनुमितावप्रतिबन्धकत्वापत्तेः। अथ तथापि स्मृतिर्यदि न बाधव्याप्यादिबुद्धिप्रतिबध्या तदारत्नकोदकारमतमेव सम्यक्, केवलो-

असिद्धिस्तु आश्रयासिद्ध्याद्यन्यतमत्वम् । आश्रयासिद्धिस्तु पक्षे पक्षतावच्छेदकाभावः, यत्र काञ्चनमयः पर्वतोवन्हिमानिति साध्यते तत्र पर्वतोनकाञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमये पर्वते परामर्शप्रतिबन्धः फलम् । स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्याभावः, तत्र च ह्रदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावेज्ञाते पक्षे साध्यव्याप्यहेतुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः फलम् । साध्याऽप्रसिद्ध्यादयस्तु व्याप्यत्वा-

आश्रयासिद्धि–स्वरूपासिद्धि–व्याप्यत्वासिद्धि–एतदन्यतमत्व (एतदाश्रयासिद्धित्रयभिन्नभिन्नत्व इन्हीं में जायेगा) अतः यह अन्यतमत्व असिद्धि का निर्दुष्ट लक्षण हुआ। उनमें पक्ष में पक्षतावच्छेदक के अभाव को आश्रयासिद्धि कहते हैं—जैसे "काञ्चनमयःपर्वतो वन्हिमान्" यहाँ काँचनमयपर्वत में वन्हि को सिद्ध कर रहे हैं तो वहाँ पक्ष में (पर्वत में) पक्षतावच्छेदक (काञ्चनमयत्व) के अभाव रूप जो आश्रयासिद्धि–उस आश्रयासिद्धि का जो "पर्वतो न कांचनमयः" अर्थात् काञ्चनमयत्वाभाववान् पर्वतः–इत्याकारक ज्ञान–उस ज्ञान के विद्यमान होने पर कांचनमय पर्वत में (कांचनमय पर्वतोवन्हिमान् इस अनुमिति का जो कारण "वन्हिव्याप्यधूमवान्कांचनमयपर्वतः" इत्याकारक परामर्श उस परामर्श का प्रतिबन्धक हो जाता है अतः उस परामर्श का प्रतिबन्ध ही (आश्रयासिद्धिज्ञान का) फल है। और स्वरूपासिद्धि पक्ष में व्याप्यत्वेन अभिमत हेतु के अभाव को कहते हैं–अर्थात् हेत्वभाववत्पक्ष को स्वरूपासिद्धि कहते हैं।

जैसे "ह्रदो द्रव्यं धूमात्" यहाँ पक्ष (ह्रद) में व्याप्यत्वेन अभिमत हेतु (धूम) का अभाव रूप जो स्वरूपासिद्धि उस स्वरूपासिद्धि का जो "धूमाभाववान् ह्रदः" इत्याकारक ज्ञान–उस ज्ञान के होने पर पक्ष (ह्रद) में साध्य (द्रव्यत्व) व्याप्य हेतुमत्ता (धूमवत्ता) ज्ञान रूप जो "द्रव्यत्वव्याप्यधूमवान् ह्रदः" परामर्श–उस परामर्श का प्रतिबन्धक हो जाता है क्योंकि

---

पमितित्वस्यैव ग्राह्याभावव्याप्यवत्तानिश्चयप्रतिबध्यतावच्छेदकत्वात्, प्रत्यक्षस्थले इच्छायाउत्तेजकतया पृथक् प्रतिबध्यप्रतिबन्धकभावस्य तवाप्यावश्यकत्वात्, बाधबुद्धिप्रतिबध्यतावच्छेदकस्यानुमित्युपमित्युभयसाधारणपरोक्षत्वस्य समशरीरत्वेपि अनुमितौ सन्दिग्धव्यभिचारकत्वादिति चेन्न । तथापि सत्प्रतिपक्षस्थले साध्यतदभावयोरनुमित्युपगमे साध्यं तदभावं चानुमिनोमीत्यनुव्यवसायापत्तेः । तदानीं तादृशानुव्यवसायाभावस्य सर्वसिद्धत्वात्, अन्यथा लाघवात्प्रत्यक्षोपमित्योरपि बाधादिबुद्ध्यप्रतिबध्यस्यापत्तेरिति संक्षेपः ।

आश्रयासिद्ध्यादीत्यादिना स्वरूपासिद्धिव्याप्यत्वासिद्ध्योः परिग्रहः । तथाचाऽऽश्रयासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्ध्यन्यतमत्वमसिद्धेर्लक्षणम् । यद्रूपावच्छिन्नविषयिताव्यापिका पक्षतावच्छेदकप्रकारकपक्षविशेष्यकमहत्त्वव्यापकप्रतिबध्यतानिरूपित प्रतिबन्धकता तद्रूपवत्त्व **माश्रयासिद्धेर्लक्षणम्** । यद्रूपपदेन कांचनमयत्वाभाववत्पर्वतत्वादिकमादाय कांचनमयत्वाभाववत्पर्वतादौ लक्षणसमन्वयः । **परामर्शप्रति-**

सिद्धिमध्येऽन्तर्भूताः। साध्ये साध्यतावच्छेदकाभावः साध्याप्रसिद्धिः, एतद्ज्ञाने जाते काञ्चनमयवन्हिमानित्यादौ साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम्। एवं हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः, यथा काञ्चनमयधूमादित्यादौ, अत्र हेतुतावच्छेदकविशिष्टहेतुज्ञानाभावात् तत्कव्याप्तिज्ञानादेरभावः फलम्। एवं वन्हिमान् नील-

"धूमाभाववान् ह्रदः" यह स्वरूपासिद्धि निश्चय "द्रव्यत्वव्याप्य धूमवान् ह्रदः" इस परामर्श के एकदेश "धूमवान्ह्रदः" का प्रतिबन्धक होने के नाते संपूर्णपरामर्श का प्रतिबन्धक माना जाता है—अत इस स्वरूपासिद्धि निश्चय का भी परामर्शप्रतिबन्धक ही फल है। साध्याप्रसिद्धि-आदिपदग्राह्यसाधनाप्रसिद्धि भी व्याप्यत्वासिद्धि में अन्तर्भूत हैं। साध्य में साध्यतावच्छेदक के अभाव को साध्याप्रसिद्धि कहते हैं–जैसे "पर्वतः कांचनमयवन्हिमान्" यहाँ पर साध्य (वन्हि) में साध्यतावच्छेदक (कांचनमयत्व) का अभाव ज्ञात होने पर अर्थात् कांचनमयत्वाभाववान् वन्हि यह ज्ञान होने पर साध्यतावच्छेदक (कांचनमयत्व) विशिष्ट जो साध्य–तादृशसाध्यव्याप्यवत्ताज्ञानरूप जो (कांचनमयवन्हिव्याप्यधूमवान् पर्वत.) इत्याकारक परामर्श–उस परामर्श का प्रतिबन्धक हो जाता है। अतः साध्याप्रसिद्धि का परामर्शप्रतिबन्ध फल है। इसी प्रकार हेतु में हेतुतावच्छेदक के अभाव को साधनाप्रसिद्धि कहते हैं। जैसे "कांचनमयधूमात्" [ यहाँ पर पर्वत को पक्ष–वन्हि को साध्य जानना चाहिये–अर्थात् "पर्वतो वन्हिमान् कांचनमयधूमात्" ] यहाँ पर हेतुतावच्छेदक (कांचनमयत्व) विशिष्टहेतु (धूम) के (अप्रसिद्ध होने के नाते) ज्ञान न होने से उस कांचनमयधूम हेतु में साध्य (वन्हि) की व्याप्ति का निश्चय न हो सकेगा–अतः व्याप्तिज्ञान का अभाव साधनाप्रसिद्धि का फल है। बहुत से लोग गुरुधर्म को अवच्छेदक भी नहीं मानते हैं वे "पर्वतो वन्हिमान् नीलधूमात्" को भी व्याप्यत्वासिद्धि का उदाहरण बतलाते

---

बन्ध इति। अनुमितिप्रतिबन्ध इत्यपि बोध्यम्। एवं यद्रूपावच्छिन्नविषयिताव्यापिका पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्वं स्वरूपासिद्धेर्लक्षणम्। यद्रूपपदेन धूमाभाववद्ह्रदत्वादिकमादाय धूमाभाववद्ह्रदे लक्षणसमन्वयः। साध्याप्रसिद्ध्यादीनामाधिक्यं निराकरोति। साध्याप्रसिद्ध्यादयस्त्विति। तथा च यद्रूपावच्छिन्नविषयिताव्यापिका साध्यतावच्छेदकप्रकारकसाध्यविशेष्यकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्वं साध्याप्रसिद्धेर्लक्षणम्। यद्रूपपदेन कांचनमयत्वाभाववद्वन्हित्वादिकमादाय कांचनमयत्वाभाववद्वन्हौ लक्षणसमन्वयः। अनुमितिपरामर्शव्याप्तिज्ञानप्रतिबन्धःफलम्। एवं यद्रूपावच्छिन्नविषयिताव्यापिका हेतुतावच्छेदकप्रकारकहेतुविशेष्यकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्वं साधनाप्रसिद्धिलक्षणम्। यद्रूपपदेन कांचमयत्वाभाववद्धूमत्वमादायकांच-

धूमादित्यादौ गुरुतया नीलधूमत्वस्य हेतुतावच्छेदकत्वमपि व्याप्यत्वासिद्धि रित्यपि वदन्ति।

बाधस्तु पक्षे साध्याभावादिः, एतस्यानुमितिप्रतिबन्धः फलम्। तद्धर्मिकतदभावनिश्चयो लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतद्-ज्ञानमात्रे विरोधीति।

हैं। अतः यहाँ पर नीलधूमत्व धूमत्व की अपेक्षा गुरु होने से हेतुतावच्छेदक नहीं हो सकता है—इसलिये नीलधूम में साध्य की व्याप्ति असिद्ध होने के नाते नील धूम में व्याप्यत्वासिद्धि दोष हो गया। (परन्तु यह मत ठीक नहीं है—क्योंकि उपाधि विशिष्ट हेतु को ही व्याप्यत्वासिद्ध माना गया है)।

पक्ष में साध्य के अभाव को "बाध" कहते हैं। जैसे "अनुष्णत्वाभाववान् वन्हिः" यह बाध निश्चय "वन्हिरनुष्णो द्रव्यत्वात्" इस अनुमिति का प्रतिबन्धक होता है—क्योंकि वन्हि अनुष्ण (शीत) नहीं होती है—अपितु उष्ण होती है यह अनुष्णत्वरूप साध्य का बाधनिश्चय प्रत्यक्ष प्रमाण से होता है)। अतः बाधनिश्चय का फल भी अनुमितिप्रतिबन्ध ही है—क्योंकि तद्धर्मिक तदभाववत्ता निश्चय-प्रकृत में वन्हिधर्मी में जो अनुष्णत्वाभाव रूप बाध-उसका निश्चय-अर्थात् "अनुष्णत्वाभाववान् वन्हिः" इत्याकारक बाधनिश्चय लौकिकसन्निकर्षाजन्य - दोषविशेषाजन्य जो तद्धर्मिक (वन्हिधर्मिक) तज्ज्ञानमात्र

---

नमयत्वाभाववद्धूमेलक्षणसमन्वयः। व्याप्तिज्ञानादेरित्यादिना परामर्शपरिग्रहः। **व्याप्यत्वासिद्धिः** व्याप्तिविरहो, व्यर्थ विशेषणादौ, तच्चाग्रे स्फुटीभविष्यति। अत्राऽधिकोक्तिर्निग्रहस्थानम्, धूमादित्युक्त्यैव सामंजस्ये नीलपदप्रयोगस्याधिकत्वादिति ध्येयम्। साध्याभावादिरित्यादिना साध्यवृत्तिपक्षनिष्ठाभावप्रतियोगित्वादेः परिग्रहः। पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वव्यापिका विशिष्टपक्ष-विशिष्टसाध्यग्रहत्वाव्यापिका या प्रतिबध्यतातनिरूपितप्रतिबन्धकतावच्छेदिका सती विरुक्तपक्षसाध्यवैशिष्ट्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नजन्यतानिरूपितजनकतानवच्छेदिका च यद्रूपावच्छिन्नविषयिता तद्रूपवत्वं **बाधलक्षणम्**। यद्रूपपदेन वन्ह्यभाववद्ह्रदत्वादिकमादाय वन्ह्यभाववद्ह्रदे लक्षणसमन्वयो ह्रदोवन्हिमान्धूमादित्यादौ। **तद्धर्मिकतदभावनिश्चय इति**। अनाहार्योऽप्रामाण्यज्ञानानास्कन्दिततद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावप्रकारताशालिनिश्चय इत्यर्थः। इदमुपलक्षणम्। तद्धर्मिकतदभावव्याप्यवत्तानिश्चयोपिबोध्यः। बाधनिश्चयानन्तरं लौकिकसन्निकर्षजन्यस्य तद्वत्ताप्रत्यक्षस्योत्पत्त्या लौकिकसन्निकर्षाजन्येति। शंखोनपीत इति निश्चयानन्तरं शंखादौ पीतत्वादिप्रकारकस्य दोषविशेषाधीन "ज्ञानलक्षणासन्निकर्षजन्य" चाक्षुषादेरुत्पत्त्या दोषविशेषाजन्येति। तथा च लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतद्वत्ताबुद्धिमात्रं

सिद्धिमध्येऽन्तर्भूताः। साध्ये साध्यतावच्छेदकाभावः साध्याप्रसिद्धिः, एतद्ज्ञाने जाते काञ्चनमयवन्हिमानित्यादौ साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम्। एवं हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः, यथा काञ्चनमयधूमादित्यादौ, अत्र हेतुतावच्छेदकविशिष्टहेतुज्ञानाभावात् तद्व्याप्तिज्ञानादेरभावः फलम्। एवं वन्हिमान् नील-

"धूमाभाववान् हृदः" यह स्वरूपासिद्धि निश्चय "द्रव्यत्वव्याप्य धूमवान् हृद" इस परामर्श के एकदेश "धूमवान्हृदः" का प्रतिबन्धक होने के नाते संपूर्णपरामर्श का प्रतिबन्धक माना जाता है—अत इस स्वरूपासिद्धि निश्चय का भी परामर्शप्रतिबन्धक ही फल है। साध्याप्रसिद्धि-आदिपदग्राह्यसाधनाप्रसिद्धि भी व्याप्यत्वासिद्धि में अन्तर्भूत हैं। साध्य में साध्यतावच्छेदक के अभाव को साध्याप्रसिद्धि कहते हैं—जैसे "पर्वतः काचनमयवन्हिमान्" यहाँ पर साध्य (वन्हि) में साध्यतावच्छेदक (कांचनमयत्व) का अभाव ज्ञात होने पर अर्थात् कांचनमयत्वाभाववान् वन्हि यह ज्ञान होने पर साध्यतावच्छेदक (कांचनमयत्व) विशिष्ट जो साध्य—तादृशसाध्यव्याप्यवत्ता-ज्ञानरूप जो (कांचनमयवन्हिव्याप्यधूमवान् पर्वत.) इत्याकारक परामर्श—उस परामर्श का प्रतिबन्धक हो जाता है। अत साध्याप्रसिद्धि का परामर्शप्रतिबन्ध फल है। इसी प्रकार हेतु में हेतुतावच्छेदक के अभाव को साधनाप्रसिद्धि कहते हैं। जैसे "कांचनमयधूमात्" [ यहाँ पर पर्वत को पक्ष—वन्हि को साध्य जानना चाहिये—अर्थात् "पर्वतो वन्हिमान् कांचनमयधूमात्" ] यहाँ पर हेतुतावच्छेदक (कांचनमयत्व) विशिष्टहेतु (धूम) के (अप्रसिद्ध होने के नाते) ज्ञान न होने से उस कांचनमयधूम हेतु में साध्य (वन्हि) की व्याप्ति का निश्चय न हो सकेगा—अत व्याप्तिज्ञान का अभाव साधनाप्रसिद्धि का फल है। बहुत से लोग गुरुधर्म को अवच्छेदक को नहीं मानते हैं वे "पर्वतो वन्हिमान् नीलधूमात्" को भी व्याप्यत्वासिद्धि का उदाहरण बतलाते

---

बन्ध इति। अनुमितिप्रतिबन्ध इत्यपि बोध्यम्। एवं यद्रूपावच्छिन्नविषयिता-व्यापिका पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारता-शालिप्रहरत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्वं स्वरूपासिद्धेर्लक्ष-णम्। यद्रूपपदेव धूमाभाववद्ध्रदत्वादिकमादाय धूमाभाववद्ध्रदे लक्षणसमन्वयः। साध्याप्रसिद्ध्यादीनामाधिक्यं निराकरोति। साध्याप्रसिद्ध्यादयस्त्विति। तथा च यद्रूपावच्छिन्नविषयिताव्यापिका साध्यतावच्छेदकप्रकारकसाध्यविशेष्यकमहत्वव्याप-कप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्वं साध्याप्रसिद्धेर्लक्षणम्। यद्रूपपदेन कांचनमयत्वाभाववद्वन्हित्वादिकमादाय कांचनमयत्वाभाववद्वन्हौ लक्षणसमन्वयः। [illegible] विषयिताव्यापिका हेतु-

[illegible] त्वा तद्रू

[illegible] दायकांच-

धूमादित्यादौ गुरुतया नीलधूमत्वस्य हेतुतावच्छेदकत्वमपि व्याप्यत्वा सिद्धि रित्यपि वदन्ति ।

बाधस्तु पक्षे साध्याभावादिः, एतस्यानुमितिप्रतिबन्धः फलम् । तद्धर्मिकतदभावनिश्चयो लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतद्-ज्ञानमात्रे विरोधीति ।

हैं । अतः यहाँ पर नीलधूमत्व धूमत्व की अपेक्षा गुरु होने से हेतुतावच्छेदक नहीं हो सकता है- इसलिये नीलधूम में साध्य की व्याप्ति असिद्ध होने के नाते नील धूम में व्याप्यत्वासिद्धि दोष हो गया । ( परन्तु यह मत ठीक नहीं है-क्योंकि उपाधि विशिष्ट हेतु को ही व्याप्यत्वासिद्ध माना गया है ) ।

पक्ष में साध्य के अभाव को "बाध" कहते हैं । जैसे "अनुष्णत्वाभाववान् वन्हिः" यह बाध निश्चय "वन्हिरनुष्णो द्रव्यत्वात्" इस अनुमिति का प्रतिबन्धक होता है-क्योंकि वन्हि अनुष्ण ( शीत ) नहीं होती है—अपितु उष्ण होती है यह अनुष्णत्वरूप साध्य का बाधनिश्चय प्रत्यक्ष प्रमाण से होता है ) । अतः बाधनिश्चय का फल भी अनुमितिप्रतिबन्ध ही है—क्योंकि तद्धर्मिक तदभाववत्ता निश्चय-प्रकृत में वन्हिधर्मी में जो अनुष्णत्वाभाव रूप बाध-उसका निश्चय-अर्थात् "अनुष्णत्वाभाववान् वन्हिः" इत्याकारक बाधनिश्चय लौकिकसन्निकर्षाजन्य - दोषविशेषाजन्य जो तद्धर्मिक ( वन्हिधर्मिक ) तज्ज्ञानमात्र

---

नमयत्वाभाववद्धूमेलक्षणसमन्वयः । व्याप्तिज्ञानादेरित्यादिना परामर्शपरिग्रहः । **व्याप्यत्वासिद्धिः** व्याप्तिविरहो, व्यर्थ विशेषणादौ, तच्चाग्रे स्फुटीभविष्यति । अत्राऽधिकोक्तिर्निग्रहस्थानम्, धूमादित्युक्त्यैव सामंजस्ये नीलपदप्रयोगस्याधिकत्वा-दिति ध्येयम् । साध्याभावादिरित्यादिना साध्यवृत्तिपक्षनिष्ठाभावप्रतियोगित्वादेः परिग्रहः । पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वव्यापिका विशिष्टपक्ष-विशिष्टसाध्यग्रहत्वा-व्यापिका या प्रतिबध्यतातन्निरूपितप्रतिबन्धकतावच्छेदिका सती विरुक्तपक्षसाध्यवैशि-ष्ट्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नजन्यता-निरूपितजनकतानवच्छेदिका च यद्रूपावच्छिन्नविषयिता तद्रूपवत्वं **बाधलक्षणम्** । यद्रूपपदेन वन्ह्यभाववद्ध्रदत्वादिकमादाय वन्ह्यभाववद्ध्रदे लक्षणसमन्वयो ह्रदोवन्हि-मान्धूमादित्यादौ । **तद्धर्मिकतदभावनिश्चय इति** । अनाहार्योऽप्रामाण्यज्ञानाना-स्कन्दिततद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियो-गिताकाभावप्रकारताशालिनिश्चय इत्यर्थः । इदमुपलक्षणम् । तद्धर्मिकतदभावव्याप्यव त्तानिश्चयोपिबोध्यः । बाधनिश्चयानन्तरं लौकिकसन्निकर्षजन्यस्य तद्वत्ताप्रत्यक्षस्यो त्पत्त्या लौकिकसन्निकर्षाजन्येति । शंखोनपीत इति निश्चयानन्तरं शंखादौ पीतत्वा दिप्रकारकस्य दोषविशेषाधीन "ज्ञानलक्षणासन्निकर्षजन्य" चाक्षुषादेरुत्पत्त्या दोषविशे षाजन्येति । तथा च लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतद्वत्ताबुद्धिमात्र

प्रति अनाहार्याऽप्रामाण्यज्ञानानास्कन्दिततद्धर्मिकतदभावनिश्चयः प्रतिबन्धक इति भावः। न च लौकिकसन्निकर्षाजन्यत्वनिवेशे बाधनिश्चयोत्तरं लौकिकसन्निकर्षजन्यसंशयापत्तिः। समानधर्मितावच्छेदकैकतरकोटिकलौकिकप्रत्यक्षसामग्र्याः विरोधिकोटिमानप्रतिबन्धकत्वात्, अन्यथा भूतले घटवदिति निश्चयकालेपि संशयापत्तेः। नचैवं लौकिकसन्निकर्षजन्यसंशयानुपपत्तिरिति वाच्यम्। इष्टत्वात्। ज्ञानलक्षणाप्रत्यासत्त्यैव पूर्वोपस्थितकोट्योर्भानसंभवादिति। तथा च तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वं फलितम्।

ननु विपरीतनिश्चयादेः केन संबन्धेन प्रतिबन्धकत्वम्, न तावत्कालिकसंबन्धमात्रेण, तथा सति एकपुरुषस्य बाधनिश्चयसत्त्वेपि अन्यपुरुषस्य विशिष्टबुद्ध्यनुदयापत्तेः। नापि समवायसंबन्धेन, ज्ञानस्याऽव्याप्यवृत्तितया बाधनिश्चयसत्त्वेपि समवायसंबन्धावच्छिन्नप्रतियोगिताकतदभावस्य घटाद्यवच्छेदेनात्मनि सत्त्वाद्विशिष्टबुद्ध्युदयापत्तेः। न च समवायसंबन्धावच्छिन्नप्रतियोगिताकतदभावस्य समानावच्छेदकत्वप्रत्यासत्त्या शरीरनिष्ठतया हेतुत्वमिति वाच्यम्। तथापि तच्छरीरावच्छेदेनात्मनि बाधनिश्चयसत्त्वेपि तच्छरीरावच्छेदेनाऽऽत्मनि विशिष्टबुद्ध्यापत्तेर्दुर्वारत्वात्, समवायसंबन्धावच्छिन्नप्रतियोगिताकबाधनिश्चयाभावस्यापि तच्छरीरावच्छेदेनाऽऽत्मान्तरे सत्त्वात्, परकीयशरीरघटाद्योरविशेषात्। एवमप्रामाण्यज्ञानेच्छादीनामपि केन संबन्धेनोत्तेजकत्वम्: न तावत्कालिकेन, तथासति पुरुषान्तरीयाऽप्रामाण्यज्ञानादिसत्त्वेपि बाधनिश्चयसत्त्वे विशिष्टबुद्ध्यापत्तेः। नापि समवायसंबन्धेन, ज्ञानस्याव्याप्यवृत्तितयाऽप्रामाण्यज्ञानसत्त्वेपि तत्संबन्धावच्छिन्नप्रतियोगिताकाऽप्रामाण्यज्ञानाभावस्य घटाद्यवच्छेदेनाऽऽत्मनि सत्त्वाद्विशिष्टबुद्ध्यापत्तेः।

न च विपरीतनिश्चये समवायसंबन्धावच्छिन्नप्रतियोगिताकतदभाववैशिष्ट्यमवच्छेदकताघटितसामानाधिकरण्यसंबन्धेन विवक्षितमिति वाच्यम्। तथापि बाधनिश्चये ऽप्रामाण्यज्ञानसत्त्वेपि विशिष्टबुद्ध्यनुपपत्तेस्तादवस्थ्यात्, समवायसंबन्धावच्छिन्नप्रतियोगिताकाऽप्रामाण्यज्ञानाभावस्यापि तच्छरीरावच्छेदेनाऽऽत्मान्तरे सत्त्वादितिचेदत्र **केचित्**। विपरीतज्ञानादेरवच्छेदकतासंबन्धेनैव शरीरनिष्ठतया प्रतिबन्धकत्वम्। विशिष्टबुद्धेः प्रतिबध्यत्वमप्यवच्छेदकतासंबन्धेन। यत्राऽवच्छेदकतासंबन्धेन विशिष्टबुद्ध्युत्पत्तिः तत्र स्वरूपसंबन्धेनाऽवच्छेदकतासंबन्धावच्छिन्नप्रतियोगिताकविपरीतज्ञानाभाव इति सामानाधिकरण्यम्, "प्रत्यासत्तिः"। एवमप्रामाण्यज्ञानादिकमपि अवच्छेदकतासंबन्धेनैवोत्तेजकम्। यत्रावच्छेदकतासम्बन्धेन बाधनिश्चयस्तत्र स्वरूपसंबन्धेनाऽवच्छेदकतासंबन्धावच्छिन्नप्रतियोगिताकाप्रामाण्यज्ञानाभाव इति शरीरघटितसामानाधिकरण्यमेव तदभावेन समं विपरीतज्ञानादेर्वैशिष्ट्यम्।

अथैवं विशेषणज्ञानाद्यसत्त्वदशायामपि बाधनिश्चयाद्यभाववति शरीरे ऽवच्छेदकता संबन्धेन विशिष्टबुद्ध्यापत्तिः, विशेषणज्ञानादेः समवायसंबन्धेनात्मनि विशिष्टबुद्ध्युत्पत्तिं प्रत्येव हेतुतया तेन विनापि शरीरेऽवच्छेदकतासंबन्धेन विशिष्ट-

बुद्ध्युत्पत्तौ बाधकाभावात्। न च समवायसंबन्धेनोत्पत्तिं विना वच्छेदकता-संबन्धेनोत्पत्तेरलीकतया समवायसम्बन्धावच्छिन्नोत्पत्तिकारणीभूतस्य विशेषण-ज्ञानादेरभावान्नावच्छेदकतासंबन्धेनाप्युत्पत्तिरिति वाच्यम्। तथापि यदैकस्य पुरुषस्यात्मनि समवायसंबन्धेन विशिष्टबुद्धिरुत्पद्यते तदैव तदात्मनि समवाय-संबन्धेनोत्पन्नविपरीतनिश्चयाभाववति विशेषणज्ञानादिशून्ये पुरुषान्तरीयशरीरे वच्छेदकतासंबन्धेन तदुत्पादापत्तेर्दुर्वारत्वात्, तत्तच्छरीरावच्छिन्नविशिष्टबुद्धिं प्रति तत्तच्छरीरीयात्मसमवेतविशेषणज्ञानत्वादिना हेतुत्वाभावेन यावद्विशेषसामग्री-बाधस्यापि वक्तुमशक्यत्वादितिचेन्न। विशेषणज्ञानपरामर्शादेरपि समानावच्छेद-कत्वप्रत्यासत्त्या कार्यकारणभावाभ्युपगमात्। वस्तुतस्तु विशेषणज्ञानपरामर्शादिकं समवायसंबन्धेनैव हेतुः। न चैवमुक्तापत्तिरिति वाच्यम्। यावद्विशेषसामग्री-विरहादेव तदसंभवात्। तथाहि विशिष्टज्ञानं तावज्जगति द्विविधम् तत्तच्छ-रीरावच्छिन्नं तदितरशरीरावच्छिन्नं च। तत्राद्यस्य न तदानीं तादृशशरीरे आपादनसंभवः, तच्छरीरावच्छिन्नज्ञानस्य समवायेन तच्छरीरीयात्मनि उत्पत्तिं विना वच्छेदकतासंबन्धेनोत्पत्तेरलीकतया तच्छरीरीयात्मनि समवायसंबन्धेनोत्प-त्तिकारणीभूतस्य विशेषणज्ञानादेः समवायसंबन्धेनाभावादेव तच्छरीरेपि अव-च्छेदकतासंबन्धेन तच्छरीरावच्छिन्नज्ञानोत्पत्त्यसंभवात्। नापि द्वितीयस्य तदानीं तादृशशरीरे आपत्तिसंभवः, अवच्छेदकतासंबन्धेन तदुत्पत्तिं प्रति तादात्म्यसंबन्धेन तत्तच्छरीराणां तत्तच्छरीरत्वेन कारणत्वात्, विशेषणज्ञानादेरवच्छेदकतासंबन्धेन कारणत्वानभ्युपगमेपि यावद्विशेषसामग्रीविरहादेवापत्तेर्वारितत्वात्। अथ विशेषण-ज्ञानपरामर्शादेः समवायेन कारणत्वे विपरीतज्ञानादेश्चावच्छेदकतासंबन्धेन प्रति-बन्धकत्वे यत्र महाशरीरनाशो महाशरीरावयवावच्छेदेनात्मनि विपरीतज्ञानोत्पत्ति-श्चैत्येकः कालः ततः खण्डशरीरोत्पत्तिः तत्र विपरीतज्ञानसत्त्वेपि खण्डशरीरोत्पत्ति-द्वितीयक्षणे खण्डशरीरावच्छेदेन तदात्मनि विशिष्टबुद्ध्यापत्तिः, खण्डशरीरेऽव-च्छेदकतासंबन्धेन विपरीतज्ञानाऽसत्त्वात्। नचेष्टापत्तिः, क्षणैकविलंबेन तत्र विशिष्टबुद्ध्युत्पादस्य सर्वसंमतत्वादिति वाच्यम्। तद्विपरीतज्ञानस्यापेक्षाबुद्धि-रूपत्वस्थले क्षणद्वयापलापापत्तेः। एवं यत्र महाशरीरनाशः, ततः खण्डशरीरोत्प-त्तिर्महाशरीरावयवावच्छेदेनात्मनि विपरीतज्ञानोत्पत्तिश्चेत्येकः कालः तत्र विपरीत-ज्ञानसत्त्वेपि खण्डशरीरोत्पत्तिद्वितीयक्षणे तृतीयक्षणे च खण्डशरीरावच्छेदेन तदात्मनि विशिष्टबुद्ध्यापत्तिः। जन्यज्ञानं प्रति चेष्टावत्त्वेनैव शरीरस्य लाघवेन हेतुतया महाशरीरनाशाग्रिमक्षणेपि महाशरीरावयवावच्छेदेन विपरीतज्ञानोत्पत्तौ बाधकाभावात्। चेष्टावतः शरीरावयवस्यैव सत्त्वात्, विशेषणज्ञानपरामर्शादेरप्य-वच्छेदकतासंबन्धेन कारणत्वे च नैषदोषः, खण्डशरीरे तदानीमवच्छेदकतासंबन्धेन विपरीतज्ञानवद्विशेषणज्ञानादेरप्यभावादेव तदुत्पत्तिद्वितीयादिक्षणे विशिष्टबुद्ध्या-पादनसंभवादिति चेन्न। शरीरस्य चेष्टावदन्त्यावयवित्वेन कार्यसहचरितत्वेन जन्यज्ञानं प्रति हेतुत्वेन महाशरीरनाशोत्पत्तिक्षणे तदग्रिमक्षणे वा विपरीतज्ञानोत्पत्त्यसंभवात्।

अन्त्यावयवित्वं च समवायेन द्रव्यवद्भिन्नत्वम्। वस्तुतस्तु महाशरीरनाशोत्पत्तिकालोत्पन्नस्य खण्डशरीरोत्पत्तिकालोत्पन्नस्य वा विपरीतज्ञानस्यापि खण्डशरीरेऽवच्छेदकतासंबन्धेन वृत्तौ बाधकाभावादेव नोक्तातिप्रसंगः। न चावच्छेदकतासंबन्धेन ज्ञानोत्पत्तौ तादात्म्यसंबन्धेन शरीरस्य हेतुतया खण्डशरीरावच्छेदेनाऽव्यवहितपूर्वकाले तादात्म्येन शरीरविरहात् कथं तादृशविपरीतज्ञानं खण्डशरीरे स्यादिति वाच्यम् न च तथापि शरीरान्तर्भावेण प्रतिबध्यप्रतिबन्धकभावे यत्र परपुरप्रवेशाधीनमात्मद्वयोरेकं शरीरं तत्रैकस्मिन्नात्मनि तच्छरीरावच्छेदेन विपरीतज्ञानसत्वेऽन्यस्मिन्नात्मनि अपि तच्छरीरावच्छेदेन विशिष्टज्ञानं न स्यात्, स्याच्च यत्र कायव्यूहाधीनमेकस्यैवात्मनो नाना शरीरं तत्रैकशरीरावच्छेदेन तदात्मनि बाधज्ञानसत्वेपि अन्यशरीरावच्छेदेन तदात्मनि विशिष्टज्ञानमिति वाच्यम्। तदुभयत्र विशिष्टज्ञानानुत्पादोत्पादयोरिष्टत्वात्।

एतेन सिद्धिसिषाधयिषयोःप्रतिबन्धकत्वोत्तेजकतावच्छेदकसंबधावपि व्याख्यातौ तत्रापि अवच्छेदकतासंबन्धस्यैव तत्वात। तुल्ययुक्तेः सिषाधयिषाविरहैः समं सिद्धेर्विशिष्य स्वरूपा-वच्छेदकत्वोभयघटितसामानाधिकरण्यमेव सर्वमन्यत्पूर्ववदित्याहुः। तच्चिन्त्यम्।

प्राञ्चस्तु समवायसंबन्धेन ज्ञानस्याऽव्याप्यवृत्तितया तत्सत्वेपि समवायसंबन्धेन तदभावस्य घटाद्यवच्छेदेनात्मनि सत्वाद्विपरीतज्ञानादिकं सिद्धिर्वा न प्रतिबन्धकम्, अपि तु तद्विशिष्टात्मत्वमेव समवायेन प्रतिबन्धकम्। ज्ञानस्य चाव्याप्यवृत्तित्वेपि तद्विशिष्टात्मत्वादे र्व्याप्यवृत्तितया विपरीतज्ञानादिसत्वदशायां न तद्विशिष्टात्मत्वाभावः। प्रतिबन्धकता तु सामान्यतो विपरीतज्ञानविशिष्टत्वेनैव, न त्वात्मत्वत्वं तत्र निविशते गौरवात्। तेन द्रव्यत्वत्वादिनामादाय विनिगमनाविरहोपि प्रत्युक्तः। इत्थं च परपुरप्रवेश-कायव्यूहस्थलीयोक्तरीत्या विशिष्टज्ञानानुत्पादोत्पादप्रसंगोपि नास्ति। एवमप्रामाण्यज्ञानेच्छादेरपि नोत्तेजकत्वम्, अपि तु तद्विशिष्टात्मत्वमेव समवायसंबन्धेनोत्तेजकम्। आत्मत्वन्तु तत्रापि न निवेशनीयम्। विशेषणज्ञानादिकमपि समवायसंबन्धेनैव कारणम्, नत्ववच्छेदकतासंबन्धेन। न च सर्वत्र समवायस्य कार्यतावच्छेदकत्वे, अवच्छेदकतासंबन्धेन विशिष्टज्ञानादेरुत्पत्तौ नियामकालाभः, अवच्छेदकतासंबन्धेन ज्ञानोत्पत्तिं प्रति तादात्म्यसंबन्धेन शरीरस्य कारणत्वात्, तादृशकारणत्वस्यैतन्नियामकत्वे विशेषणज्ञानादिविरहदशायां विपरीतज्ञानादिमत्वदशायामपि तन्मर्यादया शरीरेऽवच्छेदकतासंबन्धेन विशिष्टबुद्ध्यापत्तेर्दुर्वारत्वात्, विशेषणज्ञानादेर्विपरीतज्ञानाभावादेश्च समवायसंबन्धेन विशिष्टज्ञानाद्युत्पत्तिं प्रत्येव हेतुत्वादित्यादेः पूर्वमावेदितत्वादिति वाच्यम्। पूर्वोक्तदिशा यावद्विशेषसामग्रीबाधेनैव तन्निरासंभवात्। तच्छरीरावच्छिन्न तदतिरिक्तशरीरावच्छिन्नाभ्याममतिरिक्तस्य ज्ञानस्यालीकत्वादित्याहुः।

... विपरीतज्ञानादेः समवायसंबन्धेनैव प्रतिबन्धकत्वम्, अप्रामाण्य-
... तदभावैः समं विपरीतज्ञानादेः सामानाधि-
... भयघटितम्, अतो विशेषणताद्वयघटितम-

भावानां परस्परं सामानाधिकरण्यमपेक्ष्य लघु, तच्चानुमितिपक्षताकार्यकारणभाव-विचारे स्फुटम्।

नचैवं समवायेन ज्ञानस्या ऽव्याप्यवृत्तितया विपरीतज्ञानादिसत्त्वेपि तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावस्य घटाद्यवच्छेदेनात्मनि सत्वाद्विशिष्टबुद्ध्यापत्तिरिति वाच्यम्। अवच्छेदकतासंबन्धेन प्रतिबन्धकत्वाभ्युपगमेपि तेन संबन्धेन ज्ञानस्य कालिकाऽव्याप्यवृत्तितया विपरीतज्ञानवत्यपि शरीरे तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्य कालान्तरावच्छेदेन सत्वाद्विशिष्टबुद्ध्यापत्तेर्दुर्वारत्वात्। अथ यदा यच्छरीरे अवच्छेदकतासंबन्धेन विशिष्टबुद्धिरुत्पद्यते तदव्यवहितपूर्वकालावच्छेदेन-तच्छरीरे स्वरूपेण अवच्छेदकतासंबन्धावच्छिन्नप्रतियोगिताकविपरीतज्ञानाभाव इति नियमस्य कारणताशरीरघटकतया कालान्तरावच्छेदेन शरीरे तादृशाभावसत्वेपि अव्यवहितपूर्वकालावच्छेदेन तदसत्वादेव न विशिष्टबुद्ध्युत्पाद इति चेत्तर्हि यदा यद्देशावच्छेदेन यदात्मनि समवायसम्बन्धेन विशिष्टबुद्ध्युत्पत्तिः, तदव्यवहितपूर्वकालावच्छेदेन तद्देशावच्छेदेन तदात्मनि स्वरूपसंबन्धेन समवायसंबन्धावच्छिन्न-प्रतियोगिताकविपरीतनिश्चयाभाव इति कालदेशोभयावच्छेदकघटितनियमस्य कारणताशरीरघटकतया घटाद्यवच्छेदेनात्मनि समवायसंबन्धावच्छिन्नप्रतियोगिताक-विपरीतज्ञानाभावस्य सत्वेपि शरीरावच्छेदेन तदसत्वादेव न तदानीं विशिष्टबुद्ध्युत्पत्तिरिति ममापि तुल्यत्वात्। अत एव विपरीतज्ञानेऽप्रामाण्यज्ञानादिदशायां विशिष्टबुद्ध्युत्पत्तावपि न किमपि बाधकम्। घटाद्यवच्छेदेन तदानीमात्मनि समवाय-संबन्धावच्छिन्नप्रतियोगिताकाऽप्रामाण्यज्ञानाभावसत्वेपि शरीरावच्छेदेन तादृशाभावविशिष्टीभूय विपरीतज्ञानस्य तदानीमात्मन्य सत्वात्। कायव्यूहपरपुरप्रवेशस्थले च विशिष्टज्ञानानुत्पादोत्पादयो, पूर्ववदिष्टापत्तिरेव गतिः। न चैवं कारणताशरीरे गौरवमिति वाच्यम्। अनायत्या तदभ्युपगमात्, अन्यथा कालात्मकावच्छेदक-प्रवेशेपि गौरवस्य सुवचत्वात्। कारणताशरीरगौरवमपेक्ष्य कारणतावच्छेदक-संबन्धादिशरीरगौरवस्य-प्रतिबध्यप्रतिबन्धकभावानन्त्यस्य चाधिकदोषत्वाच्च। एवं विशेषणज्ञानसंस्कारपरामर्शादीनां समवायसंबन्धेन कारणत्वस्यापि यदा यद्देशावच्छेदेनात्मनि समवायेन विशिष्टानुभवाद्युत्पत्तिः तदात्मनि तदव्यवहितपूर्वकाले तद्देशावच्छेदेन समवायसंबन्धेन विशेषणज्ञानादिरिति कालदेशोभयावच्छेदक-घटितनियमघटिततया न समवायेन ज्ञानस्याऽव्याप्यवृत्तित्वेपि कारणताघटकव्यापकताबाधः न वा विशेषणज्ञानादिविरहदशायां केवलविपरीतज्ञानाद्यभावमर्यादया अवच्छेदकतासंबन्धेन शरीरे विशिष्टानुभवाद्यापत्तिः। न च तथापि तच्छरीरावच्छेदेनात्मनि समवायेन विशिष्टानुभवादिर्मा जायताम्, केवलावच्छेदकतासंबन्धेन तच्छरीरे तस्यापत्तौ च बाधकाभाव इति वाच्यम्। पूर्वोक्तदिशा यावद्विशेषसामग्र्यभावादेव तन्निराससंभवात्, तच्छरीरावच्छिन्नतदितरशरीरावच्छिन्नाभ्यामतिरिक्तस्य ज्ञानस्याऽलीकत्वात्। एतेन सिद्धिसिषाधयिषयोः प्रतिबन्धकत्वोत्तेजकता-वच्छेदक संबन्धावपि व्याख्यातौ। तत्रापि समवायसंबन्धस्यैव तथात्वात्। समवायसंबन्धावच्छिन्नप्रतियोगिताकसिषाधयिषाविरहैः समं सिद्धेर्वैशिष्ट्यमपिस्वरूप

समवायउभयघटितसामानाधिकरण्यमेव, अत एव वैशिष्ट्यं च एककालावच्छेदेन
कात्मवृत्तित्वमिति पक्षताग्रन्थे जगदीशः, अन्यथा एककालावच्छेदेनैकशरीरवृत्तित्वमे
स्यादिति प्राहुः।

अन्ये तु विशेष्यतावच्छेदकतासंबन्धेनैव विपरीतज्ञानादेः प्रतिबध्यप्रति
बन्धकभावः। यत्र विशेष्यतावच्छेदकतासंबन्धेन विशिष्टबुद्ध्युत्पत्तिः, तत्र
विशेष्यतावच्छेदकतासंबन्धेन विपरीतज्ञानादिरिति। शरीरनिष्ठतया वा प्रतिबध्य
प्रतिबन्धकभावे विशेष्यतावच्छेदकभेदेनाऽनन्तप्रतिबध्यप्रतिबन्धकभावापत्तेः। न
च विशेष्यतावच्छेदकतासंबन्धेन प्रतिबध्यप्रतिबन्धकभावेपि तत्पुरुषीयत्वनिवेशस्या
वश्यकतया पुरुषभेदेनाऽनन्तप्रतिबध्यप्रतिबन्धकभावापत्तिः। अन्यथा विशेष्यता-
वच्छेदकतासंबन्धेन एकस्य पुरुषस्य विपरीतज्ञानादिसत्वे पुरुषान्तरस्यापि
[illegible] …कता-

यत्रचिद्विशेष्यतावच्छेदकत्वात्। न च विशेष्यतावच्छेदकतामात्र प्रत्यासत्तौ,
तत्पर्याप्त्यधिकरणत्वे वा। आद्य—जातिमत्वेन ह्रदावगाहिजातिमान् वन्ह्यभाववानिति
निश्चयेपि ह्रदो वन्हिमानिति विशिष्टबुद्ध्यनुदयापत्तिः, ह्रदो वन्ह्यभाववानिति निश्चयेपि
जातिमान्वन्हिमानिति विशिष्टबुद्ध्यनुदयापत्तिश्च। अन्त्ये—जातित्वेन रूपेण ह्रदत्वमात्र-
धर्मितावच्छेदककस्यजातिमान्वन्ह्यभाववानिति निश्चयसत्वेपि जातित्वरूपेण जाति-
सामान्यधर्मितावच्छेदककवन्हिविशिष्टबुद्ध्यापत्तिः, जातित्वरूपेण जातिसामान्य-
धर्मितावच्छेदककवन्ह्यभावनिश्चयसत्वेपि जातित्वरूपेण ह्रदत्वमात्रधर्मितावच्छेदक-
कवन्हिविशिष्टबुद्ध्यापत्तिश्चेति वाच्यम्। निरवच्छिन्नविशेष्यतावच्छेदकता,
तदवच्छेदकता तदवच्छेदकताऽदिप्रत्यासत्तिभेदेन पृथक् पृथक् प्रतिबध्यप्रतिबन्धक-
भावाभ्युपगमात्। अत्रेदं तत्त्वम्। यत्रज्ञाने केवलसमवायादिसंबन्धेन ह्रदत्वं विशेष्य-
तावच्छेदकं, स्वरूपसंबन्धेन किञ्चिद्विशिष्टस्वरूपसंबन्धेन वा संयोगसंबन्धावच्छिन्न
प्रतियोगिताकवन्ह्यभावः प्रकारः, तद्ज्ञानमेव ह्रदत्वसामानाधिकरण्येन संयोग-
संबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावनिश्चयः, स च यत्र ज्ञाने वन्हिमदन्यावृत्तित्व-
रूपवन्हिव्याप्यत्वविशिष्टसमवायेन ह्रदत्वं विशेष्यतावच्छेदकं, केवलसंयोगेन
किञ्चिद्विशिष्टसंयोगेन वा वन्हिः प्रकारः, तत्रैव प्रतिबन्धकः, तस्यैव ह्रदत्वावच्छेदेन
वन्हिविशिष्टज्ञानपरिभाषाविषयत्वात्। ह्रदत्वसामानाधिकरण्येन संयोगसंसर्गकवन्हि-
विशिष्टज्ञाने च केवलसमवायसंबन्धेनैव ह्रदत्वं विशेष्यतावच्छेदकं, न तु वन्हिमदन्या-
वृत्तित्वरूपवन्हिव्याप्यत्वस्य तत्र प्रवेशोऽतोन तत्र सः प्रतिबन्धकः। प्रतिबध्यप्रति-
बन्धकभावश्च संयोगसंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावनिश्चयत्वेन संयोगसंसर्गक-
वन्हिविशिष्टबुद्धित्वेन,—यत्र वन्हिव्याप्यत्वविशिष्टसमवायावच्छिन्नविशेष्यतावच्छेदक-
तासंबन्धेन संयोगसंसर्गक वन्हिविशिष्टबुद्ध्युत्पत्तिः, तत्र न केवलसमवायसंबन्धा
वच्छिन्नविशेष्यतावच्छेदकतासंबन्धेन स्वरूपसंसर्गकसंयोगसंबन्धावच्छिन्नप्रतियोगि-
ताकवन्ह्यभावनिश्चय इति। नचैवं रूपेण प्रतिबध्यप्रतिबन्धकभावे ह्रदत्वसामानाधि-

करण्येन संयोगसंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावनिश्चयसत्त्वेपि यत्र केवल समवायसंबन्धेन ह्रदत्वं विशेष्यतावच्छेदकं ह्रदत्वव्यापकत्वविशिष्टसंयोगसंबन्धेन च वन्हिः प्रकारः तादृशज्ञानापत्तिः, वन्हिव्याप्यत्वस्य विशेष्यतावच्छेदकताघटक-संबन्धाघटकत्वादिति वाच्यम् । प्रतिस्विकरूपेण तत्तद्विशेष्यतावच्छेदकमुपादाय यथोक्तरीत्या प्रतिबध्यप्रतिबन्धकभावेपि ह्रदत्वसामानाधिकरण्येन संयोगसंबन्धा-वच्छिन्नप्रतियोगिताकवन्ह्यभावनिश्चयसत्वे यत्र वन्हिव्याप्यत्वविशिष्टसमवाय-संबन्धेन ह्रदत्वं विशेष्यतावच्छेदकं केवलसंयोगसंबन्धेन वन्हिः प्रकारः तत्र तादृशज्ञानापत्तेर्दुर्वारत्वात्, ह्रदत्वव्यापकत्वस्य संबन्धाघटकत्वात्, इष्टापत्तेस्तु-च्छत्वात् । विशेष्यतावच्छेदकभेदेनाऽनन्तप्रतिबध्यप्रतिबन्धकभावाभ्युपगमस्य चाधिकत्वात् । एवं यत्र ज्ञाने वन्ह्यभाववदन्यावृत्तित्वरूपवन्ह्यभावव्याप्यत्वविशिष्ट समवायेन ह्रदत्वं विशेष्यतावच्छेदकं केवलस्वरूपसंबन्धेन किंचिद्विशिष्टस्वरूप-संबन्धेन वा संयोगसंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावः प्रकारः तत्र तद्ज्ञानमेव ह्रदत्वावच्छेदेन संयोगसंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावनिश्चयः स च निरुक्तह्रदत्वावच्छेदेन वन्हिविशिष्टज्ञानपरिभाषाविषये निरुक्तह्रदत्वसामानाधिक-रण्येन वन्हिविशिष्टज्ञानपरिभाषाविषये च प्रतिबन्धकः । प्रतिबध्यप्रतिबन्धकभावस्तु संयोगसंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावनिश्चयत्वेन संयोगसंसर्गकवन्हिविशिष्ट-ज्ञानत्वेन, यत्र समवायसंबन्धावच्छिन्नविशेष्यतावच्छेदकतासंबन्धेन संयोगसंसर्गक-वन्हिविशिष्टबुद्ध्युत्पत्तिः तत्र न वन्ह्यभावव्याप्यत्वविशिष्टसमवायसंबन्धावच्छिन्न-विशेष्यतावच्छेदकतासंबन्धेन स्वरूपसंसर्गकसंयोगसंबन्धावच्छिन्नप्रतियोगिताकव-न्ह्यभावनिश्चय इति । वन्हिव्याप्यत्वविशिष्टसमवायस्य विशेष्यतावच्छेदकतावच्छेद कत्वेपि अधिकन्त्विवतिन्यायेन समवायेन तदवच्छेदकतानपायान्न ह्रदत्वावच्छेदेन वन्हिविशिष्टज्ञानस्याऽसंग्रहः । न चैवं रूपेण प्रतिबध्यप्रतिबन्धकभावे यत्र केवल समवायेव ह्रदत्वं विशेष्यतावच्छेदकं ह्रदत्वव्यापकत्वविशिष्टस्वरूपसंबन्धेन च वन्ह्यभावः प्रकारः तादृशनिश्चयसत्त्वेपि ह्रदत्वसामानाधिकरण्येन वन्हिविशिष्ट ज्ञानापत्तिः, तत्र वन्हिव्याप्यत्वस्य ह्रदत्वसंबन्धाघटकत्वादिति वाच्यम् । तादृशवन्ह्यभावनिश्चयानन्तरं वन्ह्यभावव्याप्यत्वविशिष्टसमवायसंबन्धेनह्रदत्वं विशेष्यतावच्छेदकीकृत्य वन्ह्यभावनिश्चयोदयात् । यत्र च न तदुदयस्तत्र तादृश-वन्ह्यभावनिश्चयोत्तरं ह्रदत्वसामानाधिकरण्येन वन्हिविशिष्टज्ञानस्येष्टत्वात् । अन्यथा प्रागुक्तरीत्या प्रातिस्विकरूपेण तत्तद्विशेष्यतावच्छेदकमुपादाय प्रतिबध्य-प्रतिबन्धकभावाभ्युपगमेपि यत्र वन्ह्यभावव्याप्यत्वविशिष्टसमवायेन ह्रदत्वं विशेष्यता वच्छेदकं वन्ह्यभावस्तु केवलस्वरूपसंबन्धेन प्रकारः तादृशनिश्चयसत्त्वे ह्रदत्व सामानाधिकरण्येन वन्हिविशिष्टज्ञानापत्तेर्दुर्वारत्वात्, तत्र ह्रदत्वव्यापकत्वस्य वन्ह्य-भावसंबन्धाघटकत्वात् । नचैवं यत्र तद्वदन्यावृत्तित्वरूपविधेयव्याप्यत्वं विशेष्यतावच्छे-दकसंबन्धघटकं, तदेव विशेष्यतावच्छेदकावच्छेदेन ज्ञानं, यत्र च तन्न घटकं तदेव विशेष्यतावच्छेदकसामानाधिकरण्येन ज्ञानमितिफलितम् । तथा च विशेष्यता-

न तु संशयसाधारणं पक्षे साध्यसंसृष्टत्वज्ञानमनुमितिकारणम्, तद्विरोधितया च बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति युक्तम्, अप्रसिद्धसाध्यकानुमित्यनापत्तेः, साध्यसंशयादिकं विनाप्यनुमित्युत्पत्तेश्च। अत एव साध्य-

(अनुष्णत्वज्ञान) उसमें विरोधी (प्रतिबन्धक) होता है। किसी आचार्य का ऐसा मत है कि पक्ष में संशय साधारण साध्य संसृष्टत्व (साध्यसम्बन्ध) ज्ञान अनुमिति का कारण होता है-और पक्ष में उस साध्यसम्बन्ध ज्ञान के बाधनिश्चय-सत्प्रतिपक्षनिश्चय-को विरोधी होने से तादृशनिश्चय के विषय बाध-सत्प्रतिपक्ष-को हेत्वाभासत्व भी उभयत्र हो जाता है। परन्तु यह उनका मत युक्त नहीं है-क्योंकि अप्रसिद्ध साध्यक अनुमिति की अनापत्ति (अनुपपत्ति) हो जावेगी अर्थात् "पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्" यहाँ अनुमिति के पूर्व इतरभेदरूप साध्य का ज्ञान न होने से यह अनुमिति नहीं बनेगी। और दूषणान्तर भी देते हैं कि घन गर्जनस्थल में अनुमिति के पहिले साध्य का संशयात्मक ज्ञान तक भी नहीं है-अथ च साध्यसंशय (साध्यसंसृष्टत्वज्ञान) के बिना भी "गगनं मेघवत्" इस अनुमिति की उत्पत्ति होती है—(अब आपके मतानुसार नहीं होनी चाहिये-क्योंकि अनुमिति के पूर्व-साध्यसम्बन्ध ज्ञान नहीं है) प्राचीन लोग ऐसा मानते हैं कि पक्षधर्मिक साध्याभाव ज्ञान में जो प्रमात्व ज्ञान (अर्थात् "ह्रदो वह्न्यभाववान् इदं ज्ञानं प्रमा" यह ज्ञान-ह्रदो वह्निमान् इत्याकारक जो पक्ष में साध्यवत्ता ज्ञान उसका प्रतिबन्धक होता है-परन्तु यह उनका कथन ठीक नहीं है-कारण कि सर्वत्र प्रायः तद्धर्मिक तद्वत्ता-

---

वच्छेदकावच्छेदेन केवलान्वयिधर्मविशिष्टबुद्धेः नियमतोऽप्रमात्वापत्तेः, निरुक्तव्याप्यत्वस्याऽखण्डस्याऽप्रसिद्धत्वादिति वाच्यम्। तावता यत्र विशेष्यतावच्छेदकव्यापकत्वं विधेयस्य संबन्धघटकं तत्रापि विशेष्यतावच्छेदकावच्छेदेन ज्ञानत्वक्षतिविरहात्। परिभाषाया नानार्थत्वादित्याहुः। तच्चिन्त्यम्।

अथ शब्दबोधे विपरीतनिश्चयाभावो न हेतुः, योग्यताज्ञानहेतुतयैवोपपत्तेः, एवं चाऽनुमितावपि विपरीतनिश्चयाभावस्य न हेतुता, शाब्दानुमितिसाधारणपरोक्षानुभवत्वस्य "जातिविशेषस्य वा" विशेष्यविशेषणत्वरूपयोग्यताज्ञानजन्यतावच्छेदकत्वोपगमात्, तादृशकारणविरहेणैव बाधितार्थविषयकानुमित्यनुदयादिति। बाधस्य साक्षादनुमितिविरोधितया हेत्वाभासत्वाभिधानमसंगतमिति केषां चिन्मतं निराकरोति। नत्विति। अस्यायुक्तमित्यनेनान्वयः। वाक्यार्थस्य, पक्षे साध्यस्य च निश्चयः शाब्दानुमित्योः पूर्वं नियमतो न संभवतीत्यत आह। संशयसाधारणमिति। पक्षे साध्यसंसृष्टत्वज्ञानमिति सावधारणम्। तेन विपरीतनिश्चयाभावस्य व्यवच्छेदः। पक्षे साध्यसंसर्गावगाहिज्ञानमित्यर्थः। पक्षे साध्यवत्त्वज्ञानमितियावत्। अनुमितिकारणमिति। लाघवादितिशेषः। तदभाववद्धाभावत्वापेक्षया तद्वत्ताज्ञानत्वस्य जनकतावच्छेदकत्वे तदभावव्याप्यवत्तानिश्चयाभावस्य हेतुत्वाकल्पनेन च लाघवं बोध्यम्।

भावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकम्, मानाभावाद्, गौरवाच्च। अन्यथा सत्प्रतिपक्षादावपि तदभावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकत्वापत्तेः, किन्तु भ्रमत्वज्ञानानास्कन्दितबाधबुद्धेः प्रतिबन्धकता, तत्र भ्रमत्वशंकाविघटनेन प्रामाण्यज्ञानं क्वचिदुपयुज्यते।

बुद्धि के प्रति तद्धर्मिक तदभाववत्ताधर्मिकबुद्धि प्रतिबन्धिका होती है-प्रकृत में ( साध्याभाव ज्ञान धार्मिक प्रमात्व निश्चय को) तदभावावगाही न होने के कारण प्रतिबन्धकता में कोई प्रमाण नहीं है-वही मूल में कहा है कि "प्रमात्वज्ञानमपि न प्रतिबन्धकं प्रमाणाभावात्" दूसरे गौरव दोष भी है क्यों कि पक्ष धर्मिक साध्याभावज्ञानत्व की अपेक्षा पक्षधर्मिक साध्याभाव ज्ञान धर्मिक प्रमात्व निश्चयत्व को प्रतिबन्धकतावच्छेदक मानने में गौरव है—अतः यह मत ठीक नहीं है अन्यथा ( यदि साध्याभाव ज्ञान में प्रमात्व निश्चय को ही प्रतिबन्धक माने तो ) सत्प्रति पक्ष स्थलों में साध्याभाव व्याप्यवत्ता ज्ञान में प्रमात्व निश्चय को ही प्रतिबन्धकता होनी चाहिये-( जो कि आपको भी अभीष्ट नहीं है ) अतः "अतः भ्रमत्वज्ञाना नास्कन्दित" अर्थात् भ्रमत्व ज्ञान ( अप्रमाण्य ज्ञान ) से अनास्कन्दित ( शून्य ) बाध बुद्धि को ही पक्ष धर्मिक साध्यवत्ता बुद्धि (अनुमितिरूप बुद्धि ) के प्रति प्रतिबन्धकता है। तत्र ( बाधनिश्चय में ) क्वचित् ( कहीं स्थल विशेष में ) यदि भ्रमत्व शंका ( अप्रमाण्य शंका हो जावे तो उसके ( विघटन ) निवारण के लिये प्रमाण्यज्ञान की उपयोगिता होती है।

---

न चालौकिकप्रत्यक्षे विपरीतनिश्चयस्य प्रतिबन्धकत्वमावश्यकम्, एवं च तेनैवोपपत्तेः साध्यसंसृष्टत्वज्ञानहेतुत्वान्तरकल्पनायामेव गौरवमिति वाच्यम्। इच्छायाऽनुत्तेजकत्वे पृथक् प्रतिबन्धकताया भवतोऽप्यावश्यकत्वात्, बाधाभावस्य शाब्दादिहेतुतामते शाब्दादिसामग्र्याः भिन्नविषयक प्रत्यक्षादिप्रतिबन्धकतायां तद्घटकस्वरूपयोग्यताज्ञानापेक्षया गुरोर्बाधाभावस्य तदभावव्याप्यवत्ताज्ञानाद्यभावस्य च निवेशनीयतया गौरवाच्च। नन्वेवं बाधप्रकरणसमयोर्हेत्वाभासता न स्याद्बाधनिश्चयकाले साध्यसंसृष्टत्वज्ञानाभावादेवानुमित्यनुत्पत्तेः बाधनिश्चयस्यानुमितिविरोधित्वे मानाभावादित्यत आह। **तद्विरोधितयेति।** अनुमितिकारणीभूतस्य साध्यसंसृष्टत्वज्ञानस्यैव विरोधितयेत्यर्थः। स्वरूपासिद्ध्यादिनिश्चयवदिति भावः। **अप्रसिद्धसाध्यकानुमित्यनापत्तेरिति।** साध्यज्ञानाभावकालीनपरामर्शजन्यानुमितिः, अप्रसिद्धसाध्यकानुमितिः, साध्यविशेष्यकानुमिति र्वा। **तादृशानुमितिर्न** स्यादिति साध्यसंसृष्टत्वज्ञानविरहादितिभावः। अथ पक्षसाध्ययोः संसर्गज्ञानस्यानुमितिहेतुत्वेपि अप्रसिद्धसाध्यविशेष्यकानुमितौ न तस्य हेतुत्वम्, न वा बाधज्ञानस्य साक्षादनुमितौ प्रतिबन्धकत्वम्, साध्यविशेष्यकानुमितौ साध्यज्ञानस्य प्रतिबन्धकतयैव पक्षे बाधमहद्दशायामनुमित्यापत्तेरनवकाशादिति कथमप्रसिद्धसाध्यकानुमानानुपपत्तिरिति

चेन्न। इतरत्वव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवीति परामर्शात् पृथिव्यामितरभेद इत्यभावसाध्यकस्थले एवं साध्यज्ञानमनपेक्ष्याऽनुमित्युत्पत्त्या तत्र प्रतियोगिमत्ताज्ञानरूपबाधग्रहस्य साध्यज्ञानं विनापि संभवात्तादृशबाधग्रहकाले नुमित्यापत्तेर्वारयितुमशक्यत्वात्, तादृशानुमितिस्वीकारेऽनुमितौ बाधज्ञानस्य साक्षात्प्रतिबन्धकत्वस्यावश्यकत्वात्। यत्र प्रतिबन्धकबाधादिबुद्धेरसंभवस्तत्र साध्यविशेष्यकानुमितौ संसृष्टत्वज्ञानहेतुताया निर्युक्तत्वेनाऽस्वीकारेऽपि पृथिव्यां जलभेदः इत्यादिज्ञाने संसृष्टत्वज्ञानहेतुताया अवर्जनीयतया तादृशानुमितेरनुपपत्तेरिति भावः। ननु अप्रसिद्धसाध्यकानुमितिर्न स्वीक्रियते इतिचेत्तदाह। **साध्यसंशयादिकं विनेति।** *तथा च घनगर्जितेन मेघानुमितेः पूर्वं साध्यसंसृष्टत्वज्ञानविरहात्,* न हि तत्र परामर्शोत्तरं साध्यसंशयः, परामर्शस्य विशेषदर्शनविधया संशयप्रतिबन्धकत्वादिति भावः।

अत्र तदभाववत्तानिश्चयस्य तद्वत्ताबुद्धिं प्रति प्रतिबन्धकत्वं न संभवति, तत्सत्त्वेपि अप्रामाण्यज्ञानकालेऽनुमित्युत्पत्तेः। न च भ्रमत्वज्ञानानास्कन्दित-तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वमिति वाच्यम्। - तदभाववति तत्प्रकारकत्व रूपभ्रमत्वस्य गुरुत्वात्, तदभाववत्ताज्ञानधर्मिकप्रामाण्यनिश्चयस्यैव प्रतिबन्धकत्वं युक्तम्, तद्वतितत्प्रकारकत्वरूपप्रमात्वग्रहस्यैव लघुत्वात्। मन्मते प्रमात्वज्ञाने *निश्चयत्वस्येव भवन्मते बाधज्ञाने निश्चयत्वस्य निवेशनीयतया साम्यात्।* एवं च सद्धेतुस्थले तदभाववत्ताज्ञानस्य भ्रमत्वनियमेन तत्र प्रमात्वरूपदोषाऽप्रसिद्ध्या न हेतोर्बाधितत्वमिति मतं दूषयति। **एवमिति।** प्रमात्वज्ञानं प्रमात्वनिश्चयः। **मानाभावादिति।** ह्रदोवन्ह्यभाववानितिज्ञानंप्रमेतिज्ञानस्य प्रमात्वावगाहितया माह्याभावानवगाहितयाऽप्रतिबन्धकत्वादिति भावः। तदुक्तं-दीधितिकृता-साध्याभाववत्पक्षादिज्ञानप्रमात्वं तु न बाधः, तद्‌ज्ञानस्य पक्षादौ साध्याभावादेरनवगाहित्वे विरोधिविषयत्वाभावात्, अवगाहित्वे तु तद्विषयत्वेनैव प्रतिबन्धकत्वात्, प्रमात्व- ... ज्ञानधर्मिक

लिनिश्चयस्यैव प्रतिबन्धकतया तादृशनिश्चयस्य ह्रदांशे वन्ह्यभावावगाहित्वा ... दोषाऽस्यत आह। **गौरवाच्चेति।** *भावस्थले वन्हिमति* "वन्ह्यभावाभाववति" वन्ह्यभावप्रकारकमिति अप्रामाण्यज्ञानापेक्षया वन्ह्यभाववति वन्ह्यभावप्रकारकमिति प्रामाण्यनिश्चयस्यैव गुरुत्वात्, अप्रामाण्यनिश्चयस्याऽभावाऽघटितत्वेन लघुत्वादिति भावः। एवं यत्र पक्षे साध्याभावज्ञानमस्ति न तु तादृशज्ञाने अप्रामाण्यज्ञानं नापि प्रामाण्यज्ञानं तत्रानुमितिर्नभवति इदानीं तदापत्तिरित्यपि बोध्यम्। प्रतिबन्धाप्रतिबन्धकत्वे। परिहरति। **अन्यथेति।** तदभाववत्ताज्ञानधर्मिकप्रमात्वनिश्चयस्यैव प्रतिबन्धकत्वे। **प्रतिबन्धकतापत्तेरिति।** अनुमितावित्यादिः। तथा च सद्धेतौ साध्याभावव्याप्य-

न च बाधस्थले पक्षे हेतुसत्वे व्यभिचारः, पक्षे हेत्वभावे स्वरूपासिद्धिरेव दोष इति वाच्यम्। बाधज्ञानस्य व्यभिचारज्ञानादेर्भेदात्। किं च यत्र परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादेरकिंचित्करत्वाद्बाधस्यानु-

प्रश्न—पक्ष में जो साध्याभाव–वही तो बाध है—तब साध्याभाववत् पक्षरूप बाधस्थल में यदि पक्ष में हेतु रह गया तो वह बाधित हेतु साध्याभाववद्वृत्ति होने के कारण साधारण अनैकान्तिक ( व्यभिचारी ) हो गया। और यदि उस पक्ष में हेतु नहीं रहता है तो पक्ष में हेतु का अभाव होने पर हेत्वभावपत्पक्षरूप स्वरूपासिद्धि हो गयी–तब वह बाधित हेतु असिद्ध कहलावेगा स्वतन्त्र बाधित हेतु का अस्तित्व ही न रहा।

उत्तर—यह ठीक नहीं है–क्योंकि बाधज्ञान–और व्यभिचार ज्ञान की प्रतीति का भेद ( वैलक्षण्य ) होने के नाते बाध को व्यभिचार तथा स्वरूपासिद्धि से भिन्न ही मानना होगा। दूसरी बात यह है कि जहाँ परामर्श के बाद बाधबुद्धि हुयी वहाँ बाध ( बाधबुद्धि ) को ही अनुमिति का प्रतिबन्धक माना जाता है, व्यभिचारादि वहाँ अकिञ्चित्कर हैं—( इससे भी बाध को अतिरिक्त हेत्वाभासत्व सिद्धि ही है )। एवं जहाँ उत्पत्तिक्षणावच्छिन्नघटादि में गन्धव्याप्य पृथ्वीत्ववत्ताज्ञान है। ( परामर्शरूप )—( अथ च उस परामर्शरूप ज्ञानकाल

---

वत्ताज्ञानस्य भ्रमरूपत्वेन दोषप्रमाया अप्रसिद्ध्या तस्य दोषता न स्यादिति भावः। **स्वरूपासिद्धिरेवेति**। तथा च बाधस्थले व्यभिचार स्वरूपासिद्ध्यन्यतरसत्वनियमेन तद्ज्ञानादेवानुमित्यनुत्पत्तौ बाधस्य न हेत्वाभासत्वमिति भावः। **भेदादिति**। तथा च बाधस्थले व्यभिचारस्वरूपासिद्ध्यन्यतरन्नियमेपि बाधज्ञानस्यानुमितिप्रतिबन्धकत्वात्, व्यभिचारज्ञानस्य व्याप्तिधीविरोधित्वात्, स्वरूपासिद्धिज्ञानस्य पक्षधर्मताज्ञानविरोधित्वाच्च त्रयाणां फलभेदाद् बाधस्य हेत्वाभासत्वं व्यभिचारादिभिन्नदोषत्वं चाऽङ्गीकार्यमिति भावः। **अकिंचित्करत्वादिति**। व्यभिचारज्ञानं हि अनुमितौ न साक्षात्प्रतिबन्धकम्, किन्तु परामर्शविघटकतयैव तथा च परामर्शोत्तरकालीनं व्यभिचारज्ञानमकिंचित्करमिति बाधबुद्धिरेव प्रतिबन्धिकेति भावः। व्यभिचाराद्यसंकीर्णमपि बाधं दर्शयति। **एवमिति**। **ज्ञानमिति**। गन्धव्याप्यपृथिवीत्ववानुत्पत्तिक्षणावच्छिन्नो घट इति परामर्शः। तत्र उत्पत्तिक्षणावच्छिन्नोघटोगन्धवानित्यनुमितिरित्यर्थः। **तत्र**। तादृशानुमितौ। **बाधस्यैव**। तादृशघटोगन्धाभाववानिति निश्चयस्यैवेत्यर्थः। तत्र पक्षे हेतुसत्वान्न स्वरूपासिद्धिः, प्रतियोगिव्यधिकरणसाध्याभाववद्वृत्तित्वरूपव्यभिचारस्यचाऽभावादिति भावः। व्यभिचारघटकसाध्याभावे प्रतियोगिवैयधिकरण्याप्रवेशे कपिसंयोगी-एतद्वृक्षत्वादित्यादिसद्धेतोरपि व्यभिचारित्वापत्तिरिति ध्येयम्। **बाधः** साध्याभाववत्पक्षादिः **तद्व्याप्यः** सत्प्रतिपक्षः **तद्भिन्नाः** व्यभिचारविरुद्धासिद्धास्तद्व्याप्यानां-

मितिप्रतिबन्धकत्वं वाच्यम् । एवं यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्य-पृथिवीत्ववत्ताज्ञानं तत्र बाधस्यैव प्रतिबन्धकत्वं वाच्यम् । न च पक्षे घटे गन्धसत्त्वात्कथं बाध इति वाच्यम् । पक्षतावच्छेदकदेशकालावच्छेदेनानुमिते-रनुभवसिद्धत्वादिति । बाधतद्व्याप्यभिन्ना ये हेत्वाभासास्तद्व्याप्या अपि

में-अथवा उसके दूसरे क्षण में "उत्पत्तिक्षणावच्छिन्नो घटो गन्धाभावान्" यह बाधनिश्चय है ) वहाँ उस बाध ( बाधनिश्चय ) को ही उत्पत्तिक्षणावच्छिन्नो घटो गन्धवान् पृथिवीत्वात्" इस अनुमिति का प्रतिबन्धक कहना चाहिये । ( यहाँ न तो पक्ष ( घट ) में पृथिवीत्व हेतु का ही अभाव है-जिससे कि स्वरूपासिद्धि दोष कहा जाय-और न प्रतियोगिव्यधिकरण साध्या-भाववद् वृत्तित्व रूप व्यभिचार ही दोष है—इससे भी बाध की स्वतंत्र हेत्वाभासत्व स्पष्ट ही है ।

प्रश्न—पक्ष घट में जब कि गन्ध है तो उस का बाध कैसे होगा ।

यह कथन ठीक नहीं है-क्यों कि जहाँ पक्षतावच्छेदक देश-या काल हो जाते हैं वहाँ देशावच्छेदेन-एवं कालावच्छेदेन-अनुमिति अनुभव सिद्ध है । ( अभिप्राय यह है कि पक्ष में विशेषणतया रहने वाले को पक्षतावच्छेदक कहते हैं—जैसे "उत्पत्तिक्षणावच्छिन्नो घटः" यहाँ पर घटात्मक पक्ष में—उत्पत्तिक्षण-अवच्छिन्नत्व सम्बन्ध से रहता है अतः उत्पत्तिक्षण पक्षतावच्छेदक हो गया—सो उत्पत्तिक्षणवृत्ति घट में गन्ध का बाध स्पष्ट ही है क्योंकि "उत्पन्नं द्रव्यक्षणमगुणम्" इत्यादि कार्यकारणभाव मूलक नियम प्रमाण है ) । बाध और सत्प्रतिपक्ष से जितने भी हेत्वाभास हैं—व्यभिचार—विरुद्ध—असिद्ध—उनके जो व्याप्य जैसे साध्याभाववद्वृत्ति-त्वव्याप्य हेतु-यह व्यभिचार में अन्तर्भूत है—क्योंकि यह व्यभिचार व्याप्य है । और हेत्व-भावव्याप्यवत् पक्ष-इनका स्वरूपासिद्धि में अन्तर्भाव है—क्योंकि यह स्वरूपासिद्धि का व्याप्य है । इसी प्रकार अन्यत्र भी समझ लेना—अन्यथा ( यदि व्यभिचारव्याप्यका व्यभिचार में-असिद्धि व्याप्य का असिद्धि में अन्तर्भाव नहीं करोगे तो ) हेत्वाभासों का आधिक्य हो जावेगा ।

---

तत्रैवान्तर्भाव इत्यर्थः । तन्मध्ये एवेति । व्यभिचारव्याप्यस्य व्यभिचारे, एव-मग्रेऽपि । अन्यथा । तद्व्याप्यानां तन्मध्येऽन्तर्भावे । न प्रतिबन्धक इति । साध्याभावव्याप्यव्याप्यवत्ताज्ञानस्य साध्यवत्ताप्रतिबन्धकत्वे मानाभावादिति भावः ॥७२॥ साध्यवद्भिन्न इति । न तु निश्चयगर्भ इति शेषः । विपक्षवृत्तित्व-मेवेति । हेतौ साध्याभाववद्वृत्तित्वमेवेत्यर्थः । एव कारेण सपक्षवृत्तित्वव्यवच्छेदः । दूषकतावीजस्येति । अव्यभिचारज्ञानप्रतिबन्ध-सामानाधिकरण्यग्रहप्रतिबन्धरूप-दूषकताबीजस्येत्यर्थः । तथा च यद्रूपावच्छिन्नविषयिताव्यापिका विशिष्टसाध्य-विशिष्टसाधनसामानाधिकरण्यग्रहत्वाव्यापिका अन्वयव्याप्तिग्रहत्व व्यापिका या प्रतिबध्यता तन्निरूपितप्रतिबन्धकता तद्रूपवत्त्वमित्यर्थः । यद्रूपपदेनधूमाभाववद्वृत्ति वन्हित्वादिकमादाय लक्षणसमन्वयो बोध्यः । पूर्वमुक्तमिति । असाधारण-

**यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः ।**
**यस्तूभयस्माद्व्यावृत्तः स त्वसाधारणोमतः ॥७३॥**

तन्मध्ये एवान्तर्भवन्ति, अन्यथा हेत्वाभासाधिक्यप्रसंगात् । वाधव्याप्यसत्प्रतिपक्षस्तु भिन्न एव स्वतन्त्रेच्छेन मुनिनापृथगुपदेशात्, सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धक इति प्रघट्टकार्थः ॥७२॥

यः सपक्षे इति । सपक्षविपक्षवृत्तिः साधारण इत्यर्थः । सपक्षोनिश्चितसाध्यवान् । विपक्षः साध्यवद्भिन्नः । विरुद्धवारणाय सपक्षवृत्तित्वमुक्तम् । वस्तुतोविपक्षवृत्तित्वमेव वाच्यम्, विरुद्धस्य साधारणत्वेपि दूषकतावीजस्य पार्थक्यात् । यस्तूभयस्मादिति । सपक्षविपक्षव्यावृत्त इत्यर्थः । सपक्षः साध्यवत्तया निश्चित इत्यर्थः । विपक्षः-साध्यशून्यतया निश्चित इत्यर्थः । शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वसंशयः तदा सपक्षत्वं विपक्षत्वं च घटादीनामेव, तद्व्यावृत्तं च शब्दत्वमिति तदा तदसाधारणम् यदा तु शब्देऽनित्यत्वस्य निश्चयस्तदा नासाधारणयम् । इदं तु प्राचामतम् । नवीन-

प्रश्न—इस प्रकार से तो सत्प्रतिपक्ष का वाध में ही अन्तर्भाव हो जाना चाहिये-क्यों कि सत्प्रतिपक्ष भी तो वाध का व्याप्य ही है ।

उत्तर—स्वतन्त्रेच्छ मुनि ने सत्प्रतिपक्ष का पृथक् उपदेश किया है इस नाते सत्प्रतिपक्ष वाधव्याप्य होने पर भी भिन्न ही है । ( जैसे व्यभिचारव्याप्यनिश्चयों को प्रतिबन्धकता है, ) ऐसे सत्प्रतिपक्ष व्याप्य प्रतिबन्धक नहीं होता है—यह संक्षेप से समस्त प्रकरण का अर्थ हुवा ।७२

सपक्ष-और विपक्ष दोनों में जो हेतु रहे वह साधारण व्यभिचारी कहलाता है । जिसमें साध्य का निश्चय हो वह सपक्ष है और जिसमें साध्यभाव का निश्चय हो वह विपक्ष है । विपक्षवृत्तित्वमात्र ही यदि साधारण हेत्वाभास का लक्षण करेंगे तो विरुद्ध में अतिव्याप्ति हो जावेगी क्यों विरुद्ध में भी विपक्ष वृत्तित्व है—अतः विरुद्ध में अतिव्याप्ति वारणार्थ सपक्ष वृत्तित्व कहा तो ( "ह्रदो बन्हिमान् जलत्वात्" यह जलत्वरूप विरुद्ध हेतु वन्हि के विपक्ष जलह्रद में वृत्ति होने पर भी सपक्ष ( महानस ) में वृत्ति नहीं है-अतः अतिव्याप्ति नहीं है ) वस्तुतः विपक्षवृत्तित्व ही साधारण का लक्षण ठीक है । रहा यह कि विपक्ष वृत्तित्व विरुद्ध में भी है अतः अतिव्याप्ति हो जावेगी—तथापि दूषकता बीज के भेद से भेद हो जावेगा-( अर्थात् साधारणज्ञान पूर्वपक्षव्याप्तिग्रह का प्रतिबन्धक है-और विरुद्ध साध्यसामानाधिकरण्य ज्ञान का प्रतिबन्धक है ) । और जो सपक्ष-विपक्ष-दोनों से व्यावृत्त हो-अर्थात् जो हेतु न सपक्ष में और न विपक्ष में रहे ( किन्तु पक्षमात्र में रहे ) वह हेतु असाधारण हेत्वाभास है । साध्यवत्तया निश्चित सपक्ष कहते हैं । साध्यशून्यतया निश्चित को विपक्ष कहते हैं । शब्दोऽ-

तथैवानुपसंहारी केवलान्वयिपक्षकः ।
यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥७४॥

मतं तु पूर्वमुक्तम् ॥७३॥ केवलान्वयीति । सर्वमभिधेयं प्रमेयत्वादित्यादौ सर्वस्यैव पक्षत्वात्सामानाधिकरण्यग्रहस्थलान्तराभावान्नानुमितिः । इदं तु न सम्यक् । पक्षैकदेशे सहचारग्रहेपि क्षतेरभावात् । अस्तु वा सहचाराऽग्रहः, तावतापि अज्ञानरूपाऽसिद्धिरेव, न तु हेत्वाभासत्वं तस्य, तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तम् । यः साध्यवतीति । एवकारेण साध्यवत्त्वावच्छेदेन हेत्वभावोबोधितः । तथा च साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः ॥७४॥

नित्यः शब्दत्वात् इत्यादि स्थल में जब शब्दरूप पक्ष में अनित्यत्व का सन्देह हो–तब सपक्ष घटादि को ही समझना–क्यों कि घटादि ही अनित्यत्वरूपसाध्यवत्वेन निश्चित हैं। और अनित्यत्वरूपसाध्यशून्यतया निश्चित अधिकरण गगनादि विपक्ष हैं। शब्दत्व हेतु इन दोनों ( सपक्ष घटादि–विपक्ष गगनादि से व्यावृत्त है–और शब्दात्मकपक्षमात्र में रहता है–अतः वह शब्दत्व हेतु असाधारण है। और जब शब्द ( पक्ष ) में अनित्यत्व साध्य का निश्चय है तब शब्दत्व हेतु असाधारण नहीं कहा जायगा ( क्यों कि उस काल में सपक्ष से व्यावृत्त शब्दत्व हेतु नहीं होगा ) ऐसा प्राचीनों का मत है। नवीन मत पूर्व में कह चुके हैं कि "साध्यासमानाधिकरणोहेतुरसाधारणः" इत्यादि। ७३ केवलान्वयिधर्मावच्छिन्न जहाँ पक्ष होता है वहाँ अनुपसंहारी होता है। "सर्वमभिधेयं प्रमेयत्वात्" यहाँ "सर्व" ही तो पक्ष है–तो अब कोई दृष्टान्त ही नहीं बचा कि जहाँ "सामानाधिकरण्य" रूप व्याप्ति का निश्चय हो क्योंकि साध्यहेतु की व्याप्ति का निश्चय दृष्टान्त में ही होता है–जैसे "यत्र यत्र धूमस्तत्र २ वन्हिः" इस वन्हिधूम की साहचर्य ( सामानाधिकरण्य ) रूप व्याप्ति का निश्चय महानस में होता है। अतः सामानाधिकरण्य ग्रह के लिये कोई दृष्टान्तरूप स्थलान्तर के न होने से व्याप्तिनिश्चय नहीं हो सकेगा–और न अनुमिति होगी–ऐसा प्राचीनों का मत है। परन्तु यह मत ठीक नहीं है–क्योंकि पक्ष हुआ सर्व–पक्षतावच्छेदक–सर्वत्व, उस सर्वत्वावच्छेदेन ( सर्व ) पक्ष में साध्य संशय रहने पर भी सर्वरूप पक्ष का एकदेश जो घट-पट आदि हैं–उनमें घटत्व-पटत्वावच्छेदेन साध्य ( अभिधेयत्व ) हेतु ( प्रमेयत्व ) का सहचार ग्रह होने के उपरान्त व्याप्तिनिश्चय साध्य हेतु का घटपटादि में हो फिर अनुमिति हो जावेगी–कैसे प्राचीन कहते हैं कि अनुमिति नहीं होगी। दूसरी बात यह है कि "अस्तु वा सहचाराग्रहः" न हो सहचारग्रह–तो भी अज्ञानरूप असिद्धि ही होगी अर्थात्

---

साध्यासमानाधिकरणोहेतुरित्यादिना ॥७३॥ क्षतेरभावादिति । सामानाधिकरण्येन साध्यसिद्धेरवच्छेदावच्छेदेनानुमितावप्रतिबन्धकत्वादिति भावः । अज्ञानरूपासिद्धिरिति । पुरुषस्य दूषणमिति भावः । तस्य । सहचाराग्रहस्य । तदर्थ इति । तेन नाऽसाधारणेऽतिव्याप्तिरिति भावः ॥७४॥

आश्रयासिद्धिराद्या स्यात्स्वरूपाऽसिद्धिरप्यथ ।
व्याप्यत्वाऽसिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥७५॥
पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयोगिरिः ।
ह्रदो द्रव्यं धूमवत्वादत्रासिद्धिरथापरा ॥७६॥

असिद्धिं विभजते । आश्रयासिद्धिरित्यादि ॥७५॥ पक्षासिद्धिः—आश्रया-सिद्धिरित्यर्थः । अपरा—स्वरूपासिद्धिरित्यर्थः ॥७६॥ नीलधूमादिके इति । नील-

अज्ञान तो पुरुष निष्ट दोष है हेतु निष्ट दोष नहीं अतः उसको हेत्वाभाइसत्व की अनुपपत्ति हो जावेगी—अतः केवलान्वयिधर्मावच्छिन्न पक्षकत्व अनुपसंहारित्व नहीं है—तो भी केवलान्वयि साध्य-कत्व अनुपसंहारित्व कहेंगे—व्यतिरेकव्याप्तिज्ञान का प्रतिबन्धक होने के नाते अनुपसंहारित्व को हेत्वा भासत्व भी बन गया । जो हेतु साध्यवत् में नहीं रहता है उसे विरुद्ध कहते हैं—यह कारिकार्थ कारिकास्थ 'एव' कार से साध्यवत्त्वावच्छेदेन हेत्वभाव बोधित है—अर्थात् "अवच्छेदेन" इसका व्यापकत्व अर्थ है—और 'साध्यवत्त्व' का 'साध्य' अर्थ है—क्योंकि मतुप् के अगाड़ी जहाँ त्व—या तल्—आये वह प्रकृत्यर्थ का बोधन करता है—जैसे 'घटवत्त्व' घट ही है । इस प्रकार साध्यका व्यापकीभूत जो अभाव (हेत्वभाव) तत्प्रतियोगि को ही विरुद्ध हेतु जानना चाहिये ॥७४॥ प्रथम आश्रयासिद्धि—द्वितीय स्वरूपासिद्धि—तृतीय व्याप्यत्वासिद्धि—इस प्रकार असिद्धि तीन प्रकार की है जहाँ मणिमय गिरिपर्वत ) पक्ष हो—जैसे "मणिमयः पर्वतो वन्हिमान् धूमात्" इस स्थल में पक्षतावच्छेदक मणिमयत्व का अभाव होने से धूम हेतु आश्रकासिद्ध हो गया—कारण कि जिस स्थल में पक्ष में पक्षतावच्छेदक का अभाव रहे—उस स्थल का हेतु आश्रयासिद्ध कहलाता है । "ह्रदो द्रव्यं धूमवत्वात्" यहाँ ह्रदरुप पक्ष में धूमवत्व रूप हेतु स्वरूपासिद्धि दोष से दुष्ट हो गया ॥७६॥ जो हेतु व्यर्थविशेषण घटित हो, वह हेतु व्याप्यत्वासिद्ध दोष से दुष्ट कहलाता है—

---

साधारणत्वभिन्नत्वे सति विरुद्धत्वभिन्नत्वे सति अनुपसंहारित्वभिन्नत्वे सति यद्रूपावच्छिन्नविषयित्वसामान्यं परामर्शप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्वमसिद्धि-सामान्यलक्षणम् ॥७५॥ स्वरूपासिद्धेरसंकीर्णोदाहरणं तु पर्वतोवन्हिमान् महान-सत्वादित्यादिकं बोध्यम् ॥७६॥ आश्रयासिद्धिभिन्नत्वे सति स्वरूपासिद्धिभिन्नत्वे सति असिद्धित्वं व्याप्यत्वासिद्धेर्लक्षणम् ।

तथा च यद्रूपावच्छिन्नाऽऽश्रयासिद्धिः—यद्रूपावच्छिन्ना च स्वरूपासिद्धिः तत्तद्रूपावच्छिन्नानिरूपितं-साधारणत्वविरुद्धत्वा-नुपसंहारित्वानिरूपितं च पूर्वोक्त-निश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयितासामान्यं परामर्शप्रतिबन्धकताऽनतिरिक्त-वृत्ति तद्रूपवत्वं व्याप्यत्वासिद्धेर्लक्षणम् । तेन ह्रदोवन्हिमान् धूमादित्यादौ वन्हिव्याप्य-धूमाभाववद्ह्रदादिरूपव्याप्यत्वासिद्धेर्विशिष्टस्यानतिरिक्ततया धूमाववद्ह्रदाद्यात्मक-स्वरूपासिद्धिभिन्नत्वाभावेपि नाव्याप्तिः सापि त्रिविधा साध्याप्रसिद्धिः-साधनाऽ प्रसिद्धिः-व्याप्तिविरहरूपा च । तत्राद्ये उक्ते एव । व्याप्तिविरहश्च नीलधूमादौ व्याप्ति-विरहं दर्शयति । नीलधूमत्वादिकमिति । पर्वतोवन्हिमानित्यादौ इत्यादिः ।

व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् ।

धूमत्वादिकं गुरुतया न हेतुतावच्छेदकम्, स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तराऽघटितस्यैव व्याप्यतावच्छेदकत्वात् । धूमप्रागभावत्वसंग्रहाय स्वसमानाधिकरणेति । विरुद्धयोरिति । कपिसंयोगतदभाव-

जैसे "पर्वतो वन्हिमान् नीलधूमात्" यहाँ नीलधूम व्याप्यत्वासिद्ध है । नीलधूमत्व गुरुधर्म होने के नाते हेतुतावच्छेदक नहीं हो सकता है–क्योंकि ऐसा नियम है कि "स्वसमानाधिकरण जो प्रकृतसाध्य का व्याप्यतावच्छेदक जो धर्मान्तर तादृशधर्मान्तर से अघटित धर्म ही व्याप्यतावच्छेदक कहलाता–स्वपद से नीलधूमत्व–उसके समानाधिकरण अथ च प्रकृत साध्य ( वन्हि ) का व्याप्यतावच्छेदक धर्मान्तर जो धूमत्व–उससे अघटित नीलधूमत्व–नहीं है–अतः नीलधूमत्व व्याप्यतावच्छेदक नहीं हुवा । व्याप्यतावच्छेदक–हेतुतावच्छेदक पर्यायवाचक शब्द हैं । व्याप्यतावच्छेदकत्व के लक्षण में 'स्वसमानाधिकरण' पद न होने पर "इयं पाकशाला वन्हिमती भविष्यति धूमप्रागभावात्" इत्यादि–स्थल में धूमप्रागभावत्व में व्याप्यतावच्छेदकत्व लक्षण की अव्याप्ति ( असंग्रह ) हो जायेगी–क्योंकि व्याप्यतावच्छेदक जो धर्मान्तर ( धूमत्व ) उससे घटित ही है धूमप्रागभावत्व अघटित नहीं है । अतः धूमप्रागभावत्व के संग्रह के लिये 'स्वसमानाधिकरण' दिया तो धर्मान्तर जो धूमत्व है वह स्वपद से ग्राह्य जो धूम प्रागभावत्व–समानाधिकरण नहीं है–क्योंकि धूमप्रागभावत्व धूमप्रागभाव में रहेगा–और धूमत्व धूम में रहेगा–

---

गुरुतयेति । धूमत्वापेक्षयेत्यादिः । स्वसमानाधिकरणेति । स्वं-व्याप्यत्वेनाभिमतं नीलधूमत्वादिकम् । स्वसमानाधिकरणेतीति । अन्यथा धूमप्रागभावत्वस्य तद्व्याप्यतावच्छेदकीभूमत्वघटितत्वेन तत्संग्रहो न स्यादिति भावः । तथा च सति धूमप्रागभावत्वस्य धूमत्वसामानाधिकरण्याभावात्तत्संग्रहः । धूमत्वस्यापि स्वात्मकधर्मघटितत्वेन व्याप्यतावच्छेदकत्वानुपपत्तिरतोऽन्तरेति । न च नीलधूमत्वस्यापि तादृशधर्मान्तराऽघटितत्वमस्त्येव धूमत्वस्य नीलधूमत्वभिन्नत्वाभावादिति वाच्यम् । स्वावच्छिन्नाविषयकप्रतीति विषयतावच्छेदकत्वस्याऽन्तरपदार्थत्वात् । धूमप्रागभावत्वस्य स्वसमानाधिकरणधर्मान्तराऽभावत्वघटितत्वादुक्तं साध्यव्याप्यतावच्छेदकेति । तथा च स्व विशिष्टंयद्यत्स्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्यैव व्याप्यतावच्छेदकत्वादितिभावः । वै० स्वविशिष्ट रूपघटितत्व-स्वतादात्म्योभयसं० । रूपे स्व वै० स्वसामानाधिकरण्य स्वकालीनप्रकृतसाध्यव्याप्यतावच्छेदकत्व-स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वैतन्त्रितय सं० । अत्र "नीलधूमत्वरूप" हेतुतावच्छेदकावच्छेदेन व्याप्तिज्ञानस्यैवानुमितिकारणतया तद्ज्ञानं प्रति नीलधूमत्वावच्छेदेन व्याप्यभाववत्ताज्ञानरूपव्याप्यत्वासिद्धिनिश्चयस्य प्रतिबन्धकतया तस्य हेत्वाभासत्वमिति प्राचीनानामाशयः । नवीनास्तु नीलधूमे व्याप्तिसत्वान्न व्याप्यत्वाऽसिद्धिः । न च तत्र व्याप्तिसत्वेपि नीलधूमत्वस्य व्याप्यतानवच्छेदकत्वाद्व्याप्यत्वासिद्धिरिति वाच्यम् । अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य तत्रापि सत्वात् । न च

विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥७७॥
साध्यशून्यो यत्र पक्ष स्त्वसौ बाध उदाहृतः।
उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥७८॥

व्याप्यवत्तापरामर्शेपि न सत्प्रतिपक्षत्वमतउक्तं विरुद्धयोरिति। तथा च स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्श इत्यर्थः ॥७७॥ साध्यशून्य इति। पक्षः—पक्षतावच्छेदकविशिष्ट इत्यर्थः

अतः दोनों व्यधिकरण हैं। अतः अव्याप्ति नहीं है। परस्पर विरुद्ध जो हेतु—उनके परामर्श होने पर सत्प्रतिपक्ष होता है—"कपि संयोगी—रादूवृक्षत्वात्" यहाँ एतद्वृक्षत्व हेतु में भी कपि संयोग-तथा कपि संयोगाभाव व्याप्यवत्ता परामर्श होने से सत्प्रति पक्षितत्व व्यवहार की आपत्ति लग जायगी—अतः "विरुद्धयोः" कहा। कहने से आपत्ति वारित हो गयी कि उक्तस्थल में विरुद्ध दो हेतु नहीं हैं। इसी का निष्कृष्ट अर्थ करते हैं—"स्वसाध्य" इत्यादि—"पर्वतो वन्हिमान् धूमात्" और "पर्वतो वन्ह्यभाववान् पाषाणमयत्वात्" यहाँ पर विनिगमना विरहात् दोनों ही हेतु सत्प्रतिपक्ष होते हैं। तथाहि—स्वपद से दोनों हेतुवों में से कोई एक हेतु ले लीजिये जैसे धूम को लिया—उसका जो वन्हिरूप साध्य—उसके विरुद्ध जो वह्न्यभाव रूप साध्याभाव—तादृशसाध्याभावव्याप्यवत्ता जो परामर्श—"वन्ह्यभावव्याप्यपाषाणमयत्ववान् पर्वतः" यह परामर्श इस परामर्श कालीन—जो स्वसाध्यव्याप्यवत्ता परामर्श "वन्हिव्याप्यधूमवान् पर्वतः" यह परामर्श तादृशपरामर्श विषयत्व धूम में हैं अतः धूमहेतु सत्प्रति पक्षित हो गया—ऐसे ही पाषाणमयत्व को जानना ॥७७॥ साध्य शून्य जहाँ पक्ष हो वहाँ बाधदोष होता—जैसे—उत्पत्तिकालीन घट में गन्ध को जहाँ साध्य किया जावे—"उत्पत्तिकालीनो घटो गन्धवान् पृथिवीत्वात्" यहाँ पर पृथिवीत्व हेतु बाधित है। यह कारिकार्थ हुवा। 'पक्ष' पद से पक्षतावच्छेदक जो देश-काल तद्विशिष्ट पक्ष को जानना—इससे यह हुआ कि यद्यपि विशुद्ध घट में गन्ध रहने पर भी अर्थात् गन्ध व

---

स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशासंभवः। वन्हिमान् वन्हिमदन्यावृत्ते -रित्यादौ व्याप्यत्वासिद्ध्यापत्तेः, धूमत्वापेक्षया वन्हिमदन्यावृत्तित्वस्य गुरुत्वात्, अतोऽव्यर्थ विशेषणस्थले अधिकोक्तिरूपनिग्रहस्थानेन पुरुषोनिगृह्यते इत्युक्तप्रायमिति वदन्ति केचित्तु व्याप्यत्वस्याऽसिद्धिर्यस्मादिति व्युत्पत्त्या व्याप्यत्वासिद्धिपदेन उपाधिरेवगृह्यते, उपाधिश्च साध्यव्यापकत्वे सति साधनाऽव्यापकः। यथा धूमवान् वन्हेरित्यादौ आर्द्रेन्धनसंयोग उपाधिः। तस्य व्यभिचारोत्थापकतया दूषकत्वमित्यग्रे व्यक्तीभविष्यतीति प्राहुः। विरुद्धयोरिति मूले—साध्यतदभावयोरित्यभिप्रेतम्, साध्यतदभावयोरविरोधे तु न सत्प्रतिपक्षव्यवहारइत्याशयेनाह। स्वसाध्यविरुद्धेति स्वं-सत्प्रतिपक्षत्वेनाभिमतोहेतुः। सत्प्रतिपक्षशब्दोहि संश्चासौ प्रतिपक्षश्चेति व्युत्पत्त्या हेतुदोषपरः, सन् प्रतिपक्षोयस्मिन्निति व्युत्पत्त्या दुष्टहेतुपरश्च इति ध्येयम् ॥७७ प्रतियोगिव्यधिकरणसाध्याभाववत्पक्षस्यैव बाधत्वात्, अन्यथा वृक्षः कपिसंयोगी

तेन घटे गन्धसत्त्वेपि न क्षतिः। एवं मूलावच्छिन्नोवृक्षः कपिसंयोगीत्यत्रापि बोध्यम् ॥७८॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्या-मनुमानखण्डं समाप्तम्।

श्रीरस्तु। ग्रामीणस्य प्रथमतः पश्यतोगवयादिकम्।
सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥७९॥

उपमितिं व्युत्पादयति—ग्रामीणस्येति। यत्रारण्यकेन केन चिद् ग्रामीणायोक्तं गोसदृशोगवयपदवाच्य इति–पश्चाद् ग्रामीणेन क्वचिदरण्यादौ गवयोदृष्ट स्तत्र गोसादृश्यदर्शनं यज्जातं तदुपमितिकरणं तदनन्तरं गोसदृशो-

बाध न होने पर भी–पक्षतावच्छेदक जो उत्पत्तिकाल–तद्विशिष्ट घट में गन्ध का बाध (गन्धाभाव) है। अतः बाध में अव्याप्ति नहीं है–अर्थात् पृथिवीत्व हेतु को बाधितत्व की अनुपपत्ति नहीं हुवी। ऐसे ही "मूलावच्छिन्नो वृक्षः कपिसंयोगी" यहाँ भी जानना–अर्थात् विशुद्ध वृक्ष में कपिसंयोग रूप साध्य का बाध न होने पर भी पक्षतावच्छेदक जो "मूल" रूपदेश-तद्विशिष्ट वृक्ष में कपि संयोग का अभाव है ॥ ७८ ॥

उपमिति का व्युत्पादन करते हैं—"ग्रामीणस्य" इत्यादि ग्रंथ से–कारिकार्थ स्पष्ट ही है। ग्रामीण के यह पूछने पर कि "गवयः कीदृशोभवति" तो किसी आरण्यक ने ग्रामीण से कहा कि "गोसदृशो गवयपदवाच्यो भवति" अर्थात् गौ के समान जो पिण्ड हो वही गवयपद का

---

इत्यत्रापि बाधापत्ते ऽतथाच क्वमत्र बाधः प्रतियोगिव्यधिकरणगन्धाभावविरहादित्या-शंकां निराकरोति। पक्ष इति। तथा च घटेगन्धसत्त्वेपि उत्पत्तिकालावच्छेदेनगन्धा-भावात्। एवं वृक्षे कपिसंयोगसत्त्वेपि मूलावच्छेदेनसंयोगाभावादिति भावः। अत्रेदं बोध्यम्। पक्षतावच्छेदकसामानाधिकरण्येनाऽनुमिति प्रति पक्षतावच्छेदकावच्छेदेन बाधनिश्चयः प्रतिबन्धकः, अवच्छेदावच्छेदेनानुमितौ तु बाधनिश्चयमात्रं विरोधीति।

श्रीज्वालाप्रसादकृते अनुमाने सविस्तरे।
समाप्तिमगमच्चैव मुक्तावलिविलासिनी ॥

श्रीरस्तु उपमितिं व्युत्पादयतीति। अवसरसंगत्या इति भावः। अवसरश्च प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तौ अवश्यवक्तव्यत्वम्। प्रकृतेऽनुमानोपमान-योर्द्वयोरपि प्रत्यक्षोपजीवकत्वेऽप्यनुमानस्य बहुवादिसंमतत्वेन, निरसनीयाल्पवादि-विप्रतिपत्तिकत्वेन सुगमतया अनुमाने एव व्युत्पित्सोः प्रथमतो जिज्ञासा जायते इत्यनुमाननिरूपणेन प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तौ अवश्यवक्तव्यत्वमुप-मानस्येति अवसरसंगत्योपमाननिरूपणमिति भावः।

वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते।
गवयादिपदानां तु शक्तिधीरुपमा फलम् ॥८०॥

गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः। तदनन्तरं गवयोगवयपदवाच्य इति ज्ञानं यज्जायते तदुपमितिः नत्वयं गवयपदवाच्य

वाच्य होता है। पश्चात् ग्रामीण ने कहीं जंगल में गवयपिण्ड को देखा—उस गवय में जो गो सादृश्य दर्शन हुवा वही ( गो सादृश्यज्ञान ) उपमिति का करण अर्थात् उपमान प्रमाण है। उसके अनन्तर "गोसदृशो गवयपदवाच्यः" इस अतिदेशवाक्य के अर्थ का जो स्मरण हुवा—वही उपमित्यात्मक ज्ञान के प्रति व्यापार है। उसके अनन्तर उस गवय में जो "गवयो गवय-

---

ननु अरण्यं प्रविष्टस्य ग्रामीणस्य चक्षुःसन्निकर्षादिना अयं गोसदृश इति प्रत्यक्षसंभवेपि गोसदृशोगवयपदवाच्य इति स्मरणाऽसंभवः, अनुभूतस्यैव स्मरणादित्यतोऽनुभवं "शाब्दबोधात्मकं" दर्शयति। **यत्रेति**। यस्मै ग्रामीणायेत्यर्थः। **पश्चादिति**। आरण्यकोक्तवाक्यश्रवणजन्यवाक्यार्थबोधात्मकानुभवोत्तरमित्यर्थः। **ग्रामीणेनेति**। तेन ग्रामीणेनेत्यर्थः। **तत्र**। चक्षुःसन्निकृष्टव्यक्तौ। **गवयदर्शनं यज्जातमिति**। अयं गोसदृश इति प्रत्यक्षं यज्जातमित्यर्थः। **तदुपमितिकरणमिति**। तदेवोपमितिकरणमित्यर्थः। **स्मरणंयज्जायते** इति। अयं गोसदृश इति प्रत्यक्षस्योद्बोधकविधया तादृशवाक्यार्थस्मारकत्वादिति भावः। **तदेव अतिदेशवाक्यार्थस्मरणमेव व्यापार** इति। अतिदेशवाक्यार्थस्मरणस्य उद्बोधकविधया तादृशप्रत्यक्षजन्यत्वात्, तादृशप्रत्यक्षजन्योपमितिजनकत्वाच्चेति भावः। **तदनन्तरं**। तादृशस्मरणानन्तरं। **गवयोगवयपदवाच्य इति ज्ञानं यज्जायते** इति। पिंण्डे चक्षुःसंयोगानन्तरं योग्यवृत्तितया गवयत्वजातेरपि ग्रहणात्, गवयत्वावच्छिन्नधर्मिकगोपदवाच्यत्वप्रकारकोपमिति र्नानुपपन्नेत्याशयोमूलकृताम्। **तदुपमितिः** तदेवोपमितिः। एवकारेण गोसदृशोगवयपदवाच्य इति ज्ञानस्योपमितित्वव्यवच्छेदः, अन्यथा तादृशज्ञानस्य गोसदृशोगवयपदवाच्य इत्यतिदेशवाक्यज्ञानाधीनत्वेन शाब्दबोधात्मकतया उपमितेः प्रमित्यन्तरत्वानुपपत्तेः। गवयोगवयपदवाच्य इति ज्ञानस्य गवयपदजन्य गवयत्वविशिष्टोपस्थितिं विना शाब्दबोधरूपत्वाऽसंभवात् प्रकृतवाक्ये सदृशपदस्यैव सत्वात्। न च प्रत्यक्षेण गोसादृश्यस्य गवयत्वस्य च उपस्थितौ गवयत्वावच्छेदेनैव कथं गवयपदवाच्यत्वोपमितिः, न च सादृश्यावच्छेदेनेति वाच्यम्। तुल्योपस्थितिकत्वेपि गवयत्वजात्यपेक्षया गोसादृश्ये गौरवज्ञाने गोसादृश्यावच्छेदेन गवयपदवाच्यत्वोपमितेरनुदयात्। प्राचीनमतं दूषयति **नत्विति**। तथासति इदंत्वावच्छिन्ने शक्तिग्रहेपि गवयान्तरे शक्तिग्रहाभावप्रसंगात् तदेवाह। **गवयान्तरे इति**। एवं वैधर्म्यज्ञानादपि उपमितिः स्वीक्रियते

इत्युपमितिः गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् । इति श्रीविश्वनाथपञ्चानन-भट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्या मुपमानखण्डम् ।

पदवाच्यः" इत्याकारक ज्ञान होता है—वही ज्ञान उपमिति है--"अयं गवयपदवाच्यः" यह उपमिति नहीं है-क्योंकि ऐसा मानने से अन्य गवयव्यक्तियों में गवयपद की शक्ति का निश्चय नहीं हो सकेगा।

---

"धिक्करभमतिदीर्घग्रीवं कठोरकण्टकाशिनमपसदं पशूना" मिति वाक्यात् अतिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्यज्ञानादुष्ट्रेकरभपदवाच्यतामहः । एवं कार्यकारण-भावनिश्चयरूपा पित्रुपमितिः । यथा "मुद्गपर्णसदृशौषधिर्ज्वरहरे" तिवैद्यवाक्यं श्रुत्वा तदर्थबोधानन्तरं इयमौषधिर्मुद्गपर्णसदृशीति प्रत्यक्षे अतिदेशवाक्यार्थस्मरणा-नन्तरं इयं ज्वरहरा" इत्याकारककार्यकारणभावज्ञानमपि उपमितिः । एतन्मते उपमितित्वजातिमत्त्वमुपमितेर्लक्षणमिति संक्षेपः ।

श्रीज्वालाप्रसादकृते उपमाने सविस्तरे ।
समाप्तिमगमच्चैव मुक्तावलि विलासिनी ॥

# शब्दप्रामाण्यनिरूपणम्

बौद्धास्तुशब्दो न प्रमाणमिति वदन्ति। तथा हि। शब्दो न प्रमाणं प्रमित्युपधायकत्वाभावात्, स्मृतिसंस्कारवत्। न च स्वविषयकलौकिकप्रत्यक्ष मादाय बाध इति वाच्यम्। शब्दाविषयकत्वस्य प्रमितौ विशेषणीयत्वात्। न चैवमपि शब्दलिंगकानुमितिमादाय बाधः, तादृशानुमित्युपधायकत्वादिति वाच्यम्। अनुमितिभिन्नत्वस्यापि प्रमितौ विशेषणीयत्वात्। पक्षीभूतशब्दपदमपि शब्दज्ञान-परम्, अन्यथा न्यायनयेपि शब्दज्ञानस्यैव प्रमाणत्वात् सिद्धसाधनापत्तेः। ज्ञायमानशब्दस्य करणत्वे तु यथाश्रुतमेव सम्यक्। अत्र पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरुद्देश्या, तेनाऽजनितशाब्दबोधके शब्दज्ञाने "शब्देवा" सिद्धसाधनसत्वेपि न क्षतिः। अवच्छेदावच्छेदेनानुमितौ सामानाधिकरण्येन सिद्धे रप्रतिबन्धकत्वात्। न च शब्दस्य प्रमाजनकत्वानभ्युपगमे शब्दश्रवणानन्तरं विशिष्टानुभवः कथं स्यादिति वाच्यम्। एतन्मते शब्दश्रवणान्तरं विशिष्टानुभवस्यैवाऽसिद्धेः किन्तु पदार्थोपस्थितिमात्रम्, उपस्थितार्थस्याऽसंसर्गाग्रहमात्रं वा तेनैव प्रवृत्त्या-द्युपपत्तेः। न च विशिष्टबुद्धेरानुभविकत्वादनुभवापलाप इति वाच्यम्। एवमपि शब्दात्प्रत्येकं तत्तत्पदार्थोपस्थितौ मानसात्मक एव विशिष्टबोधस्वीकारा-दिति न कोपि दोषः। विप्रतिपत्तिस्तु शब्दः "तद्ज्ञानंवा" शब्दाविषयका-ऽनुमितिभिन्नप्रमित्युपधायकं न वा इत्याकारिका बोध्या अत्र च सामानाधिकरण्येन विधिकोटिः, पक्षतावच्छेदकावच्छेदेन च निषेधकोटिः। तेन नाजनितशाब्दबोधके शब्दे विधिकोटावंशतोबाधः न वा निषेधकोटावंशतो सिद्धसाधनमिति। न च प्रमाणत्वाभावः साध्यः स च प्रमित्युपधायकत्वाभाव एव, तथा च साध्यसाधनयोर-भेद इति वाच्यम्। तादृशप्रमोपधायकान्यत्वस्य साध्यत्वात्। अन्योन्यात्यन्ता-भावभेदेन भेदादिति तत्वम्। अत्रेदं समालोचनीयम्। शब्दो न प्रमाणमिति वाक्यं प्रमोपधार्मिकं न वा। आद्ये शब्दस्य प्रमोपधायकान्यत्वव्याघातः, शब्दस्यास्य साक्षादेव प्रमोपधायकत्वात्। द्वितीये च प्रमोपधायकत्वम्, प्रमित्य-नुपधायकत्वं वा। तत्रापि आद्ये शब्दमात्रस्यैव प्रमोपधायकत्वं सिद्धम्, शब्दो न प्रमाणमिति वाक्यजन्यज्ञानस्य "विषयबाधेन" बाधितविषयकत्वात्। द्वितीये च शब्दस्य प्रमोपधायकान्यत्वे मानाभावः, प्रमोपधायकत्वे भवदुक्तवक्यस्यैव प्रमाणत्वात्। एवं च यदि "शब्दो न प्रमाणमि" तिवाक्यं प्रमित्युपधायकं तदा शब्दमात्रस्य प्रमित्यनुपधायकत्वं नियुक्तिकमिति भावः। एवं भागासिद्धिश्च, आकांक्षादिमतः पदोर्थोपस्थित्यादिरूपव्यापारवतश्च शब्दात् शाब्दबोधरूपप्रमोपत्पत्तेरावश्यकत्वा-त्तादृशशब्दे प्रमित्युपधायकत्वस्यैव सत्वात्। न चाकांक्षादिज्ञानविशिष्टेपि शब्दे आकांक्षादिज्ञानरूपसामग्रीविरहदशायां प्रमोपधायकत्वाभावस्तत्वाप्यभ्युपगत इति न भागासिद्धिरिति वाच्यम्। एवमपि चक्षुरादौ व्यभिचारापत्तेः। इतरसामग्र्यसमवधाने प्रमारूपफलोपधायकत्वाभावस्य चक्षुरादापि सत्वाच्च। अन्योन्याभावस्य व्याप्य-वृत्तितया तत्र साध्यविरहात्, प्रमाफलोपधायकत्वात्यन्ताभावस्य साध्यत्वे सिद्धसाध-नादिति संक्षेपः।

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥८१॥

शाब्दबोध में पदज्ञान करण होता है—पदार्थधी ( पदार्थोपस्थिति ) द्वार ( व्यापार ) होती है। शाब्दबोध फल होता है। और शक्तिधी ( शक्तिज्ञान ) सहकारिकारण होता है। यह कारिकार्थ हुआ। मु० शाब्दबोध के प्रति प्राचीनमताभिमत ज्ञायमानपद करण नहीं है

---

वस्तुतस्तु अमुमर्थं शृणोमि श्रुतमेवेदं पुराणादिभ्य इत्याद्यनुभवसिद्धैव शाब्दत्व-जातिः। न च श्रु धातोः श्रावणप्रत्यक्षे एव शक्तिः, शाब्दत्वजातिः कथं तादृशानु-भवविषयः इति वाच्यम्। श्रुधातोर्नानार्थत्वात्, "आत्मावारे श्रोतव्योमन्तव्य" इत्यादि श्रुतौ, मयाऽयमर्थः श्रुत इत्यादिलौकिकवाक्ये च शाब्दबोधेऽपि प्रयोगात्। अथास्तु शाब्दत्वं जातिः, अस्तु वा तदवच्छिन्नं प्रति पदज्ञानजन्यपदार्थोपस्थितिः कारणम्, परन्तु सा जातिर्मानसत्वव्याप्यैव, तथा च चक्षुरादिवत् शब्दोऽपि प्रत्यक्षा-न्तर्गत एव न तु प्रमाणान्तरम्। न च तस्य मानसत्वव्याप्यत्वे पदादनुपस्थित-घटादीनामपि शाब्दबोधे भानापत्तिः, तथा च घटादिकं शृणोमी त्यनुव्यवसाया-पत्तिरिति वाच्यम्। शाब्दत्वावच्छिन्नविषयताया स्तत्राभावेन तादृशानुव्यवसाया-भावात्, यदंशे वृत्त्य पदजन्यपदार्थोपस्थित्यादिजन्यत्वं तत्रैव तादृशविषयताया स्वीकारादितिचेन्न। शाब्दत्वजातेर्मानसत्वव्याप्यत्वे मानाभावात्, तदवच्छिन्नं प्रति वृत्त्या पदजन्यपदार्थोपस्थित्याऽऽकांक्षाज्ञानादेर्हेतुत्वस्यावश्यकत्वेन लाघव-गौरवविचारानवकाशात्। न च शाब्दत्वस्य मानसत्वविरुद्धत्वे मानसत्वावच्छिन्नं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयम्, मानसत्वव्याप्यत्वे च न तथेति वाच्यम्। यतो हि ममापि मानसत्वाच्छिन्नं प्रति न शाब्दसामग्रीत्वेन प्रतिबन्धकत्वम्, अपि तु अनुमित्यादिसाधारणमानसेतरज्ञानसामग्रीत्वेन, तच्चानुमित्याद्युत्पत्तिदशायां मानसोत्पत्तिवारणाय भवतोऽप्यावश्यकमिति कुतोलाघवम्, किन्तुविपरीतमेव गौरवम्, तथा हि शाब्दत्वस्य मानसत्वविरुद्धत्वे मानसेतरज्ञानसामग्र्या मानसत्वमेव प्रतिबध्यतावच्छेदकम्, तद्व्याप्यत्वे तु शाब्देतरमानसत्वमेव प्रतिबध्यतावच्छेदकम्, अन्यथा भिन्नविषयकलौकिकप्रत्यक्षसामग्रीसत्वे चाक्षुषाद्युपनीतभानादिसामग्रीसत्वे पदार्थोपस्थित्यादिसत्वे मानसान्तरवत् शाब्दात्मकमानस्यापि अनुत्पत्त्यापत्तेः, अपि च योग्यतासंशयेऽपि शब्दश्रवणानन्तरं वाक्यार्थनिश्चयोऽनुभवसिद्धः, स कथं स्यात्, योग्यतासंशये सति मानससंशयसामग्रीसत्वादर्थसंशयोत्पत्त्यापत्तेः, एक पदार्थेऽपरपदार्थवत्वस्य योग्यतात्वात्। तथापि शब्दो न प्रमाणान्तरं पदार्थ-संसर्गस्या नु मानादेवसिद्धेरितिवैशेषिकमतमेव शिष्यते तच्च स्वयमेवाग्रे निराकरिष्यते इति कृतं पल्लवितेन।

शाब्दबोधप्रकारमिति। उपमाननिरूपणानन्तरमित्यादिः। उपजीव्योप-जीवकभावसंगत्या इति शेषः। सादृश्यज्ञानात्मकोपमानस्य उपमितिद्वारा, शक्ति-

**शाब्दबोधप्रकारं दर्शयति। पदज्ञानं त्विति। न तु ज्ञायमानं पदं करणम्, पदाभावेपि मौनिश्लोकादौ शाब्दबोधात्।**

क्योंकि मौनिश्लोकादि में जहाँ कि पद नहीं है—अपितु पद के बोधक लेखादि हैं आदिपद से हस्त आदि की चेष्टा को ले लेना—वहाँ भी पद नहीं है अथ च शाब्दबोध होता है—( अतः पदज्ञान करण है ऐसा नवीनमत ही उचित है ) पदार्थधीरिति। पद से जायमान जो अर्थ

---

ज्ञानात्मिकाया उपमितेश्च साक्षाच्छाब्दबोधोपजीव्यत्वं बोध्यम्। **शाब्दबोधप्रकारमिति**। शाब्दबोधजनकीभूतकारणकलापमित्यर्थः। मूले-**पदज्ञानं त्विति**। पदज्ञानमेवेत्यर्थः। एवकारार्थकस्तुशब्दस्तद्व्यवच्छेद्यमाह। **नत्विति**। अत्र हेतुमाह। **पदाभावेपीति**। पदोच्चारणाभावेपीत्यर्थः। **मौनिश्लोकादाविति**। मौनिकर्तृकवाक्यबोधकलिप्यादावित्यर्थः। आदिपदाद् द्वित्वादिबोधकविजातीयहस्तचेष्टादेः परिग्रहः। तथा च मौनिश्लोकस्थले विजातीयहस्तचेष्टास्थले च शब्दोच्चारणाभावेन ज्ञायमानपदाभावेन शाब्दबोधो न स्यात्, पदज्ञानस्य करणत्वे तु लिप्या हस्तचेष्टया च पदज्ञानाद् भवति शाब्दबोध इति भावः। **पदजन्यइति**। पदज्ञानजन्येत्यर्थः। **व्यापार इति**। पदार्थस्मृतौ उद्बोधकविधया पदज्ञानजन्यत्वस्य, पदज्ञानजन्यो यः शाब्दबोधस्तज्जनकत्वस्य च सत्त्वादिति भावः। **अन्यथा**। पदज्ञानजन्यत्वानिवेशे। पदार्थोपस्थितिमात्रस्य व्यापारत्वे इति यावत्। **पदज्ञानवत इति**। अनेन च करणत्वं सूचितम्। **शाब्दबोधापत्तेरिति**। न च पदार्थधीरिति मूले धीपदस्य स्मृतिपरतया प्रत्यक्षादिना जायमानज्ञानस्य स्मृतिभिन्नतया न तदापत्तिः, एवं पदार्थप्रत्यक्षादेः पदज्ञानाजन्यतया तस्य व्यापारत्वाऽसंभवात्, द्वारं तत्र पदार्थधीरिति मूलेन पदार्थज्ञानस्य व्यापारविधयैव हेतुत्वप्रतिपादनात्कथं तदापत्तिरिति वाच्यम्। घटपदवदाकाशमित्याकारकविशिष्टवैशिष्ट्यावगाहिमानसस्यापि घटपदत्वप्रकारकज्ञानजन्यतया घटपदानुभवजन्यघटपदस्मृतेरपि तादृशतया च उक्तज्ञानानां व्यापारत्वसंभवेन घटपदस्य शाब्दबोधापत्त्या पदज्ञानजन्यत्वनिवेशः। न च पदजन्यत्वनिवेशेपि उक्तापदानुभवजन्यपदस्मृतेरपि तादृशव्यापारतया तदुत्तरं शाब्दबोधापत्तिर्दुर्वारैवेति वाच्यम्। पदज्ञानजन्यत्वस्योद्बोधकविधया पदज्ञाननिष्ठकारणतानिरूपितकार्यत्वरूपस्य निवेशात्, उक्तपदस्मृतौ तु पदानुभवस्योद्बोधकविधया हेतुत्वाऽभावेन तस्यास्तादृशपदार्थस्मृतिरूपत्वाभावेन नोक्तापत्त्यवकाश इति तत्त्वम्।

**तत्रापि**। पदजन्यपदार्थोपस्थितावपि। घटकत्वं सप्तम्यर्थः। अन्वयश्चास्य-पदजन्यत्वे। **वृत्त्या**। वृत्तिज्ञानेन। सहार्थे तृतीया। तथा च पदजन्यपदार्थोपस्थिति-घटकं पदजन्यत्वं वृत्तिज्ञानसहकारेण बोध्यमिति समुदितार्थः। ननु वृत्तिरूपसंबन्ध-

पदार्थधीरिति । पदजन्यपदार्थस्मरणं व्यापारः। अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः । तत्रापि वृत्त्या पदजन्यत्वं बोध्यम्, अन्यथा घटादिपदात्समवायसंबन्धेनाऽऽकाशस्मरणेजाते आकाशस्यापि शाब्दबोधापत्तेः ।

स्मरण वह व्यापार होता है–( अन्यथा यदि केवल पदार्थोपस्थिति को ही व्यापार मानेंगे–अर्थात् पदजन्यत्व पदार्थोपस्थिति में नहीं देंगे तो ) जिस पुरुष को घटशब्द का ज्ञान कानों से सुन कर हुवा–अथ च घटरूप अर्थोपस्थिति चक्षुरादिइन्द्रियरूपप्रत्यक्षप्रमाण से हुवी–उसको भी शाब्दबोध होना चाहिये–( क्योंकि शाब्दबोध का कारण पदज्ञान तथा पदार्थोपस्थिति दोनों मौजूद हैं–यदि पदजन्यत्व दिया तो वह पदार्थोपस्थिति प्रत्यक्षादि से जन्य है–पदजन्य नहीं है अतः शाब्दबोध की आपत्ति नहीं है ) पदार्थोपस्थिति में जो पदजन्यत्व है–वह शक्ति–लक्षणान्यतररूप जो वृत्ति–उस वृत्तिरूप सम्बन्ध के द्वारा जानना चाहिये। अन्यथा यदि ऐसा नहीं कहेंगे तो जिस पुरुष को घटशब्द सुनाई दिया–वर्णात्मक शब्द को पद कहते हैं—अतः शब्द और पद पर्याय वाचक हैं। शब्द समवायसम्बन्ध से आकाश में रहता है अतः उस पुरुष को घटशब्द सुनकर अर्थात् घटपद का श्रोत्र से प्रत्यक्ष होने के उपरान्त आकाश का स्मरण होने पर आकाश का शब्दबोध होना चाहिये। शब्द-और-अर्थ इन दोनों के सम्बन्ध का नाम वृत्ति है–( अर्थात् शब्द को सुनकर जो अर्थ की उपस्थिति होती है वह कहीं शक्तिरूप सम्बन्धद्वारा कहीं लक्षणारूपसम्बन्धद्वारा ) अतः वृत्ति शक्ति-लक्षणा के भेद से दो प्रकार की है। ( अत्रैव ) यहीं ( पदजन्यपदार्थोपस्थिति में ही ) शक्तिज्ञान की उपयोगिता है–क्योंकि पूर्व में अर्थ में पद की शक्ति का निश्चय यदि नहीं होगा तो पदज्ञान रहने पर भी शक्तिरूप सम्बन्ध द्वारा अर्थ की उपस्थिति ( स्मरण ) नहीं हो सकेगी–कारण की पदज्ञान एक ( पदात्मक ) सम्बन्धिज्ञान विधया–अपर ( अर्थात्मक ) सम्बन्धी का स्मारक होता है। ( अर्थात् जिस व्यक्ति ने कोई भी शब्द जब कि कानों से सुन लिया तो सुनने के बाद–उस पद की शक्ति जिस अर्थ मे होगी–उस पदरूप सम्बन्धि के ज्ञान से उसी अर्थ रूप सम्बन्धि

---

ज्ञानस्य कथं पदार्थोपस्थितिसहकारित्वमिति चेदित्थम्। एकसम्बन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायेन पदपदार्थयोर्वृत्तिरूपसंबन्धज्ञाने सत्येव पदज्ञानात्पदार्थस्मरणं जायते न तु पदज्ञानमात्रात्, हस्तिहस्तिपकयोः सम्बन्धाज्ञाने हस्तिपकदर्शनेऽपिहस्तिनोऽस्मरणादिति संबन्धज्ञानस्य सबन्धिज्ञानसहकारित्वं बोध्यम्। अन्यथा। वृत्त्येत्यस्यानुपादाने वृत्तिज्ञानसहकृतत्वानिवेशे इति यावत्।

घटादिपदादिति । घटादिपदज्ञानादित्यर्थः। समवायसंबन्धेन । समवायसंबन्धज्ञानेन। सहार्थे तृतीया। तथा च वृत्तिज्ञानसहकृतत्वानिवेशे समवायसंबन्धज्ञानसहकृत "घट" पदज्ञाननिष्ठसंबन्धिज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयीभूतादाकाशस्मरणादाकाशस्य शाब्दबोधापत्तेः। वृत्तिज्ञानसहकृतत्वनिवेशे तु वृत्तिज्ञानसहकृतघटपदज्ञानस्याकाशस्मृतावहेतुतया नाकाशादिशाब्दबोधापत्तिरिति भावः।

वृत्तिश्चशक्तिलक्षणान्यतरः संबन्धः । अत्रैव शक्तिज्ञानस्योपयोगः । पूर्वं शक्तिग्रहाभावे पदज्ञानेपि तत्संबन्धेन स्मरणानुपपत्तेः । पदज्ञानस्य हि एकसंबन्धिज्ञानविधया पदार्थोपस्थापकत्वम् ।

शक्तिश्च पदेन सह पदार्थस्य संबन्धः । सा चाऽस्मच्छब्दादयमर्थो बोधव्य इतीश्वरेच्छारूपा ।

का स्मरण होगा—हस्ती-और हस्तिपकस्थल में यह अनुभव हो चुका है ) पद के साथ जो अर्थ का सम्बन्ध वही शक्ति है । और वह सम्बन्ध "अस्माच्छब्दादयमर्थो बोद्धव्यः" अर्थात् इस पद से यह अर्थ जानना चाहिए, इत्याकारक ईश्वरेच्छारूप ही है । जैसे घट शब्द से कम्बुग्रीवादिमान् व्यक्तिरूप अर्थ को जानना चाहिये—यह ईश्वरेच्छा ही शक्ति है । चैत्र-मैत्र

---

अथ वृत्तिर्यदि शक्तिः तदा गङ्गापदस्य तीरे शक्त्यभावेन वृत्तिज्ञान-सहकृतगङ्गादिपदज्ञानजन्यतीरस्मृतेरभावाद् गङ्गायां घोष इत्यादौ गङ्गादिपद-ज्ञानात्तीरविषयकशाब्दबोधानुपपत्तिरत आह । **वृत्तिश्चेति** । वृत्तिपदार्थश्चेत्यर्थः । **शक्तिलक्षणान्यतर इति** । शक्तिलक्षणान्यतरात्मक इत्यर्थः । तथा च वृत्तिशब्दस्य नानार्थकतया तीरोपस्थितेः शक्तिज्ञानसहकृतगङ्गापदज्ञानजन्यत्वाभावेपि लक्षणाज्ञान-सहकृतगङ्गापदज्ञानजन्यत्वान्न गङ्गापदात्तीरबोधानुपपत्तिरिति भावः ।

अत्रेदं बोध्यम् । वृत्तित्वं शाब्दबोधजनकोपस्थितिजनकज्ञानविषयत्वम् । अत एव "शाब्दबोधौपयिकोपस्थितिजनकः पदपदार्थयोः संबन्धः कल्प्यते" इति शब्दमण्यालोके मिश्रैरभिहितम् । न चोपस्थित्यात्मकाऽऽकांक्षाज्ञानजनकवाक्यविषय-कानुभवविषयेऽव्यवहितोत्तरत्वरूपे वृत्तित्वापत्तिरिति वाच्यम् । शाब्दबोधनिरूपिता या स्मृतित्वावच्छिन्नजनकता तन्निरूपिताव्यवहितोत्तरत्वसंबन्धावच्छिन्नावच्छेदक-तानिरूपितावच्छेदकतावत्सांसर्गिकविषयतावत्त्वस्य विवक्षितत्वात् । आकांक्षाज्ञानस्य शाब्दबोधं प्रति निश्चयत्वेनैव कारणत्वं न तूपस्थितित्वेन नातः पूर्वोक्तदोषावकाश इति । **अत्रैव** । पदजन्यपदार्थोपस्थितावेव । एवकारेणाशाब्दबोधव्यावृत्तिः । **शक्तिज्ञानस्य** । वृत्तिज्ञानस्य । **उपयोगः** । कारणत्वम् तथा च वृत्तिज्ञानं शाब्दबुद्धावन्यथासिद्धमिति भावः । ननु तर्हि पदार्थोपस्थितावपि तस्याऽहेतुत्वमस्तु इत्यत आह । **पूर्वमिति** । पदार्थोपस्थितिपूर्वकालमित्यर्थः । पदज्ञानोत्पत्तिक्षणे इति यावत् । **शक्तिग्रहाभावे** । वृत्तिग्रहाभावे । शक्तिज्ञानाभावे शक्यसंबन्धरूपलक्षणाग्र-हस्याप्यसंभवादिति ध्येयम् । **पदज्ञानेपि** । पदज्ञाने जातेपि । एतेन वृत्तिज्ञानातिरिक्त स्मृतिसामग्रीसत्त्वमाविष्कृतम् । **तत्संबन्धेन** । पदसंबन्धितावच्छेदकघटत्वादिप्रकारेण । **स्मरणानुपपत्तेरिति** । घटादिस्मरणाऽजननादित्यर्थः । तथा च केवलपदज्ञानेन न पदार्थोपस्थितिरित्यभिप्रायेणैव कारिकायां शक्तिधियः पदज्ञानसहकारित्वमुक्तमिति भावः । ननु वृत्तिज्ञानेन पदज्ञानस्यान्यथासिद्धत्वमस्त्वित्यत आह ।

बोधविषयत्वप्रकारकेच्छायास्तीरेपि सत्वाच्छक्त्यैव तीरबोधोपपत्तेर्लक्षणोच्छेदापत्तिरिति समाहितम् ।

पदविशिष्टो अर्थोभवतु इति इच्छायां पदप्रतियोगिकोऽर्थानुयोगिकः सबन्धोबोध्यः । अर्थे पद वै० भगवदिच्छीयस्वजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन ।

पदं वाचकं भवति । अर्थो वाच्यो भवति । उभयत्र भगवदिच्छीयजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता वचधात्वर्थः । आद्ये तादृशविशेष्यतानिरूपकविषयत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकबोधनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकजन्यत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकनिरूपितत्वसम्बन्धावच्छिन्नप्रकारताश्रयत्वरूपं कर्तृत्वं कर्तृप्रत्ययेन बोध्यते तस्य च पदेऽन्वयः ।

एवं च भगवदिच्छीयजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपिता या विशेष्यता तन्निरूपकविषयत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकबोधनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकजन्यत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकनिरूपितत्वसम्बन्धावच्छिन्नप्रकारताश्रयः पदमिति पदं वाचकमिति वाक्याद्बोधः ।

द्वितीये च धात्वर्थ उक्त एव । आश्रयत्वं कर्मप्रत्ययार्थः । एवं च भगवदिच्छीयजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यताश्रयोऽर्थ इति अर्थो वाच्य इति वाक्याद्बोधः ।

इदमत्रावधेयम् । इदं पदममुमर्थं बोधयतु इति पदविशेष्यकेच्छाया अपि तथात्वम्, विनिगमनाविरहात् । अर्थमित्यत्र द्वितीयार्थोविषयित्वं, तस्य बुधधात्वर्थे बोधे अन्वयः । णिजर्थोजनकत्वम् । तथा चैतदर्थविषयकबोधजनकतावत्पदं भवतु इति एतदर्थविषयकबोधजनकत्वप्रकारकपदविशेष्यकेच्छालाभः ।

लक्षणास्थले तीरविषयको बोधोभवतु गंगापदं बोधजनकतावद् भवतु इति विशकलितेच्छाकल्पनेन तीरविषयकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः गंगापदे विरहेण गंगापदे तीरबोधकत्वाभावाद् गंगापदात्तीरविषयकशाब्दबोधनिर्वाहाय लक्षणाङ्गीकारस्यावश्यकत्वात् ।

अर्थविशिष्टं पदं भवतु इतीच्छायां अर्थप्रतियोगिकः पदानुयोगिकः सम्बन्धो बोध्यः । पदे अर्थ वै० भगवदिच्छीयस्वविषयकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेति ।

पद मर्थवाचकं भवति—अर्थः पदवाच्योभवति । उभयत्र भगवदिच्छीय स्वविषयकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता वचधात्वर्थः । आश्रयत्वं कर्तृप्रत्ययार्थ आद्ये । एवं च भगवदिच्छीय अर्थविषयकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यताश्रयः पदमिति बोधः । द्वितीये च धात्वर्थ उक्त एव । स्वनिरूपकजनकत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकबोधनिष्ठनिरूपितत्वसंबन्धावच्छिन्नप्रकारत्वावच्छिन्नविशेष्यतानिरूपकविषयित्वसम्बन्धावच्छिन्नप्रकारताश्रयत्वं कर्म प्रत्ययार्थः । एवं च पदनिष्ठा या बोधजनकतात्वावच्छिन्नप्रकारतानिरूपित-

पदज्ञानस्य हीति। पदज्ञानस्यापीत्यर्थः। पदार्थोपस्थापकत्वमिति। पदार्थस्मारकत्वमित्यर्थः। तथा च हस्तिनो हस्तिपकस्याधाराधेयभावरूपसंबन्धसत्त्वेऽपि यथा हस्तिदर्शने एव हस्तिपकस्मरणम्, तथा पदपदार्थयोः संबन्धज्ञानसत्त्वेऽपि पदज्ञानोत्तरमेवाऽर्थस्मरणमनुभवसिद्धमिति वृत्तिरूपसंबन्धज्ञानस्येव संबन्धिज्ञान विधया पदज्ञानस्यापि "उपस्थितौ" हेतुत्वमावश्यकमिति भावः। शक्तिं निरूपयति शक्तिश्चेति। अप्यर्थे चकारः तथा च शक्तिः लक्षणा च पदपदार्थयोः संबन्ध इत्यर्थः स च संबन्धः पदप्रतियोगिकोऽर्थानुयोगिकः, अर्थप्रतियोगिकः पदानुयोगिकश्चेति अनुपदमेव व्यक्तीभविष्यति। शक्तिरतिरिक्तः पदार्थ इति मीमांसक मतनिरासाय तां क्रमशस्तार्येष्वन्तभावयति। साचेति। शक्तिश्चेत्यर्थः। अवधारणे च शब्दः रूपेत्युत्तरं योजनीयः ईश्वरेच्छा रूपैव नातिरिक्ता गौरवादिति भावः। ननु इच्छारूपायाः शक्तेः संसर्गत्वमसंभवि, निष्प्रतियोगिकत्वात्, कथं वा घट पदस्य शक्तिर्घटे, न तु पटादाविरत्यादिनियमोपपत्तिः ईश्वरेच्छायाः सर्वविषयकत्वादित्यतस्तस्याः विषयविशेषघटितत्वेन सप्रतियोगिकत्वं नियामकत्वं चोपपादयति अस्माच्छब्दादिति। अस्मात्पदज्ञानादित्यर्थः। जन्यत्वं पञ्चम्यर्थः। तत्र निरूपितत्वसंबन्धेन प्रकृत्यर्थस्यान्वयः। तस्य च "बोद्धव्य इत्यत्र" बुधधात्वर्थे बोधेऽन्वयः। तस्य च तव्यप्रत्ययार्थविषयतायां निरूपितत्वसंबन्धेनाऽन्वयः। तस्याश्चाश्रयत्व-संबन्धेन अर्थेऽन्वयः। एतत्पदज्ञानजन्यबोधविषयतावानयमर्थो भवत्वितीच्छाकारो बोध्यः। अत्र एतत्पदज्ञानजन्यबोधविषयताप्रकारः। अर्थो विशेष्यः। अथ घटपद-जन्यबोधविषयत्वप्रकारकेच्छायाः घटपदशक्तिरूपत्वे तस्याः ईश्वरस्याश्रितत्वेन घटे घटपदशक्तिर्न स्यात्। न च विशेष्यतासंबन्धेन तादृशेच्छावत्त्वं शक्तिः, एवं च विशेष्यतासंबन्धेन तादृशेच्छायाः घटे सत्त्वेन न घटे घटपदवाच्यत्वानुपपत्तिरिति वाच्यम्। ईश्वरस्यानेकेच्छाकल्पने गौरवाद् घटपदाद् घटो बोद्धव्यः, पटपदात् पटो बोद्धव्य इति समूहालम्बनरूपैकेच्छाव्यक्तेरेव तत्राङ्गीकरणीयतया तस्याश्च विशेष्यतासंबन्धेन पटेऽपि सत्त्वेन घटपदवाच्यत्वप्रसंगादिति चेन्न। इच्छीयघटप-दजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावत्त्वस्य तत्पदवाच्यतारूपत्वात्। एवं चेश्वरेच्छीयघटपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपित-विशेष्यतावत्त्वस्य पटे विरहात्पटादौ न घटपदवाच्यत्वप्रसंगः। अत्रेदं बोध्यम्। तीरादौ गङ्गापदवाच्यत्वव्यवहाराभावेन, तत्रेश्वरेच्छायास्तीरं गङ्गापदजन्यबोधविषयता-वद् भवतु इत्याकारकता न स्वीक्रियते, अपि तु गङ्गापदजन्यबोधो भवतु तीरं बोधविषयो भवतु इत्येवं रीत्या बोधांशे गंगापदजन्यत्वावगाहनेऽपि, तीरांशे बोध विषयतात्वेनैव गंगापद-जन्यबोधविषयत्वमवगाहते इति गंगापदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरू-पितविशेष्यतावत्त्वस्य विरहेण तीरादौ गंगापदवाच्यत्वाभावाद् तीरविषयकशाब्द-बोधनिर्वाहाय लक्षणाङ्गीकार आवश्यक इति ध्येयम्। एतेन भगवदिच्छायाः सन्मात्रविषयकत्वेन गंगापदाल्लक्षणया तीरबोधस्यापि जायमानत्वेन गंगापदजन्य-

बोधविषयत्वप्रकारकेच्छायास्तीरेपि सत्वाच्छक्त्यैव तीरबोधोपपत्तेर्लक्षणोच्छेदापत्तिरिति समाहितम्।

पदविशिष्टो अर्थोभवतु इति इच्छायां पदप्रतियोगिकोऽर्थानुयोगिकः सवन्धो-बोध्यः। अर्थे पद वै० भगवदिच्छीयस्वजन्यबोधविषयतात्वावच्छिन्नप्रकारता-निरूपितविशेष्यतासंबन्धेन।

पदं वाचकं भवति। अर्थो वाच्यो भवति। उभयत्र भगवदिच्छीयजन्यबोध-विषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता वचधात्वर्थः। आद्ये तादृशविशेष्य तानिरूपकविषयत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकबोधनिष्ठप्रकारत्वावच्छिन्न-विशेष्यतानिरूपकजन्यत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकनिरूपितत्वसम्बन्धा-वच्छिन्नप्रकारताश्रयत्वरूपं कर्तृत्वं कर्तृप्रत्ययेन बोध्यते तस्य च पदेऽन्वयः।

एवं च भगवदिच्छीयजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपिता या विशेष्यता तन्निरूपकविषयत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकबोधनिष्ठप्रकार-त्वावच्छिन्नविशेष्यतानिरूपकजन्यत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकनिरूपित-त्वसम्बन्धावच्छिन्नप्रकारताश्रयः पदमिति पदं वाचकमिति वाक्याद्बोधः।

द्वितीये च धात्वर्थ उक्त एव। आश्रयत्वं कर्मप्रत्ययार्थः। एवं च भगवदि-च्छीयजन्यबोधविषयतात्पावच्छिन्नप्रकारतानिरूपितविशेष्यताश्रयोऽर्थ इति अर्थो वाच्य इति वाक्याद्बोधः।

इदमत्रावधेयम्। इदं पदममुमर्थं बोधयतु इति पदविशेष्यकेच्छाया अपि तथात्वम्, विनिगमनाविरहात्। अर्थमित्यत्र द्वितीयार्थोविषयित्वं, तस्य बुधधात्वर्थे बोधे अन्वयः। णिजर्थोजनकत्वम्। तथा चैतदर्थविषयकबोधजनकतावत्पदं भवतु इति एतदर्थविषयकबोधजनकत्वप्रकारकपदविशेष्यकेच्छालाभः।

लक्षणास्थले तीरविषयको बोधोभवतु गंगापदं बोधजनकतावद् भवतु इति विशकलितेच्छाकल्पनेन तीरविषयकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितविशेष्य-तायाः गंगापदे विरहेण गंगापदे तीरबोधकत्वाभावाद् गंगापदात्तीरविषयकशाब्द-बोधनिर्वाहाय लक्षणाङ्गीकारस्यावश्यकत्वात्।

अर्थविशिष्टं पदं भवतु इतीच्छायां अर्थप्रतियोगिकः पदानुयोगिकः सम्बन्धो बोध्यः। पदे अर्थ वै० भगवदिच्छीयस्वविषयकबोधजनकतात्वावच्छिन्नप्रकारता-निरूपितविशेष्यतासम्बन्धेनेति।

पद मर्थवाचकं भवति—अर्थः पदवाच्योभवति। उभयत्र भगवदिच्छीय स्वविषयकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता वचधात्वर्थः। आश्रयत्वं कर्तृप्रत्ययार्थ आद्ये। एवं च भगवदिच्छीय अर्थविषयकबोधजनकतात्वावच्छिन्न-प्रकारतानिरूपितविशेष्यताश्रयः पदमिति बोधः। द्वितीये च धात्वर्थ उक्त एव। स्वनिरूपकजनकत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकबोधनिष्ठनिरूपितत्वसंबन्धा-वच्छिन्नप्रकारत्वावच्छिन्नविशेष्यतानिरूपकविषयित्वसम्बन्धावच्छिन्नप्रकारताश्रयत्वं कर्म प्रत्ययार्थः। एवं च पदनिष्ठा या बोधजनकतात्वावच्छिन्नप्रकारतानिरूपित-

आधुनिके नाम्नि शक्तिरस्त्येव। एकादशेऽहनि पिता नाम कुर्यादितीश्वरेच्छायाः सत्वात्। आधुनिके संकेतितेतु न शक्तिरिति संप्रदायः। नव्यास्तु ईश्वरेच्छा न शक्तिः किन्तु इच्छैव, तेनाधुनिकसंकेतितेपि शक्तिरस्त्येवेत्याहुः।

शक्तिग्रहस्तु व्याकरणादितः। तथा हि—

शक्तिग्रहं व्याकरणो पमानकोषाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् व्यवहारतश्च सान्निध्यतः सिद्धपदस्य वृद्धाः॥

धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद् भवति। क्वचित्सति बाधके त्यज्यते।

आधुनिकनामों में भी शक्ति है—क्योंकि ग्यारहवें दिन पिता को अपने पुत्र का नामकरण करना चाहिये ऐसा श्रुति कहती है। और नदी-वृद्धि सया यह जो आधुनिक संकेत है उसमें शक्ति नहीं है, ऐसा सम्प्रदायिक लोग कहते हैं। नवीन कहते हैं कि ईश्वरेच्छा शक्ति नहीं है अपितु इच्छामात्र ही शक्ति है अतः आधुनिक संकेत में भी शक्ति है। शक्तिग्रह व्याकरणादि से होता है—तथाहि—(१) व्याकरण (२) उपमान (३) कोष (४) आप्तवाक्य (५) व्यवहार (६) वाक्यशेष (७) विवृति (विवरण) (८) प्रसिद्धपद का सान्निध्य—इनसे शक्ति का निश्चय होता है। धातु-प्रकृति-प्रत्यय आदि की शक्ति का निश्चय व्याकरण से होता है—परन्तु कहीं किसी बाधक के होने पर शक्ति को त्याग दिया जाता है। जैसे वैयाकरण

---

विशेष्यता तन्निरूपकजनकत्वनिष्ठप्रकारतावच्छिन्नविशेष्यतानिरूपकत्व,धनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नविशेष्यतानिरूपकविषयित्वसम्बन्धावच्छिन्नप्रकारताश्रयो अर्थः इति बोधः।

आधुनिके नाम्नि शक्तिरस्त्येवेति ग्रन्थः आधुनिकसंकेतिते तु न शक्तिरिति ग्रन्थविरुद्ध इत्याशंकां नामपदस्य नामविशेषपरतां स्वीकृत्य निराकरोति आधुनिके इति। आधुनिकैः पित्रादिभिः एकादशेऽहनि उच्चरितनाम्नीत्यर्थः। शक्तिरस्त्येवेति। ईश्वरेच्छारूपशक्तिसत्वादित्यर्थः। एतदेवोपपादयति। एकादशेऽहनीति। पुत्रस्येत्यध्याहार्यम्। पिता नाम कुर्यादित्यनन्तरं श्रुत्या इति पूरणीयम्। इतीश्वरेच्छायाः सत्वादिति। एकादशाहकालीनपित्रुच्चरित "दित्रदत्तादि" नाम पुत्रविषयकबोधजनकं भवतु इतीश्वरेच्छायाः सत्वादित्यर्थः। आधुनिकसंकेतिते तु इति। आधुनिकमात्रसंकेतिते नदीवृद्ध्यादिपदे तु इत्यर्थः। मात्रपदेनेश्वरव्यावृत्तिः। नशक्तिरिति। भगवदिच्छायास्तत्राऽसत्वादिति भावः। संप्रदायमते अस्वरसं नवीनमतं च दर्शयति। न शक्तिरिति। तथा सति शक्तिभ्रमं लक्षणामहं वान्तरेण आधुनिकसंकेतितनद्यादिपदाच्छाब्दबोधो न स्यादिति भावः। सम्प्रदायमते च

तत्र शक्तिभ्रमादेव शाब्दबोध इत्यवधेयम् । मतद्वयेपि अपभ्रंशात्मकगगर्यादिपदे शक्तिभ्रमादेव बोध इत्यवधेयम् । **किन्तु इच्छैवेति** । तत्पदजन्यबोधविषयत्व प्रकारतानिरूपितविशेष्यतासम्बन्धेनकेवलेच्छायास्तत्रापि सत्वादिति भावः । **तेन** । केवलेच्छायाः शक्तित्वस्वीकारेण । नवीनमते अपभ्रंशात्मकगगर्यादिपदेऽपि आधुनिकेच्छासत्वादभ्रान्तस्यापि गगर्यादिपदाच्छाब्दबोधापत्तिरित्यस्वरस आहुरित्यनेन सूचितः ।

शक्तिग्राहकप्रमाणं दर्शयति । **शक्तिग्रहस्त्विति** । अवधारणार्थकस्तुशब्दो-व्याकरणादित इत्युत्तरं योजनीयः । तथा च व्याकरणादित एव शक्तिग्रह इति भावः । अस्मिन्नर्थे आचार्योक्तिं प्रमाणयति । **तथाहीत्यादिना** । व्याकरणाच्छक्तिग्रहस्थलं दर्शयति । **धातुप्रकृतीति** । धातुप्रातिपदिकेत्यर्थः । यद्यपि प्रकृतिपदेनैव धातोरपि ग्रहणात्पृथग्धातुपदं व्यर्थम्, तथापि स्पष्टार्थं तदुक्तम् ।

तदुक्तं जगदीशेन—निरुक्ता प्रकृतिर्द्वेधा नामधातुप्रभेदतः ।
यत्प्रातिपदिकं प्रोक्तं तन्नाम्नोनातिरिच्यते इति ।

धातुलक्षणं चोक्तं तेनैव—योयत्स्वार्थस्योत्तरस्थतृजर्थे बोधनक्षमः ।
स तादृशार्थकः शब्दो धातुस्त्रिविध ईरित इति ।
'अथवा' यः सुबर्थे निजार्थस्य स्वान्ते कृच्चिन्तनं विना ।
यादृशस्यान्वयाऽहेतुः स वा धातुस्तदर्थकः ।

प्रातिपदिकलक्षणम्—येन स्वीययदर्थस्य मुख्यतः प्रतिपादने ।
स्वोत्तरप्रथमाऽपेक्षा तन्नाम स्यात्तदर्थकम् ।

प्रत्ययलक्षणम्—यादृशार्थे प्रकृत्यन्यो निपातान्यश्च वृत्तिमान् ।
स तादृशार्थे शब्दः स्यात्प्रत्ययोसौ चतुर्विधः ।

प्रत्ययादीनामित्यादिना निपातपरिग्रहः । **व्याकरणादिति** । भूसत्तायामित्यादिव्याकरणाद्धातूनां तत्तदर्थे शक्तिग्रहः । धातुस्त्रिविधः तदुक्तं—
मूलधातुर्गणोक्तोसौ सौत्रः सूत्रैकदर्शितः ।
योगलभ्यार्थकोधातुः प्रत्ययान्तः परिकीर्तित इति ।

पाचकादिप्रातिपदिकानां व्याकरणाच्छक्तिग्रहः । पचधातोः पाकार्थकत्वस्य तदुत्तरकृत्प्रत्ययस्य कर्तृत्वार्थकत्वस्य च तत्र प्रतिपादनात् । वस्तुतो धातुप्रकृतीत्यस्य धातुरूपप्रकृतीत्यर्थः । घटादिप्रातिपदिकानां तु कोषादेवशक्तिग्रह इति मन्तव्यम् । वर्तमाने लट्—इत्यादिव्याकरणात्प्रत्ययानां शक्तिग्रहस्तत्तदर्थे । प्रत्ययश्चतुर्विधः, तेनैवोक्तम्

विभक्तिश्चैव धात्वंशस्तद्धितः कृदिति क्रमात्
चतुर्धा प्रत्ययाःप्रोक्ताः कादिभिः पञ्चधाऽथवा ।
विभक्तिश्च सुप्तिङ्भेदेन द्विविधा ।
संख्यात्वव्याप्यसामान्यैः शक्तिमान्प्रत्ययस्तु यः
सा विभक्तिर्द्विधा प्रोक्ता सुप्तिङौ चेति भेदत इति ।

यथा वैयाकरणैराख्यातस्य कर्तरि शक्तिरुच्यते चैत्रः पचतीत्यादौ कर्त्रा सह चैत्रस्याऽभेदान्वयः। तच्च गौरवात्त्यज्यते, किन्तु कृतौ शक्ति लाघवात्। कृतिश्चैत्रादौ प्रकारीभूय भासते।

लोग आख्यात जो 'तिप्' आदि हैं—उनकी शक्ति कर्त्ता में मानते हैं तब "चैत्रःपचति" यहाँ पर पच् धातु का अर्थ हुवा 'पाक' 'तिप्' यह जो आख्यात-इसका अर्थ हुवा कर्त्ता—तो पचति का अर्थ हुवा 'पाककर्त्ता' और उसका चैत्र के साथ अभेदान्वय हो जावेगा-अर्थात् "पाककर्त्ता चैत्रः" यह बोध 'चैत्र पचति' इस वाक्य से वैयाकरणों के यहाँ होता है—किन्तु कर्त्ता में शक्ति का अनङ्गीकार करके छोड़ देते हैं गौरव होने से—गौरव यह है कि कर्त्ता में शक्ति मानने पर शक्य कर्त्ता हुवा—शक्यतावच्छेदक कर्तृत्व (कृति) वह अनित्य-तथा अनन्त है—(अतःनैयायिक कहते हैं कि) कृति में शक्ति है—क्योंकि लाघव है-(लाघव यह है कृति में शक्ति मानने पर शक्य कृति हुवी—शक्यतावच्छेदक कृतित्व हुवा-वह नित्य है तथा एक है जातिरूप होने से) और वह कृति चैत्र आदि कर्त्ता में (विशेषण) होकर भासती है। (अर्थात् 'चैत्रःपचति' पच् धातु का अर्थ हुआ पाक, आख्यात (तिप् का अर्थ हुवा कृति—धात्वर्थ का आख्यातार्थ में अनुकूलत्व (जनकत्व) सम्बन्ध से अन्वय होता है—और आख्यातार्थ (कृति) का समवायसम्बन्ध से कर्त्ता चैत्र में अन्वय होता है—इस प्रकार नैयायिक मत से यह बोध होता है कि "पाकानुकूलकृतिमांश्चैत्रः")

---

प्रत्ययादीनामित्यादिना निपातपरिग्रहः। भवति—जायते। क्वचिदिति। कुत्रचिदित्यर्थः। सति बाधके। गौरवादिज्ञानस्य बाधकत्वे। त्यज्यते इति। शक्तिरित्यादिः। इममेवार्थं दर्शयति। यथेति। चैत्रः पचतीत्यादिवाक्ये इत्यर्थः। समन्वयबोधघटकत्वम्, तस्याऽऽख्यातस्येत्यनेनाऽन्वयः। कर्तरि शक्तिरुच्यते इति। लःकर्मणि च भावे चाऽकर्मकेभ्य इति सूत्रेकर्तरिकृदिति सूत्रस्थं कर्तरीति पदमनुवर्तते, तथा च सकर्मकधातुसमभिव्याहृतलकाराः कर्तृवाचकाः कर्मवाचकाश्च स्युः। अकर्मकधातुसमभिव्याहृतलकाराः कर्तृवाचका भाववाचकाश्च स्युरिति फलितोऽर्थः। कर्त्रासह। आख्यातार्थकर्त्रा सह। एवं चाऽऽख्यातार्थकर्तृकर्मणोः प्रथमान्तार्थेन सहाऽभेदान्वयः। धात्वर्थमुख्यविशेष्यकश्च बोधः। चैत्रः तण्डुलं पचति-चैत्रेण पच्यते तण्डुलः इत्यत्र चैत्रकर्तृकः तण्डुलकर्मकः पाकः इति बोधः। तच्च। कर्तुः शक्यत्वं च। गौरवादिति। कर्तृत्वस्य कृतिरूपस्य शक्यतावच्छेदकत्वे गौरवादित्यर्थः। नैयायिकमतमाह। किन्त्विति। लाघवादिति। कृतित्वजातेः शक्यतावच्छेदकत्वे लाघवादित्यर्थः। कृतित्वविशिष्टानामनन्तकृतीनां शक्यतावच्छेदकत्वे गौरवम्, अनुलिख्यमान जातेरेव स्वरूपतोभानाभ्युपगमेन कृतेः स्वरूपतः शक्यतावच्छेदकत्वाऽसंभवादिति भावः। कृतिरिति। शाब्दबोधे इत्यादिः। भासते इति। तथाचैतन्मते धात्वर्थविशेष्यकबोधस्य सर्वत्रानभ्युपगमेन प्रथमान्तार्थमुख्य-

विशेष्यकबोधस्यैव स्वीकरणीयतया कृतिप्रकारकचैत्रादिविशेष्यकबोधो नानुपपन्न इति भावः।

ग्रामं गच्छति चैत्र इत्यत्र "कर्तुरीप्सिततमं कर्मेति" सूत्रेण ग्रामस्य कर्मसंज्ञा। क्रियाजन्यफलाश्रयत्वप्रकारतानिरूपितकर्तृसमवेतेच्छीयविशेष्यतावान्कर्मसंज्ञ इति सूत्रार्थः। एवं च क्रियाजन्यफलाश्रयोग्रामोभवतु इतीच्छीयकर्तृवृत्ति क्रियाजन्यफलाश्रयाश्रयत्वप्रकारतानिरूपितविशेष्यताया ग्रामे सत्वाद् ग्रामस्य कर्मसंज्ञा भवति। ततश्च **कर्मणि द्वितीयेत्यनुशासनेन** कर्मत्वार्थे द्वितीया। कर्मत्वं चोत्तरदेशसंयोगादिरूपफलमेव, तत्र प्रकृत्यर्थस्याधेयतयाऽन्वयः। तस्य चानुकूलत्वसंबन्धेन गमधात्वर्थे व्यापारेऽन्वयः। तस्य च कृतावनुकूलत्वसंबन्धेनान्वयः। कृतिश्चाख्यातार्थः, । तस्याश्चैत्रे। ग्रामवृत्ति संयोगानुकूलव्यापारानुकूलकृतिमांश्चैत्र इति बोधः। चैत्रेण गम्यते ग्राम इत्यत्रतृतीयार्थः कृतिः, तत्राधेयतया चैत्रस्यान्वयः, तस्याश्च जन्यतासंबन्धेन धात्वर्थे व्यापारे, तस्य च जन्यतासंबन्धेन आख्यातार्थे फले, तस्य चाश्रयतासंबन्धेन ग्रामे। तथा च चैत्रवृत्तिकृतिजन्य व्यापारजन्यसंयोगाश्रयोग्राम इति बोधः।

अत्रेदं बोध्यम्। प्राचीनमते धातो र्व्यापारमात्रवाचित्वम्। फलविशेषश्च द्वितीयार्थः। नव्यमते च धातोः फलावच्छिन्नव्यापारवाचित्वम्। आधेयत्वं कर्मप्रत्ययार्थः। शाब्दबोधस्तु उक्त प्राय एव।

अथ व्यापारजन्यफलाश्रयत्वस्य कर्मत्वे ग्रामस्येव चैत्रस्यापि संयोगरूपफलाश्रयत्वाद् ग्रामं गच्छतीतिवत्स्वं गच्छतीति प्रयोगापत्तिरिति चेन्न—व्यापारविशिष्टफलाश्रयस्य कर्मपदार्थत्वात्। वै० स्वजन्यत्व—स्वावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वोभयसबन्धेन। एतादृशसंबन्धेन क्रियाविशिष्टधात्वर्थफलाश्रयत्वस्य ग्रामे एव सत्वेन नोक्तापत्तिः। एवं च चैत्रो ग्रामं गच्छतीत्यत्र द्वितीयार्थः संयोगः तत्राधेयतया प्रकृत्यर्थाऽन्वयः। तस्य च स्वजनकत्व—स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसंबन्धेन धात्वर्थेव्यापारेऽन्वयः। तस्यानुकूलत्वसंबन्धेन ऽऽख्यातार्थकृतौ, तस्यां आश्रयत्वसंबन्धेन प्रथमान्तार्थेऽन्वयः। एवं च ग्रामवृत्तिसंयोगविशिष्टव्यापारानुकूलकृतिमांश्चैत्र इति। चैत्रेण गम्यते इत्यत्र चैत्रस्याधेयतय तृतीयार्थकृतौ, कृतेश्च जन्यतासंबन्धेन धात्वर्थव्यापारे, तस्य स्वजन्यत्व स्वावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यभयसंबन्धेन कर्मप्रत्ययार्थसंयोगरूपफले तस्याश्रयतासंबन्धेन ग्रामेऽन्वयः एवं च चैत्रवृत्तिकृतिजन्यव्यापारविशिष्टसंयोग श्रयोग्राम इति बोधः।

अत्र प्रासङ्गिकं किंचिद्विचार्यते। **कर्तुरीप्सिततमं कर्मेतिसूत्रस्य** कर्तुस्वव्यापारजन्यफलाश्रयतया यदीप्सिततमं "यदत्यन्ताभिलापविषयः" तत्कारकर्मसंज्ञं स्यादित्यर्थः। वृक्षात्पर्णं पततीत्यत्र वृक्षपदोत्तरं द्वितीयापत्तिवारणा ईप्सिततममिति, वृक्षस्य पतनक्रियाजन्यविभागरूपफलाश्रयत्वेन कर्मत्वप्रसक्त्य कर्मणिद्वितीयेत्यस्य प्राप्तेः। अथ तस्य कर्मसंज्ञावारणाय कर्तुरीप्सितं कर्मेत्येवास्

कितमप्यग्रहणेन वृक्षादेरीप्सिततरत्वाभावेनैव कर्मसंज्ञानिरासात्। इतिचेन्न। विप्राय गां ददातीत्यत्र स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूलेच्छा दा धात्वर्थः, एवं चोक्तेच्छा-रूपधात्वर्थजन्यस्वत्वस्य निरूपकता'संबन्धेन विप्रे सत्वाद् विप्रं गां ददातीति प्रयोगापत्तिः, तमपग्रहणे तु विप्रस्येप्सिततरत्वेपि ईप्सिततमत्वे प्रमाणाभावात्कर्मत्वा प्रसक्त्या न द्वितीयापत्तिः। न च ग्रामं गच्छन् तृणंस्पृशतीत्यत्र तृणशब्दोत्तरं द्वितीया न स्यात्, तस्येप्सिततमत्वाभावादिति वाच्यम्। तथायुक्तंचानीप्सित-मिति सूत्रेण कर्मसंज्ञाविधानात्तृणस्य। ईप्सिततमवत्, अनीप्सितमपि क्रियाजन्य फलाश्रयः कारकं कर्मसंज्ञं स्यादिति सूत्रार्थः। अत एव इप्सिततमाऽनीप्सित-साधारणक्रियाजन्यफलशालित्वं कर्मत्वमिति नैयायिकाः। न चैवमाश्रयतासंबन्धेन क्रियाजन्यफलवत्वरूपकर्मत्वविवक्षणे विप्राय गां ददातीत्यत्र संप्रदानविप्रस्य निरू-पकतासंबन्धेन दानक्रियाजन्यस्वत्वफलवत्वेपि आश्रतासंबन्धेन स्वत्वरूपफलवत्वा-भावात्कर्मतात्तिवारणेपि वृक्षात्पर्णं पततीत्यत्रवृक्षस्य कर्मत्वापत्तिदुर्वारैव, वृक्षस्या श्रयतासंबन्धेन पतनक्रियाजन्यविभागरूपफलवत्वादिति वाच्यम्। क्रियाजन्यधात्व-र्थफलशालिनः एवकर्मत्वात्। पतधातोरकर्मतया फलस्य धात्वर्थत्वाभावेन उक्ताप-त्त्यनवकाशादिति ध्येयम्। चैत्रो ब्राह्मणाय गां ददातीत्यत्र द्वितीयाया आधे-यत्वमर्थः। तस्य स्वस्वत्वेऽन्वयः। स्वस्वत्वध्वंस विशिष्टपरस्वत्वानुकूला इच्छा धात्वर्थः। निरूपितत्वं चतुर्थ्यर्थः, तस्य द्वितीयस्वत्वेऽन्वयः। तथा च गोवृत्ति स्वस्वत्वध्वंसविशिष्टब्राह्मणनिरूपितस्वत्वानुकूलेच्छाश्रयश्चैत्र इति बोधः। स्वस्वत्वाध्वंसानुकूलपरस्वत्वप्रकारिका इच्छा दाधात्वर्थ इति मते तु स्वत्वध्वंसरूपफलाश्रयत्वाद् गोः कर्मता। बोधः पूर्ववत्। १ गां प्रतिगृह्णातीत्यत्र स्वस्वत्वजनकेच्छा धात्वर्थः। द्वितीयार्थः पूर्ववत्। तथा च गोवृत्तिस्वस्वत्व-जनकेच्छाश्रय इति बोधः। २ तण्डुलं पचतीत्यत्र रूपपरावृत्तिजनकतेजः संयोगोधात्वर्थः। रूपपरावृत्तिफले च तण्डुलवृत्तित्वस्यान्वयः। तथा च तण्डुलवृत्तिरूपपरावृत्तिजनकतेजःसंयोगानुकूलकृतिमानिति बोधः। अवय-विनि पाकानभ्युपगमे तण्डुलपदस्य तण्डुलपरमाणुषु लक्षणा। शेषंपूर्ववत्। ३ ओदनं भुङ्क्ते धात्वर्थो इत्यत्र गलबिलाधःसंयोगावच्छिन्नक्रियानुकूलव्यापारः। तद-शक्रियायां ओदनवृत्तित्वस्यान्वयः। तथा च ओदनवृत्तिगलबिलाधःसंयोगावच्छिन्न-क्रियानुकूलव्यापारानुकूलकृतिमानिति बोधः। गां दोग्धि पयः इत्यत्र पय-पदोत्तर द्वितीया कर्मणिद्वितीयेति सूत्रेण। अकथितं चेति सूत्रेण गोपदोत्तरं द्वितीया, भात्वर्थ-विभागा-तावच्छेदकतावच्छेदकफलाश्रयत्वेन विवक्षितं कर्मसंज्ञं स्यादित्यर्थः। विभागा-वच्छिन्नक्षरणानुकूलव्यापारो दुहधात्वर्थः। उभयत्र द्वितीयार्थ आधेयत्वम्। गोपदोत्तर-........के विभागे, पयोवृत्तित्वस्यक्षरणे "धात्वर्थता-

कृतिमानिति बोधः। अत्र पयः ......

मित्यत्र क्षरणजन्यविभागाश्रयत्वं कर्माख्यातार्थः। क्षीरवृत्तित्वस्य धात्वर्थक्षरणेऽन्वयः। तथा च चैत्रवृत्तिकृतिजन्योयः विभागावच्छिन्नक्षीरनिष्ठक्षरणानुकूलोव्यापारस्तज्जन्यक्षरणजन्यविभागाश्रयो गौरिति बोधः। गौणेकर्मणिदुह्यादेरित्यनुशासनात्।६ **वामनो बलिं याचते वसुधामित्यत्र** स्वस्वत्वोत्पत्त्यनुकूलेच्छाविषयिणीच्छा धात्वर्थः। सा च वामनस्य स्वत्वं वसुधायां भवतु इति च्छा बलेर्भवतु इत्याकारा। वसुधापदोत्तरद्वितीयार्थाधेयत्वस्य प्रथमेच्छाविषयस्वत्वे, बलिपदोत्तरद्वितीयार्थाधेयत्वस्य प्रथमेच्छायामन्वयः। प्रथमेच्छायाश्च जनकतासंबन्धेन द्वितीयेच्छायां तस्याश्चाख्यातार्थाश्रयत्वेऽन्वयः। तथा च वसुधावृत्तित्वप्रकारकस्वस्वत्वविषयिणी या बलिवृत्तिरिच्छा तज्जनकेच्छाश्रयोवामन इति बोधः। ७ **वामनेन बलिं वसुधां याच्यते** इत्यत्र वामनवृत्तीच्छाविषयवसुधावृत्तिस्वस्वत्वप्रकारकेच्छाश्रयोवामन इति बोधः। ८ **चैत्रस्तण्डुलानोदनं पचतीत्यत्र** प्रधानकर्मौदनपदोत्तरद्वितीयार्थाधेयत्वस्य तादृशसंयोगेऽन्वयः। तथा च तण्डुलवृत्तिरूपपरावृत्तिजनकौदनवृत्तितेजःसंयोगानुकूलकृतिमानिति बोधः। ९ **चैत्रेण तण्डुला ओदनं पच्यन्ते** इत्यत्र चैत्रसमवेतकृतिजन्यौदानवृत्तिसंयोगजन्यरूपपरावृत्तिमन्तस्तण्डुला इति बोधः। १० **गर्गान् शतं दण्डयती** त्यत्र अपराधजन्यस्वत्वोत्पादकव्यापारोधात्वर्थः। गर्गपदोत्तरद्वितीयार्थाधेयत्वस्यापराधे, शतद्रव्योत्तरद्वितीयार्थाधेयत्वस्य स्वत्वेन्वयः। तथा च गर्गवृत्त्यपराधजन्यद्रव्यवृत्तिस्वस्वत्वोत्पत्त्यनुकूलव्यापाराश्रयोराजेति बोधः ११ **गर्गाः शतं दण्ड्यन्ते** इत्यत्र राजसमवेतकृतिजन्यव्यापारजन्यधनवृत्तिस्वस्वत्वोत्पत्तिजनकापराधाश्रया गर्गा इति बोधः। १२ **चैत्रः सुरान् शिवं याचते** इत्यत्र शिववृत्तित्वस्य स्वत्वेऽन्वयायोग्यत्वाद् व्यापारजन्यत्वप्रकारकेच्छा धात्वर्थः। सुरपदोत्तरद्वितीयार्थाऽऽधेयत्वस्य व्यापारेऽन्वयः, अपरद्वितीयार्थविषयित्वस्य इच्छायामन्वयः। तथा च सुरवृत्तिव्यापारजन्यत्वप्रकारिका कल्याणविषयिणी या इच्छा तदाश्रयश्चैत्रं इति बोधः। १३ **चैत्रेण सुराः शिवं याच्यन्ते** इत्यत्र चैत्रवृत्तिकल्याणविषयकेच्छाविषयव्यापाराश्रयाः सुराः इति बोधः। १४ **चैत्रो व्रजं गामवरुणद्धी** त्यत्र भेदाश्रयाधिकरणकसंचारोत्पत्त्यभावप्रयोजकव्यापारोधात्वर्थः। व्रजपदोत्तरद्वितीयार्थप्रतियोगित्वस्य भेदे, गोपदोत्तरद्वितीयार्थाधेयत्वस्याऽभावेऽन्वयः। तथा च व्रजवृत्तिप्रतियोगितानिरूपकभेदाधिकरणकगोवृत्तिसंचारोत्पत्त्यभावप्रयोजकव्यापारानुकूलकृतिमांश्चैत्र इति बोधः। १५ **अवरुध्यते गां व्रजश्चैत्रेणेत्यत्र** चैत्रवृत्तिकृतिप्रयोज्यव्यापारप्रयोज्यगोवृत्त्यभावप्रतियोगिसंचारोत्पत्त्यधिकरणभेदप्रतियोगी व्रज इति बोधः। १६ **गुरुं धर्मं पृच्छतीत्यत्र** जिज्ञासाविषयकज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः पृच्छतेरर्थः। गुरुपदोत्तरद्वितीयार्थाधेयत्वस्य जिज्ञासाज्ञाने धर्मपदोत्तरद्वितीयार्थविषयत्वस्य शब्दे अन्वयः। गुरुवृत्तिस्वीयजिज्ञासाविषयकज्ञानोद्देश्यकप्रवृत्त्यधीनधर्मविषयकशब्दानुकूलकृतिमानिति बोधः। १७ **गुरुर्धर्मं पृच्छ्यते**

इत्यत्र शिष्यसमवेतकृतिजन्यधर्मविषयकप्रवृत्त्युद्देश्यस्वीयजिज्ञासाविषयकज्ञानवान् गुरुरिति बोधः। १८ **इष्टकानग्निं चिनोति** इत्यत्र संयोगानुकूलक्रियानुकूलोव्यापारोधात्वर्थः। इष्टकावृत्तित्वस्यसंयोगे, अग्निवृत्तित्वस्यक्रियायामन्वयः। तथाचेष्टकावृत्तिसंयोगजनकाग्निक्रियानुकूलव्यापाराश्रयश्चैत्र इति बोधः। १९ **इष्टका अग्निं चीयन्ते** इत्यत्र चैत्रवृत्तिव्यापारजन्यक्रियाजन्यसंयोगाश्रय इष्टका इति बोधः। २० **शिष्यं धर्मं ब्रूते** इत्यत्र ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दो धात्वर्थः। ज्ञाने शिष्यवृत्तित्वस्य, धर्मविषयकत्वस्य शब्दे अन्वयः। शिष्यवृत्तिज्ञानोद्देश्यकधर्मविषयकशब्दप्रयोगानुकूलकृतिमानिति बोधः। २१ **अजां ग्रामं नयतीत्यादौ** उत्तरदेशसंयोगानुकूलक्रियानुकूलव्यापारोधात्वर्थः। उभयत्र द्वितीयाया आधेयत्वमर्थः। संयोगे ग्रामवृत्तित्वस्य क्रियायामजावृत्तित्वस्यान्वयः। तथा च ग्रामवृत्तिसंयोगजनकाजादिवृत्तिक्रियानुकूलव्यापारानुकूलकृतिमानिति बोधः। २२ **अजा ग्रामं नीयते** इत्यत्र चैत्रसमवेतकृतिजन्यव्यापारजन्यग्रामवृत्तिसंयोगानुकूलक्रियावतीअजेति बोधः। २३ **द्रव्यं निरूपयतीत्यत्र** ज्ञानानुकूलशब्दो धात्वर्थः। द्वितीयार्थविषयित्वस्य ज्ञाने अन्वयः। तथा च द्रव्यनिरूपितविषयिताश्रयज्ञानजनकशब्दप्रयोक्तेति बोधः। २४ **"गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्तासणौ"** इति सूत्रेण कर्तुः कर्म संज्ञा। **गति** गमनम् **बुद्धि** ज्ञानम्। **प्रत्यवसानं** भक्षणम्। एतदर्थकयावद्धातूनां, शब्दकर्म येषां तेषां, अकर्मकाणां च सर्वेषां अण्यन्तावस्थानां यः कर्ता स ण्यन्ते कर्मसंज्ञः स्यादित्यर्थः।

यथा **अजां ग्रामं यापयती**त्यत्र अण्यन्तावस्थायां गमनकर्तृत्वमजाया तस्य कर्मसंज्ञायां तदुत्तरं ण्यन्तधातुयोगे द्वितीया। उभयत्र द्वितीयाया आधेयत्वमर्थः। एकस्य क्रियायामपरस्य संयोगे अन्वयः। ण्यर्थोनिर्वाहकव्यापारः। तथा च ग्रामवृत्तिसंयोगानुकूलाऽजावृत्तिक्रियानिर्वाहकव्यापारानुकूलकृतिमानिति बोधः। २५ **अजा ग्रामं याप्यते चैत्रेणे**त्यादौ चैत्रकर्तृकव्यापारनिर्वाह्या या ग्रामवृत्तिसंयोगानुकूलाक्रिया तदाश्रयो अजेति बोधः। २६ एवममेपि। **शिष्यं शास्त्रं ज्ञापयती**त्यत्र शिष्यपदोत्तरद्वितीयार्थाधेयत्वस्य, शास्त्रपदोत्तरद्वितीयार्थविषयित्वस्य च ज्ञाने अन्वयः। शिष्यवृत्तिशास्त्रनिरूपितविषयिताश्रयज्ञाननिर्वाहकव्यापाराश्रयोगुरुरिति बोधः। २७ **ब्राह्मणमन्नं भोजयती**त्यत्र ब्राह्मणपदोत्तरद्वितीयार्थकर्तृजन्यतासम्बन्धेन, अन्नपदोत्तरद्वितीयार्थाधेयत्वस्य संयोगे अन्वयः। गलबिलाधःसंयोगानुकूलोव्यापारोधात्वर्थः। तथा च ब्राह्मणवृत्तिकृतिजन्यान्नवृत्तिगलबिलाधःसंयोगानुकूलव्यापारनिर्वाहकव्यापाराश्रयश्चैत्र इति बोधः। २८ **शिष्यं वेदं पाठयती**त्यत्र कण्ठतालुसंयोगानुकूलव्यापारोधात्वर्थः। शिष्यपदोत्तरद्वितीयार्थकृतेः, वेदपदोत्तरद्वितीयार्थजनकत्वस्य संयोगे अन्वयः। तथा च शिष्यवृत्तिकृतिजन्यवेदजनक

कण्ठताल्वभिघातानुकूलव्यापारनिर्वाहकव्यापाराश्रयोगुरुरिति बोधः। २९ घटंनाशयती त्यत्र ध्वंसानुकूलोव्यापारोधात्वर्थः। घटपदोत्तरद्वितीयार्थप्रतियोगित्वस्य ध्वंसे ऽन्वयः। तथा च घटवृत्तिप्रतियोगितानिरूपकध्वंसानुकूलव्यापारनिर्वाहकव्यापाराश्रयश्चैत्र इति बोधः।३० ज्ञानार्थकधातुयोगे घटं जानाती त्यादौ द्वितीयायाः विषयित्व मर्थः तत्र निरूपितत्वसंबन्धेन प्रकृत्यर्थस्य तस्य च ज्ञानेऽन्वयः। तथा च घटनिरूपितविषयितावद्ज्ञानाश्रयश्चैत्र इति बोधः। ३१ घटं पश्यती त्यत्र धात्वर्थश्चाक्षुषप्रत्यक्षम्, घटपदोत्तरद्वितीयार्थलौकिकविषयित्वस्य प्रत्यक्षेऽन्वयः। तथा च घटनिरूपितलौकिकविषयिताश्रयचाक्षुषप्रत्यक्षवानिति बोधः। ३२ पुष्पं जिघ्रतीत्यत्र धात्वर्थोगन्धलौकिकप्रत्यक्षम्, पुष्पपदोत्तरद्वितीयार्थाधेयत्वस्य धात्वर्थैकदेशेगन्धेऽन्वयः। तथा च पुष्पनिरूपितवृत्तित्वाश्रयगन्धलौकिकप्रत्यक्षाश्रयश्चैत्र इति बोधः। २३ पर्वते वन्हिमनुमिनोमीत्यत्र सप्तम्यर्थउद्देश्यित्वस्य द्वितीयार्थविधेयित्वस्यानुमितावन्वयः। तथा च पर्वतनिरूपितोद्देश्यित्ववन्हिनिरूपितविधेयित्वोभयाश्रयानुमितिमानहमिति बोधः। ३४ वन्हित्वेन पर्वतमनुमिनोतीत्यत्र तृतीयार्थोविधेयकत्वम्, द्वितीयार्थे उद्देश्यकत्वम् तथा च वन्हिविधेयकत्वविशिष्टपर्वतोद्देश्यकत्वविशिष्टानुमितिमानिति बोधः। ३५ रजतत्वेन शुक्तिजानातीत्यत्र तृतीयार्थोऽभेदातिरिक्तसंबन्धावच्छिन्नप्रकारतानिरूपितप्रकारिता, द्वितीयार्थोविशेष्यिता। तयोः परस्परमवच्छेद्यावच्छेदकभावः। ययोविषयतयोः परस्परंनिरूप्यनिरूपकभावः, तयोर्विषयितयोःपरस्परमवच्छेद्यावच्छेदकभावनियमात्। अभेदातिरिक्तेति विशेषणात रजतेन शुक्तिं जानातीति न प्रयोगः। ३६ रंग रजतं जानातीत्यत्राभेदसंबन्धावच्छिन्नप्रकारिता रंगपदोत्तरद्वितीयार्थः। शेषंपूर्ववत्। २७ वृक्षः पश्च नौका भवती त्यत्र नाशप्रतियोगित्वं धात्वर्थः। नौकानां जनकतासंबन्धेन नाशे ऽन्वयः। तथा च नौकाजनकनाशप्रतियोगित्वाश्रयोवृक्ष इति बोधः। प्रकृतिविकृतिभावस्थलेप्रकृतेर्मुख्यविशेष्यत्वम्, अतएवाख्यातस्य तत्समानवचनत्वम्, अत्राऽगत्यानामार्थधात्वर्थयोर्भेदेनान्वयः। ३८। केवलेच्छार्थकधातुयोगे सुखमिच्छतीत्यत्र द्वितीयार्थमुख्यविशेष्यकत्वस्येच्छायामन्वयः। तथा च सुखमुख्यविशेष्यकेच्छावानितिबोधः। सा च मम सुखं भवतु इत्याकारा। ३९ पाकंचिकीर्षतीत्यत्र धातोः कर्मणः समानकर्तृकादिच्छायां वेति सूत्रेणसन्प्रत्ययः। सूत्रार्थस्तु सन्नर्थेच्छाकर्मणः इच्छासमानकर्तृकाद्धातोः इच्छार्थे सन् स्यादिति। सन्नन्तसमभिव्याहारस्थले पाकपदोत्तरद्वितीयायाः विशेष्यकत्वमर्थः। तस्य धात्वर्थकृतौ, कृतेश्च समानकर्तृत्व विषयित्वोभयसंबंधेने च्छायामन्वयः। तथा च पाकविशेष्यवर्तमानकालीनकृतिविषयक, कृतिसमानकर्तृकेच्छावांश्चैत्र इति बोधः। इच्छा च कृतिप्रकारिका कृतिविशेष्यिका च पाकं कृत्या साधयामीत्याकारा पाककृति भवतु इत्याकारिका वा। ४० सुप आत्मनः

**क्यच् काम्यच्चेति** सूत्रद्वयेन क्यच्काम्यच्प्रत्ययार्थेच्छा कर्तृसंबन्धियदिच्छाकर्मसुबन्तं, तस्मादिच्छार्थे क्यच्काम्यचौ भवत इति सूत्रद्वयार्थः। **पुत्रीयति चैत्र, पुत्रकाम्यतीत्यत्र** पुत्रस्य क्यजर्थेच्छायां विषयित्व स्ववृत्तिसंबन्धप्रतियोगिपुरुषवृत्तित्वोभयसंबन्धेनान्वयः। सूत्र आत्मन इति एतादृशार्थे संबन्धग्राहकम्। तथा च पुत्रविषयकस्वपुत्रवृत्तिसंबन्धप्रतियोगिपितृवृत्तीच्छाश्रयः पितेति बोधः। ४१ कृञर्थकधातुयोगे **यागं करोती**त्यत्र साध्यता द्वितीयार्थः। तत्र यागस्य आधेयतया तस्या निरूपकतासंबन्धेन कृतौ धात्वर्थेऽन्वयः। यागवृत्तिसाध्यतानिरूपकयत्नाश्रयश्चैत्र इति बोधः। ४२ **काशान् कटं करोती**त्यत्र काशपदोत्तरद्वितीयार्थ उपादानत्वाख्यविषयतायाः द्वितीयान्तकटपदोपस्थाप्यकटवृत्तिसाध्यताख्यविषयताविशिष्टकृतौ अन्वयः। तथा च काशवृत्त्युपादानतानिरूपक–कटवृत्तिसाध्यतानिरूपक—यत्नाश्रय इति बोधः। ४३ **काष्ठं भस्म करोती**त्यत्र काष्ठपदोत्तरद्वितीयाया नाशोऽर्थः। काष्ठस्य प्रतियोगितया नाशे, नाशस्य जनकतासंबन्धेन यत्ने अन्वयः। तथा च काष्ठप्रतियोगिकनाशजनक–भस्मवृत्ति "साध्यताख्य" विषयतानिरूपकयत्नवानिति बोधः। ४४ मासमधीते चैत्र इत्यत्र **"कालाध्वनोरत्यन्तसंयोगे"** इत्यनेन द्वितीया। अभावाऽप्रतियोगित्वार्थे वाच्ये कालदेशवाचकशब्दाद् द्वितीयेत्यर्थः। मासशब्दस्य मासावयवोऽर्थः। तस्य द्वितीयार्थघटकप्रथमाभावेऽन्वयः। प्रतियोगित्वाभावस्याध्ययनेऽन्वयः। तथा च मासावयवदिनवृत्त्यभावाप्रतियोगित्वाश्रयाध्ययनकर्ता चैत्र इति बोधः। ४५ विनायोगे **पृथक्विनानानाभिस्तृतीयान्यतरस्यामिति** सूत्रेण द्वितीया। **दण्डं विना न घट उत्पद्यते** इत्यत्र द्वितीयार्थप्रतियोगित्वस्य विनापदार्थेऽभावेऽन्वयः तस्य प्रयोज्यतया नञर्थाभावे, तस्य प्रतियोगितयोत्पत्तौ। तथा च दण्डनिष्ठप्रतियोगितानिरूपकाभावप्रयोज्याभावप्रतियोग्युत्पत्त्याश्रयो घट इति बोधः। ४६ **रासभं विना घट उत्पद्यते** इत्यत्र विनापदार्थोऽभावस्योत्पत्तौ समानकालीनत्वसंबन्धेनाऽन्वयः। तथा च रासभाभावसमानकालीनोत्पत्त्याश्रयो घट इति बोधः। ४७ **विना वातं वृक्षः पतती**त्यत्र वातजन्यत्वं द्वितीयाप्रकृत्यर्थः। तथा च वातजन्यत्वाभाववत्पतनाश्रयो वृक्ष इति बोधः। ४८ **पुत्रं विना गतः पिते**त्यत्र पुत्रपदस्य पुत्रगमने लक्षणा। पुत्रकर्तृकगमनाभावसमानकालीनगमनकर्ता पितेति बोधः ४९ **मर्यादा-अभिवृद्ध्यर्थक** यावच्छब्दप्रयोगेपि द्वितीया भवति। मर्यादा सीमा-सा देशरूपा कालरूपा च। द्वितीया यथा–कृष्णनवम्यामारभ्य यावच्छुक्लदशमीं पूजयतीत्यत्र यावत्पदार्थः प्रागभावः, द्वितीयार्थः प्रतियोगित्वम्, तत्र प्रकृत्यर्थदशम्या आधेयतयाऽन्वयः। प्रतियोगित्वस्य प्रागभावेऽन्वयः। तावता दशमीप्रतियोगिकप्रागभावलाभः। तस्य कृष्णनवमीप्रागभावाधिकरणभेदविशिष्टकालिकसंबन्धावच्छिन्नस्वाधिकरण तावत्। तिथिनिष्ठभेदप्रतियोगितानवच्छेदकपूजाविशेषत्व-

त्वसंबन्धेन पूजायामन्वयः । कृष्णनवम्यामित्यस्य कृष्णनवमीवृत्तित्वमर्थः । आरभ्येत्यत्रधात्वर्थः पूजांगभूतः संकल्पः । ल्यबर्थः पूर्वकालः । इत्थं च कृष्णनवमी-वृत्तिसंकल्पपूर्विकाशुक्लदशमीप्रागभावनिरूपितकृष्णनवमीप्रागभावाधिकरणभेदविशिष्टकालिकसंबन्धावच्छिन्नस्वाधिकरणतावत्तिथिनिष्ठभेदप्रतियोगितावच्छेदकपूजानुकूल-कृतिमानिति बोधः । ५० देशसीमास्थले **काशीतोयावत्प्रयागं संचरतीत्यत्र** द्वितीयार्थोऽवधित्वं, तसिल्प्रत्ययार्थोपि अवधित्वम् । यावच्छब्दार्थः प्राचीत्वप्रतीचीत्वे, तत्र निरूपकतासंबन्धेन पञ्चम्यर्थद्वितीयार्थयोरन्वयः । पंचम्यन्तार्थान्वितप्राचीत्वस्य द्वितीयान्तार्थान्वितप्रतीचीत्वे सामानाधिकरण्येनान्वयः । तद्विशिष्टप्रतीचीत्वस्य व्यापकतासंबन्धेन संचारेऽन्वयः । काशीवृत्त्यवधितानिरूपकप्रतीचित्वसामानाधि-करण्यविशिष्टप्रयागवृत्त्यवधितानिरूपकप्राचीत्वव्यापकसंचारकर्ता इति बोधः । ५१ अभिवृद्ध्यर्थकयावच्छब्दयोगे **कार्तिकमारभ्ययावच्चैत्रं शीतं भवतीत्यत्र** कार्तिका-वधित्वं द्वितीयान्तार्थः । आरभ्येत्यस्यल्यबन्तस्य पूर्वोत्तरकालत्वमर्थः । चैत्रमिति द्वितीयान्तस्य चैत्रावधित्वमर्थः । यावच्छब्दस्योत्तरकालपूर्वकालमर्थः । कार्तिकवृत्त्य-वधितानिरूपकोयः पूर्वकालः "आश्विनपूर्णिमा" तदुत्तरकालत्वं कार्तिकशुक्लप्रति-दारभ्य चैत्रपूर्णिमापर्यन्ते तद्विशिष्टं वैशाखकृष्णप्रतिपत्तत्पूर्वकालत्वं तद्यापकभवना-श्रयः शीतमिति बोधः । ५२ **अनुर्लक्षणे** इति कर्मप्रवचनीयसंज्ञा । ततश्च **"कर्मप्रव-चनीययुक्ते द्वितीये"** त्यनेन कर्मप्रवचनीयप्रत्यादियोगे द्वितीया-एवमग्रेपि । अत्र लक्षणशब्दस्य फलोपधायकरूपहेतुत्वमर्थः । **यज्ञमनुप्रावर्षदि** त्यत्र द्वितीयार्थ आधेयत्वं, तस्याऽन्वर्थेनिरुक्तहेतुत्वे आश्रयतयाऽन्वयः । तस्य निरूपकतासंबन्धेन वृष्टौ धात्वर्थे अन्वयः । तथा च यज्ञवृत्तिहेतुतानिरूपकवृष्टिकर्त्तेति बोधः । ५३ **नदीमन्ववसिता सेनेत्यत्र "तृतीयार्थे"** इत्यनेन कर्मवचनीयसंज्ञा । तृतीयार्थो-वैशिष्ट्यं संबन्धः, सोऽन्वर्थः । द्वितीयार्थोऽनुयोगिकत्वं—तथा च नद्यनुयोगिकसंबन्ध-प्रतियोगिनी सेनेति बोधः ५४ **अनुहरिं सुरा** इत्यत्र **"हीने"** इत्यनेनोक्तसंज्ञा । अत्र हर्यवधिकत्वं द्वितीयार्थः । हीनाऽपरपर्यायन्यूनतायां आश्रयतयाऽन्वयः । तस्याः सुरेषु । तथा च हर्यवधिकन्यूनताश्रयाः सुरा इति बोधः । ५५ **लक्षणेत्थंभूताख्यान-भागवीप्सासु प्रतिपर्यनवः** इत्यनेनोक्तसंज्ञा । लक्षणस्योदाहरणं **वृक्षं प्रति विद्योतते विद्युत्** । परिचायकत्वं प्रत्यर्थः, तच्च विद्युद्विद्योतनज्ञानजनकज्ञानविषयत्वं, वृक्ष-प्रत्यक्षेण विद्युद्विद्योतनज्ञानजननाद् वृक्षस्य परिचायकता । यद्वावृक्षजन्यज्ञानविषयत्वं तत् । वृक्षपदेन वृक्षस्य लाभाच्छेपः प्रत्यर्थः । द्वितीयार्थविषयताया निरूपकतासंबन्धेन प्रत्यर्थे ज्ञानेऽन्वयः । वृक्षवृत्तिविषयतानिरूपकज्ञानजन्यज्ञानविषयविद्योतनाश्रयोविद्यु-दिति बोधः । ५६ **इत्थंभूताख्याने विष्णुं प्रति चैत्रः** । इत्थंभूतत्वं चैत्रवृत्त्य-साधारणोधर्मः । स च भक्तिः । भक्तित्वं चाऽऽराध्यत्वप्रकारकज्ञानत्वम् । सा च प्रत्यर्थः । द्वितीयार्थो वृत्तित्वम् । तस्याऽऽराध्यत्वेऽन्वयः । विष्णुवृत्त्याराध्यत्वप्रकारक-

ज्ञानाश्रयश्चैत्र इति बोधः । यदि च भक्तो विष्णुं प्रतीति भक्तपदघटितमेवोदाहरणं, तदा निरूपितत्व द्वितीयार्थः । आधेयत्वं प्रत्ययार्थः । ५७ भागः संबन्धः स्वस्वामिभावादिः । लक्ष्मीर्हरिंप्रति । वस्तुतो भागः सुखसाधनत्वम्, द्वितीयार्थं आधेयत्वम्, तस्य सुखेऽन्वयः । हरिवृत्तिसुखसाधनं लक्ष्मीरिति बोधः । ५८ वीप्सायां वृक्षं वृक्षं प्रति सिञ्चति । सकलवृक्षकर्मकं सेचनमिति बोधः । ५९ "अन्तरान्तरेण युक्ते" इति द्वितीया यथाऽन्तरा त्वां मां हरिरित्यत्र अन्तराशब्दोमध्यदेशवाचकः । द्वितीयाद्वयस्याऽवधिकत्वमर्थः । त्वदवधिकोमदवधिकश्च योमध्यदेशस्तन्निरूपितवृत्तित्वाश्रयोहरिरिति बोधः । ६० अन्तरेण हरिं न सुखमित्यत्र हरिपदस्य हरिप्रीतिरर्थः । द्वितीयार्थः प्रतियोगित्वम् । अन्तरेणेत्यस्याऽभावोर्थः । तस्य प्रयोज्यतासंबन्धेन सुखाभावेऽन्वयः । हरिप्रीतिवृत्तिप्रतियोगितानिरूपकाभावप्रयोज्यः सुखाभाव इति बोधः । ६१ अक्षान्दीव्यतीत्यत्र द्वितीयार्थः करणत्वम् । "दिवः कर्मचेति" कर्मसंज्ञाविधानाद् द्वितीयातृतीयार्थेभवति । अक्षनिष्ठकरणत्वनिरूपकक्रीडाकर्त्तेति बोधः । ६२ एवमक्षैर्दीव्यतीत्यत्रापि । ६३

चैत्रेण पच्यते तण्डुलः इत्यत्र कृतिस्तृतीयार्थः । आख्यातार्थःफलमाश्रयत्वं वा । चैत्रवृत्तिकृतिजन्यव्यापारजन्यविक्लित्याश्रयस्तण्डुल इति बोधः १ रथेन गम्यते इत्यादौ क्वचिद्व्यापारोऽर्थः । २ काष्ठैः पचतीत्यत्र करणे तृतीया । करणत्वं च व्यापारवत्कारणत्वम् । व्यापारे च कर्तृव्यापाराधीनत्वं निवेशनीयम् । तादृशोव्यापारः काष्ठाग्निसंयोगरूपः । एवं कर्तृभिन्नत्वंकरणलक्षणे निवेशनीयम् । एवं च काष्ठवृत्तिकर्तृव्यापाराधीनस्वजन्य स्वजन्यजनकत्वम् "कर्तृभिन्न" कारणत्वनिरूपकपाकानुकूलकृतिमानिति बोधः । ३ धूमेन वन्हिमनुमिनोतीत्यत्र नवीनमते धूमपदस्य धूमज्ञानमर्थः । शेषंपूर्ववत् ४ धूमेन पर्वतोवन्हिमानित्यत्र "हेतौ" इति सूत्रेण तृतीया । समभिव्याहृतपदार्थतद्ज्ञानान्यतरनिरूपितकारणबोधकपदात्तृतीयाभवतीति [illegible] पदार्थज्ञानं वन्हिज्ञानं तन्निरूपितकारणता धूमज्ञाने [illegible]

[illegible] इति बोधः । पुत्रेण सहागतः पितेत्यत्र "सहयुक्तेऽप्रधाने" [illegible] अत्र तृतीयार्थः कर्तृत्वम् । सहार्थः क्रियासमानकालीनत्वम् । क्रियाकालवृत्तित्वमिति यावत् । तस्य धात्वर्थेऽन्वयः तृतीयार्थस्यसहार्थैकदेशे क्रियायामन्वयो निरूपकतासंबन्धेन । पुत्रवृत्तिकर्तृतानिरूपकक्रियाकालवृत्ति क्रियाजनककृतिमान्पितेतिबोधः ७ दध्ना सहौदनं भुङ्क्ते इत्यत्र तृतीयार्थः कर्मत्वम् । शेषपूर्ववत् । दधिकर्मकभोजनाधिकरणकालवृत्त्योदनकर्मकभोजनकर्त्तेति बोधः ८ पत्निना महमीक्षता पचतीत्यत्र

भोजनाधिकरणदेशवृत्तित्वमपिसहार्थः। एवं च पतितकर्तृकभोजनाधिकरणदेशकाल-वृत्तिभोजनकर्त्तापततीति बोधः। ९ **अपवर्गे तृतीयेति** सूत्रेण विहिततृतीयाया अपि मासमधीतेचैत्र इत्यत्रद्वितीयार्थवत्। विशेषस्तुतृतीयायोगेधात्वर्थोनाऽध्ययनमात्रम्। किन्तु अध्ययनजन्यफलम् अपवर्गे "फलप्राप्तौ" इति तृतीया निमित्तश्रवणात्। **मासेनाधीते चैत्र** इत्यत्रमासत्वव्यापकाऽध्ययनजन्यफलाश्रयश्चैत्र इति बोधः। १०

**पादेन खंजः, अक्ष्णा काणः** इत्यत्र **"येनाङ्गविकारः"** इति तृतीया। येनाऽङ्गेन विकृतेनाङ्गिनो विकारोलक्ष्यते ततस्तृतीयेत्यर्थः। अत्र खंजशब्दस्य गमनशक्त्यभाव-वच्चरणवानर्थः तृतीयायाविकारप्रयुक्तत्वमर्थः। प्रकृत्यर्थपादस्याऽऽधेयतया तृतीया-र्थैकदेशेऽन्वयः। इत्थं च पादवृत्तिविकारप्रयुक्तगमनशक्त्यभाववच्चरणवांश्चैत्र इति बोधः। ११ **अक्ष्णा काण** इत्यत्र प्रत्यक्षजनकत्वाभाववच्चक्षुरिन्द्रियवान्काणशब्दार्थः। प्रथमाक्षिपदं गोलकपरम्। तृतीयार्थः पूर्ववत्। गोलकवृत्तिविकारप्रयुक्तप्रत्यक्षजनक-त्वाभाववच्चक्षुरिन्द्रियवानिति बोधः। यस्तु जन्मान्धः योवा जन्मपंगुः तत्र न तृतीया। किन्तु अक्षिकाणमस्य, पादः खंजोस्येत्येव। १२ **जटाभिस्तापसः** इत्यत्र **"इत्थंभूतलक्षणे"** इति तृतीया लक्षणवाचिपदात्तृतीयेति तदर्थः लक्षणत्वं व्यावर्तकत्वम्। यथा **जटाभिस्तापस** इत्यत्र इत्थं—शिरोवृत्तितया जटाभूतं—पूर्वमासन् न तु संप्रति ततोपि तृतीयेति सूत्रार्थः। शेषं धूमेन वह्निमानितिवत्। तत्र धूमस्य तत्काले सत्त्व "धूमविशिष्टज्ञानं" अत्रजटोपलक्षितज्ञानमिति विशेषः। सूत्रे लक्षणशब्दस्य व्यावर्तकोर्थः। १३ **पित्रा संजानीते** इत्यत्र **"संज्ञोन्यतरस्यांकर्मणि"** इति तृतीया। संपूर्वकस्य जानातेः कर्मणि तृतीया वा स्यादिति सूत्रार्थः। विषयित्व चात्र तृतीयार्थः। पितृविषयकज्ञानवानिति बोधः। १४ **अध्ययनेन वसतीत्यत्र हेतौ** इत्यनेनैव तृतीया, फलसाधारणहेतुत्वप्रतिपादनात्। तृतीयार्थः फलत्वम् तः प्रकृत्यर्थस्याऽऽधेयतयाऽन्वयः। फलत्वस्य निरूपकसंबन्धेन वासे। अध्ययनवृत्ति फलत्वनिरूपकवासानुकूलकृतिमानिति बोधः। १५

**विप्राय गां ददातीत्यत्र "कर्मणा यमभिप्रैति स संप्रदानमिति** सूत्रे विप्रस्य संप्रदानसंज्ञा। कर्मणा—क्रियाजन्यफलेन—स्वत्वादिना यमभिसंबद्धुमिच्छति स संप्रदानमिति सूत्रार्थः तथा च क्रियाजन्यफलप्रकारककर्तृसमवेतेच्छाविशेष्यत्व संप्रदानत्वम्। प्रकारता च निरूपकत्वसंबन्धावच्छिन्ना ग्राह्या। तेन कर्मणि न प्रसंगः। धात्वर्थतावच्छेदकस्वत्वनिरूपकत्वमिति यावत्। अत्र निरूपितत्वेनेच्छा विषयत्वं चतुर्थ्यर्थः, तस्य धात्वर्थतावच्छेदकस्वत्वेऽन्वयः। द्वितीयार्थ आधेयत्वम् गोवृत्तिस्वस्वत्वध्वंसविशिष्टब्राह्मणनिरूपितस्वत्वप्रकारककर्त्रिच्छाविषयीभूतस्वत्वानुकूलव्यापारवानिति बोध १ **वृक्षायोदकमासिंचतीत्यत्र** द्रवद्रव्यसंयोगानुकूलव्यापार धात्वर्थः। इच्छा चतुर्थ्यर्थः। तस्यां स्वनिष्ठत्वप्रकारकत्वसंबन्धेन वृक्षस्यान्वयः इच्छायाश्च स्वविषयसंयोगादिजनकत्वस्वजन्यत्वोभयसंबन्धेन सेकक्रियायामन्वयः

वृक्षवृत्तित्वप्रकारकेच्छाविषयीभूतजलवृत्तिसंयोगजनकेच्छाजन्यसेककर्ता चैत्र इति बोधः। धात्वर्थतानवच्छेदकफलभागितयोद्देश्यत्वं गौणसंप्रदानत्वमत्रास्तीति बोध्यम्।२ **पत्ये शेते** इत्यत्रापि धात्वर्थःशयनम्, इच्छा चतुर्थ्यर्थः। तस्यां स्वनिष्ठत्वप्रकारकत्व-संबन्धेनपत्युरन्वयः। इच्छायाश्च स्वविषयप्रीतिजनकत्व स्वजन्यत्वोभयसंबन्धेन शयनेऽन्वयः। पतिवृत्तित्वप्रकारकेच्छाविषयप्रीतिजनकेच्छाजन्यशयनकर्त्रीस्त्रीति बोधः। ३ **हरये रोचते भक्तिरित्यत्र "रुच्यर्थानां प्रीयमाणः"** इतिसंप्रदानसंज्ञा। तदर्थस्तुप्रीतिजनकत्वरूपरुचिधात्वर्थघटकप्रीत्याश्रयः संप्रदानमिति। अत्र चतुर्थ्यर्थो-वृत्तित्वम्, तस्य प्रीतावन्वयः। तस्य जनकत्वे, तस्याऽऽश्रयत्वे, "आख्यातार्थे" तस्य भक्तौ। हरिनिरूपितवृत्तित्वाश्रयप्रीतिजनकत्वाश्रयोभक्तिरिति बोधः। ४ **विप्राय शतं धारयतीत्यत्र "धारेरुत्तमर्णः"** इति सूत्रेण विप्रस्य संप्रदानसंज्ञा। द्रव्यान्तरदाना-भ्युपगमपूर्वकपरदत्तद्रव्याऽऽदानजन्याऽदृष्टविशेषवत्वं धारेरर्थः। पुनरर्पणबुद्धया गृहीतं धनमृणमुच्यते। ऋणस्य गृहीताऽधमर्णः। अर्पयिता उत्तमर्णः। एवं च तदर्थकधातुयोगे उत्तमः संप्रदान स्यादिति सूत्रार्थः। अत्र कर्तृत्वं चतुर्थ्यर्थः। तत्राऽऽधेयतया प्रकृत्यर्थोऽन्वयः। तस्यधात्वर्थैकदेशे दाने निरूपकतयाऽन्वयः। तथा च विप्रवृतिकर्तृतानिरूपकदानोत्तरकालीनाऽऽदान-जन्याऽदृष्टविशेषाश्रयश्चैत्र इति बोधः।५ **भक्ताय धारयति मोक्षं हरिरित्यत्र।** भक्त उत्तमर्णः। अधमर्णोहरिः। हरिणा मम सेवां कुरु तव मोक्षं दास्ये इति प्रतिज्ञा-तत्वात्। "तव मोक्षं दास्ये इत्युक्तिपूर्वक" सेवाग्रहणं धात्वर्थः। चतुर्थ्यर्थः पूर्ववत्। तस्य सेवायामन्वयः। भक्तवृत्तिकर्तृतानिरूपकसेवाग्रहणकर्ताहरिरिति बोधः। ६ **पुष्पेभ्यः स्पृहयतीत्यत्र "स्पृहेरीप्सितः"** इत्यनेन स्पृहाविषयस्य पुष्पस्य संप्र-दानसंज्ञा। विषयित्वं चतुर्थ्यर्थः। पुष्पविषयकेच्छावानिति बोधः। ७ **"क्रुधद्रुहेर्ष्या-ऽसूयार्थानां यं प्रतिकोपः"**-एतदर्थकधातूनां योगे धातुकर्म संप्रदानं भवतीत्यर्थः। **हरये क्रुध्यतीत्यत्र** हरिवृत्तित्वं चतुर्थ्यन्तार्थः। तस्याऽऽश्रयतयाऽपराधे, अपराधस्य स्वप्रयोज्यत्वस्वाश्रयप्रतियोगिकत्वोभयसंबन्धेन नाशेऽन्वयः। अपराधविशिष्टनाश-विषयिणीच्छा क्रोधः। हरिवृत्त्यपराधप्रयोज्याऽपराधाश्रयहरिप्रतियोगिकनाशविषय-केच्छावान् रावण इति बोधः। ८ दुःखजनकोव्यापारो द्रोहः। **हरयेऽभिद्रुह्यतीत्यत्र** हरिवृत्तिदुःखजनकव्यापारवानिति बोधः। ९ उत्कर्षाऽसहिष्णुता ईर्ष्या—**हरये ईर्ष्यतीत्यत्र** हरिवृत्त्युत्कर्षाभावविषयकेच्छावानिति बोधः। १० गुणविशेष्यक-दोषत्वप्रकारकाऽऽ"हार्य"बुद्धिः असूया। **हरये सूयतीत्यत्र** हरिवृत्तिगुणविशेष्यक-दोषत्वप्रकारकज्ञानवानिति बोधः। ११ एतत्सूत्रेआद्यधातोरुपसर्गयोगे कर्मसंज्ञैव। **हरिमभिक्रुध्यति-हरिमभिद्रुह्यतीति,** बोधस्तु पूर्ववत्। १२ **राधीक्ष्योर्यस्य विप्रश्नः।** अत्र प्रश्नपूर्वकशुभा-यस्य–यत्संबन्धी–यद्विषयकेत्यर्थः। विप्रश्नः–विविधःप्रश्नः।

ऽशुभज्ञानं धातुद्वयार्थः । तद्घटकप्रश्नविषयः संप्रदानं स्यादिति सूत्रार्थः । प्रश्नपदार्थश्च शुभाऽशुभविषयकज्ञानेच्छाज्ञापकः शब्दप्रयोगः । **कृष्णायराध्यतिईक्षते वा ।** अत्रचतुर्थ्यर्थोवृत्तित्वम्, प्रश्नघटकशुभाशुभेऽन्वेति । तथा च कृष्णवृत्तिशुभाशुभज्ञानेच्छाप्रकाशकशब्दप्रयोगोत्तरकालीनतादृशशुभाशुभज्ञानाश्रयोगर्ग इति बोधः । १३ तादर्थ्येचतुर्थी-तदर्थस्तु तादर्थ्य-तदिच्छाधीनेच्छाविषयत्वम् । ईदृशार्थेवाक्ये चतुर्थी स्यात् । यथा **मुक्तये हरिं** भजतीत्यत्र इच्छाधीनेच्छाविषयत्वं चतुर्थ्यर्थः, तत्र प्रथमेच्छायां मुक्तेविषयितासंबन्धेनाऽन्वयः । मुक्तीच्छाधीनेच्छाविषयहरिभजनकर्ता भक्त इति बोधः १४ **शिवायनमः ।** अत्र नमः शब्दार्थो द्विविधः—नमस्कार्यावधिकप्रयोक्तृनिष्ठापकर्षबोधकः प्रयोक्तृव्यापारः एकः । अपरस्त्यागार्थकः । आद्येनमस्कार्यवाचकः शिवशब्दः अवधिकत्वं चतुर्थ्यर्थः । प्रयोक्तृनिष्ठापकर्षबोधकः प्रयोक्तृव्यापारोनमःशब्दार्थः । स च व्यापारः संयुक्तहस्तद्वयस्य ललाटसंयोगः, साष्टांगप्रणामव्यापारो वा । नमः पदार्थप्रधानः शाब्दबोधः—शिवावधिकप्रयोक्तृनिष्ठाऽपकर्षबोधकः प्रयोक्तृव्यापार इत्याकारकः १५ यत्र नमोन्तेन नाम्ना कुसुमार्पणं क्रियते तत्र त्यागार्थत्वम् । त्यागश्च स्वस्वत्वनिवृत्तिपूर्वकशिवस्वत्ववदिदं कुसुमं भवतु इतीच्छा "फलेच्छाधीना" । शिवाय नम इत्यत्रइदंपदमध्याहार्यम् । तत्र विशेष्यतासंबन्धेनेच्छाया अन्वयः । शिवस्य निरूपितत्वेनस्वत्वेऽन्वयः । स्वस्वत्वध्वंसपूर्वकशिवनिरूपितस्वत्वप्रकारकेच्छाविशेष्यं कुसुममिति बोधः । शिवनिरूपितस्वत्वस्यकुसुमेऽसत्वेपिनिरूपितत्वसंबन्धेनशिवस्य सत्वे प्रकारत्वे बाधकाभावः । इच्छाया विसंवादित्वस्वीकारात् । १६ **ब्राह्मणाय स्वस्तीत्यत्र** । स्वस्तिशब्दोमंगलवाचकः । चतुर्थ्यर्थः संबन्धः । षष्ठ्यपवादिका चतुर्थी । ब्राह्मणवृत्तिसंबन्धानुयोगिमंगलमिति बोधः । १७ **अग्नये स्वाहेत्यत्र** स्वत्ववद्भवतु इतीच्छास्वाहार्थः । निरूपितत्वं चतुर्थ्यर्थः अग्निनिरूपितस्वत्वेच्छाविषयोद्रव्यमिति बोधः । तदुत्तरप्रयुक्तस्य "इदमग्नयेनमम" इति वाक्यं स्वाहाघटितवाक्यार्थाऽनुवादकम्, तेन नान्यतरवैयर्थ्यम् । १८ स्वधाशब्दस्य वषट्शब्दस्य च पूर्ववत् । १९–२० । **दैत्येभ्यः अलं विष्णु** रित्यत्र मरणजनकत्वं चतुर्थ्यर्थः । अलंपदार्थः शक्तिः । दैत्यमरणजनकशक्तिमान्विष्णुरिति बोधः २१ **ग्रामाय गच्छतीत्यत्र "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि"** इति चतुर्थी । उत्तरदेशसंयोगानुकूलशरीरवृत्तिक्रियाकर्मणः वाचकादध्ववाचकपदभिन्नाच्चतुर्थी द्वितीया च भवतीति सूत्रार्थः । बोधस्तु ग्रामं गच्छतीतिवत् । २२

वृक्षात्पर्णं पततीत्यत्र "ध्रुवमपायेऽपादानम्" सूत्रेणाऽपादानसंज्ञा वृक्षस्य । ययोर्विभागस्तयोर्मध्ये क्रियारहितमपादानं स्यादिति सूत्रार्थः । **अपादाने पंचमीति पंचमी ।** अत्रभेदप्रतियोगितावच्छेदकत्वं विभागश्च द्वयं पंचम्यर्थः । केवलं क्रिया धात्वर्थः । आधेयतासंबन्धेन वृक्षस्य भेदे विभागे चाऽन्वयः । आश्रयतया प्रतियोगितावच्छेदकत्वस्य, जनकतया विभागस्य क्रियायामन्वयः वृक्षवृत्तिविभागानुकूलवृक्षवृत्तिभेद-

प्रतियोगितावच्छेदकक्रियाश्रयः पर्णमिति बोधः । १ यद्वाविभागजनकत्वं च पंचम्यर्थः प्रकृत्यर्थस्याऽवधिमत्त्वसंबन्धेन विभागे, तस्य निरूपितत्वसंबन्धेन जनकत्वे, तस्य चाऽऽश्रयतया क्रियायामन्वयः । वृक्षावधिकविभागनिरूपितजनकतावत्क्रियाश्रयः पर्णमिति बोधः । १ **वृक्षाद्विभजते** इत्यत्र अवधिमत्त्वं पञ्चम्यर्थः । तत्र वृक्षस्य निरूपितत्वसंबन्धेन, तस्य धात्वर्थविभागेऽन्वयः । तथा च वृक्षनिरूपितावधिमद्विभागाश्रयः पर्णमिति बोधः । २ **पापाज्जुगुप्सते** इत्यत्र पंचम्यर्थो विषयता । धात्वर्थो द्वेषः । पापवृत्तिविषयतानिरूपकद्वेषाश्रय इति बोधः । **पापाद्विरमतीत्यत्र** प्रागभावरक्षणानुकूलव्यापारो विरमतेरर्थः । प्रतियोगित्वं पञ्चम्यर्थः । पापनिष्ठप्रतियोगितानिरूपकप्रागभावरक्षणानुकूलव्यापाराश्रय इति बोधः । पापाऽननुष्ठाता इति यावत् । ४ **धर्मात्प्रमाद्यती**त्यत्राऽनिष्टसाधनत्वप्रकारकज्ञानं धात्वर्थः । पञ्चम्यर्थो विशेष्यता । धर्मवृत्तिविशेष्यतानिरूपकाऽनिष्टसाधनत्वप्रकारकज्ञानवानिति बोधः । ५ **भीत्रार्थानां भयहेतु**रित्यस्य भयार्थानां त्राणार्थानां धातूनां योगे भयहेतुत्वेन संभावितं अपादानं स्यात् इत्यर्थः । भयं दुःखजनकत्वविषयकं ज्ञानं । पंचम्यर्थः प्रयोज्यत्वम् । तस्याऽऽश्रयतया धात्वर्थैकदेशे दुःखेऽन्वयः । **चौराद्बिभेति पथिक** इत्यत्र चौरप्रयोज्यदुःखजनकत्वविषयकज्ञानवान्पथिक इति बोधः । ६ **चौरात्त्रायते** इत्यत्र दुःखनिवृत्त्यनुकूलव्यापारस्त्राणम् । अन्वयः पूर्ववत् । चौरप्रयोज्यपथिकवृत्तिदुःखनाशजनकव्यापाराश्रयो राजा । इति बोधः । ७ **पराजेरसोढः** इति सूत्रस्य पराजेर्धातोः प्रयोगे कर्तुः कृत्यसाध्येऽर्थेऽपादानं स्यादित्यर्थः । **अध्ययनात्पराजयते** इत्यत्र इष्टकृतेच्छाऽभाव धात्वर्थः । कृत्यसाध्यत्वं पंचम्यर्थः । तस्य स्वविषयकज्ञानप्रयोज्यत्वसंबन्धेन धात्वर्थेऽन्वयः । अध्ययनवृत्तिकृत्यसाध्यत्वप्रयोज्याऽध्ययनेच्छाभाववानिति बोधः । ८ **वारणार्थानामीप्सितः** इत्यस्य क्रियाप्रतिषेधार्थकधातुयोगे तत्क्रियाजन्यफलत्वप्रकारकक्रियाकर्तृवृत्तीच्छाविशेष्योऽपादानं स्यादित्यर्थः । क्रियाविशेषलाभश्च समभिव्याहारात् । **यवेभ्यो गां वारयती**त्यत्र भक्षणरूपक्रिया–तत्फलविरहः तदनुकूलकृत्यभावः । भक्षणानुकूलकृत्यभावप्रयोजको व्यापारो धात्वर्थः । भक्षणपदार्थैकदेशे गलबिलाधःसंयोगे विशेष्यतासंबन्धेन पञ्चम्यर्थेच्छाया अन्वयः । इच्छायां च यवानां स्ववृत्तित्वनिष्ठप्रकारतानिरूपकत्वसंबन्धेनाऽन्वयः । आधेयतया गवां कृत्यभावेऽन्वयः । यववृत्तित्वप्रकारकेच्छाविशेष्यगलबिलाधःसंयोगानुकूलगोवृत्तिकृत्यभावप्रयोजकव्यापाराश्रयः इति बोधः । यववृत्तिगलबिलाधः संयोगो न भवतु इत्याकारिका बोध्या । ९ **अग्नेर्माणवकं वारयती**त्यत्राग्निसंयोगानुकूलो व्यापारो ग्राह्यः शेषं पूर्ववत् । १० **"आख्यातोपयोगे"** नियमपूर्वकविद्यास्वीकारे वक्ताऽपादानं स्यादित्यर्थः । **उपाध्यायादिदमधीते** इत्यत्र कृतिः पंचम्यर्थः उच्चारणोत्तरकालीननियमपूर्वकतदानुपूर्वीविशिष्टतद्वर्णोच्चारणं धात्वर्थः । कृतेश्च जन्यतया ...

रणेऽन्वयः उपाध्यायवृत्तिकृतिजन्यवेदकर्मकोच्चारणोत्तरकालीननियमपूर्वकतदानुपूर्वीविशिष्टतद्वर्णोच्चारणकर्ता शिष्य इति बोधः। ११ **पण्डितात्पुराणं शृणोतीत्यत्र** उच्चारणजन्यनियमपूर्वकश्रौत्रप्रत्यक्षं धात्वर्थः शेषं पूर्ववत्। नियमाभावे **नटस्यगाथां शृणोतीति** षष्ठ्येव। १२ **"जनिकर्तुः प्रकृतिः"** उत्पत्त्याश्रयस्य समवायिकारणमपादानं स्यादिति तदर्थः। **मृत्पिण्डाद्घटोजायते** इत्यत्र समवायिकारणत्वं पञ्चम्यर्थः। उत्पत्तिर्धात्वर्थः। मृत्पिण्डवृत्तिसमवायिकारणतानिरूपितोत्पत्त्याश्रयोघट इति बोधः। १३ **"अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते।"** अन्य–आरात्–इतर–ऋत–दिग्वाचकशब्द–अञ्चुधातूत्तर "दिगवाचक" शब्द–आच्प्रत्ययान्त–जाहिप्रत्ययान्त–एतेषां योगे पंचमी स्यात् इति तदर्थः। **घटादन्य** इत्यत्र प्रतियोगित्वं पंचम्यर्थः। अन्यपदार्थोभेदवान्। अवच्छिन्नत्वसंबन्धेन धर्मिपारतन्त्र्येण घटत्वस्य प्रतियोगितायामन्वयः। घटनिष्ठघटत्वावच्छिन्नप्रतियोगिताकभेदवानिति बोधः। १४ **काश्या आराद् गंगा** इत्यत्र दैशिकमपरत्वं पंचम्यर्थः। तत्र प्रकृत्यर्थस्याऽवधिमत्त्वसंबन्धेनाऽन्वयः। काश्यवधिकाऽपरत्वाश्रयो गंगा इति बोधः। १५ **घटादितर** इत्यत्रबोधोघटादन्य इतिवत्। १६ **कृष्णादृते न सुखमित्यत्र** कृष्णपदस्य तद्भक्तिरर्थः। संसर्गाभाव ऋतेपदार्थः। प्रतियोगित्व पंचम्यर्थः। कृष्णभक्तिवृत्तिप्रतियोगितानिरूपकाभावप्रयोज्यः सुखाभाव इति बोधः। १७ **पूर्वोग्रामादित्य** त्राऽवधित्वं पंचम्यर्थः। तस्य निरूपितत्वसंबन्धेन पूर्वत्वेऽन्वयः। ग्रामवृत्तिअवधितानिरूपितपूर्वत्वाश्रयदेशवृत्तिः कूप इति बोधः। १८ **चैत्रात्पूर्वः फाल्गुनः** इत्यत्र पंचम्यर्थः प्रतियोगित्वम्। पूर्वपदार्थः ध्वंसावधिकरणतिथिप्रागभाववान्। चैत्रत्वाश्रयतिथिवृत्तिप्रतियोगितानिरूपकध्वंसानधिकरणतिथिप्रागभाववान्फाल्गुन इति बोधः। १९ **काश्याः प्रत्यक् प्रयाग** इत्यत्र काशीवृत्त्यवधितानिरूपितप्रत्यक्त्वाश्रयः प्रयाग इति बोधः। २० **दक्षिणाग्रामात्, दक्षिणाहि ग्रामादित्यत्र** ग्रामवृत्त्यवधितानिरूपकदक्षिणदिग्वृत्ति, ग्रामावधिकपरत्वाश्रयोदुर्गा इति बोध। आच्प्रत्ययस्य आहिप्रत्ययस्य च दूरत्वमर्थः। २१–२२।

**राज्ञः पुरुष** इत्यत्रस्वत्वं षष्ठ्यर्थः। राजनिरूपितस्वत्वाश्रयः पुरुष इति बोधः। १ **चैत्रस्य स्वत्वम्,** इत्यत्र निरूपितत्वं षष्ठ्यर्थः। २ एवं **घटस्यकारणमित्य** त्रापि। ३ चैत्रस्य हस्यइत्यत्राऽवयवत्वम्। ४ घटस्याऽभाव इत्यत्र प्रतियोगित्वम्। ५

अधिकरणसप्तम्या आधेयत्वमर्थः। **स्थाल्यां तण्डुलं पचती** त्यत्र स्वजन्यफलाश्रयाधारत्वसंबन्धावच्छिन्नवृत्तित्वमर्थः सप्तम्याः। अत्र स्वं तेजःसंयोगः–तज्जन्यं फलं पूर्वरूपनाशः तदाश्रयस्तण्डुलः तदाधारता स्थाल्यामिति निरुक्तसंबन्धावच्छिन्न-

स्थालीनिरूपिताधेयत्वं क्रियायामिति। तेन तण्डुले रूपपरावृत्तिजनकतेजःसंयोगरूपधात्वर्थे समवायसंबन्धावच्छिन्नवृत्तित्वान्वययोग्यतासत्त्वेपि तण्डुले पचतीति न प्रयोगः। **आधारोऽधिकरणमिति** सूत्रस्य स्वीयकर्तृत्वकर्मत्वाऽन्यतराश्रयाधारत्वमधिकरणत्वमित्यर्थः १ कर्तृ द्वारा इत्यस्योदाहरणं **कटेशेते** इति। तत्रस्वकर्तृत्वाश्रयाधारता सम्बन्धावच्छिन्नआधेयत्वं सप्तम्यर्थः। कटनिरूपितनिरुक्तसम्बन्धावच्छिन्नआधेयताश्रयशयनानुकूलकृतिमानिति बोधः। **शिरसि मे वेदना** इत्यत्राऽवच्छेदकतासम्बन्धावच्छिन्नापि कर्तृनिष्ठाधेयता बोध्या। भवतीत्यध्याहारः। शेषं पूर्ववत्। ३ **चर्मणि द्वीपिनं हन्ति** इत्यत्र चर्मपदं चर्मलाभपरम्। इच्छाधीनेच्छाविषयत्वं सप्तम्यर्थः। प्रकृत्यर्थस्य प्रथमेच्छायां विषयितया अन्वयः। चर्मलाभेच्छाधीनेच्छाविषयद्वीपिवृत्तिप्राणवियोगानुकूलव्यापारानुकूलकृतिमानिति बोधः। ४ **"यस्य च भावेन भावलक्षणम्"** अत्र षष्ठ्यर्थः कर्तृत्वकर्मत्वान्यतररूपः। यत्कर्मकया यत्कर्तृकया वा क्रियया क्रियान्तरस्य कालो ज्ञायते तद्वाचकपदात्सप्तमी। **गोषु दुह्यमानासु गत** इत्यत्र सप्तम्यर्थः समभिव्याहृतदोहनक्रिया, तत्र प्रकृत्यर्थगोः कर्मकत्वसम्बन्धेनान्वयः। क्रियायाश्च समानकालीनत्वसम्बन्धेन क्रियान्तरे ऽन्वयः। वर्तमानकालीनदोहनकर्माऽभिन्नगोकर्मकदोहनसमानकालीनगमनकर्ता चैत्र इति बोधः। ५ **अधीयानेषु छात्रेषु गत** इत्यत्र कर्तृकत्वमिति विशेषः। ६ **"षष्ठी चानादरे"** अनादरे वाच्ये अनादरविषयवाचकात्षष्ठीसप्तम्यौ स्तः। **रुदत्सु प्राव्रजित** इत्यत्र सप्तम्यर्थोऽनादरः। अनादरः इच्छाऽभावः। इच्छायां रोदनकर्तृपुत्रादीनां विषयितयाऽन्वयः। रोदनकर्तृपुत्रादिविषयकेच्छाभावप्रयोज्यसंन्यासकर्तेति बोधः। ७ **"स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च"** एभिर्युक्तस्वामित्वादिनिरूपकवाचकात्सप्तमी षष्ठी च भवतीत्यर्थः। **गवां गोषु वा स्वामी**त्यत्र निरूपितत्वं षष्ठ्यर्थः। गोनिरूपितस्वामित्ववानिति बोधः। एवं सर्वत्र ८। **"आयुक्तकुशलाभ्यां चाऽऽसेवायाम्"** आयुक्तकुशलपदयोगे याद्दशक्रियायां तत्परत्वं प्रतीयते तद्वाचकपदात्षष्ठीसप्तम्यौ स्तः इत्यर्थः। तत्परत्वञ्चइदमेवेष्टसाधनं नान्यदिति ज्ञानविशेषः। **चैत्रेण मैत्रोहरिभजने आयुक्त** इत्यत्राऽऽश्रयत्वं क्त प्रत्ययार्थः। पूर्वदर्शितज्ञानावच्छिन्नोव्यापारोधात्वर्थः। इष्टसाधनत्वं षष्ठीसप्तम्यर्थः। तत्र हरिभजनस्य स्वनिष्ठवृत्तित्वस्ववृत्तित्वोभयसंबंधेनाऽन्वयः। चैत्रकर्तृकव्यापारजन्यहरिभजनेतराऽवृत्तिहरिभजनवृत्तिइष्टसाधनत्वविषयकज्ञानाश्रयोमैत्र इति बोधः।

**हरिपूजने कुशल** इत्यत्र कुशलपदस्य यथार्थज्ञानवानित्यर्थः। पूजनपदस्य पूर्वोक्ताङ्गसहितषोडशोपचाराणुज्ञानमर्थः। विषयित्वं सप्तम्यर्थः। पूर्वोक्ताङ्गसहितोपचारार्पणविषयिताश्रययथार्थज्ञानवानिति बोधः। १० **"यतश्च निर्धारणम्"** जातिगुणक्रियासंज्ञाविशेषणविशिष्टधर्मावच्छिन्नस्य जात्यादिशून्यतद्धर्मविशिष्टनिष्ठभेद-

प्रतियोगिविधेयवत्ता यत्र प्रतीयते तद्धर्मावच्छिन्नवाचकात्षष्ठीसप्तम्यौ स्तः। **नराणां क्षत्रियः शूर** इत्यत्र क्षत्रियत्वविशिष्टोयोधर्मः नरत्वं तदवच्छिन्नस्य नरस्य क्षत्रियत्वशून्योयोनरत्वविशिष्टः तन्निष्ठोयोभेदः शूरभेदस्तत्प्रतियोगिविधेयीभूतशूरस्याऽभेदःक्षत्रिये विवक्षित इति तादृशधर्मो नरत्वं तद्विशिष्टवाचकपदात्षष्ठीसप्तम्यौ इति प्रकृतोदाहरणे सूत्रार्थसमन्वयः।

यथाश्रुतार्थस्तु **यतो**—जातिगुणक्रियाविशिष्टात्—**निर्धारणं** पृथक्करणं—तद्वृत्तिधर्मवत्त्वम्—प्रतीयतेतद्वाचकपदात्षष्ठीसप्तम्यौ भवतः इति। तथा च जात्यादिविशेषणविशिष्टसामान्यधर्मावच्छिन्नस्य तादृशविशेषणशून्यसामान्यधर्मावच्छिन्नव्यावृत्तत्वविशिष्टविधेयवत्तया प्रतिपादनं निर्धारणमिति फलितम्।

षष्ठीप्रकृतिसामान्यशब्दोलक्षणया समभिव्याहृतजात्यादिविशेषणशून्यविशेषपरः। जात्यादिविशेषवाचकपदं च लक्षणयातद्विशिष्टसामान्यधर्मावच्छिन्नपरम्। व्यावृत्तत्वं च भेदप्रतियोगित्वम्, अत्यन्ताभावप्रतियोगित्वं च। व्यावृत्तत्वमेव षष्ठ्यर्थः। व्यावृत्तिघटकाभावेऽन्वयितावच्छेदकावच्छिन्नाधिकरणताकत्वसम्बन्धेन प्रकृत्यर्थाऽन्वयः। विधेये च विधेयतावच्छेदकावच्छेदेन प्रतियोगित्वान्वयः। एवं च क्षत्रियान्यनरत्वावच्छिन्नाधिकरणताकभेदप्रतियोगिशूरत्वावच्छिन्नाऽभिन्नः क्षत्रियइत्यन्वयबोधः। द्रव्याणां घटो गन्धवानिति प्रयोगविरहेणाऽभावाधिकरणतायामन्वयितावच्छेदकावच्छिन्नत्वस्य, प्रतियोगितायां विधेयतावच्छेदकावच्छिन्नत्वस्य चभानमंगीकृतम्। तदनभ्युपगमे घटाऽन्यजलादिरूपेगन्धवत्त्वावच्छिन्नभेदस्य घटान्यद्रव्यत्वावच्छेदेनगन्धवद्घटभेदस्य च सत्त्वेन तथा प्रयोगापातादित्यन्यत्रविस्तरः। ११ **गवां कृष्णा सम्पन्नक्षीरा** इति गुणस्य, **गच्छतां धावन् शीघ्रगः** इति क्रियायाः, **छात्राणां देवदत्तः सूक्ष्मबुद्धिरिति** संज्ञाया उदाहरणं, बोधश्चपूर्ववत्। **नराणां क्षत्रियेषु शौर्यमित्यत्र** षष्ठ्यर्थः अत्यन्ताभावप्रतियोगित्वम्। क्षत्रियेष्विति सप्तम्यन्तार्थं शौर्ये अन्वेति। शेषं पूर्ववत्। **नरेभ्योराक्षसाः शूरतमा** इत्यत्र **"पञ्चमी विभक्ते"** इति सूत्रेण पञ्चमी। तदर्थस्तु उद्देश्यतावच्छेदकस्य यादृशधर्मस्य च नैकाधिकरण्यं तादृशधर्मावच्छिन्नवाचकात्पञ्चमीति। शूरतमत्वोद्देश्यतावच्छेदकं राक्षसत्वं न नरत्वसमानाधिकरणमतः पञ्चमी। अत्र नरपदस्य नरशौर्यमर्थः। अवधिमत्त्वं पञ्चम्यर्थः। तस्य तमप्प्रत्ययार्थे आधिक्ये, तस्याऽऽश्रयतया शौर्ये, तस्याऽधिकरणे, तस्याऽभेदेन राक्षसे अन्वयः। नरशौर्यावधिकाऽऽधिक्याश्रयशौर्याऽभिन्नाराक्षसा इति बोधः। १२ **"साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः"** साधुनिपुणपदयोगेतदेकदेशसुखाश्रय तत्त्वज्ञानविषयताश्रयवाचकात्सप्तमी भवति, वक्तृवाक्यस्य प्रशंसायां यदि तात्पर्यम्, वस्तुस्थितिकथने यदि तात्पर्यं तदा षष्ठ्येव। न तु प्रतियोगे, प्रतियोगेद्वितीया। **मातरि साधुरिति** पूर्ववत्तोबोधः। १३ **मातरि निपुण** इत्यत्र मातृपदं मातृ-

स्थालीनिरूपिताधेयत्वं क्रियायामिति। तेन तण्डुले रूपपरावृत्तिजनकतेजःसंयोग-रूपधात्वर्थे समवायसंबन्धावच्छिन्नवृत्तित्वान्वययोग्यतासत्वेपि तण्डुले पचतीति न प्रयोगः। **आधारोऽधिकरणमिति** सूत्रस्य स्वीयकर्तृत्वकर्मत्वान्यतराश्रयाधारत्वमधिकरणत्वमित्यर्थः १ कर्तृद्वारा इत्यस्योदाहरणं **कटेशेते** इति। तत्रस्वकर्तृत्वाश्रयाधारता सम्बन्धावच्छिन्नाधेयत्वं सप्तम्यर्थः। कटनिरूपितनिरुक्तसम्बन्धावच्छिन्नाधेयताश्रय-शयनानुकूलकृतिमानिति बोधः। **शिरसि मे वेदना** इत्यत्राऽवच्छेदकतासम्बन्धावच्छिन्नापि कर्तृनिष्ठाधेयता बोध्या। भवतीत्यध्याहारः। शेषं पूर्ववत्। २ **चर्मणि द्वीपिनं हन्ति** इत्यत्र चर्मपदं चर्मलाभपरम्। इच्छाधीनेच्छाविषयत्वं सप्तम्यर्थः। प्रकृत्यर्थस्य प्रथमेच्छायां विषयितया अन्वयः। चर्मलाभेच्छाधीनेच्छाविषयद्वीपि-वृत्तिप्राणवियोगानुकूलव्यापारानुकूलकृतिमानिति बोधः। ४ "**यस्य च भावेन भावलक्षणम्**" अत्र पञ्चम्यर्थः कर्तृत्वकर्मत्वान्यतररूपः। यत्कर्मकया यत्कर्तृकया वा क्रियया क्रियान्तरस्य कालो ज्ञायते तद्वाचकपदात्सप्तमी। **गोषु दुह्यमानासु गतः** इत्यत्र सप्तम्यर्थः समभिव्याहृतदोहनक्रिया, तत्र प्रकृत्यर्थगोः कर्मत्वसम्बन्धेना-न्वयः। क्रियायाश्च समानकालीनत्वसम्बन्धेन क्रियान्तरे ऽन्वयः। वर्तमान-कालीनदोहनकर्माऽभिन्नगोकर्मकदोहनसमानकालीनगमनकर्ता चैत्र इति बोधः। ५ **अधीयानेषु छात्रेषु गतः** इत्यत्र कर्तृकत्वमिति विशेषः। ६ "**षष्ठी चानादरे**" अनादरे वाच्ये अनादरविषयवाचकात्षष्ठीसप्तम्यौ स्तः। **रुदत्सु प्राव्रजित्** इत्यत्र सप्तम्यर्थोऽनादरः। अनादरः इच्छाऽभावः। इच्छायां रोदनकर्तृपुत्रादीनां विषयितयाऽन्वयः। रोदनकर्तृपुत्रादिविषयकेच्छाभावप्रयोज्यसंन्यासकर्तेति बोधः। ७ "**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च**" षभियुक्तस्वामित्वादिनिरूपक-वाचकात्सप्तमी षष्ठी च भवतीत्यर्थः। **गवां गोषु वा स्वामी**त्यत्र निरूपितत्वं-सप्तम्यर्थः। गोनिरूपितस्वामित्ववानिति बोधः। एवं सर्वत्र ८। "**आयुक्तकुशलाभ्यां चाऽऽसेवायाम्**" आयुक्तकुशलपदयोगे याहशक्रियायां तत्परत्वं प्रतीयते तद्वाचकपदात्षष्ठीसप्तम्यौ स्तः इत्यर्थः। तत्परत्वञ्च इदमेवेष्टसाधनं नान्यदिति ज्ञानविशेषः। **चैत्रेण मैत्रोहरिभजने आयुक्तः** इत्यत्राऽऽश्रयत्वं क्त प्रत्ययार्थः। पूर्वदर्शितज्ञानावच्छि-न्नोव्यापारोधात्वर्थः। इष्टसाधनत्वं षष्ठीसप्तम्यर्थः। तत्र हरिभजनस्य स्वनिष्ठावृत्तित्व स्ववृत्तित्वोभयसंबंधेनाऽन्वयः। चैत्रकर्तृकव्यापारजन्यहरिभजनेतराऽवृत्तिहरिभजनवृत्ति इष्टसाधनत्वविषयकज्ञानाश्रयोमैत्र इति बोधः।

**हरिपूजने कुशलः** इत्यत्र कुशलपदस्य यथार्थज्ञानवानित्यर्थः। पूजनपदस्य पूर्वोक्ताङ्गसहितषोडशोपचारानुअनमर्थः। विषयित्वं सप्तम्यर्थः। पूर्वोक्ताङ्गसहितो-पचारार्पणविषयिताश्रययथार्थज्ञानवानिति बोधः। १० "**यतश्च निर्धारणम्**" जाति-गुणक्रियासंज्ञाविशेषणविशिष्टधर्मावच्छिन्नस्य जात्यादिशून्यतद्धर्मविशिष्टनिष्ठभेद-

प्रतियोगिविधेयवत्ता यत्र प्रतीयते तद्धर्मावच्छिन्नवाचकात्षष्ठीसप्तम्यौ स्तः। **नराणां क्षत्रियः शूर** इत्यत्र क्षत्रियत्वविशिष्टोयोधर्मः नरत्वं तदवच्छिन्नस्य नरस्य क्षत्रियत्वशून्योयोनरत्वविशिष्टः तन्निष्ठोयोभेदः शूरभेदस्तत्प्रतियोगिविधेयीभूतशूरस्याऽभेदःक्षत्रिये विवक्षित इति तादृशधर्मो नरत्वं तद्विशिष्टवाचकपदात्षष्ठीसप्तम्यौ इति प्रकृतोदाहरणे सूत्रार्थसमन्वयः।

यथाश्रुतार्थस्तु **यतो**—जातिगुणक्रियाविशिष्टात्—**निर्धारणं** पृथक्करणं—तद्वृत्तिधर्मवत्त्वम्—प्रतीयतेतद्वाचकपदात्षष्ठीसप्तम्यौ भवतः इति। तथा च जात्यादिविशेषणविशिष्टसामान्यधर्मावच्छिन्नस्य तादृशविशेषणशून्यसामान्यधर्मावच्छिन्नव्यावृत्तत्वविशिष्टविधेयवत्तया प्रतिपादनं निर्धारणमिति फलितम्।

षष्ठीप्रकृतिसामान्यशब्दोलक्षणया समभिव्याहृतजात्यादिविशेषणशून्यविशेषपरः। जात्यादिविशेषवाचकपदं च लक्षणयातद्विशिष्टसामान्यधर्मावच्छिन्नपरम्। व्यावृत्तत्वं च भेदप्रतियोगित्वम्, अत्यन्ताभावप्रतियोगित्वं च। व्यावृत्तत्वमेव षष्ठ्यर्थः। व्यावृत्तिघटकाभावेऽन्वयितावच्छेदकावच्छिन्नाधिकरणताकत्वसम्बन्धेन प्रकृत्यर्थान्वयः। विधेये च विधेयतावच्छेदकावच्छेदेन प्रतियोगित्वान्वयः। एवं च क्षत्रियान्यनरत्वावच्छिन्नाधिकरणताकभेदप्रतियोगिशूरत्वावच्छिन्नाऽभिन्नःक्षत्रियइत्यन्वयबोधः। द्रव्याणां घटो गन्धवानिति प्रयोगविरहेणाऽभावाधिकरणतायामन्वयितावच्छेदकावच्छिन्नत्वस्य, प्रतियोगितायां विधेयतावच्छेदकावच्छिन्नत्वस्य चभानमंगीकृतम्। तदनभ्युपगमे घटाऽन्यजलादिरूपेगन्धवत्वावच्छिन्नभेदस्य घटान्यद्रव्यत्वावच्छेदेनगन्धवद्घटभेदस्य च सत्वेन तथा प्रयोगापातादिन्यत्रविस्तरः। ११ **गवां कृष्णा सम्पन्नक्षीरा** इति गुणस्य, **गच्छतां धावन् शीघ्रगः** इति क्रियायाः, **छात्राणां देवदत्तः सूक्ष्मबुद्धिरिति** संज्ञाया उदाहरणं, बोधश्चपूर्ववत्। **नराणां क्षत्रियेषु शौर्यमित्यत्र** षष्ठ्यर्थः अत्यन्ताभावप्रतियोगित्वम्। क्षत्रियेष्विति सप्तम्यन्तार्थे शौर्ये अन्वेति। शेषं पूर्ववत्। **नरेभ्योराक्षसाः शूरतमा** इत्यत्र **"पञ्चमी विभक्ते"** इति सूत्रेण पञ्चमी। तदर्थस्तु उद्देश्यतावच्छेदकस्य यादृशधर्मस्य च नैकाधिकरण्यं तादृशधर्मावच्छिन्नवाचकात्पञ्चमीति। शूरतमत्वोद्देश्यतावच्छेदकं राक्षसत्वं न नरत्वसमानाधिकरणमतः पञ्चमी। अत्र नरपदस्य नरशौर्यमर्थः। अवधिमत्वं पञ्चम्यर्थः। तस्य तमप्प्रत्ययार्थे आधिक्ये, तस्याऽऽश्रयतया शौर्ये, तस्याऽधिकरणे, तस्याऽभेदेन राक्षसे अन्वयः। नरशौर्यावधिकाऽऽधिक्याश्रयशौर्याऽभिन्नाराक्षसा इति बोधः। १२ **"साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः"** साधुनिपुणपदयोगेतदेकदेशसुखाश्रयतत्वज्ञानविषयताश्रयवाचकात्सप्तमी भवति, उक्तवाक्यस्य प्रशंसायां यदि तात्पर्यम्, वस्तुस्थितिकथने यदि तात्पर्यं तदाषष्ठ्येव। न तु प्रतियोगे, प्रतियोगेद्वितीया। **मातरि साधुरिति** पूर्वदर्शितोबोधः। १३ **मातरि निपुण** इत्यत्र मातृपदं मातृ-

न च कर्तुरनभिधानाच्चैत्रादिपदोत्तरं तृतीया स्यादिति वाच्यम्। कर्तृसंख्यानभिधानस्य तत्र तन्त्रत्वात्। संख्याभिधानयोग्यश्च कर्मत्वाधव-

प्रश्न—वैयाकरण लोगों का कहना है कि 'पचति' में आख्यात जो 'तिप्' है उससे कर्त्ता का अनभिधान होने से कर्त्तृवाचक चैत्रादिपद के अनन्तर तृतीया होनी चाहिये—अर्थात् 'चैत्रेण पचति' यह प्रयोग आपके यहाँ होना चाहिये, (अभिप्राय यह है कि 'कर्त्तृकरणयो-स्तृतीया' यह सूत्र 'अनभिहिते' इस सूत्र के अधिकार से अनुक्तकर्त्तारूप अर्थ में—एवं करणरूप अर्थ में तृतीया करता है—अतः आपके यहाँ आख्यात का कृतिरूप अर्थ है इससे वही उक्त हुआ—कर्त्तारूप अर्थ अनुक्त हो गया—अनुक्त कर्त्ता में तृतीया विभक्ति होनी चाहिये—इस लिये 'चैत्रेण पचति' इस प्रयोग की आपत्ति लग गयी)

उत्तर—नैयायिक कहता है—यह ठीक नहीं—कारण कि कर्त्तृगत संख्या का अनभिधान ही तृतीया में तन्त्र (प्रयोजक) होता है। (अभिप्राय यह है कि जहाँ आख्यात से कर्त्तृगत संख्या न कही जाय वहीं कर्त्ता अनुक्त माना जाता है—और उस कर्त्तृगत संख्या के अनभिधान प्रयुक्त जो अनुक्त कर्त्ता—उस अनुक्तकर्त्तारूप अर्थ में (कर्त्तृकरणयोस्तृतीया) यह सूत्र तृतीया विभक्ति का विधान करता है। प्रकृत में 'चैत्रःपचति' यहाँ पर आख्यात से भी चैत्र गत एकत्व संख्या का ही बोध हो रहा है—क्योंकि आख्यात-और चैत्रपदोत्तर 'सु' इन दोनों का एकत्व संख्या अर्थ है)

---

सेवार्थकम्। सप्तम्यर्थो विषयत्वम्। निपुणपदस्य तत्त्वज्ञानवानर्थः। ज्ञाने सप्तम्यर्थाऽन्वयः। मातृसेवावृत्तिविषयतानिरूपकतत्त्वज्ञानवानिति बोध। १४

"सम्बोधने च" सम्बोधने वाच्ये प्रथमा स्यादिति तदर्थः। राम त्वं पाहीत्यत्र सम्बोधनं च प्रकृतवाक्योच्चारणाव्यवहितोत्तरक्षणोत्पन्नप्रकृतवाक्यजन्य-बोधाश्रयत्वप्रकारकेच्छा। अभेदश्च प्रत्ययार्थः। प्रकृतेच्छा विषयतया प्रकृत्यर्थे विशेषणम्। तस्याभेदे अन्वयः। पुरोवर्त्तीयुष्मच्छब्दार्थः। दुःखनिवृत्त्यनुकूलो-व्यापारो धात्वर्थः। अभेदस्य युष्मत्पदार्थे अन्वयः। अस्मत्पदार्थवृत्ति दुःखनिवृत्य-नुकूलव्यापारानुकूलकृतिमान् प्रकृतवाक्योच्चारणाव्यवहितोत्तरक्षणोत्पन्नप्रकृतवाक्य-जन्यशाब्दबोधाश्रयत्वप्रकारकेच्छाविशेष्यो रामाभिन्नः पुरोवर्त्तीति बोधः। १

अथ कृतेराख्यातवाच्यत्वे चैत्रः पचतीत्यादिवाक्यघटकचैत्रपदोत्तरं "अनभिहिते" इत्यधिकारसूत्रानन्तरपठितेन "कर्तृकरणयोस्तृतीया" इति सूत्रेण तृतीया स्यात्, आख्यातेन कर्त्रनभिधानस्थले कर्त्तृबोधार्थं तृतीया विधीयते प्रकृते आख्यातेन कृतेरेवाभिहितत्वेन कर्त्तुरनभिधानात्कर्तृबोधार्थं तृतीयाऽऽपत्त्या चैत्रेण पचतीत्येव प्रयोगः स्यात्, न स्याच्च चैत्रः पचतीति प्रयोग इत्याशङ्कते। न चेति। कर्तुरनभिधानादिति कर्तुराख्यातवाच्यत्वाभावादित्यर्थः। समाधत्ते। कर्त्तृसंख्यानभिधानस्येति। आख्यातपदप्रयोज्याऽऽख्यातार्थसंख्याप्रकारककर्तृ-विशेष्यकबोधाभावस्येत्यर्थः। तत्र। तृतीयायाम्। तन्त्रत्वात्। प्रयोजकत्वात्।

रुद्धः प्रथमान्तपदोपस्थाप्यः। कर्मत्वादीत्यस्य इतरविशेषणत्वेन तात्पर्याऽविषयत्वम्। तेन चैत्र इव मैत्रोगच्छतीत्यादौ न चैत्रे संख्यान्वयः। यत्र

प्रश्न—यही कैसे जाना जाय कि कर्तृगत संख्या कहाँ उक्त होती है।

उत्तर—कर्मत्व-आदिपदग्राह्य-करणत्व-अपादानत्व वगैरह से-अनवरुद्ध (अनवच्छिन्न) (अर्थात् कर्मत्व-करणत्व आदि धर्मों से अविशिष्ट) और प्रथमान्तपद से उपस्थाप्य जहाँ कर्ता हो—वही कर्ता संख्याभिधान योग्य होता है (अर्थात् वहीं कर्तृगत संख्या उक्तसमझनी चाहिये)।

प्रश्न—(तब तो "चैत्र इव मैत्रो गच्छति" यहाँ पर जैसे आख्यात से मैत्रगत संख्या कही जाती है—वैसे ही चैत्रगत संख्या भी कही जानी चाहिये—क्योंकि मैत्रवत् चैत्र भी कर्मत्व आदि धर्मों से अनवरुद्ध है—और प्रथमान्तपद से उपस्थाप्य है—यदि इष्टापत्ति करें तो "चैत्रा इव मैत्रो गच्छति" यह प्रयोगानुपपत्ति हो जावेगी)

उत्तर—कर्मत्वाद्यनवरुद्ध का 'इतरविशेषणत्वेन-तात्पर्याविषयत्व' यह अर्थ कर देना चाहिये—अर्थात् इतर में विशेषणत्वेन तात्पर्य का विषय न हो—अतः "इतरविशेषणत्वेन तात्पर्याविषयत्वविशिष्ट प्रथमान्तपदोपस्थाप्यः कर्ता संख्याभिधानयोग्यः" यह समुदित का अर्थ हुवा) इससे 'चैत्र इव मैत्रो गच्छति' यहाँ पर संख्यान्वय वारित हो गया—अर्थात् यहाँ आख्यात चैत्रगत संख्या नहीं कहीं कही जा सकती अपितु मैत्र गत ही संख्या उक्त हो सकेगी—क्योंकि चैत्र (इतर में) इवार्थ सादृश्य में निरूपितत्वसम्बन्ध से विशेषण ही है—अर्थात् विशेषणत्वेन तात्पर्य का विषय है—कारण कि उक्त वाक्य से "चैत्रनिरूपितं यत् सादृश्यं तादृशसादृश्यवद् यद् गमनं तादृशगमनानुकूलकृतिमान् मैत्रः" यह बोध होता है इस बोध में इवार्थ सादृश्य में निरूपितत्व से चैत्र विशेषण हो रहा है) वही मूल में कहा है कि "तेन चैत्र इव मैत्रो गच्छति इत्यादौ न चैत्रे संख्यान्वयः"

---

तथा च लः कर्मणिचेत्यादि सूत्रस्य लकाराः "सकर्मकधातुसमभिव्याहृतः" कर्तृगतसंख्यावाचकाः कर्मगतसंख्यावाचकाश्च स्युरित्यर्थः। एवं कर्तृकरणयोस्तृतीयेति सूत्रस्य आख्यातेन कर्तृगतसंख्यानभिधाने कर्तृवाचकपदोत्तरं तृतीया इत्यर्थः। प्रकृते चाऽऽख्यातेन कर्तृगतसंख्याभिधानात् "संख्याबोधार्थं" अनभिहिताधिकारीयकर्तृकरणयो स्तृतीयेति सूत्रस्याऽप्रवृत्त्यान् चैत्रेण पचतीति प्रयोगापत्तिरिति भावः। चैत्रस्तण्डुलं पचतीत्यादौ चैत्रगतसंख्यैवाऽऽख्यातेनाभिधीयते न तु तण्डुलादिगता इत्यत्र नियामको वाच्यः, अन्यथा चैत्रेण पच्यतेतण्डुल इत्यत्रापि तृतीया न स्यात्तत्रापि चैत्रे आख्यातार्थसंख्याभिधानसंभवादित्यत कर्तृगतसंख्याभिधाने नियामकमाह। संख्याभिधानयोग्यश्चेति। संख्यान्वययोग्यश्चेत्यर्थः। "शाब्दबोधीय" आख्यातार्थसंख्याप्रकारतानिरूपितविशेष्यतावांश्चेति यावत्। चैत्रः तण्डुलः पचति, चैत्रः काष्ठः पचतीत्यादौ कर्मत्वकरणत्वादिलाक्षणिकप्रथमान्तपदोपस्थाप्यतण्डुलकाष्ठादेस्तादृशसंख्यान्वयवारणाय कर्मत्वाद्यनवरुद्धत्वविशेषणम्।

अथ कर्मत्वाद्यनवरुद्धत्वं यदि कर्मत्वाद्यनन्वितत्वं तदा उक्तस्थले तण्डुलकाष्ठादेः शाब्दबोधात्पूर्वं शाब्दबोधीयकर्मत्वादिनिरूपितविशेषणताशून्यत्वात्तदोपता-

**कर्मादौ न विशेषणत्वे तात्पर्यं तद्वारणाय प्रथमान्तेति।**

प्रश्न—'प्रथमान्तपदोपस्थाप्यत्व' यह विशेष्यदल क्यों दिया।

उत्तर—"तण्डुलं पचति" यहाँ पर यद्यपि तण्डुल इतर (कर्मता) का विशेषण है—परन्तु वक्ता का जब यह तात्पर्य नहीं है कि तण्डुल कर्मता में विशेषण होवे—तब "इतरविशेषणत्वेन तात्पर्याविषयत्व" तण्डुल में आ जाने से आख्यात से तण्डुल गत संख्या उक्त हो जायेगी—और उक्त में प्रथमाविभक्ति होती है अतः 'तण्डुलःपचति' इस प्रयोग की आपत्ति लग जायेगी—अत. प्रथमान्तपदोपस्थाप्यत्व दिया—देने पर तण्डुल प्रथमान्तपदोपस्थाप्य नहीं है—अपितु द्वितीयान्तपदोपस्थाप्य है।

---

द्रवस्थ्यम्। एवं पक्वमन्नं भुज्यते इत्यादौ पाककर्मत्वान्विते अन्ने आख्यातार्थ संख्याया अन्वयो न स्यादित्यत आह। **कर्मत्वादीत्यस्येति।** कर्मत्वाद्यनवरुद्ध इतिवाक्यस्येत्यर्थः। **इतरेति।** इतरस्मिन् विशेषणत्वेन तात्पर्याऽविषयत्वमर्थः। इतरत्वमविवक्षितम्। विशेषणत्वेन तात्पर्याविषयत्वं फलितम्। **तेन।** कर्मत्वाद्यनवरुद्ध इत्यस्य एतादृशार्थकरणेन। **न चैत्रे संख्यान्वय** इति। इवार्थसादृश्ये चैत्रस्य निरूपितत्वसंबन्धेन विशेषणत्वादिति भावः। अत्र चैत्र एव पचतीत्यादौ एवकारार्थेऽन्यस्मिन् चैत्रस्य प्रतियोगितासंबन्धेन विशेषणत्वात्संख्यान्वयानुपपत्तिरतो विशेषणत्वेनेत्यस्य विशेषणत्वमात्रेणेत्यर्थः। केचित्तु विशेषणत्वेनेत्यस्य प्रतियोगित्व-संबन्धानवच्छिन्नविशेषणत्वेनेत्यर्थः। तेन नोक्तानुपपत्तिरिति प्राहुः। द्वितीयदल-प्रयोजनमाह। **यत्रेति।** तण्डुलं पचतीत्यादावित्यर्थः **कर्मादौ।** तण्डुलादौ न विशेषणत्वे तात्पर्यमिति। ननु तण्डुलं पचतीत्यत्र तण्डुलस्य कर्मत्वांशे विशेषणत्व-विवक्षाऽभावे द्वितीयैवनोपपद्येत कर्मत्वांशे प्रकृत्यर्थस्य विवक्षायामेव कर्मणि द्वितीये-त्यनेन तदुत्तरं द्वितीयाविधानादितिचेन्न। न विशेषणत्वे तात्पर्यमित्यस्य न विशे-षणत्वमात्रे तात्पर्यमित्यर्थात्। **तद्वारणाय।** तण्डुले संख्यान्वयवारणाय। तथा च तण्डुलं पचतीत्यादौ विशेषणत्वविशेष्यत्वाभ्यां तण्डुलबोधे तात्पर्यं, तत्र तण्डुले संख्यान्वयवारणाय द्वितीयदलमिति भावः। इदमुपलक्षणम् चैत्रेण सुप्यते इत्यादि-भावाख्यातस्थले धात्वर्थव्यापारे संख्यान्वयवारणाय द्वितीयदलस्यावश्यकत्वात्। तथा चाख्यातार्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति विशेष्यतासंबन्धेन विशेषणत्वेन तात्पर्यविशिष्टान्यप्रथमान्तपदवृत्तिज्ञानजन्यो-पस्थितिः कारणम् उपस्थितौ वै० स्वविशेष्यविशेष्यकत्वसंबंधेन। एतादृशकारणस्य कर्त्राख्यातस्थले कर्त्र्येव सत्वेन तत्रैव निरुक्तसंबन्धेन शाब्दबोधोजायते नान्य-त्रेति भावः।

वस्तुतस्तु कर्तृकर्मवाचकपदसमभिव्याहृतलकारस्य मुख्यमात्रसाधारणकर्तृत्व-कर्मत्वबोधौपयिकतात्पर्यशून्यत्वमेव तृतीयाद्वितीयानियामकम्। एतेनाऽऽख्यातेन तद्गतसंख्यानभिधानस्यैव तद्बोधकपदोत्तरतृतीयाप्रयोजकत्वे दाराः सन्तीत्यादौ

**यद्वा धात्वर्थाऽतिरिक्ताऽविशेषणत्वं प्रथमदलार्थः । तेन चैत्र इव मैत्रोगच्छतीत्यत्र चैत्रादेर्वारणम् । स्तोकं पचतीत्यादौ स्तोकादेर्वारणाय द्वितीयदलम् । तस्य द्वितीयान्तपदोपस्थाप्यत्वाद्वारणमिति ।**

प्रथमान्तपदोपस्थाप्यत्वदल का अब पुनः प्रकारान्तर से फल दिखाने के लिये "कर्मत्वाद्यनवरुद्धत्व" दल का अर्थान्तर करते हैं—"यद्वा धात्वार्थातिरिक्ताविशेषणत्वं प्रथमदलार्थः" अर्थात् जो धात्वर्थ से अतिरिक्त का विशेषण न हो। इससे "चैत्र का वारण हो गया—क्यों कि चैत्र धात्वर्थ से अतिरिक्त इवार्थ सादृश्य का विशेषण ही है।

प्रश्न—कर्मत्वाद्यनवरुद्धत्व का जब कि 'धात्वर्थातिरिक्ताविशेषणत्व' यह अर्थ किया तो उस अर्थ पक्ष में 'प्रथमान्तपदोपस्थाप्यत्व' यह द्वितीयदल क्यों दिया।

उत्तर—'स्तोकं पचति' यहाँ पर स्तोक में संख्याभिधानयोग्यतापत्ति वारण करने के लिये द्वितीयदल दिया—अन्यथा 'क्रियाविशेषणानां कर्मत्वम्' इस नियम के अनुसार स्तोक धात्वर्थ (पाक) का ही विशेषण है—अतः धात्वर्थ से अतिरिक्त का अविशेषण होने के नाते आख्यात से स्तोकगत संख्या उक्त हो गयी—उक्त हो जाने से प्रथमाविभक्ति की आपत्ति लग जाती है—अर्थात् 'स्तोकः पचति' यह प्रयोग होना चाहिये—अतः द्वितीयदल दिया, देने से स्तोक में द्वितीयदल नहीं है क्योंकि स्तोक में द्वितीयान्तपदोपस्थाप्यत्व है।

---

आख्यातेन दारेषु बहुत्वस्य बाधितत्वेनाऽबोधनाद् दारैरिति तृतीयापत्तिरिति-प्रत्युक्तम्। तथा च तत्तत्प्रातिपदिकार्थविशेषणत्वमात्रेण कर्तृत्व-कर्मत्वाद्यविवक्षा एव तदनभिधानपदार्थः। तत्तत्प्रातिपदिकार्थविशेष्यतया कर्मत्वकर्तृत्वादिविवक्षया द्वितीयातृतीयाविभक्त्योः साधुत्वमिति विवेकः।

प्रथमदलस्याऽर्थान्तरमाह। **यद्वेति। धात्वर्थातिरिक्तेति। तेन।** धात्वर्थातिरिक्तत्वविशेषणेनापीत्यर्थः। **चैत्रादेर्वारणमिति।** चैत्रादेराख्यातार्थसंख्यान्वयवारणमित्यर्थः। चैत्रस्य धात्वर्थातिरिक्तेइवार्थसादृश्ये विशेषणत्वादिति भावः। **स्तोकं पचतीत्यादाविति।** तदेत्यादिः। आदिना मृदुपचतीत्यादेः परिग्रहः। **स्तोकादेर्वारणमिति।** स्तोकादेराख्यातार्थसंख्यान्वयवारणायेत्यर्थः। **तस्य।** स्तोकस्य। **द्वितीयान्तपदोपस्थाप्यत्वादिति।** प्रथमान्तपदोपस्थाप्यत्वाभावादित्यर्थः। **"क्रियाविशेषणानां कर्मत्वं नपुंसकत्वं चेति"** वार्तिकेन कर्मत्वाऽनुशासनात् क्रियाविशेषणानां द्वितीयान्तत्वादिति भावः। अत्रकल्पे चैत्र एव पचतीत्यादौ चैत्रे संख्यान्वयोपपत्त्यर्थं धात्वर्थातिरिक्तविशेषणत्वमात्रेण तात्पर्याविषयत्वमर्थोबोध्यः। चैत्रस्य एवकारार्थेऽन्यस्मिन् विशेषणत्वेपि मुख्यविशेष्यत्वाच्च। तथा हि। एवकारार्थस्त्रिविधः। अन्ययोगव्यवच्छेदः—अयोगव्यवच्छेदः—अत्यन्तायोगव्यवच्छेदश्च। विशेष्यसंगतैवकारस्याऽन्ययोगव्यवच्छेदोऽर्थः। यथा प्रकृते चैत्राऽन्यस्मिन् पाककर्तृत्वयोगोव्यवच्छिद्यते। तत्र अन्यस्मिन्, योगे-व्यवच्छेदे च खण्डशः शक्तिरेवकारस्य। अन्यपदार्थोभेदवान्, तत्र प्रतियोगितयाचैत्रस्यान्वयः। योगः संबन्धः,

एवं व्यापारेऽपि न शक्ति गौरवात्, रथोगच्छतीत्यादौ तु व्यापारे आश्रयत्वे वा लक्षणा। जानातीत्यादौ आश्रयत्वे, नश्यतीत्यादौ तु प्रति-

(इतने से वैयाकरणों के मत का खण्डन किया कि आख्यात की कर्त्ता में शक्ति नहीं है) इसी प्रकार व्यापार में भी शक्ति नहीं है—गौरव होने से—गौरव यह है कि शक्य (शक्याश्रय) हुवा व्यापार—शक्यतावच्छेदक हुवा व्यापारत्व, व्यापारत्व है "तज्जन्यत्वेसतितज्जन्यजनकत्व" यह गुरुभूत है।

प्रश्न—व्यापार में शक्तिवादी मीमांसक कहता है कि यदि व्यापार में शक्ति नहीं है तो 'रथो गच्छति' 'चैत्रो जानाति' 'घटो नश्यति' इत्यादि स्थल में शाब्दबोध कैसे होगा—क्योंकि आख्यात का नैयायिकभिमतकृतिरूपअर्थ रथ में अप्रसिद्ध है—कारण कि कृति तो आत्मा का गुण है अतः 'गमनानुकूलकृतिमान् रथः' यह बोध तो हो नहीं सकता है—और व्यापार में आप शक्ति मानते नहीं हैं अतः शब्दबोध सर्वथा अनुपपन्न हो जायगा—इसी प्रकार 'चैत्रो-जानाति' यहाँ पर भी ज्ञानानुकूलकृति अप्रसिद्ध है—कारण कि अनुकूल नाम है जनक का—सो ज्ञान का जनक कृति नहीं होती है प्रत्युत कृति का ही जनक ज्ञान होता है-इच्छाद्वारा-क्योंकि जानाति-इच्छति-यतते ऐसी प्रक्रिया है। एवं 'घटो नश्यति' यहाँ पर भी 'नाशानुकूल-कृतिमान् घटः' यह बोध सर्वथा अनुपपन्न है—कारण कि कृतिमान् आत्मा ही होता है घट नहीं हो सकता है।

उत्तर—पूर्वोक्त तीनों स्थलों में "गंगायां घोषः" की तरह लक्षणावृत्ति से बोध उत्पन्न करना चाहिये। अतः 'रथोगच्छति' यहाँ पर आख्यात की व्यापार में या आश्रयत्व में लक्षणा करके 'गमनानुकूलव्यापारवान् रथः' अथवा 'गमनाश्रयो रथः' यह बोध उपपन्न हो जावेगा। ऐसे ही 'चैत्रो जानाति' यहाँ पर भी आश्रयत्व में लक्षणा करके 'ज्ञानाश्रयश्चैत्र' यह बोध उपपन्न हो जावेगा। एवं 'घटो नश्यति' यहाँ पर भी आख्यात की प्रतियोगित्वरूप अर्थ में लक्षणा करके 'नाशप्रतियोगी घटः, यह बोध उपपन्न हो जावेगा।

---

तत्राख्यातार्थकृतेःप्रतियोगितयाऽन्वयः। तस्य च प्रतियोगितया व्यवच्छेदेऽन्वयः। व्यवच्छेदोऽभावः। तथा च चैत्रः पाकानुकूलकृतिमान् चैत्रान्यः पाकानुकूलकृति-संबन्धाभाववानिति बोधः। विशेषणसंगतैवकारस्य चाऽयोगव्यवच्छेदः यथा शंखः पाण्डुर एवे त्यादौ शंखे पाण्डुरायोगोव्यवच्छिद्यते। क्रियासंगतैवकारस्य चाऽत्यन्ता-योगव्यवच्छेदोऽर्थः। यथा नीलं सरोजं भवत्येवेत्यादौ सरोजे नीलभवनस्याऽ-त्यन्तायोगोऽव्यवच्छिद्यते, नत्वयोगोऽव्यवच्छिद्यते, क्वचित्सरोजे नीलत्वासंबन्ध-स्यापि सत्वात्।

ननु लकारसामान्यस्य न कृतौशक्तिः, रथोगच्छतीत्यादौ रथे कृत्यभावेन व्यापारे लक्षणापत्तेः, किन्तु व्यापारे शक्तिः, रथो गच्छतीत्यादौ गमनानुकूल-व्यापारस्य रथे सत्वाच्छक्त्यैव बोधोपपत्तेरिति मीमांसकमतं निरस्यति। एवमिति। व्यापारेऽपीति। अपिना कर्तुः समुच्चयः। यथा कर्ता न लकारसामान्यवाच्य-स्तथा व्यापारोऽपीति भावः। तत्र हेतुमाह। गौरवादिति। कृतित्वजात्यपेक्षया

योगित्वे निरूढलक्षणा। उपमानाद्यथा शक्तिग्रहस्तथोक्तम्। एवं कोषादपि शक्तिग्रहः, सति बाधके क्वचित्त्यज्यते। यथा नीलादिपदानां नीलरूपादौ नीलादिविशिष्टे च शक्तिः कोषे न व्युत्पादिता तथापि लाघवान्नीलादावेव शक्तिः, नीलादिविशिष्टे तु लक्षणा। एवमाप्तवाक्यादपि—यथा कोकिलः पिकपदवाच्य इत्यादिशब्दात्पिकादिशब्दानां कोकिले शक्तिग्रहः।

उपमान से शक्ति निश्चय का प्रकार हम पहिले ही उपमान खण्ड में कह चुके हैं। इसी प्रकार कोश से भी शक्तिग्रह होता है—परन्तु कहीं स्थलविशेष में कोष से सिद्ध किसी पद की किसी अर्थ में शक्ति स्वीकार करने में यदि कोई गौरव आदि दोषरूप बाधक उपस्थित हो तो वहाँ उस शक्ति का अस्वीकार कर दिया जाता है। जैसे "गुणेशुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इस कोश ने नीलादिपदों की नीलादिरूप अर्थ में एवं तद्विशिष्टरूप अर्थ में शक्ति का प्रतिपादन किया है—तथापि लाघव से नीलादिपदों की शक्ति नीलादिरूप में ही स्वीकार करते हैं (क्योंकि शक्यतावच्छेदक नीलत्वं आदि जातियाँ होने से लाघव है—कारण कि वह अनुगत धर्म है) और नीलादिरूप विशिष्ट में लक्षणा है। (कारण कि विशिष्ट में यदि शक्ति मानते है तो शाक्यतावच्छेदक नीलादिरूप होंगे-वे अनित्य तथा अनन्त होने के नाते अननुगत हैं अतः गौरव होगा—क्योंकि अवच्छेदक अनुगत धर्म ही को माना जाता है और अनुगत धर्म जाति ही होता है) एवं आप्त (यथार्थवक्तापुरुष) के वाक्य से भी शाब्दबोध

---

तज्जन्यत्वे सति तज्जन्यजनकत्वस्वरूपव्यापारत्वस्य शक्यतावच्छेदकत्वे गौरवादिति भावः। मणिकारमतानुसारेणाऽऽह। **आश्रयत्वे** वेति। **लक्षणेति**। निरूढलक्षणे-त्यर्थः। **जानातीत्यादाविति**। आत्मेत्यादिः। इदं च देवदत्तादिपदस्य तत्तच्छरीरा-वच्छिन्नात्मपरतामभ्युपेत्य। अन्यथा अवच्छेदकत्वे इत्यपि बोध्यम्। ज्ञानाश्रय आत्मेति बोधः। **निरुढलक्षणेति**। निरूढत्वं चाऽनादितात्पर्यविषयत्वम्। नाश-प्रतियोगी घट इति बोधः। **तथोक्तमिति**। उपमाननिरूपणावसरे इत्यर्थः। अयं गोसदृश इति प्रत्यक्षाद्यनन्तरं—गोसदृशोगवयइत्यतिदेशवाक्यार्थस्मरणं—ततो गवयो गवयपदवाच्य इत्याकारकः शक्तिग्रहः स एवोपमितिरिति भावः। कोषादपि शक्ति-ग्रहस्थलमाह। **एवं कोषादपीति**। **शक्तिग्रह** इति भवतीति शेषः। **अप्येकदन्त-हेरंबलंबोदरगजाननाः** इति कोषादपीत्यर्थः। **सतिबाधके**। इति। गौरवज्ञान-रूपबाधकेसतीत्यर्थः। त्यज्यते इति। शक्तिर्नाङ्गीक्रियते इत्यर्थः। **नीलादिपदाना-मिति**। यद्यपि "शुक्लादिकमनेकधा" इत्यनुरोधेन शुक्लादिपदानामित्येव वक्तुमुचि-तम्, तथापि नीलोघट इत्यादिप्रयोगस्यैव प्राचुर्येणदर्शनात्तदनुसारेण नीलादीना-मित्युक्तम्। कोषेनेति। गुणेशुक्लादयः पुंसिमणिलिङ्गास्तुतद्वतीत्यादिकोषेनेत्यर्थः।

**गुणे**-गुणे वाच्ये। अत्र गुणे इति नियमार्थम्। अन्यथा वैयर्थ्यात्। गुणत्व-स्योद्देश्यतावच्छेदकत्वे इति यावत्। तथा च गुणत्वस्योद्देश्यतावच्छेदकत्वस्थले एव तेषां पुंस्त्वमिति ज्ञापितं भवति। तेन रक्तोगुणो रूपमिति प्रत्यक्षमणिः। अत

**एवं व्यवहारादपि। यथा प्रयोजकवृद्धेन घटमानयेत्युक्तम्, तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतः, तदवधार्य पार्श्वस्थोबालोघटानयनरूपं कार्यं घटमानयेति शब्दप्रयोज्यमित्यवधारयति।**

होता है—जैसे कि (किसी व्यक्ति के यह पूछने पर कि 'पिक' किसे कहते हैं तो आप्तपुरुष ने उत्तर दिया कि) कोकिल पिकपद का वाच्य होता है तो वहाँ वह व्यक्ति आप्तपुरुष के वाक्य से कोकिलरूप अर्थ में पिकपद की शक्ति का निश्चय कर लेता है। एवं व्यवहार से भी शक्तिग्रह होता है-(यहाँ इतनी बात और समझलेनी चाहिये कि व्यवहार से शक्ति ग्रहस्थल में तीन व्यक्ति प्रधान हैं प्रथम प्रयोजकवृद्ध (बाबा) द्वितीय प्रयोज्य वृद्ध (बालक का पिता) तृतीय स्वयं बालक) जैसे प्रयोजकवृद्ध ने प्रयोज्यवृद्ध से कहा कि "घटमानय" घट को ले आओ—ऐसा सुनकर प्रयोज्यवृद्ध घट ले आया इस प्रकार के उन दोनों के व्यवहार को देखकर पास में स्थित बालक यह निश्चय करता है कि "घटमानय" इस शब्द से प्रयोज्य घटानयन (घट को ले आना) रूप कार्य है। उसके बाद प्रयोजक वृद्ध ने कहा कि घट को ले जाओ और गौ को ले आओ इत्यादि स्थल में "आवाप-उद्वाप" (अन्वयव्यतिरेक) से (अर्थात् प्रयोजकवृद्ध ने जब

---

एव च रक्तं रूपं नास्तीति दीधितिकृदुक्तमपि संगच्छते, तत्र गुणत्वस्योद्देश्यतानवच्छेदकत्वेन नपुंसकत्वाभिधानात्। **तद्वतीति।** गुणवति वाच्ये इत्यर्थः। **व्युत्पादितेति।** गुणवाचकशुक्लादिपदानां पुंलिङ्गत्वस्य, गुणिवाचकशुक्लादिपदानां गुणिलिंगत्वस्य प्रतिपादनेन गुणवाचकत्वगुणिवाचकत्वयोरपि प्रतिपादनादिति भावः। **तथापीति।** कोशेनोभयत्र शक्तिप्रतिपादनेपीत्यर्थः। **लाघवादिति।** नीलत्वादिजातेः शक्यतावच्छेदकत्वे लाघवादित्यर्थः। **लक्षणेति।** अनन्तनीलादिव्यक्तीनां शक्यतावच्छेदकत्वे गौरवादिति भावः। **आप्तवाक्यादपीति।** शक्तिग्रह इति पूर्वेणान्वयः। कोषादेराप्तोक्तत्वेपि गोवलीवर्दन्यायेन पृथगुपन्यासः। **व्यवहारादपीति।** शक्तिग्रह इत्यनुषज्यते। **प्रयोजकवृद्धेन।** गुरुणा। **तच्छ्रुत्वा।** घटमानयेति वाक्यश्रुत्वा तादृशवाक्यजन्यशाब्दबोधोत्तरमिति शेषः। **प्रयोज्यवृद्धेन।** शिष्येण। **आनीतः।** पार्श्वनीतः। **तदवधार्येति।** तत्सर्वंनिश्चित्येत्यर्थः। प्रयोजकवृद्धोक्तवाक्यं श्रुत्वा प्रयोज्यवृद्धगमनं दृष्ट्वा घटानयनं च दृष्ट्वेति फलितार्थः। **पार्श्वस्थ इति।** समीपस्थ इत्यर्थः। **बाल इति।** घटादिपदाऽगृहीतशक्तिक इत्यर्थः। अस्यावधारयतीत्यनेनाऽन्वयः। **घटमानयेतिशब्दप्रयोज्यमिति।** आदौ प्रयोजकवृद्धेन घटमानयेत्युक्तम्—ततःप्रयोज्यवृद्धस्य शाब्दबोधः—ततो घटानयनंमदिष्टसाधनमितिज्ञानम्—ततोघटानयने प्रवृत्तिः। ततोघटानयनरूपा चेष्टा भवति इति रीत्या घटानयनस्य घटमानयेतिशब्दप्रयोज्यत्वं बोध्यम्। **अवधारयतीति।** घटानयनं घटमानयेति शब्दप्रयोज्यं तादृशशब्दश्रवणजन्यज्ञानजन्यप्रवृत्त्यविषयत्वे सति प्रवृत्तिविषयत्वादित्यनुमितिमान् बालो भवतीत्यर्थः।

ततश्च घटं नय गामानयेति वाक्यादावापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति। इत्थं च भूतले नीलोघट इत्यादिर्वाक्यान्न शाब्दबोधः। घटादिपदानां कार्यान्वितघटादिबोधे सामर्थ्यात्, कार्यताबोधं प्रति च लिङादीनां सामर्थ्यात्तदभावाच्च न शाब्दबोध इति केचित्।

'घटं नय' यह कहा तब प्रयोज्यवृद्ध घड को ले गया और जब 'गामानय' यह कहा तब गौ को ले आया—यह तो हुवा अन्वय। और जब तक यह नहीं कहा था तब तक न घट को ले गया और न गौ को लाया—यह हुवा व्यतिरेक) इस आवाप-उद्वाप के द्वारा पार्श्वस्थबालक घटआदि पदों की शक्ति का निश्चय कार्यान्वित (कार्यताविशिष्ट) घटादि में करता है—(कार्यता के बोधक लिङ्-लोट्-तव्यत्-अनीयर इत्यादि प्रत्यय होते हैं-जहाँ ये प्रत्यय नहीं हैं वहाँ शाब्दबोध नहीं होता है जैसे "भूतले नीलोघटः" यहाँ पर। क्योंकि घटादि पदों का कार्यान्वित घटादिरूप अर्थ के बोध में ही सामर्थ्य निश्चित है-और कार्यताबोध के प्रति लिङ्गादि कों का ही सामर्थ्य है-सो "भूतले नीलो घटः" यहाँ पर लिङ्गादि का अभाव होने से शाब्द

---

अयमत्रानुमानसंग्रहः—इदं घटानयनं घटानयनविषयकप्रवृत्तिजन्यं चेष्टात्वान्मदीयचेष्टावत्—ततश्च सा प्रवृत्तिः घटानयनधर्मिककृतिसाध्यताज्ञानजन्या प्रवृत्तित्वान्निजप्रवृत्तिवत्। तादृशप्रवृत्तिजनकं "तादृशकृतिसाध्यता" ज्ञानं असाधारणहेतुकं कार्यत्वाद् घटवदिति। असाधारणकारणं च वृद्धवाक्यमेवनान्यदितिध्येयम्।

ततश्चेति। तादृशावधारणानन्तरमित्यर्थः। **घटं नय गामानयेतिवाक्यादिति**। पञ्चम्यर्थः प्रयोज्यत्वम्, तस्याऽऽवापेद्वापे चाऽन्वयः। **आवापोद्वापाभ्यामिति**। आनयननयनाभ्यामित्यर्थः। तृतीयार्थोऽभेदः, तस्य च कार्येऽन्वयः। **घटादिपदानां**। लिङाद्यतिरिक्तपदानाम्। **कार्यान्वितघटादाविति**। कार्यान्वितत्वं च कार्यताविशिष्टत्वम्। वै॰ स्वबोधकलिङादिपदसमभिव्याहृतपदजन्यबोधविषयत्वसम्बन्धेन। **शक्तिंगृह्णातीति**। शक्तिमनुमिनोतीत्यर्थः। वाल इत्यनुषज्यते।

अनुमानप्रकारश्च घटपदं "आनयननयनात्मक" कार्यान्वितघटे शक्तं अनुपपत्तिप्रतिसन्धानं विना "तादृश" कार्यान्वितघटविषयकबोधतात्पर्येणवृद्धोच्चरितत्वादिति। हेतुश्च व्यतिरेकी बोध्यः। अयमाशयः। घटमानय घटंनयेत्यादिवृद्धव्यवहारप्रयोजकवाक्यानि सर्वाणि "प्रवर्तकत्वेन" लिङादिपदघटितानि ततश्चतद्व्यवहारदर्शिनः शिशवोपि कार्यविषयकघटाद्यर्थबोधं प्रत्येव घटादिपदानां सामर्थ्यमवधारयन्तः तदुत्तरकालमपिकार्यान्वितघटादौ शक्तिज्ञानेनैव तादृशघटादिबोधं स्वीकुर्वन्ति इति। तथाचैतन्मते, शाब्दत्वावच्छिन्नं प्रत्येव कार्यतावाचिपदसाकांक्षपदानां कारणत्वम्। कार्यतावच्छेदककोटौकार्यताविषयकत्वनिवेशे प्रयोजनाभावादिति ध्येयम्।

**इत्थंचेति**। कार्यतावाचिपदस्य शाब्दसामान्ये कारणत्वादेव चेत्यर्थः। **न शाब्दबोध इति**। कारणाभावादिति शेषः। कारणाभावमेवोपपा...

तन्न । प्रथमतः कार्यान्वितघटादौ शक्त्यवधारणेपि लाघवेन पश्चात्तस्य परित्यागौचित्यात् । अत एव चैत्र पुत्रस्तेजातः, कन्या ते गर्भिणी जातेत्यादौ मुखप्रसादमुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्कारणत्वेन परिशेषाच्छाब्दबोधं निर्णीय तद्धेतुतया तं शब्दमवधारयति । तथा च

बोध नहीं होता है–ऐसा (केचित्) प्रभाकर का मत है । (तन्न) वह ठीक नहीं है । क्योंकि पहिले कार्यताविशिष्ट घट रूप अर्थ में शक्ति निश्चय होने पर भी लाघव से बाद में उसका परित्याग ही उचित मालूम होता है–इसीलिये "चैत्र ! पुत्रस्ते जातः–कन्या ते गर्भिणी जाता" इस मैत्र के कथन को सुनकर पार्श्वस्थ बालक क्रमशः चैत्र के मुखप्रसाद और मुखमालिन्य से चैत्र के सुख-दुःख का अनुमान करके (तत्कारणत्वेन) अर्थात् सुख-दुःख का कारण दूसरा कोई नहीं है अतः परिशेषात् शाब्दबोध ही में सुख-दुःख की कारणता का निश्चय करके और फिर तद्धेतुतया (उस शाब्दबोधकाकारण) "चैत्रपुत्रस्ते जातः" इत्यादि शब्द है ऐसा निश्चय करता है ।

मतलब यह है कि जहाँ कार्यता के बोधक लिङ्लोट् आदि प्रत्यय नहीं हैं वहाँ भी शाब्द-

---

घटादिपदानामिति । ज्ञायमानघटादिपदानामित्यर्थः । कार्यान्वितघटादिबोधे इति सावधारणम् । सामर्थ्यादिति । प्रयोजकत्वादित्यर्थः । व्यवहारेणपदानां कार्यान्वितविषयकशाब्दबोधस्यैव जननादितिभावः । ननु नीलो घट इत्यादि वाक्यात्कार्यान्वितघटादिविषयक एव बोधोऽस्तु इत्यत आह । कार्यताबोधं प्रतिचेति । कार्यत्वोपस्थितिंप्रतिचेत्यर्थः । अवधारणं चार्थः । स च तदभावादित्युत्तरं योजनीयः । लिङादीनामिति लिङ्लोट्तव्यन्प्रत्ययानाभित्यर्थः । सामर्थ्यादिति । कार्यताविषयकबोधजनकोपस्थितिप्रयोजकत्वादित्यर्थः । तदभावाच्चेति कार्यत्वोपस्थापकलिङाद्यभावादेव चेत्यर्थः । न शाब्दबोध इति । नीलोघट इत्यादिवाक्यान्न शाब्दबोध इत्यर्थः । तथा च लिङाद्यभावेन न कार्यताविषयकशाब्दबोधः, व्याप्यधर्मावच्छिन्ने कार्ये जननीये व्यापकधर्मावच्छिन्नकार्यसामग्री अपेक्षिता" इति नियमेन कार्यान्वितघटादिविषयकशाब्दबोधस्यापि न सम्भव इति भावः । केचिदिति । प्राभाकरा इत्यर्थः । अथ गोकर्मकाऽऽनयनज्ञानस्य गामानयेति वाक्यजन्यत्वावधारणेपि गामितिभागस्याऽयमर्थः, आनयेति भागस्याऽयमर्थः, इति ज्ञातुमशक्यमेवेति कथं व्यवहाराद् गवादिपदशक्तिग्रहः इति चेत्सत्यम् । अश्वमानय गां बधानेति प्रयोजकवृद्धप्रयुक्तवाक्यान्तरे श्रुते तदनन्तरं मध्यमवृद्धकर्तृकं गोबन्धनमश्वानयनं च दृष्ट्वा गोरेवानयनबन्धनोभयत्वात्, अश्वस्यैवाऽऽनयनाश्रयत्वाद् गोपदस्य गोत्वविशिष्टे शक्तिः, अश्वपदस्याऽश्वत्वविशिष्टे शक्तिरिति निश्चिनोति बाल इति हृदयम् ।

अत्र गामानयेत्यादिप्रयोजकवृद्धव्यवहारात् पूर्वोक्तक्रमेण कार्यान्विते पदानां प्रथमतः शक्तिग्रहेपि कार्यान्वितघटत्वापेक्षया घटत्वस्य शक्यतावच्छेदकत्वे लाघव-

व्यभिचारान्न कार्यान्विते शक्तिः । न च तत्र तं पश्येत्यध्याहार्यम् । मानाभावात्, चैत्र पुत्रस्ते जातोमृतश्चेत्यादौ तदभावाच्च ।

इत्थं च लाघवादन्वितघटेपि शक्तित्यक्त्वा घटपदस्य घटमात्रेशक्तिमवधारयति ।

बोध होता है—जैसे प्रकृत में बतला चुके हैं —ऐसे ही "भूतले नीलो घटः" यहाँ भी होता है। तथा च व्यभिचार (व्यतिरेक-व्यभिचार होने से) कार्यताविशिष्ट में शक्ति नहीं है।

प्रश्न—"चैत्र ! पुत्रस्ते जातः" इत्यादिस्थल में "तंपश्य" इसका अध्याहार कर लिया जाय।

उत्तर—कोई प्रमाण नहीं। और दूसरी बात यह है कि "चैत्र ! पुत्रस्ते जातो मृतश्च" यहाँ पर 'पश्य' इसका अध्याहार भी नहीं बनता है (क्योंकि मृतपुत्र को बेचारा चैत्र क्या देखेगा) इस प्रकार (कार्यताविशिष्टघटत्व की अपेक्षा घटत्व को घटपद का शक्यतावच्छेदक मानने में लाघव है) लाघव होने से अन्वित घट में भी घट-पद की शक्ति का परित्याग करके (क्योंकि अन्वित घट में शक्तिवादी कुमारिलभट्ट तथा वेदान्ती के मत में अन्वितघटत्व शक्यतावच्छेदक होगा) घटपद की (घटमात्रे) घटत्वावच्छिन्न में शक्ति का निश्चय करते हैं

---

मिति लाघवज्ञानेन "अनन्यलभ्योहि शब्दार्थः" इति न्यायाच्च घटादिपदानां घटादिमात्रे शक्तिरित्याशयेन समाधत्ते। **तन्नेति** । **प्रथमत** इति। घटादिपदानामित्यादिः। कार्यान्वितघटत्वापेक्षया घटत्वस्यशक्यतावच्छेदकत्वे लाघवज्ञानात्पूर्वमित्यर्थः। **लाघवेनेति** । कार्यान्वितघटत्वापेक्षया घटत्वस्य शक्यतावच्छेदकत्वे लाघवमितिलाघवज्ञानसहकृतेन मनसेत्यर्थः। इदमुपलक्षणम्। अनन्यलभ्यस्यैव शब्दार्थत्वेन कार्यत्वं लिङादिलभ्यं-तदाश्रयं च धातुलभ्यमिति ज्ञानसहकृतेन मनसेत्यपि बोध्यम्। **तस्य** कार्यान्वितत्वेशक्यतावच्छेदकत्वस्य। प्रामाणिकतया गौरवं न दोषायेत्यत आह। **अतएवेति**। तत्र कार्यान्वितत्यागादेवेत्यर्थः। **कन्येति**। अविवाहितेत्यादिः। **अनुमायेति**। तथा च चैत्रः सुखी प्रसादविशिष्टमुखवत्वात्, चैत्रः दुःखी मालिन्यविशिष्टमुखवत्वादिति सुखदुःखानुमित्यनन्तरमिति भावः। **तत्कारणत्वेन**। सुखदुःखकारणत्वेन। तदा तद्धेतुधीः शाब्दान्यहेतुकैवस्यादत आह। **परिशेषादिति**। तदाशाब्दान्यात्मक तद्धेतु ज्ञानाभावादित्यर्थः। तद्धेतुज्ञानस्य शब्दान्यहेतोरभावादिति भावः। **तद्धेतुतया**। सुखदुःखहेतुधीहेतुतया। तत्र शाब्दाङ्गीकारेऽपि कार्यान्विते शक्तिरस्तु अत आह। **तथाचेति**। तत्र शाब्दाङ्गीकारे चेत्यर्थः। शाब्दसामान्ये कार्यतोपस्थापकपदज्ञानस्येति शेषः। **कार्यान्विते** इति। सर्वपदानामित्यादिः। तत्र चैत्र पुत्रस्ते जात इति वाक्ये। **पश्येत्यादीति**। आदिना तां त्यजेत्यस्य संग्रहः। **अध्याहार्यमिति**। निरुक्तवाक्यघटकतयाअनुसन्धेयमित्यर्थः। तथा च कार्यत्वोपस्था-

पकपदधियो न व्यभिचारइतिभावः। उक्तशाब्दबोधानुरोधादेव तदध्याहार इत्यतस्तदसंभवमाह। **चैत्रेति। तदभावाच्चेति।** पश्येत्यादिकार्यताबोधकपदाध्याहाराऽसंभवाच्चेत्यर्थः। प्राणसंयोगविशिष्टशरीरस्यैव पुत्रपदार्थतया नष्टे प्राणसंयोगाभावेन तस्य दर्शनकर्मत्वबाधितत्वादिति भावः।

तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतदुपस्थितिः कारणम्, अन्यथा घटादिपदात्समवायेनाकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तेः। एवं चाऽन्वयांशेपि शक्तिः स्वीकार्या, अन्यथा घटमित्यादिवाक्यघटकघटपदाच्छक्त्या घटस्य, तादृशाऽम्पदाच्छक्त्या कर्मत्वस्य उपस्थितिसंभवेपि घटकर्मत्वयोः संसर्गस्य "आधेयतारूपस्य" शाब्दबोधे भानानुपपत्तिः, तस्य वृत्तिज्ञानजन्योपस्थितिविरहात्, संसर्गताबोधकपदाभावात्। संसर्गताभिन्नतत्तद्विषयताशालिशाब्दबोधं प्रति वृत्तिज्ञानाधीनतत्तद्विषयकोपस्थितित्वेन कारणत्वोक्तौ उक्तव्यभिचारवारणेपि कार्यतावच्छेदकगौरवापत्तिः एवं कार्यतावच्छेदकविषयतायाः कारणतावच्छेदकविषयताप्रयोज्यत्वनियमभंगप्रसंगश्चेति घटपदस्याऽन्वितघटेशक्तिः, एवं अम्पदस्याऽन्वितकर्मत्वेशक्तिः, विनिगमनाविरहेण एकशेषस्य कर्त्तुमशक्यत्वात्। तथा च पदार्थद्वयसंसर्गेपिशक्तेः स्वीकरणीयतया घटकर्मत्वयोः संसर्गउभयपदलभ्य एवेति नोक्तानुपपत्तिरितिभट्टमतं निरस्यति। **इत्थं चेति।** चोवधारणे। अन्वितघटत्वादेः शक्यतावच्छेदकत्वे गौरवादेवेत्यर्थः। लाघवादित्यस्याऽवधारयतीत्यनेनाऽन्वयः। **अन्वितघटेपीति।** अन्वयः संबन्धः। अपिना कार्यान्वितघटादेः समुच्चयः। **घटमात्र।** केवलघटत्वावच्छिन्ने। एवं शाब्दबोधीयप्रकारताविशेष्यतयोरेवनियामकं वृत्त्यापदजन्योपस्थितिविषयत्वमिति नोक्तनियमभंगावसरः।

अत्रेदं बोध्यम्। सामान्यतस्तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतद्विषयकोपस्थितिर्नकारणम्, तथा सति घटादिपदाद् घटत्वप्रकारकबोधस्येव आधेयतासंबन्धेन घटप्रकारकघटत्वविशेष्यक बोधस्य, "घटत्वं आधेयतासंबन्धेनघटवदित्याकारकस्य" विशृङ्खलभावेन "घटः घटत्वं चेत्याकारकस्यवा" बोधस्यापत्तेः। किन्तु तद्धर्मप्रकारकतद्विशेष्यकबोधे वृत्तिज्ञानजन्यतद्धर्मावच्छिन्नविषयकोपस्थितिः कारणम्। तथा च संसर्गे विशेषणतास्वीकारेपि प्रकारताया अनभ्युपगमेन-संसर्गस्यस्वरूपतोभानेन किञ्चिद्धर्मप्रकारकत्वविरहेण च संसर्गविषयतायाः कार्यतावच्छेदकानाक्रान्ततया व्यभिचाराभावेन पदार्थद्वयसंसर्गे शक्तिकल्पने प्रमाणाभाव इति। एवं शक्तिलक्षणोभयसाधारणवृत्तित्वस्य दुर्वचतयावृत्तिज्ञानत्वेन न कारणत्वम्, किन्तु तद्विषयकशाब्दबोधे तच्छक्तपदज्ञानजन्यतदुपस्थितिः, तल्लाक्षणिकपदज्ञानजन्यतदुपस्थितिश्च कारणम्। एवं शक्तिज्ञानं लक्षणाज्ञानं चोभयविधम्, पदविशेष्यकं अर्थविशेष्यकं च, तत्र परस्परजन्यबोधे व्यभिचारवारणाय पदविशेष्यकशक्तिज्ञानाधीनोपस्थित्यव्यवहितोत्तरजायमानशाब्दबोधं प्रतिपदविशेष्यकवृत्तिज्ञानजन्योपस्थितिः कारणम्। पदमर्थविशेष्यकशक्तिज्ञानाधीनोपस्थित्यव्यवहितोत्तरजायमानशाब्दबोधं प्रति अर्थविशेष्यकशक्तिज्ञानाधीनोपस्थितिः कारणम्। एवं लक्षणाज्ञानमपि उभयविधं

एवं वाक्यशेषादपि शक्तिग्रहः । यत्रायवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशेषे आर्याणां प्रयोगः कङ्गौ तु म्लेच्छानाम् । तत्र हि अथान्या ओषधयोम्लायन्तेऽथैतेमोदमानास्तिष्ठन्ति । वसन्ते सर्वसस्यानां जायते पत्र

नैयायिक इसी प्रकार वाक्य शेष से भी शक्तिग्रह होता है । जैसे "यवमयश्चरुर्भवति" ( देवता के लिये देय हवि को चरु कहते हैं ) यहाँ पर यवपद की शक्ति दीर्घशूकविशेष ( जो ) में है यह आर्यलोगों ( याजकों ) का कहना है—और कङ्ग ( कंगनी ) में है यह म्लेच्छों का कहना है । ( अब दोनों के व्यवहार से मध्यस्थ को संशय उत्पन्न हो जाता है कि यवपद की शक्ति किस अर्थ में है) तत्रहि) दीर्घशूकविशेष-कङ्गु इन दोनों के मध्य में किस अर्थ में शक्ति है इस निर्णय के लिये यह वाक्य है कि "यदान्या ओषधयों म्लायन्तेऽथैते मोदमानश्च तिष्ठन्ति" अर्थात् (यदा) वसन्तकाल में, (अन्य) दीर्घशूकविशेष से भिन्न, ओषधियाँ-सस्य आदि म्लान हो जाती है-अर्थात् सूख जाती हैं, (एते) दीर्घशूकविशेष, (मोदमान) हरे (हरित) रहते हैं— इस वाक्य के शेष से यवपद की शक्ति का निश्चय दीर्घशूकरूप अर्थ में हो जाता है । स्मृतिरूप

---

बोध्यम् । इत्थं च कार्यतावच्छेदककोटौ विषयप्रवेशस्यानावश्यकतया वृत्त्यनुपस्थितस्य संसर्गस्य शाब्दबोधोपगमे व्यभिचाराभावात्किं तत्र शक्तिकल्पनेनेत्यन्यत्र विस्तरः ।

ननु घटमित्यादौ घटकर्मत्वयोः संसर्गस्य "आधेयतारूपस्य" वृत्त्यनुपस्थितस्यापि शाब्दबोधविषयत्वोपगमेद्रव्यं घटवदित्यादौ द्रव्यघटयोरभेदसंसर्गस्येव संयोगसमवायादीनामपि भानापत्तिः, संबन्धभाने नियामकाभावात्, एवं पचतिचैत्र इत्यादौ कालिकादेरपि भानसंभवेन तादृशकृत्यादिशून्येपि चैत्रादौ तादृशप्रयोगापत्तिरितिचेन्न । कयोश्चित्पदयोः केनचित्संबन्धेन स्वार्थान्वयबोधेसाकांक्षतयाआकांक्षाज्ञानस्यैव पदार्थसंसर्गनियामकत्वात्, तथा च पचतीत्यादौ अनुकूलत्वसंबन्धेन पाकादिप्रकारककृतिविशेष्यकबोधं प्रत्येव अव्यवहितोत्तरत्वसंबन्धेन पचादिविशिष्टतिवादिपदस्वरूपाऽऽकांक्षाज्ञानस्य हेतुतया न तत्र संबन्धान्तरभानम् । ययोः पदयोर्नानासंबन्धेनस्वार्थान्वयबोधे आकांक्षा, तज्जन्यबोधे संसर्गविशेषे तात्पर्यज्ञानकारणत्वादेव संबन्धभाननियमोपपत्तेः । तथा च द्रव्यं घटवदित्यादौ द्रव्यघटादिपदयोः संयोगसमवायादिनानासंबन्धेन स्वार्थान्वयबोधेसकांक्षतया द्रव्यं घटवदिति वाक्यजन्यशाब्दबोधे "द्रव्यं घटवदिति वाक्यं संयोगेन द्रव्यविशेष्यक घटप्रकारकबोधेच्छो‍च्चरितमिति" तात्पर्यज्ञानकारणबलादेव संसर्गविशेषभाननियमोपपत्तेः । तथा च दा यत्र यादृशसम्बन्धघटिततात्पर्यज्ञानं तद्घटितसामग्रीबलात् तदा तत्र ादृशसम्बन्धस्यैव भानमिति नानियम इति भावः । वाक्येति । विधिशब्देत्यर्थः । ोषः-तदेकवाक्यतापन्नं वाक्यम् । अतएव विधिशेषभूतानुवादोपि प्रमाणमिति ीमांसकाः । शक्तिग्रह इति भवतीतिशेषः । शक्तिग्रहप्रकारमाह यथेति । अन्यथाः— ावान्याः । एते—यवाः । म्लायन्तइति । विपर्णाशुष्काश्चभवन्तीतियावत् । मोदमाना ति । सपर्णाः आर्द्राइति यावत् । वाक्यशेषान्तरमाह । वसन्ते इति ।

शातनम्। मोदमानाश्चतिष्ठन्ति यवाः कणिशशालिनः इति वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते, कङ्गौ तु शक्तिभ्रमात्प्रयोगः। नानाशक्तिकल्पने गौरवात्। हर्यादिपदे तु विनिगमकाभावान्नानाशक्तिकल्पनम्।

एवं विवरणादपि शक्तिग्रहः। विवरणन्तु तत्समानार्थकपदान्तरेण तदर्थकथनम्। यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणाद्घटपदस्य

वाक्य का शेष भी प्रमाण है कि वसन्त में सर्वसस्यों के पत्ते जब कि झड़ जाते हैं तो कणिश-शाली (बीज वाले) यव (मोदमान) हरे रहते हैं—इस वाक्य शेष से भी दीर्घशूक में ही यवपद की शक्ति का निश्चय होता है। (क्यों कि वसंत में वो ही हरे रहते हैं) और कङ्गु में यवपद का प्रयोग शक्तिभ्रम से होता है- यदि कहो कि दोनों में शक्ति मान ली जाय-तो नाना शक्ति की कल्पना में गौरव होता है। हरि आदि पदस्थल में जो नानाशक्ति की कल्पना है वह विनिगमक के न होने से-(प्रकृत में वाक्यशेषविनिगमक है)। एवं विवरण से भी शक्तिग्रह होता है-विवरण नाम है कि उसके समानार्थक पदान्तर से उस अर्थ को कह देना-जैसे घटोऽस्ति के कलशोऽस्ति इस विवरण से घटपद को कलस में शक्ति का निश्चय हो जाता है। एवं

---

सर्वेत्यर्थः। शातनं-पतनम्। **मोदमाना** इति। स्फीता इत्यर्थः। कणिशेति कणिशं-सस्यमंजरी। तर्हि कङ्गौ कथं म्लेच्छानां तत्प्रयोग इत्यत आह। कङ्गाविति। अवधारणार्थकस्तुशब्दः भ्रमादित्युत्तरं योजनीयः। **शक्तिभ्रमादिति**। शक्तिभ्रमादेवेत्यर्थः। प्रयोगसत्त्वात्तत्रापि शक्तिरस्तु अत आह। **नानेति**। तर्हि नानार्थेऽपि गौरवात् नानाशक्ति र्न स्यादत आह। **हर्यादिपदेत्विति**। अवधारणार्थकस्तु शब्दो विनिगम-नाविरहादित्युत्तरं योजनीयः। **विनिगमकाभावादिति**। एकत्रैवशक्तिर्नान्यत्रेत्यत्र युक्त्यभावादेवेत्यर्थः। तथा चाऽत्रनानाशक्तिकल्पनागौरवं प्रामाणिकतया न दोषायेति भावः।

**नानाशक्तिकल्पनमिति**। शक्यतावच्छेदकभेदेनेत्यादिः। विवरणपदार्थमाह। **विवरणन्त्विति**। **तत्समानार्थकपदान्तरेणेति**। तत्पदभिन्नं यत्तत्पदवाच्यवाचकं पदं तेनेत्यर्थः तृतीयार्थोज्ञानजन्यत्वम्। अस्य कथनपदार्थघटक प्रतिपत्तावन्वयः। तदर्थकथनमिति। तदर्थविषयकबोधजनकमित्यर्थः। पदविशिष्टपदमितियावत्। वै० स्वभिन्नत्व-स्ववाच्यार्थविषयकबोधजनकत्वोभयसं०। कल्प्यते इति। अनुमीयते इत्यर्थः। आख्यातं यत्नत्वविशिष्टेशक्तं यत्नत्वविशिष्टशक्तकरोतिप्रतिपादितार्थप्रतिपाद-कत्वादित्यनुमानं शक्तिग्राहकं बोध्यम्। यद्यद्धर्मावच्छिन्नशक्तपदप्रतिपादितार्थप्रति पादकं भवति तत्तद्धर्मावच्छिन्नशक्तं पाकपदेनविवृत्त पचधातुवदिति सामान्यव्याप्ति-र्बोध्या। यत्नत्वं प्रवृत्तिनिवृत्तिजीवनयोनियत्नसाधारणजातिविशेषः। न चैवं निवृत्त्यादौ प्रयोगापत्तिः। धात्वाख्यातार्थयोरनुकूलत्व विषयित्वयोः संसर्गतयामानेन

कलशे शक्तिग्रहः। एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणात् आख्यातस्य यत्नार्थकत्वं कल्प्यते। एवं प्रसिद्धपदस्य सान्निध्यादपि शक्तिग्रहः। यथा इह सहकारतरौ मधुरं पिकोरौतीत्यादौपिकशब्दस्य कोकिले शक्तिग्रह इति।

तत्र जातावेव शक्ति र्न तु व्यक्तौ, व्यभिचारादानन्त्याच्च। व्यक्तिं विना जातिभानस्याऽसंभवाद् व्यक्तेरपि भानमिति केचित्।

पचति के पाकंकरोति इस विवरण से आख्यात के यत्न (कृति) अर्थ की कल्पना करते हैं। एवं प्रसिद्धपद के सान्निध्य से भी शक्तिग्रह होता है-जैसे इस सहकारतरु (आम का पेड़) के ऊपर कोयल मधुर शब्द करती है-यहाँ पर सहकारतरु इस प्रसिद्धपद के सान्निध्य से पिक पद की शक्ति का निश्चय कोयल में होता है।

प्रश्न—पद की शक्ति अर्थ में है से यह तो स्पष्ट हो गया—परन्तु किस अर्थ में है जातिरूप अर्थ है कि व्यक्तिरूप अर्थ में।

उत्तर—मीमांसक कहता है कि जातिरूप अर्थ में ही शक्ति है, व्यक्तिरूप अर्थ में नहीं है-क्योंकि व्यक्ति में शक्ति मानने पर हम यह प्रश्न करेंगे कि यत्किञ्चित् व्यक्ति में शक्ति है कि सकलव्यक्तियों में। यत्किञ्चित् पक्ष में व्यभिचार है—तथाहि-गवादिपद की शक्ति का निश्चय जिस गौ व्यक्ति में नहीं है उसका भी शाब्दबोध में भान होता है-अतः तद्विषयक शाब्दबोध में तद्धर्मिक शक्ति ज्ञान को कारण कहना होगा—सो जिस व्यक्ति में शक्तिज्ञान नहीं है उसी को लेकर व्यतिरेक व्यभिचार हो गया। सकलव्यक्ति में यदि शक्ति मानते हैं तो आनन्त्य-क्योंकि व्यक्तियों के अनन्त होने से शक्ति भी अनन्त माननी होगी-उन अनन्त शक्तियों का ज्ञान ईश्वरातिरिक्त को असम्भव होने के नाते शाब्दबोध अनुपपन्न हो जायगा।

प्रश्न—जाति में शक्ति मानने पर व्यक्ति का भान कैसे होगा—व्यक्तिभान के बिना जाति का भान नहीं होगा।

---

पाकादिनिवृत्त्यादेस्तदभावादिति प्राञ्चः। पचतीत्यादौ प्रवृत्तित्वप्रकारेण बोधस्यानुभवसिद्धतयाप्रवृत्तित्वावच्छिन्नेएवशक्तिः। प्रवृत्तित्वजातिर्यत्नत्वव्याप्या रागजन्यतावच्छेदकतयाचेष्टाजनकतावच्छेदकतया सिद्ध्यतीतिनव्याः।

प्रसिद्धपदस्य सान्निध्यादपीति। पिकादिपदस्येत्यादिः। प्रसिद्धपदसमभिव्याहारोपिऽनुमानद्वारैवशक्तिग्राहकः। तथाहि उक्तवाक्यादिहाम्रवृक्षे मधुररावकर्त्ता पिकशब्दवाच्यइति बोधः। पिकशब्दस्य पूर्वंशक्तिग्रहाभावात्कोकिलदर्शनानन्तरं कोकिलः पिकपदवाच्यः सहकारतरौ मधुररावकर्तृत्वादित्यनुमानादेव शक्तिग्रहः इति ध्येयम्।

इदानीं प्रसंगसंगत्या जातिविशिष्टव्यक्तौ शक्तिं व्यवस्थापयितुं जातिशक्तिवादीमीमांसकमतनिरासाय तन्मतमुपन्यस्यति। तत्रेति। गवादिपदेइत्यर्थः।

**जातावेवेति** । एवकारव्यवच्छेद्यमाह । **न तु व्यक्ताविति** । शक्तिरिति शेषः। व्यक्तौ शक्तिस्वीकारे जातावपि शक्तिः स्वीकार्या, तथाहि गवादिपदानां गोत्वाद्युपलक्षिते शक्तत्वे उपलक्षणत्वाविशेषाद् द्रव्यत्वाद्युपलक्षितेऽपि शक्तत्वेन गवादिपदादश्वान्तस्यापि द्रव्यत्वावच्छिन्नस्य शाब्दबोधापत्तेः। अत एवोक्तं "नाऽगृहीतविशेषणा बुद्धिर्विशेष्यमवगाहते" इति। एवं च जातावपि शक्तिस्वीकारापत्त्या गौरवमतो जातावेव शक्तिर्लाघवादुत एव। **विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे** इत्यभियुक्ताः। वक्ष्यमाणरीत्या विशेषणशक्तात्पदादेव विशिष्टविषयकशाब्दबोधोपपत्तौ विशेष्यांशे शक्तिकल्पने बीजाभावादिति भावः। स्वमते व्यक्तौ शक्तिस्वीकारे प्रयोजनाभाव उक्तः। सम्प्रति व्यक्तौ शक्तिवादी नैयायिकः प्रष्टव्यः, यस्यां कस्यांचिद्व्यक्तौ शक्तिः स्वीक्रियते सर्वासु व्यक्तिषु वा आद्ये तद्विषयकशाब्दबोधं प्रति तद्धर्मिकशक्तिज्ञानं हेतुर्वाच्यः, तदाह। **व्यभिचारादिति**। तद्गोनिष्ठशक्तिग्रहं विनापि गवान्तरविषयकशाब्दबोधोत्पत्त्या एतद्गवादिनिष्ठशक्तिग्रहस्य व्यतिरेकव्यभिचारादित्यर्थः। ननु तत्कार्यतावच्छेदकं तद्गवादिशाब्दत्वमिति न व्यभिचार इत्यत आह। **आनन्त्याच्चेति**। अनन्तव्यक्तिभेदेनाऽनन्तशक्तिकल्पनापत्तेरित्यर्थः। व्यक्तौ शक्त्यभावे गवादिपदजन्यशाब्दबोधे गवादिव्यक्तिभानं न स्यादत आह। **व्यक्तिं विनेति**। व्यक्तिमविषयीकृत्येत्यर्थः। **जातिभानस्येति**। स्वरूपतो जातिविषयकस्येत्यर्थः। **असंभवादिति**। व्यक्त्यविषयकस्वरूपतो जातिनिष्ठविषयताशालिशाब्दबोधौपयिकसामग्र्या एवाभावादिति भावः। **व्यक्तेरपि भानमिति**। व्यक्तेरपि विषयत्वमित्यर्थः। तथा च गोत्वप्रकारकगोविशेष्यकशाब्दबोधं प्रति गोपदं गोत्वे शक्तमित्याकारकजातिशक्तिज्ञानं हेतुरतः शाब्दबोधे जातेरिव व्यक्तेरपि विषयत्वमावश्यकमिति भावः।

यद्यपि व्यक्तावेव शक्तिं परिकल्प्य निरुक्तशाब्दबोधं प्रति गोपदं गवि शक्तमिति व्यक्तिशक्तिज्ञानत्वेन हेतुत्वं शक्यते वक्तुं तथापि अनन्तशक्तिकल्पनागौरवभिया व्यक्तिशक्तिस्वीकाराऽसम्भवात्तद्ज्ञानस्य हेतुत्वमुपेक्षितम्। **केचिदिति**। प्राभाकरा इत्यर्थः। जातिशक्तिवादिनां प्राभाकराणां मतं गौर्गोपदशक्येति शक्तिज्ञानं न शाब्दबोधहेतुः, तथा सति तादृशशक्तिज्ञानस्य गोत्वप्रकारकशाब्दबोधसमानप्रकारकत्वेऽपि, अन्यथाख्यातिस्वीकारापत्तेः। तादृशशक्तिज्ञानस्य शक्यभाववत्यां व्यक्तौ शक्तिप्रकारकत्वात्। नापि गोत्वं गोपदशक्यमिति शक्तिज्ञानं तथा। तथासति शक्तिज्ञानस्य समानप्रकारकत्वेन शाब्दधीहेतुताकथनविरोधात्। किन्तु गोपदं गोत्वशक्तमिति शक्तिज्ञानं कारणम्। तथा च गोत्वप्रकारकगोविशेष्यकशाब्दबोधं प्रति गोपदधर्मिकगोत्वशक्तताप्रकारकज्ञानत्वेन कारणतया तादृशजनकतायां गोविषयकत्वस्यानवच्छेदकतया व्यक्तावशक्यत्वव्यवहारः। एवं च तादृशशाब्दबोधनिरूपिता या गोत्वशक्तताज्ञानत्वावच्छिन्नकारणतानिरूपितावच्छेदकता-

**तन्न । शक्तिं विना व्यक्तिभानानुपपत्तेः । न च व्यक्तौ लक्षणा ।**

उत्तर—जाति की भासक जो सामग्री होगी–वही व्यक्ति की भी भासक होगी–अतः उसी सामग्री से व्यक्ति का भी भान हो जायेगा—वही मूल में कहा है कि "व्यक्तेरपि भानमिति केचित्" केचित्–अर्थात् मीमांसक । सो यह ठीक नहीं, क्योंकि तद्विषयक शाब्दबोधके प्रति पदज्ञानजन्यतद्विषयकोपस्थिति कारण है–प्रकृत में यदि जाति में शक्ति मानते हैं तो पदज्ञानाधीन जातिरूप अर्थ की ही उपस्थिति होगी—व्यक्ति की उपस्थिति तो होगी नहीं—अतः व्यक्ति का शाब्दबोध में भान नहीं हो सकेगा ।

प्रश्न—व्यक्ति में लक्षणा मान ली जाय—( लक्षणा से ही व्यक्ति की पदज्ञानजन्य उपस्थिति मान कर शाब्दबोध में भान हो जायेगा )

---

वच्छेदकत्वमेव शक्यत्वव्यवहारप्रयोजकम् । तथा च व्यक्तौ तादृशावच्छेदकत्वविरहेणाऽशक्यत्वव्यवहार इति भावः । न च विनिगमनाविरहाद् गोपदं गोशक्तमिति ज्ञानत्वेन हेतुतया गोविषयकत्वस्यापि जनकतावच्छेदकतया गवादिव्यक्तेरपि वाच्यत्वं दुर्वारमिति वाच्यम् । गोत्वशक्तताज्ञानत्वापेक्षया गोशक्तताज्ञानत्वस्य व्यक्तिघटिततया गुरुत्वेन जनकतानवच्छेदकत्वात् । गोपदं गोत्वशक्तमिति शक्तिज्ञानत्वेन हेतुतायान्तु शुद्धस्यैव गोत्वस्य विषयितासंबन्धेन शक्त्यंशविशेषणत्वेन गोत्वत्वादिप्रवेशप्रयुक्तगौरवस्याऽसंभवात् । एतेन गोपदजन्यशाब्दबोधविषयत्वं गोपदवाच्यत्वम्, तच्च गोत्वस्येव गोरप्यविशिष्टं गोव्यक्तेरपिशाब्दबोधविषयत्वादिति निरस्तम् । मीमांसकमते ज्ञातृज्ञानयोरपिशाब्दबोधविषयतया तयोरपि वाच्यत्वापत्तेः । ज्ञातृज्ञानविषयकत्वस्य शाब्दधीजनकतानवच्छेदकतया उक्तमते तादृशापत्तिविरहात् । इदं च कुब्जशक्तिवादिमतम्, तदेवाश्रितं प्राभाकरैरितिध्येयम् ।

गोत्वप्रकारकगोविशेष्यकशाब्दबोधे गोपदधर्मिकगोत्वशक्तताप्रकारकशक्तिज्ञानं कारणम् । तादृशशाब्दबोधनिरूपिता या गोत्वशक्तताज्ञानत्वावच्छिन्नकारणता तन्निरूपितावच्छेदकतावच्छेदकत्वमेव वाच्यत्वम् । एवं च गवादेरवाच्यत्वे गवादिपदाद् व्यक्तेः शाब्दबोधो न स्यादित्याशयेन निराकरोति । **तन्नेति । शक्तिं विनेति ।** व्यक्तौशक्त्यस्वीकारे इत्यर्थः । **व्यक्तिबोधानुपपत्तेरिति ।** व्यक्तेःशाब्दबोधविषयत्वानुपपत्तेरित्यर्थः । वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितेः शाब्दबोधहेतुत्वाद् अन्यथा गामानयेत्यादिवाक्याधीनबोधे घटादेरपि विषयत्वापत्तेः । अशक्यत्वाऽविशेषादिति भावः । कारणतावच्छेदकीभूतविषयतायाः कार्यतावच्छेदकविषयताप्रयोजकत्वेन वृत्तिधीजन्योपस्थितिविषयतायाः शाब्दबोधीयप्रकारताविशेष्यतानियामकत्वादिति यावत् । **न चेति ।** नहीत्यर्थः । **लक्षणेति ।** तावतैव वृत्त्या पदजन्यपदार्थोपस्थितेर्निर्वाहादिति भावः । **अनुपपत्तीति ।** लक्षणाबीजाऽन्वयानुप-

अनुपपत्तिप्रतिसन्धानं विनापि व्यक्तिबोधात् । न च व्यक्तिशक्तावानन्त्यम् । सकलव्यक्तावेकस्या एव शक्तेः स्वीकारात् । न चाननुगमः । गोत्वादेरेवानुगमकत्वात् ।

उत्तर—यह ठीक नहीं है—( जहाँ अन्वय ( सम्बन्ध ) की अनुपपत्ति हो-वहीं लक्षणा होती है—जैसे "गंगायां घोषः" यहाँ पर घोष का अन्वय प्रवाह में अनुपपन्न है—अतः गंगापद की तीर में लक्षणा होती है—अतः जब कि ) अन्वयानुपपत्ति ज्ञान के बिना भी व्यक्ति का बोध ( शक्त्या ) हो रहा है तो व्यक्ति में लक्षणा क्यों मानना ।

प्रश्न—व्यक्ति में शक्ति मानने से व्यक्ति के अनन्त होने से शक्ति में आनन्त्य दोष हो जावेगा ।

उत्तर—सकल व्यक्तियों में एक ही शक्ति स्वीकार करने से आनन्त्य दोष नहीं है ।

प्रश्न—( व्यक्तिशक्तिपक्ष में कोई अनुगमकरूप नहीं सिद्ध हो रहा है—जिस अनुगतरूप से सकलव्यक्तियों में एक शक्ति मानी जाय—अतः नैयायिकमत में ) अननुगम दोष हो जावेगा ।

उत्तर—यह कथन ठीक नहीं है—( सकल गौ का ) गोत्व अनुगमकरूप है । ( अर्थात् गोत्व प्रकारक गोविशेष्यक उपस्थिति के प्रति गोत्वावच्छिन्नयावद्गोविशेष्यक एक शक्ति ज्ञान कारण होता है—ताद्यशोपस्थिति से तत्प्रकारक तद्विशेष्यक शाब्दबोध होता है ) ( किञ्च )

---

पत्तीत्यर्थः । **प्रतिसन्धानं विनापीति** । निश्चयं विनापीत्यर्थः । अन्वयानुपपत्तिविरहेपीति यावत् । **व्यक्तिबोधादिति** । गामानयेत्यादौ गोत्वजातेरानयनान्वयायानुपपत्त्या गोपदस्य गव्लिलक्षणास्वीकारेपि गौरस्ति, गां पश्येत्यादौ गोत्वस्यास्तित्वदर्शनकर्मत्वान्वयानुपपत्तिप्रतिसन्धानरूपलक्षणाबीजस्याभावेन लक्षणायाः स्वीकर्त्तुमशक्यत्वादिति भावः । व्यक्तिशक्तिपक्षे शक्त्यानन्त्यं दूषयति । नचेति । नहीत्यर्थः । **एकस्या एव शक्तेरिति** । एकशक्तेरेवेत्यर्थः । **स्वीकारादिति** । अंगीकारादित्यर्थः । ईश्वरेच्छाविषयत्वरूपशक्तेर्विषयभेदेनभिन्नत्वेपि ईश्वरेच्छारूपायास्तस्या एकत्वादितिभावः । नचेति । नहीत्यर्थः । **अननुगमः** । तादृशविषयत्वस्याश्रयभेदेन भेदादैक्याऽसंभवः । **अनुगमकत्वात्** । आश्रयभेदेपि ऐक्यसंपादकत्वात् । तथा च शक्यतावच्छेदक- भेदेनैव शक्तिभेदो नत्वाश्रयभेदेनेति भावः ।

ननु शक्यतावच्छेदकत्वं प्रवृत्तिनिमित्तत्वम्, तच्च वाच्यत्वे सतिवाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वम् । आकाशपदस्याऽऽकाशेनिरवच्छिन्नाशक्तिः, बोधस्तु कदाचिच्छब्दाश्रयत्वेन कदाचिदष्टद्रव्यातिरिक्तद्रव्याश्रितत्वेन वेतिप्राचांमते शब्दाश्रयत्वादिवारणाय प्रथमं सत्यन्तम् । विशिष्टेशक्तिस्वीकारेण विशेषणेपि साक्षत्स्येवेति आकृतिवारणाय द्वितीयसत्यन्तम् । पृथिव्यादौ पृथिव्यादिपदप्रवृत्तिनिमित्तत्ववारणाय विशेष्यदलम् । इत्थं च गोत्वादौ शक्तेरावश्यकत्वे व्यक्तावौ

किं च गौः शक्येति शक्तिग्रहो यदि तदा व्यक्तौ शक्तिः। यदि तु गोत्वं शक्यमिति शक्तिग्रहः तदा गोत्वप्रकारकं पदार्थस्मरणं शाब्दबोधश्च न स्यात् समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शाब्दबोधं प्रति च हेतुत्वात्।

किं च गोत्वे यदि शक्तिः, तदा गोत्वत्वं शक्यतावच्छेदकं वाच्यम्, गोत्वत्वं तु गवेतरासमवेतत्वे सति सकलगोसमवेतत्वम्, तथा च गोव्यक्तीनां

और क्या है ( कि 'गौः गोपदशक्या' एवं 'गोत्वं गोपदशक्यम्' इन दो प्रकार के शक्तिग्रहों में कौन पक्ष मीमांसक को अभिप्रेत है— ) यदि 'गौः गोपदशक्या' यह शक्तिग्रह अभिप्रेत है— तब तो इससे व्यक्ति में ही शक्ति सिद्ध हो गयी। यदि 'गोत्वं गोपदशक्यम्' यह शक्तिग्रह अभीष्ट है तब इससे गोत्वप्रकारक पदार्थस्मरण, ( पदार्थोपस्थिति ) और गोत्वप्रकारकशाब्दबोध नहीं हो सकता है—क्योंकि समानप्रकारकत्वेन शक्तिज्ञान और पदार्थोपस्थिति—शाब्दबोध के प्रति कारण होते हैं। [ सो गोत्वविशेष्यकशक्तिज्ञान गोत्वप्रकारक उपस्थिति गोत्वप्रकारकशाब्दबोध के प्रति कैसे कारण हो सकते हैं ) ( किञ्च ) गोत्व में यदि शक्ति है तो गोत्वत्वको शक्यतावच्छेदक कहना चाहिये। गोत्वत्व 'गवेतरासमवेतत्वे सति सकलगोसमवेतत्व रूप है। ( गोत्व यह वस्तु है कि जो गो से इतर में असमवेत ( समवायसम्बन्ध से न रहे )

---

गौरवम्। एवं च व्यक्तिभाननियामकत्वं जातिभानसामग्र्या एव कल्प्यते इत्यत आह किंचेति।

**गौःशक्येतीति**। तत्रेत्यादिः। **यदीति**। अभिमत इति शेषः **शक्तिरिति**। सिद्धेति शेषः। त्वन्मतेऽन्यथाख्यात्यभावादिति भावः। **यदित्विति**। अवधारणार्थकस्तु शब्दः शक्यमित्युत्तरं योजनीयः। **शक्तिग्रह** इति। गोत्वं शक्यमित्येव शक्तिग्रह इत्यर्थः। **अभिमत** इति शेषः। **गोत्वप्रकारकपदार्थस्मरणमिति**। निरुक्तशक्तिग्रहादित्यादिः। **शाब्दबोधश्चेति** गोत्वप्रकारक इति लिंगविपरिणतेन ऽन्वयः। तादृशस्मरणाभावादित्यादिः। **न स्यादिति**। न भवितुमर्हतीत्यर्थः। उत्पादकसामग्रीविरहादिति शेषः। सामग्रीं दर्शयति। **समानप्रकारकत्वेनेति**। समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं प्रति हेतुत्वादिति योजना। गोत्वं शक्यमिति शक्तिज्ञानस्य गोत्वप्रकारकत्वाभावेन गोत्वप्रकारकस्मरणानुपपत्तिरित्यर्थः। **शाब्दबोधमिति**। पदार्थस्मरणस्येत्यादिः। तथा च समानप्रकारकत्वेन पदार्थस्मरणस्य शाब्दबोधं प्रति हेतुत्वादित्यपरा योजना।

ननु गौर्गोपदशक्येत्येव शक्तिधीः, तत्र गवादौ स्वाश्रयाश्रयत्वसंबन्धेन शक्तिःप्रकार इतीदृशशक्तिधीरेव हेतुरित्यत आह **किंचेति**। **शक्यतावच्छेदकं**

शक्यतावच्छेदकेऽनुप्रवेशात्तवैव गौरवम्। तस्माज्जात्याकृतिविशिष्टव्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यतीति।

शक्तं पदम्। तच्चतुर्विधम्। क्वचिद्यौगिकं–क्वचिद्रूढम्–क्वचिद्योगरूढम्–क्वचिद्यौगिकरूढम्। यत्राऽवयवार्थ एव बुध्यते तद्यौगिकम्। यथा पाचकादिपदम्।

सकल गौ में समवेत ( समवायसम्बन्ध से रहे ) उभयत्र एक 'त्व' बढ़ा देने से गोत्वत्व हो जाता है ) तथा च गो व्यक्तियों का शक्यतावच्छेदक कोटि में अनुप्रवेश होने से तुम्हीं ( मीमांसक को ही ) गौरव है। इसलिये गोत्वादिरूप तत्तज्जाति—अवयवसंयोगरूप आकृति—से विशिष्ट व्यक्ति का बोध नहीं होगा—अतः कल्प्यमान शक्ति तत्तज्जात्याकृतिविशिष्टव्यक्ति में मानी जाती है। वाचकतासम्बन्ध अथवा निरूपकतासम्बन्ध से 'शक्तिविशिष्ट' को 'पद' कहते हैं। ( क्योंकि पद ही अर्थ का वाचक होता है—अतः वाचकतासम्बन्ध से 'शक्तिविशिष्ट पद' यह पद का लक्षण हो गया—एवं पदनिरूपित शक्ति अर्थ में रहती है तो शक्ति जब कि पद से निरूपित हुई तब पद शक्ति का निरूपक हुआ, अतः निरूपकतासम्बन्ध से "शक्तिविशिष्ट" पदम्—यह भी पदका लक्षण उपपन्न हो गया ) वह पद चार प्रकार का है–यौगिक–रूढ–योगरूढ–और यौगिकरूढ। जहाँ अवयवों के द्वारा अर्थ का बोध होता है वह यौगिक पद है—जैसे पाचक–पाठक–इत्यादि पद हैं—( पाचकशब्द अपने अवयव ( पचधात्वर्थ ) पाक, और अक ( ण्वुल ) प्रत्ययार्थ (कर्त्ता) द्वारा पाक कर्तारूप अर्थ का बोधन करता है—अतः यह यौगिक है ] जहां जो

---

वाच्यमिति। निरवच्छिन्नशक्त्यस्वीकारादिति भावः। शक्यतावच्छेदकेऽनुप्रवेशादिति। शक्यतावच्छेदककोटिप्रविष्टत्वेनशक्यतावच्छेदकत्वावश्यकत्वादित्यर्थः। तथा च व्यक्तेःशक्यतावच्छेदकत्वानुरोधेन शक्तेरावश्यकत्वाल्लाघवात्तदवच्छेदकगोत्वमेव कल्प्यते इति भावः।

न च प्राचांमते आकाशपदस्य निरवच्छिन्नशक्तिवज्जातावपिनिरवच्छिन्नशक्तौ बाधकाभावः। एवमपि स्वाश्रयाश्रयत्वसंबन्धेन शक्तिप्रकारकधीहेतुत्वापेक्षया साक्षात्संबन्धेन तत्प्रकारकधीहेतुत्वे लाघवादित्यभिप्रायः।

तवैव मीमांसकस्यैव। तस्मादिति। गोत्वाद्याजातिशक्तिस्वीकाराऽसंभवादित्यर्थः। आकृतिः संस्थानम् अवयवसंयोगविशेषः। तत्तज्जात्याकृतिविशिष्टेति। केवलव्यक्तौशक्तिस्वीकारे इत्यादिः। बोधानुपपत्त्येति। शाब्दबोधीयसंसर्गतान्यविषयताशालित्वधियोहेतुत्वादितिभावः। विश्राम्यति सिद्ध्यति। अत एव जात्याकृतिव्यक्तयः पदार्थ इति न्यायसूत्रम्। तत्र संस्थानबोधस्याप्यानुमविकत्वात्संस्थानेपि शक्तिरितिप्राञ्चः। नव्यास्तु संस्थानस्य बोधः क्वाचित्कोलक्षणयैवोपपन्न इति न तत्र शक्तिरिति जातिव्यक्त्योः समवाय एवाकृतिपदार्थ इति प्राहुः।

यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बुध्यते तद्रूढम्। यथ गवादिपदम्। यत्रावयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम् यथा पङ्कजादिपदम्। तथा हि—पङ्कजपदमवयवशक्त्या पङ्कजनिकर्तृरूपमर्थ बोधयति, समुदायशक्त्या च पद्मत्वेनरूपेण पद्मं बोधयति। न च केवलाव

शब्द अवयव शक्ति की अपेक्षा न रखकर—समुदायशक्तिमात्र से अर्थ का बोधन करते हैं वे रूढ़ होते हैं—जैसे गोमण्डलादिपद। ( यहाँ 'गो' पद से समुदायशक्ति के द्वारा 'गौ' व्यक्ति रूप अर्थ का बोध होता है—पूर्ववत् 'गच्छतीति गौः' इस प्रकार अवयवशक्तिद्वारा बोध करने से गमनकर्त्तामात्र का गोपद से बोध होने लगेगा ) ऐसे ही मण्डलपद से समुदायशक्ति द्वारा सूर्यादिरोधक कुण्डलाकार बोध होता है। ( ऐसी 'किंवदन्ती' है कि सूर्यभगवान् के उदय होने के समय कोई राक्षस उन्हें उदय होने में कुण्डलाकार होकर अवरुद्ध करना चाहत है—प्रायः सूर्य के उदय से पूर्व कुण्डलाकार कभी-कभी देखने में भी आता है—वही सूर्यादि रोधककुण्डलाकार राक्षसविशेष समुदायशक्ति द्वारा बोध्य है ) एवं जो पद अवयव शक्ति तथ समुदायशक्ति उभयशक्ति द्वारा स्वार्थबोधन करते हैं वे योगरूढ़ कहलाते हैं-जैसे पंकज आदि पद। तथाहि-एक ही पंकजपद "पंकाज् जायते इति पंकजः" इत्याकारक अपनी अवयवशक्ति के द्वारा पंक में उत्पन्न होने वाली वस्तु को कहता है-और समुदायशक्ति के द्वारा पद्मत्वेः रूपेण सामान्यतः पद्म ( कमल ) का बोधन करता है।

---

**शक्तमिति**। शक्तिनिरूपकमित्यर्थः। **पदमिति** सावधारणम्। पदमेवशक्त न तु वाक्यमिति भावः। **क्वचिदिति**। किंचिदित्यर्थः। **एवमग्रेपि**। **यत्र**—पदे घटकत्वं सप्तम्यर्थः। तस्यावयवेऽन्वयः। **अवयवार्थ एवेति**। स्वघटकशब्दमात्र लभ्य इत्यर्थः। तथा च यादृशानुपूर्व्यवच्छिन्नविषयिता यादृशानुपूर्व्यवच्छिन्नघटक शब्दमात्रलभ्ययादृशविशिष्टार्थबोधजनकतावच्छेदिका तादृशानुपूर्वीमच्छब्दत्व तादृशार्थे योगिकत्वमिति पर्यवसितम्। **यथेति**। अत्र धातुशक्त्या पाकस्य प्रत्यय शक्त्या च कर्तुर्बोधनादिति भावः। क्रमप्राप्तं रूढं नाम लक्षयति। **यत्रेति** यादृशपदे इत्यर्थः सप्तम्यर्थोघटकत्वम् तस्यावयवेऽन्वयः **अव्ययवशक्तिनैरपेक्ष्ये णेति**। यादृशपदघटकशब्दशक्तिं विनेति समुदितार्थः। **बुध्यते** इति। अर्थ इत्यादिः अनुभूयते इत्यर्थः तथा च यादृशानुपूर्वी "इदंपदममुमर्थं बोधयतु" इत्याकारकयादृ शार्थविषयकबोधजनकत्वप्रकारकेच्छाविशेष्यतावच्छेदिका योगरूढभिन्नत्वे सति तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे रूढत्वमिति पर्यवसितम्। उदाहरति। **यथ गवादिपदमिति**। "गमेर्डोर्दाभाभ्यां नुर्धेट् इच्चे" त्यौणादिकसूत्रेण विहितस्य डोः प्रत्ययस्य शक्तिग्रहं विनैव गोत्वविशिष्टे शक्तिग्रहादेव बोधोत्पत्तेरिति भावः

अत्र गोमण्डलादिपदं—गोमण्डपादिपदमित्यपपाठः।
मण्डलादिपदानां यौगिकरूढेऽन्तर्भावादित्यन्यत्र विस्तरः।

शक्यतावच्छेदकेऽनुप्रवेशात्तवैव गौरवम्। तस्माज्जात्याकृतिविशिष्टव्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यतीति।

शक्तं पदम्। तच्चतुर्विधम्। क्वचिद्यौगिकं—क्वचिद्रूढम्—क्वचियोगरूढम्—क्वचिद्यौगिकरूढम्। यत्राऽवयवार्थ एव बुध्यते तद्यौगिकम्। यथा पाचकादिपदम्।

सकल गौ में समवेत ( समवायसम्बन्ध से रहे ) उभयत्र एक 'त्व' बढ़ा देने से गोत्वत्व हो जाता है ) तथा च गो व्यक्तियों का शक्यतावच्छेदक कोटि में अनुप्रवेश होने से तुम्हीं ( मीमांसक को ही ) गौरव है। इसलिये गोत्वादिरूप तत्तज्जाति—अवयवसंयोगरूप आकृति—से विशिष्ट व्यक्ति का बोध नहीं होगा—अतः कल्प्यमान शक्ति तत्तज्जात्याकृतिविशिष्टव्यक्ति में मानी जाती है। वाचकतासम्बन्ध अथवा निरूपकतासम्बन्ध से 'शक्तिविशिष्ट' को 'पद' कहते हैं। ( क्योंकि पद ही अर्थ का वाचक होता है—अतः वाचकतासम्बन्ध से 'शक्तिविशिष्टं पदं' यह पद का लक्षण हो गया—एवं पदनिरूपित शक्ति अर्थ में रहती है तो शक्ति जब कि पद से निरूपित हुई तब पद शक्ति का निरूपक हुआ, अतः निरूपकतासम्बन्ध से "शक्तिविशिष्ट" पदम्—यह भी पदका लक्षण उपपन्न हो गया ) वह पद चार प्रकार का है-यौगिक-रूढ़-योगरूढ़-और यौगिकरूढ़। जहाँ अवयवों के द्वारा अर्थ का बोध होता है वह यौगिक पद है—जैसे पाचक-पाठक-इत्यादि पद हैं—( पाचकशब्द अपने अवयव ( पचधात्वर्थ ) पाक, और अक ( ण्वुल ) प्रत्ययार्थ (कर्ता) द्वारा पाक कर्तारूप अर्थ का बोधन करता है—अतः वह यौगिक है ] जहाँ जो

---

वाच्यमिति। निरवच्छिन्नशक्तत्वस्वीकारादिति भावः। शक्यतावच्छेदकेऽनुप्रवेशादिति। शक्यतावच्छेदककोटिप्रविष्टत्वेनशक्यतावच्छेदकत्वावश्यकत्वादित्यर्थः। तथा च व्यक्तेःशक्यतावच्छेदकत्वानुरोधेन शक्तेरावश्यकत्वाल्लाघवात्तदवच्छेदकं गोत्वमेव कल्प्यते इति भावः।

न च प्राचांमते आकाशपदस्य निरवच्छिन्नशक्तिवज्जातावपिनिरवच्छिन्नशक्तौ बाधकाभावः। एवमपि स्वाश्रयाश्रयत्वसंबन्धेन शक्तिप्रकारकधीहेतुत्वापेक्षया साक्षात्संबन्धेन तत्प्रकारकधीहेतुत्वे लाघवादित्यभिप्रायः।

तवैव मीमांसकस्यैव। तस्मादिति। गौरवाज्जातिशक्तिस्वीकाराऽसंभवादित्यर्थः। आकृतिः संस्थानम् अवयवसंयोगविशेषः। तत्तज्जात्याकृतिविशिष्टेति। केवलव्यक्तौशक्तिस्वीकारे इत्यादिः। बोधानुपपत्त्येति। शाब्दबोधीयसंसर्गतान्यविषयतायांवृत्तिधियोहेतुत्वादितिभावः। विश्राम्यति सिद्ध्यति। अत एव जात्याकृतिव्यक्तयः पदार्थ इति न्यायसूत्रम्। तत्र संस्थानबोधस्याप्यानुभविकत्वात्संस्थानेपि शक्तिरितिप्राञ्चः। नव्यास्तु संस्थानस्य बोधः क्वाचित्कोलक्षणयैवोपपन्न इति न तत्र शक्तिरिति जातिव्यक्त्योः समवाय एवाकृतिपदार्थ इति प्राहुः।

यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बुध्यते तद्रूढम्। यथा गवादिपदम्। यत्रावयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम्। यथा पङ्कजादिपदम्। तथा हि–पङ्कजपदमवयवशक्त्या पङ्कजनिकर्तृरूपमर्थं बोधयति, समुदायशक्त्या च पद्मत्वेनरूपेण पद्मं बोधयति। न च केवलाव-

शब्द अवयव शक्ति की अपेक्षा न रखकर—समुदायशक्तिमात्र से अर्थ का बोधन करते हैं वे रूढ़ होते हैं—जैसे गोमण्डलादिपद। (यहाँ 'गो' पद से समुदायशक्ति के द्वारा 'गौ' व्यक्ति रूप अर्थ का बोध होता है—पूर्ववत् 'गच्छतीति गौः' इस प्रकार अवयवशक्तिद्वारा बोध करने से गमनकर्त्तामात्र का गोपद से बोध होने लगेगा) ऐसे ही मण्डलपद से समुदायशक्ति द्वारा सूर्यादिरोधक कुण्डलाकार बोध होता है। (ऐसी 'किंवदन्ती' है कि सूर्यभगवान् के उदय होने के समय कोई राक्षस उन्हें उदय होने में कुण्डलाकार होकर अवरुद्ध करना चाहता है—प्रायः सूर्य के उदय से पूर्व कुण्डलाकार कभी-कभी देखने में भी आता है—वही सूर्यादि-रोधककुण्डलाकार राक्षसविशेष समुदायशक्ति द्वारा बोध्य है) एवं जो पद अवयव शक्ति तथा समुदायशक्ति उभयशक्ति द्वारा स्वार्थबोधन करते हैं वे योगरूढ़ कहलाते हैं–जैसे पंकज आदि-पद। तथाहि–एक ही पंकजपद "पंकाज् जायते इति पंकजः" इत्याकारक अपनी अवयवशक्ति के द्वारा पंक में उत्पन्न होने वाली वस्तु को कहता है–और समुदायशक्ति के द्वारा पद्मत्वेन रूपेण सामान्यतः पद्म (कमल) का बोधन करता है।

---

**शक्तमिति**। शक्तिनिरूपकमित्यर्थः। **पदमिति** सावधारणम्। पदमेवशक्तं न तु वाक्यमिति भावः। **क्वचिदिति**। किंचिदित्यर्थः। **एवमग्रेपि**। **यत्र**–पदे घटकत्वं सप्तम्यर्थः। तस्यावयवेऽन्वयः। **अवयवार्थ एवेति**। स्वघटकशब्दमात्र-लभ्य इत्यर्थः। तथा च यादृशानुपूर्व्यवच्छिन्नविषयिता यादृशानुपूर्व्यवच्छिन्नघटक-शब्दमात्रलभ्ययादृशविशिष्टार्थबोधजनकतावच्छेदिका तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे योगिकत्वमिति पर्यवसितम्। **यथेति**। अत्र धातुशक्त्या पाकस्य प्रत्यय-शक्त्या च कर्तुर्बोधनादिति भावः। क्रमप्राप्तं रूढं नाम लक्षयति। **यत्रेति**। यादृशपदे इत्यर्थः सप्तम्यर्थोघटकत्वम् तस्यावयवेऽन्वयः **अव्ययवशक्तिनैरपेक्ष्ये-णेति**। यादृशपदघटकशब्दशक्तिं विनेति समुदितार्थः। **बुध्यते इति**। अर्थ इत्यादिः। अनुभूयते इत्यर्थः तथा च यादृशानुपूर्वी "इदंपदममुमर्थं बोधयतु" इत्याकारकयादृ-शार्थविषयकबोधजनकत्वप्रकारकेच्छाविशेष्यतावच्छेदिका योगरूढभिन्नत्वे सति तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे रूढत्वमिति पर्यवसितम्। उदाहरति। यथा **गवादिपदमिति**। "गमेर्डोर्दाभाभ्यां तुर्धेट् इच्चे" त्यौणादिकसूत्रेण विहितस्य डोः प्रत्ययस्य शक्तिग्रहं विनैव गोत्वविशिष्टे शक्तिग्रहादेव बोधोत्पत्तेरिति भावः।

अत्र गोमण्डलादिपदं—गोमण्डपादिपदमित्यपपाठः।
मण्डलादिपदानां यौगिकरूढेऽन्तर्भावादित्यन्यत्र विस्तरः।

यवशक्त्या कुमुदेपि प्रयोगः स्यादिति वाच्यम्। रूढिज्ञानस्य केवलयौगिकार्थबुद्धौ प्रतिबन्धकत्वादिति प्राञ्चः।

वस्तुतस्तु समुदायशक्त्या उपस्थितपद्मेऽवयवार्थपङ्कजनिकर्तुरन्व-

*प्रश्न*—केवल अवयवशक्ति के द्वारा पंकज पद से रात्रि में विकसित होनेवाले कुमुद का ही बोध क्यों न मान लिया जाय ( क्योंकि वह भी तो जल से उत्पन्न होने के कारण पंक से ही उत्पन्न होता है )

उत्तर—ऐसे स्थल में केवल योगिकार्थज्ञान में रूढि ( समुदायशक्ति ) ज्ञान प्रतिबन्धक होता है ( अतः पूर्वोक्त दोष नहीं है )। ऐसा प्राचीन कहते हैं। वस्तुतः ( अवयवशक्ति से प्रथम—समुदायशक्ति द्वारा ही वस्तु की उपस्थिति होती है क्योंकि समुदायशक्ति बलवती

---

योगरूढनामलक्षयति। यत्रेति। यादृशपदे इत्यर्थः। समन्वयबोधघटकत्वम्, तस्य चावयवेऽन्वयः। अवयवशक्तिविषये। स्वघटकशब्दलभ्ये। यत्रावयवशक्ति समुदायशक्त्युभयमहादेव बोध इत्यस्तीत्यन्तार्थः। तथा च यादृशानुपूर्वी स्वाश्रयावयवयादृशार्थधर्मिकस्वाश्रयघटकशब्दवृत्त्युपस्थाप्ययादृशार्थप्रकारकान्वयबोधजनकतावच्छेदिका तादृशानुपूर्वीमन्नाम तादृशविशिष्टार्थे योगरूढमिति फलितम्। उदाहरति। यथेति। अवयवशक्त्येति। पङ्कजपदस्य पङ्के, जनधातोर्जनौ, डप्रत्ययस्य कर्तरि शक्त्येत्यर्थः शक्तिज्ञानेनेति यावत्। पङ्कजनिकर्तृरूपमर्थमिति। पङ्कनिष्ठजनकतानिरूपितजन्यताश्रयरूपमर्थमित्यर्थः। समुदायशक्त्येति। पङ्कजेत्यानुपूर्वीविशिष्टनिरूपितपद्मत्वविशिष्टशक्तिज्ञानेनेत्यर्थः। बोधयतीति। पद्मविशेष्यकपङ्कजनिकर्तृप्रकारकबोधजनकं भवतीत्यर्थः। अयं भावः यत्रावयवशक्त्या लब्धोऽर्थः समुदायशक्त्यालब्धस्यान्वयः तत्रामयोगरूढम्। यथा पङ्कजपदादि। तत्र पङ्कपद जनधातु-डप्रत्ययैः प्रत्येकं स्वस्वशक्तया लब्धस्य पङ्कजनिकर्तुः पङ्कजपदसमुदायशक्येन पद्मत्वविशिष्टेन सहान्वयात्पङ्कजमस्तीत्यादिवाक्यात्पङ्कजनिकर्तृ पद्ममस्तीत्यनुभव इति।

ननु पङ्के जातमित्यादौ केवलावयवशक्त्या बोधजननात्केवलावयवशक्त्या पङ्कजं कुमुदमितिप्रयोगापत्तिरित्याशंकते। नचेति। स्यादिति। कुमुदेपि अवयवार्थमात्रस्याबाधितत्वेन पङ्कजपदप्रयोगसंभवादिति भावः। रूढिज्ञानस्येति। रूढिप्रकारकज्ञानस्येत्यर्थः। केवलयौगिकार्थबुद्धाविति। पङ्कजपदजन्येत्यादिः।

तथा च पङ्कजपदजन्यपङ्कजातत्वप्रकारकान्वयबोधं प्रति पङ्कजपदं पद्मत्वावच्छिन्नशक्तिमदिति रूढिज्ञानं प्रतिबन्धकम्। स्वीयप्रकारताश्रयाभाववत्त्वं प्रतिबन्धकतावच्छेदकसंबन्धः। प्रतिबध्यतावच्छेदकसंबन्धश्च विशेष्यता। अथवाऽवयवशक्त्या पङ्कजपदजन्यपद्मत्वानवच्छिन्नविशेष्यताकपंकजातत्वप्रकारकान्वयबोधं प्रति पंकजपदं पद्मशक्तमिति रूढिज्ञानं प्रतिबन्धकम्।

योभवति सान्निध्यात्। यत्र रूढ्यर्थस्य बाधः प्रतिसन्धीयते तत्र लक्षणया कुमुदादेर्बोधः। यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्यज्ञानं पद्मत्वस्य च बाधस्तत्रचावयवशक्तिमात्रेण निर्वाह इत्याहुः। यत्र स्थलपद्मादावप्यवयवार्थस्य बाधस्तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः। यदि स्थलपद्मं

है—अतः समुदाय शक्ति द्वारा पङ्कजपद से उपस्थित पद्म में अवयवशक्ति द्वारा पङ्कजपद से उपस्थापित जो पङ्कजनिकर्त्तारूप ( पङ्क में उत्पन्न होने वाला ) अर्थ—उसका अन्वय होता है सान्निध्य ( अव्यवहित उपस्थित ) होने के नाते। जिस स्थल में रूढ्यर्थ ( पद्म ) का ( अन्वयानुपपत्ति-तात्पर्यानुपपत्तिरूप ) बाध का प्रतिसंधान ( निश्चय ) है—वहाँ पंकजपद से लक्षणाद्वारा कुमुदादि का बोध होता है। और जहाँ पङ्कजपद से कुमुदत्वरूप से कुमुदरूप अर्थ के बोध में ( वक्ता का ) तात्पर्यज्ञान नहीं है—( अर्थात् पकजपदं कुमुदरूपं अर्थं बोधयतु—यह वक्ता का तात्पर्य नहीं है ) अथ च ( पद्मत्वावच्छिन्नपद्मरूप ) रूढ्यर्थ का बाध है, उस स्थल में पंकजपद से ( पंकाज्जायते ) इस अवयवशक्तिमात्र के द्वारा हीं ( पंकजनिकर्तृत्वप्रकारककुमुदविशेष्यक ही बोध होता है—नकि कुमुदत्वप्रकारककुमुद विशेष्यक ) ( इसी प्रकार सर्वत्र निर्वाह हो सकता है रूढ़िज्ञान को मणिमंत्रादि न्याय से यौगिककार्थबुद्धि में जो प्रतिबंधक प्राचीनों ने पहिले माना है वह सर्वथा अनुचित है ) जहाँ स्थलपद्म ( गुलाब ) में अवयवार्थ का बाध हो वहां समुदायशक्ति के द्वारा ही पद्मत्वेन रूपेण पद्म का बोध होता है।

---

अत्र रूढिज्ञानस्य निरुक्तशाब्दबोधं प्रति न प्रतिबन्धकत्वम्, ग्राह्याभावानवगाहित्वात्, जनकज्ञानाऽविरोधित्वाच्च। निरुक्तशाब्दबोधस्य प्रकारान्तरेण वारयितुं शक्यतया मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वाकल्पनादित्यस्वरसः प्राञ्च इत्यनेन सूचितः।

चिन्तामणिकृतां मतमाह। **वस्तुतस्त्विति**। **भवतीति**। तथा च रूढ्यर्थयोगार्थयोर्युगपदुपस्थितौ तयोः परस्परं प्रथमतोऽन्वयोभवतीत्यर्थः। तत्र हेतुमाह। **सान्निध्यादिति**। रूढ्यर्थस्य सन्निहितोपस्थितिकत्वादित्यर्थः। व्यक्तिवचनानां सन्निहितविशेषपरत्वमिति नियमात्। घटपटादिव्यक्तिवाचकानां अव्यवहितोपस्थितव्यक्तितात्पर्यकत्वमिति तदर्थः। अत एव घटमानयेत्युक्तौ सन्निधाने घटसत्वे न दूरस्थघटानयने लोकः प्रवर्तते इति भावः। उपसंहरति। **यत्रेति**। पङ्कजमस्तीतिस्थलविशेषे इत्यर्थः। **प्रतिसंन्धीयते**। इत्यनन्तरं कुमुदत्वेनरूपेण च बोधे तात्पर्यमिति पूरणीयम्। पङ्कजंपद्मभिन्नमितिबाधनिश्चयइत्यर्थः। **लक्षणयेति**। कुमुदत्वविशिष्टे लक्षणया अवयवशक्त्या च पङ्कजनिकर्तृकुमुदत्वेने-

विजातीयमेव तदा लक्षणयैवेति। यत्र तु यौगिकार्थरूढ्यर्थयोः स्वातन्त्र्येण-बोधस्तद्यौगिकरूढम्। यथा उद्भिदादिपदम्। तत्र हि उद्भेदनकर्ता तरु-गुल्मादिर्बुध्यते यागविशेषोपीति ॥८१॥

लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः।

लक्षणाशक्यसम्बन्ध इति। गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा यत्र प्रतिसन्धीयते तत्र लक्षणयैव तीरस्य बोधः। सा च शक्यसम्बन्धरूपा। तथा हि प्रवाह रूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात्तीरस्य स्मरणम्। ततः शाब्दबोधः।

प्रश्न—( जिस पुरुष को पद्मत्व का स्थलपद्म में ज्ञान नहीं है—क्योंकि स्थलपद्म कमल से विजातीय देखने में आता है—वहाँ किस वृत्ति से किस अर्थ का बोध होना चाहिये )।

उत्तर—यदि कमल से विजातीय ( गुलाब ) का स्थल पद्म से बोध करना चाहते हैं वह बोध अजहल्लक्षणा के द्वारा ही पंकजपद से होगा—[ यदि तु स्थलपंकजं विजातीयमेव इत्यादि )। जिस पद से अवयवार्थ ( यौगिकार्थ ) तथा रूढ्यर्थ ( समुदायार्थ ) का स्वतन्त्ररूप से बोध हो वह पद यौगिकरूढ कहलाता है—जैसे उद्भित्पद। 'ऊर्ध्वं भिनत्ति' इस अवयव शक्ति के द्वारा उद्भित्पद उद्भेदनकर्ता तरु ( वृक्ष ) गुल्म ( लता ) आदि का बोध करता है। और समुदाय शक्ति से उद्भित्पद यागविशेष का भी बोध करता है ( उद्भिदा यजेत पशुकामः )। ८१। शक्यार्थ के सम्बन्ध को लक्षणा कहते हैं। और वक्ता के तात्पर्य की अनुपपत्ति जहाँ हो वहाँ लक्षणा होती है—यह कारिकार्थ हुवा। जैसे ( गंगायां घोषः ) इत्यादिस्थल में गंगापद के शक्यार्थ प्रवाह में घोषपदार्थ के अन्वय की अनुपपत्ति, अथवा नवीन मत से वक्ता के तात्पर्य की अनुपपत्ति का निश्चय होने के नाते गंगापद की तीर में लक्षणा हो जाती है—लक्षणा के द्वारा गंगापद से तीर का बोध हो जाता है। और वह शक्यसम्बन्ध रूप है—प्रवाहरूप जो शक्यार्थ—उसका सम्बन्ध तीर में गृहीत होने के नाते गंगापद से तीर अर्थ का स्मरण ( उपस्थिति ) होकर—उसके बाद शाब्दबोध होता है। परन्तु यदि अन्वया-

---

तिशेषः। समुदायार्थबाधस्थलवदवयवार्थबाधस्थलेपि बोधोत्पत्तिमाह। यत्रेति। बोधः—स्थलपद्मबोधः। लक्षणयैवेति। यत्पद्मत्वविशिष्टे शक्तिः तत्पद्मत्वं न स्थलपद्मे किन्तु अन्यदेव पद्मत्वं, तद्विशिष्टे लक्षणयैवेत्यर्थः। रूढ्यर्थतावच्छेदक-पद्मत्वजातेस्तत्राभावेन रूढ्यातद्बोधनाऽसंभवादिति भावः। स्वातन्त्र्येण बोध इति। यत्रावयवशक्तिरूढिशक्ति अन्यतर ज्ञानादेवबोध इत्यर्थः। उद्भेदनकर्तेति। ऊर्ध्वं भिनत्तीति व्युत्पत्तेरिति भावः। रूढ्या बोधमाह। यागविशेषोपीति। ८१।

शक्तिं निरूप्य लक्षणां निरूपयति लक्षणेति। तद्विषयकशाब्दबोधं प्रति

परन्तु यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात् तदा यष्टीः प्रवेशयेत्यत्र लक्षणा न स्यात्। यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात्। तेन तत्प्रवेशे भोजनतात्पर्यानुपपत्त्या यष्टिधरेषु लक्षणा।

एवं काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य दध्युपघातके लक्षणा। सर्वतो दधिरक्षायास्तात्पर्यविषयत्वात्।

एवं छत्रिणो यान्तीत्यादौ छत्रिपदस्यैवैकसार्थवाहित्वे लक्षणा। इयमेवाऽजहत्स्वार्थलक्षणेत्युच्यते। एकसार्थवाहित्वेन रूपेण छत्रितदन्य-

नुपपत्ति को प्राचीनमतानुसार लक्षणा के होने में कारण मानते हैं तो 'यष्टीःप्रवेशय' यहाँ पर लक्षणा न हो सकेगी—क्योंकि यष्टियों में प्रवेश का कर्मतया अन्वय उपपन्न हो रहा है—अत अन्वय की अनुपपत्ति नहीं है, (क्योंकि लाठियों का भी प्रवेश घर में बन सकता है—परन्तु; कहनेवाले ने भोजन के तात्पर्य से यष्टियों के प्रवेश के लिये आज्ञा की है अतः यष्टियों के प्रवेश में भोजन के तात्पर्य की अनुपपत्ति होने के कारण (यष्टीः प्रवेशय) यहाँ पर यष्टिपद को यष्टिधरों में लक्षणा मानी जाती है। ऐसे ही 'काकेभ्योदधि रक्ष्यताम्' यहाँ पर काक पद की दध्युपघातक (दही को खाने वाले में लक्षणा है—अर्थात कौवों से दही की रक्षा करो इसी अर्थ में कहने वाले का तात्पर्य नहीं है, अपितु जितने भी दही को खाने वाले हैं) उन सबसे दही की रक्षा करो इस अर्थ में तात्पर्य है। इसी प्रकार छाते वाले जनसमुदाय को देखकर लोग छत्री—और तदन्य दोनों के अभिप्राय से वाक्य में छत्री शब्द का प्रयोग कर देते हैं कि—छत्रिणोयान्ति—इत्यादि, छत्री और तदन्य इस अर्थ का लाभ करने के लिये छत्रीपद की एकसार्थवाहित्व (एक साथ जानेवालों) में लक्षणा की जाती है। यही अजहत्स्वार्थलक्षणा कही जाती है (न जहति स्वमर्थं या सा—अथ च—अन्यमर्थं गृह्णाति) तदनुसार एक साथ जानेवालों में छत्री भी हैं—तथा अन्य भी, अतः एकसार्थवाहित्व

---

तन्निरूपितशक्तिमत्पदज्ञानत्वेन हेतुत्वम्, तथा च गंगायां घोष इत्यत्र गंगापदस्य तीरे शक्तेरभावाद् गंगापदात्तीरबोधानुपपत्तिरित्यगत्या लक्षणावृत्तिः कल्प्यते। न च गंगापदस्य गंगातीरे शक्तिरेवास्तु गंगापदं तीरेशक्तं तदर्थकत्वे प्रयुक्तत्वादित्यनुमानसाम्राज्यादिति वाच्यम्। गंगातीरत्वापेक्षया गंगात्वस्य शक्यतावच्छेदकत्वे लाघवादिति ध्येयम्। मूले **तात्पर्यानुपपत्ति** इति। तथा च तात्पर्यानुपपत्त्या कल्प्यमाना लक्षणा शक्यसंबन्धरूपा इति योजना। आदौ लक्षणाबीजंदर्शयति। **गंगायामित्यादिना**। **प्रवाहरूपे** इति। भगीरथरथखातावच्छिन्नाऽवच्छिन्नस्रोतोविशिष्टजले इत्यर्थः। **घोषस्येति**। गोपपल्लीप्रतिवासस्येत्यर्थः। वक्ष्यमाणदोषादाह। **तात्पर्यानुपपत्तिर्वेति**। यत्र यदा। तत्र तदा। तात्पर्यानुपपत्तिप्रतिसंधानाभावे प्रवाहवृत्तिर्घोष इति भ्रमात्मकशाब्दबोधसंभवेन लक्षणाया व्यर्थतापातादिति भावः।

योर्बोधात् । यदि चान्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा क्वचिद्गङ्गापदस्य तीरे क्वचिद् घोषपदस्य मत्स्यादौ लक्षणेति नियमो न स्यात् । इदं तु बोध्यम् । शक्यार्थसम्बन्धो यदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन तीर बोधः, यदि तु गङ्गातीरत्वेन रूपेण गृहीतस्तदा तेनैव रूपेण स्मरणम् । अत एव लक्ष्यतावच्छेदके न लक्षणा तत्प्रकारकबोधस्य तत्र लक्षणां विनाप्युपपत्तेः ।

रूप से छत्री और तदन्य दोनों का बोध होता है । ( अब यदि तात्पर्यानुपपत्ति को लक्षणा में बीज ( कारण ) न मानकर ) यदि अन्वयानुपपत्ति को लक्षणा के होने में कारण मानते हो तो कहीं गंगापद की तीर में कहीं घोषपद की मत्स्य आदि जलजीवों में जो लक्षणा है–उसका नियम नहीं बनेगा । ( क्योंकि पूर्वोक्तस्थलों में अन्वय की उपपत्ति तो सर्वत्र ठीक रूप से हो रही है, केवल वक्ता का तात्पर्य ही अनुपपन्न है–अतः तात्पर्यानुपपत्ति को यदि लक्षणा में बीज माना तो सर्वत्र 'काकेभ्योदधिरक्ष्यताम्' एवं "छत्रिणो यान्ति" इत्यादि स्थलों में लक्षणा की उपपत्ति हो जाती है–क्योंकि उक्तस्थलों में कौवों से ही दधि की रक्षा में वक्ता का तात्पर्य नहीं है–इसी प्रकार छातेवाले ही जाते हैं इस अर्थ में भी वक्ता तात्पर्य नहीं है )। यह भी समझना चाहिये कि "गंगायां घोषः" यहाँ पर गंगापद के शक्यार्थप्रवाह का सम्बन्ध तीर में जिस रूप से गृहीत होगा–उसी रूप से तीर का शाब्दबोध में भान होगा–यदि तीरत्वरूप से तीर

---

**लक्षणयैवेति** । लक्षणाज्ञानाधीनतीरोपस्थितेत्यर्थः । **सा चेति** । लक्षणाचेत्यर्थः । **शक्यसंबन्ध इति** । तदवाच्यत्वे सति तद्वाच्यसंबन्धित्वं इत्यर्थः । सा लक्षणा द्विविधा । जहल्लक्षणा अजहल्लक्षणा च । जहत्स्वार्थं "स्वशक्यं" ययेति बहुव्रीहिः । शक्यावृत्तिधर्मावच्छिन्नलक्षणा जहल्लक्षणेति भावः । तामुदाहरणस्थले उपपादयति । **तथाही** त्यादिना । **संबन्धस्य** । सामीप्यादेः । ततः । तादृशस्मरणात् । अन्वयानुपपत्तेर्लक्षणाबीजत्वं निराकरोति । **परन्त्विति** । **यष्टीः प्रवेशयेत्यत्रेति** । यष्टिधरबोध-तात्पर्येणप्रयुक्तयष्टिपदस्येति शेषः । लक्षणा न स्यादिति । यष्टिधरे लक्षणा न स्यादित्यर्थः । तत्र हेतुमाह । **यष्टिष्विति** । दण्डेष्वित्यर्थः । तेन । तात्पर्यानुपपत्ते-र्लक्षणाबीजत्वस्वीकारेण । **तत्प्रवेशे** । यष्टिप्रवेशे । भोजनतात्पर्यविषयत्वाभावादिति शेषः । भोक्तृणां प्रवेशस्यैव तात्पर्यविषयत्वादिति भावः । **लक्षणा** । आवश्यकीति शेषः । अन्वयानुपपत्तेर्लक्षणाबीजत्वाभावे युक्त्यन्तरमाह । **एवमिति** । एवमपीति । सर्वत इति । दध्युपघातकेभ्यः सर्वेभ्य इत्यर्थः । **छत्रिपदस्येति** । छत्रपदस्येत्यर्थः । यथाश्रुते धान्यलक्षणापत्तेः । **एकसार्थवाहित्वे** । एकसमुदायत्वे । एकसार्थगन्तृत्व-परत्वे च नैराकांक्ष्येण यान्तीत्यस्यानन्वयापत्तेः । प्रत्ययार्थश्च संबन्धी । अत्र पूर्वेश च

परंतु एवंक्रमेण शक्यतावच्छेदकेऽपि शक्तिर्न स्यात्, तत्प्रकारक-शक्यार्थस्मरणं प्रति तत्पदस्य सामर्थ्यमित्यस्य सुवचत्वादिति विभावनीयम् । यत्र तु शक्यार्थस्य परंपरासम्बन्धरूपा लक्षणा सा लक्षितलक्षणेत्युच्यते । यथा द्विरेफादिपदे रेफद्वयस्य सम्बन्धोभ्रमरपदे ज्ञायते, भ्रमरपदस्य च

अर्थ की उपस्थिति हुई तो तीरत्वरूप से ही तीर का शाब्दबोध में भान होगा—यदि च गंगा तीरत्वरूप से तीर की उपस्थिति हुई तो गंगातीरत्व रूप से तीर का शब्दबोध में भान होवेगा (क्योंकि उपस्थित अर्थ का ही शाब्दबोध में भान होता है—वह उपस्थिति जिस रूप से भी हो) इसीलिये लक्ष्यतावच्छेदक में लक्षणा नहीं है—क्योंकि लक्ष्यतावच्छेदक (तीरत्वादि) प्रकारक बोध लक्ष्यतावच्छेदक में लक्षणा न मानने पर भी पूर्वोक्तरीत्या उपपन्न हो जावेगा। परन्तु इस क्रम से शक्यतावच्छेदक में भी शक्ति नहीं माननी चाहिये, क्योंकि शक्यतावच्छेदक प्रकारक शक्यार्थस्मरण (शक्यार्थोपस्थिति) के प्रति अर्थात् घटत्वप्रकारक घटरूपअर्थो-पस्थिति के प्रति घटपद की सामर्थ्य है—यह सुवच है। (परन्तु लक्ष्यतावच्छेदक में लक्षणा नहीं है—और शक्यतावच्छेदक में शक्ति है—इस विषय में प्राचीनाचार्यों ने कहा कि यह) विभावनीय (विचारणीय) प्रश्न है। जहाँ शक्यार्थ की परम्परासम्बन्धरूपा लक्षणा हो उसे लक्षितलक्षणा कहते हैं—जैसे 'द्विरेफमानय' यहाँ पर 'द्विरेफ पद का शक्यार्थ हुआ रेफद्वय—उसका साक्षात् सम्बन्ध भ्रमरपद में ज्ञात होता है—और भ्रमरपद का सम्बन्ध भ्रमररूप अर्थ में ज्ञात हो रहा है—अतः वहाँ लक्षितलक्षणा है—[अभिप्राय यह है कि "स्ववाच्यरेफद्वय-घटितपदवाच्यत्व" यह परम्परासम्बन्धरूपा लक्षितलक्षणा द्विरेफ पद की भ्रमररूप अर्थ में है—स्वपद से द्विरेफपद उसका वाच्य रेफद्वय उससे घटित भ्रमरपद उसका सम्बन्ध भ्रमर (भौंरा)

---

छत्रिषु गत्यन्वयस्य काकतो दधिरक्षणान्वयस्य चानुपपत्त्यभावात्तात्पर्यविषयान्वयानु-पपत्तिरेव लक्षणाबीजमिति भावः। इयमेव। काकेभ्योदधिरक्ष्यतामित्यादिस्थलीयैव। **अजहत्स्वार्थलक्षणेति**। न जहत्स्वार्थं ययेति बहुव्रीहिः। शक्यलक्ष्योभयवृत्तिधर्मा-वच्छिन्नलक्षणेति यावत्। अजहत्स्वार्थत्वमुपपादयति। **एकसार्थवाहित्वेनेति**। छत्रिघटितसमूहत्वेनेत्यर्थः। **न स्यादिति**। उभयथैवान्वयोपपत्तेरिति भावः। **तीरत्वेनरूपेणेति**। विशिष्टे इति शेषः। एवमग्रेपि। अत एव शक्यसंबन्धोलक्षणा इति स्वीकारादेव। लक्ष्यतावच्छेदके। तीरत्वादौ। **न लक्षणेति**। गंगायां घोष इत्यादौ शक्यसंबन्धस्य लक्षणात्वे तस्य तीरत्वादावसंभवात्। यत्र च लक्ष्यता-वच्छेदकलक्ष्यसाधारणःशक्यसंबन्धस्तत्र लक्ष्यमात्रवृत्तितानियामकसंबन्धेनतस्य लक्षणात्वम्। यद्यपि तीरत्वेपि संयुक्तसमवायरूपशक्यसंबन्धोऽस्त्येव तथापि युग-पद्वृत्तिद्वयविरोधेन शक्तिद्वयेनेव लक्षणाद्वयेनापि एकदैव पदार्थद्वयशाब्दबोधस्यानु-पगमेनैकपदात्तीरतीरत्वयोर्बोधानुपपत्तिरिति ध्येयम्। तत्र। लक्ष्यतावच्छेदके।

सम्बन्धो भ्रमरे ज्ञायते लक्षितलक्षणेत्युच्यते। किं तु लाक्षणिकं पदं नानुभवकम्, लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम्। शक्तिलक्षणान्य-

रूप अर्थ में है–अर्थात् द्विरेफपद का शक्यार्थ (शक्त्याश्रयीभूत जो अर्थ) वह है रेफद्वय, उस रेफद्वयरूप शक्यार्थ का सम्बन्धरूपा लक्षणा भ्रमरपद में है–और भ्रमरपद का सम्बन्धरूपालक्षित लक्षणा भ्रमररूप अर्थ में है किन्तु मीमांसक लोग लाक्षणिकपद को (अनुभावक) शाब्दबोध का कारण नहीं मानते हैं—लाक्षणिक अर्थ के शाब्दबोध में (पदान्तर) घोषादि पदान्तर कारण हैं। क्योंकि शक्ति-लक्षणाऽन्यतरसम्बन्ध द्वारा इतर पद से उपस्थापित जो अर्थ तदन्वित स्वशक्यार्थविषयकशाब्दबोध के प्रति–प्राचीनमत से–ज्ञायमानपद की कारणता है–

---

लक्षणां विनापीति। यद्धर्मं विशेष्यतावच्छेदकीकृत्यलक्षणाज्ञानं तद्धर्मप्रकारकधीहेतुरित्युपगमादिति भावः। विभावनीयमिति। संसर्गतान्यशाब्दधीविषयतायाः वृत्तिविषयताप्रयोज्यत्वनियमाच्छक्यतावच्छेदके शक्तिरावश्यकीति ध्येयम्। लक्षितलक्षणां विशदयति। यत्र त्विति। यादृशपदे इत्यर्थः। शक्यार्थस्य द्विरेफपदशक्यार्थरेफद्वयस्य परंपरासंबन्धरूपा "स्वघटितपदवाच्यत्वरूपा" लक्षितलक्षणेति। लक्षितेन लक्ष्यते "ज्ञायते" अनेनेति व्युत्पत्त्या लक्षितपदवाच्यत्वं लक्षितलक्षणापदार्थः। द्वौ रेफौ यत्रेति विग्रहे यत्रेत्यत्र यद्वाचकपदे, घटकत्वं सप्तम्यर्थः इत्याशयेनाह। यथेति। संबन्धः-घटितत्वम्। संबन्धः-शक्तिः। तथा च स्ववाच्यरेफद्वयघटितपदवाच्यत्वरूपपरंपरासंबन्धोलक्षितलक्षणा रेफपदे, द्विपदं तात्पर्यग्राहकमिति समुदितार्थः।

अथ द्विरेफपदाल्लक्षणयोपस्थितस्य भ्रमरपदस्य तत्तच्छक्त्यैव भ्रमरपदार्थस्य शाब्दधीसंभवे कृतं लक्षितलक्षणयेति चेत्। सत्यम्। भ्रमरपदस्य शक्त्या शाब्दधीरत्र न जायते तथा सति द्विरेफमानयेत्यत्र भ्रमरे विभक्त्यर्थानन्वयप्रसंगात्। यतोऽत्र भ्रमरपदं प्रकृतिः, किन्तु द्विरेफपदमेव, भ्रमरे तादृशप्रकृत्यर्थत्वविरहेण कथं विभक्त्यर्थान्वयइतिशक्तिवत् लक्षणावल्लक्षितलक्षणापि वृत्त्यन्तरमिति प्राञ्चः।

मणिकृतस्तु केवलद्विरेफस्य प्रकृत्यर्थत्वे तत्र कथं विभक्त्यर्थान्वय इति लक्षणयैव भ्रमरशाब्दबोधसंभवे कृतं लक्षितलक्षणयेति। इत्थं च तद्वाच्यघटितलक्षणैव लक्षितलक्षणापदार्थः शक्यसंबन्धमात्रस्यैव लक्षणात्वेन तादृशपदघटितशक्यसंबन्धत्वाल्लाक्षणिकत्व तस्यापि सुवचम्।

ननु यत्र द्विरेफपदशक्यसंबन्धग्रहो भ्रमरे न जातः किन्तु द्विरेफपदेन लक्षणोपस्थितस्य भ्रमरपदस्यैव शक्यसंबन्धग्रहोजातः तत्र का गतिः लक्षितलक्षणावादिमते तादृशलक्षणानामपि वृत्तित्वग्रहादेव तादृशशाब्दबोध इतिचेत्–सत्यम्–तत्रान्वयबोधः भ्रमरस्य द्विरेफपदार्थत्वाभावेन विभक्त्यर्थान्वयो न भवितुमर्हतीति तत्रान्वयबोधः न स्यादेव।

न च तत एव लक्षितलक्षणापिवृत्त्यन्तरमाद्रियते लक्षणया प्रकृत्युपस्थापित

तरसम्बन्धेन इतरपदार्थान्वितस्वशक्यार्थशाब्दबोधं प्रति पदानां सामर्थ्यावधारणात् ।

वाक्ये तु शक्तेरभावाच्छक्यसम्बन्धरूपा लक्षणापि नास्ति ।

और नवीनमत से पदज्ञान को कारणता है [अर्थात् "गंगायां घोषः यहाँ पर लक्षणा रूप सम्बन्धद्वारा गंगापद से उपस्थापित जो तीर रूप अर्थ—उससे अन्वित जो घोषपद का शक्य अर्थ हुवा घोष—तद्विषयक शाब्दबोध के प्रति घोषपद को कारणता है।] वाक्य में जब कि शक्ति नहीं है तो शक्यसम्बन्धरूपा लक्षणा भी नहीं है।

प्रश्न—( यदि वाक्य में लक्षणा नहीं है तो "गंभीरायां नद्यां घोषः" यहाँ क्या गति होगी—क्योंकि यहाँ तो 'गंभीरनदी' इस वाक्य की ही 'गंभीरनदीतीर' रूप अर्थ में लक्षणा करनी होगी—अतः वाक्य में लक्षणा सिद्ध हो गयी )।

---

पदलक्षणैव प्रकृते लक्षितलक्षणेति वाच्यम्। शक्यादन्येनरूपेण ज्ञाते भवति लक्षणेति अतः भ्रमरपदशक्यतावच्छेदकभ्रमरत्वे तत्पदलक्ष्यतावच्छेदकत्वासंभवात् इति तत्र तादृशपदघटितशक्यसंबन्धग्रहे बाधकाभावात्तादृशग्रहस्यापि संभवाच्च। न च यत्र तादृशपदघटितशक्यसम्बन्धेन भ्रमरे द्विरेफपदस्य बाधनिश्चयः तत्र भ्रमरे का गतिरिति वाच्यम्। एतावता लक्षणाप्रकारकज्ञानवारणसंभवेपि लक्षणासंसर्गकज्ञानवारणाऽसंभवात्। न च तत्र भवतां मते वृत्तिप्रकारकज्ञानत्वेन वाच्यम्। एतद्बाधकबलादेव वृत्तिप्रकारकज्ञानस्यैव वृत्तिसंसर्गकज्ञानत्वेन हेतुत्वमभ्युपेयम्।

ननु तद्विषयकशाब्दबोधे तच्छक्तपदज्ञानत्वेन हेतुत्वाल्लाक्षणिकपदान्न शाब्दबोध इति प्राचीनमतमाह। **किन्त्विति**। **नानुभावकमिति**। न शाब्दबोधहेतुरित्यर्थः। तथा च लाक्षणिकपदस्याऽर्थस्मारकत्वं नानुभावकत्वमिति भावः। पदार्थोपस्थापकतया जनकजनकत्वेनाऽन्यथासिद्धिरिति यावत्। नन्वेवं लक्षणास्थले शाब्दबोधानुपपत्तिरतआह। **लाक्षणिकार्थस्येति**। किन्तु इत्यादिः। **पदान्तरं** समभिव्याहृतशक्तपदान्तरम्। **कारणमिति**। तथा च लाक्षणिकपदसमभिव्याहृतशक्तपदान्तरमेव लक्ष्यार्थान्वितस्वार्थबोधंप्रतिकारणमिति भावः। **स्वशक्यार्थेति**। तथा च स्वलक्ष्यार्थशाब्दं प्रति पदज्ञानं न हेतुरुक्तान्यथासिद्धेरिति भावः। **पदानां** शक्तपदानाम्। **सामर्थ्यावधारणात्**—शक्त्यवधारणादित्यर्थः। कुमतिः पशुरित्यत्र कुमतिपदस्य कुत्सितज्ञानवल्लाक्षणिकतया पशुपदस्य पशुसदृशे लाक्षणिकतया सर्वेलाक्षणिकस्थले शाब्दबोधस्यानुभवसिद्धतया लाक्षणिकस्याप्यनुभावकत्वमिति नव्याः।

मीमांसकाभिमतवाक्यलक्षणां निराकरोति। **वाक्येत्विति**। अवधारणार्थकस्तुशब्दः। शक्तेरभावादित्यत्र...

यत्र गभीरायां नद्यां घोष इत्युक्तं तत्र नदीपदस्य नदीतीरे लक्षणा गभीरपदार्थस्य नद्या सहाभेदेनाऽन्वयः। क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात्। यदि च तत्रैकदेशान्वयो न स्वीक्रियते तदा नदीपदस्य गभीरनदीतीरे लक्षणा गभीरपदं तात्पर्यग्राहकम्। बहुव्रीहावप्येवम्। तत्र हि चित्रगुपदादौ यद्येकदेशान्वयः स्वीक्रियते तद्गोपदस्य गोस्वामिनि लक्षणा गविचित्राऽभेदाऽ-

उत्तर—जहाँ 'गंभीरायां नद्यां घोषः' यह कहा गया है—वहाँ नदी पद की ही नदी तीर में लक्षणा है (न कि वाक्य की) और गंभीर पदार्थ का नदी के साथ अभेदेन अन्वय होता है (अर्थात् 'गंभीरा या नदी तादृश नदीतीरे घोषः' यह बोध होता है)।

प्रश्न—(ऐसा करने से नदी पद का लक्षणा के द्वारा अर्थ जो हुआ नदीतीर—उसके एकदेश नदी के साथ गंभीर पदार्थ का यदि अन्वय करेंगे तो एक देशान्वय की आपत्ति लग जायगी। अतः "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इस नियम से विरोध हो जायगा)।

उत्तर—("परम सुन्दरः" इत्यादिस्थल में जैसे परमपदार्थ का सुन्दर पदार्थ के एक देश सौन्दर्य के साथ अन्वय स्वीकार किया जाता है—ऐसे ही प्रकृत में भी एक देशान्वय स्वीकृत हो जावेगा) क्योंकि कहीं एक देशान्वय भी माना जाता है—(अतः पूर्वोक्त नियम सार्वत्रिक नहीं है। और यदि एक देशान्वय नहीं स्वीकार करते हैं—तब नदी पद की गभीर नदीतीर' रूप अर्थ में लक्षणा कर देना—गंभीर पद को "नदीपदं गभीरनदीतीररूपमर्थं बोधयतु" इस तात्पर्य का ग्राहक बना देना। बहुव्रीहिसमास में भी ऐसा ही करना—जैसे 'चित्रा गावोऽस्यासौ चित्रगुः' इस बहुव्रीहिसमास से 'चित्रगु' का अर्थ हुवा चित्रगोस्वामी) यदि एकदेशान्वय मानते हैं तब तो गोपद की गोस्वामी में लक्षणा कर देना, चित्रपदार्थ का

---

असमस्तवाक्ये शक्तेः केनाप्यनभ्युपगमात्समस्तवाक्येऽपिशक्तेरभेदूषणीयत्वाच वाक्यमात्रे शक्तौ प्रमाणाभावादिति भावः। शक्यसंबन्धरूपलक्षणापीति। वाक्यशक्तेरप्रसिद्ध्या शक्यसंबन्धरूपलक्षणापि अप्रसिद्धेत्यर्थः।

ननु वाक्येपि लक्षणा भवत्येव। अन्यथा गभीरायां नद्यां घोष इत्यादौ गभीरनदीतीरस्य बोधो न स्यात्। तथा हि तत्र नदीपदस्य गभीरनदीतीरे लक्षणा कर्तुं न शक्यते, गभीरायामित्यस्यानन्वयापत्तेः। उद्देश्यतावच्छेदकविधेययोरैक्यात्। नापि गभीरायामित्यस्य लक्ष्यार्थगभीरनदीतीरेऽन्वयः तीरस्य गभीरत्वाभावेनाऽयोग्यत्वात्। गभीरपदस्यैव गभीरनदीतीरलक्षकत्वे नद्यामित्यस्याऽनन्वयापत्तेः, तीरस्य नदीत्वाभावेनाऽयोग्यत्वादिति मीमांसकमतं निराकरोति। यत्रेति। नित्या गौरित्यादौ एकदेशान्वयास्वीकारादाह। क्वचिदिति। तन्त्रेयं गभीरायां नद्यां व्रज इत्यादावपि अभेदबोधापत्तेराह। यदिचेति। तात्पर्यग्राहकमिति। इदं च नव्यमतम्। प्राञ्चस्तु तदर्थक्याय वाक्ये लक्षणा, तत्रशक्तेरभावेपि स्वबोध्यसंबन्धस्यैव लक्षणात्वोपगमात्। न च तत्र 'शक्तिभ्रमवल्लक्षणाया अपि भ्रमः। प्रमात्वे

न्वयः । यद्येकदेशान्वयो न स्वीक्रियते तदा गोपदस्य चित्रगोस्वामिनि लक्षणा । चित्रपदं तात्पर्यग्राहकम् । एवमारूढवानरोवृक्ष इत्यत्र वानरपदे वानरारोहकर्मणि लक्षणा आरूढपदं च तात्पर्यग्राहकम् । एवमन्यत्रापि ।

तत्पुरुषे तु पूर्वपदे लक्षणा । तथा हि । राजपुरुष इत्यादौ राजपदार्थेन

गौ के साथ अभेदेन अन्वय कर देना—और यदि एकदेशान्वय नहीं स्वीकार करते हैं तब गोपद की चित्रगोस्वामी में लक्षणा कर देना—और चित्रापद को पूर्ववत् तात्पर्यग्राहक बना देना–( अर्थात् गोपदं चित्रगोस्वामिनमर्थं बोधयतु ) एवम् 'आरूढवानरो वृक्षः' यहाँ पर भी वानरपदकी वानरारोहणकर्म में लक्षणा करके-आरूढपद को तात्पर्यग्राहक बना देना। इसी प्रकार अन्यत्र भी जानना चाहिये। ( बहुव्रीहि में उत्तरपद में लक्षणा होती है ) तत्पुरुष समास में पूर्वपद में लक्षणा होती है-तथाहि-'राज्ञः पुरुष इति राजपुरुषः' इस षष्ठी

---

संभवति भ्रमत्वकल्पनाया अन्याय्यत्वादित्याहुः । तत्र विभक्त्यर्थान्वयानुपपत्तेः । वाक्यस्य विभक्तिप्रकृतित्वाभावात् । गभीरायां नद्यामिति विभक्त्यन्तभागस्य लक्षणायां, लक्ष्यार्थस्य "गभीरनदीतीरस्य" आधेयतया घोषादावन्वयानुपपत्तेः, नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वात् । तादृशतीरवृत्तौ लक्षणायामपि घोषादावभेदेनाऽन्वयाऽसंभवः, नाम्नोः समानविभक्तिकत्वाभावादित्यास्तां विस्तरः । बहुव्रीहाविति । चित्रा गावो यस्य-आरूढः वानरोयमित्यादि बहुव्रीहावित्यर्थः । एवमित्यस्यार्थमाह । तत्रेत्यादि । यद्येकदेशान्वयः स्वीक्रियते इति । शरैः शातितपत्रक इत्यादौ शरकरणकत्वस्य शातितपदार्थैकदेशे शातनेऽन्वयस्य सर्वानुमतत्वादिति भावः । गोमति । गोस्वामिनि । न स्वीक्रियते इति । इति विभाव्यते इति शेषः । गोधर्मिकान्वयबोधे गोधर्मिकवृत्तिज्ञानस्य हेतुताया आवश्यकत्वात् । अन्यथा चित्रव्रजोस्ति स्यादावपि व्रजपदार्थस्य गोसंस्थानरूपस्यैकदेशे गवि चित्रान्वयप्रसंगात् । चित्रापदं तात्पर्यग्राहकमिति । न च चित्रपदमेवतादृशार्थकं, गोपदं तात्पर्यग्राहकमित्येव किं न स्यादिति वाच्यम् । विभक्त्यर्थान्वयानुपपत्तेः प्रकृत्यर्थे एव सुपः संख्याबोधकत्वव्युत्पत्तेः । चित्रापदस्य तत्र प्रकृतित्वाभावादिति भावः एवं चित्रगुरस्तीत्यादौ चित्रपदस्य प्रथमान्तत्वाभावेन तदर्थेऽस्तित्वाद्यन्वयबोधानुपपत्तेश्च प्रथमान्तपदोपस्थाप्यस्यैव भावनाविशेष्यत्वात् । अन्यथा राजपुरुषोस्तीत्यादावपि राजनि अस्तित्वान्वयप्रसंगात् ।

अथ चित्रगुरस्तीत्यादौ गोपदं चित्रगोस्वामिनि लक्षकम् । चित्रपदं तात्पर्यग्राहकमित्यपि न युक्तम् । तथा सति प्रकृत्यर्थे सुपः संख्याबोधकत्वोपपादनेपि पूर्वपदार्थसाकांक्षस्यैव स्वार्थस्योपसर्जनतायां "गोस्त्रियोरुपसर्जनस्ये" ति सूत्रेण

सह पुरुषपदार्थस्य साक्षान्नान्वयो, निपातातिरिक्तनामार्थयोर्भेदेनान्वयस्याऽव्युत्पन्नत्वात् । अन्यथा राजा पुरुष इत्यत्रापि तथान्वयबोधः स्यात् । षष्ठी

*तत्पुरुष समास में राजपदार्थ के साथ पुरुषादिपदार्थ का साक्षात् (स्वत्वादिरूपभेद) सम्बन्ध से अन्वय नहीं होता है—क्योंकि निपात से अतिरिक्त नामार्थद्वय का भेद (साक्षात्) सम्बन्ध*

---

गोपदस्य ह्रस्वविधानात्, चित्रपदार्थेन समं तदर्थान्वये तदनुपपत्तेः । न च स्वार्थोपसर्जनगोपदस्यैव ह्रस्वविधानोक्तदोष इति वाच्यम् । तथा सति गोरस्तीत्यादावपि चित्राभिन्नस्वगोसंबन्धित्वेन गोपदस्य लक्षणायामुदन्तत्वापत्तेः । न च नामोत्तरवर्तिन एव गोपदस्य स्वार्थोपसर्जनत्वे ह्रस्वविधिः । यत्र गोपदेन लक्षणायोपस्थापिते "चित्राऽभिन्नस्वगोसम्बन्धिनि" अभेदेन चित्रपदस्याऽन्वयस्तत्र "चित्र" गवोऽस्तीत्यादिकर्मधारयेपि गोपदस्य ह्रस्वप्रसंगात् । इतिचेन्न मान्याः । चित्रगुरित्यत्र गोपदं स्वगोस्वामिनि लक्षकं तदेकदेशे गवि तादात्म्येन चित्रपदार्थस्यान्वयः । घटशून्यम्, चैत्रस्य गुरुकुलम् इत्यादितत्पुरुषे भेदेनैव चित्रगुप्रभृतिबहुव्रीहावपि अभेदेन एकदेशान्वयबोधोपपत्तये पदार्थः पदार्थेनान्वेतीतिव्युत्पत्तिसंकोचस्यावश्यकत्वात् । तत्पुरुषबहुव्रीह्यघटकः पदार्थः पदार्थेनान्वेतीति व्युत्पत्तेः स्वीकारात् । फलानुरोधित्वात्कल्पनायाः । प्राच्यैरपि सुन्दरराजपुरुष इत्यादावभेदेन सुन्दरादेः पदार्थैकदेशे राजन्यन्वयबुद्धेः स्वीकारदेति प्राहुः । इदन्तु बोध्यम् । चित्रा गावोऽस्येति विग्रहवाक्येन यत्संबन्धिनः चित्रा गाव इति बोधाद् बहुव्रीहिसमासे विग्रहवाक्याद्धद्विशेषणविशेष्यभावोपन्नवार्थबोधो भवति समासवाक्यात्तद्विपरीतविशेषणविशेष्यभावापन्नार्थबोधो भवति इति नियमात्चित्रगोस्वामी इति बोधो जायते । एवमारूढः वानरोयमिति विग्रहवाक्याद्वृक्षकर्मकारोहणकर्ता वानर इति बोधः । समासवाक्याद्वानरकर्तृकारोहणकर्म वृक्ष इति बोधः ।

तत्पुरुषे इति । तत्पुरुषसामान्ये इत्यर्थः । लक्षणेति । निरूढलक्षणेत्यर्थः । तामेवोपपादयति तथाहीति । राजपदार्थेन । राजपदशक्यार्थेन । साक्षादिति । विभक्त्यर्थमद्वारीकृत्येत्यर्थः । तेन राज्ञः पुरुष इत्यादौ षष्ठ्यर्थस्वत्वसंबन्धेनापि पुरुषे राज्ञोऽन्वये न क्षतिः । निपातेति । अव्ययरूपनिपातेत्यर्थः । अन्यथा नामार्थयोः साक्षाद्भेदान्वयस्यापि व्युत्पन्नत्वे । राजा पुरुष इत्यत्रापीति । राजपदपुरुषपदाभ्यामिति शेषः । तथान्वयबोधापत्तेरिति । राजपुरुषयोः साक्षाद् भेदेनान्वयबोधापत्तेरित्यर्थः । स्वत्वसंबन्धेन राजप्रकारकपुरुषविशेष्यकशाब्दबोधापत्तेरिति भावः । नञः । अन्योन्याभावस्य । साक्षादेव । विभक्त्यर्थमद्वारीकृत्य । अन्वयादिति । नञर्थे भेदे घटस्य स्वप्रतियोगिकत्वसंबन्धेन, भेदस्य च घटे स्वरूपसंबंधेनान्वयादित्यर्थः । ननु निपातातिरिक्तनामार्थयोरन्वयबोधो न भवती-

। पट इत्यादौ घटपटाभ्यां नञःसाक्षादेवान्वयान्निपातातिरिक्तेति । नीलोघट इत्यादौ नामार्थयोरभेदसम्बन्धेनान्वयाद्भेदेनेति । न च राजपुरुष इत्यादौ लुप्तविभक्तेः स्मरणं कल्प्यमिति वाच्यम् । अस्मृतविभक्तेरपि ततोबोधोदयात् ।

से अन्वय नहीं होता है—अन्यथा ( इस नियम को अनङ्गीकार करने पर ) 'राजापुरुषः' यहाँ भी स्वत्वादिरूपभेद सम्बन्ध से अन्वयबोध होना चाहिये—[ अभिप्राय यह है कि 'राजपुरुषः' यहाँ पर वैयाकरणलोग लुप्तषष्ठीविभक्ति का स्मरण करके—तदर्थ स्वत्व मानकर—उस विभक्त्यर्थस्वत्व में राजपदार्थ का निरूपितत्वसम्बन्ध से अन्वय करते हैं—और स्वत्व का स्वरूपसम्बन्ध से पुरुष में अन्वय करके यह शाब्दबोध उपपन्न करते हैं कि 'राजनिरूपित-स्वत्ववान् पुरुषः' । इस पर नैयायिकों का कहना है कि व्यर्थ में इतना गौरव उठाना—अथ च नियमविरोध करना अनुचित है—अतः राजपद की राजसम्बन्धी में लक्षणा करके उसका पुरुष के साथ अभेदेन अन्वय कर देना—इससे यह बोध हो गया कि 'राजसम्बन्ध्यभिन्नः पुरुषः' ] उक्तनियम में निपातातिरिक्तपद के न देने पर "नामार्थयोर्भेदेनान्वयबोधस्या-व्युत्पन्नत्वात्" इतना अवशिष्ट रहा । अर्थात् नामार्थद्वय का भेद सम्बन्ध से अन्वयबोध नहीं होता है, ऐसी स्थिति में 'घटोनपटः' यहाँ पर पट का प्रतियोगितारूपभेदसम्बन्ध से नञर्थभेद में अन्वय होकर, और भेद का स्वरूपात्मकभेदसम्बन्ध से घट में अन्वय होकर, इससे "पट-प्रतियोगिकभेदवान् घटः" यह जो शाब्दबोध होता है—वह अनुपपन्न हो जावेगा—क्योंकि नियमबाधक हो रहा है—अतः 'निपातातिरिक्त' कहा—तो निपातातिरिक्तनामार्थद्वय का भेद सम्बन्ध से अन्वय नहीं होता है—परन्तु निपातार्थ और नामार्थ का परस्पर भेद सम्बन्ध से अन्वय तो निराबाध ही है । 'नीलो घटः' यहाँ पर नील और घट इन दोनों नामार्थों का अभेद सम्बन्ध से अन्वयबोध उपपन्न करने के लिये 'भेदेन' यह पद दिया—देने से यह अर्थ हुवा कि निपातातिरिक्तनामार्थद्वय का भेदसम्बन्ध से अन्वयबोध ( शाब्दबोध ) नहीं होता है—किन्तु अभेद सम्बन्ध से शाब्दबोध होने में कोई बाधक नहीं है—अतः नीलो घटः यहाँ पर नील-घट इन नामार्थद्वय का अभेदेन अन्वयबोध बन जावेगा ।

प्रश्न—'राजपुरुषः' यहाँ पर लुप्त षष्ठी विभक्ति का स्मरण करके तदर्थ 'स्वत्व' मानकर—उसका स्वरूपसम्बन्ध से पुरुष में अन्वय करके राजनिरूपितस्वत्ववान् पुरुषः यह शाब्दबोध क्यों न स्वीकार कर लिया जाय ।

उत्तर—यह ठीक नहीं—क्योंकि जिस पुरुष को 'राजपुरुष' यहाँ लुप्तषष्ठी विभक्ति का स्मरण नहीं है उसे भी राजपुरुषः इस वाक्य से शाब्दबोध होता है—इस कारण से राजपद

---

स्यैवोच्यतामित्यत आह । **नीलो घट इत्यादाविति** । **राजपुरुष इत्यादाविति** । राजपदोत्तरमिति शेषः । **लुप्त विभक्ते** रिति । समासत्वाल्लुप्तषष्ठीविभक्ते रित्यर्थः । **स्मरणंकल्प्यमिति** । तथा चाऽत्रापि प्रत्ययार्थद्वारैव राजपुरुषयोरन्वयान्नोक्तव्युत्प-त्तिविरोधः, न वा पूर्वपदलक्षणेति भावः । **अस्मृतेति** । लुप्तविभक्तिमजानतोपि शाब्दबोधोदयादिति भावः । **तस्मात्**—भेदाऽन्वयाऽसंभवेनाऽभेदान्वयबोधात् ।

तस्माद् राजपुरुष इत्यादौ राजसम्बन्धिनि लक्षणा, तस्य च पुरुषेण-सहाभेदान्वयः।

द्वन्द्वे तु धवखदिरौ छिन्धीत्यादौ तु धवः खदिरश्च विभक्त्यर्थ-द्वित्वप्रकारेण बुध्यते तत्र न लक्षणा। न च साहित्येलक्षणेति वाच्यम्। साहित्यशून्ययोरपि द्वन्द्वदर्शनात्। न च एकक्रियान्वयित्वरूपं साहित्यमस्तीति

की राजसम्बन्धी में लक्षणा करके ( अर्थात् राजपद से लक्षणा द्वारा 'राजसम्बन्धी' रूप अर्थ की उपस्थिति करके ) फिर राजसम्बन्धी का पुरुष के साथ अभेदेन अन्वय कर दीजिये-तब "राजसम्बन्ध्यभिन्नः पुरुषः" यह शाब्दबोध उपपन्न हो जायेगा। एवं "धवखदिरौ छिन्धि" इत्यादि इतरेतरद्वन्द्वस्थल में 'औ' इस विभक्ति का अर्थ जो द्वित्व-तादृशद्वित्वप्रकारकधव-खदिरोभयविशेष्यक शाब्दबोध उपपन्न हो ही जावेगा-फिर लक्षणा मानना व्यर्थ है।

प्रश्न—मीमांसक कहता है कि धवखदिरौ का अर्थ है धवसहित जो खदिर 'तं छिन्धि' यह जो धव का सामानाधिकरण्यरूपसाहित्य खदिर में इस अर्थ से सिद्ध हो रहा है-वह साहित्य रूप अर्थ किसी पद की शक्ति के द्वारा तो आ नहीं रहा है-क्योंकि शक्ति तो धवपद की धवरूप अर्थ में-और खदिरपद की खदिररूप अर्थ में है-साहित्य अर्थ में किस पद की शक्ति है अतः साहित्य ( अर्थात् साहित्याश्रय ) में खदिरपद की लक्षणा मानकर "धवसहितं खदिरं छिन्धि" यह 'धवखदिरौ छिन्धि' से बोध क्यों न मान लिया जाय।

---

राजसंबन्धिनि। राजादिसंबन्धिनि। पुरुषेण। पुरुषादिना। द्वन्द्वेत्विति। इतरेतरद्वन्द्वेत्वित्यर्थः। बुध्यते इति। तथा च धवखदिरौ द्वित्ववन्तौ इति बोधो जायते इति भावः। अथ प्रकृत्यर्थे द्वित्वादिसंख्या पर्याप्तिसंबन्धेन प्रकारः, समवायेन तथात्वे आकाशादिपदात्पिद्विवचनापत्तेः। न च पर्याप्तेः संसर्गत्वेपि तद्दोप-तादवस्थ्यम्, घटाकाशादौ द्वित्वपर्याप्तिसत्त्वे प्रत्येकमाकाशेपि तत्पर्याप्तिसत्वात्, प्रत्येकस्योभयानतिरेकादिति वाच्यम्। उद्देश्यतावच्छेदकव्याप्यपर्याप्तेरेव संसर्गत्वात्। एवं च धवखदिरौ इत्यत्र प्रत्येकं धवत्वं खदिरत्वं च न द्वित्वोद्देश्यतावच्छेदकम्, उद्देश्यतावच्छेदकव्याप्यपर्याप्तेद्वित्वसंबन्धत्वे धवखदिरौ छिन्धीत्यादौ उद्देश्यतावच्छेदकीभूतधवत्वखदिरत्वव्याप्यं द्वित्वादिद्वयमेव प्रत्येतव्यम्, न तु धवखदिरपर्याप्तद्वित्वम्, उद्देश्यतावच्छेदकीभूतधवत्वाभाववति खदिरे द्वित्वस्य वृत्तेः एवं तादृशखदिरत्वाभाववति धवे तस्य वृत्तिता बोध्या। तथा चैकैकधव-खदिरादितात्पर्येण तथाप्रयोगानुपपत्तिरितिखदिरपदस्य धवखदिरसाहित्याश्रये लक्षणा वाच्या। एवं च साहित्यस्यैवोद्देश्यकतावच्छेदकत्वे धवद्वयादिगतद्वित्वस्य साहित्यव्याप्यत्वाभावेन धवखदिरोभयगतद्वित्वस्यैव तद्व्याप्यत्वात् न धवद्वयादि बोधापत्तिर्नवा धवखदिरोभयबोधानुपपत्तिरिति मीमांसकमतं शंकते। नचेति। साहित्ये। सहवृत्तित्वरूपसाहित्याश्रये। साहित्यशून्ययोरपीति। व्यधिकरणधव-खदिरयोः गोरवाश्वत्वयोर्वेत्यर्थः। द्वन्द्वदर्शनादिति। धवखदिरौ पश्य, गोश्वा-

वाच्यम् । क्रियाभेदेपि धवखदिरौ पश्य छिन्धीत्यादिदर्शनात्, साहित्यस्याननुभवाच्च । अत एव राजपुरोहितौ सायुज्यकामौ यजेयातामित्यत्र लक्षणाऽभावाद् द्वन्द्व आश्रीयते । तस्मात्साहित्यादिकं नार्थः ।

उत्तर—'साहित्य' अर्थ से शून्य पदार्थों का भी द्वन्द्व देखा जाता है-जैसे 'हिमविन्ध्यौ' ।

प्रश्न—सामानाधिकरण्य-एवं एकक्रियान्वयित्वरूप जो यह दो प्रकार का साहित्य है-उसमें से सामानाधिकरण्यरूप साहित्य की अनुपपत्ति हो-परन्तु एकक्रियान्वयित्वरूप साहित्य को क्यों न मान लिया-क्योंकि 'धवखदिरौ छिन्धि' यहाँ पर धव-खदिर-दोनों का छेदनरूप एक क्रिया के साथ अन्वय है ।

उत्तर—जहाँ जिस व्यक्ति ने धव को देखने के अभिप्राय से, खदिर को छेदने के तात्पर्य से "धवखदिरौ पश्य छिन्धि" यह प्रयोग किया तो वहाँ दर्शन-तथा छेदन रूप क्रिया का भेद होने पर भी धवखदिर का द्वन्द्व तो स्पष्ट ही है—परन्तु दर्शन-छेदन-क्रियाद्वय के होने से एक क्रिया ही नहीं है—अतः एकक्रियान्वयित्वरूप साहित्य भी सर्वथा अनुपपन्न है । दूसरा उत्तर यह भी है कि 'धवखदिरौ' यहाँ पर धव और खदिर के साहित्य का अनुभव भी नहीं होता है । ( अत एव ) द्वन्द्वस्थल में लक्षणा के न मानने प्रयुक्त ही—"राजपुरोहितौ सायुज्यकामौ यजेयाताम्" अर्थात् सायुज्यमुक्ति की कामनावाले राजा और पुरोहित दोनों यज्ञ करें-इत्यादिस्थल में लक्षणा के अभाव से ही द्वन्द्व का आश्रयण करते हैं—( 'राजपुरोहितौ' ( अर्थात् राजा के दो पुरोहित-) इस षष्ठीतत्पुरुष का आश्रयण इसीलिये नहीं करते कि लक्षणा माननी पड़ जायगी ] इसलिये 'धवखदिरौ' यहाँ इतरेतरद्वन्द्व स्थल में साहित्य अर्थ नहीं है ।

---

च्छन्धि पश्य इत्यादिप्रयोगदर्शनादित्यर्थः । तथा च तत्र साहित्यस्य बाधितत्वान्नसाहित्याश्रये लक्षणेति भावः । एकजातीयक्रियान्वयित्वरूपसाहित्यमत्र विवक्षितमित्याशयेनाह । **न चेति । एकक्रियान्वयित्वरूपमिति ।** एकजातीयक्रियान्वयित्वरूपमित्यर्थः । **क्रियाभेदेपि** । क्रियावैजात्येपि **धवेति** । यथासंख्यं दर्शने धवस्य छिदिक्रियायां खदिरस्यान्वयः । द्विवचनमविवक्षितम् । न चैकवचनं स्यात् । समाहारद्वन्द्व एव एकवचनानुशासनबलेनाऽन्यद्वन्द्वे द्विवचनबहुवचनयोरेव साधुत्वात् । अत्र साहित्यस्य बाधात् । मास्त्वन्वयः, अबाधिते तु स्यादित्यत आह । **अननुभवाच्चेति ।** केचित्तु एकजातीयक्रियानिष्ठसाक्षादेकजातीयसंसर्गनिरूपकत्वम् — धवखदिरविशेष्यकधीविशेषविषयत्वं वा धवखदिरयोः साहित्यं, तदाश्रयश्च धवद्वयादिकमपीतितादृशसाहित्याश्रयलक्षकत्वपक्षेपि धवद्वयादिबोधस्य दुर्वारतापत्तेः । त्रितयाऽविशेष्यक धवखदिरधर्मिकधीविशेष्यत्वमेव प्रकृते धवखदिरयोः साहित्यं, तच्च न धवद्वयादेरित्युक्तौत्वाह **अननुभवाच्चेति** । आहुः । साहित्यविषयकशाब्दस्याननुभवादित्यर्थः । तथाच शाब्दस्याननुभवे तत्र वृत्त्यकल्पनादिति भावः । **अतएव** । इतरेतरद्वन्द्वेसाहित्यस्याननुभवादेव । लक्षणाभावा

किन्तु वास्तवोभेदो यत्र तत्र द्वन्द्वः । न च नीलघटयोरभेद इत्यादौ कथमिति वाच्यम् । तत्र नीलपदस्य नीलत्वे घटपदस्य घटत्वे तात्पर्यात् । अभेद इत्यस्य चाश्रयाभेद इत्यर्थः ।

प्रश्न—[ यदि द्वन्द्व में लक्षणा नहीं है तो कर्मधारय से द्वन्द्व का किंप्रयुक्त भेद कहा जायगा । क्योंकि कर्मधारय में ही लक्षणा नहीं है ]

उत्तर—जहाँ समस्यमान दो पदार्थों मे परस्पर वास्तविक भेद रहता है वहीं द्वन्द्व समास होता है—( और जहाँ भेद नहीं रहता वहाँ कर्मधारय होता है )

प्रश्न —तब फिर 'नीलघटयोरभेदः' यहाँ नील तथा घट का द्वन्द्व कैसे हुआ—( क्योंकि नील और घट में तो कोई भेद ही नहीं है—कारण कि नीलपद यहां पर नील गुण परक नहीं है अपितु नीलगुणविशिष्ट परक है—अतः नीलगुणविशिष्टघटआदि ही अर्थ है )

उत्तर—'नीलघटयोरभेदः' यहां पर नीलपद नीलत्व में और घटपद की घटत्व अर्थ में लक्षणा है—( अतः इन दोनों का परस्पर-भेद होने के कारण द्वन्द्व बन जाता है ) और 'अभेद' का अर्थ है 'आश्रयाभेद' ( अर्थात् नीलत्व—और घटत्व—इन दोनों के आश्रय जो नील और घट—उनका अभेद—सो उनका अभेद है ही है ) । ( द्वन्द्व दो प्रकार का है इतरेतरद्वन्द्व-

---

दिति । लक्षणाभावादेवेत्यर्थः । आश्रीयते इति । अङ्गीक्रियते इत्यर्थः । कुतो पुरोहितश्च पुरोहितश्च पुरोहितौ राज्ञःपुरोहितौ राजपुरोहितौ इतिषष्ठीतत्पुरुषः—राजा च पुरोहितश्च राजपुरोहितौ इति द्वन्द्वोवेति सन्देहे द्वन्द्वएवाङ्गीकृतः तत्पुरुषे तु राजपदस्य राजसंबन्धिनि लक्षणायां गौरवादिति भावः । अत्र मीमांसकाः—एकक्रियान्वयित्वंअत्र साहित्यं न विवक्षितम्, किन्तु अपेक्षाबुद्धिविशेषत्वरूपम्, तदवच्छेदेन विभक्त्यर्थद्वित्वान्वयः, अन्यथा धवखदिरौ इत्यादौ धवद्वयखदिरद्वयादिधीःस्यात् । एकघटसत्त्वेघटौ इत्यादि प्रयोगापत्त्या विभक्तेःप्रकृत्यर्थतावच्छेदकव्याप्यसंख्याबोधकत्वव्युत्पत्तेः । एवं च साहित्यमेव प्रकृत्यर्थतावच्छेदकं तद्व्याप्यंधवखदिरादिद्वित्वादिकमेवेति धवखदिर-द्वयादेर्बोधः, न तु धवद्वयखदिरद्वयादेरित्याहुः । तन्न । यत्रैकधर्मो द्वित्वाद्यु इयत्ता-वच्छेदकस्तत्रैवोद्देश्यतावच्छेदकव्याप्यसंख्याबोधकत्वम् । यत्रनानाधर्मस्तथा-तत्र सकलतत्समानाधिकरणद्वित्वादिबोधकत्वव्युत्पत्तेः । कालाकाशघटादिवृत्ति-त्रित्वादिकमादायाऽऽकाशकालाः इत्यादिप्रयोगापत्त्या तादृशव्युत्पत्तिघटकद्वित्वादौ भक्तप्रकृत्यर्थतावच्छेदकान्यतरत्वावच्छिन्नव्याप्यत्वमपि विशेषणीयम् । तस्मात् साहित्यस्याननुभवात् । कर्मधारयाद् द्वन्द्वस्य वैलक्षण्यमाह । किन्त्विति । चार्थेद्वन्द्व इत्यनुशासने चार्थे पदार्थयोर्भेदेसति द्वन्द्वोभवतीत्याशयेनाह । वास्तवोभेद इति । वस्तुप्रतियोगिकोभेद इत्यर्थः । एतेन पदार्थयोरभेद-बोधककर्मधारयाद्भेदोदर्शितः । नीलघटयोरिति । अत्र नीलश्च घटश्चेति द्वन्द्वः । नीलश्चासौघटश्चेतिकर्मधारयेद्विवचनानुपपत्तेः । कथमिति । कथं

समाहारद्वन्द्वे तु यदि समाहारोऽप्यनुभूयते इत्युच्यते तदा अहिनकुल-मित्यादौ परपदे अहिनकुलसमाहारे लक्षणा पूर्वपदं तु तात्पर्यग्राहकम्। न च भेरीमृदङ्गं वादयेत्यत्र कथं समाहारस्यान्वयः, अपेक्षाबुद्धिविशेषरूपस्य तस्य वादनासंभवादिति वाच्यम्। परंपरासंबन्धेन तदन्वयात्। एवं

समाहारद्वन्द्व–प्रथम को कह चुके है कि उसमें लक्षणा नहीं होती है––) और समाहारद्वन्द्व में समाहार का भी अनुभव ( शाब्दबोध ) होता है–अर्थात् समाहार का भी शाब्दबोध में भान होता है–ऐसा यदि कहते हो तब "अहिनकुलम्" यहाँ परपद ( नकुलपद ) की अहिनकुल-समाहार में लक्षणा करके पूर्वपद ( अहिपद ) को 'नकुलपदं अहिनकुलसमाहारं बोधयतु' इस तात्पर्य का ग्राहक बना देना।

प्रश्न—"भेरीमृदङ्गं वादय" इत्यादिस्थल में समाहार का वादन में अन्वय कैसे होगा–क्योंकि अपेक्षाबुद्धिविशेषविषयत्वरूप समाहार का वादन असंभव है–[ अभिप्राय यह है कि 'भेरी च मृदङ्गश्च एतयोः समाहारः इति भेरीमृदङ्गम्' यहाँ पर मृदङ्गपद की भेरी-मृदङ्ग समाहार में लक्षणा है–भेरीपदं भेरीमृदङ्ग समाहारं बोधयतु वक्ता के इस तात्पर्य का ग्राहक है–लक्षणा द्वारा यह वाक्यार्थ सम्पन्न हुवा कि 'भेरीमृदङ्ग समाहारं वादय' सो यहां समाहार का वादन में अन्वय कैसे हुवा हुवा––क्योंकि समाहार प्रकृत में भेरीमृदङ्ग-गतद्वित्वरूप है––और वह द्वित्व अपेक्षाबुद्धिविशेषविषयत्वरूप है–अतः अपेक्षाबुद्धिविशेषविषय-त्वरूप द्वित्व का वादन में अन्वय कैसे होगा–वादन तो भेरी--और मृदङ्ग का होगा–इसलिये वादन में समाहार का अन्वय असंभव होने के कारण समाहार में लक्षणा व्यर्थ है–यह पूर्व-पक्षी का आशय है ]

उत्तर–-यह ठीक नहीं–स्वाश्रयवृत्तित्वरूप परम्परासम्बन्ध से अपेक्षाबुद्धिविशेषविषयत्व रूप समाहार का वादन में अन्वय हो जावेगा–( क्योंकि स्वपद से समाहार–उसका आश्रय भेरी मृदङ्ग–-उसमें वृत्ति है वादन–स्वाश्रयवृत्तित्व सम्बन्ध से समाहार का वादन में अन्वय

---

द्वन्द्वः समास इत्यर्थः। पदार्थयोर्भेदाभावादिति भावः। तत्र। नीलोत्पलमिति-वाक्ये। इदन्त्ववधेयम्। एवं रीत्यानिर्वाहेऽपि प्रमाणप्रमेयेत्यादिगौतमसूत्रेऽगतिरेव, तत्र द्वन्द्वानुरोधेन चार्थे पदार्थतावच्छेदकभेदे इति व्याख्येयम्। न च घटावित्यादौ पदार्थतावच्छेदकभेदाभावात्सरूपैकशेषानुपपत्तिः, तस्य द्वन्द्वापवाद-कत्वात् इति सकृदुच्चरितमित्यादिनियमाभावेन एकघटादिपदादेव नानाघटोप-स्थिति-नानाघटादौद्वित्वान्वयसंभवादुक्तसरूपैकशेषस्याभावात् सरूपैकशेषविधेस्तु हरी इत्यादौ सार्थक्यादिति।

समाहारोऽप्यनुभूयते इति। अहिनकुलमित्यादौ अहिनकुलयोः समाहार इति प्रतीतेरनुभवसिद्धत्वादित्यर्थः। समाहारस्यैकत्वादेकवचनम्, अनुशासनंतु अल्पाद्विगतसंख्याधीव्यवच्छेदाय। वादनासंभवात्। वादनकर्मत्वासंभवात्।

पञ्चमूलीत्यादावपि। परे तु अहिनकुलमित्यादौ अहिर्नकुलश्च बुध्यते प्रत्येक-मेकत्वान्वयः। समाहारसंज्ञा चयत्रैकत्वं नपुंसकत्वं च द्वन्द्वश्च प्राणितूर्येत्यादि-सूत्रेणोक्तं तत्रैव। अन्यत्रैकवचनमसाध्वित्याहुः। पितरौ श्वशुरौ इत्यादौ पितृपदेजनकदंपत्योर्लक्षणा, श्वशुरपदे स्त्रीजनकदंपत्योर्लक्षणा। एवमन्यत्रापि। घटा इत्यादौ तु न लक्षणा घटत्वेन रूपेण नानाघटोपस्थितिसंभवात्।

कर्मधारयस्थले तु नीलोत्पलमित्यादौ अभेदसंबन्धेन नीलपदार्थो उत्पलपदार्थे प्रकारः। तत्र च न लक्षणा अतएव निषादस्थपतिं याजये-

होना उचित ही है–अतः समाहार में लक्षणा हो सकती है ) ऐसे ही पञ्चमूली यहाँ पर भी मूल पद की पञ्चमूलसमाहार में लक्षणा–पञ्चपद तात्पर्यग्राहक। नवीन नैयायिकों का ऐसा कहना है कि "अहिनकुलम्" यहाँपर अहि-तथा नकुल दोनों का बोध होता है–( किन्तु समा हार का बोध नहीं होता है ) और एक वचन से बोधित एकत्व संख्या का अहि–तथा नकुल प्रत्येक के साथ अन्वय है, और "द्वन्द्वश्चप्राणितूर्य सेनाङ्गानाम" इस सूत्र से जहाँ एकत्व तथा नपुंसकत्व बोधित हो–वहीं समाहार संज्ञा होती है–और अन्यत्र ( समाहारातिरिक्त इतरेतर-द्वन्द्वस्थल में ) एक वचन असाधु है। एवं 'पितरौ' 'श्वशुरौ' यहाँ क्रमशः पितृपद की पुरुष के जनक जो पुरुष के माता-पिता उन दोनों में लक्षणा है–और श्वशुरपद की स्त्री के जनक जो स्त्री के माता पिता–उन दोनों में लक्षणा है। ऐसे ही अन्यत्र भी समझना। 'घटाः' यहाँ पर लक्षणा नहीं है क्योंकि घटत्वरूप से नानाघट की उपस्थिति हो जायेगी–( अतः घट-पद की नानाघट में लक्षणा मानने की कोई आवश्यता नहीं है ) नीलञ्च तदुत्पलञ्चेति नीलोत्पलम्' यहाँ कर्मधारयस्थल में अभेद ( तादात्म्य ) सम्बन्ध से नीलपदार्थ उत्पलपदार्थ में

---

विलक्षणशब्दानुकूल "अभिघाताख्य" संयोगावच्छिन्नक्रियायावादनपदार्थतया तादृश-संयोगरूपकर्मत्वस्य समाहारेऽसंभवादिति भावः।

परंपरासंबन्धेनेति। स्वाश्रयवृत्तित्वसंबन्धेनेत्यर्थः। तदन्वयात्। समाहारे वादनकर्मत्वान्वयात्। एवमिति। पञ्चानां मूलानां समाहारः पञ्चमूली। अत्रापि मूलपदस्य पञ्चमूलसमाहारे लक्षणा पञ्चपदं तात्पर्यग्राहकमिति भावः। नव्यमतमाह परेत्विति। बुध्यते इति। न तु समाहारोपीति शेषः नन्वेवं धवखदिरमित्यादि-प्रयोगोपि स्यात्, प्रत्येकमेकत्वसत्वादित्यत आह। समाहारसंज्ञाचेति। तत्रैवेति। तथाचानुशासनविषय एव नपुंसकलिङ्गैकवचने, अन्यद्वन्द्वे तु नैकवचनमिति नोक्तापत्तिरिति भावः।

अत्र नानाप्रकृत्यर्थः, एवं च उद्देश्यतावच्छेदकसमानाधिकरणसंख्याबोधकत्व-व्युत्पत्तिभंगः, प्रत्येकमेकत्वस्य प्रकृत्यर्थतावच्छेदकसकलाऽसमानाधिकरणत्वादित्य-स्वरस आहुरित्यनेनसूचितः। पितराविति। जनकदंपत्योर्बोधतात्पर्येणोच्चरित पितराविति वाक्ये इत्यर्थः। यथाश्रुते दत्तकस्य पितृद्वयसंभवेन सरूपैकशेषत्वप्राप्त्या जनकदम्पत्यो लक्षणेति मूलग्रन्थविरोधापत्तेः। अत्र माता च पिता च पितरौ इति

दित्यत्र न तत्पुरुषोलक्षणापत्तेः, किन्तु कर्मधारयोलक्षणाभावात्। न च निषादस्य सङ्करजातीयत्वेन वेदानधिकाराद्याजनाऽसंभव इति वाच्यम्। निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनात्। लाघवेन मुख्यार्थस्यान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवस्यादोषत्वादिति।

प्रकार ( विशेषण ) है—अतः कर्मधारय में लक्षणा नहीं है। इसी लिये "निषादस्थपतिं याजयेत्" यहाँ पर "निषादानांस्थपतिः" यह तत्पुरुष समास नहीं किया जाता है—क्योंकि लक्षणा की आपत्ति लग जायेगी—किन्तु 'निषादश्चासौ स्थपतिश्च' इत्याकारक कर्मधारय ही मानना उचित है—क्योंकि लक्षणा नहीं माननी पड़ती है।

प्रश्न—निषाद नाम है वर्णसंस्कार का—और स्थपति नाम है स्वामी का—सो इस वाक्य में कर्मधारय मानने से निषादरूप स्थपति का बोध होता है - परन्तु उसका प्रकृत में उपयोग नहीं—क्योंकि निषादनामक संकरजाति विशेषको "स्त्री शूद्रौ नाधीयाताम्" इस वेद वचन के अनुसार वेदाध्ययन का अधिकार नहीं—"शूद्रवद् वर्णसंकराः" इस निर्णयसिन्धुकार वचन से वर्णसंकर—तथा शूद्र को वेदाध्ययन निषिद्ध है। वेदानधिकार होने से याजन भी निषादरूप यजमान को संभव नहीं है ( अतः 'निषादानां स्थपतिः' अर्थात् निषादों के स्वामी किसी ब्राह्मण या क्षत्रिय को मान कर—उसको याजन का संभव होने के नाते 'निषादस्थपतिं याजयेत्' यह वाक्य सार्थक हो सकता है—)

उत्तर—यह कथन ठीक नहीं है—क्योंकि निषाद को ( विद्याप्रयुक्ति ) वेदाध्ययनाधिकार की कल्पना ( तत एव ) याजनानुपपत्ति से कर लेनी चाहिये। अर्थात् वेदाध्ययन के बिना याजन अनुपपन्न हो रहा है।

प्रश्न—कर्मधारयपक्ष में याजन की कल्पना उसके लिये फिर वेदाध्ययन की कल्पना इसी में गौरव है—अतः 'निषादानां स्थपतिः' यह तत्पुरुष ही क्यों न मान लिया जाय।

उत्तर—कर्मधारय में लक्षणा के न मानने प्रयुक्त लाघव होने से निषादात्मकस्थपति रूप मुख्यार्थ के साथ याजनात्मक मुख्य अर्थ का अन्वय करने में निषाद में वेदाध्ययन के बिना याजन की अनुपपत्ति हो रही है ( तदनुपपत्त्या ) निषाद में उस याजन के अन्वय की अनुपपत्ति से वेदाध्ययन की जो कल्पना है—उसमें गौरव अवश्य है—परन्तु वह गौरव फलमुख

---

विरूपैकशेषो बोध्यः। श्वशुराविति। स्त्रीजनकदम्पत्योर्बोधतात्पर्येणोच्चरितश्वशुराविति वाक्ये इत्यर्थः। यथाश्रुते द्विभार्यस्य श्वशुरद्वयसंभवेन सरूपैकशेषत्वप्राप्त्या स्त्रीजनकदम्पत्यो र्लक्षणेति मूलग्रन्थविरोधापत्तेः। अत्र श्वश्रूश्च श्वशुरश्च श्वशुराविति विरूपैकशेषो बोध्यः। एवमन्यत्रापीति। ब्राह्मणी च ब्राह्मणश्च ब्राह्मणौ शिवा च शिवश्चेति शिवौ इत्यादयो बोध्याः। अतएव। कर्मधारयेलक्षणाऽभावादेव। निषादः-संव्यवहार्यसंकरजातिविशेषः। स्थपती राजा। न तत्पुरुषः। स्वीक्रियते इति शेषः। निषादानां स्थपतिरिति तत्पुरुषो न स्वीक्रियते इति भावः। इदमुपलक्षणम्, न बहुव्रीहिरित्यपि- बोध्यम्। लक्षणापत्तेरिति। निषादसंबन्धिनि लक्षणापत्तेरित्यर्थः। कर्मधारय इति।

उपकुम्भम्, अर्धपिप्पलीत्यादौ परपदे तत्संबन्धिनि लक्षणा पूर्वपदार्थप्रधानतया चान्वयबोध इति । इत्थं च समासे न क्वापि शक्तिः पदशक्त्यैव निर्वाहादिति ।

गौरव होने के नाते दोष नहीं है। [ अर्थात् तत्पुरुष पक्ष में लक्षणाङ्गीकार प्रयुक्त गौरव की अपेक्षा कर्मधारयपक्ष में निषाद में याजनान्वयानुपपत्ति प्रयुक्त वेदाध्ययन की कल्पना में फलमुखगौरव होने से दोष नहीं है-अतः 'निषादश्चासौ स्थपतिश्च' यह कर्मधारय ही उचित है ] 'कुम्भस्य समीपम् उपकुम्भम्' यहाँ पर परपद जो कुम्भपद-उसकी ( तत्सम्बन्धिनि ) कुम्भ सम्बन्धी में लक्षणा करके पूर्वपद जो ( उपपद ) तदर्थ ( समीप ) को प्रधान बनाकर अभेदेन अन्वय कर देना "कुम्भसम्बन्ध्यभिन्नं समीपम" इसी प्रकार 'अर्द्धपिप्पली' यहाँ पर भी परपद ( पिप्पलीपद ) की पिप्पली सम्बन्धी में लक्षणा करके पूर्वपदार्थ ( अर्द्ध ) विशेष्यक अभेदान्वयबोध कर लेना चाहिये "पिप्पलीसम्बन्ध्यभिन्नमर्द्धम्" । इस प्रकार वैयाकरणों के अभिमत समास में कहीं भी शक्ति नहीं है पदशक्ति से ही निर्वाह हो जायेगा ।

---

स्वीक्रियते इति शेषः । **वेदानधिकारादिति ।** स्त्रीशूद्रौ वेदं नाधीयातामिति वेदे शूद्रपदस्यत्रैवर्णिकेतरपरतया मन्त्रपाठेऽनधिकारादित्यर्थः । याजना । तत्तन्मन्त्रपाठानुकूलव्यापारः । विधिर्मन्त्रपाठः, स एव विद्याप्रयुक्तिः । **तत एव ।** उक्तविधिवाक्यादेव । ननु बहुव्रीहितत्पुरुषयोर्ब्राह्मणादिवर्णत्रयपरतया नापूर्वविद्याप्रयुक्तिकल्पनागौरवम्, कर्मधारये तु तदस्तीति लक्षणाया अकल्पनलाघवमकिंचित्करम् कर्मधारयस्वीकारे हेत्वन्तरमाह । लाघवेनेति । लक्षणाया अकल्पनलाघवेनेत्यर्थः **मुख्यार्थस्यान्वये ।** शक्यार्थान्वयबोधे । जाते सतीति शेषः । **तदनुपपत्त्या** मुख्यार्थान्वयानुपपत्तिज्ञानेन । **कल्पनायाः ।** अपूर्वविद्याप्रयुक्तिकल्पनायाः । फलं-लक्षणाया अकल्पनं—**तन्मुखं** तत्प्रयोज्यं गौरवं—गौरवज्ञानमित्यर्थः ।

**उपकुम्भं अर्धपिप्पलीत्यादाविति ।** कुम्भस्य समीपमुपकुम्भमित्यव्ययीभावे पिप्पल्याअर्धं अर्धपिप्पलीति तत्पुरुषे चेत्यर्थः । **परपदे**—कुम्भपदे पिप्पलीपदे चेत्यर्थः । **तत्संबन्धिनि ।** कुंभसंबन्धिनि—पिप्पलीसंबन्धिनि चेत्यर्थः । लक्षणेति निरूढलक्षणेत्यर्थः । **पूर्वपदार्थप्रधानतयेति ।** उपपदार्थ अर्धपदार्थविशेष्यतयेत्यर्थः । **अन्वयबोध इति ।** तथा च कुंभसंबन्ध्यभिन्नं समीपं, पिप्पलीसम्बन्ध्यभिन्नमर्धमिति बोध इत्यर्थः । अत्रेदं बोध्यम् । परपदे तत्संबन्धिनि लक्षणेति न सम्यक् । तथासति विभक्त्यर्थसंख्या कर्मत्वादेरुत्तरपदार्थसंबन्धिन्येवान्वयापत्तेः । पूर्वपदार्थेऽन्वयानुपपत्तेश्च अत उत्तरपदस्यैव विशिष्टार्थे लक्षणा पूर्वपदन्तु तात्पर्यग्राहकम् । नचैवं पूर्वपदार्थस्य प्रधानत्वानुपपत्तिः । यत्र हि विशेष्यः वस्तुगत्या पूर्वपदार्थः, न तु पूर्वपदजन्योपस्थितिविशेष्यस्तत्रैव पूर्वपदार्थप्रधानत्वमिति ध्येयम् । इत्थंचेति ।

वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥ ८४ ॥

तात्पर्यं निर्वक्ति । वक्तुरिच्छेति । यदि तात्पर्यज्ञानं कारणं न स्यात्तदा सैन्धवमानयेत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोध इति न स्यात् । न च तात्पर्यग्राहकाणां प्रकरणादिनां शाब्दबोधे कारणत्वमस्तु इति वाच्यम् । तेषामननुगमात् । तात्पर्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्य-

तात्पर्य का निरूपण करते हैं—वक्तुरिच्छेति । यदि तात्पर्यज्ञान को शाब्दबोध में कारण नहीं मानेंगे तब 'सैन्धवमानय' यह कहने पर सैन्धवपद से कहीं ( यात्राप्रसङ्ग में ) अश्व का बोध होता है कहीं ( भोजनप्रसङ्ग में ) लवण का बोध होता है—यह नहीं हो सकेगा ।

प्रश्न—वक्ता के तात्पर्य के निश्चायक जो प्रकरणादि हैं उन्हें ही शाब्दबोध में कारण मान लिया जाय तात्पर्यज्ञान को कारण क्यों माना जाता है ।

उत्तर—प्रकरणादिकों का एकरूप से अनुगम होना कठिन है ।

प्रश्न—प्रकरणादि तात्पर्य के जनक हैं अतः तात्पर्य ज्ञान जनकत्वेन अनुगम करके प्रकरणादि को शाब्दबोध के प्रति कारण मान लिया जाय ।

उत्तर—तब तो तात्पर्यज्ञान को ही कारण मानने में लाघव है । इस प्रकार वेदस्थलीय वेदवाक्यों में भी ईश्वर के तात्पर्य का निश्चय होने से उस तात्पर्य के निश्चय के लिये ईश्वर की कल्पना की जाती है ।

प्रश्न—वेदवाक्यों में अध्यापक ( गुरु ) ही का तात्पर्यज्ञान शाब्दबोध में कारण मान लिया जाय ।

उत्तर—सृष्टि के आदि में अध्यापक कोई है ही नहीं—अतः ईश्वर का तात्पर्यज्ञान ही कारण मानना उचित है ।

---

। स्यादिति । इति नियमो नस्यादित्यर्थः । अश्वलवणयोः सैन्धवपदार्थत्वस्याऽऽ
ाङ्क्षाज्ञानादीनां च शाब्दहेतूनां सर्वेषां सत्वादिति भावः । तथा च तादृशतात्पर्य-
ानस्य हेतुत्वानंगीकारे अश्वलवणबोधोपयिकसामग्र्या अविशिष्टत्वात्सर्वदाश्वलवण
ाधः स्यात्, एकसामग्र्या अपरप्रतिबन्धकत्वे तादृशवाक्याच्छाब्दबोध एव न
ादतस्तात्पर्यज्ञानस्य हेतुत्वमावश्यकमिति भावः ।

कारणत्वमस्त्विति । तथा च सैन्धवमानयेत्यादौ सैन्धवपदजन्यलवणा-
न्वयबुद्धौ तात्पर्यज्ञानजनकतया ऽभिमततत्प्रकरणज्ञानत्वेन हेतुत्वमित्यर्थः। तद्धेतोरेव
सङ्गौ किमन्तर्गड्डुनेति न्यायादिति भावः। तेषां । प्रकरणादीनां । अननुगमादिति ।
ां च परस्परजन्यशाब्दबोधेऽव्यभिचारेण हेतुत्वबाधेन तादृशान्यायोनात्रेति भावः ।
' । प्रकरणादीनां । इत्थं च । तात्पर्यज्ञानस्य हेतुत्वे च । सर्गादाविति ।
स्यानंगीकर्तुरिति शेषः । सर्गः-प्रलयोत्तरकालः ।

ज्ञानमेव लाघवात्कारणमस्तु । इत्थं च वेदस्थलेपि तात्पर्यज्ञानार्थमीश्वरः कल्प्यते । न च तत्राध्यापकतात्पर्यज्ञानं कारणमिति वाच्यम् । सर्गादावध्यापकाभावात् । न च प्रलय एव नास्ति कुतः सर्गादिरिति वाच्यम् । प्रलयस्यागमेषु प्रतिपाद्यत्वात् । इत्थं च शुकवाक्येपीश्वरीयतात्पर्यज्ञानं कारणम् । विसंवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्यज्ञानं कारणं वाच्यम् । अन्ये तु नानार्थादौ क्वचिदेव तात्पर्यज्ञानं कारणम्, तथा च शुकवाक्ये विनैव तात्पर्यज्ञानं शाब्दबोधः । वेदे तु अनादिमीमांसापरिशोधिततर्करर्थावधारणमित्याहुः । ८४

इति विश्वनाथपञ्चाननभट्टाचार्यविरचितायांसिद्धान्तमुक्तावल्यांशब्दखण्डं समाप्तम् ।

प्रश्न—प्रलय ही जब कि नहीं है तो सृष्टि कहाँ से आई—क्योंकि प्रलय के बाद ही तो सृष्टि होती है।

उत्तर—प्रलय का आगमों में प्रतिपादन किया है—"नाहो न रात्रिर्न नभो न भूमि र्नासीत्तमो ज्योतिरभून्न चान्यत्" इत्यादि—अर्थात् एक प्रकाशरूप ज्योति· चेतन के अतिरिक्त दिन-रात्रि-आकाश-पृथिवी इत्यादि कुछ भी नहीं था। इस प्रकार शुक ( तोते ) के वाक्य से होनेवाले शाब्दबोध में भी ईश्वर का ही तात्पर्यज्ञान कारण है। और गालिप्रदानात्मक अट्टपट्टवाक्यरूप जो तोते से उच्चरित विसंवादि शब्द–उनसे जायमान शाब्दबोध में शिक्षयिता पुरुष का ही तात्पर्यज्ञान कारण है। अन्य विद्वानों का ऐसा मत है कि सर्वत्रशाब्दबोध में तात्पर्यज्ञान कारण नहीं है अपितु जहाँ एक शब्द के नाना अर्थ होते हैं–उसी स्थल में तात्पर्यज्ञान कारण है–इसलिये शुकवाक्य में तात्पर्यज्ञान के विना ही शाब्दबोध होता है। वेद में गौतम-जैमिनि आदि महर्षियों के अबाधितनिश्चयसहकृततर्कों द्वारा ही अर्थ का निश्चय होता है।

---

तदध्यापकाभावेन तत्प्रयोज्याध्यापकविरहादिति भावः। जन्यद्रव्यानधिकरणकालः खण्डप्रलयः। आगमेष्विति। यदा स जागर्ति तदा सृजति यदा निद्राति तदा सर्वं निमीलति इत्यादिवेदेष्वित्यर्थः। जागर्ति—सिसृक्षाश्रयः। सृजति–भोगभाजं करोति। निद्राति–जिहीर्षाश्रयः। सर्वं आत्मस्वरूपं निमीलति–वृत्तिरोधभाग्भवति। सुषुप्तिकाले कस्यचिददृष्टसहकारिरोधाद्यथा भोगनिवृत्तिः, तथा सर्वात्मनामेकवृत्तिरोधाद् भोगनिवृत्तिरिति। इत्थं च। तात्पर्यधीहेतुत्वे च। शुकवाक्ये इति। शुकतात्पर्याभावेपीति शेषः। ईश्वरीयेति। इदं तात्पर्यान्वयि। एवमग्रेपि नन्वेवं विसंवादिनि शुकवाक्येऽइच्छानुपपत्तिः, ईश्वरे विसंवादीच्छाऽभावात्। भ्रमे यादृशविषयता भ्रमविषयकेपि तादृशी इत्यभिमानादित्यत आह। विसंवादीति। भ्रमजनकेत्यर्थः। तु शब्दोऽप्यर्थे। एवकारेणेश्वरव्यवच्छेदः।

पूर्वमनुभवस्मरणभेदाद् बुद्धेर्द्वैविध्यमुक्तम्, तत्रानुभवप्रकारा दर्शिताः स्मरणन्तु सुगमतया न दर्शितम्, तत्रहि पूर्वानुभवः कारणम्। अत्र केचित्। अनुभवत्वेन न कारणत्वं किन्तु ज्ञानत्वेनैव, अन्यथा स्मरणोत्तरं स्मरणं न स्यात्, समानप्रकारकस्मरणेन पूर्वसंस्कारस्य विनष्टत्वात्। मन्मते तु तेनैव

अथ स्मृतिप्रक्रिया। पूर्व में (प्रत्यक्षखण्ड में) "बुद्धिस्तुद्विविधामता" इस ग्रन्थ से बुद्धि को अनुभवस्मरण के भेद से दो प्रकार की बतला चुके हैं। उसमें अनुभव-प्रत्यक्ष-अनुमिति-उपमिति-शाब्द-भेद से चार प्रकार का है यह दिखला चुके हैं-'अनुभूतिश्चतुर्विधा' इस ग्रन्थ से। स्मरण को सुगम होने के नाते नहीं दिखलाये हैं स्मृति में पूर्व का अनुभव कारण होता है-अर्थात् पूर्व में जिस वस्तु का अनुभव होता है उसी का स्मरण होता है-इस विषय में किसी का ऐसा मत है कि स्मरण के प्रति अनुभव को कारणता अनुभवत्वरूप से नहीं है-अपितु ज्ञानत्वरूप से ही है। अन्यथा यदि अनुभव को ज्ञानत्वेनरूपेण कारणता नहीं मानेंगे तो (सकृत्) एक बार अनुभूत वस्तु का स्मरण के बाद फिर स्मरण नहीं होगा-क्योंकि ऐसा नियम है समानप्रकारकस्मरण से पूर्वसंस्कार का नाश हो जाता है-अतः स्मरणानन्तर स्मरण (अनुभवत्वेनरूपेण कारणतावादी के मत में) नहीं होना चाहिये-अथच होता

---

तत्रोक्तक्रमेण विसंवादीच्छाविरहादित्यभिमानः। इदमापाततः। भ्रमे यादृशी विषयता भ्रमविषयके तादृशविषयतानैयत्याभावात्। अन्यथा सर्वविषयकेश्वरज्ञानस्य भ्रमविषयकत्वेन भ्रमत्वापत्तेः। तथा च तत्रापीश्वरतात्पर्यं न क्षतिः क्वचिदित्यस्यविवरणं- **नानार्थादाविति**। आदिना श्लिष्टपरिग्रहः। **कारणमिति** बोधनियमाय तद्धीहेतुत्वकल्पनादिति भावः। ननु नानार्थकवेदे अर्थविशेषे तात्पर्यावधारणमेवकथमत आह। **वेदेष्विति**। **अनादिमीमांसा**। लाघवज्ञानादिविचारः **तत्परिशोधितेति**। तत्सहकृतेत्यर्थः। तर्कैः। पदैः। संप्रदायसिद्धलाघवादियुक्तिभिरित्यर्थः।

श्रीज्वालाप्रसादकृते तुरीये च सविस्तरे समाप्तिमगमच्चैव मुक्तावलिविलासिनी

**पूर्वं**। आत्मनिरूपणावसरे। **तत्र**। अनुभवस्मरणयोर्मध्ये। **तत्रहि** स्मरणे हि। **पूर्वानुभव** इति। स्वजन्यसंस्कारद्वारा इति शेषः। **अन्यथा**। अनुभवत्वेन कारणत्वे। **स्मरणोत्तरमिति**। स्मृतिनाशक्षणे इत्यर्थः। तेन विनश्यदवस्थसंस्कारेण स्मृतिर्द्वितीयक्षणे स्मृत्युत्पत्तावपि न क्षतिः। **समानाकारेति** अन्यूनाऽनतिरिक्तविषयकेत्यर्थः। **स्मरणेन**। उत्तरस्मरणेन। **मन्मते तु**। ज्ञानत्वेन कारणत्वे तु। **तेनैवेति**। पूर्वेणैवेत्यर्थः। **समूहालंबनोत्तरमिति**। घटपटमठा इतिसमूहालंबनोत्तरमित्यर्थः **फलस्य**। प्रत्येकविषयकक्रमिकस्मरणरूपस्य।

स्मरणेन संस्कारान्तरद्वारा स्मरणान्तरं जन्यते इत्याहुः। तन्न। यत्र समूहालंबनोत्तरं घटपटादीनां क्रमेण स्मरणमजनिष्ट सकलविषयकस्मरणं तु नाभूत् तत्र फलस्य संस्कारनाशकत्वाभावात्कालस्य रोगस्य चरमफलस्य वा संस्कारनाशकत्वं वाच्यम्, तथा च न क्रमिकस्मरणानुपपत्तिः। न च पुनः पुनः स्मरणात् दृढतरसंस्कारानुपपत्तिरिति वाच्यम्। झटित्युद्बोधकसम-

है। और मेरे ( ज्ञानत्वेन कारणतावादी के ) मत में तो ऐसा है कि ज्ञानत्व जैसे अनुभव में है-ऐसे ही स्मृति में भी है-अतः ज्ञानत्वरूप से वही प्रथम स्मरण संस्कारान्तर को उत्पन्न करके उसके द्वारा दूसरे स्मरण को उत्पन्न कर देता है। ( ऐसे ही फिर उस दूसरे स्मरण में भी ज्ञानत्व है-सो वह भी ज्ञानत्वरूप से संस्कारान्तर को उत्पन्न करके उसके द्वारा तृतीय स्मरण को उत्पन्न कर देता है-अतः स्मरण के अनन्तर स्मरण की अनुपपत्ति हमारे मत में नहीं है ) ( तन्न ) यह ठीक नहीं है-क्योंकि जहाँ घट-पट-मठ इन तीनों के साथ एक काल में चक्षुःसंयोग हुआ-वहाँ "घट-पट-मठाः" इत्याकारक समूहालम्बन अनुभव हुआ-उसके बाद ( क्रमिकसंस्कार द्वारा ) क्रमशः ( अर्थात् पहिले घट का-फिर पट का-फिर मठ का ) स्मरण हुआ—परन्तु सकल घट-पट आदि विषयों का स्मरण एक काल में नहीं हुआ-वहाँ घट के

---

संस्कारनाशकत्वाभावादिति। समानाकारत्वाभावादितिभावः। तथाचाऽत्रैव व्यभिचारेणानुगतरूपेण फलस्य नाशकत्वाऽसंभवात्तत्तद्व्यक्तित्वेनैव तद्वाच्यमिति ध्येयम्। कालस्य रोगस्य वेति। अन्यथा उक्तसमूहालंबनसंस्कारस्यानाशप्रसंगादिति भावः। चरमफलस्य वेति। एवं च स्मृतावनुभवत्वेनैव हेतुत्वमिति भावः।

स्मृतौ चरमत्वं च स्वप्रतियोगिवृत्तिसमानविषयिताकत्व-कालिकविशेषणता, सामानाधिकरण्यैतत्त्रितयसंबन्धेन प्रागभाववदन्यत्वम्। चरमपटस्मृतावप्रसंगः, उक्तद्वितयसंबन्धेनपटस्मृतिप्रागभाववत्वेन तदन्यत्वाभावादतः प्रथमसंबन्धनिवेशः। द्वितीयसंबन्धानुपादाने चरमघटस्मृतेरपि जनकीभूतप्रागभाववत्त्वस्य द्वितयसंबन्धेन सत्वादप्रसंगापत्तेः। तृतीयसंबन्धानुपादाने चरमस्मृतेरपि पुरुषान्तरीयसमानाकारकस्मृतिप्रागभाववत्वेन तद्दोषतादवस्थ्यादिति। यद्वा घटसंस्कारनाशकतावच्छेदकतया घटचरमस्मृतिमात्रे चरमत्वं जातिविशेषः। एवं पटादिचरमस्मृतावपीति बोध्यम् इत्थं चानुभवजन्यसंस्कारस्य सकृदनुभवस्थलेपि सत्वेन न स्मृत्युत्तर स्मृत्यनुपपत्तिप्रसंगः। लाघवंचानुभवत्वेनैव संस्कारं प्रति हेतुत्वकल्पनात् स्मृतितः संस्कारकल्पनानन्त्यम्, न वा तन्नाशादिकल्पना। तथा च घटत्वप्रकारकघटविशेष्यकसंस्कार नाशंप्रति घटत्वप्रकारक घटविशेष्यक चरमस्मृतिः कारणम् कार्यतावच्छेदकसंबन्धश्च प्रतियोगित्वं। कारणतावच्छेदकसंबन्धश्च स्वाव्यवहितपूर्वत्वविघटत्वप्रकारकघटविशेष्यकसंस्कारत्वम्, सामानाधिकरण्य च। तेन पुरुषान्तरीयचरमस्मृत्या पुरुषान्तरीयानुभवजन्यसंस्कारस्य न नाशः। तथाचेति। चरमस्मृतेर्नाशकत्वे

धानस्य दार्ढ्यपदार्थत्वात् । न च विनिगमनाविरहादेव ज्ञानत्वेनापि तनकत्वं स्यादिति वाच्यम् । विशेषधर्मेण व्यभिचाराज्ञाने सामान्यधर्मेणा-न्यथासिद्धत्वात् । कथमन्यथा दण्डस्य भ्रमिद्वारा द्रव्यत्वेन रूपेण न कारण-

स्मरणरूप फल को संस्कार का नाशक नहीं कह सकते । क्योंकि घट का स्मरणात्मक फल यदि समूहालम्बन संस्कार का माना जावेगा तो पट-मठ का अगाड़ी स्मरण कैसे होगा । अतः काल-रोग-चरम ( अन्तिम ) स्मरणरूप फल को ही संस्कार का नाशक कहना चाहिये-इसलिये क्रमिक स्मरण की अनुपपत्ति नहीं हुई ।

प्रश्न—एक संस्कार से पुनः पुनः स्मरण होने से अर्थात् अनेक स्मरणों की उत्पत्ति होने से तो संस्कार का ह्रास हो जायेगा-तब यह जो प्रवाद है कि अनुभवजन्यसंस्कारोत्तर-स्मरण से दृढ़संस्कार हो जाता है-और दृढ़संस्कारजन्यस्मरण से दृढ़तर संस्कार होते हैं-और दृढ़तरसंस्कारजन्य स्मरण से दृढ़तम संस्कार होते हैं-यहप्रवाद निर्मूल हो जावेगा-क्योंकि पूर्वोक्तरीति से संस्कार का जब कि नाश ही हो जावेगा तो दृढ़दृढ़तरसंस्कारों की अनुपपत्ति हो जावेगी ।

उत्तर—पुनः पुनः स्मरण से संस्कार दृढ़-या दृढ़तर-या दृढ़तम नहीं होता है-किन्तु उद्बोधक का झटिति समवधान हो जाना-यही दार्ढ्य पदार्थ है ।

प्रश्न—अनुभव को स्मृति के प्रति अनुभवत्वरूप से ही कारणता है-इसमें कोई विनिगमना ( युक्ति ) तो है नहीं-तब फिर अनुभव को स्मृति के प्रति ज्ञानत्वरूप से ही कारण क्यों न माना जाय ।

---

चेत्यर्थः । **पुनः पुनरिति** । नानेत्यर्थः । दृढत्वं जाति विशेषः । तदवच्छिन्नं प्रति नानास्मृतित्वेन हेतुता, बहूनां स्मृतीनामेकदाऽनवस्थानान्न हेतुत्वम् , तत्र हि एकस्याः साक्षात्पूर्वासां संस्कारस्य हेतुत्वम् । तच्च संस्कारस्यैक्ये न संभवति । अत एव भावनायाःस्फुटतरभावनाजनकत्वं मेनिरे सिद्धान्तिनः । दृढत्वं न जातिर्नैवा तदव-च्छिन्नं प्रति नानास्मृतिहेतुत्वमित्याशयेनाह । **झटित्युद्बोधकेति** । **दार्ढ्यपदा-र्थत्वादिति** । तथा च पुनः पुनः स्मरणान्न दृढतरनामकसंस्कारान्तरोत्पत्तिः, किन्तु विद्यमानस्यैव संस्कारस्य पुनः पुनः स्मरणेन झटित्युद्बोधकसमवधानं जायते उद्बुद्धाच्च तस्मात्स्मरणान्तरमिति भावः । **विशेषधर्मेण** । व्याप्यधर्मेण । **व्यभिचाराज्ञाने** इति अनुभवत्वावच्छिन्ने स्मृतिसन्निष्ठभेदप्रतियोगितावच्छेदक-त्वाज्ञाने इत्यर्थः । **सामान्यधर्मेण** । व्यापकधर्मेण । अन्यथासिद्धत्वादिति । तथा च ज्ञानत्वावच्छिन्नो ऽन्यथासिद्ध इति भावः । **कथमिति** । न कारणत्वमित्यने-नान्वयः । **अन्यथा** । सामान्यधर्मावच्छिन्नस्याऽन्यथासिद्धत्वे **संशयादिति** । आन्तरालिकस्मृतिः संस्कारनाशिका न वेति संशयादित्यर्थः । **व्यभिचारसंशय** इति । अनुभवत्वेन हेतुत्वे व्यभिचारसंशय इत्यर्थः । अनुभवत्वावच्छिन्नःस्मृति-सन्निष्ठभेदप्रतियोगितावच्छेदको न वेति संशय इति भावः । **व्यभिचारसंशया-**

त्वम् । नचान्तरालिकस्मरणानां संस्कारनाशकत्वसंशयाद्व्यभिचारसंशय इति वाच्यम् । अनन्तसंस्कारतन्नाशकल्पनापेक्षया चरमस्मरणस्यैव लाघवात्संस्कारनाशकत्वकल्पनेन व्यभिचारसंशयाभावादिति । इति स्मृतिप्रक्रिया ।

उत्तर—यह कथन ठीक नहीं-क्योंकि विशेषधर्म से कारणता स्वीकार करने में यदि व्यभिचारज्ञान ( कोई दोष ) न हो तो सामान्यधर्मेणकारणता अर्थात् सामान्यधर्मावच्छिन्नाकारणता अन्यथासिद्ध हो जाती है । अन्यथा ( इस नियम को यदि नहीं मानोगे तो ) दण्ड की घट के प्रति अभिहारा दण्डत्वरूप विशेषधर्म से ही कारणता मानी जाती है-द्रव्यत्वरूप सामान्यधर्म से घट के प्रति दण्ड को कारणत्व क्यों नहीं है ।

प्रश्न—आन्तरालिक जो स्मरण हैं अर्थात् अन्तिमस्मरण से पहिले ( बीच में ) होने वाले स्मरणों को भी संस्कारनाशकत्व की शंका ( संशय ) हो सकती है-संस्कारनाशकत्व के संशय होने से स्मृतित्वावच्छिन्न के प्रति अनुभवत्वेन कार्यकारणभाव के व्यभिचार का भी सन्देह हो सकता है-तब अनुभवत्वेन कारणता कैसे बनेगी ।

उत्तर—ज्ञानत्वेनरूपेण अनुभव को कारणतावादी के मत में अनन्तसंस्कार और उनके नाशकत्व की कल्पना करने की अपेक्षया चरमस्मरण में ही संस्कारनाशकत्व की कल्पना करने में लाघव है अतः अनुभवत्वेन कारणतावादी नवीन के पक्ष में व्यभिचार संशय नहीं है ।

इति स्मृतिप्रकरणं समाप्तम् ।

---

भावादिति । व्यभिचारसंशयस्य प्रतिबन्धकत्वाभावादित्यर्थः । लाघवज्ञानाभावविशिष्टस्यैव तस्य प्रतिबन्धकत्वादिति भावः ।

आर्हतमते स्मृतिरपि प्रमाणान्तरम् । तदुक्तम्अष्टसाहस्याम्-"स्मृतेरप्रामाण्यकल्पनायामनुमानोत्थानाऽयोगः, संबन्धस्मृतेरप्रमाणत्वात्, तस्या अपि लैङ्गिकत्वेन प्रामाण्ये परापरसंबन्धस्मृतीनामनुमानत्वकल्पनादनवस्थानात् संबन्धस्मृतिमन्तरेणाऽनुमानाऽनुदयात्" इति ।

रत्नाकरावतारिकायां च "इति सिद्धमनुमानस्येव स्मरणस्यापि प्रामाण्यम् । न च तस्याऽप्रामाण्येऽनुमानस्यापि प्रमाण्यमुपपादयितुं शक्यम् । संबन्धस्याऽप्रमाणस्मरणसन्दर्शितस्याऽनुमानानङ्गत्वात संशयितलिङ्गवदिति" सिद्धान्तितम् ।

"तत्र चाऽर्थस्याऽतीतत्वं पूर्वानुभूतत्वं प्रतीयते इत्यतीतविषया स्मृतिः । अत एव न प्रमाणं तस्याः पूर्वानुभूतविषयत्वोपदर्शनेनार्थं निश्चिन्वन्त्या अर्थपरिच्छेदे पूर्वानुभवपारतन्त्र्यात् । अनुमानज्ञानं तूत्पत्तौ परापेक्षं स्वविषये स्वतन्त्रमेवेति कन्दलीकृतः ।

पूर्वविज्ञानविषयं विज्ञानं स्मृतिरिष्यते<br>
पूर्वज्ञानाद् विना तस्याः प्रामाण्यं नावगम्यते<br>
तत्र यत्पूर्वविज्ञानं तस्य प्रामाण्यमिष्यते<br>
तदुपस्थानमात्रेण स्मृतेः स्याच्चरितार्थता इति ।

तन्त्रटीकायां गुरवः ।

साक्षात्कारे सुखादीनां करणं मन उच्यते ।
अयौगपद्याद् ज्ञानानां तस्याणुत्वमिहेष्यते ॥ ८५ ॥

इदानीं क्रमप्राप्तं मनोनिरूपयितुमाह । साक्षात्कार इति एतेन मनसि प्रमाणमपि दर्शितम् । तथा हि । सुखादिसाक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वात् चाक्षुषसाक्षात्कारवदित्यनुमानेन मनसः करणत्वसिद्धिः । नचैवं दुःखादिसाक्षात्काराणामपि करणान्तराणि स्युरिति वाच्यम् । लाघवादेकस्यैव सकलसाक्षात्कारकरणतया सिद्धेः । एवं सुखादीनामसमवायिकारण संयोगाश्रयतया मनसः सिद्धिर्बोध्या । तत्र मनसोऽणुत्वे प्रमाणमाह । अयौ·

क्रमप्राप्त मन का निरूपण करते हैं—"साक्षात्कारे" इत्यादिकारिका से–'अहं सुखी' इत्याकारकसुखादिप्रत्यक्ष में मन करण कहा जाता है। ज्ञानों के यौगपद्य ( अर्थात् एक काल में अनेक इन्द्रियजन्य अनेक ज्ञान ) न होने से मन को अणु कहा है–यह कारिकार्थ हुवा। एतेन–मन को सुखादि साक्षात्कार ( प्रत्यक्ष ) के प्रति करणत्व कहने से मन में अनुमान दिखला दिया है तथाहि-सुख आदि का साक्षात्कार=सकरणक ( करणवाला ) है–जन्यसाक्षात्कार होने से–घट आदि के चाक्षुषप्रत्यक्ष की तरह, ( अर्थात् जैसे 'अयं घटः' यह चाक्षुषप्रत्यक्ष चक्षुइन्द्रिय से जायमान होने के नाते इससे चक्षुइन्द्रिय करण होता है–ऐसे ही 'अहं सुखी' इत्यादिजन्यप्रत्यक्षमात्र में मनकरण होता है ) इस अनुमान से मन को करणत्व की सिद्धि हो गयी।

प्रश्न— तब तो इस प्रकार दुःख आदि के प्रत्यक्षों के भी करण अन्य कोई मन सिद्ध हो जायेंगे।

उत्तर— नहीं–लाघवात् एक ही मन को समस्तप्रत्यक्षों का करण माना जाता है। इसी प्रकार सुख आदि का असमवायिकारण जो आत्ममनःसंयोग–तदाश्रयतया मन की सिद्धि जाननी चाहिये–( अर्थात् सुखादि का असमवायिकारण जो आत्ममनः संयोग वह क्वचिदाश्रित है–द्विष्ठ होने से–अतः उस संयोग का आश्रय मन भी है–सो तादृशसंयोगाश्रयतया मन की सिद्धि हो गयी ]

---

न्यायलीलावतीकृतस्तु—"स्मृतिरपि मानान्तरमेव स्वार्थनिश्चयहेतुत्वादित्यु- ...क्रम्य मुनीनामव्यवहारादिति चेन्न । वादिनं प्रति मुनित्वस्यैवाऽसिद्धेरिति तत्कथं ... एव प्रमाणे" इत्यन्तग्रन्थेन स्मृतिकारणीभूतस्य तृतीयप्रमाणत्वमाशंकितवन्तः । ...त्र मानपदं प्रमितिपरम् । समाहितवन्तश्च पूर्वानुभवविषयतयैव वा विषयनियमात् ...च्छावदिति । पूर्वानुभवेन सहैकविषयत्वनियमादित्यर्थः । तथा च स्मृतित्वं न ...मावृत्ति कारणीभूतज्ञानविषयविषयकमात्रवृत्तिजातित्वात् इच्छा... ...चित्तु स्मृतिर्न प्रमितिः विषयसंबन्धे प...

गपद्यादिति। ज्ञानानां चाक्षुषरासनादीनां अयौगपद्यं एककालोत्पत्तिर्नास्तीत्यनुभवसिद्धम्। तत्र नानेन्द्रियाणां सत्यपि विषयसन्निधाने यत्संबन्धादेकेनेन्द्रियेणज्ञानं जन्यते यदसंबन्धाच्च परैर्ज्ञानं नोत्पाद्यते तन्मनसोविभुत्वेचाऽसन्निधानं न संभवतीति न विभुमनः।

न च तदानीमदृष्टविशेषोद्बोधकविलंबादेव तत्ज्ञानविलंब इति वाच्यम्। तथासति चक्षुरादीनामप्यकल्पनापत्तेः। न च दीर्घशष्कुलीभक्षणादौ

मन के अणुत्व में प्रमाण बतलाते हैं-(अयौगपद्यादिति) चाक्षुष-रासन-आदि ज्ञानों की एककालावच्छेदेन उत्पत्ति नहीं होती है—यह अनुभव सिद्ध है वहा चक्षु आदि नाना इन्द्रियों का विषय के साथ सन्निकर्ष होने पर भी जिस इन्द्रिय के साथ मन का सम्बन्ध होगा—उसी एक इन्द्रिय से ज्ञान उत्पन्न होगा—और जिसके साथ मन सम्बन्ध नहीं होगा—उन दूसरी इन्द्रियों से ज्ञान उत्पन्न नहीं होगा—अतः मन को विभु मानने पर इन्द्रियों के साथ यह का मन का असन्निधान नहीं सम्भव हो सकता है—(विभु वस्तु का तो सबके साथ सन्निधान बना रहता है) इससे मन विभु नहीं है।

प्रश्न—मीमांसक कहता है कि नैयायिक ने जो यह कहा है कि जिस इन्द्रिय के साथ मन का संयोग नहीं होता है—उस इन्द्रिय से ज्ञान भी नहीं होता है—इससे मन अणु सिद्ध हो रहा है—सो ठीक नहीं है—उस स्थल के लिये हम ऐसा कहेंगे कि इन्द्रियान्तर से ज्ञान क्यों नहीं होता है कि वहाँ उस काल में इन्द्रियान्तर से होने वाले ज्ञानविशेष का उद्बोधक (सहकारि कारण) जो अदृष्ट विशेष उसके विलम्ब से (न होने से) "तज्ज्ञानविलम्ब" (उस इन्द्रिय से ज्ञान नहीं होता है) ऐसा देखा जाता है। अतः मन को विभु मानने में क्या हानि है।

उत्तर—अदृष्ट के विलम्ब से ही यदि ज्ञान का विलम्ब होता है तो चक्षुः आदि इन्द्रियों की कल्पना की क्या आवश्यकता है।

---

प्रभाकरविजयेपि "स्मृतिस्तु परिच्छेदे पूर्वबुद्ध्यपेक्षैवेति न प्रमाणम्। अनुमानं तर्हि न प्रमाणं तस्य पूर्वबुद्ध्यपेक्षत्वादिति चेन्न। तस्य न परिच्छेदे पूर्वबुद्ध्यपेक्षत्वम्, किन्तु स्वोत्पत्तावेव। स्मृतिर्हि "तत्" इत्युपजायमाना प्राचीं प्रतीतिमनुरुद्ध्यमाना न स्वातन्त्र्येणार्थं परिच्छिनत्तीति न प्रमाणं स्मृतिरिति। अनुमाने तु तदिति वेद्याभावादुत्पत्तौ पूर्वबुद्ध्यपेक्षेति निश्चीयते इत्याहुरित्युक्तम्।

ईश्वरीयसाक्षात्कारेव्यभिचारवारणाय जन्येति। साक्षात्कारपदंस्पष्टार्थम्। सुखाद्यसमवायिकारणमात्ममनःसंयोगस्तदाश्रयवेत्यर्थः। सुखादिकं सासमवायिकारणकं भावकार्यत्वादित्यनुमानसामाज्ज्यात्। मूले अयौगपद्यादिति। एकदाऽनुत्पत्तिकत्वादित्यर्थः। ज्ञानानामिति। ज्ञानयोरित्यपि बोध्यम्। तस्य मनसः। यत्सम्बन्धात्। यत्संयोगात्। परैः इन्द्रियान्तरैः। तदिति। अस्याऽसन्निधानतरसम्बन्धात्।

नानावधानभाजां च कथमेकदाऽनेकेन्द्रियजन्यज्ञानमिति वाच्यम् । मनसोऽतिलाघवात्, झटिति नानेन्द्रियसंबंधान्नानाज्ञानोत्पत्तेः । उत्पलशतपत्रभेदादिव यौगपद्यप्रत्यस्य भ्रान्तत्वात् । न च मनसः संकोचविकाशशालित्वादुभयोपपत्तिरिति वाच्यम् । नानावयवतन्नाशादिकल्पने गौरवाल्लाघवान्निरवयवस्याणुरूपस्यैव मनसः कल्पनादिति संक्षेपः ।

## ॥ इति द्रव्यनिरूपणम् ॥

प्रश्न—दीर्घ ( शष्कुली ) पापड़ आदि के भक्षणकाल में-एवं शतावधानी पुरुषों को एक काल में नानेन्द्रियजन्यज्ञान कैसे होता है ( क्योंकि ) पापड़ भक्षणकाल में चाक्षुष रासन-त्वाच-घ्राणज इत्यादिनानाज्ञान एक काल में हो रहे हैं )

उत्तर—मन अत्यन्त लघु है-एवं वेगशाली है अतः नाना इन्द्रियों से क्रमिक सम्बन्ध होने के नाते क्रमिक नाना ज्ञान उत्पन्न हो जाते हैं । जैसे—कमल के सौपत्तों को नीचे ऊपर रखकर सूची से भेदन करें तो सूची भेदन क्रम से ही होगा—परन्तु अति शीघ्र होने के नाते वह सूची भेदन एक ही काल में हुआ—यह जो यौगपद्य प्रत्यय है वह भ्रान्त है ।

प्रश्न—सांख्य कहता है कि मन को संकोच-विकासशाली मान लिया जाय—तब जिस काल में मन संकोचशाली है उस काल में मन का एक ही इन्द्रिय से सम्बन्ध होने के नाते एक ही ज्ञान होगा—और जिस काल में मन विकासशाली है-उस काल में मन का अनेक इन्द्रियों से सम्बन्ध होने के नाते अनेक ज्ञान हो जायेंगे इस प्रकार उभय ज्ञान की उपपत्ति बन जायगी ।

उत्तर—यह ठीक नहीं है-मन को यदि संकोच विकासशाली मानोगे तो सावयव मानना होगा-सो नाना अवयवों की कल्पना एवं उन अवयवों की नाशकल्पना में गौरव होगा—अतः निरवयव अणुरूप ही मन की कल्पना ठीक है-यह संक्षेप है । द्रव्य पदार्थ की व्याख्या समाप्त ।

---

मित्यनेनाऽन्वयः । तदसन्निधानं मनसो विभुत्वे न संभवतीत्यर्थः । विभोःसर्वमूर्तसंयोगादिति भावः । तद्ज्ञानविलम्ब इति । तथा च मनो नोपेयमितिभावः । चक्षुरादीनामिति । तत्राप्यदृष्टविशेषनियामकताया वक्तुं शक्यत्वादिति भावः । एकदेति । नानास्थानस्थितेन्द्रियैरेकदाऽणुमनःसंयोगाऽसंभवादिति भावः । अतिलाघवादिति । हस्तलिखितपुस्तके अतिलोलत्वादितिपाठः । अतिशीघ्रगतिकत्वादित्यर्थः । तत्र क्रमिकनानाधीस्वीकारे कथं तद्यौगपद्यधीरत आह । उत्पलेति । उपर्यधोभावापन्नेत्यादिः । भ्रान्तत्वादिति । भ्रमत्वादित्यर्थः । संकोचः अवयवनाशात् खण्डावयव्युत्पत्तिः । विकाशः अवयवबाहुल्यान्महावयव्युत्पत्तिः ।

**उभयोपपत्तिरिति ।** मनसः संकोचे एकेन्द्रियमात्रसम्बन्धादेकमेव ज्ञानम्, विकाशे तु नानेन्द्रियैर्मनःसम्बन्धाद्युगपन्नानाज्ञानानामुत्पत्तिरिति भावः । यद्यपि नानेन्द्रियैर्मनःसन्निकर्षकाले चाक्षुषाद्युत्पत्तिकाले रासनाद्यनुत्पादस्य रासनादिकं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकत्वेनैवोपपत्तेर्मनसोविभुत्वेपि बाधकाभावस्तथापि तथा प्रतिबन्धकत्वे गौरवमित्यभिप्रायः ।

कौमारिलास्तु मनसो विभुत्वमङ्गीकुर्वन्ति—तथा च मानमेयोदये-मनो विभु स्पर्शानर्हद्रव्यत्वात् अनारभ्यारंभकद्रव्यत्वाद् वा ज्ञानाऽसमवायिकारणसंयोगाश्रयत्वाद्वा आत्मवदित्यनुमानैर्महत्वसिद्धेरिति ।

इति *विलासिन्यां* द्रव्यनिरूपणम् ।

# गुणनिरूपणम्

अथ द्रव्याश्रिताज्ञेया निर्गुणानिष्क्रिया गुणाः

द्रव्यं निरूप्य गुणान्निरूपयति । अथेत्यादिना । गुणत्वजातौ किं मानमिति चेदिदं-द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा किंचिद्धर्मावच्छिन्ना निरवच्छिन्नकारणताया असंभवात्, न हि रूपत्वादिकं सत्ता वा

द्रव्यनिरूपण करके गुणों का निरूपण करते हैं —द्रव्याश्रितत्व-निर्गुणत्वनिष्क्रियत्व-यह गुणसामान्य का लक्षण है। यह कारिका का अर्थ है।

प्रश्न—गुणत्वजाति में क्या प्रमाण है।

उत्तर—यह अनुमान प्रमाण है कि—द्रव्यकर्म से भिन्न जो सामान्य ( जाति ) वाला ( गुण ) उसमें रहने वाली कारणता किसी धर्म से अवच्छिन्ना है—क्योंकि निरवच्छिन्न कोई कारणता होती ही नहीं-( अतः वह गुण में रहने वाली कारणता जिस धर्म से अवच्छिन्ना है-वही गुणत्वजाति है )

प्रश्न—गुण में रहने वाली कारणता का अवच्छेदक गुणत्व है—अतः वह कारणता गुणत्व से अवच्छिन्ना है-क्योंकि "यो धर्मो यस्या अवच्छेदकः सा तद्धर्मावच्छिन्ना भवति" यह नियम है-तो हम पूछते हैं कि गुण में रहने वाली कारणता का अवच्छेदक गुणत्व को न मानकर 'रूपत्व' को या सत्ता को ही क्यों न मान लिया जाय, इससे भी किंचिद्धर्मावच्छिन्नत्वरूप साध्य की उपपत्ति हो जाती है।

---

मूले अथ शब्दस्यानन्तर्यमर्थः। तमेवाह। द्रव्यंनिरूप्येति। द्रव्यनिरूपणानन्तरमित्यर्थः। गुणान्निरूपयतीति। गुणसामान्यलक्षणमाहेत्यर्थः। अवसरसंगत्या इति शेषः। विभागवाक्याद् द्रव्यस्यैव प्रथमसुपस्थितत्वेन तत्रैवादौ जिज्ञासा जायते तन्निरूपणेन जिज्ञासा निवृत्तौ अवश्यवक्तव्यत्वाद्गुणस्येति भावः। अत्र गुणत्वजातिमत्वं गुणसामान्यलक्षणं बोध्यम्। तत्र प्रमाणं पृच्छति। गुणत्वजाताविति। इदमिति। अनुमानं प्रमाणमित्यर्थः। यद्यपि गुणत्वजातौ प्रत्यक्षमेव प्रमाणम्, रूपादिषु संयुक्तसमवेतसमवायेन गुणत्वप्रत्यक्षसंभवात्, तथापि रूपादावापामरसाधारणगुणइति प्रत्ययस्याऽसिद्धेरितिध्येयम्। गुणजन्यानि सर्वाणि कार्याणि द्रव्यगुणकर्मान्यतमत्वेनानुगमय्य तत्कारणतावच्छेदकत्वेन, द्रव्यकर्मान्यसन्निष्ठकारणतात्वेन सर्वाणि गुणनिष्ठकारणत्वानि अनुगमय्य तदवच्छेदकत्वेन वा गुणत्वजातिसाधनायानुमानमाह। द्रव्यकर्मभिन्ने इति। एतेन रूपरसादीनां सर्वेषां कार्यतावच्छेदकानुगतधर्मस्य सत्वे एव तदवच्छिन्नकारणतावच्छेदकतया गुणत्वजातिसिद्धिः स्यात्तादृशानुगतधर्म एव दुर्घट इति

तत्रावच्छेदिका न्यूनाधिकदेशवृत्तित्वात्, अतश्चतुर्विंशत्यनुगतं किञ्चिद्वाच्यं तदेव गुणत्वमिति ।

उत्तर—रूपत्व या सत्ता गुण में रहने वाली कारणता के अवच्छेदक नहीं हो सकते हैं—क्योंकि अन्यून एवं अनतिरिक्त वृत्ति जो धर्म वही अवच्छेदक हुआ करता है-सो रूपत्व उस कारणता के न्यूनवृत्ति है क्योंकि कारणता अन्यगुणों में भी है-और रूपत्व केवल रूपमात्र में ही है । और सत्ता कारणता के अतिरिक्त ( द्रव्य-कर्म ) में वृत्ति है-अतः २४ गुणों में रहने वाले किसी ऐसे एक धर्म को अवश्य मानना चाहिये कि जिस धर्म से अवच्छिन्ना वह कारणता होगी--वही अनुगत धर्म गुणत्व है-और वही गुणत्व जाति है ।

---

समाहितम् । द्रव्यगुणकर्मान्यतमत्वेनानुगमसंभवात् । तथा च समवायसंबन्धावच्छिन्न "द्रव्यगुणकर्मान्यतमत्वावच्छिन्न" कार्यतानिरूपितसमवाय स्वसमवायिसमवायाऽन्यतरसम्बन्धावच्छिन्न "द्रव्यकर्मान्यसन्निष्ठ" कारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन गुणत्वजातिसिद्धिः । असंभवादिति । अप्रसिद्धत्वादित्यर्थः । एतत्तत्त्वं चोक्तं द्रव्यत्वजातिनिरूपणे । रूपत्वादिकमित्यादिना रसत्वादिपरिग्रहः । तत्र । कारणतायां । न्यूनेति । रूपत्वस्य कारणतान्यूनवृत्तित्वात्, सत्तायाश्च कारणतातिरिक्तवृत्तित्वादित्यर्थः । अतः । क्लृप्तधर्माणामवच्छेदकत्वऽसंभवादित्यर्थः । चतुर्विंशत्यनुगतमिति । चतुर्विंशतिगुणमात्रसमवेतमित्यर्थः । वाच्यमिति । निरुक्तकारणतावच्छेदकतया अवश्यं स्वीकार्यमित्यर्थः । तदेव गुणत्वमिति । गुणत्वशब्दवाच्यमित्यर्थः । एवकारेण रूपत्वादेः सत्त्वस्य वा गुणत्वशब्दवाच्यत्वव्यवच्छेदः । न च परमाणुपरिमाणादौ कारणत्वाभावान्न गुणत्वसिद्धिरिति वाच्यम् । ज्ञायमानलिंगस्य करणत्वमते तस्यानुमितिकरणत्वात् ।

अथैवं सति घटपटान्यतरत्वेन घटपटावनुगमय्य तत्कारणतावच्छेदकत्वेन, घटसमवायिकारणत्वपटसमवायिकारणत्वान्यतरत्वेन तदुभयसमवायिकारणत्वेऽनुगमय्य तदवच्छेदकत्वेन वा कपालतन्तुसाधारणजातिसिद्धेरपि दुर्वारतयाऽनन्त"कोटि" जातिकल्पनप्रसंगः । न चाऽवश्यक्लृप्तप्रत्येककारणतावच्छेदकधर्मावच्छिन्नत्वमादाय सिद्धसाधनमिति वाच्यम् । एवं सति तथापि अतिरिक्तानुगतजातिसाधनासंभवात् । अथ द्रव्यत्वावच्छिन्नसमवायिकारणतानिरूपितरूपरसादिनिष्ठकार्यतावच्छेदकतया गुणत्वजातिसिद्धिः, भावकार्याणां समवायिकारणत्वनियमस्याप्रयोजकतया द्रव्यकर्मणोः समवायिजन्यत्वे मानाभावेन तत्साधारण्यविरहेऽपि क्षतिविरहात् । [illegible]

[illegible]

पूर्वकस्य" तत्पादवारणाय तस्याऽऽवश्यकत्वात् । न च तथापि [illegible] सत्ताजाते मपेक्ष्य लाघवादावश्यकसत्ता जातिरेव कार्यतावच्छेदिकेति वाच्यम् ।

बहुतराऽकार्यसाधारणधर्मत्वेन तादृशकार्यतायामनवच्छेदकत्वादिति चेन्न । तावता रूपादिषु "कारणगुणपूर्वकेषु" गुणत्वजातिसिद्धावपि तस्याश्चतुर्विंशतिवृत्तित्वे मानाभावात्, उक्तयुक्त्या समवायिकारणानां स्वसमवेतसत्सामान्यं प्रति तत्तद्द्रव्यक्तित्वेन विशेषकार्यकारणभावस्यावश्यकत्वेन द्रव्यत्वेन गुणत्वेन सामान्यकार्यकारणभावे मानाभावाच्च । तावतैव यावद्विशेषसामग्रीबाधेनाऽवयववृत्तिगुणादौ कारणगुणक्रमेण रूपाद्युत्पादनवारणासंभवात् । न च द्रव्यस्य विशिष्य तत्तद्द्रव्यक्तित्वेन समवायिकारणत्वेपि समवायिकारणनाशक्षणे गुणोत्पत्तिवारणाय सामान्यतः कार्यसहवर्तितया द्रव्यत्वेन समवायिकारणत्वमावश्यकम्, अनन्तासु तत्तद्द्रव्यव्यक्तित्वेन समवायिकारणतासु कार्यसहवर्तित्वप्रवेशमपेक्ष्य कार्यसहवर्तितया सामान्यतोऽतिरिक्तैव कारणत्वकल्पनाया एव लघुत्वादिति वाच्यम् । तथासति समवायिकारणनाशक्षणे कर्मोत्पत्तिवारणाय कर्म प्रत्यपि कार्यसहवर्तितया द्रव्यत्वेन समवायिकारणत्वस्य वश्यकतया न्यूनवृत्तेर्गुणत्वस्य तत्कार्यतावच्छेदकत्वाऽसंभवात् ।

अथ रूपत्वादिप्रकारेण गृहीताया गुणपदशक्यताया अवच्छेदकत्वे लाघवाद् गुणत्वजातिः सिद्ध्यति । रूपादिनिष्ठा गुणपदजन्यबोधविषयत्वप्रकारत निरूपितेश्वरेच्छीयविशेष्यता किञ्चिदवच्छिन्ना शक्तिविशेष्यतात्वाद् घटादिपदशक्ति विशेष्यतावदित्यनुमानादवच्छेदकं सिद्ध्यल्लाघवाच्चतुर्विंशतिसाधारणस्यैकस्यै जातिरूपस्य सिद्धेः । न च पदशक्यतावच्छेदकत्वेनापि जातिसिद्धौ विभुपदशक्यत वच्छेदकत्वेनापि गगनादिचतुष्टयसाधारणजातिसिद्ध्यापत्तिरिति वाच्यम् भूतपदशक्य तावच्छेदकत्वेनापि पृथिव्यादिपंचकसाधारणसिद्धजात्या सांकर्यापत्त्या विनिगमन विरहेण विभुत्वमूर्तत्वयोरुभयोरेवाऽजातित्वात् । न च तथापि अपूर्वाऽदृष्टादिपदशक्य तावच्छेदकत्वेन हर्यादिपदशक्यतावच्छेदकत्वेन चानुगतजातिसिद्ध्यापत्तिर्दुर्वारैवे वाच्यम् । अपूर्वादिपदहर्यादिपदाभ्यां धर्मत्वाऽधर्मत्व, सिंहत्वविष्णुत्वादिप्रकार स्वारसिकप्रतीतेः सर्वसिद्धत्वात् । गुणपदाद्रूपत्वादिप्रकारकप्रतीतिश्च न विवादप्रसः अन्यथा शक्यतावच्छेदकव्यवस्था क्वापि न स्यात्, सर्वत्रैव लघुलक्ष्यतावच्छेदका दाय विवादसंभवात् । परन्तु परत्वत्वादेर्गुणपदशक्यतावच्छेदकत्वे मानाभावा लौकिकानां तत्र गुणव्यवहारविरहात्, तान्त्रिकाणां तत्र गुणव्यवहारस्य च स्वस्वप भाषयोपपद्यमानतया शक्त्यसाधकत्वात्, अन्यथा कर्मणोपि गुणपदशक्यत्वप्रसंगा न्यायभूषणकृद्व्यवहारात्, परिभाष्यतावच्छेदकत्वेनापि जातिसिद्धौ अनन्तजा सिद्धिप्रसंगादिति विभावनीयमिति संक्षेपः ।

मीमांसकास्तु गुणपदप्रवृत्तिनिमित्तं "गुणत्वं" न जातिः, लौकिकप्रत्य विषयवृत्तित्वाद्यन्नैवं तन्नैवं यथा गोत्वम् । न च पृथिवीत्वादौ व्यभिचार : वाच्यम् । इष्टत्वात् । न च तथापि आत्मत्वमनस्त्वादौ व्यभिचार इति वाच्य चक्षुर्ग्राह्यत्वे सतीत्यनेन विशेषणीयत्वात् । वृत्तित्वं च समवाय, स्वरूपान्यतरसम्बन्ध विवक्षणीयम् । अन्यथा घटत्वादेरपि कालिकविशेषणतया लौकिकप्रत्यक्षाविषयवृ त्वेन व्यभिचारापत्तेः । समवायमात्रेण वृत्तित्वविवक्षणे परनये स्वरूपासिद्ध्याप तन्नये गुणत्वस्योपाधितया स्वरूपसंबन्धेनैव वृत्तेः । अथ परनयेऽखण्डोपाधे

समवेतत्वाभ्युपगमेन न स्वरूपासिद्धिः। नच जातिलक्षणस्य तत्रातिव्याप्तिः। अनुगतव्यंजकव्यंग्यस्यापि तन्नये जातिलक्षणघटकत्वादितिवाच्यम्। तैरखण्डोपाध्यन्तरस्य समवेतत्वोपगमेपि गुणत्वस्य समवेतत्वानुपगमात्। स्वरूपसंबन्धमात्रेण वृत्तित्वविवक्षणे तु न्यायनये स्वरूपासिद्ध्यापत्तेः।

एवंस्वसमनियतव्यंजकाभावाच्च गुणत्वे जातित्वाभावः साधनीयः, तथा च गुणत्वं न जातिः स्वसमनियतधर्मप्रकारकज्ञानव्यंग्यत्वाभावादित्यपि बोध्यम्। स्वसमनियतधर्मप्रकारकत्वं च स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वे सति स्वाभाववद्वृत्त्यधिकरणतानिरूपकतानवच्छेदको यो धर्मस्तदवच्छिन्नधर्मप्रकारकत्वम्। तेन सास्नादीनां प्रतिव्यक्तिभिन्नत्वेपि तद्व्यंग्यगोत्वादौ न व्यभिचारः। सास्नात्वादेरनुगतत्वात्। न च सामान्यवत्त्वे सति गुणाभाववत्वं व्यंजकम्, सामान्यवानगुणो गुण इति प्रतीतेरिति वाच्यम्। गुणाभाववत्वज्ञाने गुणत्वज्ञानम्, गुणत्वज्ञाने गुणाभाववत्ताज्ञानमित्यन्योन्याश्रयात्। सामान्यवत्वे सति स्पर्शरहितत्वे सति द्रव्याश्रितत्वं च न तथा, कर्मणि अतिव्याप्तेः। नच कर्मान्यत्वेसतीति विवक्षणीयमिति वाच्यम्। तथासति रूपान्यत्वेसति रसान्यत्वेसति इत्यादेरपि सुवचत्वप्रसंगात्। तथाच रूपान्यत्वविशिष्टयथोक्तधर्मस्य व्यंजकत्वसंभवेन रूपव्यावृत्तरसादिसाधारणैकजातिसिद्धिः स्यात्, रसान्यत्वविशिष्टयथोक्तधर्मस्य व्यंजकत्वसंभवेन रसव्यावृत्तरूपगन्धादिसाधारणजातिसिद्धिः स्यादित्यादिक्रमेणाऽनन्तजातिसिद्धिः स्यादिति प्राहुः।

तच्चिन्त्यम्। जातिपदवाच्यत्वे समनियतधर्मप्रकारकज्ञानव्यंग्यत्वं न प्रयोजकम् समनियतव्यंजकव्यंग्यत्वस्य जातिलक्षणघटकत्वे मानाभावात्। नच तथापि गुणत्वस्य जातित्वे समनियतधर्मज्ञानं विना प्रत्यक्षं कथं स्यात्, जातिप्रत्यक्षे समनियतधर्मज्ञानस्य हेतुत्वादिति वाच्यम्। यथा रूपप्रभाविशेषवान् मणिः पद्मरागपदवाच्य इत्युपदेशसहकृतेनेन्द्रियेण गृह्यते तथैव गुणत्वस्यापि सामान्यवान् कार्यानाश्रयो गुण इत्युपदेशसहकृतेनेन्द्रियेण विनापि समनियतधर्मज्ञानं प्रत्यक्षसंभवात्। इत्थं च सकलजातिप्रत्यक्षे समनियतधर्मज्ञानं न कारणमिति विदाकुर्वन्तु।

अथ कर्मापि गुणपदवाच्यं सामान्यवत्वे सति कार्यानाश्रयत्वरूपगुणपदप्रवृत्तिनिमित्तयोगादित्यर्थकस्य कर्मापि गुणस्तल्लक्षणयोगादिति वदतो भूषणस्य* मतेपि गुणत्वं न जातिः, गुणपदप्रवृत्तिनिमित्तस्य जातित्वानभिधानात्।

न च तन्मते गुणपदप्रवृत्तिनिमित्तस्य कुतो न जातित्वम्, यथोक्तधर्मस्यैव समनियतत्वेन व्यंजकत्वसं[illegible] [illegible] 'कार्याश्रयद्रव्य' व्यावृत्तिघटितत्वेन व्यंजकत्व[illegible] [illegible]। तया जातित्वासंभवाच्च। [illegible]

प्रकाशकृदनुसारिणस्तु कर्मापि गुणः—गुणपदवाच्यं-तल्लक्षणयोगात्, गुण[illegible]

---

* भूषणो नाम न्यायसूत्रवृत्तिकार इति तार्किकरक्षायाम्।

जातिरूपगुणपदप्रवृत्तिनिमित्तयोगादिति भूषणार्थः । तन्मते सामान्यवत्त्वे सति कार्यानाश्रयत्वस्यैव समनियतत्वेन तद्व्यंग्यत्वेनैव गुणपदप्रवृत्तिनिमित्तस्य जातित्वसंभवात्, गुणपदप्रवृत्तिनिमित्तस्य चतुर्विंशतिमात्रवृत्तिजातित्ववादिनं वैशेषिकमपेक्ष्य विशेष इत्याहुः । तच्चिन्त्यम् । यथोक्तधर्मस्याऽनपेक्षितव्यावृत्तिघटितत्वेन व्यंजकत्वाऽसंभवात् । अन्यथा वैशेषिकमतेपि कर्मान्यत्वघटितयथोक्तधर्मस्य व्यंजकत्वसंभवेन वैशेषिकमतमेव न्याय्यः स्यादिति चेन्न । चलनात्मकतया प्रतीयमानस्यकर्मणः रूपादिव्यावृत्तस्योत्क्षेपणाद्यनुवृत्तस्यैकवैजात्यस्यानुभवसिद्धत्वात् ।

"कर्म गुणः सामान्यवत्त्वेसति स्पर्शरहितत्वेसति द्रव्याश्रितत्वात्, सामान्यवत्त्वेसति कार्यानाश्रयत्वात्, इत्यनुमानाच्च कर्म गुण इति न्यायभूषणकारः । गुणकर्मणोरेकत्वं वदतः तस्य गुणत्ववत् कर्मत्वमपि नास्ति व्यवस्थापकाभावात् इति विवक्षितम्, उताऽस्तिकर्मत्वं गुणत्वमेव नास्ति इति वा विवक्षितम् । नाद्यः—व्यवस्थापकसत्त्वात्—तथाहि—**परस्परविरुद्धसंयोगविभागलक्षणकार्योत्पादकत्वं च कर्मणो व्यवस्थापकमनुभवसिद्धमेवेति उदयनाचार्याः** । अस्यार्थः-परस्परविरुद्धं—परस्परनाश्यनाशकभावापन्नं—यत्संयोगविभागोभयलक्षणं कार्यं तदुत्पादकत्वमित्यर्थः । तथा च स्वपश्चाद्भाविभावाजन्यस्वजन्यविभागनाशकसंयोगजनकत्वरूपयोग्यत्वमिति यावत् । अतो न परस्परस्य दुर्वचत्वम् । स्वपदं लक्ष्यत्वेनाभिमतकर्मपरम् । व्यवस्थापकमिति । समनियतव्यंजकमित्यर्थः । न च तथापि चक्षुर्माह्यत्वे सति लौकिकप्रत्यक्षाविषयवृत्तितया कथं जातित्वमिति वाच्यम् । वैजात्यस्यानुभवसिद्धत्वे तस्य जातित्वाभावव्याप्यत्वे मानाभावादिति भावः । अत्र संयोगविभागात्मककार्यद्वयजनकत्वं कर्मणो गुणादिभ्योऽव्यावर्त्तकम् । परस्परविरुद्धत्वं तु संयोगविभागयोर्वैजात्यमाविष्कर्तुम् । तथा च कर्मत्वं जातिः स्वाश्रयजन्यविभागनाशकसंयोगजनकतावच्छेदकत्वादिति जनकतावच्छेदकतया कर्मत्वजातिसिद्धिः । न द्वितीयः —**अत्राचार्याः । "तद्विपरीतं च कार्यं रूपादीनां चतुर्विंशतेरुपलभ्यते । ततस्तैः कर्मविपरीतजातीयैर्भवितव्यम् । न ह्येकजातीयत्वे कार्यभेदनियम उपपद्यते इति ।"** अस्यार्थः । तद्विपरीतं च कार्यमिति । परस्परविरुद्धसंयोगविभागोभयभिन्नमेव कार्यमित्यर्थः । परस्परविरुद्धसंयोगविभागोभयकार्यजनकभिन्नत्वमिति यावत् । तैः—रूपादिचतुर्विंशतिगुणैः । कर्मविपरीतजातीयैरिति । कर्मव्यावृत्तसकलरूपाद्यनुवृत्तवैजात्यवद्भिर्भवितव्यमित्यर्थः । एकजातीयत्वे । कर्मत्वजातिमत्त्वे । कार्यभेदनियम इति । क्वचित्परस्परविरुद्धसंयोगविभागोभयकार्यजनकत्वम्, क्वचित्तादृशकार्यजनकत्वावच्छिन्नभेद इत्युपपद्यते इत्यर्थः । तथा च स्वजन्यविभागनाशकसंयोगजनकभिन्नत्वरूपस्य परस्परविरुद्धसंयोगविभागोभयाजनकत्वस्याऽवच्छेदकतया गुणत्वजातिसिद्धिः । तथा च गुणत्वं जातिः समवेतत्वे सति स्वाश्रयजन्यविभागनाशकसंयोगजनकभेदावच्छेदकत्वात्, विशेषणताविशेषापेक्षया समवायस्य लाघवेन समवायसंबन्धेनैव गुणत्वस्य वृत्तित्वस्वीकारान्न तस्याऽखण्डोपाधित्वमिति भावः ।

द्रव्याश्रिता इति। यद्यपि द्रव्याश्रितत्वं न लक्षणम्, कर्मादावतिव्याप्तेः। द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं तदर्थः। भवति हि

(द्रव्याश्रिता इति) यद्यपि द्रव्याश्रितत्व गुण का लक्षण नहीं है—क्यों द्रव्याश्रितत्व इस लक्षण की कर्म में अतिव्याप्ति हो रही है—कारण कि कर्म भी द्रव्याश्रित है। तथापि द्रव्यत्व का व्यापकता वच्छेदक जो सत्ता भिन्न जाति तादृशजातिमत्त्व यही द्रव्याश्रितत्व का अर्थ है—सो द्रव्यत्व का व्यापकतावच्छेदक एवं सत्ताभिन्नजाति गुणत्व जाति होती है—और तादृशगुणत्वजातिमत्ता

---

न चैवमदृष्टेश्वरज्ञानादौ तत्सिद्धिर्न स्यादिति वाच्यम्। तादृशसंयोगाऽसाधारणकारणभिन्नत्वस्य विवक्षितत्वात्, तस्य च तत्र सत्वात्। ननु संयोगविभागाजनकत्वं कर्मव्यतिरिक्तसकलपदार्थनिष्ठामेव जातिं व्यवस्थापयेत्, न रूपादिचतुर्विंशतिमात्रनिष्ठं गुणत्वमिति चेन्न। द्रव्यस्यापि परस्परविरुद्धसंयोगविभागजनकभिन्नत्वप्रसंगात्। न चेष्टापत्तिः। रूपादिवन्नैकं द्रव्यं संयोगविभागावारभेत। न च तदुभयजनकभिन्नत्वस्य सामान्यादावपि सत्वान्न्यूनवृत्तिगुणत्वस्य कथं तदवच्छेदकत्वमिति वाच्यम्। सामान्यवत्वे सतीति विशेषणीयत्वात्। न चापराभ्युपगतं गुणत्वमखण्डोपाधिरेव तदवच्छेदकमस्त्विति वाच्यम्। परेण तस्य स्वरूपेण वृत्तित्वस्वीकारे गौरवात्, समवायेन वृत्तित्वस्वीकारे तु जातित्वस्यार्थवशासिद्धत्वात्। समनियतव्यंजकव्यंग्यत्वस्य लक्षणघटकत्वे गौरवान्मानाभावाच्च। अत्रेदं बोध्यम्। स्वजन्यविभागनाशकसंयोगजननस्वरूपयोग्यत्वरूपस्य "परस्परविरुद्धसंयोगविभागरूपकार्यकारित्वस्या" विशेषेपि स्वपश्चाद्भाविभागाजन्य, स्वजन्यविभागनाशकसंयोगस्वरूपयोग्यत्व तादृशस्वरूपयोग्यत्वभिन्नत्वरूपाभ्यां "अनपेक्षत्वसापेक्षत्वाभ्यां" द्रव्यकर्मणोर्विजातीयत्वम्। तथा सामान्यवत्व कार्यानाश्रयत्वाद्यविशेषेपि स्वजन्यविभागनाशकसंयोगजननस्वरूपयोग्यत्वतादृशस्वरूपयोग्यत्वभिन्नत्वरूपाभ्यां "विरुद्धाविरुद्धकार्यत्वाभ्यां" गुणकर्मणोरपि विजातीयत्वमिति संक्षेपः।

ननु गुणाः पूर्वमेव स्वरूपतः प्रतिपादिताः पुनः कथं प्रतिपाद्यन्ते इति चेन्न। साधर्म्यवैधर्म्यप्रकारेण द्रव्याणि निरूपितानि, संप्रति ताभ्यामेव गुणानां निरूपणात्। तद्धर्मसमव्याप्तधर्मस्तद्धर्मावच्छिन्नस्य साधर्म्यम्। तद्धर्मावच्छिन्नेतरसमव्याप्तो धर्मस्तद्धर्मावच्छिन्नस्य वैधर्म्यम्। अत्र कार्यत्वसंगतिरपि बोध्या।

द्रव्याश्रितत्वमिति। समवायेन द्रव्यवृत्तित्वमित्यर्थः। कर्मादाविति। आदिना द्रव्यसामान्यविशेषाणां परिग्रहः। तथापीति। अत्र द्रव्यत्वव्यापकतासमवायेन ग्राह्या। तेन तादात्म्येन द्रव्यनिष्ठव्यापकताया अवच्छेदकत्वेपि द्रव्यत्वस्य न क्षतिः। लक्ष्ये निर्गुणद्रव्यालक्षणं योजयति। भवतिहीति। द्रव्यत्वव्यापकतावच्छेदकमिति। द्रव्यत्वं कर्मत्वं वेति। भावादितिभावः। द्रव्यत्वव्यापकतावच्छेदकत्वस्य फलमाह। द्रव्यत्वं कर्मत्वं वेति। जातिपदस्य फलमाह। द्रव्यत्वस्त्वमिति। सत्तामादाय द्रव्येऽतिव्याप्तिवारणाय

रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥८६॥
द्रवत्वस्नेहवेगाश्च मता मूर्तगुणा अमी।
धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोपि च ॥८७॥
एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः।
संख्यादयो विभागान्ता उभयेषां गुणा मताः ॥८८॥

गुणत्वं द्रव्यत्वव्यापकतावच्छेदकं तद्वत्ता च गुणानामिति। द्रव्यत्वं कर्मत्वं वा द्रव्यत्वव्यापकतावच्छेदकं गगनादौ द्रव्यकर्मणोरभावात्। द्रव्यत्ववत्वं सामान्यत्वादिकं वा न जातिरिति तद्व्युदासः। निर्गुणा इति। यद्यपि निर्गुणत्वं कर्मादावप्यस्ति तथापि सामान्यवत्वे सति कर्मान्यत्वे च सति निर्गुणत्वं बोध्यम्। जात्यादीनां न सामान्यवत्वं, कर्मणो न कर्मान्यत्वम्, द्रव्यस्य न निर्गुणत्वमिति तत्र तत्र नातिव्याप्तिः। निष्क्रिया इति स्वरूपकथनं नतु लक्षणं गगनादावतिव्याप्तेः। वेगा इति। वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः। मूर्तगुणा इति।

चौबीस गुणों में है–द्रव्यत्व या कर्मत्व द्रव्यत्व का व्यापकतावच्छेदक नहीं है–क्योंकि द्रव्य-और कर्म यदि द्रव्यत्व के व्यापक हों–तब द्रव्यत्व और कर्मत्व व्यापकतावच्छेदक हो सकते हैं सो द्रव्य और कर्म द्रव्यत्व के व्यापक ही नहीं हैं–व्यापक तब हो सकते हैं जब कि जहाँ-जहाँ द्रव्यत्व रहे वहाँ वहाँ द्रव्य-कर्म यदि रहें सो द्रव्यत्व गगन आदि में है परन्तु वहाँ द्रव्य-कर्म नहीं है–हाँ द्रव्यत्व का व्यापक द्रव्यत्व एवं सामान्य हो सकता है और तब व्यापकतावच्छेदक द्रव्यत्वत्व या सामान्यत्व आदि होंगे परन्तु वे जाति ही नहीं–अतः उनका भी व्युदास हुआ–अर्थात् द्रव्यत्व-और सामान्यमें अतिव्याप्ति नहीं है। (निर्गुणाः इति) यद्यपि निर्गुणत्व (गुणशून्यत्व) गुण का लक्षण नहीं है–क्योंकि इस लक्षण की कर्म आदि में अतिव्याप्ति है। तथापि सामान्य वाला हो कर्म से-अन्य हो-एवं निर्गुण हो—उसे गुण कहते हैं। इस लक्षण की तत्तत्पदार्थों में अतिव्याप्ति का वारण करते हैं कि—जात्यादि (जातिविशेष-समवाय-अभाव) ये सामान्यवान् नहीं हैं। कर्म-कर्म से अन्य नहीं है–और द्रव्य निर्गुण नहीं है–सो इस लक्षण की जात्यादि में-कर्म-और द्रव्य में अतिव्याप्ति नहीं हुई। 'निष्क्रिया' यह गुण के स्वरूप का कथन किया है अन्यथा यह यदि गुण का लक्षण किया जावेगा तो यह लक्षण गगन आदि में अतिव्याप्त हो जावेगा। क्योंकि गगन भी निष्क्रिय है।

रूप-रस-स्पर्श-गन्ध-परत्व-अपरत्व-द्रवत्व-स्नेह-वेग-ये मूर्त (पृथ्वी-जल-तेज-वायु-मन) द्रव्यों के गुण हैं। यहाँ वेग से स्थितिस्थापक (संस्कार) का भी ग्रहण कर लेना 'मूर्तगुणाः'

---

सत्ताभिन्नेति जातिविशेषणम्। निर्गुणत्वं गुणवद्भिन्नत्वम्। सत्यन्तद्वयस्य विशेष्यदलस्य फलमाह। जात्यादीनामिति। तत्र तत्र। जात्यादौ कर्मणि द्रव्ये च।

संयोगश्च विभागश्च संख्याद्वित्वादिकास्तथा ।
द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिताः गुणाः ॥८९॥
अतः शेषगुणाः सर्वे मता एकैकवृत्तयः ।

अमूर्त्तेषु न वर्तन्ते इत्यर्थः । लक्षणं तु तावदन्यान्यत्वम् । एवमग्रेऽपि । अमूर्त-गुणा इति । मूर्तेषु न वर्तन्ते इत्यर्थः । उभयेषामिति । मूर्तामूर्तगुणा इत्यर्थः । मूर्तवृत्तिवृत्ति-अमूर्तवृत्तिवृत्ति गुणत्वव्याप्यजातिमत्त्वम् । संख्यात्वादिकमादाय लक्षणसमन्वयः । ८६–८८ । अनेकाश्रिता इति । संयोगविभागद्वित्वादीनि द्विवृत्तीनि, त्रित्वचतुष्ट्वादिकं त्रिचतुरादिवृत्तीति बोध्यम् । ८९ अत इति । रूपरसगन्धस्पर्शैकत्वपरिमाणैकपृथक्त्वपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्न-गुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दा इत्यर्थः ।

का यह अर्थ है कि ये गुण अमूर्तद्रव्यों में नहीं रहते हैं । इन मूर्तगुणों का लक्षण है ( तावद-न्यान्यत्व ) एतद्भिन्नभिन्नत्व-अर्थात् इन मूर्तगुणों से जो भिन्न-तद्भिन्नत्व इन्हीं में आयेगा–अतः यह लक्षण सर्वथा निर्दुष्ट है ॥ ८६ ॥ धर्म-अधर्म भावनाख्यसंस्कार-शब्द-बुद्धि-सुख-दुःख-इच्छा-द्वेष और प्रयत्न ये अमूर्त ( मूर्तद्रव्यों से भिन्न ) द्रव्यों के गुण हैं । ऐसा विद्वानों ने कहा है ॥ ८७ ॥ संख्या-परिमाण-पृथक्त्व-संयोग विभाग-ये पाँच मूर्त-अमूर्त दोनों द्रव्यों के गुण हैं ॥ ८८ ॥

संयोग-विभाग-द्वित्वादिसंख्या-तथा द्विपृथक्त्व आदि गुण सर्वथा अनेकाश्रित हैं । ( अनेकाश्रिताः ) संयोग-विभागद्वित्वये दो में वृत्ति है आदिपदग्राह्य त्रित्व-चतुष्ट्व आदि तीन चार में वृत्ति है–ऐसा जानना चाहिये ॥ ८९ ॥ इन चार गुणों से ( शेष ) अवशिष्ट सभी

---

निष्क्रियाः क्रियावद्भिन्नाः । स्वरूपकथनमिति । वस्तुतो गुणे क्रियानास्तीति स्फुटप्रतिपत्त्यर्थमित्यर्थः । गगनादाविति । आदिना दिक्कालात्मनां परिग्रहः । वेगेनेति । वेगपदस्य भावनान्यसंस्कारपरत्वादिति भावः । मूर्तगुणा इति सावधारणम् । फलितार्थमाह । अमूर्तेष्विति । तेन संख्यादिषु नातिव्याप्तिः । न च घटमात्रवृत्त्येकत्वसंख्यादावतिव्याप्तिरिति वाच्यम् । मूर्तत्वव्याप्यतावच्छेदकगुणवृत्तिजातिमत्त्वस्य विवक्षितत्वात् । तावदिति । रूपरसगन्धस्पर्शपरापरत्वद्रवत्वस्नेहवेगस्थिति-स्थापकान्यतमत्वमित्यर्थः । मूर्तेषु न वर्तन्ते इति । मूर्तत्वाभावव्याप्यतावच्छेदक-परिमाणावृत्तिजातिमत्त्वं फलितम् । तेनाऽमूर्तमात्रवृत्तिसंख्यादौ नातिव्याप्तिः । न वा परमहत्त्वजातिमादायातिव्याप्तिः ।

...भिन्नत्वं लभ्यते तच्च

ननु उभयेषां गुणा ... ।

रूपादावतिव्याप्तमत उभयपदं ... ।

उभयोर्मूर्तामूर्तयोः द्रव्यमात्र ...

लक्षणं बोध्यम् ।

बुद्ध्यादिषट्कंस्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥९०॥
अदृष्टभावना शब्दा अमी वैशेषिका गुणाः ।

बुद्ध्यादीति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना इत्यर्थः । स्पर्शान्ताः । रूपरसगन्धस्पर्शा इत्यर्थः । द्रवो द्रवत्वम् । वैशेषिकाः विशेषा एव वैशेषिकाः स्वार्थे ठक् । विशेषगुणा इत्यर्थः ।

गुण एक-एक द्रव्य में रहते हैं—जैसे-रूप-रस-गन्ध-स्पर्श-एकत्व-परिणाम-एकपृथक्त्व-परत्व-अपरत्व बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्न-गुरुत्व-द्रवत्व-स्नेह-संस्कार-अदृष्ट-शब्द । बुद्धि सुख-दुःख-इच्छा द्वेष-प्रयत्न-ये बुद्ध्यादि छः, और रूप-रस-गन्ध-स्पर्श-ये चार स्पर्शान्त, सांसिद्धिकद्रवत्व, अदृष्ट-भावना-शब्द-ये विशेषगुण कहलाते हैं । विशेष तथा वैशेषिक ये दोनों एकार्थक हैं । स्वार्थ में ठक्प्रत्यय होता है—"वैशेषिकागुणाः" इसका अर्थ है 'विशेषगुणाः' । संख्या से लेकर अपरत्वपर्यन्त-संख्या-परिणाम-पृथक्त्व-संयोग-विभाग-परत्व-अपरत्व नैमित्तिक द्रवत्व-तथा-गुरुत्व-वेग-ये सामान्यगुण हैं । संख्या से लेकर अपरत्व-पर्यन्त-द्रवत्व-स्नेह-ये चक्षुः

---

अतः शेषाः । पूर्वोक्तगुणभिन्नाः । एकैकवृत्तय इति । तत्त्वंच तद्व्यक्तित्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वम् । अव्यासज्यवृत्तिधर्मस्य पर्याप्त्यस्वीकारे तु वस्तुविशिष्टत्वं एकैकवृत्तित्वम् । वै० स्वसमवेतत्व स्वभिन्नसमवेतान्यत्व स्ववृत्तिगुणत्ववत्त्वैतत्त्रितयसंबन्धेन । स्ववृत्तित्वं च कालिकसंबन्धेन गुणत्ववत्ता च समवायेन । भावनाभिन्नजन्यैकत्वव्यापकतावच्छेदकस्पर्शावृत्तिधर्मसमवाय्यन्यत्वे सति गुरुत्वनैमित्तिकद्रवत्वान्यगुणत्वं विशेषगुणलक्षणम् । संख्यादिसामान्यगुणेऽतिव्याप्तिवारणाय सत्यन्तम् । एवं च जन्यैकत्वव्यापकतावच्छेदकः स्पर्शावृत्तिश्चयो धर्मः संख्यात्वं तत्समवायित्वाद्वारणम् । संस्कारत्वस्य जन्यैकत्वव्यापकतावच्छेदकतया स्पर्शावृत्तितया च तत्समवायित्वेन भावनायाः संग्रहो न स्यादतो भावनाभिन्नेति समवायिविशेषणम् । तथा च भावनाभिन्नत्वरूपविशेषणाभावादेव विशिष्टाभावान्नासंग्रहः । वेगस्थितिस्थापकयोर्भावनाभिन्नत्वेपि जन्यैकत्वव्यापकत्वावच्छेदकीभूतसंस्कारत्वसमवायित्वाद्वारणम् । परत्वाऽपरत्वादावपि परत्वत्वादिधर्मस्य शब्दादिरूपजन्यव्यापकतानवच्छेदकत्वादतिव्याप्तिवारणायैकत्वोपादानम् । उक्तातिव्याप्तिवारणायैव जन्यपदोपादानम् । तयोर्धर्मयोरेकत्वव्यापकतानवच्छेदकत्वेपि जन्यैकत्वव्यापकतावच्छेदकत्वाभावान्नायोऽव्युदास इति ध्येयम् । स्पर्शावृत्तीत्यनुपादाने रूपादेरपि जन्यैकत्वव्यापकतावच्छेदकसत्तागुणत्वसमवायित्वादसंभवःस्यादिति । रूपावृत्तित्वादिकं विहाय स्पर्शावृत्तिपर्यन्तानुधावनं स्पर्शसंग्रहार्थैव । रूपादावपि रूपसंयोगान्यतरत्वस्पर्शान्यत्वादिरूपताद्दशधर्मसत्वादव्याप्तिवारणाय समवायीति । पूर्वषट्पदार्थवारणाय विशेष्यदलम् । गुरुत्वनैमित्तिकद्रवत्वयोरतिव्याप्तिवारणाय गुरुत्वनैमित्तिकद्रवत्वान्येति ।

संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा ॥६१॥
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः ।
संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥६२॥
एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः ।
बाह्यैकैकेन्द्रियग्राह्याः, गुरुत्वादृष्टभावनाः ॥६३॥
अतीन्द्रियाः, विभूनां तु ये स्युर्वैशेषिका गुणाः ।

संख्येति । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानीत्यर्थः । द्वीन्द्रियेति । चक्षुषा त्वचापि ग्रहणयोग्याः । बाह्येति । रूपादीनां चक्षुरादि-

तथा त्वचा इन दो इन्द्रियों से ग्राह्य हैं । ( अथ ) 'स्पर्शान्त' रूप-रस गन्ध-स्पर्श-और शब्द ये बाह्य एक-एक इन्द्रिय से ग्राह्य हैं—रूपादि चक्षु आदि से ग्राह्य हैं ।

गुरुत्व—अदृष्ट—भावना—ये अतीन्द्रिय हैं—अर्थात् इनका किसी इन्द्रिय से प्रत्यक्ष नहीं होता है । और जो विभुओं के विशेष गुण हैं वे अकारणगुणोत्पन्न ( अकारणपूर्वक ) हैं । कारण के गुणों से कार्य में जो गुण उत्पन्न होते हैं वे कारण गुण पूर्वक कहे जाते हैं—रूपादिकों को जैसे आगाड़ी कहेंगे । बुद्धि—सुख—दुःख—इच्छा—द्वेष—प्रयत्न—धर्म—अधर्म—भावना—तथा शब्द—ये कारणगुणोत्पन्न नहीं हैं—क्यों कि आत्मा का यदि कोई कारण होता तब उसमें जैसे बुद्धि—सुख—दुःख—आदि गुण उत्पन्न होते वैसे ही आत्मा में उत्पन्न होते—परन्तु आत्मा का कोई कारण ही नहीं है । ६३ ॥ ६४ ॥ अपाकज अर्थात् अग्नि संयोग से न उत्पन्न होने

---

गुरुत्ववेगाविल्यत्र वेगपदं भावनातिरिक्तसंस्कारपरम्, तेन स्थितिस्थापकस्यापि परिग्रहः । रूपस्पर्शान्यत्वे सति द्रव्यविभाजकोपाधिव्याप्यतावच्छेदक संयोगविभाग-वेगद्रुत्वावृत्तिजातिशून्यगुणत्वम् । शुक्लरूपे अनुष्णाशीतस्पर्शे चातिव्याप्तिवारणाय सत्यन्तम् । द्रव्यविभाजकं पृथिवीत्वादि तद्व्याप्यतावच्छेदकं च गन्धत्वादि तच्छून्यत्वं च संख्यादौ सत्वाल्लक्षणसमन्वयः । यत्संख्यादेर्न द्वीन्द्रियेण ग्रहस्तत्राव्याप्तेराह । ग्रहणयोग्या इति । तथा च द्वीन्द्रियजन्यग्रहविषयत्वं न तदर्थः । किन्तु ताहशग्रहयोग्यत्वमिति भावः । तथा च चक्षुस्त्वगुभयेन्द्रियजन्यलौकिकप्रत्यक्षविषयता-वच्छेदकधर्मसमवायिगुणत्वे निष्कर्षः । मूले स्पर्शान्तशब्दका इति । रूपरसगन्धस्पर्शशब्दा इत्यर्थः । बाह्यैकैकेन्द्रियग्राह्या इति । रूपं चक्षुषः, रसो रसनस्य, गन्धो घ्राणस्य, स्पर्शस्त्वचः, शब्दः श्रवणस्य ग्राह्य इत्यर्थः । रूपादीनामिति । रूपरस-गन्धस्पर्शशब्दानामित्यर्थः । चक्षुरादिग्राह्यत्वादिति । चाक्षुषादियोग्यत्वादित्यर्थः । तेन चाक्षुषाद्यविषयरूपादौ नाव्याप्तिः । मूले गुरुत्वादृष्टभावना इत्यत्र भावनापदं वेगभिन्नसंस्कारपरम् । तेन स्थितिस्थापकस्यापि संग्रहः । अतीन्द्रियत्वं च लौकिक-साक्षात्कारविषयगुणत्वव्याप्य "संस्कारत्वान्य" धर्मवदन्यगुणत्वम् । विभूनां तु ये स्युर्वैशेषिका गुणा इति । ते इति शेषः । कारणगुणेन । स्वसमवायिकारणकारण-

अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥९४॥
अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम् ।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥९५॥
स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः ।
संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥९६॥

ग्राह्यत्वात् । विभूनामिति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मादृष्टभावना-शब्दा इत्यर्थः । अकारणेति । कारणेन कार्ये ये गुणा उत्पाद्यन्ते ते कारण गुणपूर्वका रूपादयो वक्ष्यन्ते बुद्ध्यादयस्तु न तादृशाः, आत्मादेः कारणाभावात् ।

अपाकजास्त्विति । पाकजरूपादीनां कारणपूर्वकत्वाभावादपाकजा इत्युक्तम् । तथाविधम्—अपाकजम् । तथैकत्वमपि बोध्यम् । संयोगश्चेति । कर्मजत्वं यद्यपि न साधर्म्यं घटादावतिव्याप्तेः, संयोगजसंयोगेऽव्याप्तेश्च । तथापि कर्मजन्यवृत्तिगुणत्वव्याप्यजातिमत्त्वं बोध्यम् । एवमन्यत्रापि

वाले जो रूप–रस–गन्ध–स्पर्श । और ( तथाविध ) अपाकज जो द्रवत्व–स्नेह–वेग गुरुत्व एकपृथक्त्व–परिमाण–तथा स्थितिस्थापक नामक संस्कार ये सब कारणगुणोत्पन्न हैं । ( अपा कजास्त्विति ) पृथिवी के जो रूप–रस–गन्ध–स्पर्श–पाकज हैं अर्थात् अग्निसंयोग से उत्पन्न हैं-अतः वे कारणगुणपूर्वक नहीं है–सो कारणगुणपूर्वकत्व साधर्म्य की उनमें अतिव्याप्तिवारण करने के लिये 'अपाकजाः' यह स्पर्शान्त का विशेषण कहा । ९५ ॥ संयोग–विभाग–वेगाख्य संस्कार ये कर्म से उत्पन्न होते हैं । ( कर्मजा इति ) यद्यपि कर्मजत्व (कर्मजन्यत्व ) संयोग-विभाग-वेग-इन तीन का साधर्म्य नहीं है–क्योंकि चक्र भ्रमणादि रूप कर्मजन्यत्व घट आदि में भी है–अतः घटादि में अतिव्याप्ति हो जावेगी । और संयोग से जायमान संयोग में अव्याप्ति हो जावेगी–क्योंकि उस संयोग में कर्म जन्यत्व नहीं है अपितु संयोगजन्यत्व है । तथापि कर्मजत्व का कर्म से उत्पन्न होने वाले पदार्थों में रहने वाली जो गुणत्वव्याप्यजाति

---

समवेतगुणेन । कार्ये–स्वसमवायिकारणे । ते गुणाः । तथा च स्वसमवायिकारण-कारणगुणजन्यत्वं कारणगुणपूर्वकत्वम् । तदभाववत्त्वमकारणगुणपूर्वकत्वम् । तादृशाः-कारणगुणपूर्वकाः । आत्मादेः—बुद्धिसमवायिकारणस्य । कारणाभावादिति । नित्यत्वादिति ध्येयम् ॥९०-९४॥ अपाकजमिति । सांसिद्धिकमित्यर्थः । संयोगज-

स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके भवेदसमवायित्वम् ।
अथ वैशेषिके गुणे ॥९७॥
आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः ।
वेगेपि च द्रवत्वे च संयोगादिद्वये तथा ॥९८॥
द्विधैव कारणत्वं स्यादथ प्रादेशिको भवेत् ।
वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥९९॥

क्वचिद्बोध्यम् । ९५-९६ पृथक्त्वेत्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयादेकत्वं पृथक्त्वं च ग्राह्यम् । पृथक्त्वपदेन चैकपृथक्त्वम् । भवेदसमवायित्वमिति ।

( संयोगत्व विभागत्व-वेगत्व- ) तादृश जातिमत्ता इन्हीं तीनों में रहेगी—अतः अव्याप्ति नहीं है । इसी प्रकार अन्यत्र भी जानना ॥ ९६ ॥ रूप-रस-गन्ध-स्पर्श-परिमाण-एकत्व-एकपृथक्त्व-स्नेह-और शब्द-ये असमवायिकारण होते हैं । ( स्पर्शान्तेति ) स्पर्श पर्यन्त अनुसरण लेना चाहिये । 'एकपृथक्त्वम्' यहाँ पर 'त्व' प्रत्यय का प्रत्येक के साथ अन्वय कर देने से एकत्व-पृथक्त्व का ग्रहण कर लेना चाहिये । और पृथक्त्वपद से एकपृथक्त्व विवक्षित है । ( भवेदसमवायित्वमिति ) घटादि के रूप-रस-गन्धस्पर्श के प्रति-कपाल आदि के रूप-रस-गन्ध स्पर्श-असमवायिकारण होते हैं । ( अर्थात् कार्य के गुणों के प्रति कारणगुण असमवायिकारण होते हैं ) एवं कपाल आदि का परिमाण घट आदि के परिमाण के प्रति असमवायिकारण होता है । शब्द भी द्वितीयशब्द के प्रति असमवायिकारण होता है । ऐसे ही स्थितिस्थापक-एकपृथक्त्व को भी जाना ।

आत्मा ( जीवात्मा ) के बुद्धि आदि विशेषगुण निमित्तकारण होते हैं । ( निमित्तत्व-मिति ) बुद्धि आदि-इच्छा आदि के निमित्तकारण होते हैं । ९७ ॥

का० अर्थ—उष्णस्पर्श-गुरुत्व-वेग-द्रवत्व-संयोग-विभाग-इनमें असमवायिकारणता तथा निमित्तकारणता-यह दो प्रकार की कारणता रहती है ।

( द्विधैवेति ) असमवायिकारणता-तथा निमित्तकारणता-यही दो प्रकार की कारणता पूर्वोक्त गुणों में रहती है-तथाहि-अवयव ( कपाल आदि ) गत उष्णस्पर्श अवयवी ( घट-

---

संयोगे इति । एवं विभागजविभागे वेगजवेगे इत्यपि बोध्यम् । एवं कर्मजदयनतया-मिव । अन्यत्रापि । उत्तरलक्षणेष्वपि ॥९५-९६॥ स्पर्शान्तेति । रूपरसगन्धस्पर्शा इत्यर्थः । स्पर्शपदमुष्णस्पर्शेतरस्पर्शपरम् । उष्णस्पर्शस्य तु द्विधा कारणत्वं वक्ष्यति । द्वितीयशब्दं प्रतीति । असमवायिकारणत्वमिति पूर्वेणान्वयः । निमित्तत्वमिति । आत्मनोवैशेषिके गुणे निमित्तत्वं स्यादित्यर्थः । उष्णस्पर्श इति । अवयवगतोष्ण-स्पर्श इत्यर्थः । उष्णस्पर्शस्य । अवयविगतोष्णस्पर्शस्य । गुरुत्वपतनयोरिति ।

घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति। एवं कपालादिपरिमाणादीनां घटादिपरिमाणाद्यसमवायिकारणत्वम्, शब्दस्यापि द्वितीयशब्दंप्रति, एवं स्थितिस्थापकैकपृथक्त्वयोरपि बोध्यम्।

निमित्तत्वमिति। बुद्ध्यादीनामिच्छादिनिमित्तत्वादितिभावः। द्विधैवेति। असमवायिकारणत्वं निमित्तकारणत्वं च। तथाहि उष्णस्पर्शः उष्णस्पर्शस्याऽसमवायिकारणम्, पाकजे निमित्तम्। गुरुत्वं गुरुत्वपतनयोरसमवायिकारणम्, अभिघाते निमित्तम्। वेगो वेगस्पन्दनयोरसमवायि

आदि) गत उष्णस्पर्श के प्रति असमवायिकारण होता है। और घटादिगत पाकजरूपादि के प्रति निमित्तकारण भी होता है। इसी प्रकार कारणगतगुरुत्व—कार्यगतगुरुत्व के प्रति—एवं आद्य-पतनरूप क्रिया के प्रति असमवायिकारण होता है—और (प्रतिघात) अभिघाताख्य संयोग के प्रति निमित्तकारण होता है। ऐसे ही कारण का वेग, कार्य के वेग के प्रति असमवायिकारण होता है—और कार्य का वेग कार्य स्पन्द के प्रति असमवायिकारण होता है—तथा अवयवी का वेग दो अवयवियों के परस्पर टकराने से उत्पन्न हुवे अभिघाताख्य संयोग के प्रति निमित्तकारण होता है। इसी प्रकार द्रवत्व द्रवत्व के प्रति असमवायिकारण होता है—और स्यन्दनात्मक जलादि क्रिया के प्रति असमवायिकारण होता है। एवं वह जलगत द्रवत्व (संग्रह) आटे (पिष्ट) के संयोग के प्रति निमित्तकारण होता है। एवं भेरी और दंड का संयोगः शब्द के प्रति निमित्तकारण होता है—और भेरी के अन्तवर्त्ती जो आकाश—उस आकाश संयोग के प्रति असमवायिकारण होता है। ऐसे ही बांस के दो दलों का विभाग वंशदलाकाश विभाग में असमवायिकारण होता है। और शब्द में निमित्त ॥ ९८॥

का० अ० आकाश आदि विभु द्रव्यों के शब्द—ज्ञान आदि विशेषगुण—तथा संयोग विभाग—ये दोनों (प्रादेशिक) अव्याप्यवृत्ति (जो कि पहिले कह चुके हैं) होते हैं। ९९॥

चक्षुर्ग्राह्यमिति। कारिकार्थ स्पष्ट है।

प्रश्न—रूपत्वजाति में क्या प्रमाण है।

---

गुरुत्वे कारणैकार्थप्रत्यासत्त्या। पतने कार्यैकार्थप्रत्यासत्त्येति विशेषः। प्रादेशिकः दैशिकाव्याप्यवृत्तिः। तेन कालिकाव्याप्यवृत्तिरूपादौ नातिव्याप्तिः। अव्याप्यवृत्ति गुणत्वव्याप्यजातिमत्त्वं तदर्थः। तेनेश्वरज्ञानादौ कर्मादौ च नाव्याप्त्यतिव्याप्ती॥९९।

इदानीमुद्देशक्रमानुसारेण रूपादीनां लक्षणमाह। मूले चक्षुर्ग्राह्यमिति लक्ष्यतावच्छेदकीभूतरूपत्वजातौ प्रमाणमाह। रूपत्वजातिस्त्विति। प्रत्यक्षसिद्धेति अनुगतप्रतीतिसिद्धेत्यर्थः। यथाश्रुते परमाणुरूपाणां अनुद्भूतानां अभिभूतानां च रूपाणां प्रत्यक्षाविषयत्वेन तत्साधारण्याभावात। ननुरूपत्वप्रकारकप्रतीतौ मानाभावः

स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके भवेदसमवायित्वम् ।
अथ वैशेषिके गुणे ॥९७॥
आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः ।
वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥९८॥
द्विधैव कारणत्वं स्यादथ प्रादेशिको भवेत् ।
वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥९९॥

क्वचिद्रूह्यम् । ९५–९६ पृथक्त्वेत्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयादेकत्वं पृथक्त्वं च ग्राह्यम् । पृथक्त्वपदेन चैकपृथक्त्वम् । भवेदसमवायित्वमिति ।

( संयोगत्व विभागत्व–वेगत्व– ) ताद्दश जातिमत्ता इन्हीं तीनों में रहेगी—अतः अव्याप्ति नहीं है । इसी प्रकार अन्यत्र भी जानना ॥ ९६ ॥ रूप–रस–गन्ध–स्पर्श–परिमाण–एकत्व–एकपृथक्त्व–स्नेह–और शब्द–ये असमवायिकारण होते हैं । ( स्पर्शान्तेति ) स्पर्श यहाँ अनुष्ण लेना चाहिये । 'एकपृथक्त्वम्' यहाँ पर 'त्व' प्रत्यय का प्रत्येक के साथ अन्वय कर देने से एकत्व–पृथक्त्व का ग्रहण कर लेना चाहिये । और पृथक्त्वपद से एकपृथक्त्व विवक्षित है । ( भवेदसमवायित्वमिति ) घटादि के रूप–रस–गन्धस्पर्श के प्रति–कपाल आदि के रूप–रस–गन्ध स्पर्श–असमवायिकारण होते हैं । ( अर्थात् कार्य के गुणों के प्रति कारणगुण असमवायिकारण होते हैं ) एवं कपाल आदि का परिमाण घट आदि के परिमाण के प्रति असमवायिकारण होता है । शब्द भी द्वितीयशब्द के प्रति असमवायिकारण होता है । ऐसे ही स्थितिस्थापक–एकपृथक्त्व को भी जाना ।

आत्मा ( जीवात्मा ) के बुद्धि आदि विशेषगुण निमित्तकारण होते हैं । ( निमित्तत्वमिति ) बुद्धि आदि–इच्छा आदि के निमित्तकारण होते हैं । ९७ ॥

का० अर्थ—उष्णस्पर्श–गुरुत्व–वेग–द्रवत्व–संयोग–विभाग–इनमें असमवायिकारणता तथा *निमित्तकारणता–यह दो प्रकार की कारणता रहती है ।*

( द्विधैवेति ) असमवायिकारणता–तथा निमित्तकारणता–यही दो प्रकार की कारणता पूर्वोक्त गुणों में रहती है–तथाहि–अवयव ( कपाल आदि ) गत उष्णस्पर्श अवयवी ( घट-

---

**संयोगे** इति । एवं विभागजविभागे वेगजवेगे इत्यपि बोध्यम् । एवं कर्मजत्वलक्षणमिव । अन्यत्रापि । उत्तरलक्षणेष्वपि ॥९५-९६॥ स्पर्शान्तेति । रूपरसगन्धस्पर्शा इत्यर्थः । स्पर्शपदमुष्णस्पर्शेतरस्पर्शपरम् । उष्णस्पर्शस्य तु द्विधा कारणत्वं वक्ष्यति । द्वितीयशब्दं प्रतीति । असमवायिकारणत्वमिति पूर्वेणान्वयः । निमित्तत्वमिति । आत्मनोवैशेषिके गुणे निमित्तत्वं स्यादित्यर्थः । उष्णस्पर्श इति । अवयवगतोष्णस्पर्श इत्यर्थः । उष्णस्पर्शस्य । अवयविगतोष्णस्पर्शस्य । गुरुत्वपतनयोरिति ।

घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति । एवं कपालादिपरिमाणादीनां घटादिपरिमाणाद्यसमवायिकारणत्वम्, शब्दस्यापि द्वितीयशब्दंप्रति, एवं स्थितिस्थापकैकपृथक्त्वयोरपि बोध्यम् ।

निमित्तत्वमिति । बुद्ध्यादीनामिच्छादिनिमित्तत्वादितिभावः । द्विधैवेति । असमवायिकारणत्वं निमित्तकारणत्वं च । तथाहि उष्णस्पर्शः उष्णस्पर्शस्याऽसमवायिकारणम्, पाकजे निमित्तम् । गुरुत्वं गुरुत्वपतनयोरसमवायिकारणम्, अभिघाते निमित्तम् । वेगो वेगस्पन्दनयोरसमवायि

आदि ) गत उष्णस्पर्श के प्रति असमवायिकारण होता है । और घटादिगत पाकजरूपादि के प्रति निमित्तकारण भी होता है । इसी प्रकार कारणगतगुरुत्व–कार्यगतगुरुत्व के प्रति–एवं आद्यपतनरूप क्रिया के प्रति असमवायिकारण होता है–और ( प्रतिघात ) अभिघाताख्य संयोग के प्रति निमित्तकारण होता है । ऐसे ही कारण का वेग, कार्य के वेग के प्रति असमवायिकारण होता है—और कार्य का वेग कार्य स्पन्द के प्रति असमवायिकारण होता है—तथा अवयवी का वेग दो अवयवियों के परस्पर टकराने से उत्पन्न हुवे अभिघाताख्य संयोग के प्रति निमित्तकारण होता है । इसी प्रकार द्रवत्व द्रवत्व के प्रति असमवायिकारण होता है–और स्यन्दनात्मक जलादि क्रिया के प्रति असमवायिकारण होता है । एवं वह जलगत द्रवत्व ( संग्रह ) आटे ( पिष्ट ) के संयोग के प्रति निमित्तकारण होता है । एवं भेरी और दंड का संयोगः शब्द के प्रति निमित्तकारण होता है—और भेरी के अन्तवर्त्ती जो आकाश—उस आकाश संयोग के प्रति असमवायिकारण होता है । ऐसे ही बांस के दो दलों का विभाग वंशदलाकाश विभाग में असमवायिकारण होता है । और शब्द में निमित्त ॥ ६८ ॥

का० अ० आकाश आदि विभु द्रव्यों के शब्द—ज्ञान आदि विशेषगुण—तथा संयोग विभाग—ये दोनों ( प्रादेशिक ) अव्याप्यवृत्ति ( जो कि पहिले कह चुके हैं ) होते हैं । ६६ ॥

चक्षुर्ग्राह्यमिति । कारिकार्थ स्पष्ट है ।

प्रश्न—रूपत्वजाति में क्या प्रमाण है ।

---

गुरुत्वे कारणैकार्थप्रत्यासत्त्या । पतने कार्यैकार्थप्रत्यासत्त्येति विशेषः । प्रादेशिकः-दैशिकाऽव्याप्यवृत्तिः । तेन कालिकाऽव्याप्यवृत्तिरूपादौ नातिव्याप्तिः । अव्याप्यवृत्तिगुणत्वव्याप्यजातिमत्वं तदर्थः । तेनेश्वरज्ञानादौ कर्मादौ च नाऽव्याप्त्यतिव्याप्ती ॥६६॥

इदानीमुद्देशक्रमानुसारेण रूपादीनां लक्षणमाह । मूले चक्षुर्ग्राह्यमिति । लक्ष्यतावच्छेदकीभूतरूपत्वजातौ प्रमाणमाह । रूपत्वजातिस्त्विति । प्रत्यक्षसिद्धेति । अनुगतप्रतीतिसिद्धेत्यर्थः । यथाश्रुते परमाणुरूपाणां अनुद्भूतानां अभिभूतानां च रूपाणां प्रत्यक्षाविषयत्वेन तत्साधारण्याभावात । ननुरूपत्वप्रकारकप्रतीतौ मानाभावः.

चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलंभकम् ।
चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥१००॥

अभिघाते निमित्तम् । द्रवत्वं द्रवत्वस्पन्दनयोरसमवायि संग्रहे निमित्तम् । भेरीदण्डसंयोगः भेर्याकाशसंयोगेऽसमवायी शब्दे निमित्तम् । वंशदलद्वय-विभागः वंशदलाकाशविभागेऽसमवायी शब्दे निमित्तम् । प्रादेशिकः अव्याप्यवृत्तिः ॥९७-९८॥

चक्षुरिति । रूपत्वजातिस्तु प्रत्यक्षसिद्धा । रूपशब्दोल्लेखिनी प्रतीति र्नास्तीति चेन्मास्तु रूपशब्दप्रयोगस्तथापि नीलपीतादिषु अनुगतजाति-विशेषोनुभवसिद्ध एव, रूपशब्दाप्रयोगेपि नीलोवर्णः पीतो वर्णः इति वर्ण शब्दोल्लेखिनी प्रतीतिरस्त्येव ।

उत्तर—"रूपंरूपम्" इस अनुगत प्रतीति का नियामक रूपत्वजाति चक्षुःस्वरूपप्रत्यक्ष प्रमाण से चक्षु.संयुक्तसमवेतसमवायसन्निकर्ष के द्वारा सिद्ध है ।

प्रश्न—'रूपं रूपम्' इत्याकारक रूपशब्दोल्लेखिनी प्रतीति यदि हो—तब इस प्रतीति का नियम होने से रूपत्व जाति की सिद्धि हो सकती है—परन्तु जब कि रूपशब्दोल्लेखिनी प्रतीति ही जिस पुरुष को नहीं होती है—उस पुरुष को "रूपंरूपम्" इस अनुगतप्रतीति की नियामक रूपत्व जाति कैसे सिद्ध होगी ।

उत्तर—यदि रूपम् २ यह अनुगत रूप शब्द प्रयोग नहीं होता है तो न हो–तथापि नील पीत—आदि सातों रूपों में अनुगत जाति विशेष तो अनुभव सिद्ध है—और वही जाति रूपत्व जाति है । दूसरी बात यह है कि नील—पीत—आदि में रूप शब्द का प्रयोग न होने पर भी नीलोवर्णः पीतोवर्णः, यह वर्णशब्दोल्लेखिनी प्रतीति तो होती ही है–सो तब भी रूपत्व जाति की असिद्धि नहीं है—क्योंकि वर्ण और रूप दोनों पर्यायवाचक हैं । ऐसे ही नीलत्व आदि जातियां भी प्रत्यक्ष प्रमाण से सिद्ध हैं पूर्ववत् ।

---

यद्रूपावच्छिन्ना कारणता तद्रूपं कारणतावच्छेदकमित्यादौ धर्ममात्रे एव रूपशब्द-प्रयोगाच्चेत्याशंकते । रूपशब्दोल्लेखिनीति । प्रतीतिरस्त्येवेति । तथा च तादृश-प्रतीत्या वर्णत्वजातिसिद्धौ तादृशजातिरेव रूपत्वशब्देनापि व्यवह्रियते इतिभावः । अथ नीलोवर्ण इति प्रयोगवत् अकारादयो वर्णाः चत्वारो वर्णा इत्यादिव्यवहारदर्शनेन वर्णशब्दोल्लेखिप्रतीत्यापि नानुगतजातिसिद्धिरिति रूपत्वस्य नीलपीतादिसकल-साधारणैकजातित्वे मानाभावः । नीलत्वपीतत्वादीनामेव नीलपीतादिषु रूपबुद्धि-विषयत्वस्य सुवचत्वात् । न च पाकजन्यरूपत्वावच्छिन्नं प्रति रूपत्वेनाऽसमवायि-कारणतया कारणतावच्छेदकतयैव तत्सिद्धिरिति वाच्यम् । नीलपीतादिकं प्रति नीलपीतादेर्विशेषतोऽसमवायिकारणत्वस्यावश्यकतया तादृशसामान्यकार्यकारणभावे मानाभावात् । न च पाकजन्यतावच्छेदकतया लाघवाद्रूपत्वजातिसिद्धिः, नीलादि-

नाशत्वस्य तत्कार्यतावच्छेदकत्वे बहुतरनाश्यनाशकभावापत्तिरिति वाच्यम् । पाक-नाश्यतावच्छेदकतया रूपरसगन्धस्पर्शद्रवत्वेषु पञ्चस्वेवैकं वैजात्यं कल्प्यते लाघवान्न तु रूपत्वरसत्वादिकमिति वक्ष्यमाणत्वात् । न च रूपवति रूपान्तरानुत्पत्त्या रूपं प्रति रूपस्य प्रतिबन्धकत्वात्, तादृशप्रतिबध्यप्रतिबन्धकतावच्छेदकतयैव रूपत्व-जातिसिद्धिः, नीलत्वपीतत्वादीनां नानात्वादिति वाच्यम् । रूपवति रूपान्तरानुत्पादवत् रसादिमत्यपि रसाद्यन्तरानुत्पादात् रूपरसगन्धस्पर्शेषु चतुर्ष्वेव सजातीयप्रतिबध्य-प्रतिबन्धकतावच्छेदकत्वेनैकजातिकल्पनात् । रूपत्वरसत्वावच्छिन्नं प्रति रूपत्वरसत्वा-दिना प्रत्येकं प्रतिबन्धकत्वे गौरवात् । अत्रप्राञ्चः । नीलपीतादिषु रूपं रूपमित्यनु-गतप्रत्ययादेव तत्सिद्धिः । नीलत्वपीतत्वादीनामननुगततया तादृशप्रत्ययस्य ततो-ऽसंभवादिति प्राहुः ।

नव्यास्तु लौकिकविषयतासंबन्धेन त्वाचसाक्षात्कारं प्रति तादात्म्येन नीलादेः प्रतिबन्धकतया तदवच्छेदकत्वेन रूपत्वसिद्धिः । नीलत्वपीतत्वादीनां तदवच्छेदकत्वे बहुतरप्रतिबध्यप्रतिबन्धकभावापत्तिः । न च त्वाचसाक्षात्कारप्रति-बन्धकतावच्छेदकतया लाघवाद्रूपरसगन्धगुरुत्वस्थितिस्थापकेषु पञ्चसु एव एका जातिः कल्प्यते न तु केवलरूपे इति वाच्यम् । पाकनाश्यतावच्छेदकरूपादिद्रवत्वान्त-पञ्चकसाधारणवैजात्येन सजातीयप्रतिबध्यप्रतिबन्धकतावच्छेदकरूपादिस्पर्शान्त-चतुष्टयवृत्तिवैजात्येन च सांकर्यापत्तेः । न च त्वाचसाक्षात्कारप्रतिबन्धकतावच्छेदक-तया रूपरसगन्धेषु त्रिष्वेवैका जातिः कल्प्यते न तु केवलरूपे इति वाच्यम् । तथ तुल्ययुक्त्या चाक्षुषसाक्षात्कारप्रतिबन्धकतावच्छेदकतयारसगन्धस्पर्शेषु त्रिष्वपि एक जातिकल्पनापत्त्या सांकर्यापत्तेः, रूपस्पर्शयोरेव परस्परं व्यभिचारात् । न च चाक्षुष-साक्षात्कारप्रतिबन्धकतावच्छेदकतया रसनगन्धयोर्द्वयोरेवैका जातिः कल्प्यते स्पर्शश्च स्पर्शत्वेन पृथगेव चाक्षुषसाक्षात्कारप्रतिबन्धक इति न सांकर्यम्, चाक्षुषप्रति-बन्धकतावच्छेदकरसगन्धसाधारणवैजात्यस्य रूपादित्रयसाधारणत्वाच्च प्रतिबन्धक-तावच्छेदकवैजात्यव्याप्यत्वादिति वाच्यम् । विनिगमनाविरहाच्चाक्षुषसाक्षात्कार-प्रतिबन्धकतावच्छेदकवैजात्यं रसगन्धस्पर्शेषु त्रिषु एकमेव । त्वाचसाक्षात्कारप्रतिबन्ध-कतावच्छेदकवैजात्यन्तु चाक्षुषसाक्षात्कारप्रतिबन्धकतावच्छेदकवैजात्यव्याप्यं रस-गन्धयोरेकम्, रूपं च रूपत्वेन पृथगेव त्वाचप्रतिबन्धकमिति वैपरीत्यस्या-सुवचत्वात् । तस्माद्विनिगमकाभावाद्रूपस्पर्शयोः त्वाचत्वचाक्षुषत्वावच्छिन्नं प्र- रूपत्वस्पर्शत्वाभ्यां पृथगेव प्रतिबन्धकत्वम् । रसगन्धयोर्गुरुत्वस्थितिस्थापकयोः परस्परविरुद्धवैजात्यद्वयेन चाक्षुषत्वाचोभयं प्रति प्रतिबन्धकताद्वयम्, प्रतिबध्यता प्रत्येकं त्वाचत्वचाक्षुषत्वाभ्यां चाक्षुषत्वाचोभयमात्रनिष्ठेन प्रतिबन्धकतावच्छेदकतः सिद्धजातिविशेषेण वेत्यन्यदेतदिति प्राहुः ।

अन्ये तु द्रव्यादिचाक्षुषजनकतावच्छेदकतया रूपत्वजातिरि- त्वादीनामननुगतत्वात् । परमाण्वाद्यतीन्द्रियवृत्तिनीलादिषु च सांकर्यभयादेव रूपत्वाभ्युपगमादित्याहुः ।

**एवं नीलत्वादिकमपि प्रत्यक्षसिद्धम्। न चैकैका एव नीलादिव्यक्तय इत्येकव्यक्तिवृत्तित्वान्नीलत्वादिकं न जातिरिति वाच्यम्। नीलो नष्ट रक्त उत्पन्न इत्यादिप्रतीतेर्नीलादेरुत्पादविनाशशालितया नानात्वात्। अन्यथा एकनीलनाशे जगदनीलमापद्येत। न च नीलसमवाय-रक्तसमवाययोरेवोत्पाद-विनाशविषयकोऽसौ प्रत्यय इति वाच्यम्। प्रतीत्या समवायानुल्लेखात्। न**

प्रश्न—नील—पीत—आदि रूप व्यक्ति तो संसार में एक एक ही है—अतः उन एक एक व्यक्ति में रहने वाली नीलत्व—पीतत्व आदि जाति कैसे हो सकती है।

उत्तर - यह कथन ठीक नहीं—क्योंकि आमपाकनिक्षिप्त घट में यह प्रतीति होती है कि "नीलो नष्टः रक्त उत्पन्नः"—सो इस प्रतीति से नील आदि रूप व्यक्तियों को उत्पाद—विनाशशाली होने से नानात्व सिद्ध है—( अन्यथा ) एक ही नीलव्यक्ति यदि संसार में हो तो—उसके नाश होने पर संसार अनील हो जाना चाहिये।

प्रश्न—"नीलोनष्ट·-रक्त उत्पन्नः" इन प्रतीति का अर्थ है "नीलसमवायो नष्ट" 'रक्त समवाय उत्पन्नः' अतः उक्तप्रतीति—नील समवाय के नाश को तथा रक्तसमवाय के उत्पाद को ही विषय करती है—( इससे नीलादि व्यक्ति नाना सिद्ध नहीं हुवी—अपितु एक ही सिद्ध हुवी—इसलिये एकव्यक्तिमात्रवृत्ति नीलत्व होने से नीलत्व की जातित्व का खण्डन हो गया )।

उत्तर—"नीलो नष्ट·" रक्त उत्पन्नः" इन प्रतीतियों से समवाय का उल्लेख ही जब कि नहीं हो रहा है तो उक्तप्रतीति को समवायावगाहिनी नहीं मान सकते हैं।

---

तदसत्। चाक्षुषजनकतावच्छेदकतया तत्कल्पने रूपवद्द्रव्यनिष्ठैकत्वमादाय विनिगमनाविरहापत्तेः।

केचित्तु रूपपदवर्णपदशक्यतावच्छेदकतया लाघवाद्रूपत्वजातिसिद्धिरिति वदन्ति। तच्चिन्त्यम्।

**एवं नीलत्वादिकमपीति।** आदिना शुक्लत्वादीनां षण्णां संग्रहः। अपिना रूपत्वसमुच्चयः। प्रत्यक्षसिद्धमिति। वदन्तीति शेषः। अनुगतप्रतीतिसिद्धमित्यर्थः। अन्यथा नीलादीनामेकव्यक्तित्वे। **एकनीलनाशे।** आश्रयनाशादिना नीलनाशे सति। आपद्येतेति। तथाच विषयाभावेन कुत्रापि नीलचाक्षुषं न स्यादितिभावः। असौ प्रत्यय इति। नीलो नष्टः रक्त उत्पन्न इत्यादिप्रत्यय इत्यर्थः। इदमपि समवायस्य नानात्वमतेन। **समवायानुल्लेखादिति।** समवायानुपस्थापनादित्यर्थः। प्रत्यक्षस्य। स एवायं नील इति प्रत्यक्षस्य। तज्जातीयविषयकत्वादिति। पूर्वानुभूतनीलव्यक्ति-सजातीयनीलव्यक्तिविषयकत्वादित्यर्थः। लाघवान्न्विति। नीलादिव्यक्तेरैक्ये लाघव-न्नित्यर्थः। प्रत्यक्षबाधितमिति। नीलो नष्टः रक्त उत्पन्न इति प्रत्यक्षबाधितमित्यर्थः।

स एवायं नील इति प्रत्यक्षबलाल्लाघवाच्चैक्यमिति वाच्यम् । प्रत्यक्षस्य तज्जातीयविषयकत्वात्, सैवेयं गुर्जरीतिवत् । लाघवं तु प्रत्यक्षबाधितम् । अन्यथा घटादीनामप्यैक्यप्रसंगात् । उत्पादविनाशबुद्धेः समवायालंबनेनोपपत्तेरिति । एतेन रसादिकमपि व्याख्यातम् ।

चक्षुर्ग्राह्यमिति । चक्षुर्ग्राह्यविशेषगुण इत्यर्थः । एवमग्रेपि । द्रव्यादेरिति ।

प्रश्न—"स एवायं नीलः" इस प्रतीति के बल से—तथा लाघव से नील आदि को एक ही मान लिया जाय । ( इससे नीलत्व पीतत्व आदि को जातित्व का खंडन हो जावेगा ) ।

उत्तर—"स एवाऽयं नीलः" यह प्रत्यक्ष तज्जातीयविषयक है—अर्थात् यादृशनीलत्व जातिमान् वह नील देखा था—तादृश नीलत्वजातिमान् यह नील है । जैसे यह वही गुड़िया ( गुर्जरी ) है । और लाघव तो "नीलो नष्टो रक्त उत्पन्नः" इस प्रत्यक्ष प्रतीति से ही बाधित हो रहा है । अन्यथा घट—पट आदि को भी एक ही मान लिया जाय—( उस पर यदि आप यह कहें कि 'घट उत्पन्नः" घटो नष्टः इस प्रतीति से घट जब कि उत्पाद विनाशशाली सिद्ध हो रहा है तो एक कैसे हो सकता है—इस शंका में तुम्हारे की तरह हम भी यही उत्तर दे देंगे कि "घटोनष्टः" का अर्थ है कि "घटसमवायो नष्टः" सो इस प्रकार जैसे घट-पट आदि का ऐक्य प्रत्यक्ष से बाधित है-ऐसे ही नील-पीत आदि भी एक नहीं माने जा सकते हैं-अतः अनेक नील में वृत्ति होने के नाते नीलत्व जाति सिद्ध हो गयी ) ( एतेन ) इस पूर्वोक्त युक्ति से रसादिक भी व्याख्यात हो गये-अर्थात् रसादि भी नीलादि की तरह अनेक हैं अतएव उनमें भी रसत्व-मधुरत्व आदि जातियाँ सिद्ध हो जाती हैं ।

---

अन्यथा—लाघवमात्रेण नीलादिव्यक्तेरैक्याभ्युपगमे । ननु घटो नष्ट इतिबाधकप्रत्ययस्य सत्वान्नैक्यसिद्धिरतआह । उत्पादविनाशबुद्धेरिति । घटो नष्टः घटउत्पन्न इत्यादिप्रतीतेरित्यर्थः । समवायालंबनेति । समवायोत्पत्तिविनाशविषयकत्वस्वीकारेणेवेत्यर्थः । उपपत्तेरिति । प्रमात्वनिर्वाहादित्यर्थः । अतो घटो नष्ट इति वाक्याधीनशाब्दबोधे घटसमवायस्याविशेष्यत्वात् तादृशशब्दोल्लेखिप्रत्यक्षस्यापि समवायविषयकत्वासंभवेन घटध्वंसविषयकत्वस्यैवाऽवश्यमंगीकर्तव्यतया लाघवस्याऽकिंचित्करत्वाद् घटादीनामनेकत्ववत् तुल्ययुक्त्या नीलादीनामप्यनेकत्वमवश्यमंगीकार्यमिति भावः । एतेनेति । नीलस्याऽनेकत्वव्यवस्थापनेनेत्यर्थः । रसादिकमपीति । रसत्वादिकमपीत्यर्थः । आदिना मधुरत्वगन्धत्व सुरभित्व-स्पर्शत्वशीतत्वादीनां संग्रहः । संयोगादावतिव्याप्तिमाशंक्याह । चक्षुर्ग्राह्य मितीति । अत्र विशेषपदं न परिभाषिकविशेषगुणपरम् । किन्तु विलक्षणपरम् । वैलक्षण्यं च त्वगग्राह्यत्वम् । अथवा चक्षुर्ग्राह्यमितिसावधारणम् । तथाच त्वगिन्द्रियजन्यप्रत्यक्षीयलौकिकविषयतानवच्छेदकत्वे सति चाक्षुषप्रत्यक्षीयलौकिकविषयतावच्छेदको यो गुणविभाजको धर्मस्तद्वत्त्वं रूपस्य लक्षणम् । [illegible] । स्पर्शलक्षणेपीत्यर्थः ।

उपलम्भकं-उपलब्धिकारणम् । इदमेव विवृणोति । चाक्षुष इति । द्रव्यगुणकर्म-सामान्यानां चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणम् । शुक्लादिकमनेकधेति । तच्च रूपं शुक्लनीलपीतरक्तकर्बुरादिभेदादनेकप्रकारकं भवति ।

ननु कथं कर्बुरमतिरिक्तं रूपं भवति । इत्थम् । नीलपीताद्यवयवारब्धोऽवयवी न तावन्नीरूपोऽप्रत्यक्षत्वप्रसंगात् । नापि व्याप्यवृत्तिनीलादिक-

रूप द्रव्यादि का उपलंभक ( प्रत्यक्ष का कारण ) है-अर्थात् जिस द्रव्य में रूप रहेगा-उसी द्रव्य का चाक्षुष प्रत्यक्ष हो सकेगा-यही कहा है "चक्षुषः सहकारी स्यात्" इत्यादि। कि द्रव्य-गुण-कर्म-सामान्य-इन सबके चाक्षुषप्रत्यक्ष के प्रति उद्भूत रूप कारण होता है।

और वह रूप शुक्ल-नील पीत-रक्त-हरित-कपिश ( बन्दर का रूप ) कर्बुर-आदि भेद से सात प्रकार का है।

प्रश्न—कर्बुर ( चित्र ) रूप अतिरिक्त क्यों माना जाता है।

उत्तर—'इत्थम्' इसलिये अतिरिक्त माना जाता है कि जिस अवयवी का एक अवयव नील है-दूसरा पीत है-तीसरा अन्य रूपवान् है-उन नील-पीत आदि अनेक अवयवों से आरब्ध जो अवयवी-उसमें कौन-सा रूप मानना चाहिये-क्योंकि उस अवयवी को सर्वथा नीरूप तो कह नहीं सकते-कारण कि नीरूप मानने पर प्रत्यक्ष नहीं हो सकेगा। अतः यदि

---

कारणमिति । चाक्षुषप्रत्यक्षे सहकारिकारणमित्यर्थः । इदमेव । चाक्षुषकारणत्वमेव । विवृणोति । स्पष्टं बोधयति । उद्भूतरूपमिति । रूपमात्रस्य हेतुत्वे चक्षुरादेश्चाक्षुषापत्तेरतउद्भूतत्वविशेषणम् । कारणमिति । कार्यकारणभावस्तु "गृह्णाति चक्षुः संबन्धादालोकोद्भूतरूपयोः" इतिकारिकाव्याख्यानावसरे प्रपञ्चितः । अनेकधेति । मूलाद् ज्ञायते नवीनमते रूपं षड्विधम्, प्राचीनमते सप्तविधम् । अन्यथा सप्तधेत्येव ब्रूयात् ।

अथ अव्याप्यवृत्तिनीलादिसमुदाय एव चित्ररूपमिति प्रतीतिविषयः । न च नीलादीनामव्याप्यवृत्तित्वं विना नीलादीनां व्याप्यवृत्तित्वे का हानिरिति वाच्यम् । नीलादीनामव्याप्यवृत्तित्वं विना तत्समुदायस्य एकत्र वृत्तित्वाऽसंभवात् । एवं च तादृशनीलादिसमुदायविषयकत्वाङ्गीकारेणैव चित्ररूपमिति प्रतीत्युपपत्तेरतिरिक्तचित्ररूपाङ्गीकारो निष्प्रामाणिक इत्याशयेनाशंकते । नन्विति । विप्रतिपत्तिस्तु रूपत्वं नीलादिषड्न्यतमत्वव्याप्यं नवेत्याकारिका बोध्या । इत्थमिति । वक्ष्यमाणप्रकारेणाऽतिरिक्तं भवतीत्यर्थः । अप्रत्यक्षत्व प्रकारमाह । नीलपीतादिति । नीलपीतरक्ततन्त्वाद्यारब्धपटादिरित्यर्थः । अप्रत्यक्षत्व प्रसंगादिति । द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषं प्रति समवायेनोद्भूतरूपस्य हेतुतया तत्र कारणाभावादिति भावः । स्व स्वाश्रयसमवेतत्वसंबन्धेन रूपं प्रयोजक

मुत्पद्यते, पीतावच्छेदेनापि नीलोपलब्धिप्रसंगात्। नापि अव्याप्यवृत्तिनीलादिकमुत्पद्यते, व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात्।

उस अवयवी में व्याप्यवृत्ति ( सर्वावयवावच्छेदेन ) नील-पीत-आदि अनेक रूप उत्पन्न होते हैं-( अर्थात् उस अवयवी में नील पीत-शुक्ल आदि जितने भी रूप हैं-उन रूपों में से प्रत्येक रूप उस अवयवी के सब भागों में व्याप्त होकर वर्त्तमान है-ऐसा मानते हैं तो ) यह भी कहना ठीक नहीं है-क्योंकि पीतावच्छेदेन नील की उपलब्धि होने लगेगी-( अर्थात् उस अवयवी के जिस भाग में पीतरूप है-उस पीतभागावच्छेदेन अर्थात् पीतभाग में ( अवच्छेदेन-यह सप्तमी का अर्थ है ) नीलरूप की उपलब्धि होनी चाहिये—क्योंकि तुम तो व्याप्यवृत्ति मानते हो सो जहाँ पीत है वहाँ भी तुम्हारे मत से नील है ही है—एवं जहाँ नील है—उस नील भाग में पीतरूप की उपलब्धि होनी चाहिये। अतः व्याप्यवृत्ति नीलादि उस अवयवी में उत्पन्न होते हैं—यह नहीं कहा जा सकता है ] और यदि नील-पीत आदि अनेक अवयवों से आरब्ध उस अवयवी के किसी भाग में नील--किसी में पीत--इस क्रम से अव्याप्यवृत्ति अर्थात् उसमें व्याप्त होकर न रहने वाले नीलादि की उत्पत्ति मानते हैं तो वह ठीक नहीं—क्योंकि नीलादि वस्तुतः व्याप्यवृत्ति हैं—अब यदि उन्हें अव्याप्यवृत्ति माना जायगा तो विरोध हो

---

मिति वाच्यम्। गौरवात्। स्वाश्रयसमवेतत्वस्य स्वाश्रयसमवेतसमवेतत्वस्य वा प्रयोजकत्वमित्यत्र विनिगमकाभावात्कार्यकारणभावद्वयापाताच्च। तत्रसाक्षात्संबन्धग्राहित्वस्य प्रमात्वस्य चानुभवसिद्धत्वाच्च। नच व्याप्यवृत्तीनि एव तत्र नीलपीतादिनानारूपाणि अवयवति उत्पद्यन्ते इति वाच्यम्। नीलावयवावच्छेदेन चक्षुसंयोगदशायामपि पीताद्युपलंभः, पीतावयवावच्छेदेन चक्षुःसंयोगदशाय नीलाद्युपलंभः स्यात्, व्याप्यवृत्तिजात्यादितुल्यत्वादित्याह। **नापीति**। **व्याप्यवृत्तीति**। दैशिकाव्याप्यवृत्तीत्यर्थः। कालिकाऽव्याप्यवृत्तित्वं तु अस्यास्त्येवेति भावः तत्वं च यावदवयवावच्छेद्यत्वम्। **पीतावच्छेदेनापीति**। यावदवयवावच्छेदेनेत्यर्थः **नीलोपलब्धिप्रसंगादिति**। नीलाद्येकैकस्यैवोपलब्धिप्रसंगादित्यर्थः तथाच नीलादेर्व्याप्यवृत्तितया नानारूपवदवयवारब्धे पटे एकरूपव्यक्तेरेवोत्पत्तिसंभवेन एकरूपस्यैव प्रत्यक्षं स्यान्नान्यरूपस्य, परस्परविरोधे तु कस्यापि प्रत्यक्षंनस्यादिति भावः।

नच तथापि अव्याप्यवृत्तीनि एव नीलपीतादिनानारूपाणि तत्रावयविन्युत्पद्यन्ते अव्याप्यवृत्तित्वोपगमाच्च न नीलावयवावच्छेदेन चक्षुः संनिकर्षदशायां पीताद्युपलंभ पीतावयवावच्छेदेन चक्षुः सन्निकर्षदशायां च न नीलाद्युपलंभः। चक्षुःसंयोगावच्छेदकावच्छिन्नसमवायसंबन्धावच्छिन्नाधारतालक्षणसन्निकर्षस्य निरूपकतासंबन्धे विषयनिष्ठतया द्रव्यसमवेतचाक्षुषे हेतुत्वात्। अन्यथा मूलावच्छेदेन वृक्षे चक्षुःसंयोगादपिअग्रावच्छिन्नसंयोगकर्मादिचाक्षुषापत्तेरिति वाच्यम्। एवमपि परमाणु नीलादेर्व्याप्यवृत्तिया पटादिसमवेतनीलादेः तत्सजातीयतया न तेषामव्याप्यवृत्तित्व

**तस्मान्नानाजातीयरूपैरवयविनि विजातीयं चित्ररूपमारभ्यते । अत एव एकं चित्रमित्यनुभवोपि, नानारूपकल्पने गौरवात् ।**

जायेगा । इसलिये नानाजातीयरूप वाले नाना अवयवों से उत्पन्न अवयवी में एक विजातीय 'चित्र' रूप ही मानना होगा—( और वह चित्ररूप व्याप्यवृत्ति है ) इसीलिये "एकं चित्रं रूपम्" यह अनुभव भी होता है—पूर्वोक्तरीत्या नानारूप की कल्पना करना गौरव है ।

---

कल्पयितुं शक्यम्, विरोधादित्याह । **नापीति** । अव्याप्यवृत्तिनीलादिकमिति । दैशिकाऽव्याप्यवृत्तिनीलादिकमित्यर्थः । तथाच एतदवयवेऽवयवेषु यावन्ति रूपाणि तत्तद्रूपाणां अवयविनि विरोधाभावेनोत्पत्तिसम्भवान्न प्रत्यक्षत्वानुपपत्तिरिति भावः । **व्याप्यवृत्तिजातीयेति** । व्याप्यवृत्तिजातिश्च सविषयावृत्तिर्बोध्या, तेन व्याप्यवृत्तीश्वरज्ञानजातीयस्याऽस्मदादिज्ञानस्याव्याप्यवृत्तित्वेपि न क्षतिः । **विरोधादिति** । एकत्र वर्तमानत्वाऽसंभवादित्यर्थः । **तस्मादिति** । पीतादिनामव्याप्यवृत्तित्वाऽसंभवादित्यर्थः । **नानाजातीयरूपैरिति** । अवयवसमवेतनीलादिरूपैरित्यर्थः । विजातीयमिति । नीलादिषट्कान्यतमवृत्तिरूपविभाजकजातिभिन्नरूपविभाजकजात्याश्रयमित्यर्थः । चित्ररूपमिति । व्याप्यवृत्तीत्यादिः । **अतएवेति** । अतिरिक्तरूपस्वीकारादेवेत्यर्थः । **एकमिति** । अतिरिक्तरूपानंगीकारे नीलादीनां बहुत्वात् एकत्वप्रकारकानुभवो न स्यादिति भावः । **अनुभवोपीति** । उपपद्यते इति शेषः ।

तथाच चित्रनामकं विलक्षणरूपं स्वीकार्यम्, नीलमात्रारब्धेऽवयविनि नीलः पटः नीलंरूपमितिप्रतीतिवन्नीलपीतादिविजातीयनानारूपवदवयवारब्धेऽवयविन्यपि चित्रः पटः, चित्रं रूपमित्यादिप्रतीते सर्वसिद्धत्वात् । अथ समानाधिकरणसमानकालीननानारूपमेव तद्विषयः, एकं चित्रमितिप्रतीतिरपि एकोधान्यराशिरितिवद्विलक्षणसमूहत्वविषयकेत्यत आह । **नानारूपकल्पनेगौरवादिति** । अनेकेषु नानारूपेषु चित्रमितिप्रतीतिविषयतास्वीकारे गौरवादित्यर्थः । नीलपीतादिविजातीयनानारूपकल्पनामपेक्ष्य एकचित्रकल्पनाया एव लघुत्वात् । न च चित्रपटादावपि नीलपटः इत्यादिप्रतीतेस्तत्रापि तत्र नीलपीतादिनानारूपकल्पनमावश्यकमिति वाच्यम् । स्वाश्रयसमवेतत्वादिपरंपरयाऽवयवनीलादिविषयकत्वेनैव तादृशप्रतीत्युपपत्तेः । साक्षात्संबन्धावगाहिप्रतीतेश्चाऽनन्तरूपकल्पनागौरवात्मकबाधकबलेनाऽप्रमात्वात् । एतेन लोहितइत्यादिस्मृतिरपि व्याख्याता, तस्या अपि परंपरयाऽवयवनीलादिविषयकत्वात् । न चैवंतत्र लाघवादवयवी नीरूप एवाभ्युपेयताम्, चित्रप्रतीतेश्च परंपरयाऽवयववृत्तिविजातीयनानारूपविषयकत्वेनैवोपपत्तेरिति वाच्यम् । तेषामरूपत्वेऽप्रत्यक्षत्वापत्तेः, परंपरया रूपवत्त्वन्तु न प्रत्यक्षत्वप्रयोजकम्, गौरवात् । परंपराया अननुगमाच्च । न च तथापि चित्ररूपस्थलेऽवयवनीलपीतादिसत्त्वेन सामग्रीसत्त्वादवयविनि नीलपीतादिकं दुर्वारमिति वाच्यम् । वक्ष्यमाणक्रमेण प्रतिबध्यप्रतिबन्धकभावकल्पन-

**इत्थं च नीलादीनां पीताद्यारम्भे प्रतिबन्धकत्वकल्पनादवयविनि न पीताद्युत्पत्तिः ।**

प्रश्न—चित्ररूप स्वीकार करने पर उक्त अवयवी के नीलभाग में पीतरूप की उपलब्धि क्यों नहीं होती है ।

उत्तर—चित्ररूप स्वीकार करने पर नीलावच्छेदेन अर्थात् नीलभाग में पीतरूप की उपलब्धि इसलिये नहीं होती है कि उस उक्त अवयवी के नीलभाग में यदि पीत की उत्पत्ति हो तब पीतरूप की उपलब्धि हो सकती है—परन्तु नीलावच्छेदेन पीत के आरम्भ ( उत्पत्ति ) में नील ही प्रतिबन्धक हो जायेगा—अतः उस अवयवी में नीलावच्छेदेन पीतादि की उत्पत्ति नहीं होती है, ( एतेन ) चित्ररूप की व्याख्या के अनुसार चित्रस्पर्श की व्याख्या भी जानना उचित है—अर्थात् चित्ररूपवत् चित्रस्पर्श अवश्य मानना चाहिये—अन्यथा चित्ररूपस्थलीय

---

नयैव नीलपीताद्युत्पादवारणसंभवात् । न चैवं बहुतरप्रतिबध्यप्रतिबन्धकभावकल्पने गौरवमिति वाच्यम् । अनन्तविजातीयनानारूपतत्प्रागभाव-तद्ध्वंस-तत्कार्यकारणभावकल्पनामपेक्ष्य कतिपयप्रतिबध्यप्रतिबन्धकभावादिकल्पनाया एव लघुत्वात् ।

ननुचित्ररूपाधिकरणे घटादौ स्वाश्रयसमवेतत्वसंबन्धेन कपालनीलादीनां कारणानां सत्वात्कथं तत्र न नीलाद्युत्पत्तिरित्यत आह । **इत्थंचेति** । उक्तलाघवेन चित्ररूपसिद्धौ चेत्यर्थः । **पीताद्यारम्भे** इति । पीतत्वावच्छिन्ने इत्यर्थः । **प्रतिबन्धकत्वकल्पनादिति** । समवायेन नीलं प्रति स्वसमवायिसमवेतत्वसंबन्धेन नीलान्यरूपत्वेन, पीतरूपं प्रति पीतान्यरूपत्वेन प्रतिबन्धकत्वकल्पनादित्यर्थः । इदमत्र तत्वम् । समवायेन नीलादिकं प्रति स्वसमवायिसमवेतत्वसंबन्धेन नीलादेः कारणत्वस्य सर्वमतसिद्धतया, चित्ररूपाङ्गीकर्तृतदनङ्गीकर्तृउभयमते नानारूपवदवयवारब्धावयविनि घटे स्वसमवायिसमवेतत्वसंबन्धेन कपालनीलादीनां सत्वात्पीतावच्छेदेन नीलाद्युत्पत्तिवारणाय समवायेन नीलं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलान्यरूपत्वेन प्रतिबन्धकत्वस्यावश्यकतया उभयत्र साम्येपि चित्रमिति प्रतीतिविषयताया अनेकेषु रूपेषु कल्पनागौरवं परमतिरिच्यते इति ।

न च तथापि तत्र नीलाद्युत्पत्तिवारणाय नीलजनीलादिकं प्रति स्वाश्रयसमवेतत्वसंबन्धेनावयविनिष्ठनीलाद्यभाव एव प्रतिबन्धकोस्तु नीलान्यरूपत्वापेक्षया लघुत्वादिति वाच्यम् । तथासति यत्र पीतावयवद्वयारब्धेऽवयविनि यत्किंचिदवयवावच्छेदेन पाकात्तदवयवावयविनोः पीतनाशः ततो द्वितीयक्षणे पाकात्तदवयवे नीलोत्पत्त्याऽवस्थितावयवपीतसहकारेण तृतीयक्षणेऽवयविनि चित्रोत्पत्तिः-तद्द्वितीयक्षणे पाकात्तदवयविनि नीलोत्पत्तिप्रसंगात्, अवयवे रूपजनकाग्निसंयोगदशायां अवयविन्यपि तादृशाग्निसंयोगनियमात्, अवयवगतनीलाद्यभावस्य नीलजनीलादिकं प्रत्येव प्रतिबन्धकत्वात् । न च सामान्यतोनीलत्वपीतत्वाद्यवच्छिन्नं प्रत्येवावयवनिष्ठनीलपीतेतररूपादेः प्रतिबन्धकत्वाभ्युपगमेपि तत्र द्वितीयक्षणेऽवयवपीतादवयविनि पीतोत्पत्तिर्दुर्वारा, पीतेतररूपस्य प्रतिबन्धकस्यावयवे पूर्वकाले

विरहादिति वाच्यम्। नीलत्वपीतत्वाद्यवच्छिन्नं प्रति अवयवनीलपीतेतररूपादेः प्रतिबन्धकत्वस्य कार्यसहभावेनाभ्युपगमादेव तद्वारणसंभवात्।

*नव्यास्तु* चित्रोत्पत्तिसमये नीलाद्युत्पत्तिवारणाय पाकजव्याप्यवृत्तिनीलत्वादिव्याप्यजातिविशेषावच्छिन्नं प्रति नीलाद्यभाव एव स्वाश्रयसमवेतत्वसंबन्धेन प्रतिबन्धको वाच्यः, न तु नीलादिकं प्रति नीलेतररूपादिः, नीलाभावत्वादिकमपेक्ष्य नीलेतररूपत्वादेर्गुरुत्वात्। न चोक्तदोषः। रूपनाशकविलक्षणाग्निसंयोगस्य फलबलकल्प्यतया तत्रावयवेऽग्निसंयोगोत्पत्तिद्वितीयक्षणे एवावयविनि तादृशाग्निसंयोगकल्पनादेव द्वितीयक्षणेऽवयविनि पाकान्नीलोत्पत्त्यसंभवात्, रूपवति रूपान्तरानुत्पत्तेः। न हि अवयवे रूपनाशकाऽग्निसंयोगदशायामवयविन्यवश्यं तादृशाग्निसंयोगो, मानाभावात्। न चैवं द्वितीयक्षण चित्रोत्पत्तिरेव कथं स्यात्, द्वितीयक्षणेऽवियविनि रूपान्तरसत्त्वादिति वाच्यम्। चतुर्थक्षणे एव तत्र चित्रोत्पादात्, क्षणैकविलंबस्य चाऽदोषत्वात्।

न चैवमपि यत्र नीलपीतरक्तत्रितयारब्धे चित्रावयविनि नीलावयवावच्छेदेनाग्निसयोगात्तदवयववृत्तिनीलनाशसमकालं चित्रनाशः ततस्तदवयवे पाकाच्छुक्लोत्पत्त्या शुक्लपीतरक्तत्रितयजन्यचित्रोत्पत्तिः तत्र पाकादवयवे शुक्लोत्पत्तिसमयेऽवयविनि पीतरक्तोभयजन्यचित्रोत्पत्तिर्दुर्वारा, नीलाद्यभावस्य नीलादिकं प्रत्येव प्रतिबन्धकत्वादिति वाच्यम्। सामान्यतश्चित्रत्वावच्छिन्नं प्रति स्वाश्रयसमवेतत्वसंबन्धेन रूपाद्यभावस्य, समवायसंबन्धेन विनश्यदवस्थरूपनाशकविलक्षणाग्निसंयोगस्य वा प्रतिबन्धकत्वम्, अन्यथा त्वन्मते पि अप्रतीकारात्। अत एव चित्रत्वजातिरपि प्रामाणिकी, रूपाभावादेः प्रतिबध्यतावच्छेदकतयैव तत्सिद्धेरिति प्राहुः।

अथाऽतिरिक्तचित्ररूपाभ्युपगन्तृनयेऽवयवनिष्ठ नीलपीतादिविजातीयनानारूपाणां केन रूपेण हेतुत्वम्, न तावद्रूपत्वेन चित्रत्वेन, नीलपीताद्येकतरमात्रारब्धेपि चित्रोत्पत्त्यापत्तेः। न च प्रागभावविरहात्तत्र तदनुत्पाद इति वाच्यम्। एकावयवे पाकेन विजातीयरूपोत्पत्त्या यत्रावयविनि चित्रोत्पत्तिर्भविता तत्र तस्यापि सत्त्वात्। पिठरपाकस्य व्यवस्थापनीयत्वात्, प्रागभावस्य तत्कारणत्वस्य च निराकर्त्तव्यत्वाच। नापि विजातीयनानारूपत्वेन, सर्वस्यैव रूपस्य रूपान्तरविजातीयत्वादिति चेन्न। समवायेन चित्रत्वावच्छिन्नं प्रति स्वाश्रयसमवेतत्वसंबन्धेन रूपविशिष्टरूपत्वेनैव हेतुत्वात्। रूपे रूपवै०स्वविजातीयत्व–स्वसमनियतत्वोभयसं०। तेन नीलपीताद्येकतरमात्रारब्धे अवयविनि न चित्रोत्पत्तिः। समनियतत्वघटकव्याप्यत्वव्यापकत्वे स्वसमवायिसमवेतत्वसंबन्धेन बोध्ये। स्वविजातीयत्वं च चित्रत्वातिरिक्तस्ववृत्तिजातिभिन्नजातिमत्त्वम्। तेन चित्रमात्राच्च चित्रोत्पादाऽसंभवः। शुक्लतरशुक्लतमाभ्यामपि चित्रोत्पादः, यदि च ताभ्यां विलक्षणशुक्लोत्पाद एव तदा तु रूपत्वसाक्षाद्व्याप्यत्वेन चरमजातिविशेष्येति ध्येयम्।

*अन्येतु* चित्रत्वावच्छिन्नं प्रति रूपत्वेनैव हेतुत्वम्। नचैवं नीलमात्रादपि

**एतेन स्पर्शोऽपि व्याख्यातः। रसादिकमपि नाव्याप्यवृत्ति, किन्तु नानाजातीयरसवदवयवैरारब्धेऽवयविनि रसाभावेऽपि न क्षतिः। तत्र रसमयाऽवयवरस एव गृह्यते, रसनेन्द्रियादीनां द्रव्यग्रहे सामर्थ्याभावादवयविनो नीरसत्वेऽपि क्षतेरभावात्।**

दोष वहां भी हो जायेंगे। इसी प्रकार रसादिक भी अव्याप्यवृत्ति नहीं हैं—किन्तु मधुर आदि नाना रस वाले अवयवों से आरब्ध ( उत्पन्न ) अवयवी में रस भि भी मानें तो कोई हानि नहीं है। उस अवयवी में रसनेन्द्रिय से अवयव के रस का ही प्रत्यक्ष होता है—रसन आदि इन्द्रियों की ( चक्षु:-त्वक् को छोड़कर ) द्रव्यप्रत्यक्ष करने की सामर्थ्य नहीं है—इसलिये यहाँ अवयवी को नीरस मानने में भी कोई हानि नहीं है। ( अभिप्राय यह है कि रूपस्थल में तो नानारूप

---

चित्रोत्पत्तिप्रसंग इति वाच्यम्। चित्रत्वावच्छिन्नं प्रति चित्रेतररूपत्वावच्छिन्नाभावस्यापि कार्यसहभावेन हेतुत्वादिति वदन्ति।

नव्यास्तु चित्रत्वावच्छिन्नं प्रति रूपत्वेनैव हेतुत्वम्। नचैवं नीलमात्रादपि चित्रोत्पादप्रसंग इति वाच्यम्। नीलपीतमात्रारब्धे नीलरक्तमात्रारब्धे नीलरक्तपीतत्रितयमात्रारब्धे परस्परविलक्षणतत्तच्चित्रविशेषं प्रति नीलत्वपीतत्वाभ्यां नीलत्वरक्तत्वाभ्यां नीलत्वरक्तत्वपीतत्वादिभिर्हेतुतावश्यकत्वेन तत्तद्विशेषसामग्रीविरहादेव तत्र चित्रानुत्पादात्, विशेषसामग्रीसहिताया एव सामान्यसामग्र्या कार्योपधायकत्वादित्याहुः।

**एतेनेति**। चित्ररूपनिरूपणेनेत्यर्थः। **स्पर्शोऽपीति**। अपिना रूपसमुच्चयः। यथा रूपं व्याख्यातं तथा स्पर्शोऽपि व्याख्यातप्राय इत्यर्थः। प्राचीनमते स्पर्शस्यापि व्याप्यवृत्तितया सुकुमारकठिनादि नानास्पर्शवदवयवारब्धेऽवयविनि एकस्पर्शव्यक्तेरेवोत्पत्तिसंभवेन एकस्पर्शस्यैव प्रत्यक्षं स्यान्नान्यस्पर्शस्य, परस्परविरोधे तु कस्यापि प्रत्यक्षं न स्यात्, अतो लाघवाच्च चित्रैकस्पर्शोऽभ्युपयते नानास्पर्शाभ्युपगमेऽनन्तव्यक्तिकल्पनापत्तेः, निःस्पर्शत्वाभ्युपगमे च स्पार्शनानुपपत्तेरिति भावः। **रसादिकमपीति**। प्राचीनमते इत्यादिः। आदिना गन्धपरिग्रहः। अपिना स्पर्शसमुच्चयः। तथाच यथा स्पर्शो न दैशिकाऽव्याप्यवृत्तिः, तथा रसो गन्धश्च न दैशिकाव्याप्यवृत्तिरिति भावः। ननु तर्हि मधुरादिनानारसवदवयवारब्धावयविनो नीरसत्वापत्तिरित्यत्रेष्टापत्तिमाह। **किन्त्विति**। **न क्षतिरिति**। पृथिव्यादेररूपत्वेऽस्पर्शत्वेऽप्रत्यक्षत्वरूपो यो दोषः स अवयविनो नीरसत्वे नास्तीत्यर्थः। तथाच गन्धरसौ चित्रौ न स्वीक्रियेते, सुरभ्यसुरभ्यारब्धे, तिक्तमधुराद्यारब्धे च लाघवान्निर्गन्धत्वस्य नीरसत्वस्यैव चोपगमात्। घ्राणरसनयोर्द्रव्याऽग्राहकत्वादप्रत्यक्षतापत्तिरूपस्य दोषस्य तत्राऽभावात्। तिक्तमधुराद्यारब्धे तिक्तादिप्रतीतेः, षड्रसाहरीतकीत्यादिप्रतीतेश्च परंपरयैवोपपत्तेः। नच तिक्तमधुराद्यारब्धे सुरभ्यसुरभ्यारब्धे च

वाले अवयवों से उत्पन्न अवयवी में अगत्या चित्ररूप मानना पड़ता है—अन्यथा अप्रत्यक्ष की आपत्ति हो रही है—ऐसे ही चित्रस्पर्श न मानने पर भी अप्रत्यक्ष की आपत्ति लग जायगी—अतः चित्रस्पर्श अवश्य ही मानना चाहिये—परन्तु चित्ररस न मानने पर क्या हानि है—हानि यही कह सकते हैं कि नानारस वाले अवयवों से आरब्ध अवयवी का प्रत्यक्ष नहीं होगा—इसमें इष्टापत्ति हम कर लेंगे अतः चित्ररस मानने की कोई आवश्यकता नहीं है)।

---

सामग्रीसत्त्वाद् गन्धरसोत्पत्तिर्दुर्वारेति वाच्यम्। अनन्तरसगन्धकल्पनामपेक्ष्य लाघवेन तिक्तजन्यतिक्तादिकं प्रति स्वाश्रयसमवेतत्वसंबन्धेन तिक्ताद्यभावस्य, सुरभिजन्यसुरभ्यादिकं प्रति स्वाश्रयसमवेतत्वसंबन्धेन सुरभ्याद्यभावस्य च प्रतिबन्धकत्वकल्पनात्, सामग्र्या एवाऽसिद्धेः। वस्तुतस्तु जन्यरसत्वावच्छिन्नं प्रति रसत्वावच्छिन्नं प्रति वा रसविशिष्टरसत्वेन, गन्धत्वावच्छिन्नं प्रति च गन्धविशिष्टगन्धत्वेन प्रतिबन्धकत्वम्। वै० पूर्ववत्।

नचैवं रूपेण सामान्यतः प्रतिबध्यप्रतिबन्धकभावे विजातीयनानारसवदारब्धनीरसावयवसरसावयवाभ्यामारब्धेऽवयविन्यपि रसोत्पत्तिप्रसंग इति वाच्यम्। रसजन्यरसत्वावच्छिन्नं प्रति स्वाश्रयसमवेतत्वसंबन्धेन रसादिसामान्याभावस्यापि पृथक् प्रतिबन्धकत्वात्। रसजन्यरसत्वं च जन्यतासंबन्धेन रसवद्रसत्वम्। तेन जन्यताया अननुगतत्वेपि न क्षतिरित्येतत्सर्वं मनसि निधायाह। तत्रेति। नानारसवद्वयवारब्धनीरसावयविनि इत्यर्थः। गृह्यत इति। अवयवरस एव रसनेन्द्रियजन्यप्रत्यक्षीयलौकिकविषयतावानित्यर्थः। रसनेन्द्रियादीनामिति। आदिना घ्राणश्रोत्रयोः परिग्रहः। सामर्थ्याभावादिति। कारणत्वाभावादित्यर्थः। अवयविन इति। नानारसवदवयवारब्धावयविन इत्यर्थः। क्षतेरभावादिति। द्रव्यरासनानुपपत्तिरूपदोषाभावादित्यर्थः। इदमुपलक्षणम्। सुरभ्यसुरभ्यवयवारब्धावयविनो निर्गन्धत्वेपि न क्षतिः। इदमत्रविभावनीयं चित्ररस-चित्रगन्धास्वीकारे सुरभ्यसुरभि द्व्यणुकद्वयारब्धे त्रसरेणौ रस-गन्धयोर्भानं न स्यात्। द्व्यणुकरस गन्धयोरयोग्यत्वादिति। घ्राणेन्द्रियेणाऽवयवगन्धस्यैव ग्रहणात्। घ्राणेन्द्रियस्य द्रव्यग्रहे सामर्थ्याभावाच्चेति।

अत्रेदं चिन्त्यते—नीलपीतादिविजातीयनानारूपवदवयवारब्धेऽवयविनि नीलपीतादिप्रत्ययस्यानुभवसिद्धत्वात्तत्र नीलपीतादेरावश्यकत्वेऽतिरिक्तचित्ररूपकल्पनायामुक्तक्रमेण तस्याऽतिरिक्तकार्यकारणभावकल्पनायां गौरवान्मानाभावाच्च। चित्रप्रत्ययस्य नीलपीतादिसमानाधिकरणसमानकालीनविजातीयनानारूपैरेवोपपत्तेः। नच नीलादिप्रतीतिः परंपरासंबन्धावगाहिनीति वाच्यम्। तत्र साक्षात्संबन्धावगाहित्वस्य प्रमात्वस्य चानुभवसिद्धत्वात्, अन्यथा लाघवान्नीलादेः त्रसरेणुपर्यन्तमात्रगतत्वप्रसंगात्, अन्यत्र तत्प्रतीतेः परंपरयैवोपपत्तेः। नचाऽन्येषां नीरूपत्वेऽप्रत्यक्षत्वापत्तिरिति वाच्यम्। अनुद्भूतत्वाभावकूटवद्रूपत्वेन प्रत्यक्षकारणत्वकल्पना-

मपेक्ष्य लाघवादुद्भूतैकत्वत्वेनैव प्रत्यक्षकारणतया नीरूपत्वेपि प्रत्यक्षतासंभवात्। एकत्वनिष्ठोद्भूतत्वं च एकत्वत्वव्याप्यजातिविशेषः। नच ममापि अनुद्भूतत्वाभावकूटवद्रूपत्वेन न हेतुत्वमपि तु रूपत्वेनैव, अनुद्भूतरूपे मानाभावादिति वाच्यम्। तथापि च चतुरणुकाद्यन्त्यावयविपर्यन्तेषु अनन्तरूपव्यक्तिकल्पनामपेक्ष्य लाघवादेकत्वनिष्ठोद्भूतत्वाख्यजातिविशेषस्यैकस्यैव प्रत्यक्षजनकतावच्छेदकतया कल्पयितुमुचितत्वात्। नचावयवनीलादेरवयविनीलादिकारणतया सामग्रीवलेनाऽन्यत्रापि तत्स्यादिति वाच्यम्। जन्यरूपत्वावच्छिन्नं प्रति रूपत्वावच्छिन्नं प्रति वा स्वाश्रयसमवेतत्वसंबन्धेन महत्वस्य प्रतिबन्धकतायाः सुवचत्वेनाऽन्यत्र सामग्र्या एवाऽसिद्धेः। अनन्तरूपव्यक्तिकल्पनामपेक्ष्य प्रतिबध्यप्रतिबन्धकभावैककल्पनाया एव लघुत्वात्। तस्मादन्यत्रापि साक्षात्संबन्धेन नीलादिमत्वप्रतीते यथार्थत्वस्यानुभवसिद्धतया साक्षात्संबन्धेन नीलादिमत्वमुपेयम्। तच्च प्रकृतेपि। नचैवं चित्रः पटः चित्रं रूपमित्यादिप्रतीतेरतिरिक्तचित्रावगाहित्वमप्यनुभवसिद्धमिति वाच्यम्। तदसिद्धेः। अन्यथैवं प्रतिबन्द्या विषयव्यवस्था क्वापि न स्यात्। अत एव चित्रमपि नातिरिक्तं रूपमिति गुणदीधितौ पदार्थखण्डने च भट्टाचार्याः। एतेन तिक्तमधुराद्यारब्धे सुरभ्यसुरभ्यारब्धे चावयविनि चित्ररूपवादिनां लाघवान्नीरसत्वनिर्गन्धत्वाद्युपगमोपि प्रत्याख्यातः। तत्रापि साक्षात्संबन्धेन तिक्तादिप्रत्ययस्य सौरभादिप्रत्ययस्य चाऽबाधितत्वेन सर्वानुभवसिद्धत्वात्। अन्यथा रसगन्धयोः त्रसरेणुमात्रगतत्वप्रसंगात्। अन्यत्र तत्प्रतीतेः परंपरयैवोपपत्तेः। नच सामग्रीवलेनाऽन्यत्रापि तत्सिद्धिरिति वाच्यम्। सामान्यतो रसत्वगन्धत्वावच्छिन्नं प्रति स्वाश्रयसमवेतत्वसंबन्धेन महत्वस्य प्रतिबन्धकतायाः सुवचत्वेनाऽन्यत्र सामग्र्या एवाऽसिद्धेः। अनन्तरसगन्धव्यक्तिकल्पनामपेक्ष्य प्रतिबध्यप्रतिबन्धकभावैककल्पनाया एव लघुत्वात्। तस्मादन्यत्रापि साक्षात्संबन्धेन तिक्तादिमत्वप्रतीतेर्याथार्थ्यस्यानुभवसिद्धतया साक्षात्संबन्धेन रसगन्धवत्वमुपेयम्, तच्च प्रकृतेपि तुल्यमिति संक्षेपः।

विनिगमकाभावादव्याप्यवृत्तीनि नीलपीतादिविजातीयनानारूपाण्येव तत्रावयविनि उत्पद्यन्ते। अव्याप्यवृत्तित्वोपगमाच्च न नीलावयवावच्छेदेन चक्षुःसन्निकर्षदशायां पीताद्युपलंभः, पीतावयवावच्छेदेन चक्षुःसन्निकर्षदशायां च न नीलाद्युपलंभः। चक्षुःसंयोगावच्छेदकावच्छिन्नसमवायसंबन्धावच्छिन्नाधारतालक्षणसन्निकर्षस्य निरूपकतासंबन्धेन विषयनिष्ठतया द्रव्यसमवेतचाक्षुषे हेतुत्वात्, अन्यथा मूलावच्छेदेन वृक्षे चक्षुःसंयोगादपि अग्रावच्छिन्नवृक्षसमवेतकर्मादिचाक्षुषापत्तेः। व्याप्यवृत्तिजात्याधारत्वस्यापि अवच्छेदकाभ्युपगमाच्च न व्याप्यवृत्तिजात्यादिचाक्षुषे व्यभिचारः। अस्तु वा द्रव्यसमवेताऽव्याप्यवृत्तिचाक्षुषं प्रति चक्षुःसंयोगावच्छेदकावच्छिन्नसमवायसंबन्धावच्छिन्नाधारता–द्रव्यसमवेतव्याप्यवृत्तिचाक्षुषं प्रति चक्षुःसंयुक्तनिष्ठसमवायसंबन्धावच्छिन्नव्याप्यवृत्त्याधारतासन्निकर्षः। नचैवं कार्यकारणभावद्वयकल्पने गौरवमितिवाच्यम्। अव्याप्यवृत्तिकर्मादिचाक्षुषानुरोधेन तादृशकार्यकारणभावद्वयस्य सर्वसिद्धत्वादित्याशयवतां मतमाह। **नव्यास्त्विति।** तत्र। नानारूपवदवयवारब्धेऽवयविनि। **अव्याप्यवृत्ति।** अवच्छिन्नवृत्तिकं।

नव्यास्तु तत्राऽव्याप्यवृत्त्येव नानारूपम्, नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात् । अतएव "लोहितो यस्तुवर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते" इत्यादिशास्त्रमपि उपपद्यते । नच व्याप्याव्याप्यजातीययोर्द्वयोर्विरोधो, मानाभावात् । नच लाघवादेकं रूपम् । अनुभवविरोधात् । अन्यथा घटादेरपि लाघवादैक्यं स्यात् । एतेन स्पर्शादिकमपि व्याख्यातमिति वदन्ति ॥१००॥

नव्य लोग कहते हैं कि नानारूप वाले अनेक अवयवों से आरब्ध अवयवी में अव्याप्यवृत्ति ही नानारूप है—[ अर्थात् किसी भाग में नील है तो किसी में पीत है—इत्यादि ] चित्ररूप कोई वस्तु ही नहीं है—क्योंकि चित्ररूप मानने पर "इत्थं च नीलादीनां पीताद्यारम्भे" इत्यादि ग्रन्थ से नीलादि को पीताद्यारम्भ में जो प्रतिबन्धकत्व की कल्पना की है उसमें गौरव है । इसीलिये "लोहितोयस्तुवर्णेन मुखे पुच्छेच पाण्डुरः" इत्यादि शास्त्र वचन भी उपपन्न हो जाता है—अर्थात् नीलवृषोत्सर्ग के उद्देश्य से स्कन्द पुराण में ऐसा कहा है कि जो वृष वर्ण से तो ( लोहित ) लाल हो—मुख-और पूँछ में पीतरूप हो—खुर और विषाण ( सींग ) से श्वेत हो—वह नीलवृष कहा है ।

प्रश्न—प्राचीन कहते हैं कि वस्तुतः रूपादि तो व्याप्यवृत्ति हैं—अब यदि आप नाना रूप वाले अनेक अवयवो से आरब्ध अवयवी में अव्याप्यवृत्ति नानारूप मानेंगे तो व्याप्यवृत्तित्व के साथ अव्याप्यवृत्तित्व का विरोध है—अतः व्याप्यवृत्ति रूपादि में अव्याप्यवृत्तित्व कैसे युक्तियुक्त होगा ।

उत्तर—इस व्याप्यवृत्तित्व-अव्याप्यवृत्तित्व के विरोध में कोई प्रमाण नहीं है ।

प्रश्न—उक्त अवयवी में नानारूप मानने की अपेक्षा एक चित्र ही रूप क्यों न मान लिया जाय ।

उत्तर—पूर्वोक्त शास्त्रवचन के अनुभव का विरोध होने से चित्ररूप नहीं माना जा सकता है । अन्यथा घट आदि को भी लाघवात् एक ही मान लिया जाय । इससे स्पर्शादि की भी व्याख्या जानना ।

अर्थात् नवीनमत से चित्रस्पर्श भी नहीं मानना—नवीनमत में जैसे चित्ररूप नहीं—

---

नानारूपमिति । उत्पद्यते इति शेषः । तथाचाऽवयवेषु यावन्ति रूपाणि तत्तद्रूपाणामवयविनि विरोधाभावेनोत्पत्तिसंभवाञ्च प्रत्यक्षत्वानुपपत्तिरिति भावः । प्रतिबन्धकत्वकल्पने इति । समवायेन नीलादिकं प्रति स्वसमवायिसमवेतत्व-संबन्धेन नीलाद्यन्यरूपत्वेन प्रतिबन्धकत्वकल्पने इत्यर्थः । गौरवादिति । अवच्छेदकतासंबन्धेन नीलादिकं प्रति समवायेन नीलादेर्हेतुतया पीतावच्छेदेन नीलोत्पत्त्यापत्त्यभावात्प्रतिबन्धकत्वकल्पने गौरवमेवेति भावः । अतएव । नीलादीनामव्याप्यवृत्तित्वादेव । मानाभावादिति । परमाणुद्वयसंयोगस्यावच्छेदकाभावेन व्याप्यवृत्ति-

तया संयोगमात्रस्य व्याप्यवृत्तित्वापत्त्या तयोर्विरोधे मानाभावादिति भावः । **लाघवादिति ।** चित्रमितिप्रतीतिविषयताया अनेकेषु रूपेषु कल्पनापेक्षयेत्यादिः । **एकं रूपमिति ।** अतिरिक्तं चित्ररूपमित्यर्थः । अनेकरूपवत्ताऽनुभवविरोधादित्यर्थः । **अन्यथा ।** अनुभवापलापे । **एतेन ।** नीलादीनामव्याप्यवृत्तित्वकथनेन । **व्याख्यातमिति ।** रस-गन्धस्पर्शानामव्याप्यवृत्तितया चित्ररसः-चित्रगन्धः-चित्रस्पर्शोऽपि-नाङ्गीकार्य इति भावः ।

ननु नव्यमते विषयतासंबन्धेन द्रव्यसमवेतचाक्षुषं प्रति स्वावच्छेदकावच्छिन्नसमवायसंबन्धावच्छिन्नाधारतानिरूपकत्वसंबन्धेन चक्षुःसंयोगः कारणमिति पर्यवसितम् । तथापि नीलपीताभ्यां कपालिकाभ्यामारब्धेन नीलपीतोभयात्मकेन कपालेनारब्धस्य घटस्य नीलकपालिकामात्रावच्छेदेन चक्षुःसंयोगेऽपि पीतोपलंभप्रसंगो दुर्वारः, कपालिकावच्छिन्नचक्षुःसंयोगस्य तत्समवेतकपालावच्छिन्नत्वनियमात् चक्षुःसंयोगावच्छेदककपालावच्छेदेनैव घटे पीताधारत्वसत्त्वात् । न च तत्र घटनिष्ठनीलपीताद्यवच्छेदकं न कपालं किन्तु नीलपीतकपालिकैवेति वाच्यम् । तथासति तत्र कपालावच्छेदेन घटवृत्तिनीलाद्युत्पत्तिवारणायाऽवच्छेदकतासंबन्धेन नीलाद्युत्पत्तिं प्रति समवायेन नीलेतररूपादेः प्रतिबन्धकत्वकल्पनापत्त्या महागौरवापत्तेः । तत्र कपालेऽवच्छेदकतासंबन्धेन घटवृत्तिनीलादेरसत्त्वे तत्र घटवृत्तिनीलादेरवच्छेदकतासंबन्धेनोत्पत्त्यधिकरणस्यैव दुर्लभत्वापत्तेः । वक्ष्यमाणयुक्त्याऽवच्छेदकतासंबन्धेन रूपोत्पत्तिं प्रति अवच्छेदकतासंबन्धेन रूपस्य प्रतिबन्धकत्वावश्यकतया कपालनिष्ठरूपावच्छेदिकायां कपालिकायामवच्छेदकतासंबन्धेन घटनिष्ठरूपोत्पत्तेरसंभवादिति चेन्न । या संयोगव्यक्तिर्यद्देशव्यापिनी तत्र तद्देश एवावच्छेदको नतु सम्पूर्णोऽवयव इत्यभ्युपगमेन कपालिकावच्छिन्नचक्षुःसंयोगस्य कपालावच्छिन्नत्वविरहात् । अन्यथा व्याप्यवृत्तितामतेऽपि अप्रतीकारात् । तच्चानुपदमेव स्फुटीभविष्यति । नचैवं तादृशघटस्य नीलकपालिकामात्रावच्छेदेन चक्षुःसंयोगे नीलोपलंभोऽपि न स्यात्, चक्षुःसंयोगावच्छेदकनीलकपालिकावच्छेदेनाधारत्वविरहात्, कपालनिष्ठरूपावच्छेदिकायां कपालिकायामवच्छेदकतासंबन्धेन घटनिष्ठरूपोत्पत्तेरसंभवात् प्रतिबन्धकसत्त्वादिति वाच्यम् । कपालनिष्ठरूपावच्छेदिकायां कपालिकायां प्रतिबन्धकसत्त्वादवच्छेदकतासंबन्धेन घटनिष्ठरूपोत्पत्तेरसंभवेऽपि प्रतीतिबलेनाऽवच्छेदकतासंबन्धेन तस्य तत्र सत्त्वे बाधकाभावात्, नहि यत्र येन संबन्धेन कार्यमुत्पद्यते तत्रैव तेन संबन्धेन वर्तते इति नियमोऽस्ति, घटादेर्दण्डादिमति संयोगसंबन्धेनोत्पद्य देशान्तरेऽपि संयोगसंबन्धेन वृत्तेः । नच तथापि नीलपीतोभयारब्धे घटे नीलान्नीलं समुत्पद्यमानं नीलावयवावच्छेदेनैवोत्पद्यते नतु पीतावयवावच्छेदेनेत्यत्र किं नियामकमिति वाच्यम् । समवायसंबन्धेन नीलादिविशेषोत्पत्तौ स्वाश्रयसमवेतत्वसंबन्धेन नीलादेरसमवायिकारणत्ववदवच्छेदकतासंबन्धेन नीलाद्युत्पत्तिं प्रति समवायेन नीलादेरपि हेतुत्वात् । एतेन कठिनसुकुमारादिनानास्पर्शवदवय-

वारब्धेऽवयविनि स्पर्शोत्पत्पादोपि व्याख्यातः। तत्रापि विनिगमकाभावादव्याप्यवृत्तिसुकुमारकठिनादिनानास्पर्शस्यैवावयविन्यभ्युपगमात्। तिक्तमधुरादिनानारसवदवयवारब्धेऽवयविनि विनिगमकाभावान्नानैव रसः। सुरभ्यसुरभिनानागन्धवदवयवारब्धेऽवयविनि च विनिगमकाभावान्नानैव गन्ध उत्पद्यते इति नीलादीनामव्याप्यवृत्तित्वमतनिष्कर्षः।

प्राचामयमाशयः। व्याप्यवृत्तीन्येव तत्र नीलपीतादिविजातीयनानारूपाणि अवयविनि उत्पद्यन्ते। नचैवं नीलावयवावच्छेदेन चक्षुःसंयोगदशायामपि पीताद्युपलंभः, पीतावयवावच्छेदेन चक्षुःसंयोगदशायां च नीलाद्युपलंभः स्यात्, व्याप्यवृत्तिजात्यादितुल्यत्वादिति वाच्यम्। नीलावयवाद्यवच्छिन्नचक्षुःसंयुक्तेऽवयविनि व्याप्यवृत्तीन्येव नानारूपाणि समुत्पद्यन्ते, एवं विजातीयनानास्पर्शवदवयवारब्धेऽवयविन्यपि व्याप्यवृत्तय एव नानास्पर्शाः समुत्पद्यन्ते, नत्वव्याप्यवृत्तयः, उक्तक्रमेण कार्यकारणभावबाहुल्यापत्तेः। एवंविजातीयनानारसगन्धवदवयवारब्धेऽवयविन्यपि व्याप्यवृत्तय एव नानारसगन्धा इत्याहुरिति व्याप्यवृत्तित्वमतनिष्कर्षः।

वस्तुतस्तु नीलपीतादिविजातीयनानारूपवदवयवारब्धेऽवयविनि अव्याप्यवृत्तीन्येव नीलपीतादिविजातीयनानारूपाण्युत्पद्यन्ते इति नवीनमतमेव साधीयः। व्याप्यवृत्तितापक्षे नीलावयवाद्यवच्छेदेन चक्षुःसंयोगदशायां पीताद्युपलंभवारणाय नीलाद्यवयवावच्छिन्नचक्षुःसंयोगाधारतावत्समवायस्यैव नीलादिग्राहकत्वस्यावश्यवक्तव्यतया नीलपीतादिरूपभेदेन चक्षुःसंयुक्तसमवायस्यानन्तकार्यकारणभावापत्तेः। नचाऽव्याप्यवृत्तित्वपक्षेऽपि नीलपीतोभयारब्धेऽवयविनि पीतावयवावच्छेदेन नीलोत्पत्तिवारणायाऽवच्छेदकतासंबन्धेन नीलोत्पत्तिं प्रति समवायसंबन्धेन प्रातिस्विकरूपेण नीलपीतादेर्हेतुत्वमावश्यकम्, अवच्छेदकतासंबन्धेन रूपोत्पत्तिं प्रति समवायेन द्रव्यस्य कारणत्वं पुनरधिकम्, अन्यथा नीलपीतोभयारब्धावयविव्यक्तौ समवायसंबन्धेन नीलान्नीलमुत्पद्यमानमारंभकनीलयवव्यक्तावेवाऽवच्छेदकतासंबन्धेनोत्पद्यते, नतु अन्त्यावयविनि, द्रव्यानवष्टब्धोदासीनकपालादौ वेत्यत्र नियामकाभावप्रसंगादिति वाच्यम्। अवच्छेदकतासंबन्धेन नीलपीताद्युत्पत्तिं प्रति समवायसंबन्धेन नीलपीतादेर्हेतुत्वानभ्युपगमात्। तत्तद्व्यक्तिनिष्ठावच्छेदकतासंबन्धेन सत्त्वावच्छिन्नोत्पत्तिं प्रति तादात्म्यसंबन्धेन तत्तद्व्यक्तित्वेन तत्तद्देशव्यक्तीनां हेतुत्वावश्यकतया कारणसमाजविरहादेव नीलपीतोभयारब्धेऽवयविनि पीतावयवावच्छेदेन नीलोत्पादवारणसंभवात्। तथाहि व्याप्यवृत्तिनीलादेरवच्छेदकतासंबन्धेनोत्पत्तिरलीकैव। अव्याप्यवृत्तिनीलन्तु, जगतिद्वयम्, एतद्व्यक्तिसमवेतम्, एतदितरव्यक्तिसमवेतं च। तत्राऽऽद्यस्य न पीतावयवावच्छेदेनोत्पत्तिसंभवः, नीलावयवावच्छिन्नातिरिक्तस्य एतद्व्यक्तिसमवेतनीलस्याऽलीकत्वात्, अवच्छेदकतासंबन्धेन तदुत्पत्तिं प्रति नीलावयवव्यक्तेस्तादात्म्येन सामान्यकारणत्वात्। नापि द्वितीयस्य पीतावयवावच्छेदेनोत्पत्तिसंभवः, अवच्छेदकतासंबन्धेन तदुत्पत्तिं प्रति एतदितरव्यक्त्यारंभयोगाधारतावत्समवायस्यैव नीलादिग्राहकत्वात्। नीलपीताभ्यां कपालिकाभ्यामारब्धेन नीलपीतोभयात्मककपालेनारब्धस्य घटस्य नीलकपालिकामात्रावच्छेदेन

चक्षुःसंयोगेपि पीतोपलंभप्रसंगश्च पूर्ववद्वारणीयः । नन्वेवं नीलपीतादिरूपभेदेन चक्षुःसंयुक्तसमवायस्यानन्तकार्यकारणभावापत्तौ तत्पक्षमपेक्ष्य पूर्वोक्ताऽव्याप्यवृत्तिपक्ष एव साधीयान् । नच पूर्वोक्ताऽव्याप्यवृत्तिपक्षेपि अवच्छेदकतासंबन्धेन नीलपीताद्युत्पत्तिं प्रति समवायसंबन्धेन प्रातिस्विकरूपेण नीलपीतादेर्हेतुत्वाभ्युपगमात्, अत्र पक्षे च तद्विरहान्न तत्पक्षमपेक्ष्य कार्यकारणभावाधिक्यमिति वाच्यम् । अवच्छेदकतासम्बन्धेननीलाद्युत्पत्तिं प्रति प्रातिस्विकरूपेण नीलादेः कार्यकारणभावमपेक्ष्य नीलपीतादिविषयभेदेन चक्षुःसंयुक्तसमवायस्य कार्यकारणभावानां गुरुशरीरतया संख्यासाम्येपि एतत्पक्षस्य जघन्यत्वादिति चेन्न ।

अव्याप्यवृत्तित्वपक्षेऽवच्छेदकतासंबन्धेन रूपोत्पत्तिं प्रति समवायसंबन्धेन द्रव्यस्य कारणताया आधिक्यात् । ननु प्रातिस्विकरूपेण नीलाद्यवच्छिन्नचक्षुःसंयोगस्य नीलादिग्राहकत्वाभ्युपगमेपि पीताद्यवच्छेदेन चक्षुःसंयोगदशायां चक्षुःसंयुक्तसमवायलक्षणसामान्यसामग्रीमर्यादया नीलादौ लौकिकविषयतया द्रव्यसमवेतचाक्षुषापत्तिर्दुर्वारा । नच यावद्विशेषसामग्रीबाधात्सामान्यकार्यबाधः, द्रव्यसमवेतचाक्षुषं जगतिद्वयम्, रूपविषयकम्, रूपेतरविषयकं च तत्र रूपविषयकचाक्षुषस्य न सामग्री, नीलादिचाक्षुषं प्रति नीलाद्यवच्छिन्नचक्षुःसंयोगानां विशिष्य हेतुत्वात् । नापि रूपेतरविषयकचाक्षुषस्य, रूपेतरविषयकचाक्षुषं प्रति रूपेतरव्यक्तीनां तत्तद्व्यक्तित्वेन विषयविधया हेतुत्वादिति वाच्यम् । विषयस्य विशेषतः कार्यकारणभावानभ्युपगमादिति चेन्न । विशेषतः कार्यकारणभावानभ्युपगन्तृमते एतदापत्तिवारणाय रूपेतरचाक्षुषं प्रति विषयनिष्ठतया रूपभेदस्यापि पृथग् हेतुताया वक्तव्यत्वात् । नच नीलपीतादिविजातीयनानारूपवदवयवारब्धेऽवयविनि नीलपीतादेर्व्याप्यवृत्तित्वे "लोहितोयस्तुवर्णेनेत्यादिस्मृतिविरोधः, तत्स्मृत्या एकस्मिन्नेव वृषेऽवच्छेदकभेदेन लोहितत्वादिबोधनात्, अवच्छेदकत्वस्य सप्तम्यर्थत्वादिति वाच्यम् । तत्र मुखे पुच्छेच पाण्डुर इत्यादेः स्वाश्रयसमवेतत्वसंबन्धेन मुखपुच्छवृत्तिपाण्डुररूपवानित्यर्थकतयाऽवच्छेदकतापर्यन्तस्याऽतदर्थत्वात् । एवं सुकुमारकठिनादिनानास्पर्शवदवयवारब्धावयवव्यक्तीनां तादात्म्यसंबन्धेन तत्तद्व्यक्तित्वेन सामान्यकारणत्वात्, तत्तदवयवावच्छिन्नातिरिक्तस्यैव तदितरव्यक्तिसमवेतरूपस्यालीकत्वात् । नच तथापि पीतावयवव्यक्तेरपि पाकेन रूपपरावृत्त्या कालान्तरे नीलावयविव्यक्त्यन्तरारंभकतया तन्नीलावयविव्यक्तिसमवेतनीलस्यैव पीतावयवावच्छेदेन तदानीमुत्पत्तिर्दुर्वारैवेति वाच्यम् । क्रियासंयोगकार्यकारणभावरीत्या तदवयविव्यक्तिसमवेतसत्सामान्यं प्रत्येव तदवयविव्यक्तेस्तत्तद्व्यक्तित्वेन समवायिकारणतया समवायिकारणविरहादेव तदवयविव्यक्तिसमवेतनीलस्यापि पीतावयवावच्छेदेन तदानीमुत्पादाऽसंभवात् । नीलादेः समवायसंबन्धेनोत्पत्तिं विनाऽवच्छेदकतासंबन्धेनोत्पत्तिविरहात् । अत एवावच्छेदकतासंबन्धेन रूपोत्पत्तिं प्रति समवायेन द्रव्यस्य कारणत्वमपि नोपेयम् । नच तदनभ्युपगमे नीलपीतोभयारब्धघटव्यक्तौ समवायसंबन्धेन नीलान्नीलमुत्पद्यमानमारम्भकपीतावच्छेदेनेव द्रव्यानवष्टब्धोदासीननीलकपालावच्छेदेनापि कुतो नोत्पद्यते इति वाच्यम् । व्याप्यवृत्तिनीलादेरवच्छेदकतासंबन्धेनोत्पत्तिरलीकैव,

जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम् ।
रसस्तु रसनाग्राह्योमधुरादिरनेकधा ॥१०१॥

जलादीति । जलपरमाणौ तेजःपरमाणौ च रूपं नित्यम् । पृथिवी-परमाणुरूपं तु न नित्यं तत्र पाकेन रूपान्तरोत्पत्तेः । नहि घटस्य पाकानन्तरं तदवयवोऽपक्व उपलभ्यते । नहि रक्तकपालस्य कपालिका नीलावयवा भवति । एवं क्रमेण परमाणावपि पाकसिद्धेः । अन्यत् । जलतेजःपरमाणु-रूपभिन्नं रूपम्, सहेतुकं । जन्यम् । रसं निरूपयति । रसस्त्विति । १०१

ऐसे ही चित्र स्पर्श भी नहीं है ) ॥१००॥ जलपरमाणु में और तेज के परमाणु में रूप नित्य है । पृथिवीपरमाणु में रूप नित्य नहीं है-क्योंकि पृथिवीपरमाणु में पाक ( अग्नि संयोग ) से रूपान्तर ( रक्तरूप ) की उत्पत्ति हो जाती है । क्योंकि घट के पाक होने के अनन्तर उसका अवयव अपक्व रह जावे यह बात सर्वथा अनुचित है-कारण कि अग्निसंयोग से रक्त

---

अव्याप्यवृत्तिनीलन्तु जगतिद्वयम्, एतद्व्यक्तिसमवेतम्, एतदितरव्यक्तिसमवेतं च, तयोश्च द्वयोरेव द्रव्यानवच्छिन्नोदासीननीलकपाले तदानीमवच्छेदकतासंबन्धेनोत्पत्त्य-संभवात् । उक्तरीत्या कारणसमाजविरहात् । किंच व्याप्यवृत्तितापत्ते उक्तयुक्त्या रूपेतरचाक्षुषं प्रति विषयनिष्ठतया रूपभेदस्य, नीलादिचाक्षुषं प्रति प्रातिस्विकरूपेण विषयविधया नीलादेश्च हेतुत्वमवश्यं वक्तव्यम्, तथा चाऽव्याप्यवृत्तितापक्षमपेक्ष्य महागौरवमिति विभावनीयम् ॥१००॥

पृथिवीपरमाणुरूपस्याऽनित्यत्वे हेतुमाह । तत्रेति । पृथिवीपरमाणावित्यर्थः । पाकेन । विजातीयतेजःसंयोगेन । रूपान्तरोत्पत्तेरिति । पूर्वरूपनाशरूपान्तरोत्पत्ते-रित्यर्थः । परमाणौ रूपनाशरूपान्तरोत्पादे प्रमाणमाह । नहीति । ननु घटावयवेऽ-स्त्वयातु पाको ननु परमाणौ अत आह नहिरक्तेति । एवंक्रमेणेति । द्व्यणुके पाका-नुमितिद्वारेत्यर्थः । पाकसिद्धेरिति । पाकानुमितिसंभवादित्यर्थः तथाच द्व्यणुकंपाकजन्यरूपवत् पाकजन्यरूपाश्रयसमवायित्वात्, त्रसरेणुवदित्यनुमानेन द्व्यणुकेपाकसिद्धौ पार्थिवपरमाणुः पाकजन्यरूपवान् पाकजन्यरूपवत्समवा-यित्वात् त्रसरेणुवदित्यनुमानेन परमाणावपि पाकसिद्धिरिति भावः । मूले रसनाग्राह्यइति । रसनेन्द्रियजन्यप्रत्यक्षीयलौकिकविषयताश्रयगुणविभाजकजाति-मत्वमित्यर्थः । तेन परमाणुरसे नाव्याप्तिः । ननुरसत्वजातौ मानाभावः । रसस्य चाक्षुषत्वापत्ति-तिक्तत्वमधुरत्वादीनामेव रसबुद्धिविषयत्वस्य सुवचत्वात् । रसस्य चाक्षुषत्वाप-प्रतिबन्धकत्वन्तु न रसत्वेनाऽपितु गन्धरसगुरुत्वस्थितिस्थापकसाधारणेनैकेन वैजात्येन

सहकारी रसज्ञाया नित्यतादि च पूर्ववत्।
घ्राणग्राह्योभवेद्गन्धोघ्राणस्यैवोपकारकः ॥१०२॥

सहकारीति। रासनज्ञाने रसः कारणमित्यर्थः। पूर्ववदिति। जलपरमाणौ रसो नित्यः, अन्यः सर्वोपि अनित्य इत्यर्थः। गन्धं निरूपयति। घ्राण-ग्राह्य इति। उपकारक इति। घ्राणजन्यज्ञाने कारणमित्यर्थः। सर्वोगन्धोऽ-

( परिपक्व ) हुये कपाल का अवयव कपालिका नीलावय नहीं होती है। इस क्रम से परमाणु में भी पाक की सिद्धि हो गयी। ( अन्यत् ) जल-तेज के परमाणुओं के रूप से भिन्न जो रूप वह सब रूप ( सहेतुक ) अनित्य है। रासनप्रत्यक्ष में रस कारण है ॥१०१॥ ( पूर्ववदिति ) पहिले की तरह जलपरमाणु में रस नित्य है-और सब पृथिवीपरमाणु का रस अनित्य है। गन्ध का निरूपण करते हैं-( उपकारकः ) घ्राण इन्द्रिय से जन्य जो ज्ञान उसमें गन्ध कारण है-गन्ध सब ही अनित्य है- ॥१०२॥ गन्ध दो प्रकार है सौरभ ( सुगन्ध ) असौरभ ( दुर्गन्ध )

---

अतो न प्रतिबन्धकतावच्छेदकतयापि तत्सिद्धिः। नच रसनसंयुक्तसमवायस्य रसत्वविशिष्टलौकिकविषयतासंबन्धेन रासनोत्पत्तिं प्रति कारणतया सन्निकर्षकार्यता-वच्छेदकसंबन्धघटकतयैव लाघवात्तत्सिद्धिरिति वाच्यम्। वस्तुगत्या रसनिष्ठस्य लौकिकविषयत्वस्य लाघवेन कार्यतावच्छेदकसंबन्धतया रसत्वस्य तत्राऽप्रवेशादिति चेदत्र प्राञ्चः। रसोरसइत्यनुगतप्रतीतिबलात्तत्सिद्धिरित्याहुः। नव्यास्तु घ्राणसंयुक्त-समवायरसनासंयुक्तसमवाययोरविशिष्टतया रूपस्पर्शादिष्वपि वस्तुगत्या रसगन्धनिष्ठ-त्वोपलक्षितेन लौकिकविषयतासंबन्धेन घ्राणजरासनोत्पत्तिवारणाय तादृशविषयता-संबन्धेन घ्राणजरासनोत्पत्तिं प्रति गन्धत्वरसत्वाभ्यां तादात्म्यसंबन्धेन कारणत्वस्या-वश्यकतया तदवच्छेदकतयैव गन्धत्वरसत्वसिद्धिरिति प्राहुः। मूले—मधुरादिर-नेकधेति। प्राचीनमते चित्ररसमादाय सप्तधा--नवीनमते मधुराम्ललवणकटुकषाय-तिक्तभेदात् षड्विध इत्यर्थः। १०१ अन्यः—पृथिवीसमवेतो रसः अनित्यजलसमवेत-रसश्च। अनित्यरसोपिद्विविधः—पाकजाऽपाकजभेदात्। पृथिव्यां पाकजः, अग्निसंयो-गासमवायिकारणकः। जलेऽपाकजः, अपाकजस्थले चावयविसमवेतरसं प्रति अवयव-समवेतरसोऽसमवायिकारणम्। घ्राणग्राह्य इति। घ्राणेन्द्रियजन्यप्रत्यक्षीयलौकिक-विषयताश्रयगुणविभाजकजातिमत्वं लक्षणम्। गन्धत्वजातिसिद्धिस्तु पूर्वोक्तदिशाव-सेया। सर्वोपीति। अनित्य एवेति। परमाणुगन्धस्यापि पाकजत्वादिति भावः। १०२

सौरभश्चासौरभश्च स द्वेधा परिकीर्तितः ।
स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥१०३॥
अनुष्णाशीतशीतोष्णभेदात्स त्रिविधोमतः ।
काठिन्यादिक्षितावेव नित्यतादि च पूर्ववत् ॥१०४॥

नित्य एव १०२ स्पर्शं निरूपयति । स्पर्श इति । उपकारक इति । स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः । १०३ अनुष्णाशीतेति । पृथिव्यां वायौ च स्पर्शोऽनुष्णाशीतः । जले शीतः । तेजसिउष्णः । काठिन्येति । कठिनसुकुमारस्पर्शौ पृथिव्यामेवेत्यर्थः । कठिनत्वादिकं तु न संयोगनिष्ठो जातिविशेषः, चक्षुर्ग्राह्यतापत्तेः । पूर्ववदिति । जलतेजोवायुपरमाणुस्पर्शा नित्यास्तद्भिन्नास्त्वनित्या इत्यर्थः ॥१०४॥

स्पर्श का निरूपण करते हैं—उपकारक इति । स्पार्शनप्रत्यक्ष में स्पर्श कारण है ॥१०३॥ वह स्पर्श अनुष्णाशीत–शीत–उष्ण–भेद से तीन प्रकार का है । अनुष्णाशीतेति । पृथिवी–और वायु में अनुष्णाशीत स्पर्श रहता है । जल में शीत । तेज में उष्ण । कठिन–और सुकुमार ( मृदु ) स्पर्श पृथिवी ही में रहता है । कठिनत्व–आदिपद से सुकुमारत्व–ये संयोग में रहने वाली जाति विशेष नहीं है—अन्यथा "यो गुणो येनेन्द्रियेण" इस नियम के अनुसार संयोग चक्षु से ग्रहण योग्य होने के नाते–संयोग में रहने वाली कठिनत्व आदि जातियों को भी चक्षुर्ग्राह्यत्व की आपत्ति लग जायगी । पूर्ववदिति । जल-तेज-वायु इन तीन के परमाणुओं का स्पर्श नित्य

---

सौरभश्चासौरभश्चेत्यादिना गन्धस्य द्वैविध्यप्रतिपादनं नवीनमतेन । नवीनास्तु चित्रगन्धं न स्वीकुर्वन्ति सुरभ्यसुरभिकपालद्वयारब्धे घटे गन्धविरहेपि अवयवगन्धस्यैव भानात् । प्राञ्चस्तु चित्रगन्धं स्वीकुर्वन्ति । अन्यथा सुरभ्यसुरभिद्व्यणुकद्वयारब्धे त्र्यणुके गन्धभानं न स्यात्, द्व्यणुकगन्धस्याऽयोग्यत्वात् । एवं चित्ररसोपि स्वीकार्य इति ध्येयम् । स्पर्शस्त्वगिन्द्रियग्राह्य इति सावधारणमूलात्त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षीयलौकिकविषयताशून्यत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षीयलौकिकविषयतावत्वं सति गुणविभाजकजातिमत्वं लक्षणम् । स्पर्शत्वजातिस्तु शीतोष्णादिषु स्पर्शः स्पर्शः इत्यनुगतप्रतीतिबलादेव सिद्ध्यति । शीतोष्णत्वादेरननुगतत्वात् । केषांचिन्मते स्पर्शपदशक्यतावच्छेदकतयैव तत्सिद्धिः ।

नव्यमते तु लौकिकविषयतासम्बन्धेनचाक्षुषीत्वगिं प्रति शीतोष्णादीनां वाराहस्यसंबन्धेन प्रतिबन्धकत्वावश्यकतया तदवच्छेदकतयैव तत्सिद्धिः । अन्ये तु द्रव्यस्पार्शनजनकतावच्छेदकतया तत्सिद्धिः । शीतत्वोष्णत्वादीनामननुगतत्वात्, परमाण्वाद्यतीन्द्रियवृत्तिशीतोष्णादिषु च शीतत्वादिना सांकर्यभयादेव तदनुगम इत्याहुः । तच्चिन्त्यम् । स्पार्शनजनकतावच्छेदकतया तत्कल्पने स्पर्शवद्द्रव्यनिष्ठैकत्वमादाय विनिगमनाविरहापत्तेरित्यास्तां विस्तरः । १०३ मूले-काठिन्यादीति । स्वार्थे ष्यञ् । तथाच पृथिव्या अनुष्णाशीतः स्पर्शः त्रिविधः कठिनसुकुमारचित्र-

एतेषां पाकजत्वं तु क्षितौ नान्यत्र कुत्र चित् ।
तत्रापि परमाणौ स्यात्पाकोवैशेषिके नये ॥१०५॥

एतेषामिति । एतेषां—रूपरसगन्धस्पर्शानाम् । नान्यत्रेति । पृथिव्यां-हिरूपरसगन्धस्पर्शपरावृत्तिरग्निसंयोगादुपलभ्यते । न हि शतधापि ध्मायमाने-जले रूपादिकं परावर्तते । नीरे सौरभमौष्ण्यं चाऽन्वयव्यतिरेकाभ्यामौपाधिक-मेवेति निर्णीयते । पवनपृथिव्योः शीतस्पर्शादिवत् । तत्रापि—पृथिवीष्वपि-मध्ये परमाणावेव पाक इति वैशेषिका वदन्ति । तेषामयमाशयः—अवयविनाऽ-

है ॥१०४॥ एतेषामिति । रूप-रस-गन्ध-स्पर्श—इन चारों की अग्निसंयोग से परावृत्ति पृथिवी ही में होती है—अन्यत्र नहीं—क्योंकि जल को सैकड़ों बार तपाने पर भी उसके रूप-रस आदि का परिवर्तन नहीं होता है। जल में सुगन्ध—और औष्ण्य औपाधिक हैं—ऐसा अन्वय—व्यतिरेक के द्वारा निश्चित है—पवन-तथा पृथिवी में जैसे शीतस्पर्श औपाधिक है। "तत्रापि परमाणौ स्यात् पाको वैशेषिके नये" इसका अर्थ यह है कि 'तत्रापि' अर्थात् पृथिवी में भी—वैशेषिकों के मत में परमाणु ही में पाक होता है। (परमाणु में पाक होता है—इसका अर्थ यह है कि अवयव ही में पाक होता है—परमाणु भी अवयव है—घटरूप

---

भेदात् । पाषाणादिस्पर्शः-कठिनः । नवनीतादिस्पर्शः सुकुमारः । नानास्पर्शवदवय-वारब्धः पृथिवीस्पर्शः चित्रस्पर्शः । चक्षुर्ग्राह्यतापत्तेरिति । योगुणो यदिन्द्रियेण गृह्यते इति नियमादितिभावः । तद्भिन्नाः—जलतेजोवायुपरमाणुसमवेतस्पर्शभिन्ना इत्यर्थः । १०४

जलादौ रूपादेरपरावृत्तिमुपपादयति । नहीति । शतधापिध्मायमाने । शतधाऽष्णीकृतेपि । एतेनाग्निसंयोगसत्वमाविष्कृतम् । रूपादिकं—परावर्तते इति रूपान्तरादि नोत्पद्यते इत्यर्थः । तथाच जलेऽग्निसंयोगसत्वेपि रूपान्तराद्यनुत्पत्तेः । स्वरूपसंबन्धेन पूर्वरूपादिनाशं प्रति समवायेन रूपान्तरोत्पत्तिं प्रति च तादात्म्येन पृथिव्या हेतुत्वमावश्यकमिति जले तादृशाकारणाभावान्नरूपादिपरावृत्तिरिति भावः । नन्वेवं जले कथं सौरभौष्ण्ययोरुपलब्धिरित्यत आह । जले । इति । सौरभमिति प्रतीयमानमित्यादि । अन्वयव्यतिरेकाभ्यामिति । पृथिवीतेजःसंयोगसत्वे सौरभा-द्युपलब्धिसत्वम् , पृथिवीतेजःसंयोगाभावे सौरभाद्युपलब्ध्याभाव इत्यन्वयव्यतिरेकाभ्या-मित्यर्थः । औपाधिकमेवेति । पृथिवीतेजोनिष्ठमेवेतीत्यर्थः । निर्णीयते इति । अनुमीयते इत्यर्थः । तथाच जले उपलभ्यमानसौरभादिकं जलासमवेतं पृथिव्याद्युपाधिसंबन्ध-सत्ताकालीनसत्तावत्त्वे सति तादृशोपाधिसंबन्धसत्ताशून्यकालीनसत्ताशून्यत्वादि-त्यनुमानात्सौरभादौ जलासमवेतत्वसिद्धिः । तत्र दृष्टान्तमाह । पवनपृथिव्योरिति । तथाच जले सौरभादिप्रतीतिर्भ्रान्तिरेवेतिभावः ।

**ष्टब्धेषु अवयवेषु पाको न संभवति–परन्तु वन्हिसंयोगेनाऽवयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः–पुनश्चपक्वपरमाणुसंयोगाद् द्वयणुकादि क्रमेण पुनर्महावयविपर्यन्तमुत्पत्तिः। तेजसामतिशयितवेगवशात्पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्च।**

अवयवी में नहीं ) वैशेषिकों का यह आशय है कि घटादिरूप अवयवी से अवष्टब्ध ( आवृत ) अवयवों में पाक संभव नहीं है–परन्तु वन्हिसंयोग से अवयवी के विनष्ट होने के बाद सब परमाणुओं के पृथक् हो जाने पर प्रत्येक परमाणु में पाक होता है–उसके बाद पक्व-परमाणुओं के परस्पर संयोग होने से द्वयणुक–त्र्यणुक आदि के क्रम से फिर महावयवी पर्यन्त की उत्पत्ति हो जाती है। अग्निरूप तेज के अत्यन्त वेगशाली होने के कारण झटिति पूर्वव्यूह ( श्यामघट ) का नाश होकर व्यूहान्तर ( रक्तघट ) की उत्पत्ति हो जाती है। यहाँ द्वयणुकादि

---

वैशेषिकास्तु पार्थिवपरमाणुषु क्रियाविभागादिवक्ष्यमाणरीत्याऽवयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः, पुनश्च पक्वपरमाणुसंयोगाद् द्वयणुकादि-क्रमेणाऽवयव्यन्तरमुत्पद्यते कारणगुणक्रमेण च तत्र रूपादीनामुत्पत्तिरिति वदन्ति। नैयायिकास्तु अवस्थिते एवावयविनि रूपादयो विनश्यन्ति जायन्ते चेति वदन्ति। विप्रतिपत्तिस्तु पार्थिवावयविरूपादयः अग्निसंयोगाऽसमवायिकारणका नवेत्या-कारिका। अत्र भावकोटि नैयायिकानाम् वैशेषिकाणां निषेधकोटिः।

तत्र वैशेषिकमतस्य दूषणीयतया आदौतन्मतमुपन्यस्यति। तत्रापीति। **परमाणावेवेति**। एवकारेणाऽवयविनो व्यवच्छेदः। तेन नैयायिकमतेपि परमाणौ पाकसत्वेपि न तन्मताऽविशेषः। **रूपादीनां पाक इति**। अग्निसंयोगजन्यरूप-परावृत्तिरित्यर्थः। **इति वैशेषिका वदन्तीति**। द्वयणुकादिषु पाकाऽसंभवं वैशेषिका वदन्तीत्यर्थः। द्वयणुकादिषु पाकाऽसंभवप्रकारः प्रदर्श्यते। तेषामिति। वैशेषिकाणामित्यर्थः। **अवयविनाऽवष्टब्धेषु अवयवेष्विति**। समवायेन घटादि-विशिष्टेषु कपालेष्वित्यर्थः। इदं च घटादीनामप्युपलक्षकम्। **पाको न संभवतीति**। वन्हिसंयोगात्पूर्वरूपपरावृत्तिः, रूपान्तरोत्पत्तिश्चनसंभवतीत्यर्थः। अन्तर्बहिश्च सर्वेष्ववयवेषुवर्त्तमानस्याऽवयविनो बाह्यावयवानां वन्हिनासह संयोगसंभवेपि वन्हेरन्तःप्रवेशाऽसंभवेन सर्वावयवेषु वन्हिसंयोगरूपकारणाभावादिति भावः।

अथ सच्छिद्राणि अवयविद्रव्याणि तत्र स्थूलतेजसोऽन्तःप्रवेशाऽसंभवेपि तेजःपरमाणूनामन्तःप्रवेशसंभवादिति चेद्।

न तावत्परमाणवः सान्तराः निर्भागत्वात्, द्वयणुकस्य सान्तरत्वे चानुत्पत्तिरेव तस्य, परमाण्वोरसंयोगात्, संयुक्तौ चेदिमौ निरन्तरावेव। प्रतीयमानेषु स्थूलद्रव्येषु अन्तरं न प्रतिभात्येव। त्र्यणुकेष्वेवान्तरं तच्चानुलब्धियोग्यत्वान्न प्रतीयते। इति

क्लिष्टकल्पना। तस्मान्निरन्तरा एव घटादयस्तेषामन्तस्तावदग्निपरमाणूनां प्रवेशो न संभवत्येव, यावत्पार्थिवावयवानां विभागो न भवेत् ।

स्पर्शवति द्रव्ये स्पर्शवतो द्रव्यान्तरस्य वन्हेरभिघाताद् भिद्यमानेषु चावयवेषु क्रियाविभागादिन्यायेन द्रव्यारंभकसंयोगविनाशादवश्यं द्रव्यविनाश इत्याह। **परन्त्विति ।** **वन्हिसंयोगेनेति ।** परमाणुष्वित्यादिः। **विनष्टेष्ववयविष्विति ।** घटादिद्व्यणुकपर्यन्तनाशानन्तरमिति यावत् । **स्वतन्त्रेष्विति ।** कार्यद्रव्यध्वंसविशिष्टेष्वित्यर्थः। **परमाणुष्वेवेति ।** एवकारेण कार्यद्रव्यविशिष्टेषु परमाणुषु पाकव्यवच्छेदः। **पाक इति ।** वन्हिसंयोगात्पूर्वरूपपरावृत्तिःरूपान्तरोत्पत्तिश्चेति भावः। **पुनश्चेति ।** अनन्तरमित्यर्थः। **द्व्यणुकादिक्रमेणेति ।** परमाणुद्वयसंयोगाद्द्व्यणुकोत्पत्तिः, द्व्यणुकत्रयसंयोगात्त्र्यणुकोत्पत्तिरित्यादिक्रमेणेत्यर्थः। **पुनरिति-** वाक्यालंकारे। ननु तत्रसंस्थानभेदः कथं न प्रतीयते इत्यत आह। **तेजसामिति ।** वन्हेः सूक्ष्मावयवानामित्यर्थः। **अतिशयितवेगवशादिति ।** विजातीयवेगाधीनक्रियावशादित्यर्थः । व्यूहः—संस्थानम् । **व्यूहान्तरोत्पत्तिश्चेति ।** द्व्यणुकप्रभृतिचरमावयविपर्यन्तनाशः—द्व्यणुकप्रभृतिचरमावयविपर्यन्तोत्पत्तिश्चेत्यर्थः । तथाच क्षणभेदाऽज्ञानान्न पूर्वव्यूहनाशाद्युपलब्धिः, पूर्वव्यूहसाजात्यदोषात्पूर्वव्यूहभेदानुपलब्धिश्चेति भावः।

अत्रेदं बोध्यम्। वैशेषिका एव पीलुपाकवादिनः। एतन्मते नीलादिजन्यतावच्छेदकं नीलत्वादिव्याप्यवैजात्यं निखिलावयविवृत्त्येव, तेजःसंयोगजन्यतावच्छेदकवैजात्यन्तु परमाणुनीलादिमात्रवृत्ति। पाकाच्चाऽवयविनि न नीलाद्युत्पत्तिः, किन्तु परमाणौ रूपोत्पत्त्यनन्तरं कारणगुणक्रमेणैवावयविनि नीलाद्युत्पत्तिः। न चावयविनि विलक्षणाग्निसंयोगदशायां तत्र पाकजनीलाद्युत्पत्तिर्दुर्वारेति वाच्यम्। सति अवयविनि तद्रूपनाशाऽसंभवेन पूर्वरूपस्यैव तत्र पाकजरूपोत्पत्तौ प्रतिबन्धकत्वात्, वैलक्षण्यस्य फलबलकल्प्यतया तत्र विलक्षणतेजःसंयोगस्यैव वाऽनभ्युपगमाच्च। एवं तेजःसंयोगात्परमाणावेव रूपादिनाशः, नत्ववयविनि। अवयविरूपनाशस्तु आश्रयनाशादेव। नचैवं पाकानन्तरं घटादौ पूर्वरूपपरावृत्तिः कथमनुभूयते, आश्रयनाशविरहादिति वाच्यम्। तत्र तेजःसंयोगजन्यक्रियाविभागादिक्रमेण युगपत्कपालादिपरमाणुपर्यन्तानां सर्वावयवानां संयोगनाशाद्युगपदेव द्व्यणुकान्त्यावयविपर्यन्तानां विनाशः, ततस्तेषां रूपादिनाशः, ततो द्व्यणुकादिक्रमेण पुनर्घटान्तरमुत्पद्यते, ततः कारणरूपादिक्रमेण रूपाद्युत्पत्तिरित्यभ्युपगमात्। य एव श्याम आसीत्स एव रक्त इदानीमितिप्रत्यभिज्ञा तु तज्जातीयत्वावगाहिनी।

नचैवं परमाणुरूपनाशत्वम्, असमवेतवृत्तिरूपनाशत्वं वा विलक्षणाग्निसंयोगस्य कार्यतावच्छेदकमतो गौरवमिति वाच्यम्। विशेषणताविशेषेण वृत्तिमद्रूपनाशत्वस्य रूपनाशत्वस्य वा विलक्षणतेजःसंयोगकार्यतावच्छेदकत्वात् । अवयविरूपनाश-

मात्रस्यैवाऽऽश्रयनाशजन्यत्वेन विशेषणताविशेषेणाऽवर्त्तमानतया आश्रयनाशनाश्यरूपव्यावृत्त प्रतियोगितासंबन्धेनानुत्पद्यमानतया च तत्र व्यभिचाराभावात्, एतच्च नैयायिकमत विचारावसरेस्फुटीभविष्यति ।

नचैवमपि अवयविनि विलक्षणाग्निसंयोगाद्रूपादिनाशापत्तिर्दुर्वारेति वाच्यम्। रूपनाशकतावच्छेदकाग्निसंयोगनिष्ठवैलक्षण्यस्य फलबलकल्प्यतयाऽवयविनिष्ठसंयोगे तदनभ्युपगमात् । पाकजन्यतावच्छेदकवैजात्यस्याऽवयविनीलादिवृत्तित्वे रूपनाशकतावच्छेदकीभूतवैलक्षण्यस्य वाऽवयविनिष्ठाग्निसंयोगवृत्तित्वे यत्र नीलावयवद्वयारब्धेऽवयविनि यत्किंचिदवयवावच्छेदेन विलक्षणाग्निसंयोगात्तदवयवावयविनोर्द्वयोरेव नीलनाशः ततो द्वितीयक्षणे पाकात्तदवयवे पीतोत्पत्त्या तृतीयक्षणेपीतावस्थितावयवनीलाभ्यामवयविनि चित्रोत्पत्तिः तत्र द्वितीयक्षणेऽवयविनि पाकजपीतोत्पत्त्यापत्तिः, अवस्थितावयवनीलान्नीलोत्पत्त्यापत्तिश्च । नच नीलपीतत्वाद्यवच्छिन्नं प्रति नीलपीताद्यभावस्य जन्यरूपत्वावच्छिन्नं प्रति रूपत्वावच्छिन्नाभावस्य वा स्वाश्रयसमवेतत्वसंबन्धेन प्रतिबन्धकतया न तत्र नीलाद्युत्पत्तिरिति वाच्यम्। न्यायनये युगपदेव अवयवावयविनोः पाकजनीलपीताद्युत्पत्त्यभ्युपगमात्, पाकजावयविनीलपीतादौ व्यभिचारेण तादृशप्रतिबध्यप्रतिबन्धकभावस्य वक्तुमशक्यत्वात्। नच नीलपीतत्वावच्छिन्नं प्रति स्वाश्रयसमवेतत्वसंबन्धेन नीलेतररूपत्वादिना प्रतिबन्धकत्वम्, नीलजनीलत्वावच्छिन्नं प्रति स्वाश्रयसमवेतत्वसंबन्धेन नीलाद्यभावः प्रतिबन्धकः, अतो न तत्र द्वितीयक्षणे पाकजपीतोत्पत्तिः, नीलजनीलोत्पत्तिश्चेति वाच्यम्। नीलपीतादिकं प्रति नीलेतररूपादीनामनन्तप्रतिबध्यप्रतिबन्धकभावकल्पने गौरवात् । मम तु चित्रोत्पत्तिसमये नीलपीताद्युत्पत्तिवारणाय नीलजनीलादिकं प्रति नीलाद्यभावस्य स्वाश्रयसमवेतत्वसंबन्धेन प्रतिबन्धकत्वात् । किं च न्यायन्याये पाकपौनःपुन्येन एकस्मिन्नेवावयविनि क्रमेण नीलरक्तपुनर्नीलाद्यभ्युपगमात्, पूर्वपूर्वतत्तन्नीलव्यक्त्युत्पत्तिकाले उत्तरोत्तरनीलादिव्यक्त्युत्पत्तेर्वारणाय उत्तरोत्तरतत्तन्नीलादिव्यक्तिं प्रति तत्तत्तेजःसंयोगव्यक्तीनां पूर्वपूर्वतत्तन्नीलादिध्वंसव्यक्तीनां वा विशिष्य हेतुत्वमावश्यकमतोमहागौरवम्। अवयविन्यपि पाकाद्रूपनाशाभ्युपगमे यत्र घटनाशकसामग्रीसमवधानकाले घटे रूपनाशकाग्निसंयोगोत्पत्तिः, तत्र घटनाशक्षणे पाकाद् घटे विशेषणताविशेषेण रूपनाशोत्पत्तिवारणायाग्निसंयोगस्य कार्यकालावच्छेदेन कार्याधिकरणदेशवृत्तितया नाशकत्वं वाच्यमतोगौरवमिति संक्षेपः ।

वैशेषिकैकदेशिनस्तु अनन्तधर्मिकल्पनापत्त्या मास्तु पाकजस्थलेऽवयविविनाशः, तथापि पाकेन परमाण्वाद्यन्त्यावयविपर्यन्तमेकदैव पूर्वरूपविनाशः, ततः परमाणोरेव पाकजरूपोत्पत्तिः, अनन्तरं कारणगुणक्रमेण द्व्यणुकादौ रूपान्तरोत्पत्तिः, नचैकदैव परमाणुवद्द्व्यणुकादावपि पाकाद्रूपोत्पत्तिः। नच वैशेषिकनये पाकजरूपनाशं प्रति समवायसंबन्धावच्छिन्नप्रतियोगिताकद्रव्यसामान्याभावस्य हेतुतया सतिद्व्यणुके परमाणौ कथं रूपनाश इति वाच्यम्। तस्य हेतुत्वे मानाभावात्। नच द्रव्यानवच्छिन्नपरमाणुपाके द्रव्यशून्यस्यैव परमाणोरूपनाशात्, पाकजरूपनाशत्वावच्छिन्नं प्रत्येव तस्य हेतुत्वमिति वाच्यम्। तत्र द्रव्यसामान्याभावस्य

अत्र द्व्यणुकादि स्वविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पत्त्या रूपादिमद्भवतीति शिष्यबुद्धिवैशद्यार्थं क्षणप्रक्रिया । तत्र विभागजविभागानंगीकारे नवक्षणा । तदङ्गीकारे तु विभागः किंचित्सापेक्षो विभागं जनयेत्, निरपेक्षस्य तत्त्वे कर्मत्वंस्यात् ।

विनाश से लेकर फिर उत्पन्न हुवा द्व्यणुक कितने क्षणों के बाद रूपादिमान् होता है–अब उस क्षणप्रक्रिया को शिष्यों की बुद्धि को विशद करने के लिये दिखलाते हैं । इस क्षण प्रक्रिया में विभागजविभाग को अङ्गीकार न करने पर नव क्षण होते हैं–(विभागजविभाग का मतलब यह है कि परमाणुद्वय के विभाग से परमाणु का आकाश से विभाग होगा–उस परमाण्वाकाश विभाग के प्रति परमाणुद्वय विभाग कारण है–अत परमाण्वाकाशविभाग परमाणुद्वयविभागजन्य है ) और विभागजविभाग मानने पर पूर्वविभाग किसी से सापेक्ष होकर के ही उत्तर विभाग को उत्पन्न करेगा–क्योंकि निरपेक्ष होने पर विभाग भी कर्म हो जायेगा–( अर्थात्

---

दैववशसंपन्नत्वेपि तस्य हेतुत्वेमानाभावात् । नच सर्वदिगवच्छेदेनाग्निसंयोग एव रूपनाशे निमित्तम्, परमाण्वन्तरावष्टब्धे च परमाणौ न तत्संभवो मूर्तयोः समानदेशताविरोधादित्यारंभकसंयोगनाशस्यावश्यकतया द्रव्यनाशोप्यावश्यक इति वाच्यम् । निबिडयोरेव मूर्तयोः समानदेशताविरोधात्, लाघवाद्विलक्षणतेजःसंयोगत्वेनैव श्यामादिनाशकतया सर्वदिगवच्छिन्नतेजःसंयोगत्वेन श्यामादिनाशकत्वे प्रमाणाभावाच्च । नच तथापि न्यायमतापेक्षया किं लाघवमिति वाच्यम् । अवयविनि पाकजरूपाभ्युपगमे नीलपीतादिजन्यतावच्छेदकतया नीलपीतादिनिष्ठावान्तरवैजात्यसहस्रकल्पने गौरवापत्तेः । तदनभ्युपगमे तु नीलत्वाद्यवच्छिन्नं प्रत्येव नीलादेर्हेतुत्वम्, यत्र स्वाश्रयसमवायित्वसंबन्धेन नीलोत्पत्तिस्तत्र समवायेन नीलमिति प्रत्यासत्तिः । तेन परमाणुनीलादौ न व्यभिचारः । अवयविनि पाकजरूपाभ्युपगमे तु नैतत्संभवः, अवयवरूपं विनापि अवयविनि पाकजरूपोत्पत्त्या व्यभिचारात् । नच स्वाश्रयसमवायित्वस्यकार्यतावच्छेदकसंबन्धत्वे चित्ररूपस्थलेऽव्याप्यवृत्तिनीलपीतादिविजातीयनानारूपाभ्युपगमाद् व्यभिचारः, तत्र नीलादेः स्वाश्रयसमवायित्वसंबन्धेन पीतावयवादावपि सत्त्वादिति वाच्यम् । नीलपीतादेरव्याप्यवृत्तित्वाभ्युपगमे स्वावच्छेदकत्वस्यापि कार्यतावच्छेदकसंबन्धत्वात् । न्यायनयेपि नीलादेरव्याप्यवृत्तित्वपक्षे पीतावयवाद्यवच्छेदेन नीलादेरुत्पत्तिवारणाय तेन संबन्धेन विलक्षणनीलाद्युत्पत्तिं प्रति समवायसंबन्धेन नीलादेर्हेतुत्वावश्यकतया गौरवाभावात् । नच नीलादेर्नाऽव्याप्यवृत्तित्वमिति वाच्यम् । इदं रूपं न किंचिदवच्छिन्नमितिप्रत्ययाभावात्, प्रत्युत इह घटे सकलकपालावच्छेदेनैव रूपमित्याद्यवच्छेदकत्वावगाहिप्रत्ययस्यैव सत्वाच्चेतिप्राहुः ।

अत्रेति । अथेत्यर्थः । द्व्यणुकादीति । अस्य च रूपादिमद्भवतीत्यनेनाऽन्वयः । आदिना त्र्यणुकादिपरिग्रहः । स्वविनाशमारभ्येति । द्व्यणुकादिविनाशो-

संयोगविभागयोरनपेक्षं कारणं कर्मेति वैशेषिकसूत्रम्, स्वोत्तरोत्पन्नभावान्तरानपेक्षत्वं तस्यार्थः।

विभाग में कर्म लक्षण की अतिव्याप्ति हो जावेगी) क्योंकि वैशेषिकदर्शन का १७ वाँ सूत्र है जिसका अभिप्राय है कि संयोग और विभाग की उत्पत्ति में किसी की अपेक्षा न रखने वाला जो कारण उसे कर्म कहते हैं।

---

त्पत्त्यधिकरणक्षणमारभ्येत्यर्थः। पुनरुत्पत्त्येति। स्वसजातीयद्व्यणुकाद्युत्पत्त्यनन्तरमित्यर्थः। शिष्यबुद्धिवैशद्यार्थमिति। वैशद्यं-उत्पत्तिः। तथाच शिष्यबुद्ध्युत्पादनिमित्तीभूतेत्यर्थः। प्रक्रिया—द्व्यणुकनाशाद्युत्पत्तिक्षणनिरूपणम्। समाद्रियते इति शेषः। तत्रेति। विभागजविभागानङ्गीकारतदङ्गीकारपक्षद्वये इत्यर्थः। विभागजविभागानङ्गीकारेइति। कारणमात्रविभागजन्यकारणाकारणविभागानङ्गीकारपक्षे इत्यर्थः। कारणाकारणविभागस्य कारणमात्रविभागजन्यत्वाऽस्वीकर्तृप्राचीनमते, कपालकर्मणैव कपालद्वयविभागवत्कपालाकाशविभागस्यापि स्वीकारे इति यावत्। कारणाकारणविभागेन कार्याकार्यविभागस्तु स्वीक्रियत एव। तदङ्गीकारेत्विति। विभागजविभागाङ्गीकारे त्वित्यर्थः। इदं च नवीनमतम्। सर्वमेतद्विभागनिरूपणावसरे स्फुटीभविष्यति। विभागः—कारणमात्रविभागः। किंचित्सापेक्ष एवेति। स्वोत्तरोत्पन्नकिंचिद्वस्तुसहकृतएवेत्यर्थः। विभागं-कारणाकारणविभागम्। जनयेदिति। उत्पादयेदित्यर्थः। निरपेक्षस्येति। कारणमात्रविभागस्येत्यादिः। स्वोत्तरोत्पन्नकिंचित्सहकृतस्येत्यर्थः। तत्वे इति। विभागजनकत्वे इत्यर्थः। कर्मत्वं स्यादिति। कर्मलक्षणस्यातिव्याप्तिः स्यादित्यर्थः।

संयोगविभागयोरनपेक्षं कारणं कर्मेतिसूत्रस्यसंयोगस्य विभागस्यवाऽनपेक्षं कारणं कर्मेतिलक्षणद्वये तात्पर्यमित्यभिप्रायेण द्वितीयलक्षणस्याऽतिव्याप्त्यभिधानम्। कारणमात्रविभागस्य कारणाकारणविभागजनकत्वादनपेक्षत्वाच्च। इदमुपलक्षणम्। प्रथमलक्षणस्यापि कारणाकारणसंयोगेऽतिव्याप्तिर्बोध्या। तस्य कार्याकार्यसंयोगजनकत्वात्। अथैवमसंभवः, कर्मणोप्युत्तरसंयोगजनने पूर्वसंयोगनाशाऽपेक्षणादत आह। स्वोत्तरोत्पन्नेति। इदं चाऽसंभववारणाय, अन्यथा कर्मणोऽप्युत्तरसंयोगजनने द्रव्यान्तरापेक्षणादसंभवः स्यात्। भावान्तरेति। पूर्वसंयोगनाशसंग्रहार्थम्। स्वाधिकरणकालध्वंसाधिकरणक्षणोत्पत्तिकभावानपेक्षत्वम्, तत्र भावानपेक्षत्वं तादृशभावासहकृतत्वम्, तादृशभावाऽजन्यसंयोगविभागोभयजनकत्वमिति समुदितार्थः। विषयितया स्वाधिकरणीभूताऽतीतज्ञानादिध्वंसाधिकरणक्षणोत्पत्तिकस्वजन्यसंयोगादिजनकत्वादसंभवइतिकालिकेनाधिकरणतालाभाय कालेति। स्वाधिकरणकालध्वंसाधिकरणस्थूलकालोत्पत्तिकत्वस्यापीति पुनरसंभववारणाय स्वशब्देति।

**अन्यथाकर्मणोऽप्युत्तरसंयोगस्योत्पत्तौ पूर्वसंयोगनाशापेक्षणादव्याप्तिः स्यात्। तत्र यदि द्रव्यारंभकसंयोगनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात्तदादशक्षणा अथ द्रव्यनाश विशिष्टं कालमपेक्ष्य विभागजविभागः स्यात्तदाएकादशक्षणा।**

प्रश्न—उक्त कर्म लक्षण सूत्र की कर्म ही में अव्याप्ति हो रही है—क्योंकि कर्म भी उत्तर संयोग की उत्पत्ति में पूर्व संयोग नाश की अपेक्षा रखता है।

उत्तर—उस सूत्र का यह अभिप्राय है कि अपने से उत्तर काल में उत्पन्न होने वाले संयोग तथा विभाग की उत्पत्ति में किसी भावान्तर की अपेक्षा न करने वाला जो कारण उसे कर्म कहते हैं। [ पूर्व संयोगनाश अभाव है—भाव नहीं है—अतः उसकी अपेक्षा यदि करे भी तब भी कोई दोष नहीं है ] ( तत्र ) किसी से सापेक्ष होकर परमाणुद्वयविभाग परमाण्वाकाश विभाग को उत्पन्न करेगा, इस पक्ष में—यदि द्व्यणुकरूपद्रव्य का आरंभक जो संयोग ( परमाणुद्वयसंयोग ) उस संयोगनाश के अव्यवहितोत्तर काल में ही विभागजविभाग होगा तो वह अवयवी दशक्षण में फिर से रूपादिमान् हो सकेगा। और यदि द्व्यणुकरूपद्रव्य के विनाशकाल की अपेक्षा करके—अर्थात् द्व्यणुकनाशक्षण के अव्यवहितोत्तरक्षण में यदि विभागजविभाग होगा तो अवयवी को रूपादिमान् होने में एकादशक्षण लगेंगे। अवयवक्षण की प्रक्रिया

---

स्ववृत्तीत्युक्तावपितद्दोषतादवस्थ्यादुत्पत्तीति। स्ववृत्तिप्रागभावप्रतियोगिभावाजन्यत्वदित्यस्मद्गुरुचरणाः। तादृशपूर्वसंयोगध्वंसापेक्षेणैवकर्मणोत्तरसंयोगजननादसंभववारणाय भावेति। स्वाधिकरणक्षणोत्पत्तिकोक्तावपि तथेतितत्कालध्वंसाधिकरणेति। द्रव्यन्तु तादृशोत्पत्तिकावयवसंयोगं कर्म वाऽपेक्ष्यैव संयोगविभागौ जनयतीति न तत्रातिप्रसंगः। कारणाकारणविभागस्य कार्याकार्यविभागजननाद्विभागेऽतिव्याप्तिवारणाय संयोगेति। एवं विभागपदानुपादानेतादृशसंयोगेऽतिव्याप्तिर्बोध्या। तथाविधभावाऽजन्यत्वेन विभाग एव विशेषणीयः, नतु संयोगोपि व्यर्थत्वात्, तथाच भावपदं व्यर्थम्, कर्मणा विभागजनने मध्यवर्तिनः कस्याप्यनपेक्षणादिति विभावनीयम्।

केचित्तुस्वाधिकरणकालध्वंसाधिकरणोत्पत्तिकोयस्तदनधीनो यः स्वजन्यविभागस्तदधीनसंयोगजनकजातीयत्वं कर्मलक्षणम्। इतिप्राहुः। **अन्यथा।** अनपेक्षत्वस्य यथाश्रुतार्थकत्वे। **तत्रेति।** किंचित्सापेक्षविभागस्य विभागजनकत्वपक्षे इत्यर्थः। **द्रव्यारम्भकसंयोगनाशविशिष्टमिति।** परमाणुद्वयसंयोगनाशविशिष्टमित्यर्थः। **कालमिति।** क्षणमित्यर्थः। इदं च भावत्वसंपादनार्थम्। एवमग्रेपि। **द्रव्यनाशविशिष्टमिति।** द्व्यणुकनाशविशिष्टमित्यर्थः। नवदशैकादशक्षणाः प्रक्रियाः क्रमेणोपपादयति तथाहीत्यादिना।

तथाहि—अथनवत्त्वणा—वन्हिसंयोगात्परमाणौ कर्म ततः परमाण्वन्तरेण विभागः—तत आरंभकसंयोगनाशः—ततोद्यणुकनाशः १ ततः परमाणौ श्यामादिनाशः २ ततोरक्ताद्युत्पत्तिः ३ ततोद्रव्यारम्भानुगुणाक्रिया ४ ततोविभागः ५ ततः पूर्वसंयोगनाशः ६ ततश्चारम्भकसंयोगः ७ ततोद्व्यणुकोत्पत्तिः ८ ततोरक्ताद्युत्पत्तिः ९ ।

*बतलाते हैं*—सबे प्रथम अग्नि का संयोग परमाणु में होने से एक परमाणु में क्रिया हुवी-क्रिया होने से एक परमाणु का दूसरे परमाणु से विभाग हुआ—उसके बाद द्व्यणुक का आरंभक जो परमाणुद्वय का संयोग है उसका नाश हुआ—उसके बाद द्व्यणुकनाश ॥१॥ यह एक क्षण हुआ—यहीं से क्षण गणना करनी चाहिये—क्योंकि पहिले "द्व्यणुकादि विनाशमारभ्य" ऐसा लिखा है—अतः द्व्यणुकविनाशकाल से ही क्षणगणना आवश्यक है। उस ( द्व्यणुकनाश ) के बाद परमाणु में श्यामरूप का नाश ॥२॥ उसके बाद रक्तरूप की उत्पत्ति ॥३॥ परमाणुओं के रक्त होने के बाद परमाणु में द्व्यणुकस्वरूपद्रव्य के आरंभ ( उत्पाद ) का अनुगुण ( जनक ) क्रिया हुवी ॥४॥ उसके बाद जिस देश में वे दोनों परमाणु पृथक्रूप से थे—उन देशों से परमाणुद्वय का विभाग हुआ ॥५॥ उसके बाद परमाणुद्वय का उन देशों के साथ जो संयोग था—उसका नाश हो गया ॥६॥ उसके बाद द्व्यणुक का आरंभक परमाणुद्वय का संयोग हुवा ॥७॥ उसके बाद द्व्यणुक की उत्पत्ति ॥८॥ फिर उस द्व्यणुक में रक्त रूपादि की उत्पत्ति ॥९॥

---

वन्हिसंयोगादिति । वन्हिप्रतियोगिकनोदनसंयोगादित्यर्थः । परमाणौ—द्व्यणुकारंभकपरमाणौ । ततः । क्रियातः । परमाण्वन्तरेण विभागइति । परमाणुद्वयविभागइत्यर्थः । ततः । विभागात् । आरंभकसंयोगनाशइति । परमाणुद्वयसंयोगनाश इत्यर्थः । ततः । परमाणुद्वयसंयोगनाशात् । द्व्यणुकनाशइति । असमवायिकारणनाशस्य द्रव्यनाशहेतुत्वादितिभावः । द्व्यणुकनाशक्षणे एव परमाणोरुत्तरदेशसंयोगःकारणमात्रविभागजविभागानभ्युपगन्तृमते परमाणुद्वयविभागोत्पत्तिकाले एव परमाणोराकाशादिपूर्वदेशेन विभागोत्पत्तेः । परमाणुद्वयसंयोगनाशकाले एव गगनादिसंयोगनाशात् । ततः द्यणुकनाशान्तरं । श्यामादिनाशइति । *परमाणौ रूपनाशं प्रति* द्रव्यात्मकद्व्यणुकस्य *प्रतिबन्धकतया* द्व्यणुकसत्वे नाशाऽसंभवादिति भावः । इदमुपलक्षणम्—श्यामादिनाशक्षणेपरोत्तरसंयोगात्क्रियानाशोपि । ततःश्यामादिनिवृत्त्यनन्तरं । रक्ताद्युत्पत्तिरिति । श्यामादिनाशकालोत्पन्नादन्यस्मादग्निसंयोगादित्यादिः । द्व्यणुकनाशकाग्निसंयोगस्य द्व्यणुकनाशक्षणे एव *नाशादिति भावः* । एतत्तत्वमेकस्मादग्निसंयोगान्नरूपनाशरक्तोत्पादौ इति *पंक्तिव्याख्यानावसरे स्फुटीभविष्यति* । ततः—रक्ताद्युत्पत्तौ—उत्तरसंयोगात्क्रियानिवृत्तौ च सत्यां । द्रव्यारंभानु-

ननुश्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणाक्रियास्तु इतिचेत्–न–अग्निसंयुक्ते परमाणौ यत्कर्म तद्विनाशमन्तरेण गुणोत्पत्तिमन्तरेण च परमाणौ क्रियान्तराभावात्, कर्मवति कर्मान्तरानुत्पत्तेः, निर्गुणे द्रव्ये द्रव्यारंभानुगुणक्रियानुपपत्तेश्च। तथापि परमाणौ श्यामा-

प्रश्न—श्यामरूप का नाश परमाणु में जिस क्षण में हुवा है–उस क्षण में–अथवा परमाणु में रक्तरूप की उत्पत्ति जिस क्षण में हुवी है–उसी क्षण में परमाणु में द्व्यणुकरूप द्रव्यकी ( आरंभनुगुणा ) उत्पादिका क्रिया मान ली जाय।

उत्तर—अग्नि संयुक्त–परमाणु में ( द्व्यणुक का विनाशक ) जो कर्म उसके नाश हुवे विना–एवं रक्तादि अन्य गुणों की उत्पत्ति हुवे विना परमाणु में द्व्यणुक की उत्पादक दूसरी क्रिया नहीं हो सकती है–क्योंकि प्रथम क्रिया के विद्यमान रहने पर उस द्रव्य में दूसरी क्रिया उत्पन्न नहीं हो सकती है–कारण कि प्रथमक्रिया प्रतिबन्धक हो जावेगी। और निर्गुणद्रव्य में द्व्यणुकरूपद्रव्य की उत्पादक क्रिया नहीं हो सकती है–( कारण कि द्व्यणुक नाश में कारणीभूत पूर्वक्रिया का नाश द्वितीयक्षण में अर्थात् श्यामनाशक्षण में होता है और तृतीयक्षण में रक्तरूप की उत्पत्ति होती है–अतः इसके बाद ही द्व्यणुकरूपद्रव्य के आरंभानुगुणा क्रिया हो सकेगी–इसके लिये क्षणों के लाघव ( न्यून ) का विचार अकिञ्चित्कर है।

---

गुणक्रियेति। अदृष्टवदात्मसंयोगादित्यादिः। परमाणौ द्व्यणुकारंभणाय क्रियेत्यर्थः। अदृष्टं च रक्ताद्युत्पत्तिकालोत्पत्तिकं ग्राह्यम्, अन्यथा रक्तानुत्पत्तिकाले द्रव्यारंभानुकूलक्रियोत्पत्तिसंभवे क्षणैकह्रासादष्टक्षणापत्तेः। विभागः देशान्तरादित्यादिः। पूर्वेति। देशान्तरानुयोगिकेत्यर्थः। आरंभकसंयोग इति। परमाणुद्वयसंयोगइत्यर्थः। ततः इति। संयुक्ताभ्यां परमाणुभ्यामित्यर्थः। ननु आरम्भकसंयोगनाशक्षणे कर्मणः सत्वात्तदानीं परमाणौ कर्मान्तरोत्पत्त्यसंभवेपि श्यामादिनाशक्षणे कर्मोत्पत्तौबाधकाभाव इत्याशंकते। नन्विति। तद्विनाशमन्तरेणेति। तथाच श्यामादिनाशक्षणे एव कर्मणो नाशात्तत्पूर्वक्षणावच्छेदेन परमाणौ कर्माऽभावस्यासत्वात्, कारणस्य कार्यपूर्ववर्त्तित्वनियमान्न श्यामादिनाशक्षणे परमाणौ कर्मान्तरोत्पत्तिसंभव इति-भावः। रक्तोत्पत्तिक्षणे कर्मान्तरोत्पत्तिं वारयति। गुणोत्पत्तिमन्तरेण चेति। क्रियान्तराभावादिति। द्रव्यारंभानुगुणक्रियोत्पत्त्यसंभवादित्यर्थः। श्यामनाशक्षणे क्रियोत्पत्तौ बाधकमप्याह निर्गुणे इति। रूपादिचतुष्टयान्यतमाभावविशिष्टे इत्यर्थः। यथाश्रुते परमाणौ श्यामादिनाशक्षणेपि एकत्वादिगुणसत्वादसंगत्यापत्तेः। द्रव्यारंभानुगुणक्रियानुत्पत्तेश्चेति। तथाच पृथिव्यादिचतुष्टयपरमाणुष्वेव तादृशक्रियोत्पत्त्या मनसि तादृशक्रियानुत्पत्त्या चाऽन्वयव्यतिरेकाभ्यां तादृशक्रियां प्रति रूपादिचतुष्टया-

दिनिवृत्तिसमकालं रक्ताद्युत्पत्तिः स्यादितिचेन्न-पूर्वरूपादिध्वंसस्यापि रूपान्तरे हेतुत्वादिति नवक्षणा।

अथदशक्षणा-साचाऽऽरम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजनने सति स्यात्। तथाहि-वन्हिसंयोगाद् द्व्यणुकारंभके परमाणौ कर्म-ततोविभागः-ततआरम्भकसंयोगनाशः—ततोद्व्यणुकनाशविभागजविभागौ १ श्यामनाशपूर्वसंयोगनाशौ २ ततोरक्तोपत्त्युत्तरसंयोगौ ३ ततोवन्हिनोदनजन्यपरमाणुकर्मणो नाशः ४ ततोऽदृष्टवदात्मसंयोगाद्द्रव्यारम्भानुगुणक्रिया ५ ततोविभागः ६ ततःपूर्वसंयोगनाशः ७ ततआरम्भकसंयोगनाशः ८ तद्द्व्यणुकोत्पत्तिः ९ ततोरक्तोत्पत्तिः १०। अथैकादशक्षणा-

प्रश्न—तो भी परमाणु में श्यामनिवृत्ति ( श्यामनाश ) काल ही में रक्त की उत्पत्ति मान ली जाय-( इससे भी एकक्षण का लाघव हो जायेगा-अर्थात् आठ ही क्षण लगेंगे )।

उत्तर—पूर्वरूप ( श्याम ) का ध्वंस भी रूपान्तर ( रक्तरूप ) की उत्पत्ति में कारण है। इति नवक्षणा।

अब दशक्षण की प्रकिया को बतलाते हैं-द्व्यणुकरूपद्रव्यारंभकसंयोगविनाश काल ही में यदि विभागजविभाग मान लिया जाय अर्थात् परमाणुद्वयविभाग से परमाण्वाकाश मान लिया जावे तो द्व्यणुकरूपद्रव्य में रक्तरूप की उत्पत्ति दशक्षण में हो सकेगी-तथाहि-वन्हिसंयोग से द्व्यणुकारंभक परमाणु में कर्म, उसके बाद दोनों परमाणुओं का परस्पर विभाग, फिर आरंभसंयोगनाश, उसके बाद द्व्यणुकनाश और विभागजविभाग ॥१॥ उसके बाद श्यामनाश-पूर्वसंयोगनाश ॥ २ ॥ फिर रक्तोत्पत्ति—उत्तरसंयोग ॥ ३ ॥ फिर वन्हिनोदन ( वन्हिसंयोग ) से होने वाला जो कर्म-उसका नाश ॥४॥ उसकेबाद अदृष्टवत् आत्मसंयोग से परमाणु में द्व्यणुकरूपद्रव्यारंभानुगुण परमाणु में क्रिया ॥५॥ फिर उन परमाणुओं का देश से विभाग ॥६॥ उसके बाद पूर्वसंयोग ( जो देश के साथ था ) का नाश ॥७॥ फिर आरम्भसंयोग ॥८॥ तब द्व्यणुकोत्पत्ति ॥९॥ उसके बाद द्व्यणुक में रक्तरूप की उत्पत्ति ॥१०॥ इति दशक्षणा ॥

---

स्यतमविशिष्टद्रव्यस्य तादात्म्येन हेतुत्वमावश्यकमिति रक्ताद्युत्पत्तिकाले न तादृशस्यतमविशिष्टद्रव्यस्य तादात्म्येन हेतुत्वमावश्यकमिति रक्ताद्युत्पत्तिकाले न तादृश-

क्रियोत्पत्तिरितिभावः। तथापीति। परमाणौ श्यामादिनिवृत्तिक्षणे रक्ताद्युत्पत्तिः स्यादिति। तत्काले क्षणे वा द्रव्यारंभानुगुणक्रियोत्पत्त्यसंभवेपीत्यर्थः। रक्ताद्युत्पत्तिः स्यादिति। तत्काले प्रतिबन्धकीभूतपूर्वरूपस्याभावादित्याशयः। तथाचाऽष्टमक्षण एव रूपोत्पत्तिर्दुर्वारेति-भावः। पूर्वरूपध्वंसस्यापीति। अपिनाऽग्निसंयोगसमुच्चयः। रूपान्तरे हेतुत्वादिति। तथाच श्यामादिनिवृत्तिसमकालं रक्ताद्युत्पत्तिर्न संभवति, अव्यवहितपूर्वक्षणे

**वन्हिसंयोगात्परमाणौ कर्म–ततोविभागः–ततआरंभकसंयोगनाशः–ततोद्व्यणुकनाशः १ ततोद्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजविभागश्यामनाशौ २ ततःपूर्वसंयोगनाशरक्तोत्पत्ती ३ ततउत्तरसंयोगः ४ ततोवन्हिनोदनजन्यपरमाणुकर्मणोनाशः ५ ततोऽदृष्टवदात्मसंयोगाद्द्रव्यारंभानुगुणक्रिया ६ ततोविभागः ७ ततःपूर्वसंयोगनाशः ८ ततआरम्भकसंयोगः ९ ततोद्व्यणुको-**

अब एकादशक्षणवाली प्रक्रिया को बतलाते है–वन्हिसंयोग से परमाणु में क्रिया हुवी फिर परमाणुवों का परस्पर में विभाग हुवा, तब द्व्यणुकरूप द्रव्य का आरंभकसंयोगनाश हुवा, फिर द्व्यणुकनाश हुवा ॥१॥ फिर द्व्यणुकनाशोत्पत्त्यधिकरणक्षण के अव्यवहितोत्तरक्षण में विभागजविभाग–श्यामनाश ॥२॥ तब पूर्वसंयोगनाश–रक्तोत्पत्ति ॥३॥ फिर उत्तरदेश संयोग ॥४॥ उसके बाद वन्हिसंयोग से जायमान जो परमाणु में कर्म उसकानाश ॥५॥ तब अदृष्टवत् आत्मसंयोग से द्रव्यारंभानुगुणा क्रिया ॥६॥ उसके बाद विभाग ॥७॥ फिरपूर्वसंयोग नाश ॥८॥ द्व्यणुकरूपद्रव्य का आरम्भक उत्तर ( परमाणुद्वय का परस्पर में ) संयोग ॥९॥ उसके बाद द्व्यणुकोत्पत्ति ॥१०॥ फिर द्व्यणुक में रक्तोत्पत्ति ॥११॥

---

प्रतिबन्धकीभूत रूपाभावात्मककारणाभावादितिभावः । **इतिनवक्षणेति** । प्रक्रियेतिशेषः नवक्षणा यस्यामितिव्युत्पत्तिः । प्रक्रियाच–पूर्वद्व्यणुकनाशोत्पत्तिनवमक्षणे द्व्यणुकान्तरे रक्ताद्युत्पत्तिनिरूपणम् । सा प्रक्रिया च पूर्वद्व्यणुकनाशानुगुणक्रियात एव परमाणुद्वयविभागः परमाण्वाकाशविभागश्च—एवं कारणाकारणविभागेन कार्याकार्यविभागजननवत् कारणमात्रविभागेन कारणाकारणविभागजनने यदि स्वोत्तरभावी नापेक्ष्यते तदैवोपपद्यते–यदिच नैकक्रियातः द्रव्यारंभकसंयोगविरोधी तदविरोधीविभागश्चोभयम्, अथवा कारणमात्रविभागेन कारणाकारणविभागजनने स्वोत्तरभावी अपेक्ष्यते तदा दशमक्षणे रूपाद्युत्पत्तिमुपपादयति । **अथेति** । **साचेति** । पूर्वद्व्यणुकनाशप्रभृतिदशमक्षणे द्व्यणुकान्तरे रूपाद्युत्पत्तिश्चेत्यर्थः । **आरंभकसंयोगनाशविशिष्टं कालमपेक्ष्येति** । परमाणुद्वयसंयोगनाशोत्पत्त्यधिकरणक्षणाव्यवहितोत्तरक्षणे इत्यर्थः । **विभागेन**–कारणमात्रविभागेन–परमाणुद्वयविभागेनेतियावत् । **विभागजनने**–कारणाकारणविभागजनने–परमाण्वाकाशविभागजनने इति यावत् । ततः–परमाणुद्वयसंयोगनाशात् । **द्व्यणुकनाशविभागजविभागाविति** । द्व्यणुकनाशपरमाण्वाकाशविभागावित्यर्थः । कारणमात्रविभागजविभागं प्रति आरंभकसंयोगनाशस्य हेतुत्वादितिभावः । **श्यामनाशपूर्वसंयोगनाशाविति** । श्यामादेः परमाणुगगनसंयोगस्य च नाश इत्यर्थः । **रक्तोत्पत्त्युत्तरसंयोगाविति** । अन्यस्मादग्निसंयोगाद्रक्तोत्पत्तिः, परमाण्वाकाशसंयोगनाशाधीनपरमाण्वाकाशसंयोगान्तरं चेत्यर्थः ।

त्पत्तिः १० ततोरक्तोत्पत्तिः ११। मध्यमशब्दवदेकस्मादग्निसंयोगान्न रूपनाशरक्तोत्पादौ, तावत्कालमेकस्याग्नेरस्थिरत्वात्। किंच नाशक एव यद्युत्पादकस्तदा नष्टे रूपादौ तदग्निनाशे नीरूपश्चिरं परमाणुः स्यात्। उत्पादकश्चेन्नाशकस्तदा रक्तोत्पत्तौ तदग्निनाशे रक्ततरता न स्यात्।

प्रश्न—जैसे मध्यमशब्द पूर्वशब्द का नाशक होता है–और उत्तर शब्द का उत्पादक होता है, ऐसे ही एक ही अग्निसंयोग से श्यामरूप का नाश—और रक्तरूप की उत्पत्ति परमाणु में क्यों न मान ली जाय।

उत्तर—यदि श्यामरूप के विनाशक अग्निसंयोग को रक्तरूप का उत्पादक माना जायगा तब श्यामरूप के नष्ट हो जाने पर श्यामरूपनाशक अग्नि के भी नाश होने के पश्चात् चिरकाल तक परमाणु नीरूप ही रह जायेगा। और यदि रक्तरूप के उत्पादक अग्निसंयोग को श्यामरूप का नाशक माना जावे तब रक्तरूप की उत्पत्ति हो जाने पर श्यामरूप के नाशक अग्नि के नाश हो जाने पर रक्ततरता परमाणु में न आ सकेगी। ये एकादशक्षण हुवे।

---

ततः–उत्तरसंयोगात्। वन्हिनोदनजन्यपरमाणुकर्मणोनाश इति। कर्मणः स्वजन्योत्तरसंयोगनाश्यत्वादितिभावः। अयमेव दशसंख्यापूरकः क्षणः। एकादशक्षणेति। क्रियते तथाहीतिशेषः। उत्तरदेशसंयोग इति। अयमेव एकादशसंख्यापूरकः क्षणः।

अत्र येनाग्निसंयोगेन क्रियाविभागद्वारा द्व्यणुकनाशः, स एव श्यामादिनाशकः–रक्ताद्युत्पादकश्चास्तु। अथवा श्यामादिनाशकोग्निसंयोग एव रक्ताद्युत्पादकोस्त्वितिशंकाद्वयनिरस्यति। मध्यमशब्दवदिति। यथामध्यमशब्दात्पूर्वशब्दनाशोत्तरशब्दोत्पादौ भवतः, तथा–एकस्मादग्निसंयोगाद् "द्व्यणुकनाशकात्" न श्यामनाशरक्तोत्पादौ भवतः इति व्यतिरेकदृष्टान्तः। द्व्यणुकनाशकाग्निसंयोगस्य श्यामादिनाशाऽजनकत्वे हेतुमाह। तावत्कालमिति। श्यामादिनिवृत्तिक्षणैतदव्यवहितपूर्वक्षणे चेत्यर्थः। एकस्याग्नेरिति। द्व्यणुकनाशकाग्निसंयोगस्येत्यर्थः। अस्थिरत्वादिति। अवर्त्तमानत्वादित्यर्थः। यदा परमाणावग्निसंयोगात्कर्म तदैव तादृशाग्निसंयोगजनककर्मणो नाशः "कर्मणः स्वजन्यसंयोगविनाश्यत्वात्"। ततो विभागः–अग्नौ कर्मान्तरं च "तादृशाग्निसंयोगजनकक्रियाध्वंसरूपप्रतिबन्धकाभावस्य अभिघातादेश्च सत्वात्"। ततश्चारंभकसंयोगनाशः–अग्निक्रियाजन्यविभागश्च। ततो द्व्यणुकनाशः–अग्निसंयोगनाशश्च जायते इति तादृशाग्निसंयोगाच्छ्यामादिनाशो न संभवति। तादृशाग्निसंयोगस्य श्यामादिनाशाव्यवहितपूर्वक्षणे एव नाशादिति अन्यस्मादग्निसंयोगादेव श्यामादिनाशोऽङ्गीकार्य इति भाव।

ननु मास्तु द्व्यणुकनाशकाग्निसंयोगस्य श्यामादिनाशकत्वं रक्तोत्पादकत्वं च परन्तु श्यामादिनाशकाग्न्यन्तरसंयोगस्य रक्तोत्पादकत्वमस्तु इति द्वितीयशंका

**अथ परमाण्वन्तरे कर्मचिन्तनात्पञ्चमादिक्षणेऽपि गुणोत्पत्तिः ।**

अथ पञ्चक्षणा—( अन्य लोग द्वयणुकनाश होने के पश्चात् पुनः उत्पन्न द्वयणुक-द्वयणुकनाशक्षण से लेकर पांच-छः-सात-आठ क्षणों में भी रक्तरूप वाला हो सकता है ऐसा कहते हैं ) उनमें से पाँच क्षण दिखलाते हैं कि परमाण्वन्तर में अर्थात् द्वयणुकनाशकक्रियावच्छिन्नपरमाणु से भिन्न द्वयणुकारंभक परमाणु में यदि कर्मचिन्तन करते हैं अर्थात् उत्पन्न जो द्वयणुक—तदारंभक जो संयोग-तादृशसंयोगनाशक्षण में यदि उत्पन्न होने वाले द्वयणुक के आरम्भक कर्म को स्वीकार करते हैं तो पञ्चम आदि क्षणों में भी गुणोत्पत्ति होती

---

निरस्यति । **किंचेति । नाशक एवेति ।** एवकारेण नाशकतावच्छेदकव्याप्यं यदुत्पादकतावच्छेदकं स्यात्तदेत्यर्थो लभ्यते । **नष्टे रूपादाविति ।** विनश्यदवस्थाग्निसंयोगेनेत्यादिः । श्यामादौ नष्टे सतीत्यर्थः । **अग्निनाश** इति । तादृशाग्निसंयोगस्य श्यामादिनाशकाले नाशे सतीत्यर्थः । **नीरूपश्चिरं परमाणुः स्यादिति ।** श्यामादिनाशकालेऽग्निसंयोगनाशेनोत्तरक्षणे रक्तोत्पत्त्यसंभवेन सर्वदा रूपाद्यभाववानेन परमाणुः स्यादित्यर्थः । नच श्यामादिनाशक्षणोत्पन्नाऽग्न्यन्तरसंयोगेन रक्तोत्पत्तौ बाधकाभाव इति वाच्यम् । तथाप्युत्पादकतावच्छेदकस्य नाशकतावच्छेदकव्याप्यमहिम्ना उत्पादकाग्निसंयोगस्योत्पन्नरक्तादिनाशकत्वावश्यकतया पुनरग्न्यन्तरसंयोगात्पुनःरूपाद्युत्पत्तिस्वीकारेपि तेनैवाग्निसंयोगेन उक्तनियमबलात्तादृशरूपादेरपि नाशावश्यकतया परमाणोर्नीरूपत्वापत्तेर्दुर्वारत्वात् । नैयायिकमते तु अवयविनामपि नीरूपत्वापत्तिर्बोध्या । ननु रक्तोत्पादकतावच्छेदकवैजात्यं न श्यामनाशकतावच्छेदकवैजात्यव्याप्यम्, अपितु वैजात्ययोरभेदइति ब्रूमः । एवं च चरमाग्निसंयोगस्य रक्ताद्युत्पादकस्य तन्नाशस्वरूपयोग्यत्वेपि तादृशसंयोगस्यानुभवानुरोधेन रूपनाशं प्रति प्रतिबन्धकत्वस्वीकारात्तादृशाग्निसंयोगाद्रूपनाशाऽसंभवेन न पूर्वोक्तनीरूपत्वापत्तिरतोदोषान्तरमाह । **उत्पादकश्चेदिति ।** नाशक उत्पादकश्चेदिति योजना । नाशकतावच्छेदकमेव यद्युत्पादकतावच्छेदकं तदेत्यर्थः । **रक्तोत्पत्ताविति ।** श्यामादिनाशकचरमाग्न्यन्तरसंयोगेन रक्ताद्युत्पत्तावित्यर्थः । **तदग्निनाशे** इति । चरमाग्निसंयोगनाशे सतीत्यर्थः । **रक्ततरता न स्यादिति ।** अयं भावः । रूपनाशकतावच्छेदकं विलक्षणाग्निसंयोगत्वं तदेव यद्युत्पादकतावच्छेदकं तदा कार्यतावच्छेदकमपि सामान्यतः पृथिवीपरमाणुरूपत्वं त्वया वाच्यं, तथासति क्वचिद्रक्ततरता क्वचिद्रक्ततमता परमाणौ न स्यात्कार्यवैचित्र्यस्य कारणतावच्छेदकभेदाधीनत्वादित्यलम् ।

सेयं प्रक्रिया एकस्मिन्नेव परमाणौ पूर्वद्वयणुकनाशिका उत्तरद्वयणुकोत्पादिका च क्रिया इति विशेषमाश्रित्य, यदा तु एकत्र परमाणौ द्वयणुकविनाशिका, अन्यस्मिन्परमाणौ द्वयणुकान्तरोत्पादिका क्रिया तदा द्वयणुकविनाशमारभ्य पञ्चमे षष्ठे

तथाहि—एकत्र परमाणौ कर्म-ततोविभागः—तत आरंकसंयोगनाशपरमाण्व-न्तरकर्मणी—ततस्तु द्व्यणुकनाशः—परमाण्वन्तरकर्मजन्यविभागइत्येकः कालः १ ततः श्यामादिनाशः—विभागाच्च पूर्वसंयोगनाशश्चेत्येकः कालः २ ततोरक्तोत्पत्तिः—द्रव्यारम्भकसंयोगश्चेत्येकः कालः ३ ततोद्व्यणुकोत्पत्तिः ४ ततो रक्तोत्पत्तिः ५ । इति पञ्चक्षणा । द्रव्यनाशसमकालं परमाण्वन्तरे कर्मचिन्तनात्पष्ठे गुणोत्पत्तिः—तथाहि—परमाणुकर्मणा परमाण्वन्तरविभागः—तत आरम्भकसंयोगनाशः—अथ द्व्यणुकनाशपरमाण्वन्तरकर्मणी १ अथ-

है—तथाहि--एक परमाणु में कर्म हुवा--उसके बाद दोनों परमाणुओं का विभाग, फिर द्व्यणुक का आरंभक जो परमाणुद्वयसंयोग उसका नाश तथा द्व्यणुक का आरम्भक जो परमाणुद्वय संयोग इसका नाश तथा द्व्यणुक का आरभक जो परमाण्वन्तर उसमें क्रिया, फिर द्व्यणुक नाश, और दूसरे परमाणु में क्रिया से परमाणु आकाश का विभाग यह एक क्षण हुवा ॥ १ ॥ फिर श्यामरूप का नाश और विभाग होने से आकाश के साथ जो परमाणु का संयोग था उसका नाश ॥ २ ॥ तब परमाणु में रक्तोत्पत्ति तथा द्व्यणुक का आरंभक परमाणुद्वयसंयोग हुवा ॥ ३ ॥ फिर द्व्यणुक की उत्पत्ति हुवी ॥ ४ ॥ तब द्व्यणुक में रक्तरूप की उत्पत्ति हुवी ॥ ५ ॥

द्व्यणुक नाश क्षण में परमाण्वन्तर में यदि कर्म मानें तो षष्ठ क्षण में द्व्यणुक फिर से रक्तरूप वाला हो सकेगा—तथाहि—परमाणु में क्रिया होने से दूसरे परमाणु से विभाग हुवा, उसके बाद आरंभ संयोग नाश, फिर द्व्यणुक नाश और परमाण्वन्तर में कर्म यह ॥ १ ॥

---

सप्तमे अष्टमे वाक्षणे रक्तोत्पत्तिः, तत्रापि आरम्भकसंयोगनाशक्षणे परमाण्वन्तरे कर्मोत्पत्तौपञ्चमक्षणे, द्व्यणुकनाशक्षणे तदुत्पत्तौ षष्ठक्षणे, श्यामादिनाशक्षणे तदुत्पत्तौ सप्तमक्षणे, रक्तोत्पत्तिक्षणे तदुत्पत्तौ अष्टमक्षणे रक्तरूपोत्पत्तिर्बोध्या। तदेवविशदयति । परमाण्वन्तरे इति । द्व्यणुकनाशककर्मवत्परमाणुभिन्ने द्व्यणुकान्तरारंभकपरमाणौ इत्यर्थः । कर्मचिन्तनादिति । द्व्यणुकारंभकसंयोगनाशाद्युत्पत्तिक्षणे द्व्यणुकान्तरारंभककर्मोत्पत्तिस्वीकारादित्यर्थः । पञ्चमादिक्षणेपीति । द्व्यणुकनाश-प्रभृतीत्यादिः । गुणोत्पत्तिरिति । रक्ताद्युत्पत्तिरित्यर्थः । संभवतीतिशेषः । सम्भव-प्रकारमेवाह । तथाहीति । ततोविभाग इति । परमाणुद्वयविभागइत्यर्थः । आरंभ-कसंयोगनाशपरमाण्वन्तरकर्मणीति । द्व्यणुकारंभकसंयोगनाशः—द्व्यणुकारंभकं परमा-णुकर्मचेत्यर्थः । परमाण्वन्तरकर्मजन्यविभागइति । परमाण्वाकाशविभाग इत्यर्थः । पूर्वसंयोगनाशश्चेति । परमाण्वाकाशसंयोगनाशश्चेत्यर्थः । द्रव्यारंभकसंयोग-

श्यामनाशपरमाण्वन्तरकर्मजो विभागश्च २ ततोरक्तोत्पत्तिः परमाण्वन्तरे पूर्वसंयोगनाशश्च ३ ततः परमाण्वन्तरसंयोगः ४ ततो द्व्यणुकोत्पत्तिः ५ ततो रक्तोत्पत्तिः ६। इति षट्क्षणा। एवं श्यामनाशक्षणे परमाण्वन्तरे कर्मचिन्तनात्सप्तक्षणा—तथाहि—परमाणौ कर्म—ततः परमाण्वन्तरेण विभागः—तत आरम्भकसंयोगनाशः—ततो द्व्यणुकनाशः १ ततः श्याम-माशपरमाण्वन्तरकर्मणी २ ततो रक्तोत्पत्तिः परमाण्वन्तरे कर्मजविभागश्च ३ ततः परमाण्वन्तरेण पूर्वसंयोगनाशः ४ ततः आरंभकसंयोगः ५ ततो द्व्यणुकोत्पत्तिः ६ ततो रक्तोत्पत्तिः ७ इति सप्तक्षणा। रक्तोत्पत्ति-

क्षण ॥ फिर श्याम नाश, और परमाण्वन्तर में क्रिया होकर आकाश से परमाणु का विभाग ॥ २ ॥ तब परमाणु में रक्तोत्पत्ति तथा परमाण्वन्तर में पूर्वाकाशसंयोग नाश ॥ ३ ॥ फिर एक परमाणु का परमाण्वन्तर के साथ संयोग ॥ ४ ॥ तब फिर द्व्यणुकोत्पत्ति ॥ ५ ॥ फिर द्व्यणुक में रक्तोत्पत्ति ॥ ६ ॥ इति षट्क्षणा ॥

इसी प्रकार श्याम नाश क्षण में परमाण्वन्तर में कर्मोत्पत्ति पक्ष में सात क्षण होते हैं—तथाहि—परमाणु में कर्म फिर परमाण्वन्तर से विभाग, तब आरंभक संयोगनाश, फिर द्व्यणुक-नाश ॥ १ ॥ फिर श्यामनाश और परमाण्वन्तर में कर्म ॥ २ ॥ उसके बाद परमाणु में रक्तोत्पत्ति तथा परमाण्वन्तर में क्रिया होने से परमाण्वाकाश विभाग हुआ ॥ ३ ॥ तब परमाण्वन्तर से आकाश का पूर्वसंयोगनाश ॥ ४ ॥ उसके बाद एक परमाणु का दूसरे परमाणु के साथ संयोग ॥ ५ ॥ फिर द्व्यणुकोत्पत्ति ॥ ६ ॥ तब द्व्यणुक में रक्तोत्पत्ति ॥ ७ ॥ इति सप्तक्षणा।

---

श्चेति। परमाणुद्वयसंयोगइत्यर्थः। एवमग्रेपि। अष्टक्षणेति। अष्टौ क्षणाः यस्या-मितिवहुव्रीहिः। अष्टक्षणाप्रक्रियेतिशेषः।

ननु द्व्णुकविनाशोत्पत्तिद्वितीय-तृतीय-चतुर्थक्षणेष्वपि रक्ताद्युत्पत्तिः संभवति, सा प्रक्रिया कथमुपेक्षिता। द्वयणुकनाशसमकालं द्वणुकोत्पत्तिस्वीकारे द्वितीयक्षणे, द्वणुकनाशसमकालं आरंभकसंयोगोत्पत्तिस्वीकारे तृतीक्षणे, तादृशनाशसमकालं परमाण्वन्तरस्य पूर्वसंयोगनाशस्वीकारे चतुर्थक्षणे रक्ताद्युत्पत्तिः संभवति-तथाहि—द्वयणुकारंभकंपरमाण्वन्तरे कर्म—ततः परमाणौ द्वयणुकनाशकं कर्म-परमाण्वाकाश-विभागश्च। ततः परमाण्वाकाशसंयोगनाश परमाणुद्वयविभागश्च। ततः आरंभक-संयोगः पूर्वपरमाणुद्वयसंयोगनाशश्च। ततोद्वयणुकान्तरोत्पत्तिः पूर्वद्वयणुकनाशश्च। ततो रक्तोत्पत्तिः। एवं एकस्मिन् परमाणौ द्वयणुकनाशकं कर्म—परमाण्वन्तरे द्वयणुकारंभकं कर्म। ततः परमाण्वन्तरविभागः परमाणुद्वयविभागश्च। ततः परमाणव-न्तरस्य पूर्वदेशसंयोगनाशः—परमाणुद्वयसंयोगनाशश्च। तत आरंभसंयोगद्वयणुक-

नैयायिकानां तु नये द्व्यणुकादावपीष्यते ।

समकालं परमाण्वन्तरे कर्मचिन्तनादष्टक्षणा–तथाहि–परमाणौ कर्म–ततः परमाण्वन्तरविभागः–तत आरम्भकसंयोगनाशः–ततो द्व्यणुकनाशः १ ततः श्यामनाशः २ ततो रक्तोत्पत्तिपरमाण्वन्तरकर्मणी ३ ततः परमाण्वन्तर कर्मजविभागः ४ ततः परमाण्वन्तरे पूर्वसंयोगनाशः ५ ततः परमाण्वन्तर-संयोगः ६ ततो द्व्यणुकोत्पत्तिः ७ ततो रक्तोत्पत्तिः ८ इति अष्टक्षणा ॥१०५॥

नैयायिकानामिति । नैयायिकानां मते द्व्यणुकादावयविन्यपि पाको भवति । तेषामयमाशयः । अवयविनां सच्छिद्रत्वाद्वह्नेःसूक्ष्मावयवैरन्तः-प्रविष्टैरवयवेषु अवष्टब्धेष्वपि पाकोन विरुद्धयते । अनन्तावयवितन्नाशकल्पने

रक्तोत्पत्ति क्षण में परमाण्वन्तर में यदि कर्म चिन्तन करें तो आठ क्षण में द्व्यणुक फिर से रक्तरूपवाला हो सकेगा–तथाहि–परमाणु में कर्म, फिर परमाण्वन्तर से विभाग, तब आरंभसंयोग नाश, फिर द्व्यणुकनाश ॥ १ ॥ फिर परमाणु में श्यामनाश ॥ २ ॥ तब परमाणु में रक्तोत्पत्ति और परमाण्वन्तर में कर्म ॥ ३ ॥ फिर परमाण्वन्तर में क्रियाजन्य परमाणु आकाश का विभाग ॥ ४ ॥ उसके बाद परमाण्वन्तर से आकाश का पूर्वसंयोग नाश ॥५॥ तब एक परमाणु का दूसरे परमाणु के साथ संयोग ॥६॥ फिर द्व्यणुकोत्पत्ति ॥७॥ तब रक्तोत्पत्ति ॥ ८ ॥ ये अष्टक्षण हुवे ।

गौतममतावलम्बियों के मत में द्व्यणुक आदि अवयवी में भी पाक होता है । उनका यह आशय है कि—घट आदि अवयवी सच्छिद्र होते हैं–अतः वह्नि के सूक्ष्म अवयव–सच्छिद्र अवयवी के अन्तः प्रविष्ट होकर अवयवी से अवष्टब्ध ( आवृत ) एवं अवयवी के आकार से संबद्ध अर्थात् ज्यों के त्यों बने हुवे अवयवों में भी पाक सपन्न कर देते हैं–अतः अवयवी में

---

नाशश्च । १ ततो द्व्यणुकान्तरोत्पत्तिः । २ ततो रक्तोत्पत्तिः । ३ एवं परमाणौ कर्म–ततः परमाण्वन्तरे कर्म–परमाणुद्वयविभागश्च । ततः परमाणुद्वयसंयोगनाशः–परमाण्वाकाशविभागश्च । ततो द्व्यणुकनाशः–पूर्वदेशसंयोगनाशश्च १ उत्तरदेश-संयोगः २ द्व्यणुकान्तरोत्पत्तिः ३ रक्तोत्पत्तिरितिद्वित्रिचतुषु क्षणेषु द्व्यणुके रक्तोत्पत्तिः सुकरैवेति चेन्न । द्व्यणुकनाशक्षणे द्व्यणुकोत्पत्तिर्न संभवति, पूर्वक्षणे परमाणौ प्रतिबन्धकीभूतद्व्यणुकसत्त्वात् , समवायेन द्रव्यंप्रति समवायसंबन्धावच्छिन्नप्रतियो-गिताकद्रव्याभावहेतुतायाः सर्वसिद्धत्वात् । द्व्यणुकनाशात्पूर्वं परमाणूनां श्यामत्वेनाऽ रक्ततया तेषां रक्तसमवायिद्व्यणुकान्तरत्वादक्त्वासंभवात् । द्व्यणुकोत्पत्तिसमये द्वयोरेव परमाण्वोर्नीरूपत्वापत्त्या चतुर्थक्षणेपि रूपोत्पत्त्यसंभवादिति दिक् । १०५

द्व्यणुकादावयविन्यपीति । द्व्यणुकप्रभृतिअन्त्यावयविपर्यन्तावयविसमुदा-येपीत्यर्थः । अविना परमाणुभिरिमदः । पाकोभवतीति । पूर्वरूपपरावृत्तिः, रूपान्तरो-

**गौरवात् । इत्थं च सोयं घट इति प्रत्यभिज्ञापि संगच्छते । यत्र तु न प्रत्यभिज्ञा तत्रावयविनाशोपि स्वीक्रियते इति ।**

पाक मानने पर कोई विरोध नहीं है । और वैशेषिकों के मत में अनन्त अवयवी एवं उनके नाश की कल्पना करने में गौरव है । इसीलिये अवयवी में पाक मानने पर ही "सोऽयं घटः" यह प्रत्यभिज्ञा भी नैयायिकों के मत में संगत हो जाती है । और जिस मत में पक्वघट में यह प्रत्यभिज्ञा नहीं होती है–उस मत में अवयवी विनाश स्वीकार करने में कोई आपत्ति नहीं है ।

---

त्पत्तिश्च भवतीत्यर्थः । **तेषामिति** । नैयायिकानामित्यर्थः । **अयमिति** । वक्ष्यमाण इत्यर्थः । **आशयइति** । बोध्यइतिशेषः । आशयमेवोपपादयति । **अवयविनामिति** । घटादीनामित्यर्थः । **सच्छिद्रत्वादिति** । वन्हेःसूक्ष्मावयवानां प्रवेशमात्रयोग्यछिद्रवत्वादित्यर्थः । **वन्हेः सूक्ष्मावयवैरिति** । घटावयविषु इत्यादिः । **अन्तःप्रविष्टैरिति।** अवयव्यन्तः प्रविष्टैः वन्हेः सूक्ष्मावयवैरित्यर्थः । **अवयवेष्ववष्टब्धेष्वपीति** । अवयविना सहेत्यादिः । अवयविनाऽवष्टब्धेष्ववयवेष्वपीत्यर्थः । अपिनाऽवयव्यनवष्टब्धावयवपरिग्रहः । **पाकइति** । पूर्वरूपपरावृत्तिः रूपान्तरोत्पादश्चेत्यर्थः । **नविरुध्यतेइति** । अवयविना न बाध्यते इत्यर्थः । घटादेः सच्छिद्रत्वात् तस्य घटोपादानयावदवयवेषु वह्निसंयोगविघटकत्वासंभवादितिभावः । अवयविनाशानंगीकारे बाधकाभावमुक्त्वा तदङ्गीकारे बाधकमप्याह । **अनन्तावयवीति** । **इत्थंचेति** । अवयविनाशानङ्गीकारे चेत्यर्थः । **प्रत्यभिज्ञापि संगच्छतेइति** । तादृशप्रत्यभिज्ञायाः प्रमात्वमुपपद्यते इत्यर्थः । पूर्वावयविविनाशे तूत्तरोत्पन्नावयविनि पूर्वावयविनोरभेदाभावेनाऽभेदावगाहिप्रत्यभिज्ञायाः प्रमात्वं न स्यादिति भावः । **यत्र** । वक्रसच्छिद्रादिघटे । **तत्रेति** । यत्र कुलालस्य भोक्तुर्वा दुरदृष्टसहकृतसामग्रीतः सच्छिद्रघटादेरुत्पत्तिस्तत्रैवेत्यर्थः । अत्रेदं चिन्त्यते । नैयायिकैरपि क्वचिद् वैशेषिकप्रक्रियायाः स्वीकरणीयतया घटारंभकसकलपरमाणुष्वपि वन्हिसंयोगाद् द्व्यणुकनाशकक्रियोत्पत्तेः सत्त्वात्सर्वघटनाश आवश्यकः, तादृशाग्निसंयोगस्य विजातीयत्वे प्रमाणाभावात् । नचैवं सोयं घट इति प्रत्यभिज्ञा कुत्रचित्कथं संगच्छते इति वाच्यम् । प्रमाणेन पूर्वघटनाशसिद्धौ क्वचित्तादृशप्रभिज्ञाया; तदेवौषधमित्यादिप्रत्यभिज्ञाया इव सजातीयाऽभेदविषयकत्वस्वीकारेणैवोपपन्नत्वादिति । अथ नैयायिकमते नीलादिकं प्रति अवयवनीलस्याऽग्निसंयोगस्य च हेतुतया परस्परं व्यभिचारेण कथं कार्यकारणभावः, कथं वा तेजःसंयोगस्य नीलादिनाशकत्वम्, आश्रयनाशस्याप्युक्तक्रमेण नीलादिनाशकतया व्यभिचारात् । नच नीलादिकं प्रति अवयवनीलादेर्हेतुत्वे मानाभावः, तत्तद्व्यक्तिसमवेतं प्रति तत्तद्व्यक्तित्वेन समवायिकारणतया यावद्रि-

शेषसामग्रीबाधादेव पीताद्यारब्धेऽवयविनि नीलाद्यनुत्पादात्, तत्तद्व्यक्तिसमवेतातिरिक्तस्य नीलादेरलीकत्वादिति वाच्यम्। भावकार्याणां साऽसमवायिकारणकत्वनियमानुरोधेनाऽवयविनीलादिकं प्रति अवयवनीलादेरसमवायिकारणत्वस्यावश्यकत्वात्, अवयविनीलादिकं प्रति अवयवनीलादेरकारणत्वे नीलावयविनि पाकात्पीतोत्पत्तिदशायां नीलोत्पत्तेर्दुर्वारत्वाच्च। नीलरूपस्यापि तद्व्यक्तिसमवेतत्वेन तदवयविव्यक्तिनीलरूपं प्रत्यपि समवायिकारणत्वादिति चेन्न-विलक्षणनीलत्वेन कार्यता, नीलत्वेनैव कारणता, समवायेन विलक्षणनीलं प्रति स्वाश्रयसमवेतत्वसंबन्धेन नीलस्य कारणत्वात्। वैलक्षण्यं च नीलादिजन्यतावच्छेदकतया सिद्धो नीलत्वव्याप्यजातिविशेषः, स च परमाणुरूपव्यावृत्तोऽवयविपाकजरूपव्यावृत्तश्चाऽतो नव्यभिचारः।

एवं विलक्षणनीलत्वेन तेजः संयोगत्वेन कार्यकारणभावः, कार्यताकारणतावच्छेदकसंबन्धश्च समवायः वैलक्षण्यं च पाकजन्यतावच्छेदकतया सिद्धो नीलत्वव्याप्यजातिविशेषः, स च नीलजन्यतावच्छेदकजातिविरुद्धो निखिलपरमाणुनीलवृत्तिः, अवयविपाकजनीलवृत्तिश्च। न च विलक्षणनीलत्वावच्छिन्नं प्रति तेजः संयोगत्वेन हेतुत्वे यथाकथंचित्तेजःसंयोगादपि नीलोत्पत्त्यापत्तिरिति वाच्यम्। विलक्षणतेजः संयोगत्वेन हेतुत्वात्। नचावयवनीलादेः तत्तज्जातिविशेषावच्छिन्नं प्रति हेतुत्वे नीलत्वं कस्य कार्यतावच्छेदकमिति वाच्यम्। पृथिवीत्वेन मूर्तत्वेन वा तदवच्छिन्नं प्रति समवायिकारणत्वात्। विलक्षणतेजः संयोगा-वयवनीलात्मकविशेषकारणद्वयाभावादेव द्रव्यान्तरे तदनुत्पादसंभवात्, तेजस्यपि विलक्षणतेजःसंयोगसत्त्वेपि विद्यमानरूपेणैव प्रतिबन्धात्। एतेन पीतादिरूपाणि रसगन्धस्पर्शनैमित्तिकद्रवत्वानि च व्याख्यातानि। न च शुक्लजन्यतावच्छेदकशुक्लनिष्ठवैजात्यम्, भास्वरत्वादिना संकरप्रसंगभयाद् दुर्वचमिति वाच्यम्। पृथिव्यवयविवृत्तिशुक्लमात्रवृत्तिवैजात्यविशेषः पृथिवीशुक्लजन्यतावच्छेदकः, भास्वरादिजन्यतावच्छेदकश्च अवयविभास्वरमात्रवृत्तिजातिविशेष इत्यभ्युपगमादिति न काप्यनुपपत्तिः।

तेजःसंयोगनीलाद्योर्नाश्यनाशकभावस्तु विशेषणताविशेषवद्रूपनाशं प्रति विलक्षणतेजःसंयोगः कारणम्। आश्रयनाशजन्यरूपनाशे व्यभिचारवारणाय विशेषणताविशेषवदिति रूपनाशविशेषणम्। विशेषणताविशेषश्च प्रतियोगिसमवायिनि यादृशविशेषणतया नाशो वर्तते तादृशविशेषणता। तथाच प्रतियोगितासंबन्धेन विलक्षणरूपनाशं प्रति स्वसमवायिपृथिवीसमवेतत्व स्ववृत्तिरूपत्वोभयसंबन्धेन तेजःसंयोगः कारणम्। स्वसमानाधिकरणरसगन्धादौ प्रतियोगितासंबन्धेन रूपनाशोत्पादवारणाय स्ववृत्तिरूपत्वस्य संबन्धकोटौ प्रवेशः। स्ववृत्तित्वं च कालिकविशेषणतया बोध्यम्। स्वसमवायिसमवेतत्वविशिष्टरूपत्वस्य संबन्धत्वे विनिगमनाविरहान्नाश्यनाशकभावद्वयापत्तिरिति तत्परित्यागः। तेजोवृत्तिरूपे प्रतियोगितासंबन्धेन तादृशरूपनाशापत्तिवारणाय पृथिवीत्वनिवेशः। अतएव पृथिवीत्वजातिरपि प्रामाणिकी। नच यत्र विशेषणताविशेषेण रूपनाशः तत्र स्ववृत्तिपृथिवीत्व, समवायोभयसंबन्धेन विलक्षण-

तेजःसंयोगः इत्येव कार्यकारणभावोस्तु लाघवात्, विशेषणताविशेषस्य कार्यतावच्छेदकसंबन्धत्वादेवाऽऽश्रयनाशजन्यरूपनाशे व्यभिचारविरहादिति वाच्यम्। तथासति विद्यमानरूपस्यैव विनिगमनाविरहेणाऽतीतानागतरूपस्यापि नाशोत्पत्तिप्रसंगात्। प्रतियोगिनो ध्वंसहेतुत्वे मानाभावाद् गौरवाच्च। प्रतियोगिनो ध्वंसहेतुत्वाभ्युपगमेपि तत्तद्व्यक्तित्वेनैव हेतुत्वात्।

वस्तुतस्तु रूपनाशत्वावच्छिन्नं प्रत्येव विलक्षणतेजःसंयोगस्य हेतुत्वम्, नतु विशेषणताविशेषेण 'वृत्तिम दितिरूपनाशविशेषणम्'। आश्रयनाशानाश्यरूपवृत्तिप्रतियोगिता च कार्यतावच्छेदकसंबन्धः, ध्वंसभेदेन प्रतियोगिताभेदस्य सर्वसिद्धत्वात्, अत आश्रयनाशजन्यरूपनाशे न व्यभिचारः। एवमेव रसगन्धस्पर्शद्रवत्वनाशकत्वमपि तेजःसंयोगस्यावसेयम्। रूपरसादिभेदेन नाश्यनाशकभावपंचकस्यानायत्याऽभ्युपगमात्।

अस्तु वा रूपरसगन्धस्पर्शद्रवत्वसाधारणमूर्तविशेषगुणत्वाख्यमेकं वैजात्यं पाकनाश्यतावच्छेदकम्, तदवच्छिन्ननाशत्वमेव कार्यतावच्छेदकम्, न तु रूपरसादिभेदेन नाश्यनाशकभावभेदो गौरवात्, पाकाद्रूपादीनां पंचानामेकतमनाशोत्पत्तिसमये पंचानामेवाऽवश्यं विनाश इत्युभ्युपगमात्। कारणतावच्छेदकसंबन्धघटकमपि स्ववृत्तिमूर्तविशेषगुणत्वमेव। पृथिवीत्वस्य कारणतावच्छेदकसंबन्धघटकत्वयैव तेजोवृत्तिरूपादेरिव सांसिद्धिकद्रवत्वस्यापि पाकान्न नाशः। नच नैमित्तिकद्रवत्वस्यापि विशेषगुणत्वे सिद्धान्तविरोधः। पारिभाषिकविशेषगुणत्वमादायैव तदुपपत्तेः।

नच चाक्षुषत्वाचोभयप्रतिबन्धकतावच्छेदकरसगन्धगुरुत्वस्थितिस्थापकवृत्तिवैजात्येन समं सांकर्यापत्त्या न तादृशजातिसंभवः, तद्वैजात्यस्य रसगन्धमात्रवृत्तित्वे गुरुत्वस्थितिस्थापकयोश्चाक्षुषापत्तेः, मानसप्रतिबन्धकतावच्छेदकभावनाधर्माधर्मनिष्ठवैजात्यस्यैव मानसत्वावच्छिन्नं विहाय प्रत्यक्षत्वावच्छिन्नं प्रति प्रतिबन्धकतावच्छेदकतया गुरुत्वस्थितिस्थापकसाधारण्येन कल्पने आत्ममनःसंयोगजन्यतावच्छेदकाऽऽत्मविशेषगुणत्वमादाय सांकर्यमिति वाच्यम्। जातिद्वयस्यैव चाक्षुषत्वाचोभयप्रतिबन्धकतावच्छेदकत्वात्, एका रसगन्धमात्रनिष्ठा, अन्या च गुरुत्वस्थितिस्थापकनिष्ठेति।

अथ रूपनाशकतावच्छेदकमग्निसंयोगनिष्ठवैलक्षण्यं न नीलादिजनकतावच्छेदकाग्निसंयोगनिष्ठवैलक्षण्यस्य व्याप्यं तदभिन्नं वा व्यभिचारेण रूपनाशत्वस्य मूलविशेषगुणत्वस्य वा तत्कार्यतावच्छेदकत्वाऽसंभवात्। नापि नीलादिजनकतावच्छेदकवैलक्षण्यव्यापकं, यत्र परमाण्वन्तं घटादौ आशुअग्निसंयोगोत्पत्तिद्वितीयक्षणेपरमाण्वन्तं घटे पूर्वरूपनाशोऽग्निक्रियानाशश्च—ततः परमाण्वन्तं घटे रूपान्तरोत्पत्तिः अग्नेः क्रियान्तरोत्पत्तिश्च, तेजसोऽतिशयितगमनशीलत्वात्, ततस्तद्रूपविनाशोऽग्निघटादिविभागश्च—ततोऽग्निसंयोगनाशः—इदानीं च घटादौ न पुनः रूपान्तरोत्पत्तिः, असमवायिकारणस्य कार्यसहभावेन हेतुत्वात्, तत्र घटादेर्नीरूपत्व प्रसंगात्, सर्वत्र मध्यमरूपव्यक्तीनां क्षणिकत्वप्रसंगाच्चेति चेन्न। अन्यत्राऽसमवायि

गणनाव्यवहारे तु हेतुः संख्याभिधीयते ॥१०६॥

संख्यां निरूपयितुमाह । गणनेति । गणनाव्यवहाराऽसाधारणकारणं संख्येत्यर्थः ॥१०६॥

संख्या का निरूपण करते हैं—गणना का जो व्यवहार ( एक-दो-तीन इत्यादि ) उसका असाधारण कारण संख्या है। नित्य परमाणु आदि में एकत्व संख्या नित्य है-अनित्य

---

कारणस्य कार्यसहभावेन हेतुत्वेपि अत्र तेजःसंयोगस्य तथा हेतुत्वानभ्युपगमात्। नच तथापि क्षणिकत्वापत्तिर्दुर्वारेति वाच्यम्। मध्यमरूपव्यक्तीनां क्षणिकत्वस्येष्टत्वात्।

यद्वा नीलादिजनकतावच्छेदकजातिविरुद्धजातेरेव रूपादिनाशकतावच्छेदकत्वात्, अपाकाग्निसंयोगान्न तन्नाशसंभवः। एवं चैकस्मादग्निसंयोगाच्छ्यामादिविनाशः, अन्यस्मादग्निसंयोगाच्छ्यामादिनाशकालोत्पन्नाद्रक्ताद्युत्पत्तिः, अग्निसंयोगवत्यपि अग्न्यन्तरसंयोगोत्पत्तौ बाधकाभावात्। निविडयोर्मूर्तयोरेव समानदेशताविरोधात्।

वस्तुतस्तु रूपनाशकतावच्छेदकमग्निसंयोगनिष्ठवैलक्षण्यं नीलादिजनकतावच्छेदकतानिष्ठवैजात्यव्यापकमेव, अत्र प्रतियोगितासंबन्धेन रूपनाशः तत्र स्वसमवायिपृथिवीसमवेतत्व—स्वपूर्ववर्तित्व—स्ववृत्तिरूपत्वैतत्त्रितयसंबन्धेन विलक्षणसंयोग इति सामानाधिकरण्यप्रत्यासत्त्या नाशकत्वाभ्युपगमाच्च न मध्यमरूपादीनां क्षणिकत्वमितिशम्॥

संख्यां निरूपयितुमिति। उद्देशक्रमप्राप्तामित्यादिः। उद्देशक्रमेणैव लक्षणाभिधानस्य सकलतन्त्रसिद्धत्वादिति भावः। व्यवह्रियते "हानोपादानादिक्रियते" अनेनेति व्यवहारो ज्ञानम्। एकं द्वे त्रीणीत्याकारकम्। तस्य विषयविधया हेतुः संख्येत्यर्थः। हानं—निवृत्तिः। उपादानं—प्रवृत्तिः। आदिना इच्छाद्वेषशब्दप्रयोगपरिग्रहः।

अथ एकः द्वौ इत्याकारकं ज्ञानं यदि सविषयं स्यात्तदा तत्परिशेषेण स्वविषयसंख्यां साधयेत्, तत्रादौ तद्ज्ञानस्य सविषयत्वे किं मानमिति चेन्न। एकादिज्ञानं "एकादिविषयकज्ञानं" निर्विषयं चेति व्याघातात्, एकः द्वौ इत्यादिप्रत्ययानां विलक्षण्यानुपपत्तिप्रसंगाच्च। नचास्तु सविषयकं परन्तु भ्रमवदसद्विषयकमेवास्तु कुतोऽस्य विषयसाधकत्वमिति वाच्यम्। भ्रमभिन्नत्वात्। भ्रमभिन्नज्ञानस्य च सद्विषयकत्वनियमादितिभावः।

अथ एक इति ज्ञानं घटमात्रविषयकमस्तु एवं च घटातिरिक्तविषयकत्वे न तत्तोधर्मिभिन्नसंख्यासिद्धिरिति चेन्न। तद्घटविषयकत्वे विषयाननुगमाद्नुगताकारतानुपपत्तिः, घटस्वरूपाणामनुगमकविषयान्तरस्वीकारे च तस्यैव घटे साक्षात्कारत्वसंभवान्नैकत्वस्य घटस्वरूपतास्वीकारसंभव इति सर्वत्र यत्किंचिदेकपद-

विषयकत्वमुपगन्तव्यम्, तथाचाऽसंभवतद्घटविषयताकस्य घटान्तरे एक इति ज्ञानस्यानुपपत्तेः। नचेष्टापत्तिः। घटान्तरेपि एक इति ज्ञानस्य सद्भावात्। नच घटत्वमेव एकत्वमस्तु तच्च सकलघटेषु अनुगतमिति वाच्यम्। पटेपि एकत्वप्रत्ययात्। पटे एकत्वप्रत्ययस्य पटत्वरूपैकत्वविषयकत्वेऽननुगमात्, अनुगमकधर्मान्तरस्य जातिरूपस्याऽसंभवात्। नापि रूपादिनिबन्धनं, परैरनङ्गीकारात्। तत्प्रत्ययविलक्षणत्वाच्च, रूपनिमित्तो हि प्रत्ययोनीलंपीतमित्येवस्यान्नतु एकं द्वे इति। नच पटे एकत्वप्रत्ययोभ्रम इति वाच्यम्। पटादौ एकत्वप्रत्ययस्यावाधितत्वात्।

तथाच घटादिविशेष्यकएकपदवृत्तिनिमित्तप्रकारक "निर्धर्मितावच्छेदकक" प्रत्ययः—घटघटत्वाप्रकारकत्वे सति घटघटत्वातिरिक्तप्रकारकः घटघटत्वशून्य "पटादि" विशेष्यकत्वे सति प्रमात्वाद् वस्त्रचर्मकंवलेषु नीलप्रत्ययवदितिप्रयोगः पर्यवसितः। यद् यद्यच्छून्यविशेष्यकं सद्भ्रमभिन्नं तत् तत्तदन्यप्रकारकमिति सामान्यव्याप्तिः। यथा वस्त्रादिविशेष्यकं नीलप्रकारकं ज्ञानं वस्त्रवस्त्रत्वशून्यविशेष्यकत्वे सति भ्रमभिन्नं वस्त्रवस्त्रत्वातिरिक्तनीलप्रकारकं च नीलादेर्वस्त्रभिन्नत्वस्योभयमतसिद्धत्वादिति ध्येयम्।

अथवा व्यवह्रियते अनेनेतिव्यवहारः शक्तिः, गणनापदं एकादिपरम्। एकाकिपदशक्यतावच्छेदिका संख्येत्यर्थः।

एवं च कर्मत्वातिरिक्तसुबर्थतात्पर्यरहितं घटमानयेतिवाक्यं यदि एकमानयेतिवाक्यजबोधान्यूनविषयकबोधजनकं स्यात्तदा एकं अनेकं वाऽऽनयतीतिसंशयनिवर्तकबोधजनकं स्यात्, एकमानयेतिवाक्यवदितितर्कोपि एकादिप्रत्ययस्याऽतिरिक्तसंख्याविषयकत्वव्यवस्थापको बोध्यः। उक्ततर्काद् घटमानयेतिवाक्यजबोधस्य न्यूनविषयकत्वसिद्धौ एकपदस्याऽतिरिक्तार्थकत्वसिद्धिः पर्यवस्यति। एवं एकमानयेतिवाक्यं यदि घटमानयेतिवाक्यजबोधान्यूनविषयकबोधजनकं स्यात्तदा घटमानयति पटंवेतिसंशयनिवर्तकबोधजनकं स्याद् घटमानयेतिवदितितर्कोपि बोध्यः। तावता एकमानयेतिवाक्यजबोधस्य घटत्वाद्यविषयकत्वसिद्धौ एकशब्दस्य घटत्वविशिष्टावाचकत्वग्राहकप्रमाणेनातिरिक्तैकत्वगुणविशिष्टवाचकत्वसिद्धिः।

अथ सन्तु तर्हि जातिविशेषा एवसंख्याः घटत्वादिवत् कृतं गुणान्तरकल्पनया। नचाऽतिरिक्तसंख्यास्वीकारस्यावश्यकत्वे सा सामान्यरूपा गुणरूपा वेत्यत्र विनिगमनाविरह इति वाच्यम्। संख्यागुणत्वपक्षेपि एकत्वत्वद्वित्वत्वादिजातिमादायैव एकः द्वौ इत्यादिप्रत्ययानामनुगताकारता वाच्या, एवं चैकत्वद्वित्वादिकमेव सामान्यमस्तु। नच व्यासज्यवृत्तित्वमेव तस्य जातित्वे वाधकम्, जातेर्व्यासज्यवृत्तित्वनियमादिति वाच्यम्। तादृशनियमस्याऽप्रयोजकत्वात्, घटत्वादेश्च मानाभावेन व्यासज्यवृत्तित्वाभावात्। एवंच गुणकर्मणोरपि द्वित्रिव्यवहारोमुख्यमेव, जातित्वे तत्रापि तत्संभवात्। नच द्वित्वत्रित्वादेर्जातित्वे परिमाणाऽसमवायिकारणत्वं न स्यात्, असमवायिकारणत्वं गुणकर्मणोरेवेति नियमादिति वाच्यम्। तादृशनियमे मानाभावात्। जात्यन्तरस्य कार्यकारणान्यतरैकार्थप्रत्यासत्या क्वचिदपि कार्यकारण-

त्वाभावेन तन्निष्ठकारणतायां प्रामाणिकानामसमवायिकारणताव्यवहाराभावेन चाऽसमवायिकारणत्वाभावेपि कारणैकार्थप्रत्यासत्त्या द्वित्वादिनिष्ठपरिमाणकारणतायामसमवायिकारणतात्वेन प्रामाणिकव्यवहारस्य सत्वात्। नहि असमवायिकारणलक्षणे सामान्यत आत्मविशेषगुणावृत्तित्ववत्सामान्यतोजात्यवृत्तित्वविशेषणमप्यस्तीतिचेन्न।

द्वित्वमुत्पन्नं-द्वित्वं विनष्टमित्यादिप्रत्ययात्। द्वित्वादेर्नित्यत्वे संख्यात्वजातेस्तत्रासंभवप्रसंगाच्च। नित्यानेकसमवेतधर्मस्य जातिशून्यत्वनियमात्। द्वित्वादेर्जातित्वे सत्तादिवद्यावदाश्रयसन्निकर्षादिविरहेपि प्रत्यक्षतापत्तेश्च। व्यासज्यवृत्तिगुणत्वाख्यजातिविशेषाश्रयप्रत्यक्षं प्रत्येव यावदाश्रयसन्निकर्षादेरपेक्षितत्वेन, जातौ च जात्यसंभवात्। प्रातिस्विकरूपेण द्वित्वत्रित्वादिप्रत्यक्षं प्रति यावदाश्रयसन्निकर्षादेरपेक्षितत्वेऽनन्तकार्यकारणभावप्रसंगादिति संक्षेपः।

एतेन व्यासज्यवृत्तितया द्वित्वत्रित्वादिकं मास्तु जातिः, एकत्वं तुद्रव्यादित्रयवृत्तिजातिरेवास्तु, अतएव गुणकर्मणोरप्येकव्यवहारोमुख्य एव। नच सत्तया सहाऽन्यूनानतिरिक्तवृत्तितया न तादृशजातिसंभव इति वाच्यम्। तथापि घटत्वकलशत्ववत् सत्तैकत्वयोरेकजातित्वे बाधकाभावात्। सत्तैकत्वयोस्तुल्यव्यक्तिवृत्तित्वेपि एकः—सन्नित्यादिप्रत्ययवैलक्षण्यादेव विभिन्नजातिसंभवाच्च। तुल्यव्यक्तिवृत्तिजात्योर्भेदाभावेमानाभावस्यैव मूलत्वात्। नचैकत्वस्यजातित्वे द्रव्यमिदं द्रव्यमित्यादिवत् द्रव्यमिदमेकमित्यपि प्रतीतिः स्यादितिवाच्यम्। एकत्वस्य प्रतिव्यक्तिभिन्नगुणत्वेपि द्रव्यमिदंरूपवदितिप्रतीतिवद्द्रव्यमिदमेकमितिप्रतीतेर्दुर्वारत्वात्।

अथ द्वित्वाद्यसमवायिकारणतया एकत्वस्य गुणत्वसिद्धिः, असमवायिकारणत्वं गुणकर्मणोरेवेति नियमेन जातेस्तदसमवायिकारणत्वाऽसंभवादिति चेन्न।
परिमाणस्यैव तत्राऽसमवायिका
कारणकत्वनियमस्याप्रयोजकतया
पूर्वपक्षोपि निरस्तः। घटादिनाशे
जातित्वे तत्र संख्यात्वजातिसत्वाऽसंभवाच्चेति।

ननु अस्तु एकत्वं गुणः, तथापि तत्सकलवृत्तिएकमेव लाघवात्, नतु प्रतिव्यक्तिविभिन्नमितिचेत्—तद्धि नित्यमनित्यं वा। आद्ये जातितया तत्र संख्यात्वजातेरसंभवात्। अन्त्ये आश्रयभेदेन भेदस्यावश्यकत्वात्, अन्यथा समवायिकारणीभूतानां यावद्द्रव्याणामेकदाऽभावेन क्वाप्येकत्वोत्पत्तेरसंभवात्, यत्किंचिद्द्रव्यनाशेनैव सकलद्रव्यवृत्तिएकत्वनाशप्रसंगाच्च। नच तथापि सर्वेषां नित्यानामेकमेव एकत्वमस्तु इति वाच्यम्। नित्यवृत्तिएकत्वस्य नित्यतयाऽनेकसमवेतत्वे तत्र संख्यात्वजातेरसंभवात्, नित्यानेकसमवेतधर्मस्य जातिशून्यत्वनियमात्। नच तथापि युगपदुत्पन्नविनष्टद्रव्याणामेकमेव जन्यैकत्वमस्तु लाघवादिति वाच्यम्। तथासति युगपदुत्पन्नविनष्टद्रव्याणामेकजातीयरूपादेरपि एकत्वप्रसंगात्। इति १०६

नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते ।
द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥१०७॥

नित्येष्विति । नित्येषु परमाण्वादिषु एकत्वं नित्यम् । अनित्ये घटादौ एकत्वमनित्यमित्यर्थः । द्वित्वादयस्तु व्यासज्यवृत्तिसंख्या अपेक्षाबुद्धिजन्याः ॥१०७॥

घट आदि में वह एकत्व संख्या अनित्य है । और द्वित्व-त्रित्व आदि जो दो-तीन आदि व्यासज्यवृत्ति पदार्थ में रहने वाली परार्द्ध पर्यन्त संख्या है वह सब अनित्य है—कारण कि वह द्वित्व आदि संख्या अपेक्षा बुद्धि से जन्य है ॥१०७॥

---

अनित्ये घटादाविति । तथाच एकत्वसंख्यां प्रति स्वाश्रयः समवायिकारणम् । अवयगतैकत्वमसमवायिकारणम् । केचित्तु द्रव्यस्यैव कारणत्रितयजन्यत्वनियमाद् भावकार्यमात्रस्य तादृशजन्यत्वे मानाभावादेकत्वस्याऽसमवायिकारणजन्यत्वाभावेपि क्षतिविरहादित्याहुः । व्यासज्यवृत्तिसंख्याइति । एकत्वान्यसंख्याइत्यर्थः । तथाच द्वित्वसंख्यां प्रति द्वित्वाश्रयः समवायिकारणम् । एकत्वद्वयमसमवायिकारणम् । अयमेकः—अयमेकःइत्याकारकापेक्षाबुद्धिनिमित्तकारणम् । एवं त्रित्वं प्रत्यपि स्वाश्रयः समवायिकारणम् । समवायिकारणगतं एकत्वत्रयमसमवायिकारणम् । अयमेकःअयमेकःअयमेकःइत्यपेक्षाबुद्धिर्निमित्तकारणम् । एवं सर्वत्र संख्यान्तरेषु समवायिकारणगतयावदेकत्वमसमवायिकारणं बोध्यम् ।

अत्रेदं बोध्यम् । अनेकसंख्या—अनेकपृथक्त्वपरत्वाऽपरत्वानि अपेक्षाबुद्धिजन्यानि अन्यथा समवाय्यसमवायिनोरेव केवलं तेषामसाधारणकारणत्वेऽपेक्षाबुद्धिविरहेपि घटादिषु द्वौत्रयः इत्यादिप्रत्यक्षस्यापत्तेः । सिद्धान्ते अपेक्षाबुद्धेर्द्वित्वादिव्यंजकत्वानभ्युपगमात्, द्वित्वद्विपृथक्त्वादिव्यक्त्योः परस्परविलक्षणाऽपेक्षाबुद्ध्यजन्यत्वे द्वित्वोत्पत्तिकाले द्विपृथक्त्वोत्पत्तिः, द्विपृथक्त्वोत्पत्तिकाले च द्वित्वोत्पत्तिश्च स्यात् । द्वित्वद्विपृथक्त्वयोः परस्परविलक्षणाऽपेक्षाबुद्धिजन्यत्वोपगमे तु यद्द्वित्वव्यक्त्युत्पत्तिकाले स्वजनकापेक्षाबुद्धिविरहान्न द्विपृथक्त्वोत्पत्तिः, द्विपृथक्त्वव्यक्त्युत्पत्तिकाले च स्वजनकापेक्षाबुद्धिविरहान्न द्वित्वोत्पत्तिरिति ।

अथाऽपेक्षाबुद्धेर्द्वित्वादिकं प्रति केनरूपेण कार्यकारणभावः । नच समवायसंबन्धेन द्वित्वादिकं प्रति विशेष्यतासंबन्धेन एकत्वप्रकारकज्ञानं कारणम् एवमनेकपृथक्त्वं प्रति एकपृथक्त्वप्रकारकज्ञानत्वेनेतिवाच्यम् । नायमेकइति ज्ञानेपि एकइतिनिर्धर्मितावच्छेदकज्ञानाद् एकंद्रव्यमितिसामान्यधर्मावच्छिन्नविशेष्यताकज्ञानाच्च द्वित्वोत्पादापत्तेः । तदानीं द्वावितिप्रत्यक्षानुत्पादस्य सर्वसिद्धत्वादिष्टापत्तेरयोगात् । नच द्रव्यद्वयावृत्तिधर्मावच्छिन्नविशेष्यत्वं कारणतावच्छेदकसंबन्ध इति वाच्यम् । एवमपि द्रव्यद्वयावृत्तित्वस्य द्रव्यद्वयासमवेतत्वरूपतया नायमेकइतिज्ञानेपि प्रमेयमेकमितिज्ञानात्, द्वित्वाद्युत्पादापत्तेः । नायमेकइतिज्ञानेपि रूपवदेकं, गन्धवदेकमिति-

ज्ञानाद्द्वित्वाद्युत्पादापत्तिश्च। अथ इदन्त्वावच्छिन्नविशेष्यताकैकत्वप्रकारकज्ञानत्वेन कारणता, एतद्व्यक्तिसमवेतानेकसंख्यात्वेन कार्यता। अनेकसंख्यात्वं च एकत्वान्यसंख्यात्वम्, जातिविशेषो वा। नचैवमपि एतद्व्यक्तिमात्रे तादृशैकत्वप्रकारकज्ञानादेतद्व्यक्तिसमवेतद्वित्वाद्यापत्तिर्दुर्वारेति वाच्यम्। व्यक्त्यन्तरसमवेतातिरिक्तस्यैतद्व्यक्तिसमवेतद्वित्वादिकस्यालीकतया तत्तद्व्यक्तिसमवेतद्वित्वादिजनकीभूतस्य तत्तद्व्यक्तित्वावच्छिन्नविशेष्यताकैकत्वप्रकारकज्ञानस्याभावादेव तदानीमेतद्व्यक्तौ द्वित्वाद्यनुत्पादादिति चेन्न। तथापि व्यक्तिद्वये एकपुरुषीयापेक्षाबुद्धिद्वयसत्वे पुरुषान्तरस्य द्वित्वोत्पादापत्तेर्दुर्वारत्वादिति चेन्न। तद्व्यक्तित्वावच्छिन्नविशेष्यताकैकत्वप्रकारकतत्पुरुषीयज्ञानत्वेन कारणता, तद्व्यक्तिसमवेततत्पुरुषीयद्वित्वत्वेन कार्यतेत्यादिक्रमेण कार्यकारणभावे दोषाभावात्। व्यक्त्यन्तरसमवेतातिरिक्तस्य तद्व्यक्तिसमवेततत्पुरुषीयद्वित्वस्यालीकतया तत्तद्व्यक्त्यन्तरसमवेततत्पुरुषीयद्वित्वसामग्र्या अभावादेव न तद्व्यक्तिमात्रे तत्पुरुषीयैकत्वप्रकारकज्ञानात्तद्व्यक्तिसमवेततत्पुरुषीयद्वित्वोत्पत्तिः।

नच तथापि एवं कार्यकारणभावेऽयमेकोऽयमेक इतिक्रमिकाऽपेक्षाबुद्धिभ्यामपि द्वित्वोत्पादापत्त्या द्वित्वस्य क्षणिकत्वापत्तिः, तद्द्वित्वोत्पत्तिसमकालं प्राथमिकाऽपेक्षाबुद्धेर्नाशोत्पत्तौ बाधकाभावेन तन्नाशादेव तन्नाशात्, नहि स्वजनकयावदपेक्षाबुद्धिनाशत्वेन द्वित्वादिनाशकत्वम्, अतएव समूहालंबनाऽपेक्षाबुद्धिरेव द्वित्वादिजनिकेति भाष्यकारादय इति वाच्यम् अपेक्षाबुद्धेरुत्पत्तिसंबन्धेन हेतुतया क्रमिकाऽपेक्षाबुद्धिभ्यां द्वित्वोत्पत्तेरेवाऽसंभवात्। अन्यथा भाष्यकारादिमतेपि विनश्यदवस्थसमूहालंबनापेक्षाबुद्धिजद्वित्वादेः क्षणिकत्वापत्तेर्दुर्वारत्वात्। नाशसामान्यं प्रत्येव सहवर्त्तिनाशस्य हेतुतया सामान्यकार्यकारणभावादेव तद्द्वित्वस्य क्षणिकत्वाऽसंभवाच्च। विनश्यदवस्थसमवायिजन्यद्वित्वादिवत्तादृशद्वित्वस्यापि क्षणद्वयमात्रस्थायित्वस्य चेष्टत्वात्, तत्र द्व द्रव्ये इति विशिष्टवैशिष्ट्यप्रत्ययाभावस्य भाष्यकारादेरपि संमतत्वात्। स्वप्रतियोगिसहवर्त्तित्वे सति स्वप्रतियोगिजन्यत्वरूपस्य फलोपधानात्मकस्वप्रतियोगिजन्यत्वस्यैव लाघवादपेक्षाबुद्धेर्द्वित्वादिनाशकतावच्छेदकसंबन्धतया प्राथमिकापेक्षाबुद्धिव्यक्तिनाशेन तद्द्वित्वस्य क्षणिकत्वक्षणद्वयमात्रस्थायित्वयोरुभयोरेवाऽसंभवाच्च। किन्तु अपेक्षाबुद्धिनाशेन चतुर्थक्षणे एव तन्नाशः।

. . . द्वित्वावच्छ . . . तत्पुरुषीयपदोपलक्षितस्य
. . . कार्यतावच्छे-
. . . ।
. . . उपगमात्।
दकत्वात्। पुरुषभेदेनैव द्वित्वादौ कार्यतावच्छेदक . . .

नच तथापि अत्रैकत्वम्, अत्रैकत्वमिति द्रव्यविशेषणैकत्वविशेष्यकज्ञानादपि द्वित्वोत्पत्त्या व्यभिचारो दुर्वार इति वाच्यम्। तत्तद्व्यक्तित्वावच्छिन्नविषयतानिरूपितसांसर्गिकविषयतानिरूपितएकत्वविषयताशालितत्तत्पुरुषीयज्ञानत्वेनानुगतज्ञानयोरुभयोरेव हेतुत्वात्। "यथाकार्याश्रयमुख्यरूपेण द्रव्यविशेष्यकैकत्वविशेष्यकज्ञानयोरुभयोरेव हेतुत्वात्। नन्वात्मविशेष्यकत्वप्रकारकज्ञानमेव हेतुः—नतु विशेष्यकतया मुक्तिं प्रति आत्मविशेष्यकशरीरादिभिन्नत्वप्रकारकज्ञानमेव हेतुः—नतु शरीरादिविशेष्यकात्मभेदज्ञानमिति बौद्धाधिकारे महाचार्यैरभिहितम्। तथैव कार्यीभूतद्वित्वाश्रयमुख्यविशेष्यकतया द्रव्यविशेष्यकज्ञानस्यैव हेतुत्वाच्च। यदि च

सेनावनादौ द्वित्वत्रित्वादीनामुत्पादानुरोधेन निर्धर्मितावच्छेदककमपि अपेक्षाज्ञानं कारणमिति वक्ष्यमाणमाचार्यमतमाद्रियते तदा तत्तद्व्यक्तित्वावच्छिन्नत्वमपहाय तत्तद्व्यक्तिनिष्ठत्वमुपादेयम् ।

न चैतादृशकार्यकारणभावे त्रित्वाद्यधिकसंख्योत्पादकाले नियतद्वित्वादिन्यूनसंख्योत्पादापत्तिः, व्यक्तित्रयादिविशेष्यकापेक्षाबुद्धिदशायां व्यक्तिद्वयादिविशेष्यकापेक्षाबुद्धेरावश्यकत्वात्, इष्टापत्तौ अनन्तद्वित्वादिकल्पनापत्तेरितिवाच्यम् । तत्पुरुषीयद्वित्वाद्युत्पत्तौ तत्पुरुषीयत्रित्वादिसामग्रीत्वेन द्वित्वादीतरतत्पुरुषीयापेक्षाबुद्धिजसंख्यासामग्रीत्वेन वा प्रतिबन्धकत्वात् । अतएव न्यूनसंख्योत्पत्तौ अधिकसंख्यासामग्रीप्रतिबन्धिकेतिगीयते । वस्तुतः त्रित्वाद्यधिकसंख्योत्पत्तिकाले नियमतो द्वित्वादिन्यूनसंख्योत्पत्तिरिष्टैव, अनन्तद्वित्वादिकल्पनायाः प्रामाणिकत्वादिति ।

प्राञ्चस्तु तत्तद्व्यक्तित्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताशालित्वे सति तत्तद्व्यक्तित्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताशाली यो ग्रहस्तत्त्वेनकारणता तद्व्यक्तिसमवेतद्वित्वत्वेन कार्यता इत्यादिक्रमेण कार्यकारणभावः, न तु पुरुषभेदेन जातिभेदः-कार्यकारणभावभेदो वा । सर्वत्राऽयमेकोऽयमेकइत्यादिसमूहालंबनज्ञानादेव द्वित्वाद्युत्पत्तिः नतु क्वचिदपि क्रमिकज्ञानद्वयात् । यदि च निर्धर्मितावच्छेदककापेक्षाज्ञानमपिकारणम्, तदा तत्तद्व्यक्तित्वावच्छिन्नत्वमपहाय तद्व्यक्तिनिष्ठत्वमुपादेयमित्याहुः । तच्चिन्त्यम् ।

नव्यास्तु सामान्यतोऽपेक्षाबुद्धेरेवानेकसंख्याजनकत्वे तन्नाशस्याऽनेकसंख्यादिनाशकत्वे मानाभावः, किन्तु स्वसमानाधिकरणयावदेकत्वानामसमवायिकारणानामुत्पत्त्यनन्तरमेव तेषामुत्पादात् । रूपादिकं प्रति रूपादेरिव पर्याप्तिसंबन्धेन द्वित्वादिकं प्रति द्वित्वादेः प्रतिबन्धकतया च न द्वित्वादिधारोत्पत्तिः । अपेक्षाबुद्धेर्जनकत्वेपि पर्याप्तिसंबन्धेन तत्पुरुषीयद्वित्वादिकं प्रति तत्पुरुषीयद्वित्वादेः प्रतिबन्धकत्वस्यावश्यकतया तदपेक्षयाऽतिलाघवात् । आश्रयनाशादेव च जन्यसमवेतानां तेषां नाशः । अपेक्षाबुद्धिनाशनाश्यत्वे योग्यद्वित्वादेश्चिरस्थायित्वानुरोधेन तदुपधायकापेक्षाबुद्धेश्चिरस्थायित्वावश्यकतया-तदर्थं योग्यविभुविशेषगुणनाशं प्रति द्वित्वादिलौकिकप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वकल्पनापत्तेः । न चैवमपेक्षाबुद्धिविरहेपि यावदाश्रयसन्निकर्षादिसत्त्वे द्वौ त्रय इत्यादि प्रत्यक्षापत्तिरितिवाच्यम् । मीमांसकानामिवापेक्षाबुद्धेर्द्वित्वादिव्यंजकत्वात् । न चैवं किमपराद्धमपेक्षाबुद्धिजन्यत्वेनेतिवाच्यम् । अपेक्षाबुद्धिजन्यत्वे प्रागुक्तरीत्या द्वित्वत्रित्वादिभेदेनाऽनन्तकार्यकारणभावापत्तेः । स्वीयापेक्षाबुद्धिविरहदशायामपि परकीयापेक्षाबुद्धिजद्वित्वत्रित्वादिकमादाय द्वौ त्रय इत्यादि प्रत्यक्षवारणाय द्रव्यसमवेतत्वविशिष्टलौकिकविषयतासंबन्धेन तत्तत्पुरुषीयप्रत्यक्षोत्पत्तौ च तत्तत्पुरुषापृक्तापेक्षाबुद्धिजत्वेन पुरुषभेदविभिन्नानन्तप्रतिबध्यप्रतिबन्धकत्वकल्पनापत्तेश्च । अपेक्षाबुद्धिव्यंग्यत्वे च नद्वित्वत्रित्वादिभेदेनानन्तकार्यकारणभावः, तच्च व्यंजकतानिरूपणे व्यक्तीभविष्यति । नापि पुरुषभेदेन प्रत्यक्षं प्रति अनन्तप्रतिबध्यप्रतिबन्धकभावो वा एकस्यैव द्वित्वादेरपेक्षाबुद्धिसहकारेण सर्वेण पुरुषेण ग्रहणाभ्युपगमात् ।

किं च द्वित्वादेरपेक्षाबुद्धिव्यंग्यत्वे एकस्यैव द्वित्वादेरपेक्षाबुद्धिसहकारेण सर्वेण पुरुषेण ग्रहणात्, सामान्यत एव पर्याप्तिसंबन्धेन द्वित्वं प्रति द्वित्वत्वादिना प्रतिबन्धकत्वम्, द्वित्वादेरपेक्षाबुद्धिजन्यत्वे तु पर्याप्तिसंबन्धेन तत्पुरुषीयद्वित्वं प्रति तत्पुरुषीयद्वित्वत्वादिना प्रतिबन्धकत्वमिति द्वित्वादिकं प्रति द्वित्वादेरपि पुरुषभेदेनाऽनन्तप्रतिबध्यप्रतिबन्धकभावापत्तेः। नच द्वित्वादेरपेक्षाबुद्धिजन्यत्वमतेपि सामान्यत एव द्वित्वादिकं प्रति द्वित्वादेः प्रतिबन्धकत्वमितिवाच्यम्। तथासति एकपुरुषीयापेक्षा-बुद्धिजद्वित्वसत्वे पुरुषान्तरस्य द्वौ इतिप्रत्ययानुपपत्तेः, द्वित्ववति द्वित्वान्तरोत्पादाऽसंभवात्, परकीयापेक्षाबुद्धिजद्वित्वादेश्च तन्मते परस्याऽयोग्यत्वात्, अन्यथास्वस्या-पेक्षाबुद्धिविरहदशायामपि परकीयापेक्षाबुद्धिजद्वित्वमादाय द्वाविति प्रत्ययः स्यादित्याहुः तच्चिन्त्यम्। यतः कारणगुणक्रमेणोत्पद्यमानतयाऽभ्युपगतं द्व्यणुकादौ द्वित्वादिकं एकत्व-वदव्यासज्यवृत्ति स्यात्। यत्कारणगुणपूर्वकं तदव्यासज्यवृत्ति एकत्ववदितिव्याप्तेः। संयोगादेरनेकवृत्तित्वेपि न व्यासज्यवृत्तित्वम्, एकस्मिन्नपि संयुक्तविभक्तव्यवहारा-दिति न व्यभिचारः। कारणगुणपूर्वकत्वेपि व्यासज्यवृत्तित्वाप्रयोजकत्वसत्वे व्यासज्य-वृत्तित्वं दुर्वारमित्युक्तनियमोऽप्रयोजकइत्यपि न समीचीनम्। एवमपि द्व्यणुकादौ त्रित्वाद्यनुत्पत्तिः स्यात्, स्वाश्रयसमवायिकारणीभूते परमाणुद्वये त्रित्वाभावात्। नच परमाणुद्वयमात्रे त्रित्वाद्यभावेपि तद्वृत्तिएकत्वाभ्यां द्वित्वेनेव वा द्व्यणुके त्रित्वाद्युत्पत्तिरितिवाच्यम्। कारणगुणानां कार्यवृत्तिसजातीयगुणं प्रत्येव स्वाश्रय-समवेतत्वसंबन्धेन जनकत्वमितिसिद्धान्तात्। स्ववृत्तित्रित्वादौ स्वसमवायिपर्याप्त-त्रित्वादिकमेव हेतुश्चेदुच्यते तदैवेदं दूषणम्, तदेवम्–स्वाश्रयस्वानाश्रयसाधारण-त्रित्वादिनैव स्वस्मिन् त्रित्वादेर्जननादित्यपि न मनोहरम्। स्वानाश्रयद्रव्याणां स्वं प्रत्यकारणत्वात्, स्वसमवेतत्रित्वादेः स्वकारणमात्रगुणपूर्वकत्वानुपपत्तेः। नच कारणगुणपूर्वकत्वमेव स्वीक्रियते नतु तन्मात्रगुणपूर्वत्वम्, एवं च कारणाकारण-गतत्रित्वादिभ्यः कार्याकार्यगतत्रित्वादयः स्युः कारणाकारणगतसंयोगात्कार्याकार्यगत-संयोगवदितिवाच्यम्। परमाणुसमवेतैरेकत्वैःस्तदारब्धगतैकत्वम्, तैरेव परमाणुगत-द्वित्वादिकं जन्यते इति महदसमंजसम्, सामग्र्यविशेषे कार्यवैचित्र्यानुपपत्तेः। नच परमाणुकार्यं "द्व्यणुक" सहकारीकृत्यैकत्वम्, परमाणुमपेक्ष्य द्वित्वादिकं जन्यते, तथाचैकत्वस्य द्वित्वादेश्च सामग्र्योर्विशेष इतिवाच्यम्। परमाणुद्रव्यमन्तर्भाव्यापि परमाणौ द्वित्वाद्यभ्युपगमात्। एवंच द्वित्वसामग्र्यामधिकसमवायिकारणतदेकत्व-प्रवेशेऽपि एकत्वसामग्र्यां समवायिकारणतदेकत्वाप्रवेशाद् द्वित्वस्य एकत्वसामग्री-प्रभवत्वेनैव द्वित्वमेकत्वात्मकं स्यात्। एवं नित्यद्रव्यतत्कार्यवृत्तिर्या द्वित्वसामग्री सा नित्यद्रव्यतत्कार्यवृत्तित्रित्वेपीतितयोरभेदप्रसंगश्च। नच त्रित्वेऽतिरिक्तैकत्वव्यक्ति-तदाश्रययोरपेक्षितत्वाद्भेद इति वाच्यम्। तथापि त्रित्वस्य द्वित्वविशेषापत्तेर्दुर्वा-रत्वात्। अस्मन्मते तु द्वित्वत्रित्वजनकापेक्षाबुद्धोर्वैचित्र्यादेव न त्रित्वस्य द्वित्व-सामग्रीजन्यत्वम् नित्यवृत्तिद्वित्वादिके नित्यमेव न तु तत्र समानाधिकरणैकत्व-मसमवायिकारणमितिचेद्–तथा सति जातिलक्षणाक्रान्ततया गुणत्वव्यापातात्। तथाच ननु तत्सामग्रीजन्यत्वं न तदभेदप्रयोजकमपि तु तत्सामग्रीमात्रजन्यत्वम्,

**अनेकाश्रयपर्याप्ता एते तु परिकीर्तिताः।**
**अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः॥१०८॥**

**अनेकेति। यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्तते तथापि**

और वह द्वित्व आदि संख्या अनेक आश्रय में पर्याप्ति सम्बन्ध से रहती है—अपेक्षा बुद्धि के नाश से द्वित्वादि संख्या का भी नाश हो जाता है। यह कारिकार्थ हुवा।

प्रश्न—जब कि द्वित्व आदि संख्या का समवाय अर्थात् समवाय सम्बन्ध से द्वित्व आदि संख्या प्रत्येक घट में रह सकती है तो उसके लिये पर्याप्ति सम्बन्ध की क्या आवश्यकता है।

---

नित्यवृत्तिद्वित्वादिकमनित्यमेवाऽपेक्षाबुद्धिस्तु न तत्र कारणमित्यपि आपातरमणीयमेव। अनित्यत्वे सततोत्पत्तिप्रसंगः। ननु समवाय्यसमवायिकारणयोः सदातनत्वेपि निमित्तकारणान्तराभावादेव नोक्तप्रसंग इतिचेत्—तादृशकारणस्याऽपेक्षाबुद्धिभिन्नस्याऽसंभवात्, अपेक्षाबुद्ध्यघटिताया एव समवायिकारणाऽसमवायिकारणात्मकसामग्र्यास्तदुत्पादकत्वेन त्वया स्वीकारात्। समवायिकारणस्य नित्यद्रव्यस्याऽसमवायिकारणस्य च सर्वदैव सत्वादितिभावः। अपेक्षाबुद्ध्यात्मककारणनाशानाश्यत्वोपगमेऽविनाशप्रसंगाच्च। अत्रेदं बोध्यम्। आश्रयनाशकालीनगुणनाशे आश्रयनाशो हेतुः—तदन्यगुणस्यनाशे क्वचिन्निमित्तनाशः—यथा चरमशब्दादेः। क्वचिच्चस्वोत्तरवर्त्तिगुणोत्पादो हेतुः—यथा शब्दजनकशब्दस्य पूर्वज्ञानादेश्च प्रकृते च भवतां कस्यापि तादृशस्य नाशकस्याभावादितिध्येयम्।

ननु अपेक्षाबुद्धेर्द्वित्वादिहेतुत्वेऽपेक्षाबुद्धिद्वितीयक्षणे द्वित्वाद्युत्पत्तिवत् तृतीयक्षणेपि कथं न द्वित्वान्तरोत्पत्तिःकारणसत्वादितिचेन्न। तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं प्रति तादृशद्वित्वादेः प्रतिबन्धकत्वात्, तथाच तदभावरूपकारणाभावादेवाऽपेक्षाबुद्धितृतीयक्षणे द्वित्वाद्युत्पत्तेरापादनाऽसंभवात्। १०७

**अनेकाश्रयपर्याप्ता** इति मूलाद् द्वित्वादीनां पर्याप्तिसंबन्धेनव्यक्तिद्वयादिषु एव वर्तमानत्वं नत्वेकव्यक्तौ इत्यर्थोलभ्यते तच्चानुपपन्नम्, पर्याप्तौ मानाभावदित्यतः पर्याप्तिसाधनायाऽऽक्षिपति। **यद्यपीति। प्रत्येकं घटादावपीति।** एकैकघटादिव्यक्तावपीत्यर्थः। अपिना घटद्वयादिसमुच्चयः। तथाचाऽयं द्वित्ववानितिवदिमौ द्वौ इति प्रतीत्युपपत्तौपर्याप्तिस्वीकारोनिरर्थक इतिभावः। नन्वेवं तुल्यरीत्या अयं द्वौइत्यपिप्रतीतिः स्यात्, न स्याच्चाऽयं न द्वौवितिप्रतीतिरित्याह। **तथापीति।** समवायेन इमौ द्वौ इतिप्रत्ययोपपत्तावपीत्यर्थः। **प्रत्ययसद्भावाच्चेति।** तथाच पर्याप्त्यनंगीकारे एकोन द्वित्ववानितिप्रत्ययाभाववत्एको न द्वौ इत्यपिप्रत्ययो न स्यात्, एकोद्वित्ववानितिप्रत्ययवत्एकोद्वौइतिप्रत्योपिस्यादतः समवायातिरिक्तः

**एको द्वौ इति प्रत्ययाभावात्, एको न द्वौ इति प्रत्ययसद्भावाच्च द्वित्वादीनां पर्याप्तिलक्षणः कश्चित्संबन्धोऽनेकाश्रयोऽभ्युपेयते ।**

उत्तर—यह ठीक है तथापि (प्रत्येक में भी यदि द्वित्व रहता है तो "एको द्वौ" यह प्रतीति क्यों नहीं होती है) अतः यह मानना होगा कि "एको द्वौ" यह प्रतीति नहीं होती है–और 'एको न द्वौ' यह प्रत्यय (प्रतीति) होती है–इससे यह सिद्ध हुवा कि द्वित्व आदि सख्याओं का पर्याप्ति नामक कोई सम्बन्ध अवश्य है–जिस पर्याप्ति सम्बन्ध से ये द्वित्व आदि संख्या अनेक आश्रय में ही रहती हैं–प्रत्येक में नहीं ।

---

पर्याप्तिनामकः विलक्षणसंबन्धः स्वीकार्यइतिभावः । **पर्याप्तिलक्षणइति** । पर्याप्तिस्वरूपइत्यर्थः **कश्चनेति** । क्लृप्तसंबन्धातिरिक्तइत्यर्थः । **अनेकाश्रय** इति । अनेकः आश्रयोयस्येतिव्युत्पत्त्या व्यक्तिद्वयादावेवेत्यर्थः । तथा च एकत्वविशिष्टेपर्याप्तिसंबन्धेन द्वित्वाभावात्तेन संबन्धेन द्वित्ववद्भेदसत्वाच्च एको द्वौ इति प्रतीत्यभावः, एको न द्वौ इतिप्रत्ययश्चोपपद्यतेइतिभावः ।

नचसमवायातिरिक्तपर्याप्तेरंगीकारेपि एको द्वौ इतिप्रत्ययापत्तिर्दुर्वारा इदन्त्वस्य द्वित्वपर्याप्त्यवच्छेदकत्वे बाधकाभावादितिवाच्यम् । द्वित्वादिनिरूपितायाः पर्याप्तेः उभयादिवृत्तिधर्मावच्छिन्नत्वनियमात् । इदन्त्वस्य तन्न्यूनवृत्तितयाऽवच्छेदकत्वाऽसंभवाच्च । नचोक्तप्रतीतेरापादकाभावः, असंसर्गाऽग्रहादेरेवाऽपादकत्वात् । तस्याः नचाऽससर्गाग्रहादिसत्वे भ्रमात्मकतादृशप्रतीताविष्टापत्तिरितिवाच्यम् । द्वित्वात्रगाप्रमात्वस्यैवाऽऽपाद्यत्वात् । उक्तप्रतीतेस्तु इदन्त्वावच्छेद्यपर्याप्तिसंबन्धेन द्वित्वरहितत्वात् । हितया प्रमात्वायोगात्, एकव्यक्तेविदन्त्वावच्छेद्यपर्याप्तिसंबन्धेन द्वित्वरहितत्वात् । अतएव अयं न द्वौ इतिप्रतीतेः प्रमात्वमुपपद्यते, इदन्त्वावच्छेद्यपर्याप्तिसंबन्धेन द्वित्वाभाववति द्वित्वाभावावगाहित्वात् ।

अथवा उक्तप्रत्ययापत्तिवारणाय उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिरेवसंसर्गः, एवंच द्वित्वपर्याप्तौ उद्देश्यतावच्छेदकीभूतेन्दन्त्वव्याप्यत्वविरहान्नापत्तिः । प्रत्युत अयं न द्वौ इति प्रतीतेः प्रमात्वमुपपद्यते उद्देश्यतावच्छेदकीभूतेदन्त्वव्याप्यपर्याप्तिसंबन्धेन योद्वित्वस्याभावस्तद्वति तदवगाहित्वात् । नचोद्देश्यतावच्छेदकव्याप्तिविशिष्टसमवायएवसंसर्गोऽस्तु इतिवाच्यम् । घटौ इत्यादिवाक्यस्याप्रामाण्यापत्तेः । समवायस्यैक्येन घटनिष्ठस्य समवायस्य पटादावपि सत्वेन घटत्वाद्यव्याप्यत्वात् । नचोद्देश्यतावच्छेदकव्याप्य द्वित्वादिसमवाय एव संसर्गोऽस्त्वाम्, द्वित्वादिसमवायस्य घटत्वाद्यव्याप्यत्वेपि द्वित्वादेस्तद्व्याप्यतया न "घटौ" इत्यादेरप्रामाण्यमितिवाच्यम् । एवंसति तथाविधद्वित्वादेरेव संबन्धतौचित्यात् । पर्याप्तिरपि द्वित्वादिरूपैवेत्यन्यत्रविस्तरः ।

**प्रथममपेक्षाबुद्धिस्ततोद्वित्वोत्पत्तिः, ततोविशेषणज्ञानं द्वित्वत्वनिर्विकल्पात्मकं, ततो द्वित्वत्वविशिष्टप्रत्यक्षमपेक्षाबुद्धिनाशश्च ततोद्वित्वनाश इति**

प्रश्न—द्वित्व आदि संख्या का नाश कैसे होता है।

उत्तर—प्रथम क्षण में "अयमेक अयमेकः" यह अपेक्षा बुद्धि होती है—द्वितीय क्षण में अपेक्षा बुद्धि से द्वित्व की उत्पत्ति हुवी—तृतीय क्षण में "द्वित्व-द्वित्वत्वे" इत्याकारक द्वित्वत्व का निर्विकल्पकरूपविशेषण ज्ञान हुआ। उसके बाद चतुर्थ क्षण में द्वित्वत्व-प्रकारक द्वित्व विशेष्यक सविकल्पक ज्ञान हुवा और अपेक्षा बुद्धि का नाश। फिर पञ्चम क्षण में द्वित्व का कारण जो अपेक्षाबुद्धि उसके नाश से द्वित्व (कार्य) का भी नाश हो जाता है।

---

ननु "**अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः**" मूलेनाऽपेक्षाबुद्धेर्द्वित्वादिनाशकत्वमुक्तं तन्नोपपद्यते जन्यज्ञानमात्रस्य तृतीयक्षणे नाशेन द्वित्वनिर्विकल्पकक्षणे एवाऽपेक्षाबुद्धेर्नाशाद् द्वित्वादिनाशे द्वित्वत्वादिविशिष्टबुद्धिक्षणेएव द्वित्वनाशसंभवेन विषयाऽसत्वेन तादृशविशिष्टबुद्ध्यनुपपत्तेरतोऽपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं स्वीकृत्य चतुर्थक्षणेऽपेक्षाबुद्धिनाशात्पंचमक्षणे द्वित्वनाश इतिवैशेषिकप्रक्रियांदर्शयति **प्रथममिति**। चक्षुरिन्द्रियेण त्वगिन्द्रियेण वा संयुक्तसमवेतसमवायसन्निकर्षे सति एकत्वत्वनिर्विकल्पकानन्तरमित्यर्थः। **अपेक्षाबुद्धिरिति**। संयुक्तसमवायादित्यादिः अयमेकःअयमेकः इत्याकारिकाअनेकयोरेकत्वावगाहिनीअपेक्षाबुद्धिरित्यर्थः। **तत इति**। अपेक्षाबुद्धिसहकारेणएकत्वाभ्यामित्यर्थः। **द्वित्वोत्पत्तिरिति** एकत्वाश्रययोरित्यादिः। द्वित्वाद्युत्पत्तिरित्यर्थः। तथाच द्वित्वादिकं प्रति अपेक्षाबुद्धिर्निमित्तकारणम्। द्वित्वाश्रयःसमवायिकारणम्। स्वाश्रयगतैकत्वद्वयमसमवायिकारणम्। अत्रेदं बोध्यम्। यदि द्वित्वमबुद्धिजंस्याद्रूपादिवत्पुरुषान्तरेणापि प्रतीयेत नियमहेतोरभावात्, बुद्धिजत्वे तु यस्य बुद्ध्या यज्जन्यतेतनैवोपलभ्यते इतिनियमोपपत्तिः प्रयोगस्तु द्वित्वं बुद्धिजंनियमेनैकप्रतिपत्तृवेद्यत्वायन्नियमेनकप्रतिपत्तृवेद्यंतद्बुद्धिजं यथेच्छादिकम्, नियमेनैकप्रतिपत्तृवेद्यं च द्वित्वं तस्मादिदमपि बुद्धिजम्। **तत इति** द्वित्वोत्पत्त्यनन्तरमित्यर्थः। **विशेषणज्ञानमिति**। तस्मिन् द्वित्वे वर्तमानं यद्द्वित्वत्व सामान्यं संयुक्तसमवेतसमवायेन तस्य ज्ञानमित्यर्थः। **निर्विकल्पात्मकमिति** पूर्वं विशेषणज्ञानाभावात्सविकल्पकाऽसंभवादितिभावः **तत इति**। द्वित्वत्वनिर्विकल्पकात्मकज्ञानादित्यर्थः। **अपेक्षाबुद्धिनाशेति**। प्रतियोगितासंबन्धेनाऽपेक्षाबुद्धिनाशं प्रति स्वप्रागभावाधिकरणक्षणवृत्तित्वस्वसमानकालीनत्वोभयसंबन्धेन "निर्विकल्पक" गुणस्य हेतुत्वादितिभावः। **तत इति**। अपेक्षाबुद्धिनाशादित्यर्थः। **द्वित्वनाशइति**।

अथ केन रूपेण नाश्यनाशकभावः। नच प्रतियोगितासंबन्धेनाऽनेकसंख्या-

**यद्यपि ज्ञानानां द्विक्षणमात्रस्थायित्वं योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वात्,**

प्रश्न—ज्ञान-इच्छा-वगैरह तो दो क्षणमात्र स्थायी हैं-क्योंकि प्रत्यक्षयोग्य जो विभु ( आत्मा-आकाश ) के विशेषगुण ( बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्न तथा शब्द ) हैं इनका विनाश अपने से उत्तर काल में उत्पन्न हुवे गुणों से होता है।

---

नाशं प्रति स्वप्रतियोगिजन्यताविशेषसंबन्धेनाऽपेक्षाबुद्धिनाशः कारणमितिवाच्यम्। आश्रयनाशमात्रनाश्यद्वित्वादिव्यक्तौ भगवदपेक्षाबुद्धिजद्वित्वादौ च व्यभिचारापत्तेः। नच सामान्यतोनाशत्वेनैव नाशकता नाशकतावच्छेदकसंबन्धश्च स्वप्रतियोगिजन्यत्वविशेषः, जन्यताविशेषश्च द्वयम्, समवायिजन्यत्वं, अपेक्षाबुद्धिरूपनिमित्तविशेषजन्यत्वं च नान्यम्, नातोघटादौ प्रतियोगित्वसंबन्धेनाऽनेकसंख्यादिनाशापत्तिरितिवाच्यम्।, समवायिनाशनाश्यरूपादावपि प्रतियोगितासंबन्धेनाऽनेकसंख्यादिनाशापत्तेः, द्वित्वादिनिष्ठसमवायिजन्यत्वरूपादिनिष्ठसमवायिजन्यत्वयोर्वैलक्षण्याभावादिति। नैवम्। अनेकसंख्यात्वेन नाश्यता सामान्यतोनाशत्वेनैव नाशकता-फलोपधानात्मकस्वप्रतियोगिजन्यत्वविशेषश्च नाशकतावच्छेदकसंबन्धः। स च द्वित्वादिनिष्ठाऽपेक्षाबुद्धिरूपनिमित्तविशेषजन्यत्वं। समवायिनाशनाश्यद्वित्वादिव्यावृत्तप्रतियोगित्वस्य कार्यतावच्छेदकसंबन्धतया च नाश्रयनाशनाश्यद्वित्वादिव्यक्तौ व्यभिचारः। भगवदपेक्षाबुद्धिजद्वित्वादेरपि निमित्तकारणीभूतस्य कालविशेषस्य नाशेनैव नाशान्न तत्रापि व्यभिचारः, द्वित्वादिनिष्ठजन्यताया अपि नाशकतावच्छेदकसंबन्धघटकत्वात्, संबन्धाननुगमस्य चाऽदोषत्वात्। अनेकसंख्यात्वं च एकत्वान्यसंख्यात्वम्, नाश्यतावच्छेदकतया सिद्धो द्वित्वत्वादिव्यापकजातिविशेषो वेतिसिद्धान्तः।

**ज्ञानानामिति।** यद्येत्यादिः। ज्ञानान्तराणामित्यर्थः। अपेक्षाबुद्धयन्यज्ञानानामितियावत्। **द्विक्षणमात्रस्थायित्वमिति।** तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वमित्यर्थः। तत्र हेतुमाह। **योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वादिति।** तथाऽपेक्षाबुद्ध्यात्मकज्ञानस्यापीतिशेषः। द्विक्षणमात्रस्थायित्वमितिपूर्वेणान्वयः। तथाच प्रतियोगितायोग्यविभुविशेषगुणाश्च शब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः। तथाच प्रतियोगितासंबन्धेन योग्यविभुविशेषगुणनाशं प्रति स्वाव्यवहितपूर्ववर्त्तित्वसंबन्धेन "उत्तरवर्त्ति" गुणः कारणमित्यर्थः।

ज्ञानस्य तु स्वसमानाधिकरणस्वोत्तरोत्पन्नविशेषगुण एव नाशकः। द्वित्वाद्युपधायकापेक्षाबुद्धेरपि व्यधिकरणस्वोत्तरोत्पन्नविशेषगुणेन तृतीयक्षणे नाशवारणाय स्वसमानाधिकरणत्वं विशेषगुणविशेषणम्। निर्विकल्पज्ञानानां क्षणिकत्ववारणाय स्वोत्तरोत्पन्नत्वं तद्विशेषणम्। नच तद्वारणाय स्वोत्तरत्वविशिष्टत्वमेव विशेषगुणविशेषणमस्तु कृतमुत्पत्तिप्रवेशेनेतिवाच्यम्। द्वित्वाद्युपधायकापेक्षाबुद्धेरपि

स्वोत्तरवर्त्तित्वविशिष्टेन स्वेनैव स्वोत्पत्तिकालीनसंस्कारादृष्टेनैव वा तृतीयक्षणे नाशापत्तेः। द्वित्वाद्युपधायकापेक्षाबुद्धेः स्वोत्तरोत्पन्नस्वीयात्मवृत्तिद्वित्वादितः तृतीयक्षणे नाशवारणाय विशेषगुणत्वेनोपादानम्। नच तथापि द्वित्वाद्युपधायकापेक्षाबुद्धेः क्षणत्रयस्थायित्वमनुपपन्नम्, द्वितीयक्षणोत्पन्नानुव्यवसाय, संस्कार-विषयान्तरगोचरज्ञानसुखदुःखादिरूपस्वसमानाधिकरणविशेषगुणेनैव तृतीयक्षणे नाशसंभवादिति वाच्यम्। अपेक्षाबुद्धेराशुतरविनाशित्वाविनाशित्वविचारावसरेऽग्रे समाधास्यमानत्वात्।

तथाच ज्ञानत्वेन नाश्यता विशेषगुणत्वेन नाशकता। प्रतियोगितासंबन्धेन ज्ञाननाशं प्रति स्वसमानाधिकरणत्वे सति ज्ञाननिष्ठकालिकसंबन्धावच्छिन्नस्व-प्रागभावाधिकरणत्वसंबन्धेन विशेषगुणः कारणम्। विशेषगुणत्वं च मूर्तसमवेताऽसमवेतधर्मसमवायित्वम्, परममहत्वत्वस्य जातित्वपक्षे परममहत्वसाधारण्येऽपि क्षतिविरहात्, स्वप्रागभावाधिकरणत्वस्य संबन्धघटकतयैव तद्वारणात्।

केचित्तु ज्ञानादिसहवर्त्तिप्रतियोगिकनाश एव ज्ञानादिद्विक्षणावस्थायिविशेष-गुणनाशकः। नाश्यनाशकभावस्तु तत्तद्व्यक्तित्वेन तत्तद्व्यक्तिसहवर्त्तिप्रतियोगिक-नाशत्वेन, तथाच तत्तद्व्यक्तिनाशं प्रति तत्तद्व्यक्तिसहवर्त्तिप्रतियोगिकनाशः कारणम्। तत्तद्व्यक्तिसहवर्त्तित्वं च कालिकसंबन्धेन तत्तद्व्यक्तिवृत्तित्वम्। प्रतिक्षणं किंचि-द्विनश्यतीतिनियमेन सर्वत्रैव ज्ञानाद्युत्पत्तिद्वितीयक्षणेऽवश्यं कस्यचित्सहवर्त्तिनो-नाशोत्पत्त्या व्यभिचारविरहात्। अतएव द्वित्वादिजनकापेक्षाबुद्धेः क्षणत्रयाव-स्थायित्वमुपपद्यते। ज्ञानादिव्यक्तिभेदेन नाश्यनाशकभावस्य विभिन्नतया द्वित्वादिजनकापेक्षाबुद्धिव्यक्तिषु तत्तृतीयक्षणोत्पन्नत्वेन तत्तृतीयक्षणोत्पन्नव्यक्तिना तद्द्वितीयक्षणध्वंसत्वेन तद्द्वितीयक्षणध्वंसस्य वा नाशकत्वात्।

शब्दनाशस्थले तु पृथगेव कार्यकारणभावः। तथाहि-शब्दो द्विविधः-अन्त्योऽनन्त्यश्च-अन्त्यशब्दत्वं शब्दाऽजनकशब्दत्वं-फलोपधायकतासंबन्धेन शब्दवद्भिन्न-शब्दत्वमिति यावत्। अनन्त्यशब्दत्वं च शब्दजनकशब्दत्वम्, फलोपधायकता-संबन्धेन शब्दवच्छब्दत्वमिति यावत्। तत्राऽनन्त्यशब्दस्य कार्यीभूतशब्द एव नाशकः, नाश्यनाशकभावस्तु सामान्यतोऽनन्त्यशब्दनाशत्वेन शब्दत्वेन यत्र प्रतियोगितासंबन्धेनाऽनन्त्यशब्दनाशः तत्र शब्दनिष्ठफलोपधायकतासंबन्धेन शब्द इति। शब्दजनकाभिघातादौ प्रतियोगितासंबन्धेनानन्त्यशब्दनाशापत्तिवारणाय शब्दनिष्ठत्वं फलोपधायकताविशेषणम्। अन्त्यशब्दस्य तु क्षणिकत्वनये उपान्त्य-शब्द एव नाशकः। अतएव पाकजग्रन्थे अन्त्यउपान्त्येनेत्याचार्याः। नाश्य-नाशकभावस्तु अन्त्यशब्दनाशत्वेन शब्दत्वेन—यत्र प्रतियोगितासंबन्धेनाऽन्त्यशब्द-नाशः तत्र शब्दानुपधायकत्वविशिष्टजन्यतासंबन्धेन शब्द इति। द्वितीयादिशब्दे प्रतियोगितासंबन्धेनाऽन्त्यशब्दनाशापत्तिवारणाय विशिष्टान्तंजन्यताविशेषणम्।

वस्तुतस्तु अन्त्यशब्दस्याक्षणिकत्वनये तत्र केवलं प्रतियोग्येवनाशकः, नतूपान्त्यशब्दः विशिष्टान्तस्य संबन्धघटकतया गौरवापत्तेः। नाश्यनाशकभावस्तु

अन्त्यशब्दनाशत्वेनाऽन्त्यशब्दत्वेन—यत्र प्रतियोगितासंबन्धेनाऽन्त्यशब्दनाशः तत्र तादात्म्यसंबन्धेनान्त्यशब्द इति। आचार्यलिखनं च गौरवप्रसक्तत्वेनानुपादेयम्। यदि चाऽन्त्यशब्दोऽपि क्षणद्वयावस्थायी तदा तु अनायत्या कारणीभूतोपान्त्यशब्द नाशएवाऽन्त्यशब्दस्य नाशकः, प्रामाणिकगौरवस्याऽदोषत्वात्। कार्यतावच्छेदकं च सामान्यतः शब्दजन्यशब्दनाशत्वम्, कारणतावच्छेदकं च शब्दनाशत्वम्। यत्र प्रतियोगितासंबन्धेन शब्दजन्यशब्दनाशः तत्र स्वप्रतियोगिजन्यत्वसंबन्धेनशब्दनाश इति। शब्दजन्यशब्दत्वं च जन्यतासंबन्धेन शब्दवच्छब्दत्वम्, अतो जन्यत्व-स्याननुगमेऽपि न क्षतिः। ननु अन्त्यशब्दनाशत्वं कार्यतावच्छेदकम्, अन्त्य-शब्दत्वस्य शब्दाजनकशब्दत्वरूपतया गौरवापत्तेः। नच शब्दजन्यशब्दनाशत्वस्य कार्यतावच्छेदकत्वे द्वितीयादिशब्दसाधारण्यापत्तिरिति वाच्यम्। तत्साधारण्येऽपि क्षतिविरहात्, द्वितीयादिमध्यमशब्दानां नाशं प्रति कारणीभूतशब्दनाशस्य कार्यीभूतशब्दस्य चोभयोरेव दण्डचक्रादिवद्धेतुत्वात्। आद्यशब्दनाशानुरोधेना-नन्त्यशब्दनाशं प्रति कार्यीभूतशब्दस्य कारणत्वावश्यकत्वादित्याहुः। तच्चिन्त्यम्।

प्राञ्चस्तु सामान्यतोज्ञानभिन्नयोग्यविभुविशेषगुणनाशं प्रति सहवर्त्तिप्रति-योगिकनाश एव हेतुः। प्रतिक्षणं किञ्चिदुत्पद्यते किंचिद्विनश्यतीति नियमात्। अपेक्षाबुद्धेः क्षणत्रयावस्थायित्वसंपादनाय ज्ञानभिन्नत्वं योग्यविभुविशेषगुण-विशेषणम्। नच सहवर्तित्वं कालिकसंबन्धेन स्ववृत्तित्वम्, स्वपदं नाश्यत्वेनाभि-मतपरं, तथाच स्वत्वस्य तत्तद्व्यक्तिविश्रान्तत्वेनाऽननुगम इति वाच्यम्। नाशत्वमेव हि नाशकतावच्छेदकम्, ज्ञानभिन्नयोग्यविभुविशेषगुणत्वे सति कालिसंबन्धा-वच्छिन्नस्वप्रतियोग्यधिकरणत्वं नाशकतावच्छेदकसंबन्धः, स्वपदं नाशकत्वेनाभि-मतनाशपरम्। कार्यतावच्छेदकसंबन्धश्चान्त्यशब्दावृत्तिप्रतियोगित्वम्। अन्त्य-शब्दस्य क्षणिकतया तन्नाशे व्यभिचारवारणायाऽवृत्त्यन्तंप्रतियोगिताविशेषणम्। अन्त्यशब्दे पूर्ववदुपान्त्यशब्दोऽन्त्यशब्दमात्रं नाशकमिति प्राहुः।

स्यादन्त्रास्तु सामान्यतोयोग्यविभुविशेषगुणनाशं प्रति योग्यविभुविशेष-गुणत्वेनैव प्रतियोगिविधया कारणत्वम्। यत्र प्रतियोगितासंबन्धेन योग्यविभु-विशेषगुणनाशः तत्र तादात्म्यसंबन्धेन योग्यविभुविशेषगुणः इति। नचैवं प्रति योगिमात्रस्यैव नाशकत्वे ज्ञानादीनां क्षणिकत्वापत्तिरिति वाच्यम्। सामान्यतो द्रव्यरूपादिसकलनाशसाधारणनाशत्वावच्छिन्नं प्रत्येव कालिकसंबन्धावच्छिन्न-स्वप्रतियोग्यधिकरणत्वसंबन्धेन नाशत्वरूपेण सहवर्तिनाशस्य हेतुत्वात्। नचैवं द्रव्यरूपादेर्निखिलकार्यस्यैव क्षणद्वयमात्रस्थायित्वापत्तिः, प्रतिक्षणं किंचिद्विनश्यतीति नियमेन सर्वेषामेव कार्याणामुत्पत्तिद्वितीयक्षणेऽवश्यंकस्यचित्सहवर्तिनोनाशादिति वाच्यम्। नाशसामान्यकारणसत्वेऽपि असमवायिकारणनाशादिरूपविशेषकारणा-भावादेव द्रव्याणां तृतीयक्षणे नाशानुत्पत्तेः। तत्सत्वे चेष्टापत्तेः। नचैवं सहवर्ति-नाशात्मकसामान्यकारणादेव ज्ञानादेस्तृतीयक्षणे नाशसंभवात्, योग्यविभुविशेष-गुणनाशं प्रति योग्यविभुविशेषगुणत्वेन प्रतियोगिविधया कारणत्वान्तरे मानाभाव

**तथापि अपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं कल्प्यते। अन्यथा निर्विकल्पक-कालेऽपेक्षाबुद्धेर्नाशाद् द्वित्वस्यैव नाशः स्यात्।**

उत्तर—स्वोत्तरवर्त्ति गुण से नाश्य होने पर भी अपेक्षाबुद्धि को तीन क्षण स्थायी मानते हैं अन्यथा ( अर्थात् अपेक्षाबुद्धि को भी यदि दो क्षण ही स्थायी मानेंगे तो ) निर्विकल्पककाल में अपेक्षाबुद्धि का नाश हो जाने के बाद द्वित्व का ही नाश हो जायेगा तब फिर

---

इति वाच्यम्। तदनभ्युपगमेऽसमवायिकारणनाशादिरूपविशेषकारणाभावेन द्रव्यनाशादिरूपकार्यविशेषोत्पत्त्यसंभवेपि नाशसामान्यकारणसत्त्वेन द्रव्यरूपादौ तृतीयक्षणे नाशसामान्यापत्तेर्दुर्वारत्वात्। द्रव्यादिनाशातिरिक्तस्यापि ज्ञानादि-नाशस्यैव प्रसिद्धेः। किंचैतादृशसामान्यकार्यकारणभावानभ्युपगमे आश्रयनाशा-ज्जात्यादेर्नाशवारणायाऽऽश्रयनाशसमवेतनाशयोः कार्यकारणभावे स्वप्रतियोगिजन्यत्वं स्वप्रतियोगिसमवेतत्वकालिकविशेषणत्वोभयं वा कारणतावच्छेदकसंबन्धत्वेन विव-क्षणीयम्, क्षणिकत्वापत्तिभिया द्रव्यपरत्वाऽपरत्वाद्यसमवायिकारणनाशनाश्यमात्रं प्रति असमवायिकारणस्य कार्यसहभावेन हेतुत्वमुपेयम्, स्मृतिजन्यसंस्कारस्य स्मृतिसमकालोत्पन्नसंस्कारस्य च क्षणिकत्वापत्तिभिया स्मृतिसंस्कारयोर्योग्य-नाश्यनाशकभावे नाशकतावच्छेदकसंबन्धकोटौ फलोपधायकत्वं निवेशनीयम्, मध्यमरूपादिव्यक्तीनां क्षणिकत्वापत्तिभिया पाकजस्थले स्वसमानाधिकरणत्व-स्वपूर्ववर्त्तित्व-स्ववृत्तिरूपत्वाद्यात्मकत्रितयसंबन्धेनाग्निसंयोगस्यनाशकत्वं कल्प-नीयम्। नाशकोत्पादकसंयोगयोर्भेदो वा स्वीकरणीय इत्यादिमहागौरवापत्त्या सामान्यतोनाशसामान्यं प्रति यथोक्ताऽतिरिक्तकार्यकारणभावकल्पनाया एव लघीय-स्त्वात् इति प्राहुः।

**तथापीति**। ज्ञानान्तराणां द्विक्षणमात्रस्थायित्वेपीत्यर्थः। **त्रिक्षणावस्था-यित्वमिति**। चतुर्थक्षणवृत्तिध्वंसप्रतियोगित्वमित्यर्थः। **कल्प्यतेइति**। स्वीक्रियते-इत्यर्थः तथाच तदात्मसमवेतविशेषगुणं प्रति तदात्मीयाऽनेकसंख्याऽनेकपृथक्त्व-परत्वाऽपरत्वसामग्रीणां प्रतिबन्धकत्वमितिभावः। एवंच द्वित्वाद्युपधायकापेक्षाबुद्ध्यु-त्पत्तिद्वितीयक्षणे तत्समवाय्यात्मनि संस्कारादेरुत्पादाऽसंभवात्, नाशकाभावादेव योग्यद्वित्वाद्युपधायकापेक्षाबुद्धेर्न तृतीयक्षणे नाशः। अतएवोपेक्षाबुद्धेरिवापेक्षाबुद्धेरपि संस्काराऽजनकत्वप्रवादः। एतेन स्वोत्तरोत्पन्नस्वसमानाधिकरणविशेषगुणस्य ज्ञान-सामान्यनाशकतया कथं तादृशापेक्षाबुद्धेः क्षणत्रयावस्थायित्वसंभवः, द्वितीयक्षणोत्पन्नेन संस्कारानुव्यवसायविषयान्तरगोचरज्ञानसुखदुःखादिना समानाधिकरणविशेषगुणेन तृतीयक्षणे तन्नाशस्य दुर्वारत्वात्, प्रयोजनक्षतिभिया सामग्र्याः कार्यजनने विलंबाऽ करणादितिनिरस्तम्। संख्यादेस्तदात्मीयत्वं च तदात्मवेद्यत्वम्, नतु तदात्मवृत्त्य-पेक्षाबुद्धिजन्यत्वम्, गौरवात्। **अन्यथा**। अपेक्षाबुद्धेर्द्विक्षणमात्रावस्थायित्वे। **निर्वि-**

ननु द्वित्वप्रत्यक्षम्, तदानीं विषयाभावात्। विद्यमानस्यैव चक्षुरादिना ज्ञानजननोपगमात्। तस्माद् द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते।

द्वित्व का प्रत्यक्ष ही नहीं हो सकेगा—क्योंकि द्वित्व प्रत्यक्ष में विषय जो द्वित्व-वह है ही नहीं। विद्यमान विषय ही का चक्षु से प्रत्यक्ष होता है इसलिये द्वित्व का निर्विकल्पकप्रत्यक्ष ही अपेक्षाबुद्धि का नाशक होता है ऐसी कल्पना की जाती है।

---

कल्पककालेइति। निर्विकल्पकोत्पत्तिकालेइत्यर्थः। अपेक्षाबुद्धेर्नाशादिति। स्वाव्यवहितपूर्ववर्त्तित्वसंबन्धेनगुणात्मककारणसत्वादितिभावः। द्वित्वस्यैवनाशःस्यादिति। द्वित्वस्य नाश एव स्यादित्यर्थः। ननु द्वित्वप्रत्यक्षमिति। द्वेद्रव्येइत्याकारकप्रत्यक्षं नोत्पत्तुमर्हतीत्यर्थः। तदानीं विषयाभावादिति। द्वित्वप्रत्यक्षोत्पत्तिक्षणे विषयरूपकारणाभावादित्यर्थः। ननु तदानीं द्वित्वाभावेपि तत्पूर्वक्षणे द्वित्वरूपकारणसत्वान्न तत्प्रत्यक्षानुपपत्तिरतआह विद्यमानस्यैवेति। प्रत्यक्षसमानकालीनस्यैवेत्यर्थः। "संबद्धं वर्तमानं च गृह्यते चक्षुरादिना" इत्यनुरोधाल्लौकिकप्रत्यक्षं प्रति द्वित्वादिविषयस्य कार्यसहभावेन हेतुत्वादितिभावः। ननु प्रतियोगितासंबन्धेन योग्यविभुविशेषगुणनाशं प्रति स्वाव्यवहितपूर्ववर्त्तित्वसंबन्धेन स्वोत्तरोत्पन्नगुणस्य कारणतयाऽपेक्षाबुद्ध्युत्तरक्षणोत्पन्नस्मृत्या संस्कारेण वाऽपेक्षाबुद्धिनाशः कथं न स्यादित्याशंकां परिहरति तस्मादिति। द्वित्वप्रत्यक्षानुपपत्तेरित्यर्थः। द्वित्वप्रत्यक्षादिकमिति। द्वित्वत्वनिर्विकल्पकमित्यर्थः। आदिना त्रित्वद्विपृथक्त्वादिप्रत्यक्षपरिग्रहः। कल्प्यते इति। स्वीक्रियतेइत्यर्थः। तथाच प्रतियोगितासंबन्धेनाऽपेक्षाबुद्धिनाशं प्रति स्वाव्यवहितपूर्ववर्त्तित्व स्वसमानकालीनत्वोभयसंबन्धेन गुणत्वेन हेतुत्वस्य पूर्वोक्तस्याऽऽवश्यकतया तादृशकारणबलान्द्वित्वसविकल्पकक्षणे एवाऽपेक्षाबुद्धेर्नाशात्तादृशसविकल्पकद्वितीयक्षणे एव द्वित्वादिनाशान्न सविकल्पकानुपपत्तिरितिभावः।

प्राञ्चस्तु संबद्धं वर्त्तमानं चेत्यनुरोधात्सामान्यतोयोग्यविभुविशेषगुणनाशं प्रति अनेकसंख्यादिनिर्विकल्पकसामग्र्या एव प्रतिबन्धकत्वं कल्प्यते। अपेक्षाबुद्धिरपि संस्कारजननी, तस्याः संस्काराऽजनकत्वप्रवादश्च निर्गुंतित्वेनानुपादेयः। तत्तदात्मसमवेतविशेषगुणं प्रति तत्तदात्मीयाऽनेकसंख्यासामग्रीत्वेन प्रतिबन्धकत्वमितिपूर्वमते आत्मभेदेनाऽनन्तप्रतिबध्यप्रतिबन्धकभावापत्तिः। लाघवयुक्त्या सामान्यतोयोग्यविभुविशेषगुणनाशं प्रति सहवर्त्तिनाशस्य हेतुतया तत्तदात्मसमवेतविशेषगुणं प्रति तदात्मीयनेकसंख्यादिसामग्र्याः प्रतिबन्धकत्वकल्पनेपि अपेक्षाबुद्धेस्तृतीयक्षणे सहवर्त्तिनाशेन नाशस्य दुर्वारताचेतिध्येयम्।

अथ निर्विकल्पकसामग्रीत्वं न निर्विकल्पकत्वावच्छिन्नसामग्रीत्वम्, अप्रसिद्धेः। नापि निर्विकल्पकोपधायकसामग्रीत्वं फलोपधायकतासंबन्धेन निर्विक-

त्पकविशिष्टत्वं वा—आद्येयावदाश्रयसन्निकर्ष—तत्प्रत्यक्ष–द्वित्व—तत्सन्निकर्ष—तन्निर्विकल्पकप्रागभावानामेव द्वित्वनिर्विकल्पकोपधायकतया तेषां च द्वित्वनिर्विकल्पकसमये तदुत्तरसमयेपि च वर्तमानतया चतुर्थक्षणादावपि अपेक्षाबुद्धेरनाशप्रसंगात्, तत्तन्निर्विकल्पकव्यक्तेः प्रागभावस्य तदानीमसत्त्वेपि सामान्यतोद्वित्वनिर्विकल्पकप्रागभावस्य तदानीमपि सत्वात्। अन्त्ये निर्विकल्पकपूर्वं निर्विकल्पकाभावेन निर्विकल्पकोत्पत्तिसमयेऽपेक्षाबुद्धेर्नाशस्य दुर्वारत्वादितिचेन्न। निर्विकल्पकसामग्रीत्वं हि स्वसमानाधिकरणत्वे सति स्वाव्यवहितपूर्वोत्पन्नत्वसंबन्धेन एकत्र द्वयमितिरीत्या तादृशोभयसंबन्धेन वा निर्विकल्पकवत्त्वम्, तस्य च स्वसामानाधिकरण्य विशिष्टोत्पत्तिसंबन्धेन स्वसमानाधिकरणत्व स्वोत्पत्तिमत्त्वोभयसंबन्धेन वा प्रतियोगिनिष्ठतया प्रतिबन्धकत्वम्। तेन द्वित्वादिनिर्विकल्पकोत्पत्तिसमयेपि तत्पूर्वोत्पन्नज्ञानादेः सत्वेपि न तदनन्तरमपेक्षाबुद्धेर्नाशाऽसंभवः। प्रतिबध्यतावच्छेदकसंबन्धश्च प्रतियोगित्वमेवऽआत्मवत्कालिकेनाऽपेक्षाबुद्धावपि द्वित्वादिनिर्विकल्पकपूर्वोत्पन्नज्ञानसंस्कारादेरुत्पत्तेः।

अथ तथापि अनेकसंख्यानिर्विकल्पकत्वं नाऽनेकसंख्यानिरूपिततत्तन्निर्विकल्पकताख्यविषयिताशालित्वम्, द्वित्वादिनिर्विकल्पकेपि अपेक्षाबुद्धि-यावदाश्रयप्रत्यक्षोपस्थितसंख्यात्वगुणत्वादेर्द्वित्वादौ प्रकारतया भानावश्यकतया तदप्रसिद्धेरिति चेन्न। अनेकसंख्यानिर्विकल्पकत्वं हि अनेकसंख्यात्वव्याप्यजातिनिर्विकल्पकत्वम्, निर्विकल्पकत्वाख्यविषयितासंबन्धेन तादृशजातिमत्त्वमिति यावत्। अनेकसंख्यात्वमपि अनेकसंख्यात्वव्याप्यमिति न तदसंग्रहः। इत्थं च यत्र द्वित्वाद्युत्पत्तिकाले तत्पूर्वकाले वा द्वित्वत्वादिकं स्मृतमनुभूतं वा ततोविनैव निर्विकल्पकं द्वित्वाद्युत्पत्तिद्वितीयक्षणे विशेषणतावच्छेदकीभूतद्वित्वत्वादिविशिष्टप्रत्यक्षं तत्राऽपेक्षाबुद्धिः क्षणद्वयमात्रस्थायिनी एव। यत्र च द्वित्वोत्पत्तिकाले द्वित्वजनकापेक्षाबुद्धिः ततो द्वित्वत्वनिर्विकल्पकत्रित्वोत्पत्ती ततोद्वित्वत्वविशिष्टबुद्धिरूपं त्रित्वत्वनिर्विकल्पकं तत्र द्वित्वजनकापेक्षाबुद्धिव्यक्तिः क्षणचतुष्टयस्थायिनी। यत्र च तादृशत्रित्वत्वनिर्विकल्पकोत्पत्तिकालेपि चतुष्ट्वोत्पत्तिः तत्र द्वित्वजनिकाऽपेक्षाबुद्धिव्यक्तिः क्षणपञ्चकस्थायिनी, त्रित्वजनकाऽपेक्षाबुद्धिश्च क्षणचतुष्टयस्थायिनी। एवमेकानेकसंख्याव्यक्तिनिर्विकल्पकोत्पत्तिकालेऽपरानेकसंख्याव्यक्त्युत्पत्तिचिन्तया पूर्वपूर्वसंख्याव्यक्त्युपधायकापेक्षाबुद्धेरधिकाधिकक्षणावस्थायित्वमवसेयम्। न च द्वित्वोपधायकाऽपेक्षाबुद्धिनाशं प्रति द्वित्वत्वनिर्विकल्पकसामग्री प्रतिबन्धिका, त्रित्वजनकाऽपेक्षाबुद्धिनाशं प्रति त्रित्वत्वनिर्विकल्पकसामग्रीत्यादिरीत्या विशिष्यैव प्रतिबध्यप्रतिबन्धकभावोस्तु किमधिकाधिकक्षणस्थायित्वाभ्युपगमेनेति वाच्यम्। द्वित्वत्रित्वादिभेदेनानन्तप्रतिबध्यप्रतिबन्धकभावापत्तेः। द्वित्वाद्युपधायकापेक्षाबुद्धिनाशं प्रति द्वित्वत्वादिनिर्विकल्पकसामग्र्याः प्रतिबन्धकत्वेपि द्वित्वाद्युपधायकापेक्षाबुद्धिषु सामान्यसामग्रीमर्यादया तृतीयक्षणे प्रतियोगितासंबन्धेन योग्यविभुविशेषगुणनाशसामान्यापत्तेर्दुर्वारत्वाच्चेत्याहुः।

भट्टाचार्यानुयायिनस्तु सामान्यतो योग्यविभुविशेषगुणनाशं प्रति द्वित्वत्वादि-निर्विकल्पक-तद्विशिष्टसाक्षात्कार-तद्विशिष्टवैशिष्ट्यसाक्षात्कारसामग्रीसाधारणाऽनेक-संख्यादिलौकिकप्रत्यक्षसामग्रीत्वेनैव प्रतिबन्धकत्वं कल्प्यते, लाघवात्, प्रत्यासत्तिः पूर्ववत्। यद्वा सामान्यतोयोग्यविभुविशेषगुणनाशं प्रति स्वसमानाधिकरणत्वे सति स्वोत्पत्तिसंबन्धेन तादृशोभयसंबन्धेन वा प्रतियोगिनिष्ठतया अनेकसंख्यादिलौकिक-प्रत्यक्षमेव केवलं कार्यसहभावेन प्रतिबन्धकम्, न तु पूर्ववर्त्तितया, तेन द्वित्वादि-लौकिकप्रत्यक्षोत्पत्त्युत्तरमपि नापेक्षाबुद्धिनाशाऽसंभवः। न चाऽनेकसंख्यादिलौकिक-प्रत्यक्षसामग्रीत्वादिना सामान्यतोयोग्यविभुविशेषगुणनाशं प्रति प्रतिबन्धकत्वे द्वित्वत्वादिनिर्विकल्पकस्यापि क्षणत्रयावस्थायित्वापत्तिरिति वाच्यम्। इष्टत्वा-दिति प्राहुः।

स्वतन्त्रास्तु ज्ञानान्तरवद् योग्यद्वित्वाद्युत्पादकापेक्षाबुद्धिरपि क्षणद्वयमात्र-स्थायिनी एव। अतिरिक्तप्रतिबध्यप्रतिबन्धकभावकल्पने गौरवात्। विषयान्तर-वदपेक्षाबुद्धिजगुणस्यापि लाघवात् पूर्ववर्तिमात्रेणैव स्वप्रत्यक्षहेतुतया च न द्वित्वत्वादिनिर्विकल्पकक्रमेण द्वे द्रव्ये इत्युपनीतविशिष्टवैशिष्ट्यप्रत्यक्षानुपपत्तिः। न चैवं "सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिनेत्यनेन" विरोध इति वाच्यम्। तत्र वर्तमानपदस्याऽव्यवहितपूर्ववर्तमानपरतया चक्षुरादिसंबद्धं तदव्यवहितपूर्वकाले-वर्तमानमेव चक्षुरादिना गृह्यते इत्येवंलाघवेन तदर्थात्। न च द्वित्वादेः पूर्ववर्त्तिता-मात्रेण प्रत्यक्षहेतुत्वेपि अपेक्षाबुद्धेः क्षणद्वयमात्रस्थायित्वे द्वित्वत्वनिर्विकल्पकक्रमेण द्वे द्रव्ये इति लौकिकविशिष्टवैशिष्ट्यप्रत्यक्षानुपपत्तिर्दुर्वारैव, विशेषणतावच्छेदकी-भूतद्वित्वत्वप्रकारकप्रत्यक्षोत्पत्तिक्षणे एव निर्विकल्पककालोत्पन्नापेक्षाबुद्धिनाशेन

नचाऽपेक्षाबुद्धिनाशात् कथं द्वित्वनाश इति वाच्यम् । कालान्तरे द्वित्वप्रत्यक्षाऽभावात् । अपेक्षाबुद्धिस्तु तदुत्पादिका, तन्नाशात्तन्नाश इति कल्पनात् । अत एव तत्पुरुषीयाऽपेक्षाबुद्धिजन्यद्वित्वादिकं तेनैव गृह्यते इति कल्प्यते ।

प्रश्न—अपेक्षाबुद्धि के नाश से कैसे द्वित्व का नाश होता है ।

उत्तर—यह प्रश्न आपका उचित नहीं है-क्योंकि कालान्तर (अपेक्षाबुद्धि शून्य काल) में द्वित्व का प्रत्यक्ष नहीं होता है--इसलिये अपेक्षाबुद्धि ही द्वित्व का उत्पादिका है--और अपेक्षाबुद्धि के नाश से ही द्वित्व का नाश होता है इस प्रकार की कल्पना की जाती है । इसीलिये तत्पुरुषीय अपेक्षाबुद्धिजन्य द्वित्व आदि का प्रत्यक्ष तत्पुरुष ही को होता है (पुरुषान्तर को नहीं) ।

---

बुद्धेरुत्पत्तिसंबन्धेन द्वित्वादिजनकत्वात्, अव्यवहितपूर्ववर्तित्वमपेक्ष्य लाघवेन स्वकारणत्व स्वसहवर्तित्वोभयसंबन्धेनापेक्षाबुद्धिनाशस्य द्वित्वनाशं प्रति कारणत्वात् । अथोदीच्यद्वित्वमादायैव द्वे द्रव्ये इति विशिष्टवैशिष्ट्यलौकिकप्रत्यक्षमितिरीत्या तस्यापि पुरुषस्य द्वे द्रव्ये इतिलौकिकप्रत्यक्षसंभव इति वाच्यम् । अपेक्षाबुद्धेरुत्पत्तिसंबन्धेन हेतुत्वेपि प्रतिपुरुषं धारावाहिकाऽपेक्षाबुद्धिजन्यानन्तधारावाहिकद्वित्वतद्ध्वंसतदुभयकार्यकारणभावकल्पनापत्त्या पर्याप्तिघटितसामानाधिकरण्यप्रत्यासत्त्या तत्पुरुषीयबुद्धिजसंख्यात्वावच्छिन्नं प्रति तत्पुरुषीयबुद्धिजसंख्यायाः प्रतिबन्धकत्वावश्यकतया एकद्वित्वसत्वे विभिन्नापेक्षाबुद्धितोपिसमानवृत्तिकसमानपुरुषीयद्वित्वोत्पत्तेरसंभवात् । प्रतिपुरुषमनन्तद्वित्वतद्ध्वंसतदुभयकार्यकारणभावकल्पनामपेक्ष्य प्रतिपुरुषमेकैकप्रतिबध्यप्रतिबन्धकभावकल्पनाया एवन्याय्यत्वात्, तस्माद् द्वित्वत्वनिर्विकल्पकादिक्रमोत्पन्नस्य द्वे द्रव्ये इति प्रत्यक्षस्य लौकिकत्वान्यथानुपपत्त्या द्वित्वाद्युपधायकापेक्षाबुद्धेः क्षणत्रयावस्थायित्वाभ्युपगम इति ध्येयम् ।

ननु अपेक्षाबुद्धिनाशस्याऽनेकसंख्यानाशकत्वे मानाभावः, आश्रयनाशादेव" जन्यसमवेतानामेकत्वादीनां नाशस्य क्लृप्ततया तेनैव द्वित्वादीनां नाशसंभवादित्या शंकते । नचेति । कथं द्वित्वनाश इति । किमर्थं द्वित्वनाश इत्यर्थः । स्वीकार्य इति शेषः । एकत्वनाशस्येव आश्रयनाशादेव द्वित्वादिनाशसंभवादिति भावः । कालान्तरे इति । अपेक्षाबुद्धिनाशानन्तरमित्यर्थः । द्वित्वप्रत्यक्षाभावादिति । द्वित्वविषयकलौकिकप्रत्यक्षानुत्पत्तेरित्यर्थः । ननु अपेक्षाबुद्धिनाशस्यैव द्वित्वादिनाशकत्वे किं मानमित्यत आह । अपेक्षाबुद्धिस्त्विति । अपेक्षाबुद्धिरेवेत्यर्थः । तदुत्पादिका द्वित्वाद्युत्पादिका । तन्नाशात् अपेक्षाबुद्धिनाशात् । तन्नाशः द्वित्वादिनाशः । इति कल्पनादिति । इत्याकारककल्पनाया आवश्यकत्वादित्यर्थः । कारणनाशस्य कार्यनाशहेतुतायाः क्लृप्तत्वादिति भावः । ननु व्यासज्यवृत्तिधर्मप्रत्यक्षेयावदाश्रयसन्निकर्षादेरपेक्षितत्वेन परकीयाऽपेक्षाबुद्धिजन्यद्वित्वादेः परस्य कुतोऽतीन्द्रियत्वम्, यावदाश्रयसन्निकर्षादेरविशिष्टत्वात् । न च तस्य परातीन्द्रियत्वे

मानाभावः, यावदाश्रयसन्निकर्षसत्वे पुरुषान्तरीयद्वित्वादेरपि पुरुषान्तरेण गृह्यत
एवेति वाच्यम्। तथासति स्वस्याऽपेक्षाबुद्धिविरहेपि परकीयाऽपेक्षाबुद्धिविषये
घटादौ द्वौ त्रयः इत्यादिप्रत्यक्षापत्तेः। परकीयाऽपेक्षाबुद्धिजद्वित्वादेः सत्वात्,
स्वस्यापेक्षाबुद्धिविरहदशायां तादृशप्रत्यक्षानुत्पादस्य सकलप्रमाणसिद्धत्वादित्यत
आह। **अतएवेति**। पूर्वोक्तयुक्त्याऽपेक्षाबुद्धेर्द्वित्वादिहेतुत्वस्याऽऽवश्यकत्वादेवेत्यर्थः।
**तेनैवेति**। न तु तद्भिन्नेनेत्यर्थः। तथाचाऽनेकसंख्यात्वादिविशिष्टलौकिकविषयता-
संबन्धेन तत्पुरुषीयप्रत्यक्षं प्रति तादात्म्यसंबन्धेन तत्पुरुषीयाऽपेक्षाबुद्धिजाऽनेकसंख्या-
देर्हेतुतया परकीयाऽपेक्षाबुद्धिजद्वित्वादेर्न परेण ग्रहणमिति भावः। तत्पुरुषीयबुद्धि-
जत्वं च फलोपधानात्मकजन्यतासंबन्धेन तत्तत्पुरुषीयबुद्धिमत्वम्, तेन तत्पुरुषीयाऽ-
पेक्षाबुद्धेः परकीयाऽपेक्षाबुद्धिजद्वित्वादिकं प्रत्यपि स्वरूपयोग्यत्वेपि न क्षतिः। नचा
द्वित्वत्रित्वादिभेदेन जन्यताया विभिन्नतयाऽननुगमो दोषाय। न च द्वित्वत्वादि-
विशिष्टलौकिकविषयतासंबन्धेन तत्तत्पुरुषीयप्रत्यक्षं प्रति तादात्म्यसंबन्धेन तत्त-
त्पुरुषीयद्वित्वत्वादिनैव हेतुत्वमस्तु लाघवात्, तत्तत्पुरुषीयद्वित्वत्वादिकं हि तत्त-
त्पुरुषीयापेक्षाबुद्धिजन्यतावच्छेदकतया सिद्धो जातिविशेष इति वाच्यम्। द्वित्व-
त्रित्वादिभेदेन बहुतरकार्यकारणभावापत्तेः।

वस्तुतस्तु अनेकसंख्यात्वविशिष्टलौकिकविषयतासंबन्धेन तत्तत्पुरुषीयप्रत्यक्षं
प्रति फलोपधानात्मकजन्यतासंबन्धेन तत्तत्पुरुषीयबुद्धित्वेनैव कारणत्वम्, लाघवात्।
अतएवद्वित्वादेरपेक्षाबुद्धिव्यंग्यत्वप्रवादोपि साधुसंगच्छते। अत एव च संबद्धं
वर्तमानं च गृह्यते चक्षुरादिनेत्यस्य श्रुतित्वाभावेपि द्वित्वत्वादिनिर्विकल्पकक्रमेण
द्वे द्रव्ये इति विशिष्टवैशिष्ट्यानुरोधेन योग्यद्वित्वाद्युपधायकाऽपेक्षाबुद्धेर्द्वित्वस्थायित्व-
मावश्यकम्। इयांस्तु विशेषः यन्नैयायिकनये जन्यतासंबन्धेनापेक्षाबुद्धेर्द्वित्वादि-
व्यंजकत्वम्, मीमांसकनये च न तेन संबन्धेन, तच्चाऽपेक्षाबुद्धेर्व्यंजकतानिरूपणे
स्फुटीभविष्यति।

नव्यास्तु द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन तत्पुरुषीयप्रत्यक्षं प्रति
तत्तत्पुरुषाऽवृत्तिबुद्धिजत्वेन प्रतिबन्धकत्वम्, प्रतिबन्धकता च तादात्म्येन।
अवृत्यन्तं बुद्धिविशेषणम्। बुद्धिजत्वं च फलोपधानात्मकजन्यतासंबन्धेन बुद्धि-
मत्वम्। नच समानकालीनविभिन्नपुरुषीयाऽपेक्षाबुद्धिजद्वित्वादीनां समदेशानां
लाघवेनैक्याभ्युपगमात्तत्प्रत्यक्षे व्यभिचार इति वाच्यम्। अतएव तादृशस्थले तादृश-
द्वित्वादीनामपि नानात्वाभ्युपगमात्। नचैवमनन्तद्वित्वादिकल्पनापत्तिरिति
वाच्यम्। तत्कल्पनस्य फलबललभ्यत्वात्। तत्तत्पुरुषीयाऽपेक्षाबुद्धिजन्यतावच्छेदक-
पुरुषभेदविभिन्नद्वित्वत्वादिव्याप्यजातीनां परस्परं सांकर्यवत्त्या तेषां नानात्वस्य
सर्वमते एवाऽऽवश्यकत्वाच्च। चित्रद्वित्वाभ्युपगमे बहूनां प्रतिबध्यप्रतिबन्धकभावानां
च कल्पनापत्तेः। द्वित्वादेरपेक्षाबुद्धिव्यंग्यत्वप्रवादश्च अपेक्षाबुद्धिप्रयोज्यलौकिक-
प्रत्यक्षविषयत्वनिबन्धनः, द्वित्वादिप्रत्यक्षे द्वित्वाद्युत्पत्तिद्वाराऽपेक्षाबुद्धेः प्रयोजक-
त्वादिति प्राहुः।

अत्र प्रकाशकृतः परकीयाऽपेक्षाबुद्धिजद्वित्वादेर्न परस्यातीन्द्रियत्वम्, अपेक्षाबुद्धिसत्वे पुरुषान्तरीयद्वित्वादेरपि पुरुषान्तरेण ग्रहणात। तदानीं द्वौ त्रय इत्यादिप्रत्यक्षे परकीयाऽपेक्षाबुद्धिजद्वित्वादेरभानस्य शपथमात्रनिर्णेयत्वात्। नचैवं स्वस्याऽपेक्षाबुद्धिविरहेऽपि परकीयाऽपेक्षाबुद्धिजद्वित्वत्रित्वादिमादाय द्वौ त्रय इत्यादिप्रत्यक्षापत्तिरिति वाच्यम्। अपेक्षाबुद्धेर्द्वित्वादिजनकत्ववद् द्वित्वादिव्यंजकत्वस्याभ्युपगमात्। नच व्यंग्यव्यंजकभावाभ्युपगमे तत्र वक्ष्यमाणरीत्याऽनेकसंख्याभिन्नविषयकप्रत्यक्षं प्रति अनेकसंख्यात्वेन प्रतिबन्धकत्वमप्यावश्यकम्, तथाच व्यंग्यव्यंजकभावप्रतिबध्यप्रतिबन्धकभावयोरुभयोः कल्पनामपेक्ष्य परकीयापेक्षाबुद्धिजानेकसंख्यायाः परायोग्यत्वकल्पनमेव साधीयः। नव्यमतोक्तरीत्या एकेनैव प्रतिबध्यप्रतिबन्धकभावेन निर्वाहादिति वाच्यम्। परकीयाऽपेक्षाबुद्धिजद्वित्वादेः पराऽयोग्यत्वे एकपुरुषीयद्वित्वादिसत्वेऽन्यपुरुषस्य द्वौ इति प्रत्यक्षानुपपत्तेः, परकीयद्वित्वादेः पराऽयोग्यत्वात्, द्वित्ववति द्वित्वान्तरोत्पत्तेरसंभवेन परकीयद्वित्वसत्वे स्वीयद्वित्वोत्पत्तेरसंभवात। अन्यथा यावदपेक्षाबुद्धिसत्वं द्वित्वादिधारोत्पादापत्तेः, धारावाहिकाऽपेक्षाबुद्ध्युत्पत्त्याधारावाहिकद्वित्वाद्युत्पादापत्तेश्च। नच पर्याप्तिघटितसामानाधिकरण्यप्रत्यासत्त्या सामान्यतो द्वित्वत्वावच्छिन्नं प्रति द्वित्वत्वेन, अनेकसंख्यात्वावच्छिन्नं प्रति अनेकसंख्यात्वेन वा न प्रतिबन्धकत्वम्, अपितु तादृशप्रत्यासत्त्या तत्तत्पुरुषीयद्वित्वत्वावच्छिन्नं प्रति तत्तत्पुरुषीयद्वित्वत्वादिना, तत्तत्पुरुषीयबुद्धिजानेकसंख्यात्वावच्छिन्नं प्रति अनेकसंख्यात्वेन वा प्रतिबन्धकत्वमतो भिन्नपुरुषीयद्वित्वत्वादिसत्वेऽपि स्वस्य द्वित्वोत्पत्तिसंभव इति वाच्यम्। पुरुषभेदेनाऽनन्तप्रतिबध्यप्रतिबन्धकभावकल्पनापत्तेः। नचैवं वैशेषिकमतेऽपि द्वित्वादेः साक्षादपेक्षाबुद्धिव्यंग्यतया मीमांसकमताविशेष इति वाच्यम्। मीमांसकैर्द्वित्वादेरपेक्षाबुद्धिव्यंग्यत्वमात्रोपगमात्। वैशेषिकमते चाऽपेक्षाबुद्धिव्यंग्यत्वतज्जन्यत्वयोरुभयोरेवोपगमात्।

अथाऽपेक्षाबुद्धिव्यंग्यत्वाभ्युपगमे तज्जन्यत्वाभ्युपगमोऽव्यर्थः, स्वस्याऽपेक्षाबुद्धिविरहदशायां परकीयापेक्षाबुद्धिजद्वित्वत्रित्वादिकमादायद्वौत्रय इति प्रत्यक्षवारणस्तत्प्रयोजनस्यापेक्षाबुद्धिव्यंग्यत्वाभ्युपगमेनैव निरासात्। नचाऽपेक्षाबुद्धेरजनकत्वे तन्नाशेन द्वित्वादिनाशाऽसंभवात् तज्जनकत्वाभ्युपगमः। स्वप्रतियोगिजन्यत्वसंबन्धेनैवाऽपेक्षाबुद्धिनाशस्य द्वित्वादिनाशजनकत्वादिति वाच्यम्। एकत्वादिवदाश्रयनाशादेव कार्यवृत्तिद्वित्वादेरपि नाशस्य सुवचत्वात्। नित्यमात्रवृत्तिद्वित्वादेश्च ज्ञानादिवत्सहवर्त्तिनाशादेव नाशस्य सुवचत्वात्। तस्यातीन्द्रियतया क्षणद्वयमात्रस्थायित्वेऽपि क्षतिविरहात् इति चेन्न। द्वित्वद्विपृथक्त्वयोः परस्परविलक्षणापेक्षाबुद्ध्यजन्यत्वे द्वित्वोत्पत्तिकाले द्विपृथक्त्वस्य द्विपृथक्त्वोत्पत्तिकाले द्वित्वस्योत्पत्तिसंभवादिति। ननु अपेक्षाबुद्धेर्द्वित्वादिहेतुत्वे मानाभावः। नचैवं सति अपेक्षाबुद्धिशून्यकालेऽपि द्वित्वोत्पत्तिसंभवेन एकत्वप्रत्यक्षमिव सर्वदा सन्निकर्षबलाद् द्वित्वादिप्रत्यक्षमपि कुतो नोत्पद्यते इति वाच्यम्। तत्प्रत्यक्षं प्रत्येव तस्याः हेतुत्वादित्याशंकते

**नचाऽपेक्षाबुद्धेर्द्वित्वप्रत्यक्षे कारणत्वमस्तु इति वाच्यम्। लाघवेन द्वित्वं प्रति कारणत्वस्यैवोचितत्वात्।**

प्रश्न—अपेक्षाबुद्धि को द्वित्वोत्पत्ति के प्रति कारण न मानकर द्वित्वप्रत्यक्ष के प्रति ही कारण क्यों न मान लिया जावे।

उत्तर—लाघवात् द्वित्व के प्रति ही अपेक्षाबुद्धि को कारण मानना उचित है—( क्योंकि द्वित्वप्रत्यक्षत्व की अपेक्षया द्वित्वत्व को कार्यतावच्छेदक मानने में लाघव है )।

---

**नचेति। कारणत्वमस्तु इति।** तथाच अपेक्षाबुद्धिर्द्वित्वादिव्यंजिका इति भावः। द्वित्वादिव्यञ्जकत्वं च द्वित्वादिविषयकलौकिकसाक्षात्कारजनकत्वम्। द्वित्वादौ अपेक्षाबुद्धिव्यङ्ग्यत्वं चापेक्षाबुद्धिजन्यसाक्षात्कारविषयत्वम्। अपेक्षाबुद्धिर्द्वित्वादिव्यंजिका नतूत्पादिकेतिमीमांसकमतम्। कार्यकारणभावस्तु तद्व्यक्तिसमवेताऽनेकसंख्याप्रत्यक्षं प्रति तद्व्यक्तित्वावच्छिन्नविशेष्यकापेक्षाबुद्धिः कारणम्, कार्यताकारणताऽवच्छेदकसंबन्धस्तु समवाय एव। अपेक्षाबुद्धित्वं च एकत्वप्रकारकबुद्धित्वम्। नचैव तद्व्यक्तिमात्रविशेष्यकाऽपेक्षाबुद्धिदशायामपि तद्व्यक्तिसमवेतद्वित्वादिप्रत्यक्षापत्तिरिति वाच्यम्। तद्व्यक्तिसमवेतद्वित्वादेर्व्यक्त्यन्तरसमवेतत्वनियमेन तद्व्यक्तिसमवेतद्वित्वादिप्रत्यक्षसामग्रीविरहादेव तदानीं तद्व्यक्तिसमवेतद्वित्वादेः प्रत्यक्षानुत्पत्तेः। नच तथापि अपेक्षाबुद्धिविरहदशायां तद्व्यक्तिमात्रविशेष्यकापेक्षाबुद्धिदशायां वा तद्व्यक्तिसमवेतद्वित्वादेः प्रत्यक्षं मास्तु सन्निकर्षादिसामान्यसामग्रीमर्यादयातद्व्यक्तिसमवेतद्वित्वादौ द्रव्यसमवेतत्वविशिष्टलौकिकविषयतया चाक्षुषादिलक्षणसामान्यकार्यापत्तिस्तु दुर्वारेति वाच्यम्। द्रव्यसमवेतचाक्षुषं हि द्विविधम्—तद्व्यक्तिसमवेताऽनेकसंख्याविषयकम्, तद्भिन्नविषयकं च। आद्यमपि द्विविधं—तद्व्यक्तिसमवेताऽनेकसंख्याविषयकं तद्व्यक्त्यसमवेताऽनेकसंख्याविषयकं च। तत्र प्रथमस्य तदानीं तत्र नोत्पत्तिसंभवः, उक्तयुक्तेः। अतएव न द्वितीयस्यापि, तत्तद्व्यक्त्यन्तरवृत्त्यनेकसंख्याविषयकातिरिक्तस्य तत्तद्व्यक्त्यसमवेतानेकसंख्याविषयकप्रत्यक्षस्यालीकत्वात्। नापि द्वितीयस्य—अनेकसंख्याभिन्नविषयकप्रत्यक्षं प्रति अनेकसंख्यायास्तादात्म्येन प्रतिबन्धकत्वाभ्युपगमादिति केचित्। तदसत्। घटपटवृत्तिद्वित्वविशेष्यकाऽपेक्षाबुद्धिविरहेऽपि घटकुड्यवृत्तिद्वित्वप्रत्यक्षदशायां चाक्षुषसन्निकर्षादिसामान्यसामग्रीमर्यादया द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषादिलक्षणसामान्यकार्यापत्तेः। घटकुड्यवृत्त्यनेकसंख्याप्रत्यक्षसामग्र्या एव सर्वैनोक्तरीत्या यावद्विशेषसामग्रीबाधाऽसंभवात्।

प्राञ्चस्तु तदेतद्वृत्तिद्वित्वप्रत्यक्षं प्रति तदेतद्व्यक्तित्वावच्छिन्नविशेष्यकापेक्षाबुद्धिर्हेतुः—तदुभयैतद्वृत्तित्रित्वप्रत्यक्षं प्रति तदुभयैतद्व्यक्तित्वावच्छिन्नविशेष्यकापेक्षाबुद्धिर्हेतुरित्यादिक्रमेण बोध्यम्। तदेतद्वृत्तिद्वित्वादिप्रत्यक्षं प्रति तादात्म्यसंबन्धेन तदेतद्वृत्तिद्वित्वादिकम्, अनेकसंख्याभिन्नविषयकप्रत्यक्षं प्रति अनेक-

संख्याभेदश्च विषयनिष्ठतया हेतुरितिनोक्तस्थलेसन्निकर्षादिसामान्यसामग्रीमर्यादया निरुक्तलौकिकविषयतासंबन्धेन चाक्षुषादिलक्षणसामान्यकार्यापत्तिर्यावद्विशेषसामग्रीबाधादित्याहुः। तदसत्। अनन्तकार्यकारणभावप्रसंगात्।

अन्येतु अनेकसंख्यावृत्तिलौकिकविषयतासंबन्धेन तत्पुरुषीयप्रत्यक्षं प्रति निखिलतत्तद्व्यक्तित्वावच्छिन्नविषयताव्यक्तिसंबन्धावच्छिन्नप्रतियोगिताकतत्पुरुषीयापेक्षाबुद्धिप्रतियोगिकविलक्षणाभावव्यक्तेः स्वाश्रयसमवेतत्वसंबन्धेनप्रतिबन्धकत्वमेवाऽपेक्षाबुद्धेर्द्वित्वादिव्यंजकत्वम्, न पुनरपेक्षाबुद्धेर्द्वित्वादिप्रत्यक्षजनकत्वं तद्व्यंजकत्वम्। प्रतियोगितावच्छेदकसंबन्धादेरननुगमेपि क्षत्यभावात्। अतएव कारणतावच्छेदकसंबन्धादेरननुगमोपि न दोषायेति प्राचीनैरपि गीयते। अस्तु वा स्वरूपतो द्रव्यद्वयाऽवृत्तिद्रव्यवृत्तिधर्मावच्छिन्नविशेष्यतात्वेन तत्तद्व्यक्तित्वावच्छिन्नविशेष्यत्वानामनुगमः। भवति हि तत्तद्व्यक्तित्वं द्रव्यद्वयावृत्तिद्रव्यवृत्ति, तत्तद्व्यक्तिमात्रवृत्त्यधिकरणताविशेष्यतादिव्यक्तीनां तत्त्वेदंत्वरूपत्वात्। नच सामान्यतो विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभाव एव प्रतिबन्धकोस्तु किमवच्छिन्नान्तेनविशेष्यताविशेषणेनेति वाच्यम्। निर्धर्मितावच्छेदककापेक्षाबुद्धावपि द्वित्वादिप्रत्यक्षापत्तेः, भावाऽभावसाधारणाभावत्व—नानावृत्त्यधिकरणताविशेष्यतादिधर्मितावच्छेदककापेक्षाबुद्धेर्वारणायाऽवृत्त्यन्तम्। अवृत्तित्वं च स्वरूपेण विवक्षितम्। द्रव्यत्वसत्वादिधर्मितावच्छेदककस्य समवायत्व—नानागुणादिवृत्त्यधिकरणताविशेष्यतादिधर्मितावच्छेदककस्यचापेक्षाबुद्ध्यात्मकज्ञानस्यवारणाय वृत्त्यन्तम् वृत्तित्वं स्वरूपेण ग्राह्यम्। अधिकरणमेकं, विशेष्यमेकमित्याद्यधिकरणतात्वविशेष्यतात्वादिरूपेण नानाधिकरणत्वविशेष्यत्वधर्मितावच्छेदकपेक्षाबुद्धेर्वारणाय स्वरूपत इति। द्रव्यान्तरनिष्ठेदन्तादिधर्मितावच्छेदककभ्रमरूपापेक्षाबुद्धिस्तु संग्राह्यैव। नचैवं तादृशप्रतिबन्धकाभावस्य द्वित्वादिवत्तत्समानाधिकरणसंयोगादावपि सत्वात्तत्राऽनेकसंख्यावृत्तिलौकिकविषयतासंबन्धेन तत्पुरुषीयप्रत्यक्षापत्तिरिति वाच्यम्। तादृशविषयतासंबन्धेन प्रत्यक्षं प्रति तादात्म्यसंबन्धेनाऽनेकसंख्यात्वेनापि कारणत्वात्। एवमनेकसंख्याभिन्नविषयकप्रत्यक्षं प्रति तादात्म्यसंबन्धेनाऽनेकसंख्यापिप्रतिबन्धिकावक्तव्या। तेनाऽपेक्षाबुद्धिविरहदशायां न द्वित्वादौ सन्निकर्षादिसामग्रीमर्यादया द्रव्यसमवेतत्वविशिष्टलौकिकविषयतासंबन्धेन चाक्षुषादिलक्षणसामान्यकार्यापत्तिः, यावद्विशेषसामग्रीबाधादित्याहुः।

नव्यास्तु अनेकसंख्यात्वविशिष्टलौकिकविषयतासंबन्धेन तत्पुरुषीयप्रत्यक्षं प्रति व्याप्यतासंबन्धेन तत्पुरुषीयाऽपेक्षाबुद्धिरेव हेतुः। व्याप्यत्वं च स्वीययथोक्तानुगतविशेष्यतावत्पर्याप्तत्वम्, स्वीययथोक्तानुगतविशेष्यतावदन्याऽसमवेतत्वम् वा। स्वपदं कारणीभूतापेक्षाबुद्धिव्यक्तिपरम्। सर्वत्र यावदाश्रयविषयकसमूहालंबनात्मकापेक्षाबुद्ध्यनन्तरमेव द्वित्वप्रत्यक्षं नतु प्रत्येकाश्रयमात्रविषयकविभिन्नापेक्षाबुद्धिभ्यामित्युपगमाच्च न व्यभिचारः। अनेकसंख्यात्वविशिष्टलौकिकविषयता-

**नचाऽपेक्षाबुद्धेर्द्वित्वप्रत्यक्षेकारणत्वमस्तु इति वाच्यम्। लाघवेन द्वित्वं प्रति कारणत्वस्यैवोचितत्वात्।**

प्रश्न—अपेक्षाबुद्धि को द्वित्वोत्पत्ति के प्रति कारण न मानकर द्वित्वप्रत्यक्ष के प्रति ही कारण क्यों न मान लिया जावे।

उत्तर—लाघवात् द्वित्व के प्रति ही अपेक्षाबुद्धि को कारण मानना उचित है--( क्योंकि द्वित्वप्रत्यक्षत्व की अपेक्षया द्वित्वत्व को कार्यतावच्छेदक मानने में लाघव है )।

---

**नचेति। कारणत्वमस्तु इति।** तथाच अपेक्षाबुद्धिर्द्वित्वादिव्यंजिका इति भावः। द्वित्यादिव्यजकत्वं च द्वित्वादिविषयकलौकिकसाक्षात्कारजनकत्वम्। द्वित्वादौ अपेक्षाबुद्धिव्यङ्ग्यत्वं चापेक्षाबुद्धिजन्यसाक्षात्कारविषयत्वम्। अपेक्षाबुद्धिर्द्वित्वादिव्यंजिका नतूत्पादिकेतिमीमांसकमतम्। कार्यकारणभावस्तु तद्व्यक्तिसमवेताऽनेकसंख्याप्रत्यक्षं प्रति तद्व्यक्तित्वावच्छिन्नविशेष्यकापेक्षाबुद्धिः कारणम्, कार्यताकारणताऽवच्छेदकसंबन्धस्तुसमवाय एव। अपेक्षाबुद्धित्वं च एकत्वप्रकारकबुद्धित्वम्। नचैव तद्व्यक्तिमात्रविशेष्यकाऽपेक्षाबुद्धिदशायामपि तद्व्यक्तिसमवेतद्वित्वादिप्रत्यक्षापत्तिरिति वाच्यम्। तद्व्यक्तिसमवेतद्वित्वादेर्व्यक्त्यन्तरसमवेतत्वनियमेन तद्व्यक्तिसमवेतद्वित्वादिप्रत्यक्षसामग्रीविरहादेव तदानीं तद्व्यक्तिसमवेतद्वित्वादेः प्रत्यक्षानुत्पत्तेः। नच तथापि अपेक्षाबुद्धिविरहदशायां तद्व्यक्तिमात्रविशेष्यकापेक्षाबुद्धिदशायां वा तद्व्यक्तिसमवेतद्वित्वादेः प्रत्यक्षं मास्तुसन्निकर्षादिसामान्यसामग्रीमर्यादयातद्व्यक्तिसमवेतद्वित्वादौ द्रव्यसमवेतत्वविशिष्टलौकिकविषयतया चाक्षुषादिलक्षणसामान्यकार्यापत्तिस्तु दुर्वारेति वाच्यम्। द्रव्यसमवेतचाक्षुषं हि द्विविधम्—तद्व्यक्तिसमवेताऽनेकसंख्याविषयकम्, तद्भिन्नविषयकं च। आद्यमपि द्विविधं—तद्व्यक्तिसमवेताऽनेकसंख्याविषयकं तद्व्यक्त्यसमवेताऽनेकसंख्याविषयकं च। तत्र प्रथमस्य तदानीं तत्र नोत्पत्तिसंभवः, उक्तयुक्तेः। अतएव न द्वितीयस्यापि, तत्तद्व्यक्त्यन्तरवृत्त्यनेकसंख्याविषयकातिरिक्तस्य तत्तद्व्यक्त्यसमवेतानेकसंख्याविषयकप्रत्यक्षस्यालीकत्वात्। नापि द्वितीयस्य—अनेकसंख्याभिन्नविषयकप्रत्यक्षं प्रति अनेकसंख्यायास्तादात्म्येन प्रतिबन्धकत्वाभ्युपगमादिति केचित्। तदसत्। घटविशेष्यकाऽपेक्षाबुद्धिविरहेऽपि घटकुड्यवृत्तिद्वित्वप्रत्यक्षदशायां घटपटवृत्तिद्वित्वेऽपि सन्निकर्षादिसामान्यसामग्रीमर्यादया द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषादिलक्षणसामान्यकार्यापत्तेः। घटकुड्यवृत्त्यनेकसंख्याप्रत्यक्षसामग्र्या एव सर्वेनोक्तरीत्या यावद्विशेषसामग्रीबाधाऽसंभवात्।

प्राञ्चस्तु तदेतद्वृत्तिद्वित्वप्रत्यक्षं प्रति तदेतद्व्यक्तित्वावच्छिन्नविशेष्यकापेक्षाबुद्धिर्हेतुः—तदुभयैतद्वृत्तित्रित्वप्रत्यक्षं प्रति तदुभयैतद्व्यक्तित्वावच्छिन्नविशेष्यकापेक्षाबुद्धिर्हेतुरित्यादिक्रमेण बोध्यम्। तदेतद्वृत्तिद्वित्वादिप्रत्यक्षं प्रति तादात्म्यसंबन्धेन तदेतद्वृत्तिद्वित्वादिकम्, अनेकसंख्याभिन्नविषयकप्रत्यक्षं प्रति अनेक-

संख्याभेदश्च विषयनिष्ठतया हेतुरितिनोक्तस्थलेसन्निकर्षादिसामान्यसामग्रीमर्यादया निरुक्तलौकिकविषयतासंबन्धेन चाक्षुषादिलक्षणसामान्यकार्योत्पत्तिर्यावद्विशेषसामग्रीबाधादित्याहुः। तदसत्। अनन्तकार्यकारणभावप्रसंगात्।

अन्येतु अनेकसंख्यावृत्तिलौकिकविषयतासंबन्धेन तत्पुरुषीयप्रत्यक्षं प्रति निखिलतत्तद्व्यक्तित्वावच्छिन्नविषयताऽव्यक्तिसंबन्धावच्छिन्नप्रतियोगिताकतत्पुरुषीयापेक्षाबुद्धिप्रतियोगिकविलक्षणाभावव्यक्तेः स्वाश्रयसमवेतत्वसंबन्धेनप्रतिबन्धकत्वमेवाऽपेक्षाबुद्धेर्द्वित्वादिव्यंजकत्वम्, न पुनरपेक्षाबुद्धेर्द्वित्वादिप्रत्यक्षजनकत्वं तद्व्यंजकत्वम्। प्रतियोगितावच्छेदकसंबन्धादेरननुगमेपि क्षत्यभावात्। अतएव कारणतावच्छेदकसंबन्धादेरननुगमोपि न दोषायेति प्राचीनैरपि गीयते। अस्तु वा स्वरूपतो द्रव्यद्वयाऽवृत्तिद्रव्यवृत्तिधर्मावच्छिन्नविशेष्यतात्वेन तत्तद्व्यक्तित्वावच्छिन्नविशेष्यत्वानामनुगमः। भवति हि तत्तद्व्यक्तित्वं द्रव्यद्वयावृत्तिद्रव्यवृत्ति, तत्तद्व्यक्तिमात्रवृत्त्यधिकरणताविशेष्यतादिव्यक्तीनां तत्त्वेदंत्वरूपत्वात्। नच सामान्यतो विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभाव एव प्रतिबन्धकोस्तु किमवच्छिन्नान्तेनविशेष्यताविशेषणेनेति वाच्यम्। निर्धर्मितावच्छेदककापेक्षाबुद्धावपि द्वित्वादिप्रत्यक्षापत्तेः, भावाऽभावसाधारणाभावत्व–नानावृत्त्यधिकरणताविशेष्यतादिधर्मितावच्छेदककापेक्षाबुद्धेर्वारणायाऽवृत्त्यन्तम्। अवृत्तित्वं च स्वरूपेण विवक्षितम्। द्रव्यत्वसत्वादिधर्मितावच्छेदककस्य समवायत्व–नानागुणादिवृत्त्यधिकरणताविशेष्यतादिधर्मितावच्छेदककस्यचापेक्षाबुद्ध्यात्मकज्ञानस्यवारणाय वृत्त्यन्तम् वृत्तित्वं स्वरूपेण ग्राह्यम्। अधिकरणमेकं, विशेष्यमेकमित्याद्यधिकरणतात्वविशेष्यतात्वादिरूपेण नानाधिकरणत्वविशेष्यत्वधर्मितावच्छेदकपेक्षाबुद्धेर्वारणाय स्वरूपत इति। द्रव्यान्तरनिष्ठेदन्तादिधर्मितावच्छेदककभ्रमरूपापेक्षाबुद्धिस्तु संग्राह्यैव। नचैवं तादृशप्रतिबन्धकाभावस्य द्वित्वादिवत्तत्समानाधिकरणसंयोगादावपि सत्वात्तत्राऽनेकसंख्यावृत्तिलौकिकविषयतासंबन्धेन तत्पुरुषीयप्रत्यक्षापत्तिरिति वाच्यम्। तादृशविषयतासंबन्धेन प्रत्यक्षं प्रति तादात्म्यसंबन्धेनाऽनेकसंख्यात्वेनापि कारणत्वात्। एवमनेकसंख्याभिन्नविषयकप्रत्यक्षं प्रति तादात्म्यसंबन्धेनाऽनेकसंख्यापि प्रतिबन्धिकावक्तव्या। तेनाऽपेक्षाबुद्धिविरहदशायां न द्वित्वादौ सन्निकर्षादिसामग्रीमर्यादया द्रव्यसमवेतत्वविशिष्टलौकिकविषयतासंबन्धेन चाक्षुषादिलक्षणसामान्यकार्योत्पत्तिः, यावद्विशेषसामग्रीबाधादित्याहुः।

नव्यास्तु अनेकसंख्यात्वविशिष्टलौकिकविषयतासंबन्धेन तत्पुरुषीयप्रत्यक्षं प्रति व्याप्यतासंबन्धेन तत्पुरुषीयाऽपेक्षाबुद्धिरेव हेतुः। व्याप्यत्वं च स्वीययथोक्तानुगतविशेष्यतावत्पर्याप्तत्वम्, स्वीययथोक्तानुगतविशेष्यतावदन्याऽसमवेतत्वम् वा। स्वपदं कारणीभूतापेक्षाबुद्धिव्यक्तिपरम्। सर्वत्र यावदाश्रयविषयकसमूहालंबनात्मकापेक्षाबुद्ध्यनन्तरमेव द्वित्वप्रत्यक्षं नतु प्रत्येकाश्रयमात्रविषयकविभिन्नापेक्षाबुद्धिभ्यामित्युपगमाच्च न व्यभिचारः। अनेकसंख्यात्वविशिष्टलौकिकविषयता-

**अतीन्द्रिये द्व्यणुकादौ अपेक्षाबुद्धिर्योगिनाम्। सर्गादिकालीनपरमाण्वादौ ईश्वरीयापेक्षाबुद्धिः ब्रह्माण्डान्तरवर्त्तियोगिनामपेक्षाबुद्धिर्वा द्वित्वादिकारणमिति। १०८**

प्रश्न—द्व्यणुक आदि अतीन्द्रिय पदार्थों में किसकी अपेक्षाबुद्धि से द्वित्वोत्पत्ति होगी।

उत्तर—अतीन्द्रिय द्व्यणुक आदि में योगिलोगों की अपेक्षाबुद्धि से द्वित्वोत्पत्ति होती है। और सृष्टि के आदिकालीन परमाणु आदि में ईश्वरीय अपेक्षाबुद्धि से अथवा ब्रह्माण्डान्तर में रहने वाले योगियों की अपेक्षाबुद्धि को ही द्वित्वोत्पत्ति में कारण मानना उचित है॥ १०८॥

---

संबन्धेन प्रत्यक्षं प्रति तादात्म्येनाऽनेकसंख्यायाः कारणत्वम्, अनेकसंख्याभिन्नविषयकप्रत्यक्षं प्रति तादात्म्येनाऽनेकसंख्यायाः प्रतिबन्धकत्वं च वक्तव्यमतोनोक्तातिप्रसंगः। वस्तुतस्तु एकत्र द्वयमितिन्यायेन स्वग्राह्यत्वस्ववृत्त्यनेकसंख्यात्वोभयसंबन्धेनैवाऽपेक्षाबुद्धेः कारणत्वं वक्तव्यम्, तथाचाऽनेकसंख्यात्वविशिष्टलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति अनेकसंख्यायाः पृथक्कारणत्वं नोपेयम्। स्ववृत्तित्वं चानेकसंख्यात्वस्य कालिकसंबन्धेनेति न काप्यनुपपत्तिरिति प्राहुः।

आशंकांनिरस्यति। **लाघवेनेति**। द्वित्वप्रत्यक्षत्वापेक्षया द्वित्वत्वस्यकार्यतावच्छेदकत्वे लाघवादिति भावः। अत्रेदं बोध्यम्। द्वित्वादिकं प्रति अपेक्षाबुद्धेः कारणत्वाऽनङ्गीकारे एकत्वस्येव नित्यगतद्वित्वादेर्नित्यत्वापत्तिः, तथाच परमाण्वाकाशद्वित्वानामनन्तानामेकदैकत्र समावेशापत्तिः, एवं घटाद्युत्पत्त्यनन्तरं एकत्वोत्पत्तिवत् यावत्यो घटादिद्रव्यव्यक्तयः तावद्व्यक्तिसंख्यासमसंख्याकद्वित्वानामुत्पत्त्यापत्तिः, एवं घटोत्पत्तिद्वितीयक्षणे एव तस्मिन्नेव घटे कोटिकोटिद्वित्वादीनामुत्पत्त्यापत्तिः, समवायिकारणसत्वात्, असमवायिकारणसत्वात्, ईश्वरादृष्टादिरूपनिमित्तकारणसत्वाच्च। इत्थं चैकैकस्मिन्द्रव्ये एककालावच्छेदेनाऽप्रामाणिककोटिकोटिद्वित्वाद्युत्पत्तिस्वीकारापेक्षया नित्यमात्रनित्यद्वित्वादीनां अनन्तानां कल्पनापेक्षया चाऽतिलाघवाद् द्वित्वादावेवाऽपेक्षाबुद्धेः कारणत्वं प्रामाणिकम्। एवं च ययोरेवाऽपेक्षाबुद्धिस्तयोरेव द्वित्वोत्पत्तिस्वीकाराआऽप्रामाणिकाऽनन्तद्वित्वादिकल्पनाप्रसक्तिः। अतएव तस्याऽखिलैकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिः, तन्नाशाच्चतन्नाशइतिभाष्योक्तिरपि संगच्छते इति।

ननु परमाण्वादावतीन्द्रियद्रव्ये द्वित्वादिप्रत्यक्षस्याऽपेक्षाबुद्धेश्चाननुभाविकतया प्रमाणाभावेन क्लृप्तकारणाभावेन च न तत्र द्वित्वाद्युत्पत्तिसंभवः। न चेष्टापत्तिः। द्व्यणुकपरिमाणं प्रति परमाणुगतद्वित्वसंख्याया एवाऽसमवायिकारणतयापरमाणौ तदभावात् द्व्यणुके परिमाणाभावप्रसंगात्, परमाणुद्वयमितिप्रामाणिकव्यवहारानुपपत्तिप्रसंगाच्च। एवं द्व्यणुके त्रित्वानुत्पत्तौ द्व्यणुकगतत्रित्वं विना त्र्यणुके परिमाणानुत्पत्तिश्चेत्यतआह। **अतीन्द्रिये द्व्यणुकादाविति**। आदिना परमाणु

परिग्रहः। तथाच सर्वज्ञयोगिनामपेक्षाबुद्ध्यैव परमाण्वादिषु द्वित्वाद्युत्पत्तिसंभवान्नोक्तदोष इति भावः। सर्गादौ योगिनामभावादाह। **सर्गादिकालीनेति**। आदिना प्रलयपरिग्रहः। **ईश्वरीयाऽपेक्षाबुद्धिरिति**। अस्य द्वित्वादिकारणमित्यनेनाऽन्वयः। आदिनात्रित्वपरिग्रहः। नच ईश्वरीयाऽपेक्षाबुद्धेर्द्वित्वोत्पादकत्वे तद्‌द्वित्वस्य नित्यत्वापत्तिर्भगवतोऽपेक्षाबुद्धेर्नित्यत्वादितिवाच्यम्। तत्तत्कार्यं प्रति तत्तत्क्षणविशेषस्यापि कारणतया कारणीभूतक्षणविशेषनाशादेव द्वित्वादिनाशसंभवात्।

ननु भगवतोऽपेक्षाबुद्धेर्द्वित्वादिजनकत्वे मानाभावः। नच सर्वत्र भगवदपेक्षाबुद्धिरेव द्वित्वादिजनिका, नान्यस्येतिकल्पयितुमुचितम्, लाघवादिति वाच्यम्। तथासति स्वीयाऽपेक्षाबुद्धिजद्वित्वादिकं स्वयं गृण्हातीतिस्वभावस्य वक्तुमशक्यतया स्वस्याऽपेक्षाबुद्धिविरहदशायामपि यावदाश्रयसन्निकर्षादिसत्वे द्वौ त्रय इत्यादिप्रत्यक्षापत्तेस्तादवस्थ्यात्। अथ भगवदपेक्षाबुद्धेः परत्वापरत्वद्विपृथक्त्वजनकत्वे चतुष्ट्वादिसंख्याजनकत्वे च मानाभावेपि द्वित्वत्रित्वजनकत्वमावश्यकमेव। अन्यथा सर्गाद्यकालीनपरमाणुषु कथं द्वित्वोत्पत्तिस्तदानीं कथं द्व्यणुकेषु त्रित्वोत्पत्तिः। नच तदानीं परमाण्वादिषु द्वित्वानुत्पत्तावपि न क्षतिरिति वाच्यम्। सर्गाद्यकाले परमाणौ द्वित्वानभ्युपगमे तदानीन्तनतदारब्धद्व्यणुकेषु अणुपरिमाणानुत्पत्तेः, परमाणुनिष्ठद्वित्वस्यैव तत्राऽसमवायिकारणत्वात्, सर्गाद्यकाले द्व्यणुकेषु त्रित्वानभ्युपगमे तदानीन्तनतदारब्धत्र्यणुकेषु च महत्वानुत्पत्त्यापत्तेः, द्व्यणुकत्रित्वस्यैव तत्राऽसमवायिकारणत्वादित्यतआह। **ब्रह्माण्डान्तरवर्त्तियोगिनामिति**। तथाच महाप्रलये मानाभावात् सकलब्रह्माण्डानामेकदा नाशानङ्गीकाराच्च एकसर्गोत्पत्तिकाले तस्य प्रलयकाले वा ब्रह्माण्डान्तरवर्त्तियोगिनामपेक्षाबुद्धिबलात्परमाणुषु द्वित्वोत्पत्तौ बाधकाभाव इतिभावः।

अत्रेदं विभावनीयम्। ईश्वरीयाऽपेक्षाबुद्धेः परमाणुद्व्यणुकाऽवृत्तिद्वित्वत्रित्वजनकत्वे मानाभावः, एवं भगवदपेक्षाबुद्धेर्द्वित्वादिजनकत्वेपि तज्जन्याऽनेकसंख्यां प्रति पूर्वोक्तकालविशेषस्य हेतुत्वावश्यकतया केवलं तादृशकालविशेषस्यैव सर्गाद्यकाले परमाण्वादौ द्वित्वादिजनकत्वस्य सुवचत्वाच्च। तज्जन्यतावच्छेदकं च तादृशकालविशेषोत्पन्नद्वित्वादिमात्रवृत्तिजातिविशेषः। भगवदपेक्षाबुद्धेर्हेतुत्वेपि जातिविशेषस्यैव कार्यतावच्छेदकत्वात्। वस्तुतः सर्गाद्यकाले परमाण्वादिषु द्वित्वाद्युत्पत्तावेव मानाभावः द्व्यणुकनिष्ठाऽत्यन्ताऽपकृष्टाणुपरिमाणं प्रति परमाणुनिष्ठोत्कृष्टाणुपरिमाणस्यैवाऽसमवायिकारणत्वात्, त्र्यसरेणुनिष्ठात्यन्तापकृष्टमहत्वं प्रति द्व्यणुकनिष्ठात्यन्तापकृष्टाणुपरिमाणस्यैवाऽसमवायिकारणत्वात्। अन्यथा सर्गाद्यकाले परमाण्वादावनन्तद्वित्वादिकल्पनापत्तेः, तत्र कालविशेषस्य हेतुत्वकल्पनापत्तेः, अत्यन्तापकृष्टाणुपरिमाणं प्रति स्वपर्याप्त्यधिकरणसमवेतत्वसंबन्धेन परमाणुद्वित्वत्वेन, अत्यन्तापकृष्टमहत्वं प्रति स्वपर्याप्त्यधिकरणसमवेतत्वसंबन्धेन द्व्यणुकनिष्ठत्रित्वत्वेन हेतुत्वे कारणतावच्छेदकगौरवापत्तेश्च। सामान्यतो द्वित्वत्व-त्रित्वत्वाभ्यां जनकत्वे

**अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरिष्यते ।**

अपेक्षाबुद्धिः केत्यत आह । अनेकैकत्वेति । अयमेकोऽयमेक इत्याकारिकेत्यर्थः । इदं तु बोध्यम् । यत्राऽनियतैकत्वज्ञानं तत्र त्रित्वादिभिन्ना बहुत्वसंख्योत्पद्यते, यथा सेनावनादाविति कन्दलीकारः । आचार्यास्तु

प्रश्न—अपेक्षाबुद्धि क्या वस्तु है ।

उत्तर—अनेकों में जो "अयमेकः" "अयमेकः" इत्याकारक एकत्व का अवगाहन करने वाली जो बुद्धि उसे अपेक्षाबुद्धि कहते हैं । यहाँ पर यह जानना चाहिये कि जहाँ एकत्वज्ञान अनियत है वहाँ एकत्व-द्वित्व आदि से भिन्न एक विलक्षण बहुत्व संख्या की उत्पत्ति हो जाती है–जैसे सेना-वन आदि स्थल में—यह कन्दलीकार का मत है । और उदयनाचार्य इस विषय में

---

घटादावपि कपालादिवृत्तिद्वित्वत्रित्वाभ्यां तादृशपरिमाणोत्पादापत्तेः, समवायिकारणस्य तत्तद्व्यक्तित्वेन कारणतया तदतिप्रसंगवारणे परिमाणं प्रति असमवायिकारणस्य व्यर्थतापत्तेः । भावकार्याणां सासमवायिकारणकत्वनियमस्यापि अप्रयोजकत्वसुवचत्वात् । नच तथापि त्र्यसरेणुषु त्रित्वजन्यमहत्त्वापत्तिर्दुर्वारेति वाच्यम् । महत्त्वाजन्यस्य त्रित्वजन्यमहत्त्वस्यालीकतया यावद्विशेषसामग्रीबाधादेव त्र्यसरेणौ तदनुपपत्तेः । अन्यथा तथापि त्र्यसरेणौ द्वित्वसामान्यजन्यमहत्त्वापत्तेर्दुर्वारत्वात् । नचाणुपरिमाणस्यापि जनकत्वे *"कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः"* इति सिद्धान्तविरोधः । तत्सिद्धान्तस्य निर्युक्तिकत्वेन गौरवग्रस्तत्वेन चानुपादेयत्वात् । पारिमाण्डल्यपदस्य मनोनिष्ठाणुपरिमाणपरत्वेनापि सिद्धान्तोपपत्तेश्चेति ध्येयम् । १०८

**अयमेक** इति । इदन्त्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताशालिनी बुद्धिरपेक्षाबुद्धिरित्यर्थः । **यत्रेति** । यद्द्रव्यविशेष्यकमित्यर्थः । **अनियतैकत्वज्ञानमिति** । संख्यात्वव्याप्यद्वित्वत्वाद्यवच्छिन्नाप्रकारकप्रत्यक्षमित्यर्थः । **तत्रेति** । तत्तद्द्रव्ये इत्यर्थः । **त्रित्वादिभिन्नेति** । त्रित्वादिपरार्धत्वान्यतमभिन्नेत्यर्थः । **त्रित्वादिकमेवेति** । एवकारेणतद्भिन्नत्वव्यवच्छेदः । तथाच बहुत्वसंख्या न त्रित्वादिपरार्धत्वान्तान्यतमभिन्ना किन्तु तदात्मिकैवेति भावः । **तथाचेति** । बहुत्वसंख्यायास्त्रित्वाद्यभिन्नत्वे चेत्यर्थः । **त्रित्वत्वादिव्यापिकेति** । *त्रित्वत्वादिपरार्धत्वान्यतमव्यापिकैवेत्यर्थः । नन्वेवं सति नियतैकत्वप्रकारकज्ञानस्येवाऽनियतैकत्वप्रकारकज्ञानस्यापि त्रित्वाद्युत्पादकत्वावश्यकतया सेनावनादौ तादृशाऽनियतैकत्वादिज्ञानात्त्रित्वाद्युत्पत्तिः स्यात्, इष्टापत्तौ च त्रित्वत्वाद्यवच्छिन्नप्रकारताशालिप्रत्यक्षापत्तिरत आह ।* **सेनावनादाविति** । **उत्पन्नेपि त्रित्वादाविति** । *अनियतैकत्वज्ञानस्यापि त्रित्वाद्युत्पादकत्वादिति भावः ।* **दोषात्** । *नियतानेकैकत्वज्ञानाभावात् ।*

परिमाणं भवेन्मानव्यवहारस्य कारणम् । १०६

अणु दीर्घं महद्ध्रस्वमिति तद्भेदईरितः ।

त्रित्वादिकमेवबहुत्वं मन्यन्ते । तथाच त्रित्वत्वादिव्यापिका बहुत्वत्वजातिर्नातिरिच्यते । सेनावनादौ उत्पन्नेपि त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात् । इत्थंचेतो बहुतरेयं सेनेतिप्रतीतिरुपपद्यते, बहुत्वस्य संख्यान्तरत्वे तु तत्तारतम्याभावादित्यवधेयम् ।

ऐसा कहते हैं कि त्रित्व-चतुष्ट्व-आदि संख्या ही बहुत्व है ( अर्थात् त्रित्व आदि संख्या का ही दूसरा नाम बहुत्व है--त्रित्व-चतुष्ट्व आदि संख्या के अतिरिक्त बहुत्व संख्या कोई चीज नहीं है--इसी प्रकार जहाँ सेना में हजार का व्यवहार होता है वहाँ सहस्रत्व संख्या से भिन्न बहुत्व संख्या नहीं है ) इससे फलित अर्थ यह हुआ कि त्रित्व-चतुष्ट्व--संख्यारूप ही बहुत्व है त्रित्वत्व एवं चतुष्ट्वत्व आदि जाति का व्यापिका ही बहुत्वत्व जाति है--अतिरिक्त नहीं है । सेना-वन आदि स्थल में त्रित्व आदि संख्या के उत्पन्न होने पर भी उस त्रित्व संख्या में त्रित्वत्व जाति का जो ज्ञान नहीं होने पाता है--वह केवल दोषवशात् । बहुत्व संख्या त्रित्व-चतुष्ट्व आदि संख्या से अतिरिक्त नहीं है इसी लिये "इतः ( सेनातः ) इयं सेना बहुतरा" यह प्रतीति भी उपपन्न हो जाती है—अन्यथा यदि बहुत्व को त्रित्व आदि संख्या से भिन्न मानें तो कन्दलीकार के मत में स्व की अपेक्षा स्व में न्यूनाधिक्यरूप तारतम्य बनेगा नहीं—अतः उक्त प्रतीति अनुपपन्न हो जावेगी ( और त्रित्व-चतुष्ट्व-आदि रूप मानने पर तो त्रित्व की अपेक्षया चतुष्ट्व में तारतम्य है—चतुष्ट्व की अपेक्षया में तारतम्य है अतः वह प्रतीति ( इतो बहुतरेयं सेना ) उपपन्न हो जावेगी) ।

परिमाण का निरूपण करते हैं—'यह छोटा परिमाण है' यह बड़ा परिमाण है" इत्याकारक परिमिति ( परिमाण ) के व्यवहार का असाधारण जो कारण—उसे परिमाण कहते हैं। वह परिमाण अणु-महत्—दीर्घ—ह्रस्व भेद से चार प्रकार का है । १०६ ॥

---

अनियतानेकैकत्वज्ञानात्त्रित्वोत्पत्तावपि त्रित्वांशे त्रित्वत्वप्रकारकप्रत्यक्षे नियताऽनेकैकत्वज्ञानस्यैव हेतुतया तं विना न त्रित्वत्वादिप्रकारकप्रत्यक्षमिति भावः । **इत्थंचेति** । बहुत्वस्य त्रित्वादिरूपतास्वीकारे एवेत्यर्थः । **इतो बहुतरेयं सेनेति** । इयं सेना इतोबहुतरेत्यर्थः । **इति प्रतीतिरुत्पद्यते इति** । इतिप्रतीतेः प्रमात्वमुत्पद्यते इत्यर्थः । चतुष्ट्वादिरूपबहुत्वे त्रित्वादिरूपस्वसजातीयनिरूपितोत्कर्षस्य सत्वादिति तादृशप्रतीतेः प्रमात्वमुपपद्यते इति भावः । **संख्यान्तरत्वे**-त्रित्वाद्यतिरिक्तसंख्यात्वे । तारतम्याभावादिति । बहुत्वत्वजातेरेकत्वात्तद्व्याप्यानेकवैजात्यानङ्गीकारेण बहुत्वे स्वसजातीयोत्कर्षाभावादितिभावः । नच बहुत्वस्य त्रित्वादिरूपत्वेबहुत्वनिश्चये कथं त्रित्वादिसंशय इति वाच्यम् । समानप्रकारकनिश्चयस्यैव संशयप्रतिबन्धकतया बहुत्वप्रकारकनिश्चयस्यत्रित्वत्वादिप्रकारकसंशयाऽविरोधित्वादिति ध्येयम् ।

अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् । ११०
संख्यातः परिमाणाच्च प्रचयादपि जायते ।
अनित्यं द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् । १११

परिमाणं निरूपयति । परिमाणमिति । मानव्यवहाराऽसाधारणं कारणं परिमाणमित्यर्थः । १०९ तच्चतुर्विधम् । अणु महत्-दीर्घम्-ह्रस्वं चेति । तत्-परिमाणम् । नित्यमित्यत्र परिमाणमित्यनुषज्यते । ११०

और वह परिमाण अनित्यपदार्थों में अनित्य है—और नित्यों में नित्य है । ११० ॥

अनित्यपरिमाण संख्या से—परिमाण से—प्रचय से उत्पन्न होता है ।

संख्या से उत्पन्न परिमाण को बतलाते हैं—द्व्यणुक—त्रसरेणु आदि का जो परिमाण वह अनित्य है तथा संख्याजन्य है । यह कारिकार्थ हुवा ।

---

कालादिवारणायाऽसाधारणमिति । तथाचाऽयंमहानितिशब्दनिष्ठवाच्यतासंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणतावत्वं परिमाणलक्षणमित्यर्थः । अत्रापिताद्दशकारणतासमानाधिकरणरूपाद्वृत्तिजातिमत्वंलक्षणार्थः । एवं परिमाणवद्दशक्यतावच्छेदकतयासिद्धपरिमाणत्वजातिमत्वम् लक्षणं बोध्यम् । अत्राऽणुत्वं परिमाणम्, महत्वं परिमाणमित्याद्यनुगतप्रतीत्या परिमाणत्वजातिसिद्धिः । एवमणुत्वं महत्वं ह्रस्वत्वं दीर्घत्वमित्यनुगतप्रतीत्याऽणुत्वत्वादिजातिरपि सिध्यति । १०९ अथ परिमाणं द्रव्यमेव, द्रव्याग्रहे तद्बुद्ध्यभावादिति चेन्न । दूराद्द्रव्यग्रहणेऽपि तत्परिमाणविशेषस्याऽग्रहणात् । अतएव महानपि अणुरिव भ्रान्त्या दृश्यते । यदि च घटादिस्वरूपं परिमाणं स्यात्, महदानयेत्युक्ते घटमात्रमानयेत्, घटमानयेत्युक्ते यत्किंचिन्महदानयेत् । घटशब्दाद् घटनिश्चयवत् परिमाणनिश्चयोपि स्यात्, परिमाणसन्देहवद् घटसंशयोपि स्यादितितर्क इत्याचार्याः । भाष्योक्तक्रमेण विभागमाह । तच्चतुर्विधमिति । अण्वादिशब्दानां भावप्रधाननिर्देशः । अणुत्वं महत्वं ह्रस्वत्वं दीर्घत्वं चेत्यर्थः । तेनाऽण्वादिशब्दानां द्रव्यतरत्वेपि न क्षतिः । नच ह्रस्वत्वदीर्घत्वयोरणुत्वमहत्वभिन्नपरिमाणत्वे प्रमाणाभावात् परिमाणस्य द्वैविध्यमेवेति वाच्यम् । घटाद्यवधिकाणुतया प्रतीयमानेपि दण्डादौ घटाद्यवधिकह्रस्वत्वव्यवहाराभावात्, दण्डावधिकमहत्वत्तया प्रतीयमानेपि घटादौ तदवधिकदीर्घत्वव्यवहाराभावाच्च ह्रस्वत्वदीर्घत्वयोः अणुत्वमहत्वातिरिक्तपरिमाणत्वावश्यकतया परिमाणस्य चातुर्विध्यावश्यकत्वात् । तत्र महत्वं द्विविधम्, नित्यमनित्यं च । नित्यमाकाशकालदिगात्मसु तदेव परममहत्वमित्युच्यते । अनित्यं महत्वं त्र्यणुकाद्यन्त्यावयविपर्यन्तेषु । एवमणुत्वमपि द्विविधम्, नित्यमनित्यं च नित्यमणुत्वपरिमाणं-परमाणुमनस्सु, उत्पत्तिविनाशकारणाभावात् । तच्च पारिमाण्डल्यमुच्यते । पारिमाण्डल्यं च सर्वापकृष्टपरिमाणम् । अनित्यमणुत्वपरिमाणं द्व्यणुके एव, तदपि पारिमाण्डल्यशब्देनोच्यते । तथाचाऽणुपरिमाण-

परिमाणं घटादौ तु परिमाणजमुच्यते ।
प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते । ११२
परिमाणं तूलकादौ,

जायते इत्यत्रापि परिमाणमित्यनुवर्त्तते । अनित्यमितिपूर्वेणाऽन्वितम् । तथाचाऽनित्यपरिमाणं संख्याजन्यं-परिमाणजन्यं-प्रचयजन्यं-चेत्यर्थः । तत्र संख्याजन्यमुदाहरति । अनित्यमिति । द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकपरिमाणं वा न कारणम्, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमात्, द्व्यणुक-

द्व्यणुक और त्रसरेणु के परिमाण के प्रति क्रमशः परमाणुपरिमाण—अथवा द्व्यणुक परिमाण कारण नहीं है—क्योंकि परिमाण अपने समानजातीय तथा उत्कृष्टपरिमाण का जनक होता है—सो द्व्यणुकादि का परिमाण परमाणु के अणुत्व की अपेक्षा अर्थात् परमाणु के अणुपरिमाण की अपेक्षया उत्कृष्ट नहीं है ।

---

विशेष एव परमाणुपरिमाणम् । महत्परिमाणविशेषश्च परममहत्परिमाणम् । अन्यथा परमशब्देन विशेषणायोगात् । यत्खलु परिमाणं रूपसहायंस्वाश्रयंप्रत्यक्षयति-तस्यमहदिति व्यपदेश, यच्च न प्रत्यक्षयतितत्राणुत्वाव्यवहारः । आकाशकाल-दिक्परिमाणस्य तु प्रत्यक्षहेतुत्वाभावेपि महत्वमेवेति ॥११०॥ संख्याजन्यमिति । संख्यामात्रजन्यमित्यर्थः । परिमाणजन्यमिति । परिमाणमात्रजन्यमित्यर्थः । प्रचयजन्यमिति । प्रचयपरमाणोभयजन्यमित्यर्थः । तत्र । उक्तपरिमाणेषु मध्ये । संख्याजन्यमिति । संख्यामात्रजन्यपरिमाणमित्यर्थः । द्व्यणुकस्येति । अस्य परिमाणं प्रतीत्यनेनाऽन्वयः । तथाच द्व्यणुकपरिमाणं प्रति परमाणुपरिमाणं नाऽसमवायिकारणमितिसमुदितार्थः । एवं त्रसरेणुपरिमाणं प्रति द्व्यणुकपरिमाणं नाऽसमवायि कारणमित्यर्थः । तत्रहेतुमाह । परिमाणस्येति । एतद्व्याख्यानं "पारिमाण्डल्यभिन्नानांकारणत्वमुदाहृतम्" इतिमूलव्याख्यानावसरे प्रपञ्चितम् । इदमुपलक्षणम् । परमाणौ द्व्यणुके वा न शिथिलसंयोगसंभवः परमाणोर्निरवयव-द्रव्यत्वात्, द्व्यणुकानां च सावयव द्रव्यरब्धत्वाभावात्, द्व्यणुकत्र्यणुकपरिमाणयोः प्रचयाऽसमवायिकारणकत्वे मानाभाव इत्यपिबोध्यम् । अत इति । उक्तरीत्या द्व्यणुकत्र्यणुकपरिमाणयोः परिमाणप्रचयाऽसमवायिकारणकत्वाऽसंभवादित्यर्थः । परमाणौ द्वित्वसंख्येति । परमाणुसमवेतद्वित्वसंख्यैवेत्यर्थः । द्व्यणुकपरिमाण-स्येति । असमवायिकारणमित्युत्तरेणान्वयः । द्व्यणुके त्रित्वसंख्याचेति । तस्य-

स्याऽणुपरिमाणं तु परमाण्वणुत्वापेक्षया नोत्कृष्टम्, त्रसरेणुपरिमाणं तु न सजातीयम्, अतः परमाणौ द्वित्वसंख्या द्व्यणुकपरिमाणस्य द्व्यणुके त्रित्वसंख्या च त्रसरेणुपरिमाणस्यासमवायिकारणमित्यर्थः ॥१११॥ परिमाणजन्यं परिमाणमुदाहरति । परिमाणं घटादाविति । घटादिपरिमाणं कपालादिपरिमाणजन्यम् । प्रचयजन्यमुदाहर्तुं प्रचयं निर्वक्ति । प्रचय इति ॥११२॥

और त्रसरेणु का परिमाण उसके सजातीय नहीं है । अतः द्व्यणुक के परिमाण के प्रति परमाणुगतद्वित्वसंख्या कारण है और त्रसरेणु परिमाण के प्रति द्व्यणुकगतत्रित्वसंख्या असमवायिकारण है । १११ ॥

परिमाणजपरिमाण को उदाहरण द्वारा बतलाते हैं कि घट आदि में जो परिमाण है वह परिमाण से जन्य (आरम्भ) है ।

---

मवेतत्रित्वसंख्यैवेत्यर्थः । परिमाणौ द्वित्वसंख्या द्व्यणुकेषु त्रित्वसंख्या चेश्वरीयाऽपेक्षाबुद्धिजन्या अस्मदादीनामपेक्षाबुद्धेरसंभवात् । सा च संख्या द्व्यणुके त्र्यणुके वा रूपाद्युत्पत्तिसमकाले अणुत्वं महत्त्वं च करोति । अत्रेदं बोध्यम् । त्रसरेणुपरिमाणस्य द्व्यणुकगता बहुत्वसंख्यैवाऽसमवायिकारणम्, अन्यस्याऽसंभवात् । तथाहि । न तावद्व्यणुकवृत्तयो रूपरसगन्धाः त्रसरेणुपरिमाणस्याऽसमवायिकारणानि, तेषां समानजातीयगुणान्तरारम्भे, सामर्थ्यदर्शनात्, वायौ रूपस्य व्यभिचारात्, रसस्य तैजसि, गन्धस्याऽप्स्वादिषु व्यभिचाराच्च । नापि स्पर्शस्तथा तस्यापि समानजातीयगुणान्तरारम्भे सामर्थ्यदर्शनात्, प्रकर्षानुविधानाच्च, नहि स्पर्शप्रकर्षात्परिमाणप्रकर्षो दृष्ट इति । नापि परमाणुपरिमाणं द्व्यणुकपरिमाणकारणं नित्यद्रव्यपरिमाणत्वात् आकाशादिपरिमाणवत्, अणुपरिमाणत्वाद्वा मनः परिमाणवत् । एवं त्रसरेणुपरिमाणं प्रति द्व्यणुकाणुपरिमाणानां चारम्भकत्वे त्र्यणुकस्याऽणुत्वमेव स्यात्, न महत्त्वम्, परिमाणारम्भसमानजातीयस्यैव परिमाणस्योत्पत्त्यवगमात् । अस्ति च त्रसरेणौ महत्त्वं भूयोऽवयवारब्धत्वाद् घटादिवत् । न चाऽसमवायिकारणं विना भावकार्यमुत्पद्यते, अतः संख्याया एवात्र कारणत्वम् । त्रसरेणुपरिमाणं "बहुत्व" संख्याजन्यं परिमाणप्रचयाऽजन्यत्वे सति जन्यपरिमाणत्वात् तुल्यपरिमाणकपालद्वयारब्धघटपरिमाणात् प्रकृष्टतादृशकपालत्रयारब्धघटपरिमाणवदित्यनुमानमपि बोध्यम् । अयंभावः—यत्र तुल्यपरिमाणानां पञ्चानां कपालानां द्वाभ्यामेकोघटः, त्रिभिश्चापरोघटोजातः, तत्र कपालद्वयारब्धघटपरिमाणात् कपालत्रयारब्धघटपरिमाणस्य वैलक्षण्यं प्रत्यक्षसिद्धम्, उभयत्र कपालपरिमाणस्य हेतुत्वे तादृशवैलक्षण्यं न निर्वहति, परिमाणस्याऽविशेषात् इति तादृशविलक्षणपरिमाणे त्रित्वसंख्याया एव हेतुत्वं न तु परिमाणस्य । अस्तु तर्हि सर्वत्र संख्यैव कारणं लाघवादिति चेन्न । क्षुद्रपरिमाणकपालद्वयारब्धघटपरिमाणात् बृहत्परिमाणकपालद्वयारब्धघटपरिमाणस्य

**नाशस्त्वाश्रयनाशतः।**

**परिमाणं चाऽऽश्रयनाशादेव नश्यतीत्याह। नाशइति। अर्थात्परिमाणस्यैव।**

प्रश्न—घट का परिमाण किसके परिमाण से जायमान है।

उत्तर—घट आदि का परिमाण कपाल आदि के परिमाण से जन्य है।

प्रचय जन्य परिमाण को उदाहरणद्वारा बतलाते हैं—कि "परिमाणं तूलकादौ" अर्थात् तूलका ( रुई ) आदि में जो परिमाण है वह शिथिलाख्य संयोगरूपप्रचय से जन्य है। ११२॥

आश्रय के नाश से परिमाण का नाश हो जाता है—इसी बात को दिखलाते हैं—"नाशस्त्वाश्रयनाशतः"।

---

वैलक्षण्यं प्रत्यक्षसिद्धम्, तादृशवैलक्षण्यस्य संख्यायाः कारणत्वे अनिर्वाहप्रसंगात्, उभयत्र संख्याया एकरूपत्वात्। परिमाणस्य कारणत्वेतु उभयत्र कारणीभूतकपालपरिमाणवैलक्षण्यात्कार्यीभूतघटपरिमाणस्य वैलक्षण्यं निर्वहतीति। परन्तु यत्र समानसंख्यैः, समानपरिमाणैश्च कार्यमारब्धम्, तत्र महत्वोत्पत्तौ उभयोरपि कारणत्वम्, प्रत्येकमुभयोरपि सामर्थ्यदर्शनात्। अपरे तु समानजातीयात्कार्योत्पत्तिसंभवे विजातीयकारणकल्पनाऽनवकाशात्परिमाणस्यैव कारणतामाहुः॥ १११॥ **कपालादिपरिमाणजन्यमिति।** कपालादिपरिमाणमात्रजन्यमित्यर्थः। न तु कपालगतद्वित्व संख्याजन्यं, द्वित्वसंख्याया महत्वाऽजनकत्वात्, अन्यथा द्व्यणुकेपि महत्वोत्पादापत्तेः। नापि प्रचयजन्यं, अप्रचितकपालपरिमाणाद् घटपरिमाणोत्पत्तेः। प्रचयत्वं चाऽवयवसमवेतसंयोगनिष्ठो जातिविशेषः, तादृशजातिविशेषावच्छिन्न एव शिथिलशब्देनोच्यते। स तु द्वितूलके महत्वमारभते, द्वयोस्तूलक पिण्डयोर्वर्तमानः पिण्डारम्भकावयवप्रशिथिलसंयोगापेक्षः। तथाच यत्र पिण्डयोः संयोगः प्रशिथिलः, पिण्डावयवसंयोगाश्चपिप्रशिथिलाः तत्र पिण्डाभ्यामारब्धे द्रव्ये अत्यन्तनिबिडपरस्परावयवसंयोगपिण्डद्वयारब्धद्रव्यापेक्षया महत्वातिशयदर्शनात् पिण्डयोः प्रशिथिलः इतरेतरपिण्डावयवसंयोगापेक्षो महत्वस्य कारणमितिभावः। यदि हि संख्यैव कारणम्, समानसंख्यैः प्रशिथिलसंयोगैः निविडसंगोगैश्चाऽऽरब्धयोर्द्रव्ययोः प्रशिथिलसंयोगारब्धे निविडसंयोगारब्धापेक्षया महत्वातिशयो न स्यात्करणसंख्याया उभयत्रापि तुल्यत्वात्। तथा यदि महत्वं कारणं तुल्यपरिमाणैः प्रचितैरप्रचितैश्चारब्धयोर्द्रव्ययोरप्रचितारब्धापेक्षया प्रचितारब्धे परिमाणातिशयो न भवेदतो न संख्या कारणं नापि महत्वमिति संक्षेपः॥ ११२॥

परिमाणं तूलकादौ अस्य जन्यते इतिपूर्वेणाऽन्वयः। **नाशस्त्वाश्रयनाशत** इतिमूलेऽवधारणार्थकतुशब्दस्य नाशत इत्युत्तरं योजनया आश्रयनाशादेव नाश इत्यर्थोलभ्यते, कस्येत्याकाङ्क्षायामाह—**अर्थात्परिमाणस्यैवेति। अर्थादिति।** परिमाणनिरूपणस्य प्रकृतत्वादित्यर्थः। अथ समवायिकारणनाशगुणनाशयोः केन

रूपेण कार्यकारणभावः, न तावत्समवायिनाशत्वेन समवेतनाशत्वेन, दण्डादिनाशादपि घटादेर्घटादिवृत्तिरूपादेश्च नाशापत्तेः। नापि स्वसमवायिनाशत्वेन स्वसमवेतनाशत्वेन—स्वत्वाननुगमात्। न च तन्नाशत्वेन तत्समवायिनाशत्वेन कार्यकारणभावः, तत्पदेन विशिष्याश्रयनाशनाश्यसमवेतव्यक्तीनामेवोपादानं पाकादिजन्यरूपनाशे व्यभिचार इति वाच्यम्। गुणकर्मात्मकतत्तन्नाश्यव्यक्तिभेदेनाऽनन्तनाश्यनाशकभावापत्तेरिति चेन्न। तन्नाशत्वेन कारणत्वम्, तत्समवेतनिखिलगुणकर्मसाधारणतन्नाशवत्तत्समवेतनाशत्वं च कार्यतावच्छेदकम्। घटादिसत्त्वेऽपि अपेक्षाबुद्धिनाशादिना घटादिवृत्तिद्वित्वनाशात् तत्र व्यभिचारवारणाय तन्नाशवत्त्वं तत्समवेतनाशविशेषणम्। तच्च कालिकसंबन्धेन। न च तत्र व्यभिचारवारणाय कालिकेन तद्वद्भिन्नत्वमेव तत्समवेतनाशविशेषणमुच्यतामिति वाच्यम्। तन्नाशमपेक्ष्य तद्भेदस्य गुरुत्वात्। यत्र प्रतियोगितासंबन्धेन तादृशतत्समवेतनाशः-तत्रस्वप्रतियोगिजन्यत्वसंबन्धेन स्वप्रतियोगिसमवेतत्वकालिकोभयसंबन्धेन वा तन्नाश इतिकार्यकारणभावः।

नव्यास्तु स्वप्रतियोगिसमवेतत्वसंबन्धेन नाशत्वेनैव नाशकता, स्वप्रतियोगिसमवेतत्व—कालिकोभयसंबन्धेन यो नाशवान् तत्प्रतियोगिकनाशत्वेन कार्यता। अपेक्षाबुद्धिनाशजन्ये आश्रयसत्वकालीनद्वित्वादिनाशे व्यभिचारवारणायकालिकप्रवेशः। यत्र प्रतियोगितासंबन्धेन नाशवत्प्रतियोगिकनाशः तत्र स्वप्रतियोगिसमवेतत्वसंबन्धेन नाशःइति कार्यकारणभावः। कालिकसंबन्धमात्रोक्तौ वस्तुमात्रस्याऽऽशुविनाशित्वप्रसंगः, अव्यावर्तकत्वेन तादृशकार्यकारणभावस्य व्यर्थतापत्तेश्च। सत्वेन ध्वंसत्वेन प्रतियोगिध्वंसयोः कार्यकारणभावसत्वादेव तन्नाशानन्तरं न तत्समवेतजातौ प्रतियोगितासंबन्धेन नाशवत्प्रतियोगिकनाशापत्तिः।

वस्तुतस्तु स्वप्रतियोगिसमवेतत्वसंबन्धेनैव कारणत्वम्, नतुकालिकस्य प्रवेशः, नवा सत्वेन ध्वंसत्वेन कार्यकारणभावान्तरकल्पनम्। न चैवं तन्नाशानन्तरं तत्समवेतजातौ प्रतियोगितासंबन्धेन नाशवत्प्रतियोगिकनाशापत्तिरितिवाच्यम्। ज्ञानादिद्वित्रिक्षणस्थायिपदार्थनाशस्थले प्रतियोगितासंबन्धेन सामान्यतोनाशत्वावच्छिन्नं प्रति कालिकसंबन्धावच्छिन्नस्वप्रतियोग्यधिकरणत्वसंबन्धेन सद्वृत्तिप्रतियोगिकनाशस्य जनकतायाः क्लृप्ततया जातौ तेन संबन्धेन नाशाभावादेव प्रतियोगितयानाशवत्प्रतियोगिकनाशाऽसंभवात्। सामान्यसामग्रीसहिताया एवविशेषसामग्र्याःफलोपधायकत्वादित्याहुः।

केचित्तु स्वप्रतियोगिसमवेतत्वसंबन्धेन नाशत्वेनैव नाशकत्वम्, सत्वत्तन्नाशत्वेन च कार्यत्वम्। सत्ववत्ताचाऽऽश्रयनाशनाश्यसद्व्यावृत्तप्रतियोगिताव्यक्तिभिः संबन्धैर्विवक्षिताऽतोनव्यभिचारः। शेषंदर्शितदिशाऽवसेयमितिप्राहुः।

शंकते। न चेति। कथंपरिमाणनाशकइति। नपरिमाणनाशकारणमित्यर्थः। व्यतिरेकव्यभिचारमाह। सत्यपि अवयविनीति। अवयविनाशरूप-

नचाऽऽश्रयविनाशः कथं परिमाणनाशकः, सत्यप्यवयविनि त्रिचतुरादिपरमाणुविश्लेषे तदुपचये चाऽवयविनः प्रत्यभिज्ञानेपि परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादितिवाच्यम्। परमाणुविश्लेषे हि द्व्यणुकस्य नाशोऽवश्यमभ्युपेयः, तन्नाशे च त्र्यणुकनाशः एवंक्रमेण महावयविनो नाशस्याऽऽवश्यकत्वात्, सति च नाशकेऽनभ्युपगममात्रेणाऽपलपितुमशक्यत्वात्। शरीरादावयवोपचयेऽसमवायिकारणनाशस्याऽऽवश्यकत्वादवयविनाश आवश्यकः।

प्रश्न—अवयवी (आश्रय) के नाश से परिमाण का नाश कैसे होता है—क्यों कि अवयवी में से तीन—चार परमाणु निकाल लिये जायें—अथवा उसमें तीन चार परमाणु और मिलादिये जावें—तब भी अवयवी की यह वही अवयवी है इत्याकारक प्रत्यभिज्ञा होने से (अवयवी का विनाश नहीं हुवा यह तो स्पष्टही है) और परिमाणान्तर प्रत्यक्षसिद्ध है (क्योंकि तीन चार परमाणुवों के उपचय होने पर परिमाण बढ़ेगा—और विश्लेष होने पर घटेगा)।

उत्तर—यह कथन ठीक नहीं है—क्यों कि परमाणुओं के (विश्लेष) हटजाने पर अर्थात् परमाणुवों का परस्पर संयोग नष्ट होजाने पर द्व्यणुक का नाश अवश्य स्वीकार करना होगा—द्व्यणुक के नाश होने पर त्रसरेणु का नाश अवश्य मानना होगा—इस क्रम से महावयवीपर्यन्त विनाश आवश्यक है। नाशक के मौजूद होने पर अवयवी के नाश का अपलाप करना अनुचित है। इसी प्रकार शरीर आदि में भी अवयवों के उपचय (बढ़ना) होने पर असमवायिकारण अवयवसंयोग का विनाश अवश्य होता है यह मानना होगा—और असमवायिकारण के नाश से अवयवी (शरीर आदि) का विनाश भी अवश्य मानना होगा—

इससे यह सिद्ध हुवा कि अवयवी के नाश से ही परिमाण का नाश होता है।

---

कारणाभावेपीत्यर्थः। त्रिचतुरादिपरमाणुविश्लेषे। त्रिचतुरादिपरमाणुविभागे। तदुपचये वेति। त्रिचतुरादिपरमाणुसंयोगे वेत्यर्थः। अस्य च परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादित्यनेनाऽन्वयः। तथाचाऽऽश्रयविनाशो न परिमाणविनाशकारणं परिमाणध्वंसवन्निष्ठभेदप्रतियोगितावच्छेदकत्वात्। परिमाणध्वंसवत्ता च प्रतियोगितासंबन्धेन। तादृशावच्छेदकताच—स्वप्रतियोगिजन्यत्वकालिकोभयसंबन्धेनेति। नचतत्राऽऽश्रयनाशोपिस्वीकार्य इत्याह। अवयविनः प्रत्यभिज्ञानेपीति। तथाचसोयंघटइतिप्रत्यभिज्ञाबलेनाऽऽश्रयविनाशोनस्वीकर्तुं शक्यते इतिभावः। व्यतिरेकव्यभिचारमुद्धरति। परमाणुविश्लेषे हीति। अवश्यमभ्युपेयइति। असमवायिकारणनाशे कार्यद्रव्यनाशावश्यकत्वादिति भावः। तन्नाशेचेति। द्व्यणुकनाशे चेत्यर्थः। तन्नाशाधीनत्र्यणुकसंयोगनाशे चेत्यपि बोध्यम्। एवंक्रमेणेति। असमवायिकारणीभूतावयवसंयोगनाशेनेत्यर्थः। महावयविनोनाशस्यावश्यकत्वादिति। तथा च नोक्त-

न च पटाऽविनाशेऽपि तन्त्वन्तरसंयोगात्परिमाणाधिक्यं न स्यादिति वाच्यम्। तत्रापि वेमाभिघातेनाऽसमवायिकारणतन्तुसंयोगनाशात्पटनाशस्याऽऽवश्यकत्वात्।

किंच तन्त्वन्तरस्य तत्पटावयवत्वे पूर्वं तत्पट एव न स्यात्, तन्त्वन्तररूपकारणाऽभावात्, तन्त्वन्तरस्याऽवयवत्वाभावे च न तेन परिमाणाधिक्यं, संयुक्तद्रव्यान्तरवत्। तस्मात्तत्र तन्त्वन्तरसंयोगे सति पूर्वं पटनाशस्ततः

प्रश्न—(आपने जो पहिले कहा था कि अवयवों के उपचय होने पर असमवायिकारण के नाश से अवयवी का नाश अवश्य मानना होगा–सो हम देखते हैं कि पटात्मक अवयवी के साथ) तन्त्वन्तरों के संयोग से अर्थात् और तन्तुवों के जोड़ देने से पट का विनाश तो नहीं होता है प्रत्युत परिमाण का आधिक्य हो जाता है-अब वह नहीं होना चाहिये-(कारण कि आपके मत से बिना पटनाश हुवे पूर्व परिमाण का नाश नहीं होगा, बिना पूर्वपरिमाण नाश हुवे दूसरा परिमाण अर्थात् परिमाणाधिक्य कैसे होगा इससे आश्रयनाश सिद्ध हुवा अर्थात् सिद्धान्ती ने जो पहिले आश्रयनाश से परिमाणनाश बतलाया था वह सिद्धान्ती का कथन तुच्छ है ऐसा पूर्वपक्षी बोलता है)।

उत्तर—उस स्थल में भी वेमा आदि के अभिघात से (पट के समवायिकारण जो पूर्वतन्तु उनका विभाग हो जाने से) पट के असमवायितन्तुसंयोग का नाश हो जाता है-और उसके नाश से पटका नाश प्रत्यक्ष सिद्ध है। (किञ्च) और दूसरी बात यह है कि जिन तन्त्वन्तरों को उस पट में जोड़ा गया है–वे तन्त्वन्तर यदि उस पट के अवयव हैं तो तन्त्वन्तर के जोड़ने पर जो वह पट है उसके पूर्व में वह पट ही नहीं था—क्योंकि तन्त्वन्तर के जोड़ने पर जो वह पट है उसके पूर्व में वह पट ही नहीं था—क्योंकि तन्त्वन्तररूपकारण पूर्व में नहीं थे। और तन्त्वतरों को यदि उस पट का अवयव नहीं मानते हो तब उन तन्त्वतरों से परिमाण का आधिक्य नहीं हो सकता है–कारण कि वे तन्त्वन्तर तो उस पट के साथ ऐसे संबद्ध हैं जैसे एक द्रव्य के साथ कोई द्रव्यान्तर संयुक्त हो-(उस संयुक्त द्रव्यान्तर से परिमाण का आधिक्य

---

व्यभिचारइतिभावः। ननु उक्तप्रत्यभिज्ञाविरोधः, प्रत्यक्षविरोधश्चेत्यतआह। सति च नाशकइति। महावयविनाशकारणे च विद्यमाने सतीत्यर्थः। अनभ्युपगममात्रेणेति। अस्वीकारमात्रेणेत्यर्थः। अपलपितुमिति। अन्यथयितुमित्यर्थः। अशक्यत्वादिति। तथा च सोऽयंपटइति प्रत्यभिज्ञायाः साजात्यविषयकत्वम्, "अवयविनः प्रत्यभिज्ञानं तु" इत्यादिनास्वयमेव वक्ष्यतीतिभावः। ननुअवयविनाशो न परिमाणविनाशकारणे-स्तादिसत्वेऽपि तत्र तन्त्वन्तरसंयोगजन्यपरिमाणान्तरस्यप्रत्यक्षसिद्धत्वात्, यदि अवयविनाशः परिमाणनाशकारणं स्यात्तदा पटसत्वे तन्त्वन्तरसंयोगात्परिमाणान्तरं न स्यात्, तथाच व्यतिरेकव्यभिचारः स्फुट एवेत्याशंक्ते। नचेति।

संख्यावत्तु पृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् । ११३

पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्यम् । अवयविनः प्रत्यभिज्ञानं तु साजात्येन दीपकलिकादिवत् । न च पूर्वतन्तव एव तन्त्वन्तरसहकारात्पूर्वपटे सत्येव पटान्तरमारभन्तामितिवाच्यम् । मूर्तयोःसमानदेशताविरोधात्तत्र पटद्वयासंभवात्, एकदा नानाद्रव्यस्य तत्रोपलंभस्य वाधितत्वाच्च । तस्मात्पूर्वद्रव्यस्य प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यस्यावश्यमभ्युपेतव्यत्वात् ।

पृथक्त्वं निरूपयति । संख्यावदिति । पृथक्प्रत्ययाऽसाधारणकारणं पृथकत्वम् । तन्नित्यतादिकं संख्यावत्–तथाहि–नित्येषु एकत्वं नित्यम्, अनित्येषु अनित्यम्, अनित्यमेकत्वमाश्रयद्वितीयक्षणे चोत्पद्यते, आश्रय-

नहीं होता है )। अतः वहाँ तन्त्वन्तरों का संयोग होने पर पूर्वपट का नाश और पटान्तर की उत्पत्ति अवश्य ही माननी होगी। और "स एवायं पटः" यह जो प्रत्यभिज्ञा होती है—वह दीपकलिका ( दीपशिखा ) की तरह साजात्य का अवलम्बन करती है।

प्रश्न—वहाँ पर यही क्यों न मान लिया जाय कि पूर्वतन्तु ही दूसरे तन्तुवों की सहायता से पूर्वपट के रहते हुवे ही दूसरे पट को उत्पन्न कर देते हैं? उत्तर—दो मूर्त्तद्रव्यों की समान देशता सर्वथा विरुद्ध है, अर्थात् दो मूर्त्तद्रव्य समान देश ( एक अधिकरण ) में नहीं रह सकते हैं, अतः वहाँ दो पट नहीं रह सकते हैं, [ अर्थात् पूर्वपट भी रहे और तन्त्वन्तर के सहकार से पटान्तर भी रहे यह विल्कुल असंभव है ]

और दूसरी बात यह है कि एक ही काल में एकत्र अवयवों में नानाद्रव्यों की उपलब्धि भी सर्वथा बाधित है। इसलिये प्रतिबन्धक पूर्वपटात्मकद्रव्य के विनाश हो जाने पर ही द्रव्यान्तर की उत्पत्ति हो सकेगी। और द्रव्यान्तर की उत्पत्ति होने पर परिमाणान्तर की उत्पत्ति भी अनुभवसिद्ध है यह भी आवश्य ही स्वीकार करना होगा।

---

समाधत्ते तत्रापीति । आवश्यकत्वादिति । तथा च न व्यभिचार इतिभावः । दीपकलिकादिवदिति । यथा प्रतिक्षणं दीपकलिकाया विनाशेपि सैवेयंदीपकलि-केतिप्रत्यभिज्ञायाः सजातीयविषयकत्वम्, तथा सोयं घटइत्यादिप्रत्यभिज्ञायाअपि-साजात्यविषयकत्वंबोध्यम । विरोधादिति । द्रव्यान्तरोत्पत्तिं प्रति समवायेन द्रव्यस्य प्रतिबन्धकत्वादितिभावः । द्रव्यान्तरोत्पत्तिरिति । द्रव्यान्तरोत्पत्तौ सत्यां परिमाणा-न्तरोत्पत्तिरितिपरिमाणनाशंप्रति आश्रयनाशस्य कारणत्वं सिद्धमेवेतिभावः।

कालादिवारणायाऽसाधारणेति । तथाचाऽयमस्मात्पृथगितिप्रत्ययनिष्ठविशेष्यता-संबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वम्, तादृशकारणतास-मानाधिकरणरूपावृत्तिजातिमत्त्वं वा लक्षणं बोध्यम्। एवं पृथक्त्वपदशक्यता-वच्छेदकजातिमत्त्वं लक्षणं बोध्यम्। आश्रयद्वितीयक्षणेइति। आद्यक्षणोत्पत्तिद्वितीय-

नाशान्नश्यति, तथा एकपृथक्त्वमपि। द्वित्वादिवच्च द्विपृथक्त्वादिकमपीत्यर्थः। ११३

पृथक्त्व का निरूपण करते हैं कि—घट पट से पृथक् है इस प्रकार के व्यवहार का असाधारण कारण पृथक्त्व है। उसकी नित्यता और अनित्यता संख्या की तरह समझना। तथा हि—जैसे नित्यद्रव्यों में रहने वाली एकत्वसंख्या नित्य है और अनित्यद्रव्यों में रहने वाली एकत्वसंख्या अनित्य है, अनित्य एकत्व संख्या आश्रयद्वितीयक्षण में उत्पन्न होती है, और आश्रयके नाश से नाश्य होती, ऐसे ही एकपृथक्त्व को भी जानना, और ठीक द्वित्वसंख्या के समान द्विपृथक्त्व को भी जानना ॥११२-११३॥

---

क्षणे इत्यर्थः। आश्रयोत्पत्तिक्षणे एकत्वाद्युत्पत्तौ आश्रयस्य समवायिकारणत्वानुपपत्तिः, सव्येतरविषाणवत्किं कस्य कारणमिति व्यवस्था च न स्यादतो द्वितीयक्षणे इत्युक्तम्। अतएवोत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठतीति वृद्धाः। आश्रयनाशाद्वा वा चेति चकारेण आश्रयाऽवयवगतैकत्वाऽसमवायिकारणकं चेति समुच्चीयते। तथैकपृथक्त्वमपीति। एकसमवेतपृथक्त्वमित्यर्थः। एकत्वं चात्र व्यक्तिद्वयाऽसमवेतत्वम्। तेन द्विपृथक्त्वस्य प्रत्येकसमवेतत्वेपि न क्षतिः। अयंभावः—एकपृथक्त्वं द्विविधम्—एकसमवेतपृथक्त्वं—एकावधिकपृथक्त्वं च। आद्यं यथा अयमस्मात्पृथगिति। द्वितीयं यथा—इमौ अस्मात्पृथगिति यथोक्तार्थकरणेन द्वितीयस्य व्यावृत्तिः, अयमाभ्यां पृथगित्यस्य च संग्रह इति ध्येयम्। द्वित्वादिवच्चेति। द्वित्वादिकं प्रति यथा स्वाश्रयः समवायिकारणम्, स्वाश्रयगतमेकत्वद्वयादिकमसमवायिकारणम्। अयमेकः अयमेकः इत्याद्यपेक्षाबुद्धिःनिमित्त कारणम्, एवं अपेक्षाबुद्धिनाशः, क्वचिच्च आश्रयनाशः कारणम्, तथा द्विपृथक्त्वादिकंप्रत्यपि स्वाश्रयः [illegible] अयं पृथक् [illegible] द्विपृथक्त्वं चात्र नोभयसमवेतपृथक्त्वम्, किन्तु त्रितयाऽसमवेतत्वे सति उभयसमवेतत्वम्। तेन त्रिपृथक्त्वादेरुभयसमवेतत्वेपि न क्षतिः। इदमत्र रहस्यम्—अन्यैकपृथक्त्वसामान्यं प्रत्येव स्वाश्रयसमवेतत्वसंबन्धेन एकपृथक्त्वम्, अनेकाश्रितपृथक्त्वमात्रं प्रति च एकार्थसमवायेन एकपृथक्त्वं हेतुः। तत्रैकपृथक्त्वत्वं न पृथक्त्वत्वव्याप्यं वैजात्यं घटःपटादेकपृथगित्यादिप्रतीत्या तस्यागुणत्वेन परम्परातद्व्याप्यजातिमत्त्वसाधनस्य चाऽप्रयोजकत्वात्, किन्तु उभयाऽसमवेतपृथक्त्वम्। तदुक्तं भाष्यकारैः—एतावांस्तु विशेषो यदेकत्वादिवदेकपृथक्त्वत्वाद्यपरसामान्याभावः संख्यायास्तु विशिष्य तद्विशिष्टव्यवहारदर्शनादिति। आचार्याः पुनः एकपृथक्त्वत्वादिकं पृथक्त्वत्वव्याप्यान्तरवैजात्यमूरीचक्रुः। नच तद्धर्मावच्छिन्नावधिताकत्वैकत्वेन पृथक्त्वस्य लाघवेन तद्वितयावच्छिन्नेतीत्यादेकमात्राश्रितं पृथक्त्वमसिद्धमिति वाच्यम्।

अन्योन्याभावतो नास्य चरितार्थत्वमिष्यते।
अस्मात्पृथक्, इदंनेति प्रतीतिर्हि विलक्षणा। ११४

ननु अयमस्मात्पृथगित्यादौ अन्योन्याभावो भासते तत्कथं पृथक्त्वं गुणान्तरं स्वीक्रियते। नच पृथक्त्वमेवास्तु नतु अन्योन्याभाव इति ग्राह्यम्। रूपं न घट इति प्रतीत्यनापत्तेः। नहि रूपे घटावधिकं पृथक्त्वं गुणान्तरमस्ति, नवा घटे घटावधिकं पृथक्त्वमस्ति येन परंपरासंबन्धः कल्प्यते इत्यत आह। अस्मादिति।

प्रश्न—जब कि "अयम् अस्मात् पृथक्" यहां पर अन्योन्याभाव ही (पृथक्त्व के रूप में) भास रहा है तो फिर पृथक्त्व अन्योन्याभावस्वरूप होने के नाते गुणान्तर कैसे स्वीकार किया जा रहा है। यदि यह कहें कि हम पृथक्त्व को ही मानते हैं, अन्योन्याभाव को नहीं।

उत्तर—'रूपं न घटः' 'घटो न पटः' इत्यादि प्रतीतियों की अनापत्ति (अनुपत्ति) हो जावेगी। (क्यों कि यह प्रतीति घट में रूप के भेद का अवगाहन करने पर तो बन जाती है, परन्तु अन्योन्याभाव को न मानने पर अथवा अन्योन्याभाव को पृथक्त्वरूप से मानने पर सर्वथा अनुपपन्न हो जावेगी) क्यों कि न तो रूप में ही कोई घटावधिक (घट की अपेक्षया) पृथक्त्व गुणान्तर है (कारण कि रूप भी गुण है और पृथक्त्व भी गुण है, गुण में गुण कैसे रहेगा—गुणे गुणानङ्गीकारात्) अथवा न घट में ही घटावधिक पृथक्त्व रहता है जिससे कि घट में रहने वाले पृथक्त्व को एकार्थसमवाय सम्बन्ध से रूप में रखने के लिये एकार्थसमवायरूप परंपरा सम्बन्ध की कल्पना की जावे। इसी उत्तरभूतपक्ष को "अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा" इस कारिका से बतलाया है, कि "अयमस्मात् पृथक्" और 'इदंन' अर्थात् 'घटः पटोन' ये प्रतीतियां सर्वथा भिन्न हैं। (अतः पृथक्त्व को अन्योन्याभावस्वरूप न मानकर गुणान्तर मानना ही आवश्यक है)

---

तत्तद्घटभिन्नत्वावच्छिन्नावधिताकस्यैव पृथक्त्वस्य तत्तद्घटमात्रनिष्ठस्य तथात्व संभवात्, तत्राऽवधितावच्छेदकभेदेनैव सामान्याश्रयभेदेन पृथक्त्वभेदे विनिगम काभावाच्च, एकस्मिन्नेव च तद्व्यक्तिनिष्ठपृथक्त्वे तदवृत्तिधर्मावच्छिन्नावधिकत्व कल्पने बाधकाभावात्।

अथाऽस्तु एकाश्रितं पृथक्त्वम्, तथापि अनेकाश्रिते तत्र प्रमाणाभावः घटपटौ मठात्पृथगित्यादिप्रतीतेः प्रत्येकपर्यवसिताभ्यामेव पृथक्त्वाभ्यामुपपत्तेः अन्यथा घटपटौ मठात्परौ नीलौ वा इत्यादिप्रतीत्यनुरोधेनोभयसमवेतस्य परत्व रूपादेरपि सिद्धिप्रसंगात् इति चेन्न। द्वयमेतस्मात्पृथक्, घटपटोभयं घटात्पृथ गित्यबाधितप्रतीतेर्द्वित्वावच्छिन्नघटादिनिष्ठाधिकरणताकस्य घटत्वावच्छिन्नावधिक पृथक्त्वस्याऽवश्योपेयत्वात्। गुणद्वेषिभिरपि द्वित्वावच्छिन्नाधिकरणताकसामान्य भावमवगाह्य तादृशप्रतीतेः प्रमात्वस्वीकारादिति। ११३

घटात्पृथगितिप्रतीतिरित्यर्थः। इदंनेतिप्रतीतिरित्यर्थः। ह्रियतः **विलक्षणेति**। वैलक्षण्यवतीत्यर्थः। वैलक्षण्यं च सर्वानुभवसिद्धमितिहृदयम्। अथ तथापि पृथक्त्वाऽन्योन्याभावयोरभेदएव अस्मात्पृथक्, इदंनेति प्रतीत्योर्वैलक्षण्यस्यशब्दवैलक्षण्यकृतत्वेनाऽर्थवैलक्षण्यकृतत्वाभावेन वस्तुनोर्भेदाऽसाधकत्वादित्याक्षिप्य परिहरति। **नन्विति। शब्दवैलक्षण्यमेवेति।** प्रतीतिवैलक्षण्यमित्यादिः। शब्दवैलक्षण्यकृतमेवेत्यर्थः। एवकारव्यवच्छेद्यं स्वयमाह। **नत्वर्थवैलक्षण्यमिति।** नत्वर्थवैलक्षण्यकृतमित्यर्थः। अर्थवैलक्षण्यमपि अवश्यमङ्गीकार्यमित्याशयेन समाधत्ते। **विनार्थभेदमिति।** अर्थवैलक्षण्यानङ्गीकारे इत्यर्थः। **पञ्चमीप्रसंगादिति।** पृथक्त्वाऽन्योन्याभावयोरैक्ये घटः पटान्नेतिप्रयोगापत्तिरितिभावः। **अन्यारादितरर्तेइति** सूत्रेणाऽन्यार्थकस्येवाऽन्योन्याभावार्थकस्यापि योगे पञ्चम्यनुशासनात्। अन्यथा घटादितरो, घटाद्भेदइत्यादौ पञ्चम्यनुपपत्तेः। अतएव भेदादिशब्दस्याऽन्यार्थकत्वविरहात्तद्योगे पञ्चमीप्राप्त्यर्थमेवेतरत्वपरस्येतरपदस्योपादानमपि उक्तसूत्रे संगच्छते। अन्यथाऽन्यार्थपरेणान्यशब्देनैव इतरपदस्यापि लाभसंभवात्स्वातंत्र्येणैतदुपादानवैयर्थ्यापत्तेः। वस्तुतस्तु नञोऽन्योन्याभावार्थकत्वेपि तदर्थधर्मिकस्वार्थान्वितप्रतियोगित्वप्रकारकान्वयबोधजनकत्वलक्षणस्य तद्योगस्य पटादिपदे विरहात्ततः पञ्चम्यसंभवात्, नञर्थेऽन्योन्याभावादौ प्रतियोगित्वसंबन्धेनैव घटादेरन्वयसंभवेन तत्र प्रतियोगित्वस्याऽप्रकारत्वात्, निपातातिरिक्तस्थले एव नामार्थयोर्भेदेनाऽन्वयस्याऽव्युत्पन्नतया घटाद्भेदइत्यादौ तदसंभवेन तत्रैव घटादिपदानामन्योन्याभावार्थक भेदादिपदेन समंतादृशयोगसंभवात्। व्युत्पत्तेः प्रयोगानुरोधितया नञाद्यतिरिक्तस्यैवा न्योन्याभावार्थकपदस्य योगे पञ्चम्यनुशासनसंभवाच्च। अतएवात्यन्ताभावार्थकपदयोगे षष्ठ्याः प्रतियोगित्ववाचकत्वाऽविशेषेपि घटस्याऽत्यन्ताभाववानित्यादेरिव घटस्य शून्योयमित्यादिको न प्रयोगः, शून्यादिभिन्नैरेवात्यन्ताभावार्थकपदैर्योगे षष्ठ्या अनुशास्यत्वात्। शून्यादिपदोपस्थाप्येऽत्यन्ताभावे प्रतियोगिविधया नामार्थस्यान्वये तृतीयान्तत्वं तन्त्रमतो घटस्य शून्यइत्यादिको न प्रयोगः किन्तु घटेन शून्यइत्यादिरेवेति समः समाधिः। तस्मात्समाधिसौकर्यार्थं पृथक्त्वमन्योन्याभावादतिरिच्यते इति ध्येयम्।

केचित्तु समस्तमेव पृथक्त्वं नित्यम्, उत्पादविनाशयोः कल्पनायां गौरवान्मानाभावाच्च। नचेदेवं—आद्यक्षणे घटः पटान्न पृथगित्यपि प्रमा स्यात्, न स्याच्च घटस्तदानीं पटात्पृथगिति प्रमा। जन्ये समवेतस्येव तादृशगुणस्यापि जन्यताव्याप्तेर्बहुशोऽव्युदस्तत्वात्। पृथक्त्वेषु गुणत्वसमवेतत्वयोरसिद्धेः, अन्यथा रूपं रसात्पृथक् पटाभावो घटाभावात्पृथगित्यादिप्रत्ययानामप्रामाण्यापत्तिः। नित्यानेकसमवेतानां च जातिशून्यानामेव मिथः सांकर्यं नोपेयते, तादृशानामेव जातिपदार्थत्वात्। यदि च घटः पटात्पृथगित्यादिप्रतीतौ पटादेः प्रतियोगित्वमेव भासते नावधिकत्वं, नञादियोगे षष्ठ्या इव पञ्चम्या अपि निराकांक्षत्वादेव घटान्नेत्यादिको न प्रयोगः, पाकाय यतते इत्यादाविव द्वितीयायाः, अन्यथा पाकं तनुते—

करोतीत्यादाविव यत्नार्थकधातुयोगस्याऽविशिष्टत्वेन तत्र पाकादिपदोत्तरं द्वितीयार्थकद्वितीयापत्तेः। अत एव साध्यवदन्यावृत्तित्वमिति व्याप्तिनिरुक्तौ साध्यवतोऽन्यस्मिन् वृत्तिर्यस्य तत्त्वाभाव इत्यादिक्रमेण पंचमीगर्भमेव विग्रहं वर्णयन्ति प्राचीनाः। तत्राऽन्यपदस्याऽन्योन्याभाववदर्थकत्वात्। अन्यथा पृथक्त्वाख्यगुणवत्परत्वे सत्तावत्त्वावच्छिन्नावधिकपृथक्त्वगुणाऽप्रसिद्ध्या सत्तासाध्यकसद्धेतावव्याप्त्यापत्तेः। न च तत्र साध्यवतामन्यस्मिन् वृत्तिर्यस्येति प्रतियोगित्वार्थिकां षष्ठीमन्तर्भाव्यैव विग्रहो वर्णनीय इति वाच्यम्। तथा सति वन्हिमतामन्यो ह्रद इति प्रयोगापत्तेः, उक्तनिरुक्त्यनुरोधेनाऽन्योन्याभावार्थकपदयोगेपि प्रतियोगित्वार्थकपंचम्याः स्वरसिद्धत्वादिति विभाव्यते—तदाऽन्योन्याभाव एव पृथक्त्वम्, न तु सावधिकं गुणान्तरं तथाऽस्तु वा धर्मिकल्पनातो धर्मकल्पनाया लघुत्वेन घटादिप्रतियोगिकतयाऽनुभूयमानस्य घटादेरन्योन्याभावस्यैव घटाद्यवधिकत्वमपि, घटः पटो नेत्यादिवत्, घटः पटात् पृथगित्यपि प्रतीतेरुपपादकत्वात्, समवायेन पृथक्त्वबुद्धेः प्रमात्वस्य स्वसिद्धान्तवासनामात्रसिद्धत्वात्, नञादियोगे च पंचम्याः प्रागेव निरस्तत्वादित्यास्तां विस्तरः।

यद्यपि पृथक्पदस्याऽन्योन्याभावार्थकत्वानंगीकर्तृप्राचीनमतेपि घटादन्य इति दृष्टान्तेन घटो नेत्यत्र पंचम्यापादनसंभवात्तत्पक्षे दोषमनुद्भाव्य पृथक्पदस्यान्योन्याभावार्थकत्वांगीकर्तृनवीनमते एव तादृशदोषापादने, घटादन्य इति दृष्टान्तमपहाय घटात्पृथगिति दृष्टान्तानुसरणे च बीजाभावः। तथापि प्राचां मते न्यारादितरर्ते च

इति सूत्रस्थान्यपदस्य अन्योन्याभावार्थकविभक्तिमच्छब्दपरत्वस्वीकारेण नञ्पदस्य तादृशतया घटो नेत्यत्र पंचम्याऽऽपादनाऽसंभवान्नवीनमते एव एतद्दूषणमभिहितम्। नव्यमते च सूत्रेऽन्यपदस्य तादृशशब्दपरत्वे घटात्पृथगिति प्रयोगानुपपत्तिः, पृथक्शब्दस्यान्योन्याभावार्थकत्वेपि विभक्तिमत्त्वाभावेन पंचम्यप्रसक्तेः। अतः सूत्रस्याऽन्यपदस्याऽन्योन्याभावार्थकपदसामान्यपरत्वस्यैव स्वीकार्यतया घटो नेत्यत्र पंचम्यापत्तिरूपदोषसंगतिः। विभक्तिशून्याऽन्योन्याभावार्थकपृथक्शब्द योगे यथा पंचमी तथा नञादियोगेपि पंचम्यापत्तिरिति तुल्यदृष्टान्तप्रदर्शनाय घटादन्य इत्यस्य दृष्टान्ततयोपेक्षितम्।

न च घटस्यान्योन्याभाव इत्यादौ उक्तसूत्रबलान्मतद्वयेपि पंचम्यापादनसंभवे तदुपेक्ष्य घटो नेत्यत्र पंचम्यापादने किं बीजमिति वाच्यम्। सूत्रस्थाऽन्यपदस्य प्रतियोगितात्वावच्छिन्नविषयतानिरूपितान्योन्याभावत्वावच्छिन्न विषयताशालिबोधतात्पर्यैणोच्चरितत्वात्, अन्योन्याभाव इति शब्दश्रवणे कस्याऽन्योन्याभाव इति संबन्धाकांक्षाया उदयेन संबन्धत्वावच्छिन्नविषयतानिरूपितान्योन्याभावत्वावच्छिन्नविषयताशालिबोधस्यैव जायमानत्वात्सूत्रस्थान्यपदेनाऽन्योन्याभावपदस्य ग्रहणाऽसंभवेन घटस्याऽन्योन्याभाव इत्यत्र मतद्वयेपि पंचम्यापादनाऽसंभवाद्घटो नेत्यत्रैव तदापादनं कृतमिति ध्येयम्।

तस्मादिति। पृथक्शब्दस्याऽन्योन्याभावार्थकत्वे घटो नेत्यत्र पंचम्यापत्तिदोषादित्यर्थः। सोऽर्थ इति। तादृशार्थ इत्यर्थः। कल्प्यत इति। घटः पटात्पृथगिति

**अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः**
**कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥११५॥**
**तथोभयक्रियाजन्योभवेत्संयोगजोऽपरः**
**आदिमः श्येनशैलादिसंयोगः परिकीर्तितः ॥११६॥**
**मेषयोः सन्निपातोयः स द्वितीय उदाहृतः**

संयोगं निरूपयति। अप्राप्तयोरिति। तं विभजते। कीर्तित इति। एषः—संयोगः ११५ संनिपातः—संयोगः। द्वितीयः—उभयकर्मजः।

संयोग का निरूपण करते हैं—"अप्राप्तयोः" इत्यादिग्रन्थ से। का० अ० पृथग्भूत दो द्रव्यों के परस्पर मिलने को संयोग कहते हैं। वह संयोग तीन प्रकार का है आद्य अन्यतर (दोनों में से एक) की क्रिया से उत्पन्न होने वाला, अपर (दूसरा) उभय क्रिया जन्य, तीसरा संयोग से जायमान संयोग। आदिम श्येन (बाजपक्षी) और शैल (पर्वत) का संयोग अन्यतर के अन्तर्गत श्येन क्रिया जन्य है। युद्धय मान दो मेषों (मेढ़ों) का जो सन्निपात (संयोग) वह अपर (उभय क्रिया जन्म) संयोग है।

---

प्रतीत्या विषयीक्रियते इत्यर्थः। तथाचाऽन्योन्याभावपृथक्त्वयोरैक्ये घटोनेत्यत्र पंचम्यापत्त्या पृथक्त्वं गुणान्तरमेवेतिभावः। अथ पृथक्त्वस्याऽन्योन्याभावार्थकत्वाभावे तद्योगे पञ्चम्यनुपपत्तिरिति चेन्न। पृथग्विनानानाभिस्तृतीयान्यतरस्यामिति सूत्रेण वैकल्पिकपंचमीविधानादिति तत्वम्।

**प्राभाकरास्तु** कार्यद्रव्येषु पृथक्त्वं नानुमन्यन्ते—तदाहुः—

"पृथक्त्वं तु गुणोनित्यद्रव्येषु परमाणुषु।
भवेद्व्यावर्त्तकोधर्मः कार्यद्रव्येषु नेष्यते॥"

**अद्वैतवादिनस्तु** स्तम्भात्कुम्भोभिन्न इति कुम्भभेदावगमस्य तत्पूर्वभाविस्तम्भभेदावगमनिबन्धनत्वात्, स्तम्भभेदावगमस्य च तत्पूर्वभाविकुम्भभेदावगमाधीनत्वात् भेदप्रतिपत्तिमेवदुरुपपादां मन्यमानाः **"नेहनानास्तिकिंचन"** इत्यादिवाक्यानां विरोधपरिहाराय पृथक्त्वं गुणान्तरं परमार्थतोनास्तीत्याहुः।

**शिरोमणिना** पदार्थतत्वनिरूपणे पृथक्त्वमपि न गुणान्तरं, अन्योन्याभावादेव पृथक्त्वव्यवहारोपपत्तेः। पृथक्त्वप्रतीतिस्तु न सावधित्वालंबना, मानाभावात्। "घटात्पटः पृथक् इतरेभ्योऽन्यः, भिन्नः, अर्थान्तरमित्यादौ च तच्छब्दविशेषप्रयोगे पञ्चम्यानुशासनकी" इति ग्रन्थेन पृथक्त्वस्य गुणान्तरत्वं निराकृतम्॥११४॥

इतिपृथक्त्वनिरूपणम्।

संयोगस्वरूपमाह। **अप्राप्तयोरित्यादिना। अप्राप्तयोः**—असंबद्धयोरित्यर्थः। तेन समवायव्यावृत्तिः। **प्राप्तिः**—संबन्धः। असंबद्धत्वेन वर्तमानयोः संबन्धःसंयोग

कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः ॥११७॥
तृतीयः स्यात्, कर्मजोपि द्विधैव परिकीर्तितः
अभिघातोनोदनं च शब्दहेतुरिहादिमः ॥११८॥
शब्दाऽहेतुर्द्वितीयः स्यात्,

११७ तृतीय इति। संयोगजसंयोग इत्यर्थः। तृतीयः स्यादिति पूर्वेणान्वितम्। आदिमः—अभिघातः। ११८ द्वितीयोनोदनाख्यसंयोग इत्यर्थः।

इति संयोगनिरूपणम्

कपाल और वृक्ष के संयोग से जायमान जो घट और वृक्ष का संयोग वह तीसरा संयोगजसंयोग कहा है। और कर्म (क्रिया) से जन्य जो संयोग वह भी दो प्रकार का-अभिघात तथा नोदन संज्ञक। अभिघाताख्यसंयोग होता है जिसमें शब्द कार होवे। (जैसे दोनों हाथों से तालिका बनाने के समय होने वाले हस्तद्वय संयोग में शब्द कारण है) और नोदनाख्यसंयोग वह है जिसमें शब्द हेतु न हो। (जैसे सर्पप्रभृति जीव के भूमि से होने वाले संयोग में शब्द कारण नहीं है) यह कारिकार्थ हुआ।

---

इति यावत्। लक्षणन्तु संयोगत्वजातिमत्वं बोध्यम्। अव्याप्यवृत्तिद्वयंश्रयश्चायम्। तथा च संयोगस्त्रिविधः—एकः अन्यतरकर्मजः यथा श्येनशैलादिसंयोगः। उभयकर्मजोऽपरः—यथा मेषद्वयसंयोगः। संयोगजसंयोगस्तृतीयः। यथा कपालतरुसंयोगज घटतरुसंयोगः। एवं च कारणाकारणसंयोगात्कार्याकार्यसंयोगःफलितः। कार्याकार्यसंयोगश्च क्वचिदेकस्मात्, क्वचिद् द्वाभ्यां, क्वचिद्बहुभ्यश्च संयोगेभ्योभवति, तत्र कपालतरुसंयोगजो घटतरुसंयोगः–द्वाभ्यां तन्त्वाकाशसंयोगाभ्यां द्वितन्तुकपटस्याकाशसंयोगः–बहुभ्यस्तुरीतन्तुसंयोगेभ्यः एकः पटतुरीसंयोगः इति क्रमेणोदाहरणानि। क्वचिदेकस्मात्संयोगात्संयोगद्वयमुत्पद्यते यथा पार्थिवपरमाणुना जलपरमाणोः संयोगाज्जलद्व्यणुके पार्थिवपरमाणुसंयोग इव पार्थिवद्व्यणुकेपिजलपरमाणु संयोगः।. क्वचिदकारणसंयोगादपि संयोगः यथा यानोत्तरदेशसंयोगात्पुरुषोत्तर देशसंयोगः।

न च पुरुषकर्मणा तत्संयोगः। पुरुषे कर्मणः प्रत्यक्षबाधात्। एतेन कैशतरुसंयोगजः कायतरुसंयोगोपि व्याख्यातः। तथा यानपूर्वदेशविभागात्पुरुषपूर्वदेशविभागोपि। कन्दली कृतस्तु क्वचित्कर्मसंयोगौ मिलित्वापि संयोगमुत्पादयतः—चरणेक्रिया ततोविभागः—श्येनावयविनि कर्मेत्येकः कालः—चरणविभागेन पूर्वसंयोगनाशोऽवयविकर्मणा च विभागः इत्येकः कालः—ततश्चरणस्थाणुसंयोगः श्येनविभागात्पूर्वसंयोगनाश इत्येकः कालः—ततश्चरणस्थाणुसंयोगेन श्येनकर्मणा च श्येनस्थाणुसंयोग इत्याहुः। विभुद्वयस्य तु नास्ति परस्परं संयोगः अन्यतरकर्मादेरभावादिति मीमांसकाः। केचित्तु अन्यतरकर्मादीनां परस्परव्यभिचारिणामकारणतया

ऽऽनन्तर्यमेव कारणमित्यत स्तयोरपिसंयोगोजायते इत्याहुः। अपरे तु तयोरस्त्येव संयोगः किन्तु नित्य एवेति विशेषमाचक्षते।

ननु कारणाकारणसंयोगात्कार्याकार्यसंयोगोत्पादे दण्डशाखासंयोगादपि कुतो न घटशाखासंयोगोत्पत्तिः, दण्डस्योपि घटकारणत्वादिति चेन्न। तत्र कारणाकरणपदं तत्समवायितत्समवायिभिन्नपरम्, तथा च तत्समवायितत्समवायिभिन्नयोः संयोगात्तत्तद्भिन्नयोः संयोगो जायते इत्यर्थः। न च कपाल दण्डसंयोगाद् घटदण्डसंयोगवद् घटपटयोरपि संयोगापत्तिः, घटभिन्नत्वस्य दण्डे इव पटेऽप्यविशेषादिति वाच्यम्। यत्र तद्भिन्नत्वविशिष्टसमवायेन तदीयसंयोगोत्पत्तिः तत्र तत्समवायिभिन्नत्वविशिष्टसमवायसंबन्धेन तत्समवायिसंयोग इति सामान्यनधिकरण्यप्रत्यासत्या तत्समवायिसंयोगत्वेन तदीयसंयोगत्वेन हेतुहेतुमद्भावात्। संयोगस्य द्विष्ठतया तदीयसंयोगस्य समवायसंबन्धेत तस्मिन्नपि उत्पादात्तत्र च तत्तत्समवायिसंयोगविरहाद्व्यभिचारवारणाय कार्यतावच्छेदकसंबन्धे तद्भिन्नत्वविशिष्टत्वं समवायविशेषणम्। एतल्लाभायैवचाऽकार्यपदोपदानम्। तत्समवायिन्यपि तत्समवायिसंयोगसात्वेन तत्रापि तदीयसंयोगोत्पत्तिवारणाय कारणतावच्छेदकसंबन्धे तत्समवायिभिन्नत्वविशिष्टत्वं समवायविशेषणम्। अत एव कपालद्वयसंयोगान्न घटकपालसंयोग इत्यन्यत्र विस्तरः।

अथ क्रियासंयोगयोः केन रूपेण कार्यकारणभावः। न तावत्कर्मत्वसंयोगत्वाभ्याम्, संयोगजसंयोगे व्यभिचारात्।

न च विलक्षणसंयोगत्वं कार्यतावच्छेदकं, वैलक्षण्यं च कर्मजन्यतावच्छेदकतया सिद्धः संयोगजसंयोगव्यावृत्तो जातिविशेष इति वाच्यम्। तथापि तत्र कालिकसामानाधिकरण्यमात्रं प्रत्यासत्तिः समवायघटितसामानाधिकरण्यं वा। नाद्यः—यस्य कस्य चित्क्रियात एव निष्क्रिययोरपि घटपटाद्योरपि संयोगापत्तेः। अनन्तसंसारे सर्वदैवावश्यं कस्य चित्कर्मसत्वेनाऽव्यावर्त्तकतया वैलक्षण्याभ्युपगमस्य तादृशकार्यकारणभावस्य च वैयर्थ्यापत्तेः। न द्वितीयः—अंगुल्यादिकर्मणा निष्क्रियेपि शाखादौ संयोगोत्पत्त्या व्यभिचारात्। न च समवायेन कर्मत्वेन कारणता विलक्षणसंयोगत्वेन कार्यता, स्वाव्यवहितपूर्ववर्त्तिक्रियावद्वृत्तित्वविशिष्टसमवायश्च कार्यतावच्छेदकसंबन्धः, नातोव्यभिचार इति वाच्यम्। तावतापि विलक्षणसंयोगः केवल समवायेन क्वचिदेव जायते क्वचिन्न नेत्यत्र नियामकालाभात्। **अत्रप्राञ्चः**। क्रियात्वेन कारणता विलक्षणसंयोगत्वेन कार्यता, यत्र तादात्म्येन विलक्षणसंयोगस्तत्रस्वसमवायिसमवेतत्वसंबन्धेन क्रियेति सामानाधिकरण्यं प्रत्यासत्तिः। नचैवं कर्मणः कार्यनिष्ठतया कारणत्वे कार्याव्यवहितपूर्वे कार्याभावेन व्यभिचारापत्तिः, यत्र कार्यतावच्छेदकसंबन्धेन कार्यं तत्रतदव्यवहितपूर्वक्षणे कारणतावच्छेदकसंबन्धेन कारणमिति नियमादिति वाच्यम्। अन्यत्र तथाविधनियमस्य सत्त्वेपि प्रकृते यदा यत्र तादात्म्यसंबन्धेन विलक्षणसंयोगः तदा तत्र तदव्यवहितपूर्वक्षणावच्छिन्नसमवायाधारतावत्समवेतत्वसंबन्धेन कर्मेति नियमः, कार्यभेदेन कारणताभेदात्। क्रियोत्पत्तिसमकालं संयोगोत्पत्तिवारणाया-

ऽवच्छिन्नान्तमाधारताविशेषणम्। पूर्वसंयोगस्य प्रतिबन्धकत्वादेव तदानीं संयोगोत्पत्ति कारणासंभवेनानुपादेयमेव वा तदित्याहुः। नव्यास्तु तत्तत्क्रियात्वेन कारणता तत्तत्क्रियाधीनसंयोगत्वेन च कार्यता—यत्र तद्व्यक्तिवृत्तित्वविशिष्टसमवायसंबन्धेन तत्तत्क्रियाधीनसंयोगोत्पत्तिः तत्र समवायसंबन्धेन तत्तत्कर्मेति प्रत्यासत्तिः। तत्तत्क्रियाधीनसंयोगत्वं च तत्तत्कर्मव्यक्तिजन्यसंयोगमात्रवृत्तिजातिविशेषः। न चोक्तदैशिकसामानाधिकरण्यप्रत्यासत्त्या तत्कर्मणां कारणत्वे तत्तत्कर्मविरहदशायां तत्तद्देशवृत्तित्वविशिष्टसमवायसंबन्धेन तत्तत्क्रियाधीनसंयोगो मा जनिष्ट समवायसंबन्धसामान्येन कुतो न जायते इति वाच्यम्। तत्तत्क्रियाधीनसंयोगस्य तत्तद्देशवृत्तित्वविशिष्टसमवायसंबन्धेनानुत्पत्त्या समवायसंबन्धेनोत्पत्तेरलीकतया तत्तद्देशवृत्तित्वविशिष्ट समवायसंबन्धेनोत्पत्ति प्रत्येव समवायसंबन्धेन कर्मणां नियामकतया तत्तत्क्रियाधीनतत्तद्देशसंयोगः कश्चिदेवोत्तरदेशे जायेत कश्चिन्नेत्यत्र किं नियामकम्। न च तत्तत्क्रियाधीनसंयोगत्वावच्छिन्नोत्पत्तिं प्रति तादृशसंयोगप्रागभाव एव नियामक इति वाच्यम्। प्रागभावानभ्युपगमादिति चेन्न। तत्तत्क्रियाधीनसंयोगत्वरूपजातिविशेषावच्छिन्नं प्रति तत्तदुत्तरदेशव्यक्तीनां तादात्म्येन हेतुत्वात्, तत्तद्देशवृत्तित्वविशिष्टसमवायस्य कार्यतावच्छेदकसंबन्धत्वाच्च न व्यभिचारः। वस्तुतस्तु कार्यतावच्छेदकावच्छिन्नाः यावत्यो व्यक्तयः तत्प्रत्येकाधिकरणयत्किंचिन्निष्ठाभावाप्रतियोगित्वरूपं कारणत्वम्। एवं च समवायेन संयोगं प्रति समवायेन क्रियायाः कारणत्वम्। एतादृशकार्यकारणभावो लोके क्रियासंयोगन्यायेन कार्यकारणभाव इति गीयते इति प्राहुः।

इदमत्रावधेयम्। तत्तत्क्रियात्वेन तत्तत्क्रियाधीनसंयोगत्वेन कार्यकारणभावे केवल "कालिकघटित" सामानाधिकरण्यं प्रत्यासत्तिः, न तु समवायतद्देशवृत्तित्वविशिष्टसमवायोभयघटितदैशिकसामानाधिकरण्यं, गौरवात्, देशान्तर्भावे प्रयोजनविरहाच्च। तत्तद्द्रव्यक्तित्वविशिष्टसमवायसंबन्धेन सत्त्वावच्छिन्नोत्पत्तिं प्रति तत्तद्व्यक्तित्वेन समवायिकारणत्वस्यैवसमवायेनोत्पत्तिनियामकत्वात्। तद्व्यक्तिसमवेतातिरिक्तस्य तत्तत्क्रियाधीनसंयोगस्यालीकत्वात्। निरुक्तदैशिकसामानाधिकरण्यस्य प्रत्यासत्तित्वेपि तादृशसमवायिकारणत्वस्यैवोत्तरदेशविशेषे संयोगोत्पत्तिनियामकत्वात्। तथा च कारणाकारणसंयोगस्य कार्याकार्यसंयोगजनकत्वे मानाभावः। न चैवं यत्र शाखासंयुक्तकपाले घटोत्पत्तिस्तत्र तदनन्तरं घटशाखासंयोगो न स्यात्, घटे क्रियाविरहात्, घटशाखासंयोगस्य च प्रत्यक्षसिद्धत्वादिति वाच्यम्। क्रियायाः चणतयाऽनन्तसंसारे सर्वदैवावश्यं कुत्रचित्परमाण्वादौ कर्मसत्त्वेन तत एव घटशाखासंयोगसंभवात्। क्रियासंयोगयोः कार्यकारणभावे दैशिकसामानाधिकरण्यस्याऽघटकत्वात्। जातिविशेषरूपस्य तत्क्रियाधीनत्वस्य फलबलकल्प्यतया व्यधिकरणसंयोगेपि तत्सत्त्वस्य सुवचत्वात्। न च संयोगं प्रति कर्मणः केवलकालिकप्रत्यासत्त्या कारणत्वेऽसमवायिकारणत्वानुपपत्तिरिति वाच्यम्। निमित्तकारणत्वस्यैवाभ्युपगमात्। एवं तत्तत्क्रियात्वेन तत्तत्क्रियाधीनविभागत्वेन क्रियाविभागयोः कार्य-

कारणभावेपि केवलकालिकघटितसामानाधिकरण्यमेव प्रत्यासत्तिः, न तु समवाय-तद्देशवृत्तित्वविशिष्टसमवायोभयघटितदैशिकसामानाधिकरण्यं प्रत्यासत्तिः। तथा च कारणविभागस्य कार्याकार्यविभागजनकत्वे मानाभावः। न चैवं यत्र शाखासंयुक्त-कपाले कर्मोत्पत्तिः घटोत्पत्तिश्चेत्येकः कालः-ततः कपालशाखाविभागः-तदनन्तरं घटशाखाविभागो न स्यात्, घटेकर्मविरहादिति वाच्यम्। व्यधिकरणयत्किंचित्पर-माण्वादिक्रियात एव तत्र घटशाखाविभागसंभवात्। तत्तद्व्यक्तित्वेन समवायि-कारणत्वस्यैवातिप्रसंगभञ्जकत्वात्, तत्तद्व्यक्तिसमवेतातिरिक्तस्य तत्तत्क्रियाधीन-विभागस्यालीकत्वादिति।

संयोगो नवद्रव्यवृत्तिः। संयोगनाशस्तु विभागात्, समवायिकारणनाशाच्च। तथा च प्रतियोगितासंबन्धेन संयोगध्वंसं प्रति स्वसमवायिसमवेतत्वसंबन्धेन विभागः कारणम्। आश्रयनाशसंयोगनाशयोः कार्यकारणभावः समवायिकारण-नाशत्वेन गुणनाशत्वेन यदि तदा दण्डादिनाशाद् घटीयरूपादेर्नाशापत्तेः। नापि स्वसमवायिनाशत्वेन समवेतनाशत्वेन, स्वत्वाननुगमात्। न च तन्नाशत्वेन तत्सम-वायिनाशत्वेन कार्यकारणभावः, तत्पदेन विशिष्य ऽऽश्रयनाशनाश्यसमवेतसमवेत-व्यक्तीनामेवोपादानान्न पाकादिजन्यरूपनाशे व्यभिचार इति वाच्यम्। गुण-कर्मात्मकतत्तन्नाश्यव्यक्तिभेदेनानन्तनाश्यनाशकभावापत्तेरिति चेदत्र **सांप्रदायिकाः**-तन्नाशत्वेन कारणत्वम्, तत्समवेतनाशत्वेन निखिलगुणकर्मसाधारणतत्समवेतनाशत्वं च कार्यतावच्छेदकम्। न च घटादिसत्वेपि अपेक्षाबुद्धिनाशात् घटादिवृत्तिद्वित्वादि-नाशे व्यभिचार इति वाच्यम्। तत्समवेतनाशे तन्नाशवत्वस्य विशेषणीयत्वात्। नाशवत्ता च कालिकेन। अनुगमस्तुनाशविशिष्टनाशं प्रति वस्तुनाशः कारणम्। नाशे नाशवै० स्वसमानकालीनत्व स्वप्रतियोगिसमवेत प्रतियोगिकत्वोभयसंबन्धेन।

यत्तु कालिकेन तद्वच्छिन्नत्वमेव तत्समवेतनाशे विशेषणीयम्। तन्न। आश्रय-नाशसामग्रीकालोत्पन्नाऽऽरम्भकसंयोगनाशाऽपेक्षाबुद्धिनाशो—त्तरदेशसंयोगादिजन्ये आश्रयनाशकालोत्पन्नद्रव्य-द्वित्वादि-कर्मनाशे व्यभिचारापत्तेः, तत्राऽऽश्रयनाशानन्तरं तृतीयक्षणे एवं द्वित्वादिनाशोपगमे क्षणैकापलापापत्तेः, अणुरपीतिन्यायेनक्षणैका-पलापस्यापि असति बाधके विनिगमकत्वात्। तन्नाशमपेक्ष्य तद्वद्ध्वंसस्य गुरुत्वा-च्चेतिध्येयम्। यत्र प्रतियोगितासंबन्धेन तादृशतत्समवेतनाशोत्पत्तिः—तत्र स्वप्रति-योगिसमवेतत्व कालिकोभयसंबन्धेन तन्नाश इति सामानाधिकरण्यं प्रत्यासत्तिः। स्वप्रतियोगिसमवेतत्वमात्रस्य कारणतावच्छेदकसंबन्धत्वे तन्नाशानन्तरं तत्समवेत-गुणादाविव तत्समवेत जातावपि प्रतियोगितासंबन्धेन तादृशतत्समवेतनाशापत्तिः, स्वप्रतियोगिसमवेतत्वसंबन्धेन तन्नाशस्य तत्रापि सत्वात् अतः कालिक प्रवेशः। जातेश्च नित्यतया कालत्वाभावान्नतत्र कालिकेनाश्रयनाशः। वस्तुतस्तु लाघवात् स्वप्रतियोगिसमवेतत्वमात्रं संबन्धः, न तु कालिकोपि—प्रतियोगितासंबन्धेन ध्वंसत्वेन तादात्म्येन सत्वेन कार्यकारणभावान्तरसत्वादिति वदन्ति।

नव्यास्तु स्वप्रतियोगिसमवेतत्व—कालिकोभयसंबन्धेनयो नाशवान्

विभागोपि त्रिधाभवेत्

एक कर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोपरः ॥११६॥

विभागजस्तृतीयः स्यात्तृतीयोपि द्विधा भवेत् ।

हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥१२०॥

विभक्तप्रत्ययकारणं विभागं निरूपयति । त्रिभागोपीति । एकेति कर्मेति । तदुदाहरणं तु श्येनशैलविभागादिकं पूर्ववद्बोध्यम् ॥११६॥

विभक्तप्रत्यय के असाधारण कारण विभाग का निरूपण करते हैं—विभागोऽपि इत्यादि ग्रन्थ से । इस तीन प्रकार के विभाग का भी उदाहरण भी पहिले ( संयोग ) की तरह ही ( अर्थात् दो उस विभाग में एक का तो बाज की क्रिया ही कारण है । और दोनों मेंढ़ों के युद्ध से विरामात्मकविभाग में दोनों मेंढ़ों की क्रिया कारण है ) ।

---

"गुणकर्म" तत्प्रतियोगिकनाशंप्रति स्वप्रतियोगिसमवेतत्वसंबन्धेननाशः कारणम् । अपेक्षाबुद्धिनाशजन्ये आश्रयसत्वकालीन द्वित्वादिनाशे, आश्रयनाशसामग्रीकालोत्पन्नापेक्षाबुद्धिनाशजन्याश्रयनाशकालोत्पन्नद्वित्वादिनाशे च व्यभिचारवारणाय कालिकसंबन्धप्रवेशः । यत्र प्रतियोगितासंबन्धेन नाशवत्प्रतियोगिनाशः तत्र स्वप्रतियोगिसमवेतत्वसंबन्धेन नाश इति सामानाधिकरण्यं प्रत्यासत्तिः । कालिकसामानाधिकरण्यमात्रस्य प्रत्यासत्तित्वे वस्तुमात्रस्यैवाशुविनाशित्वापत्तेः, अन्यथावश्यकत्वेन तादृशकार्यकारणभावस्य व्यर्थत्वापत्तेश्चेत्याहुः ।

एका संयोगव्यक्तिः, एका च विभागव्यक्तिः, उभयोर्द्रव्ययोर्वर्तेते इत्यनेकाश्रितत्वमितिकन्दलीकारः । मीमांसकमतेसंयोगः प्रत्याश्रयं भिन्नः ।

इतिसंयोगनिरूपणम् ।

विभागं लक्षयति । विभक्तप्रत्ययकारणमिति । इमौ विभक्तौ इति प्रत्ययकारणमित्यर्थः । प्रतिपाद्यतासंबन्धेन तादृशप्रत्ययं प्रति समवायेन विभागस्य कारणत्वादिति भाव. ।

तथा च प्रतिपाद्यतासंबन्धावच्छिन्नतादृशप्रत्ययत्वावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणतासमानाधिकरणरूपावृत्तिजातिमत्वं विभागस्य लक्षणम् । तेन यादृशविभागाश्रये विभक्तप्रत्ययः कस्यापि न जातस्तत्र नाव्याप्तिः । अपिना संयोगविभागत्वजातिमत्वं वा बोध्यम् । कारिकायां–विभागोपीति । कारिकायां–समुच्चयः । संयोगवद्विभागोपि त्रिविध इत्यर्थः । त्रैविध्यमाह । अन्यतरकर्मजोभयकर्मज-विभागजभेदात्त्रिविधोविभाग इति एककर्मोद्भव इत्यादि । विभागजविभागोपि द्विविधः-कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्च । तथा च विभागश्चतुर्विधः-अन्यतरक्रियाजन्यः उभयक्रियाजन्यः-कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति । तत्र कारणमात्रविभागात्कारणाकारणविभागः, कारणाकारणविभागात्कार्याकार्यविभाग इति विवेकः । तदुदाहरणन्त्विति ।

तृतीयोपि विभागजविभागः कारणमात्रविभागजन्यः कारणाकारण-विभागजन्यश्चेति द्विविधः। आद्यस्तावत् यत्रैककपाले कर्म ततः कपालद्वय-विभागः ततोघटारम्भकसंयोगनाशः ततोघटनाशः ततस्तेनैव कपालविभागेन सकर्मणः कपालस्याकाशविभागोजन्यते तत आकाशसंयोगनाशः तत उत्तरदेशसंयोगः ततः कर्मनाश इति।

और तीसरा विभाग है विभागजविभाग, वह दो प्रकारका है—कारणमात्र के विभाग से जायमान विभाग, तथा कारण और अकारण के विभाग से जायमान। अद्य ( कारणमात्र विभागजन्य ) विभाग वह है जहाँ कि कपाल में होने वाली क्रिया से दोनों कपालों का विभाग हुवा, उसके बाद घटारंभक ( घटोत्पादक ) संयोग का नाश, फिर घट नाश, इसके बाद उसी कपालद्वयविभाग से सकर्म कपाल का आकाश से विभाग होता है। फिर आकाश का जो कपाल के साथ संयोग था उसका नाश हुवा, और कपाल का उत्तर-देश के साथ संयोग हो गया, उसके बाद कर्म का नाश हो गया।

---

अन्यतरकर्मजोभयकर्मजविभागोदाहरणन्वित्यर्थः श्येनशैलविभागादिकमिति। आदिना मेषद्वयविभागोबोध्यः। अत्र प्राञ्चः—संयोगवद्विभागोपि त्रिविध एव-अन्यतरकर्मजः उभयकर्मजः कारणाकारणविभागश्चेति भेदात्। कारणमात्रविभागज-विभागोनाङ्गीक्रियते। न चैवं कारणाकारणविभागस्यैव कार्याकार्यविभागजनकत्वे कपालकर्मजनितादारम्भकसंयोगप्रतिद्वन्द्विकपालद्वयविभागात्कथं कपालाकाशविभाग इति वाच्यम्। तत्र कपालकर्मणैव कपालद्वयविभागवत्तत्समकालं कपालाकाश-विभागस्यापि जननादविशेषादित्याहुः। तत्र कारणमात्रविभागजन्यं कारणाकारण-विभागमुपपादयति। आद्यस्तावदिति। यत्र। यदा। एककपालेकर्मेति। अदृष्टवदात्मसंयोगादित्यादिः। ततः। तदनन्तरं। घटारम्भकसंयोगनाश इति। कपालद्वयसंयोगनाश इत्यर्थः ततः-घटनाशानन्तरम्। तेनैव कपालविभागेनेति। तेन कपालविभागेनैवेत्यर्थः। एवकारेण कर्मणोऽव्युदासः। सकर्मण इति। तदानीं-कर्मनाशकस्योत्तरसंयोगस्याभावात्, उत्तरसंयोगस्यैव स्वजनककर्मनिवर्त्तकत्वादिति-भावः। कपालस्याऽऽकाशविभागोजन्यते इति। अयमेव कारणाकारणविभागः। तथा च कारणाकारणविभागानंगीकारेऽ नित्याऽवयवात्मकाश्रयनाशादनित्यावयव-विभुसंयोगनाशसंभवेपि नित्यावयवविभुसंयोगस्य नाशकाभावेन नित्यत्वापत्त्या तादृशविभागाङ्गीकारआवश्यक इति भावः।

अथ कपालक्रियया कपालद्वयविभागवत् कपालाकाशविभागोपि जन्यता-मित्याशंकते। न चेति। तेन कर्मणैवेति। कपालद्वयविभागजनककर्मणैवेत्यर्थः। एवकारेण कारणमात्रविभागस्य कारणत्वव्यवच्छेदः। देशान्तरविभागः कपाला-

न च तेन कर्मणैव कथं देशान्तरविभागो न जन्यते इति वाच्यम्। एकस्य कर्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्या ऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य च विरोधात्। अन्यथा विकसत्कमलकुड्मलभङ्गप्रसङ्गात्। तस्माद्यदीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनयेत्, तदाऽऽरम्भकसंयोगप्रतिद्वन्द्विविभागं न जनयेत्।

प्रश्न—कपाल और आकाश का विभाग कपालद्वय के विभाग का कारण जो सर्वप्रथम कपालगत कर्म उसी से क्यों न मान लिया जाय।

उत्तर—एक ही कर्म घट का आरम्भक ( उत्पादक ) जो संयोग कपालद्वय का संयोग उसका प्रतिद्वंद्वी ( विरोधी ) जो विभाग ( कपालद्वय का विभाग उसका जनक तथा घट का अनारम्भक जो कपाल और आकाश का संयोग उसके प्रतिद्वंद्वी विभाग ( कपालाकाश विभाग ) का जनक नहीं हो सकता है, कारण कि वे दोनों विभागों का परस्पर विरोध है, [ क्योंकि आरम्भ संयोग प्रतिद्वन्द्वी विभाग कपालद्वय में है, और अनारम्भक संयोग प्रतिद्वन्द्वी विभाग कपालाकाश में है ]। अन्यथा ( एक ही कर्म को यदि दोनों विभागों का कारण माना जावेगा तो ) विकसत् ( खिलते हुये ) कमल के कुड्मल ( कोष ) का भङ्ग हो जायगा। [ अर्थात् अनारम्भक संयोग का प्रतिद्वन्द्वी जो विभाग तज्जनक कर्म को ही यदि आरम्भक संयोग के प्रतिद्वन्द्वी विभाग का भी जनक मान लिया जाता है तो विकसत् कमल के कुड्मल ( कोष ) का नाश हो जायगा, अथवा यह कह दीजिये कि विकसत् ( खिलते हुवे ) कमल का तथा उसके कोष का इन दोनों का नाश हो जायगा। कारण कि कमल पत्रों का अग्रभाग में होने वाला जो द्रव्यानारम्भक संयोग है उस संयोग के विरोधी विभाग का कारणीभूत जो पत्तों में होने वाला कर्म है उसी कर्म से मूलावच्छेदेन ( मूल में होने वाला ) जो कमल पत्रों का जो कमलोत्पादक संयोग उस संयोग के विरोधी विभाग की भी यदि उत्पत्ति हो जावेगी तो उस विभाग से फिर कमल के आरम्भक संयोग का नाश हो जायगा, उसके बाद कमल का भी नाश हो जायेगा ]

इसलिये यह ( कपाल में होने वाला ) कर्म अनारम्भक संयोग के प्रतिद्वन्द्वी विभाग को उत्पन्न करेगा तो वह कर्म घट के आरम्भक संयोग के प्रतिद्वन्द्वी विभाग को उत्पन्न नहीं करेगा।

---

काशविभागः। आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्येति। आरम्भकसंयोगः कपालद्वयसंयोगः तत्प्रतिद्वन्द्वी तद्विरोधी तन्नाशक इति यावत् योविभागस्तज्जनकत्वस्येत्यर्थः। अनारम्भकसंयोगः कपालाकाशसंयोगः तत्प्रतिद्वन्द्वी तद्विरोधी योविभागस्तज्जनकत्वस्येत्यर्थः। विरोधादिति। आरम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मत्वस्य अनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वव्याप्यत्वादिति भावः। तादृशव्याप्त्यनङ्गीकारे तादृशव्याप्त्यनभ्युपगमे बाधकमाह। अन्यथेति।

इत्यर्थः । **विकसदिति ।** अग्रावच्छेदेनानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकं कर्म विकासः । तद्वत्कमलस्यकुड्मलस्यापि नाशप्रसंगादित्यर्थः । तत्राग्रावच्छेदेनानारम्भकसंयोगप्रतिद्वन्द्विविभाजनक कर्मणः सत्वात्, तेन कर्मणा मूलावच्छेदेनाऽऽरम्भकसंयोगविरोधिविभागस्याप्युत्पत्त्या तेन च विभागेनाऽऽरम्भकसंयोगनाशः ततः कमलनाशः स्यादिति भावः । **तस्मादिति ।** कमलकुड्मलभंगप्रसंगपरिहाराय अनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्व आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वयोर्विरोधस्वीकारावश्यकत्वादित्यर्थः । तथा च कपालसंभवेतं कर्म न कपालाकाशविभागजनकं कपालद्वयविभागजनकत्वात् यद्यदारम्भकसंयोगप्रतिद्वन्द्विविभागजनकं तन्नाऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकं यथा विकसत्कमलकुड्मलकर्मेति सामान्यव्याप्त्या कपालादिकर्मणि कपालाकाशविभागजनकत्वाभावसिद्धौ कारणमात्रविभागजविभागसिद्धिर्निराबाधेति भावः । कपालद्वयविभागजनकत्वमस्तु कपालाकाशविभागजनकत्वाभावोमास्तु इति व्यभिचारशंकानिवर्तकतर्कमाह । **यदीदमिति ।** कपालसमवेतं कर्मेत्यर्थः । **जनयेदिति ।** कपालाकाशविभागंजनयेदित्यर्थः । **न जनयेदिति ।** कपालद्वयविभागजनकं न भवेदित्यर्थः । न चेष्टापत्तिः । घटस्यनित्यत्वापत्तेः ।

न च तथापि कारणसमवेतकर्मणा द्रव्याऽऽरम्भकसंयोगनाशककारणद्वयविभागजननसमकालं कारणस्याऽऽकाशाद्यकारणेन समं विभागजनने किं बाधकम्, एवं कमलदलविकसनकर्मणा ऽनारंभकसंयोगनाशकविभागजननसमकालं आरंभकसंयोगप्रतिद्वन्द्विविभागस्यापिजनने किं बाधकम् न हि व्याप्तिभङ्गभियैव सामग्री कार्यं नार्जयतीति वाच्यम् । आरम्भकसंयोगविरोधविभाग–तादृशसंयोगाविरोधिविभागौ प्रति परस्परविरुद्धवैजात्याभ्यां कर्मणः कारणत्वात् । कमलदलविकसनकर्मणा कमलनाशप्रसंगवारणायानात्या तथैव कल्पनात् । न चाऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वं कर्मणः कर्मत्वेनैव, आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वन्तु कमलदलविकसनादिकर्मव्यावृत्तकर्मत्वव्याप्यवैजात्येनेत्येवास्तु तावतैव कमलदलविकसनकर्मणा कमलभङ्गप्रसंग वारणसंभवात् तथाचाऽऽरम्भकसंयोगविरोधिविभागजनककर्मणापि विरोधिविभागजननसमकालमविरोधिविभागजनने बाधकाभावः, सामग्र्या कार्यजनने व्याप्तेरबाधकत्वात्, विकसनादिकर्मव्यावृत्तवैजात्येन विरोधिविभागजनकत्वादेव कमलभंगप्रसंगवारणादुक्तव्याप्तौमानाभावाच्चेति वाच्यम् । अवयवकर्मणाऽऽरम्भकसंयोगविरोध्यवयवद्वयविभागवत्तत्समकालमवयवेन सममाकाशाद्यनवयवदेशानामपि विभागजनने आरम्भकसंयोगनाशसमकालमवयविनि तद्विभागाधीनानन्तव्यक्तिकल्पनापत्तिः, विनश्यदवस्थेपि अवयविनि कारणाकारणविभागेन कार्याकार्यविभागजनने बाधकाभावात् । अतोलाघवाद्विरोधि ( विभाग ) जनककर्मव्यावृत्तवैजात्येनैवा विरोधिविभागजनकत्वं कल्प्यते । तत्कल्पनेचाऽऽरंभकसंयोगविरोध्यवयवद्वय विभागस्यैव तत्रावयवेन सममाकाशात्मादेर्विभागं प्रति जनकतया नावयविनि तेन विभागेन विभागोत्पत्तिसंभवः, समवायिकारणस्य कार्यसहभावेन हेतुत्वात् ।

**न च तेन कर्मणैव कथं देशान्तरविभागो न जन्यते इति वाच्यम्। एकस्य कर्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्या ऽनारम्भकसंयोग-प्रतिद्वन्द्विविभागजनकत्वस्य च विरोधात्। अन्यथा विकसत्कमलकुड्मल-भङ्गप्रसङ्गात्। तस्माद्यदीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनयेत्, तदाऽऽरम्भकसंयोगप्रतिद्वन्द्विविभागं न जनयेत्।**

प्रश्न—कपाल और आकाश का विभाग कपालद्वय के विभाग का कारण जो सर्वप्रथम कपालगत कर्म उसी से क्यों न मान लिया जाय।

उत्तर—एक ही कर्म घट का आरम्भक ( उत्पादक ) जो संयोग कपालद्वय का संयोग उसका प्रतिद्वंद्वी ( विरोधी ) जो विभाग ( कपालद्वय का विभाग उसका जनक तथा घट का अनारम्भक जो कपाल और आकाश का संयोग उसके प्रतिद्वंद्वी विभाग ( कपालाकाश विभाग ) का जनक नहीं हो सकता है, कारण कि वे दोनों विभागों का परस्पर विरोध है, [ क्योंकि आरम्भ संयोग प्रतिद्वन्द्वी विभाग कपालद्वय में है, और अनारम्भक संयोग प्रति-द्वन्द्वी विभाग कपालाकाश में है ]। अन्यथा ( एक ही कर्म को यदि दोनों विभागों का कारण माना जावेगा तो ) विकसत् ( खिलते हुवे ) कमल के कुड्मल ( कोष ) का भङ्ग हो जायगा। [ अर्थात् अनारम्भक संयोग का प्रतिद्वन्द्वी जो विभाग तज्जनक कर्म को ही यदि आरम्भक संयोग के प्रतिद्वन्द्वी विभाग का भी जनक मान लिया जाता है तो विकसत् कमल के कुड्मल ( कोष ) का नाश हो जायगा, अथवा यह कह दीजिये कि विकसत् ( खिलते हुवे ) कमल का तथा उसके कोष का इन दोनों का नाश हो जायगा। कारण कि कमल पत्रों का अग्रभाग में होने वाला जो द्रव्यानारम्भक संयोग है उस संयोग के विरोधी विभाग का कारणीभूत जो पत्तों में होने वाला कर्म है उसी कर्म से मूलावच्छेदेन ( मूल में होने वाला ) जो कमल पत्रों का जो कमलोत्पादक संयोग उस संयोग के विरोधी विभाग की भी यदि उत्पत्ति हो जायेगी तो उस विभाग से फिर कमल के आरम्भक संयोग का नाश हो जायगा, उसके बाद कमल का भी नाश हो जायेगा ]

इसलिये यह ( कपाल में होने वाला ) कर्म अनारम्भक संयोग के प्रतिद्वन्द्वी विभाग को उत्पन्न करेगा तो वह कर्म घट के आरम्भक संयोग के प्रतिद्वन्द्वी विभाग को उत्पन्न नहीं करेगा।

---

काशविभागः। **आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्येति।** **आरम्भक-संयोगः** कपालद्वयसंयोगः तत्प्रतिद्वन्द्वी तद्विरोधी तन्नाशक इति यावत् योविभागस्त-ज्जनकत्वस्येत्यर्थः। **अनारम्भकसंयोगः** कपालाकाशसंयोगः तत्प्रतिद्वन्द्वी तद्विरोधी योविभागस्तज्जनकत्वस्येत्यर्थः। **विरोधादिति।** आरम्भकसंयोगप्रतिद्वन्द्विविभाग-जनककर्मत्वस्य अनारम्भकसंयोगप्रतिद्वन्द्विविभागाजनकत्वव्याप्यत्वादिति भावः। तादृशव्याप्त्यनगीकारे तादृशव्याप्त्यनभ्युपगमे बाधकमाह। **अन्यथेति।**

इत्यर्थः । **विकसदिति ।** अग्रावच्छेदेनानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकं कर्म विकासः । तद्वत्कमलस्यकुड्मलस्यापि नाशप्रसंगादित्यर्थः । तत्राग्रावच्छेदेनानारम्भकसंयोगप्रतिद्वन्द्विविभाजनक कर्मणः सत्त्वात्, तेन कर्मणा मूलावच्छेदेनाऽऽरम्भकसंयोगविरोधिविभागस्याप्युत्पत्त्या तेन च विभागेनाऽऽरम्भकसंयोगनाशः ततः कमलनाशः स्यादिति भावः । **तस्मादिति ।** कमलकुड्मलभंगप्रसंगपरिहाराय अनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्व आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वयोर्विरोधस्वीकारावश्यकत्वादित्यर्थः । तथा च कपालसंभवेतं कर्म न कपालाकाशविभागजनकं कपालद्वयविभागजनकत्वात् यद्यदारम्भकसंयोगप्रतिद्वन्द्विविभागजनकं तन्नाऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकं यथा विकसत्कमलकुड्मलकर्मेति सामान्यव्याप्त्या कपालादिकर्मणि कपालाकाशविभागजनकत्वाभावसिद्धौ कारणमात्रविभागजविभागसिद्धिर्निराबाधेति भावः । कपालद्वयविभागजनकत्वमस्तु कपालाकाशविभागजनकत्वाभावोमास्तु इति व्यभिचारशंकानिवर्तकतर्कमाह । **यदीदमिति ।** कपालसमवेतं कर्मेत्यर्थः । **जनयेदिति ।** कपालाकाशविभागंजनयेदित्यर्थः । **न जनयेदिति ।** कपालद्वयविभागजनकं न भवेदित्यर्थः । न चेष्टापत्तिः । घटस्यनित्यत्वापत्तेः ।

न च तथापि कारणसमवेतकर्मणा द्रव्याऽऽरम्भकसंयोगनाशककारणद्वयविभागजननसमकालं कारणस्याऽऽकाशाद्यकारणेन समं विभागजनने किं बाधकम्, एवं कमलदलविकसनकर्मणा ऽनारंभकसंयोगनाशकविभागजननसमकालं आरंभकसंयोगप्रतिद्वन्द्विविभागस्यापिजनने किं बाधकम् न हि व्याप्तिभङ्गभियैव सामग्री कार्यं नार्जयतीति वाच्यम् । आरम्भकसंयोगविरोधविभाग–तादृशसंयोगाविरोधिविभागौ प्रति परस्परविरुद्धवैजात्याभ्यां कर्मणः कारणत्वात् । कमलदलविकसनकर्मणा कमलनाशप्रसंगवारणायानात्या तथैव कल्पनात् । न चाऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वं कर्मणः कर्मत्वेनैव, आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वन्तु कमलदलविकसनादिकर्मव्यावृत्तकर्मत्वव्याप्यवैजात्येनेत्येवास्तु तावतैव कमलदलविकसनकर्मणा कमलभङ्गप्रसंग वारणसंभवात् तथा चाऽऽरम्भकसंयोगविरोधिविभागजनककर्मणापि विरोधिविभागजननसमकालमविरोधिविभागजनने बाधकाभावः, सामग्र्या कार्यजनने व्याप्तेरबाधकत्वात्, विकसनादिकर्मव्यावृत्तवैजात्येन विरोधिविभागजनकत्वादेव कमलभंगप्रसंगवारणादुक्तव्याप्तौमानाभावाच्चेति वाच्यम् । अवयवकर्मणाऽऽरम्भकसंयोगविरोध्यवयवद्वयविभागवत्तत्समकालमवयवेन सममाकाशाद्यनवयवदेशानामपि विभागजनने आरम्भकसंयोगनाशसमकालमवयविनि तद्विभागाधीनानन्तव्यक्तिकल्पनापत्तिः, विनश्यदवस्थेपि अवयविनि कारणाकारणविभागेन कार्याकार्यविभागजनने बाधकाभावात् । अतोलाघवाद्विरोधि ( विभाग ) जनककर्मव्यावृत्तवैजात्येनैवाविरोधिविभागजनकत्वं कल्प्यते । तत्कल्पनेचाऽऽरंभकसंयोगविरोध्यवयवद्वय विभागस्यैव तत्रावयवेन सममाकाशात्मादेर्विभागं प्रति जनकतया नावयविनि तेन विभागेन विभागोत्पत्तिसंभवः, समवायिकारणस्य कार्यसहभावेन हेतुत्वात् ।

**न च कारणविभागेनैव द्रव्य नाशात्पूर्वं कुतोदेशान्तरविभागो न जन्यते इति वाच्यम्। आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागाऽसंभवात्।**

प्रश्न—घट का कारण जो कपालद्वय विभाग उससे ही घटात्मकद्रव्य के नाश के पहिले ही देशान्तर ( कपाल और आकाश ) का विभाग क्यों नहीं हो जाता है।

उत्तर—आरम्भ संयोग का प्रतिद्वन्द्वी जो विभाग उस विभाग वाले कपालादि रूप अवयवी में जब तक घटादि रूप मौजूद है तब तक उन कपालों का देशान्तर ( आकाश ) से विभाग नहीं हो सकता है।

---

न चावयवकर्मोत्पत्तिसमयेऽ वयविन्यपि तदवच्छेदेन कर्मोत्पत्तेरावश्य-
कत्वेनाऽवयवद्वयविभागोत्पत्तिकालेऽ वयविकर्माधीनस्यावयविन्याकाशादिदेशवि-
भागस्योत्पादान्न तदुत्तरक्षणे कारणाकारणविभागजोऽवयविन्याकाशादिदेशविभाग,,
विभागवति समानवृत्तिकविभागान्तरानुत्पत्तेरिति वाच्यम्। तथापि यत्रावयवकर्मो-
त्पत्तिसमयेऽ वयव्युत्पत्तिः तत्रावयविनि आरम्भकसंयोगनाशकाले कारणाकारण-
विभागजानन्ताकाशात्मादिविभागव्यक्तिकल्पनाया दुर्वारत्वात्। न च कारणमात्र-
विभागस्य कारणाकारणविभागं प्रति अनन्तकारणत्वकल्पनां तदुभयनिष्ठकारणत्व-
कार्यतावच्छेदकानन्तवैजात्यकल्पनां चापेक्ष्य विभागव्यक्तिकल्पनैव लघीयसीति
वाच्यम्। अनन्तविभागतद्ध्वंसतदुभयकार्यकारणभावकल्पनामपेक्ष्य कारणमात्र-
विभागकारणाकारणविभागयोरनन्तकार्यकारणभावादिकल्पनाया एव ज्यायस्त्वादिति।
इदमत्रावधेयम्। कर्मनिष्ठातिरिक्तवैजात्यकल्पनामपेक्ष्य लाघवात् कर्म-
त्वेनैवाऽविरोधिविभागजनकत्वस्योचितत्वात्। अनन्तविभागकल्पनायाः फलमुख-
त्वात्। आरम्भकसंयोगविरोधिविभागजनककर्मस्थले आरम्भकसंयोगविरोध्यवयव-
द्वयविभागस्यैवाऽवयवाकाशात्मादेर्विभागं प्रति जनकत्वाभ्युपगमे यत्रारम्भकसंयोग-
विरोध्यवयवद्वयविभागोत्पत्तिकाले खण्डावयव्युत्पत्तिः तत्र तदुत्तरक्षणे तदवयविनि
कारणाकारणसंयोगजानन्ताकाशात्मादिदेशसंयोगव्यक्तीनां दुर्वारतया विभागव्यक्ति-
कल्पनागौरवस्य तुल्यत्वात्। कारणमात्रविभागकारणाकारणविभागयोरनन्तकार्य-
कारणभावादिकल्पनायाः पुनरधिकत्वात्।

न च तत्रावयवकर्मण एव कारणाकारणविभागजनकत्वाभ्युपगमे उक्तस्थले इति
विनश्यदवस्थाऽवयवाकाशसंयोगेभ्योऽवयविन्याकाशसंयोगव्यक्तयो दुर्वारा
वाच्यम्। कारणाकारणसंयोगस्य कार्यसद्भावेन हेतुत्वोपगमादेव सद्धारणसम्भवात्,
तस्मात्प्राचीनमतमेव साधीय इति विभावनीयम्।

अथोक्तरीत्या कपालद्वयविभागस्य कपालाकाशविभागाऽसमवायिकारणत्व-
स्वीकारे आरम्भकसंयोगनाशकाले एव कपालाकाशविभागः कथं नोत्पद्यते इत्या-
शंकते। नचेति। कारणविभागेनैवेति। कपालद्वयविभागेनैवेत्यर्थः। द्रव्यना-

**शात्पूर्वं**—घटात्मकद्रव्यनाशात्पूर्वं। **देशान्तरविभागं**—कपालाकाशविभागं। **जन्यते** इति कारणसत्वादिति शेषः। तथा च पूर्वोक्तं घटनाशस्ततः कपालाकाशविभागो जन्यते इत्यसंगतमिति भावः। **आरम्भकसंयोगप्रतिद्वन्द्विविभागवत** इति। कपालद्वयविभागवत इत्यर्थः। अनेन कपालाकाशविभागाऽसमवायिकारणसत्वं सूचितम्। **अवयवस्ये ति**। कपालस्येत्यर्थः। अनेन तत्समवायिकारणसत्वं सूचितम्। **सतिद्रव्ये**—सतिघटे। अनेन द्रव्याभावरूपनिमित्तकारणासत्वं सूचितम्। **देशान्तरविभागाऽसंभवादिति**। कपालाकाशविभागऽसंभवादित्यर्थः। तथा च समवायिकारणाऽसमवायिकारणयोः सत्वेपि तत्र समवायेन द्रव्यस्य प्रतिबन्धकतया तदभावरूपकारणाभावान्न घटनाशात्पूर्वं कपालाकाशविभागापत्तिरिति भावः।

अथ कारणमात्रविभागकारणाकारणविभागयोः केन रूपेण कार्यकारणभावः। न च विभागत्वेन कारणमात्रविभागत्वेन कार्यकारणभावः। कर्मजविभागे कारणाकारणविभागजकार्याकार्यविभागे च व्यभिचारापत्तेः। न च विलक्षण विभागं प्रति कारणमात्रविभागः कारणम्, वैलक्षण्यं च आरंभकसंयोगविरोधिविभागजन्यतावच्छेदकतया सिद्धः कर्मजविभागादिव्यावृत्तोजातिविशेष इति वाच्यम्। तत्र कालिकसामानाधिकरण्यं प्रत्यासत्तिः, समवायघटितसामानाधिकरण्यं वा—**नाद्यः**—असमवायिकारणत्वानुपपत्तेः, कपालद्वयविभागतस्तु शाखाद्योरपि विभागापत्तिः, अनन्तसंसारे सर्वदैवावश्यं कुत्रचिदारम्भकसंयोगप्रतिद्वन्द्विविभागसत्वेनाऽव्यावर्त्तकतया वैलक्षण्याभ्युपगमस्य तादृशकार्यकारणभावस्य व्यर्थत्वापत्तेश्च। **न द्वितीयः**—द्रव्यनाशककपालद्वयविभागजकपालशाखादिविभागस्य शाखादावपि सत्वेन व्यभिचारापत्तेः, द्रव्यनाशककपालद्वयविभागात् सक्रियकपालस्येव तादृशविभागवतोनिष्क्रियकपालस्यापि शाखादिदेशाद्विभागापत्तेश्च। **अत्रनव्याः**। द्रव्यारम्भकसंयोगविरोधिविभागव्यक्तीः प्रातिस्विकरूपेणोपादाय तत्तद्विभागव्यक्तित्वेन कारणता, तत्तद्विभागव्यक्त्यधीनविभागत्वेन च कार्यता वाच्या। यत्र तत्तद्देशवृत्तित्वविशिष्टसमवायसंबन्धेन तत्तद्विभागोत्पत्तिः तत्र तत्तद्देशवृत्तित्वविशिष्टसमवायसम्बन्धेन तत्तद्विभाग इति स्यमानाधिकरण्यं प्रत्यासत्तिः। कालिकसामानाधिकरण्यमात्रस्य प्रत्यासत्तित्वेऽसमवायिकारणत्वानुपपत्तेः।

द्रव्यनाशककपालद्वयविभागजकपालशाखादिविभागस्य शाखादावप्युत्पादात्तत्र व्यभिचारवारणाय कार्यदिशिसंबन्धकोटौ विशिष्टान्तं समवायविशेषणम्। द्रव्यनाशककपालद्वयविभागात् सक्रियकपाल इव तादृशविभागवति निष्क्रियकपालेपि तद्देशवृत्तित्वविशिष्टसमवायेन शाखादिदेशाद्विभागापत्तिवारणाय कारणदिशिसंबन्धकोटौ विशिष्टान्तं समवायविशेषणम्। तत्तद्देशपदं च सर्वत्र सक्रियावयवपरम्। तत्तद्विभागाधीनविभागत्वं च तत्तद्विभागव्यक्तिजन्यतावच्छेदकतयासिद्धोजातिविशेषः. नातोऽधीनत्वस्य दुर्वचत्वमिति प्राहुः।

**द्वितीयस्तावत्—यत्र हस्तक्रियया हस्ततरुविभागः ततः शरीरेपि विभक्तप्रत्ययोभवति, तत्र च शरीरतरुविभागे हस्तक्रिया न कारणं व्यधिकरणत्वात् । शरीरे तु क्रियानास्त्येव अवयविकर्मणोयावदवयवकर्मनियतत्वात् ।**

द्वितीयस्तावत् । जहाँ हस्तक्रिया से हस्ततरु विभाग हुवा, तब उस हस्ततरु विभाग से शरीर का भी तरु से विभाग होता है वहाँ शरीर और तरु ( वृक्ष ) के विभाग में हस्तक्रिया कारण नहीं है क्योंकि दोनों व्यधिकरण ( भिन्न-भिन्न अधिकरण में रहने वाले ) हैं। ( अर्थात् हस्तक्रिया शरीरतरु विभाग के प्रति कारण तब हो सकती थी यदि दोनों का सामानाधिकरण्य होता क्योंकि "ययो. सामानाधिकरण्यंतयोरेव कार्यकारणभाव:" ) और शरीर में स्वतन्त्र क्रिया है ही नहीं, क्योंकि सम्पूर्ण अवयवों के कर्मों से नियत अवयवी का कर्म होता है, अर्थात् शरीर आदि रूप अवयवी के प्रत्येक अवयव में जब तक कि क्रिया न होगी तब तक अवयवी में क्रिया कदापि नहीं हो सकती है।

---

हेत्वहेतुविभागजविभागमाह। **द्वितीयस्तावदिति** । कारणाकारण विभाग जन्यकार्याकार्यविभागो यथा इत्यर्थ. । **शरीरेपि विभक्तप्रत्यय** इति । इमौ "शरीरतरू" विभक्तौ इत्याकारकइत्यर्थः । **तत्र चेति** । निरुक्तप्रत्ययेचेत्यर्थः । सप्तम्यर्थोविषयत्वं, विभागेऽन्वितम् । एवकारार्थकचशब्दस्य नञाऽन्वयः । **न कारणमिति** । नैवकारणमित्यर्थः । **व्यधिकरणत्वादिति** । हस्तक्रियायाः समवायेन शरीराऽवृत्तित्वादित्यर्थः । ननु शरीरक्रियैव शरीरतरुविभागे कारणमस्तु अत आह । **शरीरेत्विति** । अवधारणार्थकस्तुशब्दोनास्तीत्युत्तर योजनीयः **नास्तीति** । नास्त्येवेत्यर्थः । तत्र हेतुमाह । **अवयविकर्मण** इति । घटादिकर्मण इत्यर्थः **यावदवयवकर्मनियतत्वादिति** । यावदवयवघटकप्रत्येकावयवसमवेता यावत्य. क्रियास्ताचत्प्रत्येकनिरूपितजन्यतावत्वादित्यर्थः । तथाच शरीरोद्यवयविसमवेतं कर्म शरीराद्यवयवयावद्घटकप्रत्येकसमवेतयावत्क्रियाप्रत्येकनिरूपितजन्यतावत् शरीरादिसमवेतकर्मत्वात्, यत्र शरीराद्यवयविसमवेतकर्मत्वं तत्र तादृशजन्यत्वमिति व्याप्तिः । एकावयवसकर्मणोदैशिकाऽव्याप्यवृत्तित्वनिवारणायोक्तव्याप्तेरावश्यकतया यत्किंचिदवयवावच्छेदेनाऽभिघातसमवेतक्रियामात्रेण शरीरे न क्रियोत्पत्तिसंभवः । समवायसंबन्धेन दृश्यायां घटश्चलतीति प्रत्ययस्य परंपरयाऽवयवकर्मविषयकत्वात् अवयवोत्तरसंयोगालत्प्रत्ययस्य भ्रमत्वात्, कर्मणा विनाऽप्यवयवपूर्वदेशविभागोऽवयवोत्तरसंयोगाभ्यामेव घटपूर्वदेशविभागतदुत्तरसंयोगयोः संभवात् । अत एव क्वचित्कर्मापि अव्याप्यवृत्ति यत्र यत्किंचिदवयवावच्छेदेनाऽवयविनि अभिघातादिस्तत्रावयविनि तदवयवावच्छेदेन कर्मोत्पत्तौ बाधकाभावात्, अवच्छेदकतासंबन्धावच्छिन्नाऽभि-

अतस्तत्र कारणाकारणविभागेन कार्याकार्यविभागोजन्यते इति । अत एव विभागोगुणान्तरम्, अन्यथा शरीरे विभक्तप्रत्ययो न स्यात् अतः संयोगनाशेन विभागो नान्यथासिद्धोभवति ॥ १२० ॥

## इति विभागनिरूपणम् ।

प्रश्न—शरीरतरु विभाग के प्रति न हस्तक्रिया कारण है क्योंकि व्यधिकरण होने से । शरीर में कोई स्वतन्त्र क्रिया ही नहीं है तब फिर शरीर तरु विभाग के प्रति कौन कारण है ।

उत्तर—इसी लिये वहाँ कारण और अकारण के विभाग से ( अर्थात् शरीर का कारण जो हस्त, और शरीर का अकारण जो तरु उन दोनों के विभाग से ) कार्य और अकार्य का विभाग ( अर्थात् हस्त का कार्य जो शरीर और अकार्य जो तरु उन दोनों का विभाग ) होता है यही मानना पड़ेगा ।

इसी कारण से विभाग को ( संयोगध्वंसरूप न मानकर ) गुणान्तर ही मानना होगा । अन्यथा ( संयोगध्वंसरूप विभाग को मानने पर ) शरीर-तरु विभाग नहीं बनेगा । अतः संयोगनाश ( ध्वंस ) से विभाग अन्यथा सिद्ध नहीं हो सकता है ॥११६–१२०॥

---

घाताभावस्य स्वाश्रयसमवेतत्वसंबन्धेन प्रतिबन्धकत्वकल्पने, यत्किंचिदवयवावच्छिन्नाभिघाताद्यिव्यावृत्तवैजात्येन जनकत्वकल्पने वा महागौरवात् । अतएवाग्रे वृक्षश्चलति न मूले इत्याद्यनुभवोपि उपपद्यते इत्यपास्तम् । यदि हि तत्रावयविनि कर्मोत्पादस्तदा सर्वावयवावच्छेदेनैव कुतो न तदुत्पादः, विनिगमकाभावात्, इष्टापत्तौ च कुतोऽव्याप्यवृत्तित्वम्, कुतोवाऽभिघातादिशून्यावयवावच्छेदेन चक्षुरादिसंयोगेपि न तत्कर्मणः प्रत्यक्षम् । न च समानावच्छेदकत्वप्रत्यासत्त्याऽभिघातादेः कर्मजनकतया यदवयवावच्छेदेनाभिघातः तदवच्छेदेनैवेव कर्मोत्पत्तिरिति कारणताकल्पनमेव लघु इति वाच्यम् । क्रियाया अव्याप्यवृत्तित्वे अवच्छेदकभेदेन पूर्वसंयोगोत्तरसंयोगयोरनन्तप्रतिवध्यप्रतिबन्धकभावापत्त्या तदपेक्षयातिरिक्तप्रतिवध्यप्रतिबन्धकभावकल्पनाया लघुत्वात्, तच्च तद्विचारावसरे एव स्फुटम् । अवयविकर्मोत्पत्तोयविदवयवकर्मोत्पत्तिनियततया विनापि प्रतिबन्धकत्वादिकल्पनं यावदवयवकर्मोत्पत्तिसामग्रीविरहादेव तत्रावयविनि कर्मानुत्पादसंभवाच्च । अग्रे वृक्षश्चलतीति प्रत्ययाऽवयवकर्मविषयक एव । नचैवं संयोगादेरपि अव्याप्यवृत्तित्वविलोपापत्तिः, अग्ने वृक्षः संयोगीत्यादिप्रत्ययस्यावयवसंयोग एव विषय इत्यस्य सुवचत्वादिति वाच्यम् । अवयवसंयोगेऽवयविन्यपि संयोगजसंयोगस्य दुर्वारत्वात् । कार्यकारणयोः सहोत्पत्त्यसंभवेनावयविसंयोगोत्पत्तोयविदवयवसंयोगोत्पत्तिनियमस्य वक्तुमशक्यत्वादिति संक्षेपः ।

अतः इति । शरीरे कर्मविरहादित्यर्थः । कर्मणोव्याप्यवृत्तित्वादिति यावत् । तत्र । शरीरे । कारणाकारणविभागेन । हस्ततरुविभागेनैव । कार्याकार्यविभागः । शरीरतरुविभागः । जन्यते इति । अवश्यं स्वीकार्य इत्यर्थः । तथा च विभागजविभागसिद्धिरिति भावः ।

परत्वंचाऽपरत्वं च द्विविधं परिकीर्तितम् ।
दैशिकं कालिकं चेति मूर्त एव तु दैशिकम् ॥१२१॥

पराऽपरव्यवहारनिमित्ते परत्वापरत्वे निरूपयति । परत्वंचापरत्वं-चेति । दैशिकमिति । १२१ ।

---

तदुभयसमवेतसंयोगनाश एव तदुभयोर्विभक्तप्रत्ययविषयो न तु विभागो गुणान्तरं इमौ विभक्तौ इत्यस्यायिइमौ एतदुभयसमवेतसंयोगनाशवन्तौ इत्यर्थः। न च ययोराश्रययोर्नाशानन्तरं तत्समवेतसंयोगनाशः, तयोर्विभक्तप्रत्ययापत्तिरिति वाच्यम्। द्रव्यध्वंसाजन्यत्वस्य नाशे विशेषणीयत्वात्। आश्रयनाशानन्तरं सति संयोगनाशज्ञाने विभागप्रत्यये इष्टापत्तिरेव। न च तथापि एकसंयोगनाशानन्तरं पुनः संयुक्तेपि विभक्तप्रत्ययप्रसंगोदुर्वार इति वाच्यम्। स्वप्रतियोगिसमानाधिकरणसंयोगानधिकरणकालविशिष्टत्वस्य संयोगनाशे विशेषणीयत्वात्। वस्तुतः सामानाधिकरण्यमपहाय व्यापकत्वं निवेशनीयम्। तेन द्रव्यान्तरे सयोगदशायामपि विभक्तप्रत्ययापपत्ति। व्यापकता चाऽवच्छेदकतासंबन्धेन। तेनाऽवच्छेदकान्तरे तत्सयोगसत्वेपि तेन समं विभक्तप्रत्ययोनानुपपन्नः। न चैवमुत्तरसंयोगानन्तरं निवृत्तेपि कर्मणि विभक्तप्रत्ययप्रसंग इति वाच्यम्। सति निरुक्तसंयोगनाशज्ञाने इष्टत्वात्। स्वजनककर्मविशिष्टत्वेन वा संयोगोविशेषणीयः। न च निरुक्तसंयोगनाशो वा विभागः-स्वप्रतियोगिव्यापकविभागानधिकरणकालविशिष्टोविभागप्रागभावो वा संयोग इत्यत्र विनिगमकाभावाद्विभागसिद्धिरिति वाच्यम्। घटपटयोर्विभिन्नदेशायामपि भाविविभागप्रागभावमादाय संयुक्तप्रत्ययप्रसंगात्। कदाचिदपि अविभक्तयोरपि त्वगिन्द्रियशरीरयोः संयोगप्रत्ययाच्चेति विभागस्य संयोगनाशरूपत्ववादिनां मतं निरसितुं प्रथमतः स्वसिद्धान्तंव्याचष्टे। अतएवेति। विभागजविभागाङ्गीकारादेवेत्यर्थः। विभागः-विभागपदार्थः। गुणान्तरमिति। सावधारणम्। न संयोगध्वंसरूप इति यावत्। अन्यथा। संयोगध्वंसरूपत्वे। शरीरे-अन्त्यावयविमात्रे। विभक्तप्रत्ययोनस्यादिति। शरीरं विभक्तं-शरीरतरू विभक्तौ इति वा प्रत्ययो न स्यादित्यर्थः। यत्र हस्तक्रियया हस्ततरुविभागः तत्र शरीरे विभक्तप्रत्ययः सर्वानुभवसिद्ध स च विभागं ( विषयं ) विनानोपपद्यते। न च शरीरतरुसंयोगनाश एव तद्विषयः। विभागानंगीकारे शरीर तु न हस्तक्रिया शरीरतरुसंयोगनाशिका व्यधिकरणत्वात्। न हि तत्र हस्तक्रिया शरीरतरुसंयोगनाशिका व्यधिकरणत्वात्, अतस्तत्र हस्ततरुविभागेन शरीरतरुविभागोजन्यते इत्येव वाच्यम्। तथा च विभागसिद्धिः। तथा च प्रतियोगितासंबन्धेन नाशाऽजन्यसंयोगनाशं प्रति "आश्रयनाशनाश्यव्यावृत्तप्रतियोगितासंबन्धेन सामान्यतः नाशं प्रति वा" संयोगनिष्ठफलोपधायकतासंबन्धेन विभागः कारणम्। न हि विभागमन्तरेण सति आश्रयेऽन्यसंयोगनाशकारणं संभवतीति। अतः-विभक्तप्रत्ययानुपपत्तेः। विभागोनान्यथासिद्धो भवतीति। विभागनिराकरणं न संभवतीत्यर्थः॥ १२० ॥

इतिविभागनिरूपणम्।

परत्वं मूर्तसंयोगभूयस्त्वज्ञानतोभवेत्
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥१२२॥

दैशिकंपरत्वंबहुतरमूर्तसंयोगान्तरितत्वज्ञानादुत्पद्यते। एवं तदल्पीयस्त्वज्ञानादपरत्वमुत्पद्यते। अत्राऽवधित्वार्थं पञ्चम्यपेक्षा, यथा पाटलिपुत्रात्काशीमपेक्ष्य प्रयागः परः। पाटलिपुत्रात्कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति। १२२।

पर तथा अपर व्यवहार के निमित्तकारण परत्व अपरत्व का निरूपण करते हैं "परत्वं चापरत्वं च" इस ग्रन्थ से। वह दैशिक और कालिक भेद से दो प्रकारक है ॥ १२१ ॥ जहां दो पदार्थों के बीच में बहुत से मूर्त्तपदार्थों का संयोग हो जावे उस संयोग के अन्तरितत्व ज्ञान से उत्पन्न होने वाला परत्व दैशिकपरत्व कहलाता है। और अल्पतरित्व ज्ञान मूर्त्तपदार्थों के संभोगन्तरितत्वज्ञान से उत्पन्न होने वाला परत्व दैशिक अपरत्व कहलाता है। जैसे–पटना से काशी की अपेक्षया प्रयाग पर ( अधिक दूर ) है। और पटना तथा कुरुक्षेत्र के बीच में जितने मूर्त्तपदार्थों का संयोग है–उसकी अपेक्षया पटना तथा प्रयाग के बीच अल्पतरमूर्त्तपदार्थों का संयोग होने के नाते प्रयाग अपर ( नजदीक ) है। "पाटलिपुत्रात्" यहाँ पर अवधिस्वरूप अर्थ के ज्ञानार्थ अवधिवाचकपञ्चम्यन्तपद का प्रयोग आवश्यक है ॥ १२२ ॥

---

निरूपयतीति। अयमस्मात्परः, अयमस्मादपरइति इत्याकारकशब्दनिष्ठप्रतिपाद्यतासंबन्धावच्छिन्नकारणताश्रयीभूतं परत्वं अपरत्वं च निरूपयतीत्यर्थः। लक्षणं तु तादृशकारणतावत्वम्, तादृशकारणतासमानाधिकरणरूपाऽवृत्तिजातिमत्वं वा। तादृशकारणतावच्छेदकतया, परत्वाऽपरत्वपदशक्यतावच्छेदकतया च परत्वत्वादिजातिसिद्धिः। तत्र परत्वमपरत्वं च द्विविधम्। दैशिककालिकभेदात्। दैशिकं परत्वं दूरत्वव्यवहारकारणम्। कालिकं च ज्येष्ठत्वव्यवहारकारणम्। एवं दैशिकमपरत्वं सन्निकृष्टव्यवहारकारणम्। कालिकं कनिष्ठव्यवहारकारणम्। मूले—मूर्त एव तु दैशिकम्। दैशिकं परत्वमपरत्वं च मूर्तद्रव्ये एव इति तदर्थः। विभुद्वयसंयोगाऽस्वीकारेण विभौ दिक्संयोगरूपाऽसमवायिकारणाभावादिति भावः। वस्तुतो विजातीयदिक्संयोगस्य तत्राभावो बोध्यः। दैशिकपरत्वस्य निमित्तकारणमाह। बहुतरमूर्तसंयोगान्तरितत्वज्ञानादिति। मूर्तसंयुक्तसंयुक्तादिक्रमेण संयोगबहुतरत्वज्ञानादित्यर्थः। विप्रकृष्टत्वज्ञानादिति यावत्। विप्रकृष्टोऽयमिति ज्ञानमपेक्षाबुद्ध्यात्मकम्। तदल्पीयस्त्वज्ञानादिति। संयोगाल्पीयस्त्वज्ञानादित्यर्थः। दैशिकपरत्वं दूरत्वव्यवहारकारणम्। कालिकं च ज्येष्ठत्वव्यवहारकारणम्। एवं दैशिकमपरत्वं सन्निकृष्टव्यवहारकारणम्। कालिकं च कनिष्ठत्वव्यवहारकारणम्। एकस्यां दिशि अवस्थितयोः पिण्डयोः सन्निकृष्टमवधिं कृत्वाऽयमस्माद्विप्रकृष्ट इत्येवं परत्वाधारे बुद्धिरुत्पद्यते। एवं विप्र-

तयोरसमवायी तु दिक्संयोगस्तदाश्रये
दिवाकरपरिस्पन्दभूयस्त्वज्ञानतोभवेत् ॥१२३॥
परत्वमपरत्वन्तु तरीयाल्पत्वबुद्धितः
अत्र त्वसमवायी स्यात्संयोगः कालपिण्डयोः ॥१२४॥
अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः ।

तयोः देशिकपरत्वाऽपरत्वयोः । असमवायी–असमवायिकारणम् तदाश्रये–देशिकपरत्वापरत्वाश्रये । दिवाकरेति । अत्र परत्वमपरत्वं च कालिकं ग्राह्यम् । यस्य सूर्यपरिस्पन्दापेक्षया यस्य सूर्यपरिस्पन्दोऽधिकः स ज्येष्ठः, यस्य न्यूनः स कनिष्ठः । १२३

कालिकपरत्वापरत्वे जन्ये एव । अत्र–कालिकपरत्वापरत्वयोः । १२४

तेषां–कालिकदैशिक- परत्वाऽपरत्वानाम् ।

इति परत्वाऽपरत्वनिरूपणम् ।

और दैशिक परत्वापरत्व का जो असमवायिकारण दैशिकपरत्व-अपरत्व के आश्रय (देश) के साथ दिशा का संयोग उसे माना है । कालिक परत्व–अपरत्व दिखलाते हैं–"दिवाकर" इत्यादि ग्रन्थ से । जिस पुरुष के उत्पत्तिकाल से लेकर वर्त्तमानकाल पर्यन्त होने वाली सूर्य क्रिया की अपेक्षा जिस दूसरे पुरुष की उत्पत्तिकाल से लेकर वर्त्तमानकालपर्यन्त होने वाला सूर्यपरिस्पन्द अधिक है वह, ज्येष्ठ कहलाता है । और जिसके न्यून है वह कनिष्ठ है ॥ १२३-१२४ ॥

---

कृष्टमवधिं कृत्वाऽयमस्मादपर इत्यपरत्वाधारे बुद्धिरुत्पद्यते = तदेवाह । अत्रावधित्वार्थमिति । १२२ "तयोरसमवायी तु" इति मूले तच्छब्दस्य परत्वाऽपरत्वसामान्यपरत्वे दिक्संयोगस्य कालिकपरत्वादौ असमवायिकारणत्वाभावादसंगतिः, अतः षष्ठ्यन्ततत्पदं परत्वादिविशेषपरतया व्याचष्टे । दैशिकपरत्वापरत्वयोरिति । दैशिकपरत्वाऽपरत्वाश्रये इति । तथा च दिक्पिण्डसंयोगः दैशिकपरत्वाऽपरत्वयोरसमवायिकारणमिति भावः ।

अयं भावः । एकस्यां दिशि अवस्थितयोः पिण्डयोः संयुक्तसंयोगाल्पत्वलक्षणसन्निकृष्टत्वाश्रयमवधिं कृत्वा संयुक्तसंयोगबहुत्वलक्षणविप्रकृष्टत्वाश्रये द्रष्टुर्विप्रकृष्टोऽयमिति बुद्धिरुत्पद्यते, तां बुद्धिमपेक्ष्य परपिण्डेन सह दिक्संयोगात्परत्वोत्पत्तिः । तत्र परत्वाश्रयीभूतं पिण्डं समवायिकारणम् । पिण्डेन सह दिक्संयोगोऽसमवायिकारणम् । संयुक्तबहुत्वलक्षणविप्रकृष्टत्वज्ञानमपेक्षाबुद्ध्यात्मकं निमित्तकारणम् ।

एवं विप्रकृष्टमवधिं कृत्वा एतस्मात्सन्निकृष्टोयमिति बुद्धि रुत्पद्यते तां बुद्धि-

मपेक्ष्याऽपरपिण्डेन सह दिक्संयोगादपरत्वोत्पत्तिः । तत्राऽपरत्वाश्रयीभूतं पिण्डं समवायिकारणम् । पिण्डेन सह दिक्संयोगोऽसमवायिकारणम् । संयुक्तसंयोगाल्पत्व-लक्षणसन्निकृष्टत्वज्ञानमपेक्षाबुद्ध्यात्मकं निमित्तकारणमिति ।

कालिकपरत्वादौ असमवायिकारणनिमित्तकारणे आह । मूले—**दिवाकरेति** । **अत्र** । कारिकायां । सप्तम्यर्थोघटकत्वम् । एतत्कारिकाघटकमित्यर्थः । **कालिकं-ग्राह्यमिति** । तेन पूर्वं दैशिकपरत्वादेरेवोपस्थितत्वेपि न क्षतिः । मूलस्थपरत्वादिश-ब्दस्य कालिकपरत्वाद्यर्थकत्वात् । **यस्य न्यून** इति यस्य सूर्यपरिस्पन्दापेक्षया इत्यादिः । **जन्यद्रव्ये एवेति** । नित्ये तत्पूर्वोत्पन्नत्वरूपज्येष्ठत्वबुद्धेः, तदुत्तरोत्पन्नत्व-रूपकनिष्ठत्वबुद्धेः ( निमित्तकारणस्य ) कालसंयोगरूपाऽसमवायिकारणस्य चाऽभा-वादिति भावः । मूले—**अत्र त्विति** । कालिकपरत्वादावित्यर्थः । **असमवायी स्यादिति** । असमवायीअस्तीत्यर्थः । **संयोगः कालपिण्डयोरिति** । कालजन्य-द्रव्ययोरित्यर्थः । तथा च कालिकपरत्वादिकंप्रतिजन्यद्रव्यकालसंयोगस्यासमवायिका-रणतया जन्यगुणादौ समवायेन तादृशाऽसमवायिकारणाभावेन न तादृशपरत्वाद्यु-त्पत्तिरिति भावः । इदमुपलक्षणम् । भावकार्यं प्रति द्रव्यस्यैव समवायिकारणतया जन्यगुणादौ तादात्म्येन द्रव्याभावान्न गुणोत्पत्त्यापत्तिरित्यपि बोध्यम् ।

अयंभावः । एकस्य द्रष्टुरनियतदिगवस्थितयो र्युवस्थविरयोर्युवानमवधिं कृत्वा स्थविरे बहुतरतपनपरिस्पन्दान्तरितजन्यत्वरूप विप्रकृष्टत्वबुद्धिः ( अयमस्मा-द्विप्रकृष्टइतिबुद्धिर्वा ) उत्पद्यते तांबुद्धिमपेक्ष्य स्थविरकालसंयोगात्स्थविरे परत्वो-त्पत्तिः । तत्रपरत्वाश्रयीभूतं पिण्डं समवायिकारणम् । पिण्डेन सह कालसंयो-गोऽसमवायिकारणम् । अस्मात्प्रचुरतरकालजन्मेत्यपेक्षाबुद्धिर्निमित्तकारणम् ।

एवं यून्यपि स्थविरमवधिं कृत्वा अल्पतरतपनपरिस्पन्दान्तरितजन्मत्वरूप-सन्निकृष्टत्वबुद्धि "अयमस्मादल्पतरतपनपरिस्पन्दान्तरितजन्मेत्याकारिकाऽपेक्षा-बुद्धि" उत्पद्यते ततो यूना सह कालसंयोगात् यूनि अपरत्वोत्पत्तिः । तत्राऽपरत्वा-श्रयीभूतं पिण्डं समवायिकारणम् । पिण्डेन सह कालसंयोगोऽसमवायिकारणम् । तादृशाऽपेक्षाबुद्धिर्निमित्तकारणमिति । १२३-१२४ ।

मूले-**अपेक्षाबुद्धिनाशेनेति** । यथा आदौ अपेक्षाबुद्धिः ततः परत्वोत्पत्तिः । ततः परत्वपरत्वत्वे इति निर्विकल्पकम् । ततः परत्वत्वविशिष्टपरत्वबुद्धिरपेक्षाबुद्धि-नाशश्च । ततः परत्वत्वविशिष्टपरत्वविशिष्टबुद्धिः परत्वनाशश्चाऽपेक्षाबुद्धिनाशा-दिति । इदमुपलक्षणम् । **संयोगनाशादपि** तन्नाशः । यथा अपेक्षाबुद्धिसमकालं परत्वाधारे कर्म तत्कर्मणा दिक्पिण्डयोर्विभागः परत्वोत्पत्तिश्च । ततः परत्वतत्व-योर्निर्विकल्पकं दिक्पिण्डयोः संयोगनाशश्च । ततोयस्मिन् काले परत्वत्वविशिष्ट-परत्वबुद्धिः तदैव दिक्पिण्डसंयोगनाशात्परत्वनाशोऽपेक्षाबुद्धिनाशश्चेति । **एवमा-श्रयनाशादपि** । यथापरत्वाश्रयाऽवयवे कर्म तयोऽवयवविभागकालेऽपेक्षाबुद्ध्यु-

बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः ॥१२५॥

अथावशिष्टोऽप्यपरः प्रकारः परिदृश्यते ।

अप्रमा च प्रमाचेति ज्ञानं द्विविध मिष्यते ॥१२६॥

तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता ।

क्रमप्राप्तां बुद्धिं निरूपयति–बुद्धेरिति ॥१२५–१२६॥

तत्राप्रमां निरुपयति–तच्छून्ये इति तदभाववति तत्प्रकारकं ज्ञानं भ्रम इत्यर्थः । तत्प्रपञ्चो ऽप्रमाप्रपञ्चः ॥१२७॥

क्रमप्राप्त बुद्धि का निरूपण करते हैं–"बुद्धेः प्रपञ्चः" इत्यादि ग्रन्थ से । अप्रमाज्ञान का निरूपण करते हैं–तच्छून्य में जो तद्बुद्धि वही अप्रमा ज्ञान है ॥१२५-१२६-१२७॥

---

त्पत्तिः । ततोऽवयवसंयोगनाशपरत्वोत्पत्ती । ततो द्रव्यनाशपरत्वतत्वनिर्विकल्पके । ततः परत्वनाश इति । एवं द्वाभ्यां द्वाभ्यां सर्वेभ्यश्च विनाशः सप्तधा आचार्यैरुक्तोवेदितव्यः ।

वस्तुतः परत्वाऽपरत्वयोरेव मानाभावः । विप्रकृष्टत्वसन्निकृष्टत्वरूपसंयुक्तभूयस्त्व-तदल्पीयस्त्वयोरेव दैशिकपरत्वाऽपरत्वव्यहारः । तज्ज्येष्ठत्वं तत्प्रागभावाधिकरणक्षणवृत्तित्वम् । तदुत्पत्तिक्षणवृत्तिध्वंसप्रतियोगिसमयवृत्तित्व वा । तत्कनिष्ठत्वं च तदधिकरणक्षणवृत्तिप्रागभावप्रतियोगित्वम् । तदधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वमिति विभावनीयम् ।

इति परत्वाऽपरत्वनिरूपणम् ।

क्रमप्राप्तामिति । उद्देशक्रमप्राप्तामित्यर्थः । प्रसंगसंगत्येति भावः । बुद्धिर्ज्ञानम् । सांख्यास्तु सत्वरजस्तमसां साम्यावस्था प्रकृतिः, सा चैकैव । पुरुषास्तु भिद्यन्ते । प्रकृतेः सत्वप्रधानं प्रथमं परिणामं महदाख्यं अन्तःकरणविशेषं बुद्धिमाहुः । बुद्धेर्विषयाकारपरिणतिभेदः घटः पटः इत्यादिज्ञानमाहुः । तन्न । मनोभिन्नेऽन्तःकरणे मानाभावात् । यदि च बुध्यतेऽनेनेति व्युत्पत्त्या बुद्धिपदेन मन इत्युच्यते तदा इष्टापत्तिः । बुद्धिकरणत्वस्य मनसि स्वीकारात् । किं च मया बुद्धः अहं जानामीत्यनुव्यवसायवलाल्लौकिकप्रत्यक्षविषयस्य बुद्ध्यादेर्नान्तःकरणरूपत्वम्, अन्तःकरणस्याऽतीन्द्रियत्वात् । अत एव न धर्मः, तस्याऽऽत्मधर्मतया प्रत्यक्षसिद्धत्वात् ।

सा चेयं बुद्धिरतीन्द्रियेति भाट्टाः । स्वप्रकाशेति प्राभाकराः । बुद्धिर्द्विविधा विद्याचाऽविद्याचेति वैशेषिकाः इति संक्षेपः ।

मूले-बुद्धेः ज्ञानस्य । प्रपञ्चः विस्तारः । प्रागेव आत्मनिरूपणावसरे एव । विनिरूपितः कथितः । तथाहि बुद्धिर्द्विविधा नित्या अनित्या च । नित्या ईश्वरस्य । अनित्या जीवानाम् । पुनश्च सा द्विविधा स्मृतिरनुभवश्च । प्रत्यक्षानु-

तत्प्रपञ्चो विपर्यासः संशयोऽपि प्रकीर्त्तितः ॥१२७॥

आद्योदेहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः ।

भवेन्निश्चयरूपा या ।

आद्य इति। विपर्यास इत्यर्थः। शरीरादौ निश्चयरूपं यदात्मत्व-प्रकारकं ज्ञानं गौरोऽहमित्याकारम्, एवं शङ्खादौ 'पीतःशङ्खः' इत्याकारकं यज्ज्ञानं निश्चयरूपं तद्भ्रम इति ।

भ्रम का उदाहरण दिखलाते हैं–"आद्योदेहेस्वात्बुद्धिः" इत्यादि से। शरीर आदि में निश्चयात्मक जो आत्मत्वप्रकारक "गौरोऽहम" इत्याकारक ज्ञान, एवं शङ्ख आदि में जो पीतः शंखः" इत्याकारक जो निश्चयात्मके ज्ञान उसे भ्रम कहते हैं ॥१२८॥

---

मित्युपमितिशाब्दभेदादनुभवोपि चतुर्विधः। ते च भेदा अपि निरूपिताः। अथ कतिपयप्रकारेनिरूपितेपि। अवशिष्टः आत्मग्रन्थेऽनिरूपितः। अपरः अप्रमात्वादिरूप इत्यर्थः। प्रकारः बुद्धिधर्म इत्यर्थः। परिदर्श्यते निरूप्यते। निरूपयति अप्रमाचेति। प्रमालक्षणस्य भ्रमभिन्नत्वघटितस्याऽग्रे वक्तव्यतया तस्याऽप्रमात्वघटितत्वेन तदुपस्थितिं विना विशिष्टलक्षणज्ञानाऽसंभवेन "अप्रमा च प्रमाचेति विभागः कृतः ॥१२५-१२६॥

अप्रमायालक्षणमाह। मूले- तच्छून्ये इति। तदभाववतीत्यर्थः। तन्मतिरिति। तत्प्रकारकं ज्ञानमित्यर्थः। तदेवाह तदभाववतीति। इदं च प्रमायामतिव्याप्तिवारणाय। तदभाववद्विशेष्यकतदभावाऽप्रकारकप्रमायामतिव्याप्ति-वारणाय तत्प्रकारकमिति। इच्छायामतिव्याप्तिवारणाय ज्ञानमिति। विशेष्यता-विशिष्टविशेष्यतानिरूपकत्वमिति यावत्। वै० स्वतादात्म्य-स्वाश्रयनिष्ठाधिकरणता-निरूपितनिरूपकतावदन्यप्रकारताकत्वोभयसं०। निरूपकतावत्ता च प्रसिद्धचतुष्टय-संबन्धेनेति। संबन्धव्यावृत्तिःस्वयमूह्या।

अप्रमांविभजते। मूले-तत्प्रपञ्च इति। तस्याः-अप्रमायाः प्रपञ्चः-विभाजकधर्म इत्यर्थः। तथाचाऽप्रमां लक्षयित्वा विपर्ययत्वसंशयत्वाभ्यांविभज्यते इति भावः। इदमुपलक्षणम् तर्कोपि अप्रमाया भेद एव ॥१२७॥

आद्य इति। विपर्ययइत्यर्थः। स च तदभाववन्निष्ठविशेष्यतानिरूपित-तन्निष्ठप्रकारताशाली निश्चयः। देहेष्वात्मबुद्धिरिति। देहे आत्मत्वप्रकारकः आत्मनि देहत्व प्रकारकः, देहोहमहंदेह इत्याकारकविनिश्चय इत्यर्थः। इदमुपल-क्षणम्। देहे आत्मत्वं आत्मनि देहत्वमित्यपि बोध्यम्। शंखादा-विति। आदिना वराटिकादेः परिग्रहः। संशयोथ प्रदर्श्यते इति। संशयोदाहरणं

संशयोऽथ प्रदर्श्यते ॥१२८॥

किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः ।

तदभावाप्रकाराधीस्तत्प्रकारा तु निश्चयः ॥१२९॥

किंस्विदिति । किंस्विदिति वितर्के । निश्चयस्य लक्षणमाह—तदभावेति । तदभावाप्रकारकं तत्प्रकारकं ज्ञानं निश्चयः ॥१२८–१२९॥

संशय का लक्षण करते हैं—"स संशयः" इसमें । एक धर्मी में विरुद्ध भावाभाव प्रकारक ज्ञान को संशय कहते हैं ।

---

प्रदर्श्यत इत्यर्थः । १२८ नरोवेति । नरत्वतदभावकोटिक इत्यर्थः । स्थाणुर्वेति । स्थाणुत्वतदभावकोटिकेत्यर्थः । यथाश्रुते भावद्वयकोटिकसंशयाऽप्रसिद्ध्याऽसंगत्यापत्तेः । निश्चयस्यलक्षणमाहेति । प्रसंगादित्यादिः । तदभावाऽप्रकारकमिति । इदं च संशयेऽतिव्याप्तिवारणाय । निर्विकल्पकेऽतिव्याप्तिवारणाय तत्प्रकारकमिति । इच्छायामतिव्याप्तिवारणाय ज्ञानमिति । निश्चय इति । तन्निश्चय इत्यर्थः । ह्रदो-वन्ह्यभाववान् पर्वतोवन्हिमानितिसमूहालंबनात्मकनिश्चयसंग्रहाय एकधर्मिविशेष्यकत्वमपि निवेशनीयम् । तथा च तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताविशिष्टज्ञानत्व तन्निश्चयत्वम् । ज्ञानं प्रकारतावै० स्वनिरूपित धर्मितावच्छेदकावच्छिन्नविशेष्यताकत्व-स्वावच्छेदकसंबन्धावच्छिन्नस्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकावच्छिन्नविशेष्यताशून्यत्वोभयसं० ।

अत्रेदं बोध्यम् । संशये एकांशे धर्मितावच्छेदकसामानाधिकरण्य भासते, एकांशे च धर्मितावच्छेदकावच्छेद्यत्वम्, उभयत्र वा धर्मितावच्छेदकावच्छेद्यत्वम् भासते । समुच्चये तु धर्मितावच्छेदकसामानाधिकरण्यमेवोभयत्र भासते । तथा च धर्मितावच्छेदकावच्छेदेन निश्चयत्वस्य तत्सामानाधिकरण्येन निश्चयत्वस्य च भिन्नतया विभिन्नरूपेणैव तयोर्निवेशः । तत्र सामानाधिकरण्येन निश्चयत्वं च तद्धर्मावच्छिन्नप्रकारताविशिष्टज्ञानत्वम् । ज्ञाने प्रकारतावै० स्वनिरूपिता या तन्निरूपितधर्मिप्रकारतावच्छेदकसंसर्गतावच्छेदकीभूतधर्ममात्रावच्छिन्नसंसर्गता धर्मितावच्छेदकव्यापकतद्धर्मावतावच्छेदकावच्छिन्नविशेष्यताकत्व स्वरूपत्व धर्मितावच्छेदकावच्छिन्नाभावप्रतियोगिकत्वोभयधर्मावच्छिन्नसंसर्गतानिरूपितधर्मितावच्छेदकावच्छिन्नविशेष्यताशून्यत्वोभयसंबन्धेन । अवच्छेदावच्छेदेन तन्निश्चयत्वं तु तादृश-प्रकारताविशिष्टज्ञानत्वम् । वै० स्वनिरूपितधर्मितावच्छेदकव्यापकतद्धर्मावच्छिन्न-प्रतियोगिकत्व-प्रकारतावच्छेदकसंसर्गतावच्छेदकोभयधर्मावच्छिन्नसंसर्गतानिरूपित-धर्मितावच्छेदकावच्छिन्नविशेष्यताकत्व स्वावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकावच्छिन्नविशेष्यताशून्यत्वोभयसं० । तथा च पर्वतोवन्हिमान् वन्ह्यभाववांश्चेति समुच्चये सामानाधिकरण्येन वन्हिनिश्चयत्वसत्वान्न तस्य निश्चयत्वानुपपत्तिः ।

**स संशयो मतिर्या स्यादेकत्राभावभावयोः ।**

संशयं लक्षयति—स संशय इति । एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशय इत्यर्थः ।

---

वस्तुतः प्रकारतावच्छेदकावच्छिन्नप्रकारताविशिष्टविशेष्यताशालिज्ञानत्वमेव निश्चयत्वम् । वै० स्वनिरूपितत्व स्वान्यप्रकारत्वानिरूपितत्वोभयसं० । तेन घटः प्रमेयः इत्यादौ प्रमेयभेदस्य प्रमेयत्वात्यन्ताभावस्य चाऽप्रसिद्धत्वेपि न क्षतिः । पर्वतोवन्हिमान् वन्ह्यभाववांश्चेत्यादिसमुच्चयस्यापि निश्चयत्वोपपत्तिः, समुच्चये प्रकारताद्वयनिरूपितविशेष्यताद्वयोपगमात् । एतेन भावद्वयकोटिकसंशयस्वीकर्तृ मते पर्वतोवन्हिमान्धूमवान्वेति संशयस्य निश्चयत्वापत्तिः, तादृशपर्वतत्वावच्छिन्न-विशेष्यताकत्व वन्ह्यभावप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशून्यत्वयोः सत्वेनप्रकारतावच्छेदकावच्छिन्नप्रकारताविशिष्टज्ञानत्वसत्वादित्यपि निरस्त मित्यन्यत्र विस्तरः ।

न च समुच्चयस्य निश्चयरूपत्वे तदुत्पत्तिरेव कथं स्यात्, तदभावनिश्चय-तन्निश्चययोः कार्यसहभावेन तत्तदभावविशिष्टबुद्धिप्रतिबन्धकत्वादिति वाच्यम् । घटतदभावादेरपि अव्याप्यवृत्तित्वग्रहदशायामेव समुच्चयसंभवात् । अव्याप्य-वृत्तित्वग्रहाभावविशिष्टस्यैवतदभावादिनिश्चयस्य तद्विशिष्टबुद्धौ प्रतिबन्धकत्वात्, विशेष्यतावच्छेदकसामानाधिकरण्येन तत्तद्भावविशिष्टबुद्ध्योः परस्पराऽविरोधितया संभवाच्चेति । १२६ । मूले—संशयंलक्षयति । स संशय इति । एकत्रेति । सप्तम्यर्थोविशेष्यकत्वम् । एकधर्मिविशेष्यकेत्यर्थः । ह्रदपर्वतौवन्हितदभाववन्तौ इति ज्ञानेऽतिव्याप्तिवारणाय तत् । घटोद्रव्यं पृथिवीचेति ज्ञानवारणाय भावाभावप्रकार-केति । वृक्षः कपिसंयोगवान् तदभाववांश्चेति समुच्चायवारणाय विरुद्धेति । विरोधावगाहीत्यर्थः । तथा च वन्हिमान् वन्हिविरुद्धवन्ह्यभाववान् वा पर्वतः वन्ह्यभाववान् वन्ह्यभावविरुद्धवन्हिमान वा पर्वत इत्याकारकः संशयः । अव्याप्य-वृत्तित्वज्ञानाभावरूपं यद्विरोधिभासकं तत्प्रयोज्यमेव संशयत्वमिति ध्येयम् ।

नचा नुपस्थितस्य विरोधस्य प्रकारतयाभानाऽसंभव इति वाच्यम् । विरोध-संबन्धेन एककोट्यंशेऽपरस्य प्रकारतयाभानोपगामात् ।

वस्तुतस्तु पर्वतोवन्हिमान्नवेति संशये वन्हेः प्रतियोगितानिरूपितानुयो-गितासंसर्गत्वास्याऽभावांशे भाने तादृशानुयोगितानिष्ठसांसर्गिकविषयतायां विरो-धस्याऽवच्छेदकत्वं स्वीक्रियते, न तु स्वातन्त्र्येण तस्य संसर्गता । एतेन संशयानां विरोधसंबन्धेनैककोट्यंशेऽपरकोटेर्भानोपगमे विरोधसंबंधेन वन्हिविशिष्टवन्ह्यभाववान् वन्हिमान् वा इत्याकारकताया वन्ह्यभावविशिष्टवन्हिमान् वन्ह्यभाववान् वेत्याकारक-तायाः प्रसंगोनिरस्तः ।

विरोधिसंयोगत्वेन, विरोधिस्वरूपत्वेन वा संसर्गतेत्यपि केचित् । एतन्मते विरोधावच्छिन्नसंयोगादिनिष्ठसंसर्गताकपर्वतोवन्हिमान्नवेति संशयो बोध्यः ।

परे तु तत्कोटिप्रकारतानिरूपितविशेष्यत्व—तदभावकोटिप्रकारतानिरूपित-
विशेष्यतयोरवच्छेद्यावच्छेदक भावः तथा च तादृशविशेष्यत्वावच्छिन्न तादृश-
विशेष्यताशालिज्ञानत्वं संशयत्वमिति प्राहुः ।

विषयितावििशिष्टविषयिताशालिज्ञानं संशय इति तु भट्टाचार्याः । वै०
स्वसामानाधिकरण्य—स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वोभय-
संबन्धेन । विरोधिज्ञानद्वयस्य संशयत्ववारणाय प्रथमसंबन्धनिवेशः द्वितीयसंबन्ध-
निवेशात्समुच्चयस्य वारणम् । आहार्यादिज्ञानस्यापि वारणम् ।

घटस्यसंशयइत्यादौषष्ठ्यर्थेनिरूपितत्वस्य स्वरूपसंबन्धेन द्वितीयविषयिताया-
मन्वयः । तथा च विषयिताविशिष्टघटीयविषयिताश्रय इति बोध' । षष्ठ्यर्थस्य
प्रथमविषयितायामन्वये तु घटीयविषयिताविशिष्टविषयिताश्रय इत्येव बोधः स्यात् ।

अत्रेदं बोध्यम् । प्रथमविषयितायां षष्ठ्यर्थान्वये तु पर्वतोवन्हिमान् वन्हि-
व्याप्यवान्नवेति संशयस्य वन्हेः संशयत्वापत्तिः । तादृशोभयसंबन्धेन वन्हिविषयि-
ताविशिष्टायाः वन्स्यभावव्याप्यविषयितायास्तत्र सत्वात् । न च चरमविषयितायां
तस्याऽन्वयेपि वन्ह्यभावव्याप्यांशे सन्दिग्धाऽप्रामाण्यकपर्वतोवन्हिमान्न वा वन्ह्य-
भावव्याप्यवांश्चेति संशयस्य वन्ह्यभावव्याप्यसंशयत्वापत्तिः, निरुक्तोभयसंबन्धेन
वन्हित्वावच्छिन्नविषयिताविशिष्टा या तादृशव्याप्यविषयिता तद्वत्त्वस्य तादृशज्ञाने
सत्वात् । यदि चरमविषयितायां कोटित्वादिकं निवेश्यते तदा प्रथमविषयितायामपि
तन्निवेश्य सामंजस्ये नोक्तदोषतादवस्थ्यमिति वाच्यम् । तस्याऽनाहार्यत्वानभ्यु-
पगमात् । तदभ्युपगमे तु तद्वारणप्रकारोपि चिन्तनीयः ।

न च स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्व स्वसामाना-
धिकरण्योभयसंबन्धेन विषयितावैशिष्ट्यनिवेशादुक्तज्ञानस्य संशयत्ववारणमिति
वाच्यम् । एवमपि पर्वतोवन्हिमानवन्ह्यभावव्याप्यवान्नवेतिसंशयस्य वन्हेः संशयत्वा-
पत्तेः । तादृशोभयसंबन्धेन वन्ह्यभावव्याप्यविषयिताविशिष्टायाः वन्हिविषयितायास्तत्र
सत्वात् । प्रथमविषयितायामन्वयेतु तस्य लक्षणान्तरत्वमित्यस्मद्गुरुचरणाः ।

यत्तु संशयत्वं जातिरिति । तन्न । चाक्षुषत्वादिना संकरात् । संशयत्वस्य
जातित्वे एकस्यैवज्ञानस्य धर्मांशेपि संशयत्वापत्तेश्चेत्यन्यत्र विस्तरः ।

जगदीशमते तद्धर्मावच्छिन्नप्रकारतानिरूपिता अथ च प्रतियोगित्वसंबन्धा-
वच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपिताऽभावत्वावच्छिन्नप्रकारतानिरूपिता या
विशेष्यता तन्निरूपकत्वं तत्संशयत्वम् । भट्टाचार्यमते तद्धर्मावच्छिन्नप्रकारतानि-
रूपितविशेष्यत्वावच्छिन्ना या प्रतियोगित्वसंबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारता-
निरूपितविशेष्यता तन्निरूपकत्वं तत्संशयत्वमिति संक्षेपः ।

लक्षितसंशयस्य "कारण" सामग्रीमाह । मूले—साधारणादीति । आदिनाऽ
साधारणधर्मपरिग्रहः । साधारणपदार्थमाह । उभयसाधारणोयोधर्म इति । कोटि-
द्वयसहचरितत्वेन ज्ञायमानोयोधर्म इत्यर्थः । तेन वन्हितदभावसहचरितमानय-

साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥१३०॥

साधारणेति। उभयसाधारणो यो धर्मस्तज्ज्ञानं संशयकारणम्। यथोच्चैस्तरत्वं स्थाणुपुरुषसाधारणं ज्ञात्वाऽयं स्थाणुर्नवेति संदिग्धे। एवसाधारणधर्मज्ञानमपि कारणम्। यथा शब्दस्य नित्यानित्यव्यावृत्तत्वं शब्दे गृहीत्वा शब्दोनित्योनवेति संदिग्धे। विप्रतिपत्तिस्तु शब्दोनित्योनवेत्यादिशब्दात्मिका न संशयकारणं, शब्द-व्याप्तिज्ञानादीनां निश्चयमात्रजनकत्वस्वभावात्, किन्तु तत्र शब्देन कोटिद्वयज्ञानं जन्यते। संशयस्तु मानस एवेति।

उभयसाधारण जो धर्म उस धर्म का ज्ञान संशय का कारण होता है। जैसे उच्चैस्तरत्वधर्म को स्थाणु-पुरुष रातत् उभय साधारण जानकर "यह स्थाणु है या नहीं" ऐसा संदेह कर बैठता है। इसी प्रकार असाधारणधर्म का ज्ञान भी संशय का कारण होता है-जैसे-"शब्दो नित्यः शब्दत्वात्" यहां पर शब्दत्वात्मक असाधारणधर्म को नित्य ( आकाश-काल आदि ) पदार्थों, तथा अनित्य ( घट-पट आदि ) पदार्थों से व्यावृत्त जानकर यह संदेह होता है कि 'शब्दोनित्य न वा।' और "शब्दोनित्यो न वा" इत्यादि शब्दस्वरूपा विप्रतिपत्ति संशय का कारण नहीं है। क्योंकि शब्द और व्याप्तिज्ञान आदि निश्चय मात्र के कारण होते हैं। किन्तु वहां शब्द से अर्थात् शब्दस्वरूपा विप्रापत्ति से भाव-अभावात्मक दो कोटियों का ज्ञान होता है और उसके बाद संशय मानसही होता है।

---

मितिभ्रमादयं वन्हिमान्नवेति संशयोपपत्तिः। तद्ज्ञानमिति। तत्प्रकारकनिश्चय इत्यर्थः। एतादृशनिश्चयस्य संशयहेतुतास्थलं दर्शयति। यथेति। उच्चैस्तरत्वमिति। स्थाणवस्थाणुसाधारणमुच्चैस्तरत्वमिति योजना। एवं पुरुषाऽपुरुषसाधारणमुच्चैस्तरत्वमिति योजना। तथा च स्थाणुत्वतदभावसहचरितमुच्चैस्तरत्वम्, पुरुषत्वतदभावसहचरितमुच्चैस्तरत्वमित्यर्थः। गृहीत्वेति। संशयधर्मिणीत्यादिः तथा च स्थाणुत्वतदभावसहचरितोच्चैस्तरत्ववानयं—पुरुषत्वतदभावसहचरितोच्चैस्तरत्ववानयमिति निश्चित्येत्यर्थः। सन्दिग्धे इति। अयंस्थाणुर्न वा, अयं पुरुषोन वेति संशयं करोतीत्यर्थः।

मूले साधारणाऽऽदीत्यादिपदग्राह्यमाह। एवमिति। असाधारणधर्मज्ञानमिति। कोटिद्वयाऽसमानाधिकरणत्वेन ज्ञायमानधर्मप्रकारकनिश्चय इत्यर्थः। एतादृशनिश्चयस्य संशयहेतुतास्थलमुदाहरति। यथेति। नित्याऽनित्यव्यावृत्तत्वमिति। नित्याऽनित्ययोरवृत्तित्वमित्यर्थः। गृहीत्वेति। नित्यत्वाधिकरणावृत्ति-अनित्यत्वाधिकरणाऽवृत्तिशब्दत्ववानयमिति निश्चयोत्तरमित्यर्थः।

**एवं ज्ञाने प्रामाण्यसंशयाद् विषयसंशयः ।**

इसी प्रकार ज्ञान में प्रामाण्य के संशय से विषय में भी संशय हो जाता है। [ अभिप्राय यह है कि—"अयं घटः" इस घटत्व प्रकारकज्ञान में "इदं घटत्वप्रकारकं ज्ञानं घटत्ववति ( घटे ) घटत्वप्रकारकं न वा" इसरूप से प्रामाण्य का संशय हो जाने से "अयं घटो न वा" इस रूप से घटात्मक विषय का संशय बन जाता है ]

---

उभयकोटिप्रतिपादकवाक्यरूपविप्रतिपत्तिज्ञानादपि कोटिद्वयोपस्थितिद्वारा संशय आवश्यकः, एवं संशयात्मकशाब्दबोधोऽप्यवश्यमङ्गीकार्य इति मतं निराकरोति। **विप्रतिपत्तिस्त्विति** । एवकारार्थकस्तु शब्द नेत्युत्तरं योजनीयः। तथा च शब्दोनित्योनवेतिशब्दात्मिका विप्रतिपत्तिर्नैव संशयकारणमित्यर्थः। विरुद्धार्थविषयकबोधजनकवाक्यं विप्रतिपत्तिः। तथा च तादृशविप्रतिपत्तेः संशयजनकताविरहेण, प्रमाणाभावेन संशयात्मकशाब्दबोधोऽपि नाङ्गीकर्तव्य इति भावः। निरुक्तविप्रतिपत्तेः संशयजनकत्वाऽसंभवं दर्शयति। **शब्दव्याप्तिज्ञानादीनामिति** । आदिनाऽतिदेशवाक्यार्थज्ञानपरिग्रहः। तत्र व्याप्तिज्ञानाऽतिदेशवाक्यार्थज्ञानयोरुपादानं दृष्टान्तार्थमिति बोध्यम्। **निश्चयमात्रजनकत्वस्वभावादिति** । प्रत्यक्षान्यनिश्चयमात्रजनकत्वादित्यर्थः। एवं च शब्दज्ञानं न संशयजनकं प्रत्यक्षान्यनिश्चयकारणत्वाद् व्याप्तिज्ञानवदित्यनुमानेन विप्रतिपत्तेः संशयाऽजनकत्वसिद्धिरिति भावः। विप्रतिपत्तेः संशयाऽजनकत्वं व्यवस्थाप्य संशयप्रयोजकत्वं व्यवस्थापयति। **किंत्विति** । **तत्र** । विप्रतिपत्तिस्थले। **शब्देन** । शक्तिज्ञानसहकृतशब्दज्ञानेन। **कोटिद्वयज्ञानमिति** । भावाऽभावरूपकोटिद्वयस्मरणमात्रमित्यर्थः। **जन्यते** इति। तथा च सत्प्रतिपक्षस्थले विरोधिव्याप्यवत्ताज्ञानाद्यथाऽनुमितिसामान्यानुत्पत्तिः, तथाभावाभावरूपकोटिद्वयविषयकशाब्दसामग्रीसत्त्वे एकैकशाब्दं प्रति अपरशाब्दसामग्र्याः प्रतिबन्धकत्वाद्विप्रतिपत्तिस्थले शाब्दबोधानुत्पत्तिरिति भावः। ननु तत्राऽनुभूयमानसंशयस्याऽपलापप्रसंग इत्यत आह। **संशयस्त्विति** । संशयोपीत्यर्थः। **मानस एवेति** । एवकारेण विप्रतिपत्तिकरणकत्वव्यवच्छेदः। तथा च संशये कोटिद्वयसहकृतमनः करणं न तु विप्रतिपत्तिरिति तत्त्वम्।

वस्तुतोऽसाधारणधर्मदर्शनजन्यकोट्युपस्थितेरेव संशयहेतुत्वाद् विप्रतिवाक्यप्रयोज्यत्वमपि नादरणीयम्। अथ विप्रतिपत्तिवाक्यात्कथं न संशयो भवति। न च संशयत्वस्य प्रत्यक्षत्वव्याप्यतया शाब्दसामग्रीकाले प्रत्यक्षसामग्रीविरहेण न तत्संभव इति वाच्यम्। तादृशस्थले शाब्दबोधानुत्पादेन शाब्दसामग्र्याः कल्पयितुमशक्यत्वादिति चेत् सत्यम् तादृशस्थले मानससामग्र्याः एव सत्त्वेन शाब्दसामग्र्या अभावादेव शाब्दबोधोत्पादविरहात्। अन्ततस्तादृशप्रत्यक्षसामग्र्या एव समानविषयकप्रत्यक्षसामग्रीविधया शाब्दबोधप्रतिबन्धिकायाः शाब्दसामग्रीविघटनसंभवादिति ध्येयम्।

**एवं व्याप्यसंशयादपि व्यापकसंशय इत्यादिकं बोध्यम् । किन्तु संशये धर्मिज्ञानं धर्मीन्द्रियसन्निकर्षो वा कारणम् ॥१३०॥**

ऐसे ही धूमात्मक व्याप्य संशय से भी वन्हिस्वरूप व्यापक का संशय होता है इत्यादि भी जानना चाहिए। किन्तु संशय में धर्मी का ज्ञान तथा धर्मी के साथ इन्द्रियसन्निकर्ष भी की कारण होता है ॥१३०॥

---

**एवमिति । ज्ञाने ।** घटवद्भूतलमितिज्ञाने, घटवद्भूतलमितिज्ञानधर्मिकादित्यर्थः । **प्रामाण्यसंशयादिति ।** घटवद्भूतलमितिज्ञानं प्रमा न वेति संशयादित्यर्थः । **विषयसंशय** इति । भूतलं घटवन्नवेतिसंशय इत्यर्थः । इदमुपलक्षणम् । ज्ञानेऽप्रामाण्यसंशयादपि विषयसंशयोबोध्यः । नचाऽप्रामाण्यसंशयस्य घटाभावोपस्थितिरूपतया तदुत्तरं विषयसंशयसंभवेपि प्रामाण्यसंशयस्य घटवद्विशेष्यकत्वविशिष्टघटप्रकारकत्वतादृशप्रकारकत्वाभावरूपकोटिविषयकतया घटाभावविषयकत्वाभावेन घटाभावोपस्थितिविरहेण कथं तदुत्तरं विषय संशय इति वाच्यम् । विषयसंशये प्रामाण्यसंशयस्य स्वातन्त्र्येण हेतुत्वात् । घटाभावोपस्थितिकालीन प्रामाण्यसंशयादित्यपरे । भ्रमभिन्नत्वतदभावरूपप्रामाण्यतदभावकोटिकसंशयादित्यर्थ इति केचित् ।

**व्याप्यसंशयादपीति ।** पर्वतोवन्हिव्याप्यधूमवान्नवा-धूमवान्नवेतिसंशयादपीत्यर्थः । **व्यापकसंशय** इति । पर्वतोवन्हिमान्नवेतिसंशय इत्यर्थः । **किन्त्विति । संशये ।** संशयसामान्ये । तथा च धर्मिज्ञानजन्यत्वं न संशयत्वविभाजकमतो न न्यूनतेतिभावः । धर्मिज्ञानं विनापि "धर्मिज्ञानक्षणे" धर्मीन्द्रियसन्निकर्षे संशयस्येष्टत्वादित्याशयेनाऽऽह । **धर्मीन्द्रियसन्निकर्षोवेति ।** सन्निकर्षश्च संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवायादिरूपोग्राह्यः ।

स्वप्नोपि अप्रमाभेदः । यद्यपि क्वचिद् यथार्थं स्वप्नभानं भवति—यथाऽहं इह शय्यायां संविष्टस्तिष्ठामीति । तथापि निद्रादोषसहकारेण तत्र शय्यान्तरमेव भासते इति सांप्रदायिकाः । वस्तुतः तदंशे प्रमात्वेपि तत्रचाक्षुषत्व शाब्दत्वादीनां भ्रमत्वमेव । अत एव चक्षुरादिव्यापारं विनापि स्वप्नज्ञाने चक्षुषा पश्यामि श्रोत्रेण शृणोमीत्याद्यनुव्यवसायः । अत एवोक्तमाचार्यैः—**इन्द्रियद्वारकता तत्राऽयथार्थैवेति ।** भाष्येपि **उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्येन्द्रियद्वारैवयदनुभवनं मानसं तत्स्वप्नज्ञानामित्युक्तम् ।**

वैशेपिकमते अनध्यवसायोपि चतुर्थी विधा अयथार्थस्य । तथा च प्रशस्त पादभाष्यम् "तत्राऽविद्या चतुर्विधा संशयविपर्ययाऽनध्यवसायस्वप्नलक्षणा" । गते प्रसिद्धे राजनि कोप्यनेन यथा गत इति ज्ञानमात्रमनवधारितविशेषमिति **कन्दलीकाराः ।**

दोषोऽप्रमायाजनकः, प्रमायास्तु गुणो भवेत् ।

दोष इति । अप्रमां प्रति दोषः कारणम् । प्रमां प्रति गुणः कारणम् । तत्रापि पित्तादिरूपादोषा अननुगताः, तेषां कारणत्वमन्वयव्यतिरेकाभ्यां सिद्धम् । गुणस्य प्रमाजनकत्वं तु अनुमानात् सिद्धम् । यथा प्रमा ज्ञान-सामान्यकारणभिन्नकारणजन्या जन्यज्ञानत्वात् अप्रमावत् ।

अप्रमाज्ञान के प्रति दोष, और प्रमाज्ञान के प्रति गुण कारण होता है । दोषों में भी पित्त आदि दोष अननुगत हैं, दोषों को अप्रमाज्ञान के प्रति प्रकार कारणत्व अन्वय-व्यतिरेक से सिद्ध है । [ अर्थात् दोषसत्त्वेऽप्रमाज्ञानसत्त्व-दोषाभावेऽप्रमाज्ञानाभावः ] और गुण को प्रमाज्ञान के प्रति कारणत्व अनुमान से सिद्ध है । जैसे—प्रमाज्ञान-आत्ममनः संयोग तथा-त्वङ्मनः संयोग रूप जो ज्ञान सामान्य का कारण उस से भिन्न सन्निकर्षादि रूप गुणात्मक कारण जन्य है—जन्य ज्ञान होने से—अप्रमा ज्ञान की तरह ।

---

"अनुपलब्धसपक्षविपक्षसहचारस्याऽसाधारणधर्मस्य दर्शनात् पनसादौ किंचिद्य मि[ ] ज्ञानमनेककोटिकमनध्यवसायः, संशयभिन्नोविषयभेदात्" इति न्यायलीलावतीप्रकाशे वर्द्धमानोपाध्यायाः ।

"पनसादौ किंस्विदिदमिति ज्ञानमसाधारणधर्मजन्यमनध्यवसायः । स च वैशेषिकमते संशयाद् भिन्नः" कण्ठाभरणे शंकरमिश्राः ।

संशय एवायमिति भूषणाः । नैवम् । "विरुद्धनानाधर्मप्रकारकं एकधर्मिकं ज्ञानं संशयः, विशेषतोविरुद्धकोट्यनुल्लेखात्रानध्यवसायः, अनुल्लिखितनाना-विरुद्धकोट्युल्लेखे हि सः, अत्र पनसस्य किंचित्वेन विरोधिनानाकोटेरुल्लेखात्" इति न्यायलीलावतीप्रकाशकृतः ।

"अनुपलब्धसपक्षविपक्षसंस्पर्शस्य धर्मस्य दर्शनात् विशेषत उपलब्धानुप-लब्धकोटिकं ज्ञानमनध्यवसायः । अत एवायं संशयाद् भिद्यते, स हि उपलब्ध-सपक्षविपक्षसंस्पर्शधर्मदर्शनादुत्पद्यते, उपलब्धाऽव्यवस्थितकोटिविषय इति लोक प्रसिद्धिः, तदनुसारित्वाच्च परीक्षकाणामि" न्यायाचार्याः ॥१३०॥

एतावता अप्रमां विमृश्य तत्कारणं निरूपयति । अप्रमांप्रतीत्यादि । प्रसंगात्प्रमासामग्रीमपि अत्रैव दर्शयति प्रमांप्रतिगुणः कारणमिति । तत्रापि । कारणीभूतष्वपित्वपि । पित्तादीति । आदिना तिमिर—मण्डूकवसाञ्जनादयोदोषाः ग्राह्याः । अननुगता इति । पित्तत्वादिरूपनानाधर्मावच्छिन्ना इत्यर्थः । तथा चाऽप्रमासामान्यं प्रति यावन्तोदोषास्तावदन्यतमत्वेन, यादृशदोषोत्तरं यादृशाऽप्रमा प्रामाणिकी तत्तदप्रमां प्रति तत्तद्दोषत्वेन वा हेतुत्वमिति भावः । ईदृशकार्यकारणभावे प्रमाणं दर्शयति । तेषामिति । दोषाणामित्यर्थः । अन्वयव्यतिरेकाभ्यामिति ।

**न च दोषाभाव एव कारणमस्त्विति वाच्यम् ।**

प्रश्न—प्रमाज्ञान के प्रति गुण को कारण न मानकर दोषाभाव को ही कारण मान लिया जाय ?

---

अन्वयव्यतिरेकसहचारज्ञानसहकृतप्रत्यक्षप्रमाणादित्यर्थः । दोषसत्वे अप्रमासत्व-मित्यन्वयसहचारः । दोषाभावेऽप्रमाऽभाव इति व्यतिरेकसहचारः । अन्वयव्यति-रेकाभ्यामिति सावधारणम् । अन्वयव्यतिरेकसहचारज्ञानसहकृतप्रत्यक्षप्रमाणा-देवेत्यर्थः एवकारादनुमानप्रमाणव्यवच्छेदः । यद्यपि अप्रमा ज्ञानसामान्यकारण-भिन्नकारणजन्या जन्यज्ञानत्वादित्यनुमानादपि दोषाणामप्रमाकारणत्वं सिद्ध्यति । प्रमायाः गुणजन्यत्वसिद्धेः प्राक् अन्वयदृष्टान्तविरहेपि परमाण्वादिनित्यानां व्यतिरेकदृष्टान्तत्वसंभवात तथापि प्रमायाः गुणजन्यत्वसिद्धेः प्राक्प्रमायां "साध्य-संशयाधीन" व्यभिचारसंशयसंभवान्नानुमानात्तत्सिद्धिरिति बोध्यम् । गुणस्य प्रमाजनकत्वे प्रमाणमाह । **गुणस्येति । प्रमाजनकत्वं तु** इति । तु शब्दोऽप्यर्थकः । अनुमानादित्युत्तरं योजनीयः । **अनुमानात्सिद्धमिति ।** अनुमानादपि सिद्ध-मित्यर्थः । **अनुमानात्** "गुणसत्वेप्रमासत्वम् गुणाऽभावेप्रमाऽभावः इत्यन्वय-व्यतिरेकसहचरज्ञानसहकृत" प्रत्यक्षप्रमाणादपीति यावत् । अनुमानं दर्शयति **यथेति । प्रमेति ।** समवायकालिकोभयसम्बन्धेन तद्वति तत्प्रकारकज्ञानत्वरूपप्रमा-त्वाश्रयइत्यर्थः । तेनाऽवच्छेदकावच्छेदेनसाध्यत्वे भगवद्ज्ञाने न व्यभिचारः । ज्ञानसामान्यकारणभिन्नकारणजन्यत्वं साध्यम् । ज्ञानसामान्यस्य यत्कारणमात्ममनः-संयोगादिः तद्भिन्नं यत्कारणं गुणः "चक्षुःसंयोगादिः" स्तज्जन्येत्यर्थः । तथा च कालिकसमवायोभयसम्बन्धेनज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदका याव-न्तोधर्मास्तत्तद्व्यक्तिभेदकूटविशिष्टधर्मावच्छिन्नकारणतानिरूपितजन्यतावतीतियावत् । तेन ज्ञानत्वस्य नित्यज्ञानवृत्तित्वेऽपि न क्षतिः । **जन्यज्ञानत्वादिति** । नित्यज्ञाने व्यभिचारवारणायजन्येति । कालिकसमवायोभयसम्बन्धेनज्ञानत्ववत्वादिति तदर्थः । **अप्रमावदिति** । शंखविशेष्यकपीतरूपादिप्रकारकज्ञानवदित्यर्थः । तत्र ज्ञानसामान्यकारणभिन्न "दोषरूप" कारणजन्यत्वादिति भावः । इदमुपलक्षणम् । पक्षैकदेशोपि दृष्टान्तो बोध्यः । अथ दोषसत्वे प्रमानुत्पत्त्या तत्र दोषाणां प्रतिबन्धकत्वं वाच्यम्, तथा च दोषाभावस्य प्रतिबन्धकाभावविधया कारणत्वं क्लृप्तमेवेति दोषाभावजन्यत्वमादायाऽर्थान्तरमित्याशंकते । **नचेति । दोषाभाव एवेति ।** एवकारेण गुणव्यवच्छेदः । प्रमां प्रति दोषस्याऽप्रतिबन्धकत्वेन प्रतिबन्धकाभाव-विधया दोभावस्य न तत्र कारणत्वमित्यतोव्यतिरेकव्यभिचार इत्याशयेन समाधत्ते । **पीतः शंख इति ज्ञानस्थले** इति । तादृशज्ञानविशेष्यीभूतशंखे इत्यर्थः । **पित्तदोषसत्त्वादिति** । स्वाश्रयसंयुक्तत्वसंबन्धेन पित्ततारूपदोषसत्वादित्यर्थः ।

पीतः शंखं इति ज्ञानस्थले पित्तदोषसत्त्वात् शंखत्वप्रमानुत्पत्ति-प्रसङ्गात्, विनिगमनाविरहादनन्तदोषाभावस्य कारणत्वमपेक्ष्य गुणस्य कारणताया न्याय्यत्वात्।

उत्तर—"पीतः शंखः" इस ज्ञानस्थल में पित्त दोष के सत्त्व होने से शंख का भी प्रमाज्ञान नहीं हो सकेगा। [ अभिप्राय यह है कि 'पीत शखः' यहाँ पर शंख का ज्ञान तो प्रमा है-किन्तु शंख में पीत का ज्ञान अप्रमा है। अब यदि प्रमाज्ञान की उत्पत्ति में दोषाभाव को कारण माना जायगा तो 'पीतः शखः' यह ज्ञान पित्त दोष के कारण ही हो रहा है, अतः दोषाभाव रूप कारण न रहने से प्रमात्मक ज्ञान रूप कार्य भी न हो सकेगा, क्योंकि कारणा-भावात् कार्याभावः ] [ दूसरी बात यह है कि कोई विनिगमना ( युक्ति ) आपके ( दोषाभाव को कारणता वादी के ) मत में नहीं है कि दोषाभाव ही को कारण माना जाय और गुण को न माना जाय और दोषा भाव को कारण मानने पर भी अनन्त दोषाभावों को कारण मानना होगा ] अतः विनिगमना विरह होने के नाते अनन्तदोषाभावों को कारण मानने की अपेक्षया गुण को ही प्रमाज्ञान के प्रति कारण मानना न्याय्यपद है।

---

**शंखत्वप्रमानुत्पत्तिप्रसंगादिति।** *शंखत्वप्रकारकप्रमानुत्पत्तिप्रसंगादित्यर्थः। यथा पित्तारूपदोषसत्त्वे श्वैत्यप्रमानुत्पत्तिस्तथा शंखत्वप्रकारकप्रमानुत्पत्तिप्रसंगादिति* भावः। एवं च तादृशप्रमोत्पादान्न तत्र दोषःप्रतिबन्धकः, न वा दोषाभावस्य कारणत्वमिति यावत्। ननु पित्तदोषसत्त्वे शुक्लत्वप्रकारकप्रमाया एवाऽनुत्पादात्, शुक्लत्वप्रकारकप्रमां प्रत्येव दोषाभावस्य कारणत्वं स्वीक्रियते इति तादृशदोषसत्त्व शंखत्वप्रकारकप्रमोत्पत्तौ बाधकाभावादित्यत आह। **विनिगमनाविरहादिति।** गुणस्यापि हेतुत्वस्वीकारादिति शेषः। प्रमायां दोषाभावः कारणं गुणोवेत्यत्र विनिगमनाविरहादिति भावः। प्रत्युत गुणस्य हेतुत्वे एव लाघवं विनिगमकमित्याह। **अनन्तदोषाभावस्य कारणत्वमपेक्ष्येति।** अनन्ताः ये दोषास्तेषां तत्तद्धर्माव-च्छिन्नप्रतियोगिताकाभावस्य तेन रूपेण तत्तत्प्रमां प्रति हेतुत्वापेक्षयेत्यर्थः। **गुणस्येति।** विशेषणवद्विशेष्यसन्निकर्षस्य साध्यवत्पक्षविशेष्यकसाध्यव्याप्यवत्ता-परामर्शस्य अयंगोसदृश इति *सादृश्यप्रकारकज्ञानस्य, तात्पर्यज्ञानस्येत्यर्थः।* **कारणताया** इति। *क्रमेण प्रत्यक्षानुमित्युपमितिशाब्दबोधनिरूपितकारणताया* इत्यर्थः। **न्याय्यत्वादिति।** *लाघवरूपप्रमाणसिद्धत्वादित्यर्थः।* तथा च प्रत्यक्षादिप्रमाचतुष्टये गुणानां कार्यकारणभावचतुष्टयाङ्गीकार एवोचित इति भावः। गुणस्य कारणत्वमाक्षिपति। **नचेति। गुणसत्त्वेपीति।** शुक्लरूपवच्छंखेन्द्रिय-संयोगरूपगुणसत्त्वेपीत्यर्थः। **पित्तेन।** पित्तत्वरूपदोषेण। **प्रतिबन्धादिति।** श्वैत्यप्रमानुत्पादादित्यर्थः। श्वेतःशंख इति प्रमानुत्पादादिति भावः। **शंखे न श्वैत्यज्ञानमिति।** *तथाचाऽन्वयव्यभिचार इति भावः।* **अत** इति। शंखेन्द्रिय-

न च गुणसत्त्वेऽपि पित्तेन प्रतिबन्धाच्छङ्खे न श्वैत्यज्ञानमतः पित्तादिदोषाभावानां कारणत्वमवश्यं वाच्यं तथा च किंगुणस्य हेतुत्वकल्पनेति वाच्यम्। तथापि अन्वयव्यतिरेकाभ्यां गुणस्यापि हेतुत्वसिद्धेः। एवं भ्रमं प्रति गुणाभावः कारणमित्य स्यापि सुवचत्वात्।

प्रश्न—शंख में शुक्ल रूप के साथ चक्षुः संयुक्त समवायात्मक सन्निकर्षस्वरूप गुण मौजूद होने पर भी पित्त दोष प्रयुक्त उसका प्रतिबन्ध हो जाने से फिर भी तो शंख में श्वैत्य (शुक्लता) का ज्ञान नहीं हो पा रहा है अतः इस अन्वय व्यभिचार को दूर करने के लिये पित्त आदि दोषों के अभावों को कारण अवश्य ही मानना चाहिये, तब फिर गुण में कारणता की कल्पना करना व्यर्थ है।

उत्तर—कारणता ग्राहक अन्वय-व्यतिरेक से गुण को कारणत्व अनुभव सिद्ध है। (क्योंकि सन्निकर्षात्मक गुण के रहने पर ही प्रमाज्ञान होता है और न रहने पर नहीं होता है) दूसरी बात यह है कि जैसे तुम प्रमाज्ञान के प्रति गुण को कारण न मानकर दोषाभाव को कारण मानते हो ऐसे ही भ्रम के प्रति भी दोष को कारण न मामकर दोषाभाव को कारण मानना यह भी तो सुवच हो सकता है।

---

संयोगरूपगुणात्मककारणसत्वेपिशुक्लत्वप्रमानुत्पत्तिवशादित्यर्थः। **पित्तादिदोषाभावानामिति**। प्रमां प्रतीत्यादिः। **वाच्यमिति**। अन्यथानुपपत्त्या पारिशेष्यादिति शेषः। तथा च दोषाभावानां हेतुत्वस्यावश्यकत्वे च। **हेतुत्वकल्पनेनेति**। गुणस्य हेतुत्वाङ्गीकारेण किं प्रयोजनमित्यर्थः। तथा चाऽऽवश्यकदोषाभावेनैव निर्वाहे गुणस्य न हेतुत्वमन्यथासिद्धत्वादिति भावः। आक्षेपं निराकरोति। **तथापीति**। दोषाभावानां हेतुत्वस्याऽऽवश्यकत्वेऽपीत्यर्थः। **अन्वयव्यतिरेकाभ्यामिति**। पटादौ पीतरूपात्मकविशेषणवद्विशेष्येन्द्रियसन्निकर्षरूपगुणसत्वात्, पीतः घट इति पीतरूपप्रकारकप्रमोत्पत्तिः, एवं तेजोंशसुवर्णस्य पीतरूपवत्वाभावेन तत्र पीतत्वविशेषणवद्विशेष्येन्द्रियसन्निकर्षात्मकगुणाभावेन पीतत्वप्रकारकप्रमाया अभावः इत्यन्वयव्यतिरेकाभ्यामित्यर्थः। **गुणस्यापीति**। तथा च निरुक्तान्वयव्यतिरेकाभ्यां गुणस्यापि हेतुत्वावश्यकतया न तेन गुणस्यान्यथासिद्धिरिति भावः। वस्तुतोपित्तादिदोषाभावसत्वेपि विशेषणवद्विशेष्येन्द्रियसन्निकर्षरूपगुणाभावान्न शंखपीत इति प्रमा, अतोदोषाभावेनन गुणस्यान्यथासिद्धिरितितत्वम्।

**एवमिति**। एवं सतीत्यर्थः। अन्वयव्यतिरेकसत्वेपि अन्यथासिद्धत्वे सतीत्यर्थः। गुणाभाव इति सावधारणम्। गुणाभाव एव न तु दोषा इत्यर्थः। **इत्यस्यापीति**। इत्याकारक भ्रमगुणाभावयोः कार्यकारणभावस्यापीत्यर्थः। **सुवचत्वादिति**। अवश्यं वाच्यत्वादित्यर्थः। अन्यथा पित्तादिदोषस्याऽविशिष्टत्वेपि

पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥१३१॥
प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ।
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ गुणः ॥१३२॥
पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥१३३॥
शाब्दबोधे योग्यतायास्तात्पर्यस्याथवा प्रमा ।
गुणः स्याद्,

तत्र दोषाः के इत्याकांक्षायामाह—पित्तेति क्वचित् पित्तादिभ्रमे पित्तं दोषः, क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः, क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवंरूपा दोषा अननुगता एव भ्रान्तिजनका इत्यर्थः ॥१३१॥

अथ के गुणा ? इत्याकांक्षायां प्रत्यक्षादौ क्रमशो गुणान् दर्शयति—प्रत्यक्षेत्विति । प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः । अनुमितौ साध्यवति साध्यव्याप्यवैशिष्ट्यज्ञानं गुणः । एवमग्रेऽपि ॥१३२-१३३॥

इति अप्रमानिरूपणम् ।

प्रश्न—दोष कितने हैं ?

उत्तर—कहीं तो अर्थात् 'पीतः शंखः' यहाँ पर शंख में जो पीत भ्रम है उसके प्रति 'पित्त' को दोष माना है । कहीं पर अर्थात् चन्द्रमा के स्वल्पपरिमाण के भ्रम में दूरत्व दोष माना गया है । और कहीं बाँस में सर्प भ्रम के प्रति मण्डूक ( मेंढक ) की वसा ( मज्जा ) के अञ्जन को ही दोष माना है । [ सुना है कि मेंढक की मज्जा का अञ्जन बनाकर यदि आँखों में उसे लगा लिया जाय तो सब बाँस सर्प ही के रूप में दीखने लगते हैं ] इस प्रकार अननुगत ( अनन्त ) दोषों को ही भ्रम का कारण मानना होगा ॥१३१॥

---

शंखादाविव पीतपटादौ पीतरूपप्रकारकप्रमायाः भ्रमत्वापत्तिः "तथाचाऽन्वयव्यभिचारः" स्यादिति भावः । तथा च भ्रमं प्रति "विशेषणवद्विशेष्येन्द्रियसन्निकर्षरूप" गुणस्य प्रतिबन्धकत्वं तदभावस्य तत्र हेतुत्वं वाच्यं, पीतपटादौ तु तादृशप्रतिबन्धकाभावरूपकारणाभावान्न तदापत्तिरिति । अत्र प्रत्यक्षप्रमां प्रत्येव पित्तादिदोषाभावस्यापि उक्तदोषवारणाय हेतुत्वं वाच्यम्, एवं प्रत्यक्षभ्रमं प्रत्येव गुणाभावस्यापि उक्तदोषवारणाय हेतुत्वं वाच्यम् नत्वनु मित्यादाविति ध्येयम् ॥ १३१ ॥

एवमग्रेपीति । उपमितौ शक्यविशेष्यकसादृश्यप्रकारकज्ञानं गुणः । शाब्दबोधे योग्यतायाः तात्पर्यस्य वा प्रमा गुणः ।

इति अप्रमानिरूपणम्

**भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा ॥१३४॥**

**प्रमां निरूपयति-भ्रमभिन्नमिति ॥१३४॥**

इसके बाद गुण कौन-कौन से हैं इस आकांक्षा की निवृत्ति के लिये प्रत्यक्ष आदि में क्रमशः गुणों को दिखलाते हैं–"प्रत्यक्षेतु" इस ग्रन्थ से। प्रत्यक्षात्मक प्रमाज्ञान के प्रति विशेषण से विशिष्ट विशेष्य के साथ सन्निकर्ष गुण है, अनुमिति रूप प्रमाज्ञान के प्रति साध्य वाले पक्ष में जो साध्यव्याप्यहेतु के वैशिष्ट्य ( सम्बन्ध ) का अवगाही परामर्शात्मक ज्ञान वही गुण है। इसी प्रकार आगे भी जानना। प्रमा का निरूपण करते हैं–"भ्रमभिन्नम्" इत्यादि ग्रन्थ से॥ १३२–१३३–१३४ ॥

---

**भ्रमभिन्नं तु ज्ञानमत्रोच्यतेप्रमेति** मूलम्। अप्रमायामतिव्याप्तिवारणाय भ्रमभिन्नमिति। तथा च भ्रमभिन्नत्वे सति ज्ञानत्वं प्रमालक्षणं पर्यवसन्नम्। न च निर्विकल्पकेऽतिव्याप्तिरिति वाच्यम्। ज्ञानपदस्य तत्प्रकारकज्ञानपरत्वात्। न च भ्रमस्यापि किंचिदंशे प्रमात्वेन लक्ष्यतया तत्राऽव्याप्तिः, तद्ज्ञानस्य भ्रमभिन्नत्वा-भावादिति वाच्यम्। तस्याः स्वयमेव वक्ष्यमाणत्वात्। इच्छादावतिव्याप्तिवारणाय ज्ञानत्वमिति।

इदं च न प्रमासामान्यलक्षणम्, किं तु प्रमाविशेषलक्षणम्, अतोनिरुक्ता-ऽव्याप्तिसत्वेपि न क्षतिः। अथवा तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारता-शालिज्ञानभिन्नत्वे सति तत्प्रकारकज्ञानत्वरूप प्रमाविशेषलक्षणपरं मूलम्। एवं च इदंरजतमिति इदंत्वेन शुक्त्यादिविशेष्यकरजतत्वप्रकारकज्ञानस्य शुक्तिनिष्ठ इदन्त्वा-भाववद्विशेष्यकइदन्त्वप्रकारकज्ञानभिन्नत्वात्तस्येदन्त्वांशेप्रमात्वमुपपद्यते, रजत्वाभाव-वद्विशेष्यकरजतत्वप्रकारकज्ञानभिन्नत्वाभावान्न तस्य रजतत्वांशे प्रमात्वमिति। परन्तु वक्ष्यमाणप्रमात्वाऽपेक्षया गुरुभूतमित्यवधेयम्।

विशेष्यताविशिष्टान्यप्रकारत्वानिरूपकज्ञानभिन्नयत्किंचित्प्रकारकज्ञानत्वं प्रमा-त्वम्। वै० स्वनिरूपितत्व-स्वाश्रयनिष्ठाधिकरणतानिरूपितनिरूपकतावदन्यत्वो-भयसं०। निरूपकतावत्ता च स्वसामानाधिकरण्य-स्वावच्छेदकावच्छिन्नत्व-स्वावच्छेदकसंबन्धावच्छिन्नत्व-स्ववृत्तित्वैतच्चतुष्टयसंबन्धेन स्ववृत्तित्वं च स्वानवच्छेद-कानवच्छिन्नत्वसंबन्धेनसम्बन्धव्यावृत्तिः स्वयमूह्यत्यस्मद्गुरुचरणाः। १३२-१३४

लक्षणान्तरमवतारयति। **नन्विति**। भ्रमेऽतिव्याप्तिवारणाय 'सत्यन्तम्। रजते इदं द्रव्यमिति ज्ञानस्य रजतत्वप्रमात्वापत्तिरतस्तत्प्रकारकेति। तादृशेच्छा-यामतिव्याप्तिवारणाय ज्ञानमिति। ननु तथापि रंगरजतयोः इमे रजतरंगे इति रंगांशे रजतत्वावगाहिनि रजतांशे रंगत्वावगाहिनि" भ्रमेऽतिव्याप्तिः, रजतत्ववद्वि-शेष्यकत्वस्य "रंगांशे" रजतत्वप्रकारकत्वस्य, रंगत्ववद्विशेष्यकत्वस्य "रजतांशे" रंगत्वप्रकारकत्वस्य च सत्वादिति चेन्न। तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्व-वद्ज्ञानत्वस्य विवक्षितत्वात्। ययोर्विषयतयोर्निरूप्यनिरूपकभावः ज्ञाननिष्ठतादृश-

अथवा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् ।

तत्प्रमा,

ननु यत्र शुक्ति रजतयोरिमे रजते इदं ज्ञानं जातं तत्र रजतांशेऽपि प्रमा न स्यात् तज्ज्ञानस्य भ्रमभिन्नत्वाभावात् अत आह—

अथवेति । तद्वद्विशेष्यकत्वे सति तत्प्रकारकं ज्ञानं प्रमेत्यर्थः । अथैवं स्मृतेरपि प्रमात्वं स्यात्, ततः किमिति चेत्, तथासति तत्करणस्यापि प्रमाणान्तरत्वं स्यादिति चेत् न । यथार्थानुभवकरणस्यैव प्रमाणत्वेन विवक्षितत्वात् ।

प्रश्न—जहाँ शुक्ति और रजत इन दोनों में "इमे रजते" यह ज्ञान हुआ, अर्थात् दोनों को रजत ( चाँदी ) ही समझ लिया, वहाँ रजत अंश में यद्यपि वह ज्ञान सत्य है परन्तु फिर भी रजत अंश में भी वह ज्ञानप्रमा ( सत्य ) नहीं माना जा सकता है—क्योंकि वह ज्ञान सर्वथा भ्रमभिन्न नहीं है ।

उत्तर—'अथवा' इत्यादि ग्रन्थ से इसका यही उत्तर दिया कि—तदाश्रय विशेष्यक तत्प्रकारक जो ज्ञान वही प्रमाज्ञान है । ( अर्थात् जिस ज्ञान में जिस धर्म का आश्रय विशेष्य हो उस ज्ञान में यदि वही धर्म प्रकार ( विशेषण ) होवे तो वही ज्ञान प्रमाज्ञान कहलाता है )

प्रश्न—प्रमाज्ञान का ऐसा लक्षण करने से स्मृति भी प्रमाज्ञान हो जावेगा । स्मृति भी यदि प्रमाज्ञान हो जावेगा तो क्या हानि हो जावेगी, तब हानि यह हो जावेगी कि स्मृति के कारण संस्कार अथवा अनुभव को पञ्चम प्रमाण मानना पड़ जावेगा ।

---

विषयतानिरूपकत्वयोः "विषयितयो" रवच्छेद्यावच्छेदकभावस्वीकारात् । तद्वन्निष्ठविशेष्यतानिरूपितज्ञानीयतन्निष्ठप्रकारताकत्वं तत्प्रमालक्षणम् ।

एवं । तद्वद्विशेष्यकत्वे सति तत्प्रकारकज्ञानस्य प्रमात्वे । प्रमात्वं स्यादिति । तद्वद्विशेष्यकत्वेसति तत्प्रकारकत्वादित्यर्थः । तथासति । स्मृतेः प्रमात्वे सति । तत्करणस्य । स्मृतिकरणस्य । अनुभवस्य संस्कारस्य वेति यावत् । विवक्षितत्वादिति । तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशाल्यनुभवत्वव्याप्य "प्रत्यक्षत्वादि" जात्यवच्छिन्नकार्यतानिरूपितकारणतावत्त एव प्रमाणत्वेन विवक्षितत्वादित्यर्थः । एवं च स्मृतेः प्रमात्वेऽपि न क्षतिः । ननु संयोगेन घटप्रकारककपालविशेष्यकभ्रमे "घटवत्कपालमित्याकारके" तिव्याप्तिः, समवायेन घटवति घटप्रकारकत्वादित्यतः संबन्धविशेषमन्तर्भावयति । अत्रेदं बोध्यमित्यादिना ।

न प्रमा नापि भ्रमःस्यान्निर्विकल्पकम् ॥१३५॥

प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत् ।

इदं तु बोध्यम् । येन सम्बन्धेन यद्वात्ता तेन सम्बन्धेन तद्वद्विशेष्यकत्वं तेन सम्बन्धेन तत्प्रकारकत्वं च वाच्यम् । तेन कपालादौ संयोगादिना घटादिज्ञाने नातिव्याप्तिः ।

एवं सति निर्विकल्पकं प्रमा न स्यात् तस्य सप्रकारकत्वाभावादत आह—न प्रमेति ।

ननु वृक्षे कपिसंयोगज्ञानं भ्रमः प्रमा च स्यादिति चेत् न ।

उत्तर—यह कथन ठीक नहीं है—क्योंकि यथार्थ अनुभव का कारण ही प्रमाण होता है। (स्मृति अनुभवरूप न होने से स्मृति के कारण संस्कार को अथवा अनुभव को प्रमाण नहीं कहा जा सकता है) यहाँ पर यह जानना चाहिये कि—वास्तविक में जिस सम्बन्ध से जो धर्मी (विशेष्य) जिस धर्म वाला होवे प्रमाज्ञान में भी वह धर्मी उसी सम्बन्ध से उस धर्म वाला होना चाहिये, और वही धर्म उस ज्ञान में प्रकार भी होना चाहिये। ऐसा करने से "संयोगेन घटवत् कपालम्" इस ज्ञान में प्रमालक्षण की अतिव्याप्ति नहीं हुवी। (क्योंकि प्रकारतावच्छेदकीभूत संयोग सम्बन्ध से घटवत्ता कपाल में बाधित है)।

प्रश्न—प्रमाज्ञान का ऐसा लक्षण करने पर निर्विकल्पक ज्ञानप्रमा न हो सकेगा क्योंकि वह सप्रकारक ज्ञान नहीं है।

उत्तर—निर्विकल्पक ज्ञान न प्रमा और न भ्रम है।

प्रश्न—इस प्रकार का लक्षण करने पर 'वृक्षः कपिसंयोगी' इत्याकारक जो वृक्ष में कपिसंयोग ज्ञान वह भ्रम तथा प्रमा उभय रूप मानना पड़ जावेगा। (क्योंकि वृक्ष में अवच्छेदक भेद से कपि संयोग तथा कपिसंयोगाभाव दोनों हैं, सो वृक्ष के जिस प्रदेश में कपि संयोग है उस प्रदेश में वृक्ष कपिसंयोग वाला है, अतः उस प्रदेश के आधार पर "वृक्षः कपिसंयोगी" यह ज्ञान कपिसंयोगवद्विशेष्यक कपिसंयोग प्रकारक होने के नाते प्रमारूप है। और वृक्ष के जिस प्रदेश में कपिसंयोग नहीं है उस प्रदेश में वृक्ष कपिसंयोग के अभाव वाला है, अतः उस प्रदेश में वह ज्ञान कपिसंयोगाभाववद्विशेष्यक कपिसंयोगप्रकारक होने के नाते भ्रम रूप है]

---

तथाचाऽऽधेयतायां प्रकारतायां चैकसंबन्धावच्छिन्नत्वं विवक्षणीयमिति भावः। विशेष्यताविशिष्टप्रकारता निरूपकत्वमित्यनुगमोबोध्यः। वै० स्वनिरूपितत्व-स्वाश्रययनिष्ठाधिकरणतानिरूपितनिरूपकतावत्त्वोभयसं० । निरूपकतावत्ता च प्रसिद्धचतुष्टयसंबन्धेनेति। इदमपि लक्षणं व्यतिरेकिधर्मप्रकारकप्रमाया एव। केवलान्वयिधर्मप्रकारकप्रमायास्तु ज्ञानीयतद्धर्मप्रकारकत्वमिति तत्वम्।

एवं सतीति। प्रकारताघटितप्रमाविशेषलक्षणस्वीकारे सतीत्यर्थः निर्वि-

प्रतियोगिव्यधिकरण संयोगाभाववति संयोगज्ञानस्य भ्रमत्वात्। न च वृक्षे कपिसंयोगाभावावच्छेदेन संयोगज्ञानं भ्रमो न स्यात्तत्र संयोगाभावस्य प्रतियोगिसमानाधिकरणत्वात् इति वाच्यम्। तत्र संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात्। लक्ष्यस्याननुगमाल्लक्षणाननुगमेऽपि न क्षतिः ॥१३५॥

उत्तर—प्रतियोगिव्यधिकरण होकर कपिसंयोगाभाव जिस वृक्ष में रहे उस संयोगाभाववाले वृक्ष में ही संयोगज्ञान भ्रम होता है। प्रकृत में वृक्ष में कपिसंयोगाभाव प्रतियोगि के समान अधिकरण वाला होने के नाते प्रतियोगिसमानाधिकरण ही है प्रतियोगिव्यधिकरण नहीं है, अतः "वृक्षः कपिसंयोगी" यह ज्ञानप्रमा रूप ही है भ्रमात्मक नहीं।

प्रश्न—कपिसंयोगाभाव का अवच्छेदक वृक्ष में जो "मूलावच्छिन्नो वृक्षः कपिसंयोगी" इत्याकारक कपिसंयोग ज्ञान—वह भ्रम नहीं हो सकेगा। क्योंकि आपने प्रतियोगिव्यधिकरण संयोगाभाववत् में ही तो संयोगज्ञान को भ्रम कहा है प्रकृत में वृक्ष में संयोगाभाव प्रतियोगि समानाधिकरण ही है।

उत्तर—वहाँ के लिये अव्याप्यवृत्ति पदार्थप्रकारक भ्रमस्थल में संयोगाभावावच्छेदेन संयोगज्ञान को ही भ्रम कह देने से कोई दोष नहीं है।

प्रश्न—इस प्रकार तो भ्रम के अनेक लक्षण बन जायेंगे।

उत्तर—भ्रम के लक्ष्यस्थल ही जब कि अननुगत (अनन्त) हैं तो लक्षण भी अनन्त हो जावें तो कोई हानि नहीं है ॥१३५॥

---

कल्पकमिति। घटत्वादिनिर्विकल्पकमित्यर्थः। प्रमा न स्यादिति। प्रमापि न स्यादित्यर्थः तस्य। निर्विकल्पकस्य सप्रकारकत्वाभावादिति। प्रकारतानिरूपकत्वाभावादित्यर्थः।

भ्रमःस्यादिति। कपिसंयोगाभाववतिकपिसंयोगप्रकारकत्वादित्यर्थः। प्रमा च स्यादिति। कपिसंयोगवतिकपिसंयोगप्रकारकत्वादित्यर्थः। प्रतियोगिव्यधिकरणेति। स्वप्रतियोग्यनधिकरणेत्यर्थः। कपिसंयोगाभाववतीति। निष्प्रयोजनकमिदम्। तथा च कपिसंयोगानधिकरणविशेष्यककपिसंयोगप्रकारकज्ञानस्येत्यर्थः। भ्रमत्वा दिति। कपिसंयोगभ्रमत्वस्वीकारादित्यर्थः। तादृशभ्रमलक्षणस्य वृक्षःकपिसंयोगीतिज्ञानेऽसत्वान्नोक्तापत्तिरिति भावः। कपिसंयोगाभावावच्छेदेनेति कपिसंयोगाभावावच्छेदकावच्छेदेनेत्यर्थः कपिसंयोगानवच्छेदकावच्छेदेनेतियावत् मूलावच्छेदेनेतितुपरमार्थः। संयोगज्ञानमिति। मूले वृक्ष-कपिसंयोगीति भ्रम इत्यर्थः। तत्र। वृक्षे। प्रतियोगिसमानाधिकरणत्वादिति। कपिसंयोगसमानाधिकरणत्वादित्यर्थः। तथा च वृक्षस्य कपिसंयोगाधिकरणतया कपिसंयोगवद्भिन्नत्वाभावेन नोक्तभ्रमेतिव्याप्तिरिति भावः। नन्वेवं व्याप्यवृत्त्यव्याप्यवृत्तिधर्मप्रकारक

भ्रमस्य नैकविधंलक्षणमित्यतआह। **लक्ष्यस्येति**। व्याप्यवृत्त्यव्याप्यवृत्तिधर्मप्रकारक भ्रमस्येत्यर्थः। **अननुगमादिति**। विभिन्नरूपेण लक्ष्यतास्वीकारादित्यर्थः। **लक्षणानुगमेपीति**। विभिन्नरूपेण लक्षणत्वेपीत्यर्थः। **न क्षतिः**। नाव्याप्तिरित्यर्थः। तथाच व्याप्यवृत्तिधर्मप्रकारकभ्रमलक्षणंयथाश्रुतं बोध्यम्। अव्याप्यवृत्तिधर्मप्रकारकभ्रमस्य तु तदनवच्छेदकावच्छेद्यविशेष्यकज्ञानीयतन्निष्ठप्रकारताकत्वं तल्लक्षणं बोध्यम्।

मूले-**प्रकारतादीति**। **आदिनाविशेष्यत्व-संसर्गत्वयोः** संग्रहः। अत्र यद्वक्तव्यं, तदुक्तं प्राक्॥ १३५॥

इति प्रमालक्षणम्।

ज्ञानसामग्रीतः प्रमात्वप्रयोजिका सामग्रीभिन्ना। एवं ज्ञानज्ञापकसामग्री न प्रमात्वग्राहिका। ज्ञानसामग्री च इन्द्रियपरामर्शादिकं पूर्वमुक्तम्। यदि तन्मात्रप्रयोज्यं प्रमात्वं स्यात् तदा सकलज्ञानानां प्रमात्वं स्यात्, इष्टापत्तौ अप्रमात्मकज्ञानानां विलोपः स्यात्। अतोज्ञानोत्पादकसामग्रीतोऽतिरिक्तापि सामग्री स्वीकार्या। इदमेव प्रमात्वोत्पत्तौ "प्रमात्वसंबन्धे" परतस्त्वम्। तथाचज्ञानोत्पादकसामग्र्यतिरिक्तसामग्रीप्रयोज्यत्वंपरतस्त्वम्। एवं च यत्र ज्ञानोत्पादकसामग्र्यतिरिक्तसामग्री तत्र ज्ञाने प्रमात्वम्। यत्र तदतिरिक्ता सामग्री नास्ति तत्र ज्ञाने न प्रमात्वसंबन्धः। अतो भ्रमात्मकज्ञानानां न विलोपः। सा च सामग्री गुणः "**प्रत्यक्षे तुविशेष्येणेत्यादिना** उक्तैव।

प्रमात्ववदप्रमात्वोत्पत्ति "अप्रमात्वससंबन्ध" रपि परतः। कथमिति चेद् भ्रमस्य दोषजन्यत्वात्। दोषास्त्वनन्ताः। "पित्तदूरत्वादिरूप" इत्यादिनोक्ताः।

तथैव ज्ञानविषयकज्ञानसामग्रीतो न प्रमात्वज्ञानम्। किन्तुज्ञानस्ययया सामग्र्या ज्ञानं भवति तदन्यसामग्र्या एव प्रमात्वज्ञानं भवति। यथा प्रत्यक्षप्रमाणेन घटज्ञानं भवति एवं मनः संयुक्तसमवायेन घटज्ञानस्य ज्ञानं भवति, इन्द्रियेण चक्षुरादिना "अयं घट इत्याकारकं ज्ञानंभवति। मनसा घटज्ञानस्य ज्ञानं" घटमहं जानामीत्याकारकं भवति, इदं च ज्ञानं व्यवसायविषयविषयकं, अत एवाऽनुव्यवसाय इत्युच्यते। तथा च व्यवसायविषयीभूतोघटादिरपि अनुव्यवसायस्य विषयः। एवमात्मा, व्यवसायश्च तथा। अत्र एवानुव्यवसायः त्रिपुटीगोचर इत्युच्यते। अनुव्यवसाये करणं मनः। घटज्ञानेन मनसः स्वसंयुक्तसमवायसंबन्धः। स्वसंयुक्तसमवेतसमवायेन ज्ञानत्वस्य—संयोगेनाऽऽत्मनः—स्वसंयुक्तसमवायेनाऽऽत्मत्वस्य भानं भवति। घटेन सह मनसोऽलौकिकसंबन्धोऽस्ति—स च संबन्धो ज्ञानलक्षणरूपः व्यवसायरूपः स्वसंयुक्तसमवेतज्ञानविषयतात्मकः। प्रमात्वज्ञानं तु अनुमित्यात्मकम् यथा इदंजलज्ञानंप्रमा सफलप्रवृत्तिजनकत्वात् यन्नैवंतन्नैवंयथाऽप्रमेति। अत्रजलज्ञानग्राहकसामग्री "जलमहंजानामी" त्यनुव्यवसायसामग्री—प्रमात्वग्राहकसामग्री तु अनुमानम्, तच्चाऽनुव्यवसावसामग्रीतोभिन्नतया परम्। अतः प्रमात्वग्रहः परतोभवति। तथाचस्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वं स्वतोग्राह्यत्वम्, यथा ज्ञानत्वघटत्वादिषु। तादृशसामग्रीभिन्नसामग्रीग्राह्यत्वं परतोग्राह्यत्वम्, यथा प्रमात्वे।

**प्रमात्वं न स्वतोग्राह्यं संशयानुपपत्तितः ॥१३६॥**

मीमांसक लोग ज्ञान के प्रमात्व ( याथार्थ्य ) को स्वतोग्राह्य ( अर्थात् ज्ञान ग्राहक सामग्री से ही ग्राह्य ) मानते हैं।

---

यद्यपि न्यायमतेपि साध्यवत् पक्षोपि अनुमितिविषयः, पक्षश्च जलज्ञान, अतोऽनुमानमपि ज्ञानग्राहकसामग्री जातम्, एवं च प्रमात्वस्यस्वतोग्राह्यत्वं दुर्वारम्, ज्ञानग्राहकसामग्रीग्राह्यत्वात्। तथापि यावद्ज्ञानग्राहकसामग्रीग्राह्यत्वमेव तत्। ज्ञानज्ञानस्य यत उत्पत्तिः सैवज्ञानग्राहकसामग्री। अनुव्यवसाय ( ज्ञान ) स्य सामग्री मनःसंयोगाऽलौकिकसम्बन्धादिकम्। तादृशसामग्रीतः प्रमात्वस्याऽज्ञानाद् ज्ञानग्राहकसकलसामग्रीग्राह्यत्वाभावात्परतोग्राह्यत्वम्। ज्ञानग्राहकसामग्रीसमुदाया-त्प्रमात्वग्रह एव स्वतःप्रामाण्यग्रहः। परन्तु अस्मिन् मते ज्ञानत्ववत् प्रमात्व विशिष्टस्यैव ज्ञानस्य ज्ञानं भवति, न तु केवलज्ञानत्वविशिष्टस्य। परतः प्रामाण्यग्रहवादि मते तादृशसामग्रीतः केवलज्ञानत्वविशिष्टज्ञानस्य ज्ञानं भवति, न तु प्रमात्वस्यापि, किन्तूक्तानुमानादेव प्रमात्वग्रहोभवतीति तत्त्वम्।

इदमत्रावधेयम्। घटादिज्ञानाद्घटादेः प्रकाशो भवति, अनुव्यवसायाच्च घटादेर्विषयस्य—ज्ञानस्य आत्मनश्च प्रकाशो भवति परन्तुत्रिपुटीप्रकाशेपि स्वस्य "अनुव्यवसायस्य" प्रकाशो न भवति, अनुव्यवसायगोचरानुव्यवसायो भवति "स च घटज्ञानमहं जानामीत्याकारकः" तदा प्रथमानुव्यवसायस्य प्रकाशः। परन्तु द्वितीयानुव्यवसायोऽ प्रकाशित एव। तस्य च प्रकाशः तृतीयानुव्यवसायेन, स च "घटज्ञानस्य ज्ञानमहं जानामीत्याकारकः। परन्तु न्यायनये घटादि-व्यवहारे घटादिज्ञानस्य प्रकाशोऽपेक्षणीयः एवं घटादिज्ञान व्यवहारे अनुव्यव-सायोऽ पेक्षणीयः, न तु अनुव्यवसायप्रकाशोऽपेक्षणीयः। तत्सिद्धं यस्य व्यवहार इष्टः, तस्यैवज्ञानमपेक्षणीयम्, विषयस्य प्रकाशकंयद्ज्ञानं, तत्प्रकाशितं प्रकाशितं वा भवतु। यदि प्रकाशितज्ञानमेव विषयप्रकाशकं स्यात्तदाऽनवस्थास्यात्। तथाहि-न्यायनये प्रकाशकं ज्ञानान्तरं तस्यापि प्रकाशकं ज्ञानान्तरं, एवं तस्य तस्येत्यनवस्था। अतः विषयप्रकाशे ज्ञानप्रकाशो नापेक्षणीयः। किन्तु स्वव्यवहारे-यथाघटादिव्य-वहारे घटादिप्रकाशार्थं घटादिज्ञानमपेक्षणीयम् अप्रकाशितज्ञानादेव घटादिव्य-वहारोभवति। यथाघटज्ञानविरहेपि जलाऽऽहरणादिकार्यं घटः करोति। तत्सिद्ध स्वकार्ये स्वप्रकाशं नापेक्षते। किन्तु स्वव्यवहारे एवेति नानवस्थेति। तथा च न्यायनये कस्यापि ज्ञानस्य स्वप्रकाशरूपता नास्तीति ध्येयम्।

एवम्प्रमात्वमपि न स्वाश्रयज्ञानजनकसामग्रीप्रयोज्यम् नापि स्वाश्रयज्ञानग्राहक सामग्रीग्राह्यम्, तथासति सकलज्ञानानामप्रमात्वं स्यादिति न्यायसिद्धान्तः।

तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपप्रमात्वस्य नैयायिकमतसिद्धपरतो-ग्राह्यत्वव्यवस्थापनाय मीमांसकमतसिद्धस्वतोग्राह्यत्वं निराकरोति। मूले प्रमात्व-

प्रमात्वमिति। मीमांसका हि प्रमात्वं स्वतोग्राह्यमिति वदन्ति। तत्र गुरूणां मते ज्ञानस्य स्वप्रकाशरूपत्वात्तज्ज्ञानप्रामाण्यं तेनैव गृह्यते।

उन ( मी मांसकों ) में भी गुरु के मत में ज्ञान स्वयं प्रकाश है-अर्थात् अपने को स्वयं विषय करता है। दीपक जैसे घट-पट आदि विषयों का प्रकाश करता हुवा अपना स्वयं प्रकाश कर लेता है, अतः ज्ञान जैसे अपने में रहनेवाले ज्ञानत्वधर्म का ग्रहण करता है, वैसे ही प्रमात्व का भी ]

---

मिति। ज्ञाननिष्ठं तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वमित्यर्थः। नस्वतोग्राह्यमिति। न स्वाश्रयज्ञानग्राहकसामग्रीग्राह्यमित्यर्थः। संशयानुपपत्तित इति। प्रमात्वस्य स्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वे क्वचिदपि ज्ञाने प्रमानवेति संशयाभावप्रसंगादित्यर्थः।

ननु प्रमात्वस्य स्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वेपि अर्थविषयकत्वस्य सांशयिकत्ववत् प्रमात्वस्यापि सांशयिकत्वमुपपद्यते-तथाहि-कुंभज्ञानस्याऽम्भोविषयोनवेपि संशयाना दृश्यन्ते जनाः, साम्भसामनम्भसामपि कुम्भानामुपलंभात्, एवं प्रामाण्येपि संशयः किं न स्यादिति चेत् नैवम् अम्भसः कुंभग्राहकसामग्रीमात्रग्राह्यत्वानंगीकारात्-अंगीकारे वा सकलकलशानां सलिलवत्व प्रसंगात्, तस्मान्नारिकेलफलान्तर्गतसलिलादिवद् भिन्नसामग्रीग्राह्यत्वादेव तत्र संशयः। प्रमात्वे तु न तथेतियुक्तमुत्पश्यामः।

किं च प्रमात्वस्य ज्ञानग्राहकसामग्रीग्राह्यत्वे शुक्तिकारजतादिष्वपि प्रमात्वग्रहप्रसंगः, सत्यम्-गृहीतमेव, वाधकादपनीयते सः, यथाहुः—

तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता
अर्थान्यथात्वहेतूत्थदोषज्ञानैरपोद्यते इति

तस्मादिष्टमेवप्रसञ्जनमिति चेत्-तथा सति परतः प्रामाण्य प्रसंगात्। तथा हि-प्रसक्तमपि प्रामाण्यं रजतादिबुद्धिषुवाधकज्ञानादपनीयते इति वदता नेदं रजतमिति वाधज्ञानाभावनिबन्धनमेव प्रमात्वावधारणमभ्युपगतं स्यात्। न च ज्ञप्तिस्वतस्त्वे मानमस्ति।

ननु प्रमा स्वतोज्ञायते परनिरपेक्षोत्पत्तिकत्वात् ज्ञानवत्, तथा प्रमात्वं स्वतो ज्ञायते अप्रामाण्येतरत्वे सति ज्ञानैकधर्मत्वात् ज्ञानत्ववदित्यस्त्येवानुमानमिति चेन्न। प्रथमानुमाने परतः प्रामाण्यवादिमतेहेतोरसिद्धिः, दृष्टान्ताभावश्च, न हि पक्षीकृतां प्रमां विपक्षकुक्षिनिक्षिप्तामप्रमां च विहाय ज्ञानस्याऽपरा कोटिरस्ति या दृष्टान्तपदवीमारोहेत्। द्वितीये च प्रयोगे प्राभाकरस्य स्वयं प्रकाशत्वे ज्ञानैकधर्मत्वेपि ज्ञानग्राहकसामग्रीमात्रग्राह्यत्वाभावात्, अन्यथा वादिनां विप्रतिपत्तिर्न स्यादिति।

ज्ञप्तिपरतस्त्वे चानुमानमाचार्यैरुक्तम्—"प्रामाण्यं परतोज्ञायते अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत्, विपक्षे च प्रमात्वसंशयोन स्यात् ज्ञाननिश्चायकादेव तन्निश्चयप्राप्तेरितिवाधकस्तर्कः" इति।

**भाट्टानां मते ज्ञानमतीन्द्रियम्, ज्ञानजन्या ज्ञातता प्रत्यक्षा तया ज्ञान मनुमीयते ।**

कुमारिल भट्ट के मत में ज्ञान अतीन्द्रिय है अर्थात् ज्ञान का प्रत्यक्ष नहीं होता है। किन्तु ज्ञान पहिले स्वयं उत्पन्न होकर विषय में एक ज्ञातता नामक धर्म को पैदा कर देता है, और उस ज्ञातता का 'ज्ञातोघटः' इत्याकारक प्रत्यक्ष होता है, उसी ज्ञातता से ज्ञान में प्रामाण्य का अनुमान होता है।

---

प्रमात्वंनस्वतोग्राह्यमिति मूलेन स्वतोग्राह्यत्वं निषिध्यते तत्र स्वतस्त्ववादिनः के इत्याकाङ्क्षायामाह । **मीमांसकाहि** इति । गुरु भट्ट-मिश्रा हीत्यर्थः । **प्रमात्वमिति** । ज्ञाननिष्ठं तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वमित्यर्थः । तत्तन्मतसिद्धस्वतोग्राह्यत्वं क्रमेणोपपादयति । **तत्रेति** । त्रिषु मीमांसकेषु मध्ये इत्यर्थः । **गुरूणांमते** इति । प्रभाकराणां मते इत्यर्थः । **ज्ञानस्येति** । व्यवसायस्येत्यर्थः । **स्वप्रकाशरूपत्वादिति** । स्वविषयकत्वादित्यर्थः । स्वं-व्यवसायः । स्वविषयकत्वमेव ज्ञानस्य स्वप्रकाशत्वम् । गुरूणां मते ज्ञानमात्रस्य मिति-मातृ-मेये-तत्त्रितयविषयकत्वम, तन्मते चक्षुः संयोगाद्यनन्तरं घटमहं जानामीतिप्रत्यक्षस्यैवोत्पत्तेः । **तद्ज्ञानप्रामाण्यमिति** । व्यवसायनिष्ठप्रमात्वमित्यर्थः । **तेनैव** । व्यवसायेनैव । न तु अनुव्यवसायेन-अनुमित्या वा इति भावः । **गृह्यते** । विषयीक्रियते तेनैवेतितृतीयार्थोऽभेदः, तस्य ग्रहधात्वर्थे ज्ञानेऽन्वयः । तथा च व्यवसायनिष्ठं प्रमात्वं व्यवसायाभिन्नज्ञानविषयीभूतमितिबोधः । तथा च व्यवसायस्य स्वप्रकाशतया तेनैव तद्गतप्रामाण्यस्य ग्रहणात् सिद्धं स्वतोग्राह्यत्वम् । न च ज्ञानस्य स्वप्रकाशत्वे मानाभावः । ज्ञानस्य तद्गतप्रामाण्यस्य ज्ञानान्तरग्राह्यत्वे तादृशज्ञानान्तरस्यग्रहार्थं ज्ञानान्तरापेक्षायामनवस्थापत्त्या स्वप्रकाशरूपताया आवश्यकत्वात् । अयं भावः । गुरुमते ज्ञानमात्रस्य यथार्थत्वेनाऽप्रमात्मकंज्ञानमेव नास्तीति या सामग्री ज्ञानं जनयिष्यति सैव सामग्री तादृशज्ञानधर्मिकप्रामाण्यज्ञानमपि जनयिष्यति, तन्मते ज्ञानस्य ज्ञानधर्मिकप्रामाण्यज्ञानस्य च समनियततया समनियतधर्मावच्छिन्नकार्योत्पादिका सामग्री समनियतधर्मान्तरावच्छिन्नकार्योत्पादिकेति तत्त्वार्थः ।

ननु गुरुमते ज्ञानस्य स्वविषयकत्वेऽपि स्वनिष्ठप्रमाण्यावगाहित्वे मानाभाव इति चेत् न तादृशशब्दोल्लेखिप्रत्ययस्यैव मानत्वात् । तथाहि गुरुमते अयं घटः घटमहंजानामीत्येव ज्ञानोल्लेखः । तत्र घटपदार्थघटत्वविशिष्टस्य द्वितीयार्थघटत्वनिष्ठप्रकारतानिरूपितविशेष्यतायां आधेयतयाऽन्वयः, तस्य ज्ञाधात्वर्थज्ञाने निरूपकत्वसम्बन्धेनान्वयः, तस्याऽस्मत्पदार्थे समवायेनाऽन्वयः । तथा च घटत्वप्रकारतानिरूपितविशेष्यतानिरूपकज्ञानाश्रयोऽहमिति बोधः । एवं चैतादृशघटत्वप्रकारतानिरूपितविशेष्यतानिरूपकज्ञानाश्रयोऽहमिति बोधः । एवं चैतादृश-

**मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते । सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते ।**

मुरारिमिश्र के मत में अनुव्यवसाय से ज्ञान का तथा ज्ञानगत याथार्थ्य का ग्रहण होता है। [ मुरारिमिश्र के मत में 'अयं घटः' इस व्यवसाय ज्ञान के बाद 'घटमहंजानामि' यह लौकिकमानसज्ञानात्मक अनुव्यवसाय होता है। इसके बाद अनुव्यवसायात्मक ज्ञान से 'अयं घटः' इस व्यवसायज्ञानगतप्रामाण्य का ग्रहण होता है ] सभी के मत में तज्ज्ञान-( व्यवसाय ज्ञान ) विषयकानुव्यवसाय ज्ञान से तज्ज्ञान ( व्यवसाय ज्ञान ) में प्रामाण्य का ग्रहण होता है।

---

शाब्दबोधस्य ज्ञानांशे घटत्वनिष्ठप्रकारतानिरूपितघटत्ववन्निष्ठविशेष्यताकत्वरूपप्रमात्वविषयकतया तादृशशब्दोल्लेखिप्रत्ययस्यापि प्रमात्वावगाहित्वमक्षतम्।

**अतीन्द्रियमिति** । **भट्टानामिति** । कुमारिलभट्टानामित्यर्थः। **ज्ञानमिति** । ज्ञानसामान्यमित्यर्थः। लौकिकविषयताशून्यमित्यर्थः। आत्मसमवेतवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति धर्मादिवत् तादात्म्येन ज्ञानस्य प्रतिबन्धकत्वादित्याशयः। **ज्ञानजन्याज्ञातताप्रत्यक्षेति** । ज्ञानेन विषये ज्ञाततानामकः कश्चिद्धर्मोजन्यते, स च धर्मो ज्ञातो घट इति प्रतीतिसाक्षिको विषयताविशेषः प्रत्यक्षसिद्ध इत्यर्थः। **तया चेति** । प्रत्यक्षप्रमाणसिद्धज्ञाततया चेत्यर्थः। समुच्चयार्थकश्चशब्दः ज्ञानमित्युत्तरं योजनीयः। ज्ञानमनुमीयते इति। ज्ञानं तद्गतप्रामाण्यं चाऽनुमीयते इत्यर्थः। अनुमानप्रकारश्च इयं "घटवृत्ति" ज्ञातता घटत्वप्रकारकघटविशेष्यकज्ञानजन्या घटवृत्तिज्ञाततायाः इति। या यद्वृत्तिज्ञातता सातत्प्रकारकतद्वद्विशेष्यकज्ञानजन्या घटवृत्तिज्ञाततावत्, दृष्टान्तेपि दृष्टान्तान्तरेण साध्यसिद्धिः। अत्रेदंबोध्यम्। आदौ अयं घट इति ज्ञानं-अथ ज्ञाततोत्पत्तिः-घटविशेष्यकघटत्वप्रकारकं ज्ञानजन्यत्वव्याप्य। ज्ञाततेतिव्याप्तिस्मरणमित्येकः कालः। फलबलेन तथाकल्पनात्। तत इन्द्रियसंबद्धविशेषणतात्मक ज्ञाततेन्द्रियसन्निकर्ष-व्याप्तिस्मरणाभ्यां तादृश ज्ञानजन्यत्वव्याप्य घटविशेष्यकघटत्वप्रकारक ज्ञाततावतीयमिति तादात्म्येन व्याप्यवत्तापरामर्शः। तदनन्तरमुक्तानुमितिरिति **अनुव्यवसायेनेति** । तदनुव्यवसायेनेत्यर्थः। तृतीयार्थोऽभेदः, तस्य गृह्यते इत्यत्र ग्रहधात्वर्थे ज्ञानेऽन्वयः। **ज्ञानं** । व्यवसायः। तत्प्रमात्वं चेत्यपि बोध्यम्। तदनुव्यवसायेनेत्यत्र, तत्प्रमात्वमित्यत्र च तत्पदेन व्यवसायग्रहणम्। तथा च तदनुव्यवसायाभिन्नज्ञानविषयीभूतं तत्तन्निष्ठप्रामाण्यमित्यर्थः। स्वोत्तरवर्तिस्वविषयकलौकिकप्रत्यक्षविषयीभूतं तत्प्रामाण्यमिति यावत्। सर्व० व्यवसायः। **सर्वेषामपिमते** इति। सांख्यानां योगानां वेदान्तिनां च मतेपीत्यर्थः। तदुक्तम्—

प्रमाणत्वाऽप्रमाणत्वे स्वतः सांख्याः समाश्रिताः

**विषयनिरूप्यं हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषयः ॥**

ज्ञान विषय से निरूप्य होता है अतः ज्ञानविषयक ज्ञान से पूर्व ज्ञान का विषय भी वेद्य होता है।

---

नैयायिकास्ते परतः, सौगताश्चरमं स्वतः
प्रथमं परत स्त्वाहुः प्रामाण्यं वेदृविनः वा
प्रमाणत्वं स्वतः प्राहुः परतश्चाऽप्रमाणतामिति।

**तद्ज्ञानविषयकज्ञानेनेति**। व्यवसायविषयकज्ञानेनेत्यर्थः। व्यवसायेन-अनुमित्या-अनुव्यवसायेनेतियावत्‌ **तद्ज्ञानप्रमाण्यमिति**। व्यवसायनिष्ठप्रामाण्यमित्यर्थः। **गृह्यते** इति। विषयीक्रियते इत्यर्थः। तथा च तद्ज्ञानविषयकज्ञानाऽभिन्नज्ञानविषयीभूतं व्यवसायनिष्ठं प्रामाण्यमित्याशयः। ननु स्वाश्रयज्ञानत्वव्यापकविषयिताप्रतियोगित्वमेवस्वतोग्राह्यत्वं फलितम्। एवं च त्रिपुटीप्रत्यक्षवादिगुरुमते घटादिविषयकज्ञानस्यैव तादृशज्ञानविषयकत्वात्, भट्टमतेपि ज्ञाततालिंगकानुमितेर्विषयविषयकत्वात् विषयघटितप्रामाण्यावगाहित्वसंभवेपि मिश्रमतेघटं जानामीत्यनुव्यवसायस्य घटादिविषयकत्वेऽपिज्ञानं जानामीत्यनुव्यवसायस्यजानामीत्यानुव्यवसायस्य वा विषयविषयकत्वाभावात्‌ उक्तस्वतोग्राह्यत्वं दुर्घटमित्याशंकां परिहरति। **विषयनिरूप्यंहिज्ञानमिति**। हि यतः किंचिन्निष्ठविषयतानिरूपकमेवेत्यर्थः। **ज्ञानं**। ज्ञानसामान्यम्। यतो ज्ञानत्वं विषयतानिरूपकत्वव्याप्यमिति समुदितार्थः। निर्विषयस्य ज्ञानत्वे मानाभावादिति भावः। **अत इति**। ज्ञानमात्रस्य सविषयकत्वादित्यर्थः। **ज्ञानवित्तिवेद्योविषय इति**। ज्ञाननिष्ठविषयताशालि (अनुव्यवसाय) ज्ञाननिरूपितविषयताशालित्यर्थः। तद्ज्ञान (व्यवसाय) निष्ठलौकिकविषयताशालि (अनुव्यवसायात्मकं) प्रत्यक्षं तद्ज्ञान (व्यवसाय) विषयकमिति फलितार्थः। तथा च घटादिज्ञाननिष्ठलौकिकविषयताशालिप्रत्यक्षं घटत्वादिविशिष्टविषयकं घटत्वादिप्रकारकघटादिविशेष्यकनिर्णयजन्यत्वाद्‌ घटवद्‌भूतलमित्यादिप्रत्यक्षवदित्यनुमानात्‌ अनुव्यवसायमात्रस्य व्यवसायविषयविषयकत्वसिद्धिरिति भावः। नचाऽप्रयोजकत्वम्। अस्य विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षत्वेन विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन कार्यकारणभावरूपाऽनुकूलतर्कसत्वात्। तादृशनिश्चयश्च प्रकृते व्यवसाय एवेति।

मतत्रयसाधारणस्वतस्त्वविषयताशालिसंशयजनकवाक्यानि प्रामाण्यवादे उक्तानि। यथा—

ज्ञानप्रामाण्यं तदप्रामाण्याऽग्राहकयावद्ज्ञानग्राहकसामग्रीग्राह्यं न वेति।

अत्र प्रपूर्वकमाधातोः सकाशात्‌ भावार्थकल्युट्‌प्रत्ययः। भावप्रत्ययस्य-प्रयोगसाधुत्वार्थकत्वेनधात्वर्थमात्रस्यैव भानम्। तथा च प्रमैव प्रमाणम्। ततश्च भावार्थकः ष्यञ्‌ प्रत्ययः तस्य च प्रकृत्यर्थतावच्छेदकबोधकत्वात्‌, प्रामाण्यशब्देन

तद्वतितत्प्रकारकत्वरूपं प्रमात्वं बोध्यते। करणल्युटा च तादृशप्रमाकरणत्वमुपस्थाप्येत तादृशप्रमाकरणत्वनिरासाय ज्ञानपदम् । तथा च ज्ञानवृत्तिप्रमात्वलाभः । एवं च ज्ञानपदादुक्तौप्रामाण्यस्यैव पक्षत्वे अंशतोबाधः स्यात्, प्रमात्वे स्वतोग्राह्यत्वसत्त्वेऽपि प्रमाकरणत्वे स्वतोग्राह्यत्वाभावात्। असति बाधके उद्देश्यतावच्छेदकावच्छेदेनविधेयान्वयोभवतीति नियमबलेन प्रामाण्यावच्छेदकावच्छेदेन ज्ञानवृत्तित्वान्वयात् तादृशप्रमाकरणत्वस्य व्याप्तिज्ञानादिषु सत्वात् तत्र ज्ञानवृत्तित्वस्याऽपक्षतत्वेपि न बाधतादवस्थ्यम्। प्रमाकरणत्वत्वावच्छेदेनज्ञानवृत्तित्वान्वयानुपपत्तेरिति ध्येयम् ।

विशिष्य तद्वतितत्प्रकारकज्ञानत्वस्य पक्षत्वे यद्धर्मप्रकारकज्ञानप्रामाण्यं यदा पक्षः तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यत्वमेव साधनीयम्, न तु सामान्यतोज्ञानग्राहकयावद्ग्राह्यत्वं, तद्वतितत्प्रकारकज्ञानत्वस्य तत्तदर्थभेदेनभिन्नत्वात्कस्यापि प्रामाण्यस्य यावद्ज्ञानग्राहकसामग्रीग्राह्यत्वाभावात् तत्तद्धर्मप्रकारकज्ञानप्रामाण्यं तत्तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यं न वेति विप्रतिपत्तिलाभाय तत्तद्ज्ञानपरं ज्ञानपदमितिदीधितिकृतः ।

घटज्ञानं प्रमेत्याकारकानुमितेः घटत्ववति घटत्वप्रकारकत्वरूपप्रामाण्याश्रय ( घटज्ञान ) विषयकत्वात्, तथा च प्रामाण्यावगाहनस्य नैयायिकसंमतया विधौ सिद्धसाधनम्, निषेधे बाधोऽतोयावत्पदोपादानम्। तदुपादाने च यावत्सामग्र्यन्तर्गताऽनुव्यवसायादिसामग्रीग्राह्यत्वस्य नैयायिकैरस्वीकारान्नोक्तदोषावकाशः। न च तथापि यावत्सामग्रीजन्यग्रहाऽप्रसिद्धया साध्याप्रसिद्धिरिति वाच्यम्। यावत्वस्य ग्रहविशेषणत्वात् तथा च स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहनिष्ठाभावप्रतियोगित्वं घटत्ववद्विशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकत्वत्वानवच्छिन्नं न वेतिसमुदितार्थः ।

इदं ज्ञानमप्रमा इत्याकारको यः स्वाश्रयज्ञानविषयकोग्रहः तज्जनकसामग्र्या अपि साध्यान्तर्गतत्वेन तज्जन्यस्य तादृशग्रहस्य यावद्ग्रहान्तर्गतया तद्विषयत्वस्य प्रमात्वेऽसत्वेन बाधवारणाय अप्रामाण्याग्राहकेति सामग्रीविशेषणम् । प्रामाण्यग्रहप्रतिबन्धकाभावकालीनेति तदर्थः । तदपिग्रहविशेषणम् । प्रामाण्यग्रहप्रतिबन्धकीभूतबाधादिज्ञानकालीनज्ञानस्य प्रामाण्याविषयकत्वात्। प्रामाण्याश्रयज्ञाने प्रामाण्यग्रहप्रतिबन्धिका बुद्धिश्चाऽन्यथाख्यातिमनंगीकुर्वतां गुरूणां नये अगृहीताऽसंसर्गकग्रहरूपैवेति ध्येयम्।

अप्रामाण्याऽग्राहकेत्यस्य सामग्रीविशेषणत्वे तु प्रामाण्यविरोध्यग्राहकेति तदर्थो बोध्यः। इदं निष्प्रकारकमिति ज्ञानगतनिष्प्रकारकत्ववति निष्प्रकारकत्वरूपप्रामाण्यस्यापि पक्षतया तादृशस्थले साध्याऽप्रसिद्धिः, तथा हि इदं निष्प्रकारकमिति ज्ञानस्य ( स्वाश्रयस्य ) यः निष्प्रकारकं जानामि "निष्प्रकारकज्ञानवानहम्" इत्याकारकोग्रहः तज्जनकसामग्र्यां सामान्यतः प्रामाण्यविरोधिनो निष्प्रकारकत्वस्य योग्रहस्तज्जनकत्वात्। निष्प्रकारकत्वादेः अयं घट इति ज्ञानगतप्रामाण्यविरोधित्वात्, तस्य प्रकारताघटितत्वात्। अतस्तत्तदिति । तच्चाऽप्रामाण्यविशेषणम्—

तन्मतं दूषयति न स्वतोग्राह्यमिति। संशयेति॥ यदि ज्ञानस्य प्रामाण्यं स्वतोग्राह्यंस्यात्, तदाऽनभ्यासदशापन्न ज्ञाने प्रामाण्यसंशयो न स्यात्। तत्र हि यदि ज्ञानं ज्ञातं तदा त्वन्मते प्रामाण्यं ज्ञातमेवेति कथं संशयः, यदि तु ज्ञानं न ज्ञातं तर्हिंधर्मिज्ञानाभावात् कथं संशयः।

खण्डन—नैयायिक मीमांसक मत का खण्डन करता है कि—प्रमात्व स्वतः ग्राह्य नहीं है। क्योंकि यदि ज्ञान का प्रामाण्य स्वतोग्राह्य अर्थात् ज्ञानग्राहक सामग्री से ग्राह्य माना जायगा तो जिस वस्तु को मनुष्य अच्छी प्रकार नहीं जानपाता है अनभ्यास दशापन्न उस वस्तु के ज्ञान में प्रायः याथार्थ्य का संशय हुआ करता है—सो अब नहीं होना चाहिये, कारण कि ज्ञान का ज्ञान यदि किसी व्यक्ति को हो गया तो पूर्व ज्ञान में उसे प्रामाण्य भी ज्ञानविषयक ज्ञान से मीमांसक मतानुसार ज्ञात ही हो गया, फिर ज्ञान के प्रामाण्य ( याथार्थ्य ) में संशय क्यों। और यदि ज्ञान ज्ञात नहीं हुवा अर्थात् ज्ञानविषयक ज्ञान नहीं हुवा तब धर्मी का ज्ञान भी संशय में कारण होता है-अतः तब धर्मि ज्ञानाभावादेव न प्रामाण्य संशय' नैयायिक कहता है।

---

सामग्रीतत्पुरुषः, तादृशप्रमात्वाश्रयवृत्तीत्यर्थः। तथाचाऽयं घट इत्यादिज्ञानगत-प्रामाण्यस्य स्वाश्रयवृत्तित्वविरहान्नाऽप्रसिद्धिः।

घटादिविषयकज्ञानेन घटादिविषयकज्ञानीयप्रामाण्याऽग्रहाद्वाधः, तद्वारणाय च स्वाश्रयत्वं ज्ञानविशेषणम्। इच्छादीनामपि तद्वति तत्प्रकारकत्वरूपप्रामाण्य-श्रयत्वात् तज्ज्ञानजनकसामग्र्याश्च प्रामाण्याऽग्राहकत्वाद्बाध इत्यतोज्ञानत्व-विशिष्टनिवेशः।

ज्ञानग्राहकाऽऽत्मशरीरजन्ययावद्ग्रहविषयत्वमप्रसिद्धम्, आत्मादिजन्यया-वद्ग्रहविषयत्वस्य कुत्राप्यसत्वात्। समवायेन ज्ञानसामान्यं प्रति तादात्म्येनाऽऽत्मनः, अवच्छेदकतासंबन्धेन ज्ञानं प्रति तादात्म्येन शरीरस्य च कारणत्वात्। अतः सामग्रीति। अत्राऽऽत्मपदेन यादृशाऽऽत्मनि अप्रामाण्यग्रहो न जातस्तादृशआत्मा ग्राह्यः, एवं शरीरपदेनापि। तेन प्रामाण्यग्राहकत्ववदप्रामाण्यग्राहकत्वस्यापि आत्मनि सत्वादप्रामाण्याऽग्राहकत्वविशेषणेनैव तद्वारणसंभवात् सामग्रीपदं व्यर्थ मित्याक्षेपोपि समाहितः।

एवं च तत्तद्ज्ञानप्रामाण्यं तत्तद्ज्ञानवृत्त्यप्रामाण्याऽग्राहकस्वाश्रयज्ञानत्व-विशिष्टग्राहकसामग्रीग्राह्यं ज्ञानमात्रधर्मत्वात् ज्ञानत्व-ज्ञान-घटत्वप्रकारकत्व-घटत्व-वद्विशेष्यकत्ववदित्यनुमानं फलितमित्यन्यत्र विस्तरः।

तन्मतं दूषयतीति। प्रामाण्यं स्वतोग्राह्यमितिवादिनोमीमांसकस्य मतं दूषयतीत्यर्थः। संशयानुपपत्तिं दर्शयति। यदीत्यादि। पौनःपुन्यमभ्यासः। प्रामाण्यसंशयो न स्यादिति। अयं घट इति ज्ञानं प्रमा न वेति संशयो न स्यादित्यर्थः। ननु प्राभाकरमते घटादिज्ञानस्यैव तद्ज्ञानविषयकत्वात्, तद्ज्ञान-

निष्ठप्रामाण्यावगाहित्वस्यावश्यकतया संशयानुपपत्तिसत्वेपि भट्टादिमते व्यवसायस्य तद्ज्ञानाविषयकतया प्रामाण्यविषयकत्वाभावाद् व्यवसायोत्तरं संशयोनानुपपन्न इत्यत आह । **यदि तु** इति । अवधारणार्थकस्तु शब्दोज्ञानमित्युत्तरं योजनीयः । **ज्ञानं न ज्ञातमिति** । ज्ञानमेव न निर्णीतमित्यर्थः । **धर्मिज्ञानाभावादिति** । धर्मितावच्छेदकप्रकारकज्ञानाभावादित्यर्थः । **कथं संशय** इति । तथा च निर्धर्मितावच्छेदकसंशयाऽप्रसिद्ध्या संशये धर्मितावच्छेदककप्रकारकनिश्चयस्य हेतुत्वमावश्यकम्, प्रकृते च तदभावात्संशयानुपपत्तिरिति भावः ।

तथा च प्रामाण्यं 'स्वतोग्राह्यत्वाभाववत्" परतोज्ञायते अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत्, स्वतोग्राहत्वे प्रामाण्यसंशयोन स्यात् ज्ञाननिश्चायकादेव तन्निश्चयादिति तर्कोबाधकः ।

ननु नैवमनुमानमुदेति, धर्मिणः हेतोश्चाऽसिद्धेः । तथा हि प्रामाण्यं सफलप्रवृत्तिजनकत्वलिंगावगम्यं भवद्भिरुपेयते, तस्य च लिंगस्य प्रवृत्तिः प्रामाण्यसंशयपूर्विका, असन्दिग्धे सिषाधयिषाविरहेणाऽनुमानाऽप्रवृत्तेः, तत्संशयश्च क्वचिन्निश्चयाधीन इति "प्रामाण्ये" संशयनिश्चययोरन्योन्याश्रयान्नैकमपि सिद्ध्येदिति चेत् न विकल्पाऽसहत्वात् । किं स्वार्थानुमानमसन्दिग्धे न प्रवर्तते, किंवा परार्थानुमानम् । नाद्यः सद्यः समुन्मीलितविलोचनस्य धूमलेखावलोकनसमनन्तरमप्रत्यूहं वन्ह्यनुमितेरुत्पादात् । नापि द्वितीयः विपर्यस्तमपि प्रतिवादिनं प्रति अनुमानोपयोगोपगमात् । अन्यथा जल्पवितण्डयोः प्रमाणतर्काभ्यां स्वपरपक्षसाधनोपालंभाऽसंभवात् । सन्दिग्धे न्यायः प्रवर्तते इति वचनस्याऽयोगव्यवच्छेदपरत्वात्, क्वचित्साधकबाधकप्रमाणानुदयात्सन्देहे सति न्यायप्रवृत्त्युपपत्तेः ।

नचाऽनभ्यासदशायामिति विशेषणस्य वैयर्थ्यम् । असिद्धिवारकत्वात्, अभ्यस्तनिश्चयनिष्ठप्रमात्वस्यापि पक्षान्तर्गततया सांशयिकत्वविरहेण भागासिद्धिः स्यादिति । न च व्यभिचारवारकमेव हेतोर्विशेषणमिति नियमः । असिद्धिवारकविशेषणानामपि सार्थक्यदर्शनात् ।

ननु प्रामाण्यस्य परतोज्ञानेऽ नवस्था तत्तत्प्रामाण्यग्रहणायाऽन्यस्यान्यस्यप्रामाण्यस्याऽपेक्षणादतः प्रतिकूलतर्कपराहतं परतः प्रामाण्यानुमानमिति चेत् सत्यम् । मानान्तरस्यावश्यंभावनियमाभावात् । न च स्फुरत एव मानस्यार्थनिश्चायकत्वम्, अन्यथाज्ञानेपि अनन्तरं संशयापत्तेरिति वाच्यम् ।

ज्ञाततयाऽनुमेयं ज्ञानमितिमते निलीनस्यापि ज्ञानस्यार्थनिश्चायकत्वात् । स्वयं प्रकाशो ज्ञानमिति वदतः प्राभाकरस्यापि मते प्रामाण्यस्य तद्गतगुणत्वादेरिव न स्वतः स्फुरणम्, तस्यापि ज्ञानवत्स्वप्रकाशत्वापत्तेः । तथात्वे चाऽप्रमात्वस्यापि स्वतः स्फुरणप्रसंगात् । ततश्चाऽप्रामाण्यं परतः प्रतीयते इति स्वसिद्धान्तभङ्गप्रसंगः । वेदान्तिनां च प्रामाण्यस्य साक्षिवेद्यत्वेन स्फुरणनियमात् । इदं प्रमा न वेति संशयो न भवेत् । न च प्रमास्वत एव फलं जनयति । हानोपादानोपेक्षालक्षणस्य

त्रिविधस्यापि फलस्य वस्तुज्ञानातिरिक्त गुणदोषमाध्यस्थ्यदर्शनपूर्वकत्वाभ्युपगमात् इति प्रमात्वं न स्वतो ग्राह्यमिति।

अत्र प्रासंगिकं किंचिदुच्यते न तावत्प्रमायाः स्वतस्त्वानिर्वचनम्।
यतः "आद्यविज्ञानसामग्रीजन्यत्वे सत्यजन्यता
तदन्यतः प्रमाया, स्तत्स्वतस्त्वमिति तद्विद इति।

विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वं प्रमायाः स्वतस्त्वम्। न चाऽजन्यत्वादीश्वरज्ञाने व्याप्तिरिति वाच्यम्। तस्याऽजन्यत्वेपि ज्ञानसामग्री जन्यत्वे सति अतिरिक्तकारणजन्यत्वलक्षणविशिष्टधर्मवत्त्वाभावात्। अप्रमाया विज्ञानसामग्रीजन्यत्वे सति अतिरिक्तदोषात्मकहेतुजन्यत्वान्नातिप्रसक्तिः। अस्ति-चात्राऽनुमानं प्रमाणम् तथा हि प्रमा विज्ञानसामग्रीजन्यत्वे सति नान्यतोजायते अतिरिक्तत्वादप्रमातः पटादिवत्। न च ज्ञानत्वानधिकरणत्वमुपाधिः। ईश्वरज्ञाने साध्याऽव्यापकत्वात्। अत एव ज्ञानसामग्रीजन्यत्वमपि नोपाधिः। यद्ज्ञान-सामग्रीजन्यं तद् ज्ञानसामग्रीजन्यत्वे सति अतिरिक्तकारणजन्यमप्रमावदिति व्यतिरेकव्याप्तौ अप्रमात्वस्यैवोपाधित्वात्। विपक्षे च विज्ञानसामग्रीमात्रादेव प्रमोत्पत्तिसंभवे तद्व्यतिरिक्तगुणस्य दोषाभावस्य वा कल्पनागौरवप्रसंगोबाधकस्तर्कः। एतेन प्रमा विज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वाद् घटवदिति योयमुदयनस्य परत-स्त्वेपि प्रयोगः सोपि परास्तः। प्रमा दोषव्यतिरिक्तज्ञानहेत्वतिरिक्तजन्या न भवति ज्ञानत्वादप्रमावदिति सत्प्रतिपक्षितत्वाच्च।

न च प्रमात्वस्य विज्ञानसामग्रीमात्रप्रयोज्यत्वे प्रमाज्ञानवृत्तित्वं स्यादिति वाच्यम्। तत्र प्रयोजकाभावादेव प्रयोज्यस्याऽप्रसक्तेः, दोषाभावसहकृतज्ञान-सामग्रीप्रयोज्यं हि प्रमात्वं, तत्र दोषस्यैव सद्भावात् कथं प्रमात्वस्य वर्तमानत्व-संभावनापि समुद्भवेत्। दोषस्याऽप्रमाहेतुत्वे तदभावस्य गलेपादुकान्यायेन प्रमां प्रति हेतुत्वं स्यादिति चेत् स्यादेवं यद्यन्यासिद्धौ अन्वयव्यतिरेकौ कारणत्वा-वेदकौ स्याताम्, तौ तु विरोध्यप्रमाप्रतिबन्धकत्वेनोपक्षीणौ न कारणत्वमावेदयतः। यथाहुर्भट्टपादाः—

तस्माद् गुणेभ्यो दोषाणा मभावस्तदभावतः

ननु एकस्यापि दोषाभावस्याऽप्रमाप्रतिबन्धकत्वं प्रमाहेतुत्वं च किं न स्यात्, यथा एकस्यापि संस्कारस्याऽनुभवनाशकत्वस्मृतिहेतुत्वयोरपि दर्शनात् मैवं—तत्र संस्कारस्यानुभवनाशकत्वेऽपि स्मृतेः संस्कारातिरिक्तकारणान्तराऽनिरूपणात् स्मृति-हेतुतायाः अवश्याश्रयणीयत्वात्। न च तत्रापिसंस्कारनाशात् स्मृतिः किं न स्यादिति वाच्यम्। स्मृतिसमुदयव्यतिरेकेण संस्कारनाशस्यैवाऽसंभवात्। प्रकृते तु ज्ञान-सामग्रीत एव प्रमोत्पत्तिसंभवे दोषाभावस्यापि हेतुत्वकल्पनानिष्प्रामाणिकी। तस्मात् प्रमाविज्ञानसामग्रीमात्रादेवजायते इति सिद्धम्। एवं प्रमाज्ञप्तिरपि विज्ञान-ज्ञापकसामग्रीत एव। एवं च प्रमात्वस्यस्वतोग्राह्यत्वेपिप्रतिबन्धकदोषादिसमवधाना-त्संशयविपर्ययौ स्याताम्। न च ज्ञानज्ञापकादेव प्रामाण्यग्रहणे मिथ्याज्ञानादि-ष्विपु प्रामाण्यग्रहणप्रसंग इति वाच्यम्। ज्ञापकस्यापि प्रामाण्यग्रहणस्य कारणं

दोषावगमबाधज्ञानाभ्यामपनयात् । न च ताभ्यामपनये तयोरभावज्ञानस्य प्रामाण्यग्रहहेतुत्वप्रसक्त्या परतः प्रामाण्यापत्तिरिति वाच्यम् । दोषबाधज्ञानयोरनुदयमात्रेण प्रामाण्यस्फुरणस्वीकारात् । यथाहुर्भट्टपादाः—

यदा स्वतः प्रमाणत्वं तदान्यन्नैवमृग्यते ।
निवर्तते हि मिथ्यात्वं दोषाऽज्ञानादयत्नत इति

अन्यथा दोषाभावावगमस्यापि प्रामाण्यावगमाय तत्तदभावावगमान्तराणामप्याश्रयणीयतया अनवस्थापत्तेः । न च प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवदिति विपर्ययानुमानेन सत्प्रतिपक्ष इति वाच्यम् । स्वतः प्रमाणत्वेन भवदभिमतेषु एवानुमानोपमानानुव्यवसायेषु व्यभिचारात् । उक्तं चैतदनुमानादेः स्वतः प्रामाण्यमाचार्यवाचस्पतिना तात्पर्यटीकायामिति संक्षेपः ।

अथ घटज्ञानादिजनकीभूतघटेन्द्रियसन्निकर्षादीनां प्रामाण्यविषयित्वावच्छिन्नजन्यतानिरूपितजनकत्वाभावात्कथं तेषां प्रामाण्यग्राहकत्वमिति चेन्न । सन्निकर्षजन्यतावच्छेदककोटौ प्रामाण्यविषयित्वाऽनिवेशेपि इदंज्ञानं न प्रमेतिबाधनिश्चयाभावजन्यतावच्छेदककोटौ तन्निवेशस्याऽऽवश्यकत्वात् । घटचक्षुःसंयोगादिसहकृततादृशबाधाभावाद्यात्मकसामग्रीबलादेव तत्र प्रामाण्यभानोपपत्तेः ।

अथ विशेषणतया आत्मसमवेतवृत्तिप्रत्यक्षं प्रति मनः संयुक्तसमवेतविशेषणताया हेतुत्वं इच्छादौ विषयित्वादिप्रत्यक्षानुरोधेन कल्पनीयम् । एवं च तथाभूते प्रामाण्येऽव्यवहितपूर्वक्षणेस्वाश्रयविरहात्तद्घटितोपदर्शितसन्निकर्षरूपकारणविरहेण कथं स्वाश्रयोत्पत्तिक्षणे तस्य प्रत्यक्षं संगच्छते इति चेत्तर्हि इच्छाप्रत्यक्षानुरोधेनाऽऽत्मसमवेतगोचरप्रत्यक्षं प्रति मनः संयुक्तसमवायस्यहेतुतायाक्लृप्तत्वात् । प्रामाण्यरूपविशेषणोपस्थितिं विना कथं प्रथमतोज्ञानांशे प्रामाण्यविशिष्टबुद्धिरिति तु नाशंकनीयम् । प्राभाकराः विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुत्वमेव नोपगच्छन्ति ।

अव्यवहितपूर्वक्षणावच्छेदेनज्ञाने तादृशाहेत्वभावात्स्वोत्पत्तिक्षणे ज्ञानप्रत्यक्षमेव कथमुत्पद्यते इति विभावनीयम् ।

अथ घटत्वादिप्रकारकप्रत्यक्षकालेबाधाभावादिबलाद् घटत्ववतिघटत्वप्रकारकत्वरूपप्रामाण्यग्रहप्रसंगः । घटत्वादिप्रकारकज्ञानजनकीभूतघटचक्षुः संयोगादिकं विना कदापि घटत्ववति घटत्वप्रकारकत्वादीनामग्रहणाद्बाधाभावादीनां तादृशसहकारिसमवहितानामेव तादृशप्रामाण्यग्रहे हेतुत्वमभ्युपेयते, घटत्वादिप्रकारकप्रत्यक्षकाले च तादृशसहकारिविरहान्न तदापत्तिरिति तु न विचारसहम् । यतस्तथाभूतप्रामाण्यग्रहे बाधाभावादिजनयितव्ये घटे चक्षुः संयोगादीनां घटचक्षुः संयोगत्वादिनासहकारित्वं न संभवति, चाक्षुषादौ चक्षुः संयोगादीनां घटादिकमनिवेश्य सामान्यतश्चक्षुः संयोगत्वादिनैव हेतुत्वम् । एवं च घटचक्षुः संयोगत्वानांतादृशप्रामाण्यावगाहिग्रहनिष्ठकार्यतानिरूपितकारणतानवच्छेदकत्वात्, किं तु तथाविधचक्षुः संयोगत्वादिनैव सहकारित्वमुपगम्य तदवच्छिन्नघटितसामग्री च घटचक्षुः संयोगकालेपि अक्षतेति नापत्तिवारणसंभवः । घटत्वादिप्रत्यक्षं प्रति संस्थानविशेषावच्छिन्नसन्निकर्षादिना हेतुत्वस्यावश्यकत्वाद् घटत्वप्रकारकत्वादिग्रहप्रयोजकसामग्र्यां

कंबुग्रीवाद्यवच्छिन्नसन्निकर्षावच्छिन्नत्वं निवेश्य वक्रापत्तेः शक्यवारणमिति चेद्-एवमपि तत्तद्घटादौ इदन्त्वादिप्रकारकत्वघटितप्रामाण्यस्य घटाद्यन्तरसन्निकर्षदशायां दुर्वारमेव न हि तत्तद्घटसन्निकर्षत्वादिना सन्निकर्षस्य हेतुत्वं कश्चिदभ्युपैति, येन तत्तद्घटवृत्तिइदन्त्वादिप्रकारकत्वघटितप्रामाण्यग्रहप्रयोजकीभूतसामग्र्या तत्तद्व्यक्तिसन्निकर्षावच्छिन्नत्वं निवेश्याऽतिप्रसंगं वारयिष्यामः।

उच्यते। तद्धर्मावच्छिन्नविशेष्यकतदत्यन्ताभाव-तदवच्छिन्नभेद-व्याप्यवत्तानिश्चयात् तद्धर्मावच्छिन्नविशेष्यताकतदत्यन्ताभावानुमितिवारणाय विशेष्यतावच्छेदकतासम्बन्धेनतदभावानुमितौ तद्धर्मभेदस्य हेतुत्वमुभयवादिसिद्धमेव।

परन्तु तादृशस्थले विशेष्यतावच्छेदकतासम्बन्धेन तदभावानुमितित्वस्य कार्यतावच्छेदकत्वं नोपेयते-अपितु तद्धर्मान्यवृत्तिविषयतासंबन्धेनज्ञानत्वस्यैव, तावतापि विशेष्यतावच्छेदकत्वप्रत्यासत्त्या तदभावव्याप्यवत्तापरामर्शेन फलेजननीये तद्भेदस्य सहकारित्वमुपगम्य दशापत्तेर्वारयितुं शक्यत्वात्। तादृशप्रणाल्या च तद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानत्वावच्छिन्नं प्रति तद्धर्मभेदानां कारणत्वे सिद्धे तद्धर्मे इन्द्रियसन्निकर्षशून्यकाले तत्प्रकारकत्वघटितप्रामाण्यस्य न बाधाभावादिवलाद् ग्रहापत्तिः। बाधाभावादिनातद्ग्रहजनके तत्प्रकारभिन्नाः ये ये धर्मास्तत्तद्भेदकूटसन्निकर्षात्मिकाया विषयनिष्ठप्रत्यासत्तेः कार्योत्पादकसामग्र्यामपेक्षितत्वात्। तदानीं च धर्मान्तरसन्निकर्षसत्वेपि तद्भेदकूटसन्निकर्षघटितसामग्र्याः कथमपि विषयेऽसत्वात्। घटत्वादिसन्निकर्षशून्यकाले धर्मान्तरसन्निकर्षादिसहकृतभूतलत्वावच्छिन्नधर्मिकघटत्वावच्छिन्नविशिष्टबुद्ध्युत्पादके बाधाभावबलात्तादृशविशिष्टबुद्धेरापत्तिवारणाय पुनरीदृशरीतिरुभयोरेवाऽऽदरणीया।

स्यादेतत्। तादृशरीत्याऽतिप्रसंगवारणेसंभवेपि ज्ञानस्य स्ववृत्तिप्रामाण्यविषयकत्वे लाघवादिविरहात्तत्तदुपगमोऽनिरर्थक एवेति।

अथाऽयं घट इत्यादिज्ञानस्य इदं विशेष्यकघटत्वादिप्रकारकत्वादिना ग्रहणं नैयायिकानां संमतम्। इयांस्तु विशेषः। यत्तादृशप्रत्यक्षं नैयायिकमते तु व्यवसायानन्तरमुत्पद्यते। गुरुमते तु व्यवसाय एव तद्रूपः। व्यवसायस्य तद्रूपत्वे ज्ञानान्तराऽकल्पनप्रयुक्तलाघवस्य सत्वात्। तथाविधव्यवसायस्य इदं विशेष्यकत्वान्तराऽकल्पनप्रयुक्तलाघवस्य ... एवं तादृशव्यवसायस्य इदमंशावच्छिन्नघटत्वप्रकारकत्वावगाहित्वं निष्प्रत्यूहमेव। एवं तादृशव्यवसायस्य इदमंशघटत्वावगाहनं सर्वसिद्धमेवेति किमवशिष्यते घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपप्रामाण्यावगाहने इति चेन्न। न हि इदानीं वास्तवघटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वादिरूपप्रामाण्यनिरूपितयत्किंचित् विषयितावत्तादृशत्वावच्छिन्नघटत्वप्रकारकत्वादिरूपप्रामाण्यनिरूपितयत्किंचित् विषयितावत्तादृशज्ञानं प्रामाण्याश्रयग्रहत्वव्यापकत्वे विवदामहे, अपि तु अयं घटः अयघटत्वप्रकारकं ज्ञानं इत्याकारक विशृंखलविषयताशालिज्ञानव्यावृत्तायाः घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्ववदिदं ज्ञानमित्याकारकज्ञानीयविलक्षणविषयतायाः एव तथात्वे। तथाविधप्रामाण्यग्रहस्यैव प्रवृत्त्याद्युपयुक्तत्वात्। एवं चोपदर्शितरीत्या प्रामाण्यघटकीभूतसकलपदार्थानां सिद्धावपि तादृशविलक्षणविषयता तथाविधव्यवसायेऽसिद्धैवेति।

अथ विशिष्टविषयतायास्तादृशग्रहत्वव्यापकत्वसिद्धिरेवगुरूणामुद्देश्या-तदा प्रामाण्यपक्षकयावत्तदाश्रयग्राह्यत्वतदभावकोटिक "मणिकाराद्युपदर्शित" विप्रतिपत्तौ प्रामाण्यस्य विश्रृंखलक्रमेण तदाश्रययावद्ग्राह्यतया अर्थान्तरप्रसंगोदुर्वारः। न च तादृशग्रहवृत्ति तथाविधविशिष्टविषयिताप्रतियोगित्वकोटिकविप्रतिपत्तावेव मणिकारादीनां तात्पर्यमिति वाच्यम्। तादृशविधिकोटेः पक्षातिरिक्ते ऽप्रसिद्धेरिति चेन्न। तादृशविषयितापक्षक तथाविधयावद्ग्रहवृत्तित्वकोटिकविप्रतिपत्तावेव तात्पर्यात्।

अत्र वदन्ति प्रामाण्यस्य परतोग्राह्यत्वे ऽनवस्थानात्। अन्यथानुपपत्तिसिद्धमेव तस्य स्वतोग्राह्यत्वम्। तथा हि अप्रामाण्यज्ञानास्कन्दितज्ञानात्प्रवृत्त्यादिकार्यानुत्पत्त्या गृहीतप्रामाण्यकज्ञानत्वेनैव प्रवृत्तिहेतुत्वमुपगन्तव्यम्। एवं प्रामाण्यग्रहस्यापि अप्रामाण्यज्ञानास्कन्दितस्याऽकिंचित्करतया तत्रापि गृहीतप्रामाण्यकत्वं अवश्ये निवेशनीयम्। एवं तादृशप्रामाण्यग्रहादावपि गृहीतप्रामाण्यकत्वं निवेश्यम्। एवं परतः प्रामाण्यग्रहपक्षे प्रवृत्त्यादिजनकज्ञाने अनुमानाद्यधीनः प्रामाण्यग्रहोऽपेक्षणीयः, एवं तत्रापि तथाविधप्रामाण्यग्रहान्तरमपेक्षणीयमितिक्रमेणाऽनवस्थितप्रामाण्यग्रहधाराया अपेक्षितत्वात्, कदापि प्रवृत्यादिकार्यं नोत्पद्येत। मन्मते तु प्रवृत्त्यादिजनकीभूतज्ञानस्यैव स्वीयप्रामाण्यविषयकतया न प्रामाण्यग्रहान्तरापेक्षा। न च प्रामाण्यग्रहान्तरानपेक्षणेपिविषयानवस्थितिः स्वतस्त्वमतेऽदुर्वारैव—तन्मतेऽयंघटइत्याकारकज्ञानस्यैव घटत्वतत्प्रामाण्यादिघटिततत्प्रामाण्यधारावगाहित्वस्वीकारणीयत्वात्। तत्तत्प्रामाण्यघटितप्रामाण्यावगाहित्वानभ्युपगमे गृहीतप्रामाण्यकप्रामाण्यज्ञानविरहेण प्रवृत्त्यनुदयापत्तिरितिवाच्यम्। एकस्यैव ज्ञानस्य प्रामाणिकप्रामाण्यधारावगाहित्वाभ्युपगमे क्षत्यभावात्।

एवं परतस्त्वपक्षे प्रवर्तकज्ञानादौ आनुमानिक एव प्रामाण्यग्रहो वाच्यः, तत्र च गृहीतप्रामाण्यकलिङ्गादिज्ञानापेक्षा, तत्र प्रामाण्यग्रहोपि गृहीतप्रामाण्यकलिङ्गज्ञानान्तरादित्येवं रीत्या अनवस्थितलिङ्गादिज्ञानतत्प्रामाण्यग्रहधारापेक्षणे प्रवृत्त्यादिकार्यानुत्पत्तिरपिदुर्वारैव।

अथ स्यादेवं यदि गृहीतप्रामाण्यकज्ञानत्वेन प्रवृत्यादिहेतुता स्यात्, तदेव न-अप्राण्यज्ञानास्कन्दितज्ञानात् प्रवृत्यादिवारणायाऽप्रामाण्यज्ञानाभावविशिष्टज्ञानत्वेनैव तद्धेतुत्वोपगमात्। न च प्रामाण्यग्रहवैशिष्ट्यनिवेशापेक्षया अप्रामाण्यग्रहाभाववैशिष्ट्यनिवेशे गौरवमिति वाच्यम्। यतः सन्दिग्धप्रामाण्यकनिश्चयात्तत्तत्कार्यविशेषापत्तिवारणाय निश्चितप्रामाण्यकत्वमेव हि भवता निवेश्यम्-ममतु संशयसाधारणाऽप्रामाण्यग्रहत्वावच्छिन्नभावस्य निवेश इति निश्चयत्वस्यानिवेशेन लाघवमिति चेन्न। अगृहीताऽप्रामाण्यकनिश्चयत्वेन हेतुतामते प्रमात्वाभावग्रहकाले भ्रमत्वग्रहकाले च तत्तत्कार्यवारणाय प्रमात्वाभाव-भ्रमत्वरूपद्विविधाऽप्रामाण्यग्रहाभावः कारणतावच्छेदककोटौ निवेशनीयः तदपेक्षया एकविधप्रामाण्यग्रहस्यैव तथात्वमुचितम्। न चैतन्मते तद्वतितत्प्रकारकत्वरूपस्य भ्रमत्वाभावरूपस्य वा प्रामाण्यस्यग्रहोऽवच्छेदक इत्यत्रविनिगमकाभावाद् द्विविधप्रामाण्यग्रहस्यैव तथात्वमित्याशंक्यम्।

तदभाववतितत्प्रकारकत्वरूपस्य विशेष्यावृत्तिप्रकारकत्वस्य च भ्रमत्वस्याभावापेक्षया तद्वतितत्प्रकारकत्वस्य लघुशरीरतायां एव विनिगमकत्वात् ।

एतेन तद्वति तत्प्रकारकत्वरूपस्य भ्रमत्वाभावरूपस्य वा प्रामाण्यस्य स्वतस्त्वं स्वीकरणीयमित्यत्र विनिगमकाभाव इति परास्तम् । तद्वतितत्प्रकारकत्वस्य प्रवृत्त्याद्युपयोगितायां एव विनिगमकत्वात् । न च भ्रमत्वप्रमात्वोभयकोटिकसंशयकाले प्रमात्वतदभावकोटिकसंशयकाले च प्रवृत्त्यादिवारणाय भ्रमत्वाप्रकारकत्वे सति प्रमात्वाभावाप्रकारकं यत्प्रमात्वज्ञानं तद्विशिष्टत्वमेवगृहीतप्रामाण्यकज्ञानहेतुतावादिना निवेशनीयम् । तदपेक्षया भ्रमत्वाद्यभावप्रमात्वाभावग्रहाभावयोर्वैशिष्ट्यनिवेशे क्व गौरवमिति वाच्यम् । भावद्वयकोटिकसंशयानभ्युपगमेन भ्रमत्वप्रमात्वोभयकोटिकसंशयस्यैवाऽप्रसिद्धतया भ्रमत्वप्रमात्वप्रकारकान्यत्वस्याऽनिवेशात् । स्थाणुर्वा पुरुषो वेत्याकारकसंशयस्तु स्थाणुत्व-स्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावप्रभृतिचतुष्कोटिकः । न तु स्थाणुत्वपुरुषत्वोभयमात्रकोटिकः । न च प्रामाण्यनिश्चयस्य प्रवृत्त्यादिजनकतावच्छेदकत्वे तत्रापि प्रामाण्यनिश्चयो निवेशनीयः—एवं तत्रापि अपर इतिक्रमेण कारणतावच्छेदककोटिप्रविष्टविशेषणानवस्थितिरित्यप्रामाण्यग्रहाभावनिवेशकल्प एव लघीयान् इति वाच्यम् । अप्रामाण्यग्रहाभावनिवेशमतेऽपि तथाविधाऽनवस्थानात् । तथाहि-प्रवृत्त्यादिजनकज्ञानेऽप्रामाण्यग्रहे यत्राऽप्रामाण्यनिश्चयस्तत्र तादृशाऽप्रामाण्यग्रहस्याकिंचित्करतया जायते एव प्रवृत्त्यादिकमिति अप्रामाण्यनिश्चयाभावविशिष्टस्यैवाऽप्रामाण्यग्रहस्याभावः प्रवृत्त्यादिजनकज्ञाने निवेश्यः । एवमप्रामाण्यज्ञानास्कन्दिततादृशाऽप्रामाण्यनिश्चयस्याकिंचित्करत्वात्तत्राऽप्रामाण्यग्रहाभावो निवेश्यस्तादृशाऽप्रामाण्यग्रहेऽपि परतस्तन्निर्णयाभाव इत्येवं रीत्यादुर्वारैव तथाविधानवस्थितिस्तुल्यानुयोगः । एवं निश्चितप्रामाण्यकनिश्चयत्वेन हेतुतामते वह्निव्याप्यवत्पाषाणमयमित्याद्याकारकप्रत्यक्षशाब्दबोधादिकं प्रति वह्न्याद्यनुमितिसामग्री प्रतिबन्धकत्वाकल्पनेन लाघवम्, तादृशानुमितिसामग्रीदशायां वह्निव्याप्यवत्पाषाणादिधर्मिकप्रामाण्यनिश्चयस्यावश्यकतया तस्य च बाधनिश्चयमुद्रया प्रत्यक्षादिप्रतिबन्धकतयोपपत्तेः । अगृहीताऽप्रामाण्यकनिर्णयत्वेन हेतुतामते तु तादृशसामग्रीप्रतिबन्धकताकल्पनमावश्यकमेव । अन्यथा यत्र न प्रामाण्यग्रहो न वाऽप्रामाण्यग्रहः अथ च परामर्शादिस्तत्रानुमितिप्रत्यक्षादियौगपद्यापत्तेः ।

अथ गृहीतप्रामाण्यकनिश्चयत्वेन प्रवृत्त्यादिहेतुत्वोपगमेऽपि यत्र पूर्वोत्पन्नाऽप्रामाण्यग्रहरूपविरोधेन प्रामाण्याऽविषयकएव विषयनिश्चयस्तदनन्तरं अप्रामाण्यग्रहनाशः तदुत्तरं प्रवृत्त्याद्यनुदयप्रसंग इति चेत्—न जायते एव तादृशनिश्चयात्प्रवृत्त्यादिकम्, अपि तु प्रामाण्यावगाहिनिश्चयान्तरादेव । एवं च सिद्धे गृहीतप्रामाण्यकनिश्चयत्वादिना प्रवृत्त्यादिहेतुत्वे प्रामाण्यस्य स्वतस्त्वमावश्यकम्, परतस्त्वे तूपदर्शिताऽनवस्थाबाधकस्य जागरूकत्वादिति ।

प्रकृतमनुसरामः—प्रामाण्यस्य स्वतोग्राह्यत्वे व्यवसायानन्तरं इदं ज्ञानं प्रमा नवेति संशयानुपपत्तेः । निर्णीते संशयायोगादिति निष्कर्षः ।

अथ यादृशव्यवसायोत्तरं प्रामाण्यसंशयोऽनुभवसिद्धः, तादृशव्यवसाये प्रामाण्यविषयितैव न स्वीक्रियते—फलबलात् । न चेतरत्र यादृशसामग्रीबलात्प्रामाण्यं भासते अत्रापि तद्बलात्तद्भाने बाधकाभाव इति वाच्यम् । प्रामाण्यसंशयजनकदोषस्यैव तत्र प्रामाण्यभानविरोधित्वाभ्युपगमात् । न च तादृशव्यवसायेन प्रामाण्याग्रहे यावत्स्वाश्रयग्राह्यत्वरूपविप्रतिपत्त्युत्तदर्शितसाध्यस्य प्रामाण्यरूपपक्षे बाध इति वाच्यम् । स्वाश्रये स्वग्रहप्रतिबन्धकाभावकालीनत्वस्य निवेशात्—प्रतिबन्धकसमवधानकालीनस्वाश्रयीभूततादृशव्यवसाये प्रामाण्यज्ञानाभावाभावस्य बाधासंपादकत्वादिति चेन्न । प्रामाण्यसंशयजनकीभूतानां तत्तत्क्षणसंबन्धादिरूपदोषाणां अनुगतरूपाभावेन तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वं स्वीकुर्वतां अनन्तप्रतिबध्यप्रतिबन्धकभावापत्तिरित्येतदपेक्षया व्यवसायस्य स्ववृत्तिप्रामाण्याग्राहकत्वस्यैव कल्पनमुचितम् ।

यत्तु व्यवसाये निर्धर्मितावच्छेदककप्रामाण्यावगाहिज्ञानमेवोत्पद्यते अतोन प्रामाण्यसंशयानुपपत्तिः, निर्धर्मितावच्छेदककज्ञानस्य संशयाऽविरोधित्वात्, युज्यते चैतदेव, प्रथमं विशेष्यतावच्छेदकीभूतेदन्त्वादिप्रकारकज्ञानविरहात्, तद्विशिष्टे प्रामाण्यवैशिष्ट्यबोधाऽसंभवात् । नन्वेवं बाधाभावादीनां तादृशप्रामाण्यभानानियामकतया तादृशप्रामाण्यविषयित्वं कस्य जन्यतावच्छेदकमिति चेत्—न कस्यापि, अपि तु स्वभावसिद्धमेवज्ञानस्य तथात्वम् । न चैवं तदवच्छिन्नस्य कादाचित्कत्वानुपपत्तिरिति वाच्यम् । तत्प्रकारकज्ञानत्वावच्छिन्नोत्पादकसामग्र्या एव तद्घटितप्रामाण्यविषयकत्वावच्छिन्नस्य कादाचित्कत्वनिर्वाहकत्वात् । तदसत् । व्यवसायेनिर्धर्मितावच्छेदककप्रामाण्यावगाहिनोपि तत्तत्प्रवृत्त्यनुपयोगितया तत्तद्धर्मधर्मितावच्छेदककप्रामाण्यग्रहस्य तु परत एवोपगन्तव्यतयाऽन्यस्य प्रामाण्यवगाहित्वे मानाभावात् । न हि निर्धर्मितावच्छेदककप्रामाण्यग्रहः प्रवृत्त्युपयोगी तस्याऽप्रामाण्यविरोधित्वाभावात् ।

यत्तु धर्मितावच्छेदकसामानाधिकरण्येनैव व्यवसाये स्ववृत्तिप्रामाण्यावगाहिताऽभ्युपेयते, न तु धर्मितावच्छेदकावच्छेदेनापि, एवं तत्सामानाधिकरण्येन प्रामाण्यावगाहि इदं ज्ञानं प्रमा न वेति संशयो नानुपपन्न इति—तन्न—तावतापि अवच्छेदावच्छेदन प्रामाण्यावगाहिनः संशयस्यानुपपत्तेः । वस्तुतस्तु ज्ञानस्य स्वप्रकाशतायामेव प्रामाण्यस्योपदर्शितस्वतोग्राह्यत्वमुपपद्यते तदेवयथावसरंदूषयिष्याम इति गुरुमते न प्रामाण्यस्य स्वतोग्राह्यत्वम् ।

**मुरारिमिश्रास्तु** यावत्स्वाश्रयानुव्यवसायग्राह्यत्वमेव प्रामाण्यस्य स्वतोग्राह्यत्वम् तन्मते । तथा च प्रामाण्यं स्वविषयकग्रहविरोध्यभावकालीनस्वाश्रयविषयकलौकिकत्वव्यापकविषयिताप्रतियोगि न वा—एवं प्रामाण्यविपयता तादृशलौकिकत्वव्यापिका नवेत्याद्या विप्रतिपत्तयः । तेषा मयमाशयः—मनः संयुक्तसमवायादिना ज्ञानमानसे जायमाने तद्विषयप्रामाण्यभानेपि बाधकाभावः । तथा हि—घटत्वादिमद्विशेष्यकत्वविशिष्टघटत्वादिप्रकारकत्वमेव घटत्वादिप्रकारकज्ञानप्रामाण्यम्, तत्र प्रकारिता विशेष्यिता च ज्ञानदशायां मनः संयुक्तसमवेतविशेषणतारूपलौकिक-

सन्निकर्षबलादेव भासते–मनः संयुक्तसमवायदशायां तद्वृत्तिप्रकारित्वादौ मनः संयुक्तसमवेतविशेषणतासन्निकर्षस्याऽऽवश्यकत्वात्। तथा च विशेष्यतायां भासमानायां बाधाभावादिबलान्निरूप्यनिरूपकभावसंबन्धेन प्रकारित्वांशे विशेषणतयैव तद्भान- मुपपद्यते। एवं प्रकारित्वांशे प्रकारः, विशेष्यित्वांशे विशेष्यो निरूपितत्वसंबन्धेन प्रकारतयाभासते तदुपनायकीभूतव्यवसायरूपप्रत्यासत्तिबलात्–एवं धर्म्यंशे घटत्वा- दिरूपप्रकारस्यापिसमवायादिनाविशेषणत्वेन भाने बाधकाभाव इति किमवशिष्यते प्रामाण्यभाने इति।

न च ज्ञानांशे प्रकारितायाः तदंशे विशेष्यिताया विशेषणतया भानं न संभवति विशेषणज्ञानविरहादिति वाच्यम्। मीमांसकैर्विशिष्टबुद्धौ विशेषणज्ञानहेतुताया एवाऽनभ्युपगमात्, विशेषणज्ञानविरहस्याऽकिंचित्करत्वात्। नचैवमपि विशेष्यतारूप विशेषणतावच्छेदकप्रकारकज्ञानविरहात्तद्विशिष्टप्रकारिताप्रकारकबोधाऽसंभव इति वाच्यम्। विशेष्ये विशेषणमिति रीत्या ज्ञाने प्रथमं प्रामाण्यप्रकारकज्ञानोपगमात्। तत्र विशेषणतावच्छेदकप्रकारकज्ञानस्याकिञ्चित्करत्वात्। वस्तुतो युगपद् विशेष्य विशेषण-विशेषणतावच्छेदकादीन्द्रियसन्निकर्षादेव विशिष्टवैशिष्ट्यबोधोपपत्तौ तत्र विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वमपि अप्रामाणिकमेव। तथा च ज्ञानानु- व्यवसायेनैव प्रामाण्यं गृह्यते न हि ज्ञातुव्यवसायेनापीति मिश्रसिद्धान्तः।

अत्र नैयायिकानुयायिनः। प्रथमानुव्यवसायस्य प्रामाण्यग्राहकत्वे व्यवसाय- तृतीयक्षणे तद्धर्मिकप्रामाण्यसंशयानुपपत्तिरित्यनायत्या प्रामाण्यप्रत्यक्षं प्रति प्रामाण्य- ज्ञानत्वेन हेतुत्वं कल्प्यते अतोन प्रामाण्यस्यस्वतस्त्वम्। न च प्रकारित्वविशेष्य- कत्वादिप्रामाण्यघटकपदार्थानां विशकलितोपस्थितिदशायामपि विशेष्ये विशेषण- मिति न्यायेन प्रामाण्योपनीतभानोदयात् कथं प्रामाण्यप्रत्यक्षं प्रति प्रामाण्यविषयक- ज्ञानत्वेन हेतुतेति वाच्यम्। प्रामाण्यग्रहं विना विशेष्ये विशेषणमितिन्यायेनापि प्रामाण्यप्रत्यक्षानभ्युपगमात्। अत एव मणिकृताप्रामाण्यरूपविशिष्टसाध्योपस्थितिं विना व्याप्तिग्रहासंभवेन कथं प्रामाण्यानुमितिरिति पूर्वपक्षमाशंक्य प्राग्भवीय- संस्काराधीनप्रामाण्यस्मरणमूलकव्याप्तिग्रहात्प्रामाण्यानुमितिरिति सांप्रदायिक- सिद्धान्तोदर्शितः।

एवं भट्टमतमपि निर्युक्तिकम् तथा हि ज्ञातोघट इति प्रतीतेः घटे ज्ञान- निरूपितविषयत्वावगाहित्वस्वीकारेणैवोपपत्तेः, प्रमाणान्तराभावाच्च ज्ञाततायाः अप्रसिद्धत्वेन तल्लिङ्गकज्ञानजन्यत्वप्रकारकानुमितेः सुतरामप्रसिद्धत्वेन तत्र प्रामाण्या- वगाहित्वाऽसंभवात्। ज्ञानस्यातीन्द्रियत्वे घटं जानामीत्याद्याकारकज्ञाननिष्ठलौकिक- विषयताशालिप्रत्यक्षापलापापत्तेः। आत्मसमवेतवृत्तिलौकिकविषयतासंबन्धेन मानसं प्रति तादात्म्येन ज्ञानत्वेन प्रतिबध्यप्रतिबन्धकभावान्तरकल्पनापत्तेश्च। ज्ञानस्य सेन्द्रियत्वावश्यकत्वाच्चेत्यन्यत्र विस्तरः।

**तस्माज्ज्ञाने प्रामाण्यमनुमेयम्, तथाहि इदं ज्ञानं प्रमा, संवादि-प्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथाऽप्रमा । इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा, गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात् । एवमिदं जलत्वप्रकारकं ज्ञानं प्रमा स्नेहवति जलत्वप्रकारकज्ञानत्वात् ।**

इस लिये ज्ञान में प्रामाण्य अनुमेय है, तथाहि–'अयंघटः' यह ज्ञान-प्रमा है–सफल-प्रवृत्ति का जनक होने से–यन्नैवं अर्थात् जो ज्ञान प्रमा नहीं होता है तन्नैवं वह ज्ञान सफल प्रवृत्ति का जनक भी नहीं होता है- जैसे अप्रमाज्ञान । इयं पृथिवित्वप्रकारक ज्ञान–प्रमा है–गन्धवत् में पृथिवीत्वप्रकारक ज्ञान होने से। इसी प्रकार 'इदं जलं' यह जलत्व प्रकारक ज्ञान-प्रमा–हैस्नेहवत् ( जल ) में जलत्व प्रकारक ज्ञान होने से।

---

अथ यदि स्वाश्रययावद्ज्ञानग्राहकसामग्रीतोन प्रामाण्यग्रहस्तदा तद्ग्रह एवानुपपन्न इत्यत आह। **तस्मादिति** । तादृशसामग्रीत एव प्रामाण्यग्रहे संशयानुपपत्ते रित्यर्थः। **ज्ञाने** इति। सफलप्रवृत्तिसमनन्तरमित्यादिः । व्यवसाये इत्यर्थः। **प्रामाण्यमिति** । तद्वतितत्प्रकारकत्वमित्यर्थः। **अनुमेयमिति** सावधारणम्। अनुमित्यात्मकयत्किंचिद्ज्ञानविषयीभूतमेवेत्यर्थः। न तु यावद्ज्ञानग्राहकसामग्रीग्राह्यमिति भावः। अनुमानप्रकारमाह। **इदं ज्ञानमिति** । अयं घट इत्याकारकं ज्ञानमित्यर्थः। **प्रमा** । घटत्ववति घटत्वप्रकारकं। **संवादीति** । सफलेत्यर्थ। तद्वति तत्प्रकारकेतिभावः। तथा च अयं घट इति ज्ञानं घटत्ववतिघटत्वप्रकारकं सफलप्रवृत्तिजनकत्वादित्यनुमानाद् अयंघट इतिज्ञाने प्रमात्वसिद्धिरिति भावः। प्रमात्वेननिर्णीतघटादिज्ञानवदित्यन्वयदृष्टान्तस्यस्फुटत्वाद् व्यतिरेकदृष्टान्तमाह। **यन्नैवमिति** । यन्न प्रमेत्यर्थः। **तन्नैवमिति** । तन्न सफलप्रवृत्तिजनकमित्यर्थः। **अप्रमावदिति** । यत्र प्रमात्वाभावस्तत्रसफलप्रवृत्तिजनकत्वाभावः यथा अप्रमायाम् इति भावः।

ननु प्रामाण्यस्य स्वतोग्राह्यत्वानङ्गीकारे यत्रादौ "घ्राण" संयुक्तसमवायेन गन्धस्य प्रत्यक्षं गन्धवती पृथिवीत्याकारकं ततो गन्धवति पृथिवीत्वं जानामीत्याकारकानुव्यवसायस्ततः पृथिवीत्वप्रकारकप्रामाण्यसंशयापत्तिः, सफल "पृथिवीत्ववतिपृथिवीत्वप्रकारक" प्रवृत्तिजनकत्व हेतोरनिश्चयेनाऽनुमानाऽग्राह्यत्वादिति मिश्राणामाक्षेपं परिहरति। **इदं पृथिवीत्वप्रकारकज्ञानमिति** । गन्धवती पृथिवीत्याकारकं ज्ञानमित्यर्थः। **प्रमेति** । पृथिवीत्ववतिपृथिवीत्वप्रकारकमित्यर्थः। **गन्धवतिपृथिवीत्वप्रकारकत्वादिति** । स्वाश्रयज्ञाननिरूपितगन्धवन्निष्ठविशेष्यतानिरूपितपृथिवीत्वनिष्ठप्रकारतानिरूपकत्वसंबन्धेन ज्ञानत्ववत्वादिति यावत्। तेन न विशेष्यविशेषणभावे विनिगमनाविरहप्रयुक्तं गौरवम्। अत्र पृथिवीत्वप्रकारक-

सन्निकर्षबलादेव भासते-मनः संयुक्तसमवायदशायां तद्वृत्तिप्रकारित्वादौ मनः संयुक्तसमवेतविशेषणतासन्निकर्षस्याऽऽवश्यकत्वात्। तथा च विशेष्यतायां भासमानायां बाधाभावादिबलान्निरूप्यनिरूपकभावसंबन्धेन प्रकारित्वांशे विशेषणतयैव तद्भान-मुपपद्यते। एवं प्रकारित्वांशे प्रकारः, विशेष्यित्वांशे विशेष्योनिरूपितस्वसंबन्धेन प्रकारतयाभासते तदुपनायकीभूतव्यवसायरूपप्रत्यासत्तिबलात्-एवं धर्म्यंशे घटत्वा-दिरूपप्रकारस्यापिसमवायादिनाविशेषणत्वेन भाने बाधकाभाव इति किमवशिष्यते प्रामाण्यभाने इति।

न च ज्ञानांशे प्रकारितायाः तदंशे विशेष्यितायाः विशेषणतया भानं न संभवति विशेषणज्ञानविरहादिति वाच्यम्। मीमांसकैर्विशिष्टबुद्धौ विशेषणज्ञानहेतुताया एवाऽनभ्युपगमात्, विशेषणज्ञानविरहस्याऽकिंचित्करत्वात्। नचैवमपि विशेष्यतारूप विशेषणतावच्छेदकप्रकारकज्ञानविरहात्तद्विशिष्टप्रकारिताप्रकारकबोधाऽसंभव इति वाच्यम्। विशेष्ये विशेषणमिति रीत्या ज्ञाने प्रथमं प्रामाण्यप्रकारकज्ञानोपगमात्। तत्र विशेषणतावच्छेदकप्रकारकज्ञानस्याकिञ्चित्करत्वात्। वस्तुतो युगपद् विशेष्य विशेषण-विशेषणतावच्छेदकादीन्द्रियसन्निकर्षादेव विशिष्टवैशिष्ट्यबोधोपपत्तौ तत्र विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वमपि अप्रामाणिकमेव। तथा च ज्ञानानु-व्यवसायेनैव प्रामाण्यं गृह्यते न हि ज्ञातुव्यवसायेनापीति मिश्रसिद्धान्तः।

अत्र नैयायिकानुयायिनः। प्रथमानुव्यवसायस्य प्रामाण्यग्राहकत्वे व्यवसाय-तृतीयक्षणे तद्धर्मिकप्रामाण्यसंशयानुपपत्तिरित्यनायत्या प्रामाण्यप्रत्यक्षं प्रति प्रामाण्य-ज्ञानत्वेन हेतुत्वं कल्प्यते अतोन प्रामाण्यस्यस्वतस्त्वम्। न च प्रकारित्वविशेष्य-त्वादिप्रामाण्यघटकपदार्थानां विशकलितोपस्थितिदशायामपि विशेष्ये विशेषण-मिति न्यायेन प्रामाण्योपनीतभानोदयात् कथं प्रामाण्यप्रत्यक्षं प्रति प्रामाण्यविषयक-ज्ञानत्वेन हेतुतेति वाच्यम्। प्रामाण्यग्रहं विना विशेष्ये विशेषणमितिन्यायेनापि प्रामाण्यप्रत्यक्षानभ्युपगमात्। अत एव मणिकृताप्रामाण्यरूपविशिष्टसाध्योपस्थितिं विना व्याप्तिग्रहासंभवेन कथं प्रामाण्यानुमितिरिति पूर्वपक्षमाशंक्य प्राग्भवीय-संस्काराधीनप्रामाण्यस्मरणमूलकव्याप्तिग्रहात्प्रामाण्यानुमितिरिति सांप्रदायिक-सिद्धान्तोदर्शितः।

एवं भट्टमतमपि निर्युक्तिकम् तथा हि ज्ञातोघट इति प्रतीतेः घटे ज्ञान-निरूपितविषयत्वावगाहित्वस्वीकारेणैवोपपत्तेः, प्रमाणान्तराभावाच्च ज्ञातताया अप्रसिद्धत्वेन तल्लिङ्गकज्ञानजन्यत्वप्रकारकानुमितेः सुतरामप्रसिद्धत्वेन तत्र प्रामाण्या-वगाहित्वाऽसंभवात्। ज्ञानस्यातीन्द्रियत्वे घटं जानामीत्याद्याकारकज्ञाननिष्ठलौकिक-विषयताशालिप्रत्यक्षाप्रत्यक्षापत्तेः। आत्मसमवेतवृत्तिलौकिकविषयतासंबन्धेन मानसं प्रति तादात्म्येन ज्ञानत्वेन प्रतिबध्यप्रतिबन्धकभावान्तरकल्पनापत्तेश्च। ज्ञानस्य मैन्द्रियत्वावश्यकत्वाच्चेत्यन्यत्र विस्तरः।

**तस्माज्ज्ञाने प्रामाण्यमनुमेयम्, तथाहि इदं ज्ञानं प्रमा, संवादिप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथाऽप्रमा । इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा, गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात् । एवमिदं जलत्वप्रकारकं ज्ञानं प्रमा स्नेहवति जलत्वप्रकारकज्ञानत्वात् ।**

इस लिये ज्ञान में प्रामाण्य अनुमेय है, तथाहि-'अयंघटः' यह ज्ञान-प्रमा है-सफलप्रवृत्ति का जनक होने से-यन्नैवं अर्थात् जो ज्ञान प्रमा नहीं होता है तन्नैवं वह ज्ञान सफल प्रवृत्ति का जनक भी नहीं होता है-जैसे अप्रमाज्ञान । इयं पृथिवित्वप्रकारक ज्ञान-प्रमा है-गन्धवत् में पृथिवीत्वप्रकारक ज्ञान होने से। इसी प्रकार 'इदं जलं' यह जलत्व प्रकारक ज्ञान-प्रमा-हैस्नेहवत् ( जल ) में जलत्व प्रकारक ज्ञान होने से ।

---

अथ यदि स्वाश्रययावद्ज्ञानग्राहकसामग्रीतोन प्रामाण्यग्रहस्तदा तद्ग्रह एवानुपपन्न इत्यत आह । **तस्मादिति** । तादृशसामग्रीत एव प्रामाण्यग्रहे संशयानुपपत्ते रित्यर्थः । **ज्ञाने** इति । सफलप्रवृत्तिसमनन्तरमित्यादिः । व्यवसाये इत्यर्थः । **प्रामाण्यमिति** । तद्वतितत्प्रकारकत्वमित्यर्थः । **अनुमेयमिति** सावधारणम् । अनुमित्यात्मकयत्किंचिद्ज्ञानविषयीभूतमेवेत्यर्थः । न तु यावद्ज्ञानग्राहकसामग्रीग्राह्यमिति भावः । अनुमानप्रकारमाह । **इदं ज्ञानमिति** । अयं घट इत्याकारकं ज्ञानमित्यर्थः । **प्रमा** । घटत्ववति घटत्वप्रकारकं । **संवादीति** । सफलेत्यर्थ । तद्वति तत्प्रकारकेतिभावः । तथा च अयं घट इति ज्ञानं घटत्ववतिघटत्वप्रकारकं सफलप्रवृत्तिजनकत्वादित्यनुमानाद् अयंघट इतिज्ञाने प्रमात्वसिद्धिरिति भावः । प्रमात्वेननिर्णीतघटादिज्ञानवदित्यन्वयदृष्टान्तस्यस्फुटत्वाद् व्यतिरेकदृष्टान्तमाह । **यन्नैवमिति** । यन्न प्रमेत्यर्थः । **तन्नैवमिति** । तन्न सफलप्रवृत्तिजनकमित्यर्थः । **अप्रमावदिति** । यत्र प्रमात्वाभावस्तत्रसफलप्रवृत्तिजनकत्वाभावः यथा अप्रमायाम् इति भावः ।

ननु प्रामाण्यस्य स्वतोग्राह्यत्वानङ्गीकारे यत्रादौ "घ्राण" संयुक्तसमवायेन गन्धस्य प्रत्यक्षं गन्धवती पृथिवीत्याकारकं ततो गन्धवति पृथिवीत्वं जानामीत्याकारकानुव्यवसायस्ततः पृथिवीत्वप्रकारकप्रामाण्यसंशयापत्तिः, सफल "पृथिवीत्ववतिपृथिवीत्वप्रकारक" प्रवृत्तिजनकत्व हेतोरनिश्चयेनाऽनुमानाऽग्राह्यत्वादिति मिश्राणामाक्षेपं परिहरति । **इदं पृथिवीत्वप्रकारकज्ञानमिति** । गन्धवती पृथिवीत्याकारकं ज्ञानमित्यर्थः । **प्रमेति** । पृथिवीत्ववतिपृथिवीत्वप्रकारकमित्यर्थः । **गन्धवतिपृथिवीत्वप्रकारकत्वादिति** । स्वाश्रयज्ञाननिरूपितगन्धवन्निष्ठविशेष्यतानिरूपितपृथिवीत्वनिष्ठप्रकारतानिरूपकत्वसंबन्धेन ज्ञानत्ववत्वादिति यावत् । तेन न विशेष्यविशेषणभावे विनिगमनाविरहप्रयुक्त गौरवम् । अत्र पृथिवीत्वप्रकारक-

**न च हेतुज्ञानं कथं जातमिति वाच्यम्, पृथिवीत्वप्रकारकत्वस्य स्वतोग्राह्यत्वात्। तत्र गन्धग्रहेण गन्धवद्विशेष्यकत्वस्यापि सुग्रहत्वात्। तत्प्रकारकत्वावच्छिन्नतद्वद्विशेष्यकत्वं परं न गृह्यते संशयानुरोधात्।**

प्रश्न—गन्धवद्विशेष्यकत्वे सति पृथिवीत्व प्रकारक ज्ञानत्व–एवं स्नेहवद्विशेष्यकत्वे सति जलत्व प्रकारक ज्ञानत्वरूप हेतु का ज्ञान कैसे हुआ।

उत्तर—ज्ञाननिष्ठ पृथिवीत्वप्रकारकत्व ज्ञान विषयक ज्ञान से ग्राह्य होने के नाते स्वतोग्राह्य है। ऐसे ही पृथिवी में गन्ध का ग्रहण (ज्ञान) होने पर गन्धवद्विशेष्यकत्व भी ज्ञान विषयक ज्ञान से ग्राह्य होने के नाते स्वतो ग्राह्य है, परन्तु पृथिवीत्व प्रकारकत्वावच्छिन्न पृथिवीत्ववद्विशेष्यकत्व रूप प्रमात्व स्वतो ग्राह्य नहीं है। क्योंकि यदि उस प्रमात्व को स्वतो ग्राह्य मान लिया जायगा तो ज्ञान में प्रामाण्य का संशय कभी किसी को होगा ही नहीं। प्रभाकर

---

प्रमात्वेननिर्णीतज्ञानान्तरं दृष्टान्तो बोध्यः। व्याप्यवति व्यापकप्रकारकत्वस्य व्यापकवति व्यापकप्रकारकत्व प्रयोजकम्, तेन तद्धर्मव्याप्यधर्मावच्छिन्नविशेष्यकतद्धर्मप्रकारकज्ञानमात्रे प्रामाण्यमनुमेयमित्याह। **एवमिति।** **इदं जलत्वप्रकारकं ज्ञानमिति।** स्नेहवज्जलमित्याकारक मित्यर्थः। **प्रमेति।** जलत्ववतिजलत्वप्रकारक मित्यर्थः। **स्नेहवतिजलत्वप्रकारकज्ञानत्वादिति।** अर्थस्तु पूर्ववत्। तथा चेदृशानुमानात्प्रवृत्तिपूर्वमपि प्रामाण्यसिद्धिर्बोध्या। **हेतुज्ञानमिति।** पक्षे हेतुनिश्चय इत्यर्थः। **स्वतोग्राह्यत्वादिति।** तदाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वादित्यर्थः। व्यवसायनिष्ठपृथिवीत्वप्रकारकत्वस्य अनुव्यवसायविषयत्वादिति यावत्। **तत्र।** पुरोवर्तिनि। **गन्धग्रहेण।** गन्धप्रत्यक्षेण। व्यवसायेन। **गन्धवद्विशेष्यकत्वस्यापीति।** अपिना पृथिवीत्वप्रकारकत्वसमुच्चयः। **सुग्रहत्वादिति।** अनुव्यवसायविषयत्वादित्यर्थः। तथा च पक्षे हेतु निश्चयात्प्रमात्वानुमित्यनुपपत्तिरिति भावः। ननु गन्धवति पृथिवीत्वप्रकारकत्वस्येव पृथिवीत्ववति पृथिवीत्वप्रकारकत्वस्यापि अनुव्यवसायविषयत्वस्वीकारे लाघवात्कुतः प्रामाण्यस्यानुमेयतेत्यत आह। **तत्प्रकारकत्वावच्छिन्नेति।** तत्प्रकारकत्वावच्छिन्नत्वविशिष्टेत्यर्थः। तथा च तत्प्रकारकत्वावच्छिन्नत्वविशिष्टतद्वद्विशेष्यकत्वरूपप्रमात्वमित्यर्थः। **परं न गृह्यते।** अनुव्यवसायविषयो न भवेदित्यर्थः। तादृशविशिष्टेन सह मनःसन्निकर्षाभावादिति भावः। ननु लाघवाद्वस्तुतो "अवच्छेद्यावच्छेदकभावानापन्न" तद्वद्विशेष्यकत्वतत्प्रकारकत्वोभयमेव प्रमात्वमस्तु किं निरुक्त "विशिष्टस्य" प्रमात्वेनेत्यत आह। **संशयानुरोधादिति।** प्रथमानुव्यवसायोत्तरं सर्वमतसिद्धसंशयानुपपत्तेरित्यर्थः। तथा च संशयान्यथानुपपत्त्या निरुक्तावच्छिन्नत्वविशिष्टतद्वद्विशेष्यकत्वमेव प्रमात्वं, तच्चोक्तरीत्या न प्रथमानुव्यवसायविषय इति तद्ग्रहार्थमनुमानमावश्यकमितिभावः।

**ननु सर्वेषां ज्ञानानां यथार्थत्वात् प्रमालक्षणे तद्वद्विशेष्यकत्वं विशेषणं व्यर्थम्। न च रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात् तव मते भ्रमस्याभावादिति वाच्यम्।**

जब कि सभी ज्ञान यथार्थ हैं तब प्रमा के लक्षण में "तद्वद्विशेष्यकत्व" यह विशेषण क्यों देना। नैयायिक-रंग में रजतार्थी लोगों की प्रवृत्ति भ्रमात्मक ज्ञान से होती है अब वह नहीं हो सकेगी-कारण कि तुम्हारे (मीमाँसक के) मत में भ्रम है ही नहीं। प्रभाकर वहाँ रंग में

---

इदमुपलक्षणम्। प्रामाण्यस्यानुमेयत्ववत् द्वितीयानुव्यवसायवेद्यत्वमपि-तथा हि—जलं जानामीतिप्राथमिकानुव्यवसायानन्तरं प्रवृत्तौ सत्यां जललाभे सति जलमेव-समवायेन जलत्वेन जानामीति द्वितीयानुव्यवसायः तत्र तन्मतसिद्धप्रामाण्यमपि विषय इति बोध्यम्।

इति प्रामाण्यवादे ज्ञप्तिवादः।

शुक्तौ रजतावगाहि इदं रजतमिति भ्रमस्थले ज्ञानद्वयम्। इदमिति प्रत्यक्षम्, रजतमिति स्मरणम्, तयोश्च द्वयोर्यथार्थत्वाद् भ्रमात्मकं ज्ञानमेव नास्ति। पुरोवर्त्ति-पदार्थस्य सामान्यतः प्रत्यक्षस्य-रजतस्मृतेश्च भेदज्ञानं "रजतार्थिनः" प्रवृत्तौ प्रतिबन्धकम्, तयोर्भेदज्ञानाभावः "प्रतिबन्धकाभावविधया" तत्र कारणम्। न चोदासीनज्ञानात्प्रवृत्त्यापत्तिवारणायोक्तप्रत्यक्षस्मृत्योः कारणत्वस्यावश्यकतयोक्तभेदज्ञाना-भावस्य कारणत्वं निर्युक्तिकमिति वाच्यम्। तत्र देशे रजतम्, किंचिदिदम्, इति ज्ञानद्वयादपि प्रवृत्त्यापत्तेः। एवं प्रत्यक्षविषयस्य स्मृतिविषयस्य च भेदाभावज्ञानं तत्र कारणम्। सत्यरजतस्थले तु विशिष्ट (रजतत्वविशिष्टरजत) ज्ञानं प्रवृत्तौ कारणम्। न तु भेदाग्रहाभावः, सत्यरजतस्थले रजतभेदग्रहाऽप्रसिद्ध्या तदभावा-प्रसिद्धेः, तन्मते अन्यथाख्यात्यनंगीकारात्। असंसर्गाऽग्रहः कारणमित्यपि केचित्। तथा च शुक्तिरजतस्थले भेदाऽग्रहः-असंसर्गाग्रहो वा कारणम्। सत्यरजत-स्थले विशिष्टज्ञानं कारणमिति गुरुमतम्, तन्मतेन शंकते। **नन्विति। सर्वेषां ज्ञानानामिति।** घटत्वादिधर्मप्रकारकज्ञानमात्रस्येत्यर्थः। **यथार्थत्वादिति।** घटत्वादिमन्निष्ठविशेष्यताकत्वादित्यर्थः। घटत्वादिप्रकारकज्ञानत्वस्यघटत्वादिमन्निष्ठ-विशेष्यताकत्वव्याप्यत्वादिति समुदितार्थः **प्रमालक्षणे** इति। घटत्वादिप्रमालक्षणे इत्यर्थः। सप्तम्यर्थो घटकत्वम्, तद्वद्विशेष्यकत्वविशेषणे चाऽस्यान्वयः। **तद्वद्विशेष्य-कत्वविशेषणमिति।** घटत्वादिमद्विशेष्यकत्वविशेषणमित्यर्थः। **व्यर्थमिति।** अतिव्याप्त्यवारकमित्यर्थः। अलक्ष्यस्यैवाऽलीकत्वादिति भावः। **रंगे रजतार्थिन इति।** रजतार्थिनः रङ्गे भ्रमजन्या प्रवृत्तिर्न स्यादिति योजना **भ्रमजन्येति।** इदन्त्वेन रंगविशेष्यकरजतत्वप्रकारकज्ञानजन्येत्यर्थः। **रङ्गे प्रवृत्तिरिति।** रंग-विशेष्यकरजतत्वप्रकारिका प्रवृत्तिरित्यर्थः। **न स्यादिति।** न्यायनये भ्रमजन्या

**न च हेतुज्ञानं कथं ज्ञातमिति वाच्यम्, पृथिवीत्वप्रकारकत्वस्य स्वतोग्राह्यत्वात्। तत्र गन्धग्रहेण गन्धवद्विशेष्यकत्वस्यापि सुग्रहत्वात्। तत्प्रकारकत्वावच्छिन्नतद्विशेष्यकत्वं परं न गृह्यते संशयानुरोधात्।**

प्रश्न—गन्धवद्विशेष्यकत्वे सति पृथिवीत्व प्रकारक ज्ञानत्व-एवं स्नेहवद्विशेष्यकत्वे सति जलत्व प्रकारक ज्ञानत्वरूप हेतु का ज्ञान कैसे हुआ।

उत्तर—ज्ञाननिष्ठ पृथिवीत्वप्रकारकत्व ज्ञान विषयक ज्ञान से ग्राह्य होने के नाते स्वतोग्राह्य है। ऐसे ही पृथिवी में गन्ध का ग्रहण (ज्ञान) होने पर गन्धवद्विशेष्यकत्व भी ज्ञानविषयक ज्ञान से ग्राह्य होने के नाते स्वतो ग्राह्य है, परन्तु पृथिवीत्व प्रकारकत्वावच्छिन्न पृथिवीत्वद्विशेष्यकत्व रूप प्रमात्व स्वतो ग्राह्य नहीं है। क्योंकि यदि उस प्रमात्व को स्वतो ग्राह्य मान लिया जायगा तो ज्ञान में प्रामाण्य का संशय कभी किसी को होगा ही नहीं। प्रकार

---

प्रमात्वेननिर्णीतज्ञानान्तरं दृष्टान्तो बोध्यः। व्याप्यवति व्यापकप्रकारकत्वस्य व्यापकवति व्यापकप्रकारकत्व प्रयोजकम्, तेन तद्धर्मव्याप्यधर्मावच्छिन्नविशेष्यक-तद्धर्मप्रकारकज्ञानमात्रे प्रामाण्यमनुमेयमित्याह। **एवमिति।** इदं जलत्वप्रकारकं **ज्ञानमिति।** स्नेहवज्जलमित्याकारक मित्यर्थः। **प्रमेति।** जलत्ववति जलत्वप्रकारक मित्यर्थः। **स्नेहवतिजलत्वप्रकारकज्ञानत्वादिति।** अर्थस्तु पूर्ववत्। तथा चेदृशानुमानात्प्रवृत्तिपूर्वमपि प्रामाण्यसिद्धिर्बोध्या। **हेतुज्ञानमिति।** पक्षे हेतुनिश्चय इत्यर्थः। **स्वतोग्राह्यत्वादिति।** तदाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वादित्यर्थः। व्यवसायनिष्ठपृथिवीत्वप्रकारकत्वस्य अनुव्यवसायविषयत्वादिति यावत्। तत्र। पुरोवर्तिनि। **गन्धग्रहेण।** गन्धप्रत्यक्षेण। व्यवसायेन। **गन्धवद्विशेष्यकत्वस्यापीति।** अपिना पृथिवीत्वप्रकारकत्वसमुच्चयः। **सुग्रहत्वादिति।** अनुव्यवसायविषयत्वादित्यर्थः। तथा च पक्षे हेतु निश्चयात्प्रमात्वानुमित्युपपत्तिरिति भावः। ननु गन्धवति पृथिवीत्वप्रकारकत्वस्येव पृथिवीत्ववति पृथिवीत्वप्रकारकत्वस्यापि अनुव्यवसायविषयत्वस्वीकारे बाधकाभावात्कुतः प्रामाण्यस्यानुमेयत्वमित्यत आह। **तत्प्रकारकत्वावच्छिन्नेति।** तत्प्रकारकत्वावच्छिन्नत्वविशिष्टेत्यर्थः। तथा च तत्प्रकारकत्वावच्छिन्नत्वविशिष्टतद्विशेष्यकत्वरूपप्रमात्वमित्यर्थः। **परं न गृह्यते।** अनुव्यवसायविषयो न भवेदित्यर्थः। तादृशविशिष्टेन सह मनःसन्निकर्षाभावादिति भावः। ननु लाघवादस्तु तो "अवच्छेद्यावच्छेदकभावानापन्न" तद्विशेष्यकत्व-तत्प्रकारकत्वोभयमेव प्रमात्वमस्तु किं निरुक्त "विशिष्टस्य" प्रमात्वेनेत्यत आह। **संशयानुरोधादिति।** प्रथमानुव्यवसायोत्तरं सर्वमतसिद्धसंशयानुपपत्तेरित्यर्थः। तथा च संशयान्यथानुपपत्त्या निरुक्तावच्छिन्नत्वविशिष्टतद्विशेष्यकत्वमेव प्रमात्वं, तच्चोक्तरीत्या न प्रथमानुव्यवसायविषय इति तद्ग्रहार्थमनुमानमावश्यकमितिभावः।

**ननु सर्वेषां ज्ञानानां यथार्थत्वात् प्रमालक्षणे तद्वद्विशेष्यकत्वं विशेषणं व्यर्थम्। न च रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात् तव मते भ्रमस्याभावादिति वाच्यम्।**

जब कि सभी ज्ञान यथार्थ हैं तब प्रमा के लक्षण में "तद्वद्विशेष्यकत्व" यह विशेषण क्यों देना। नैयायिक–रंग में रजतार्थी लोगों की प्रवृत्ति भ्रमात्मक ज्ञान से होती है अब वह नहीं हो सकेगी–कारण कि तुम्हारे ( मीमाँसक के ) मत में भ्रम है ही नहीं। प्रभाकर वहाँ रंग में

---

इदमुपलक्षणम्। प्रामाण्यस्यानुमेयत्ववत् द्वितीयानुव्यवसायवेद्यत्वमपि–तथा हि—जलं जानामीतिप्राथमिकानुव्यवसायानन्तरं प्रवृत्तौ सत्यां जललाभे सति जलमेव-समवायेन जलत्वेन जानामीति द्वितीयानुव्यवसायः तत्र तन्मतसिद्धप्रामाण्यमपि विषय इति बोध्यम्।

इति प्रामाण्यवादेऽज्ञप्तिवादः।

शुक्तौ रजतावगाहि इदं रजतमिति भ्रमस्थले ज्ञानद्वयम्। इदमिति प्रत्यक्षम्, रजतमिति स्मरणम्, तयोश्च द्वयोर्यथार्थत्वाद् भ्रमात्मकं ज्ञानमेव नास्ति। पुरोवर्त्ति-पदार्थस्य सामान्यतः प्रत्यक्षस्य-रजतस्मृतेश्च भेदज्ञानं "रजतार्थिनः" प्रवृत्तौ प्रति-बन्धकम्, तयोर्भेदज्ञानाभावः "प्रतिबन्धकाभावविधया" तत्र कारणम्। न चोदा-सीनज्ञानात्प्रवृत्त्यापत्तिवारणायोक्तप्रत्यक्षस्मृत्योः कारणत्वस्यावश्यकतयोक्तभेदज्ञाना-भावस्य कारणत्वं निर्युक्तिकमिति वाच्यम्। तत्र देशे रजतम्, किंचिदिदम्, इति ज्ञानद्वयादपि प्रवृत्त्यापत्तेः। एवं प्रत्यक्षविषयस्य स्मृतिविषयस्य च भेदाभावज्ञानं तत्र कारणम्। सत्यरजतस्थले तु विशिष्ट (रजतत्वविशिष्टरजत) ज्ञानं प्रवृत्तौ कारणम्। न तु भेदग्रहाभावः, सत्यरजतस्थले रजतभेदग्रहाऽप्रसिद्ध्या तदभावा-प्रसिद्धेः, तन्मते अन्यथाख्यात्यनंगीकारात्। असंसर्गाऽग्रहः कारणमित्यपि केचित्। तथा च शुक्तिरजतस्थले भेदाऽग्रहः–असंसर्गाग्रहो वा कारणम्। सत्यरजत-स्थले विशिष्टज्ञानं कारणमिति गुरुमतम्, तन्मतेन शंकते। **नन्विति। सर्वेषां ज्ञानानामिति।** घटत्वादिधर्मप्रकारकज्ञानमात्रस्येत्यर्थः। **यथार्थत्वादिति।** घटत्वादिमन्निष्ठविशेष्यताकत्वादित्यर्थः। घटत्वादिप्रकारकज्ञानत्वस्यघटत्वादिमन्निष्ठ-विशेष्यताकत्वव्याप्यत्वादिति समुदितार्थः **प्रमालक्षणे इति।** घटत्वादिप्रमालक्षणे इत्यर्थः। सप्तम्यर्थोघटकत्वम्, तद्वद्विशेष्यकत्वविशेषणे चाऽस्यान्वयः। **तद्वद्विशेष्य-कत्वविशेषणमिति।** घटत्वादिमद्विशेष्यकत्वविशेषणमित्यर्थः। **व्यर्थमिति।** अतिव्याप्त्यवारकमित्यर्थः। अलक्ष्यस्यैवाऽलीकत्वादिति भावः। **रंगे रजतार्थिन इति।** रजतार्थिनः रङ्गे भ्रमजन्या प्रवृत्तिर्न स्यादिति योजना **भ्रमजन्येति।** इदन्त्वेन रंगविशेष्यकरजतत्वप्रकारकज्ञानजन्येत्यर्थः। **रङ्गे प्रवृत्तिरिति।** रंग-विशेष्यकरजतत्वप्रकारिका प्रवृत्तिरित्यर्थः। **न स्यादिति।** न्यायनये भ्रमजन्या

**तत्र हि दोषाधीनस्य पुरोवर्त्तिनि स्वतन्त्रो पस्थितरजतभेदाग्रहस्य हेतुत्वात् सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात्तदेव कारणम्। अस्तु वा तत्रापि रजतभेदाग्रह एव कारणम्।**

जो रजतार्थीलोगों की विफलता प्रवृत्ति होती है उसमें पुरोवर्ति ( रंग ) निष्ठ चाकचिक्य आदि दोषाधीन-तथास्वतंत्ररूप से उपस्थित रजत का जो भेदग्रह वह कारण है। और सत्यरजतस्थलीय प्रवृत्ति में रजतत्वविशिष्टरजत ज्ञान ही कारण मान लिया जाय। ( क्योंकि विफलप्रवृत्ति में भेदाग्रह को तथा सफलप्रवृत्ति में विशिष्ट ज्ञान को अलग-अलग कारण मानने में गौरव है )

---

प्रवृत्तिस्तवमते न स्यादित्यर्थः। तथा च विशेष्यतासंबन्धेन तद्धर्मप्रकारकप्रवृत्तौ विशेष्यतासंबन्धेन तद्धर्मप्रकारकेच्छायाः तादृशेच्छांप्रति तेन संबन्धेन तद्धर्मप्रकारकज्ञानस्य च हेतुत्वमिति रीत्या ज्ञानेच्छाप्रवृत्तीनां समानप्रकारकत्वेन कार्यकारणभावात्, तव मते रंगविशेष्यकरजतत्वप्रकारज्ञानाऽप्रसिद्ध्या कारणाभावेन रजतार्थिनः रंगेप्रवृत्त्यनुपपत्तिरिति भावः। तव मते। मीमांसकमते भ्रमस्य। रंगविशेष्यकरजतत्वप्रकारकज्ञानस्य। अभावादिति। अप्रसिद्धेरित्यर्थः। तथा च कारणीभूतभ्रमात्मकज्ञानविरहेऽपेच्छानुत्पत्तौ प्रवृत्त्यनुपपत्तिरिति भावः। संवादिप्रवृत्तौ विसंवादिप्रवृत्तौ च कारणभेदं कल्पयित्वा समाधत्ते। तत्र हीति। रजतार्थिनः इदन्त्वेन रंगविशेष्यकरजतत्वप्रकारकविसंवादिप्रवृत्तौ हीत्यर्थः। पुरोवर्त्तिनि। रंगे। रजतभेदाऽग्रहस्य कारणत्वादिति। ननु रंगे रजतभेदसत्त्वेन सामग्रीबलाद् भेद प्रकारकप्रत्यक्षोत्पत्त्या भेदाऽग्रहरूपकारणविरहात्कथं रंगे रजतार्थिनः प्रवृत्तिरित्यत आह। दोषाधीनस्येति। रजतभेदग्रहप्रतिबन्धकीभूतदोषसमवहितस्येत्यर्थः। तथा च तत्र रजतभेदप्रत्यक्षसामग्रीसत्त्वेपि दोषात्मकप्रतिबन्धकसत्वेन प्रतिबन्धकाभावरूपकारणविरहाद् रजतभेदप्रत्यक्षानुत्पत्त्या भेदाग्रहसत्वेन तत्र रजतार्थिप्रवृत्तौ बाधकाभाव इति भाव.। इदं रजतमिति वशिष्टज्ञानात्मकोपस्थितिविषयरजतभेदाग्रहस्य रजतात्मकपुरोवर्तिनि सत्वाद् रंगे इव रजतेपि विसंवादिप्रवृत्तिवारणाय स्वतन्त्रोपस्थितेति। तादृशविशिष्टज्ञानात्मकोपस्थितिभिन्नोपस्थितिविषयेत्यर्थः। पुरोवर्त्तिनिष्ठविषयत्वानिरूपितवर्तमानग्रहविषयताश्रय इति भावः। तथा च सत्यरजतस्य पुरोवर्तिनिष्ठविषयतानिरूपितज्ञानीयविषयताश्रयतया निरुक्तविषयताश्रयत्वाभावेन तादृशोपस्थितरजतभेदाग्रहस्य सुतरामसत्वेन कारणाभावाद् रजते न विसंवादिप्रवृत्तिरिति भाव। हेतुत्वादिति। न्यायमतेपि इदं रजतमिति भ्रमे रजतभेदाऽग्रहस्य "बाधनिश्चयाभावरूपस्य" हेतुत्वावश्यकतया तस्यैव हेतुत्वं युक्तं लघ्वेतोरितिन्यायादिति भावः। सत्यरजतस्थले तु इति। सत्यरजतगोचरप्रवृत्तौतु इत्यर्थः। विशिष्टज्ञानस्यसत्वादिति। पुरोवर्ति-

**न चा न्यथाख्यातिः संभवति, रजतप्रत्यक्षकारणस्य रजतेन्द्रियसन्निकर्षस्याभावाद् रङ्गेरजतबुद्धेरनुपपत्तेरिति चेत् न । सत्यरजतस्थलेप्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वादन्यत्रापि तत्कल्पनात् ।**

ऐसा मानने में हमारे यहाँ अन्यथाख्याति ( भ्रम ) की भी सम्भावना नहीं की जा सकती है- क्योंकि रजत के प्रत्यक्ष का कारण जो रजत के साथ इन्द्रिय का सन्निकर्ष वह रंग में है नहीं अतः रंग में रजतबुद्धि रूप अन्यथाख्यातिकी सर्वथा अनुपपत्ति है । नैया० सत्यरजतस्थलीय प्रवृत्ति के प्रति विशिष्टज्ञान को जब कि कारणता क्लृप्त है तो अन्यत्र प्रवृत्ति में भी उसे ही

---

विशेष्यकसमवायेनरजतत्वप्रकारकज्ञानस्यप्रसिद्धत्वादित्यर्थः । **तदेवेति** । तादृशविशिष्टज्ञानमेवेत्यर्थः । एवकारेण भेदाऽग्रहस्य हेतुत्वव्यवच्छेदः । तथा च "रजतनिष्ठ" विशेष्यतासंबन्धेन रजतत्वप्रकारकप्रवृत्तिं प्रति विशेष्यतासंबन्धेन रजतत्वप्रकारकज्ञानत्वेन हेतुतास्वीकारान्न कोपिदोष इति भावः । कार्यकारणभावद्वयकल्पने गौरवादाह **अस्तु वेति । तत्रापि** । सत्यरजतगोचरप्रवृत्तावपि । अपिना रंगगोचर "रजतार्थि" प्रवृत्तिपरिग्रहः । तथा च विशेष्यतासंबन्धेन रजतत्वप्रकारकप्रवृत्तिसामान्यं प्रति इदमित्याकारकोपस्थिति—एवंरजतोपस्थितिद्वयविशिष्टरजतभेदप्रकारकज्ञानत्वावच्छिन्नप्रतियोगिताकाभावः कारणमिति कार्यकारणभावः । तादृशज्ञाने तादृशोपस्थितिद्वयवै० एककालावच्छिन्नैकात्मवृत्तित्वसंबन्धेन । प्रतियोगिता च विशेष्यतासंबन्धावच्छिन्नाग्राह्य । कारणतावच्छेदकसंबन्धश्च स्वरूपसंबन्धः । ननु प्रवृत्तिसामान्यं प्रति निरुक्तभेदाऽग्रहत्वेन हेतुत्वापेक्षया लाघवात् इष्टतावच्छेदकीभूत "रजतत्वादि" प्रकारकज्ञान हेतुताऽस्तु इत्याशंकते । **नचेति** । नहीत्यर्थः । **अन्यथाख्यातिः**—भ्रमः—तदभाववतितत्प्रकारकंज्ञानमिति यावत् । **संभवतीति** । प्रामाणिकमित्यर्थः । येन विसंवादिप्रवृत्तौ तद्धेतुत्वं स्यादिति पूरणीयम् । प्रामाणिकत्वाभावे हेतुमाह । **रजतप्रत्यक्षकारणस्य** । रजतत्वप्रकारकप्रत्यक्षकारणस्येत्यर्थः **रजतेन्द्रियसन्निकर्षस्येति** । रजतघटितचक्षुः संयुक्तसमवायस्येत्यर्थः । **अभावादिति** । रजतत्वेऽसत्वादित्यर्थः रजतस्य चक्षुः संयुक्तत्वाभावादिति भावः । रंगस्य चक्षुः संयुक्तत्वेपि रजतत्वे तत्समवायाभावात् । इत्थं च रजतत्वेनसह लौकिकसन्निकर्षाभावात्, ज्ञानलक्षणायाः प्रत्यासत्तित्वाऽकल्पनाच्च रंगे रजतत्वभासकसामग्र्यभावेन रंगविशेषकरजतत्वप्रकारकप्रत्यक्ष "भ्रम"स्याऽनुत्पत्त्या व्यभिचारात्प्रवृत्तिसामान्ये विशिष्टज्ञानत्वेन हेतुत्वं न संभवतीत्याशयः । ज्ञानलक्षणाप्रत्यासत्त्यन्तरकल्पने तु गौरवमित्यभिमानः । अनुमानेनाऽन्यथाख्यातिं साधयितुमारभते । **सत्यरजतस्थले** इति **क्लृप्तत्वादिति** । अन्वयव्यतिरेकाभ्यामित्यादिः । **अन्यत्रापीति** । रंगविशेषकरजतत्वप्रकारकप्रवृत्तावपीत्यर्थः । संवादिप्रवृत्तिदृष्टान्तेनेत्यादिः ।

न च संवादिप्रवृत्तौ तत्कारणं, विसंवादिप्रवृत्तौ च भेदाग्रहः कारणम् इति वाच्यम् । लाघवेन प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात् ।

इत्थं च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि नक्षतिः, फल मुखगौरवस्यादोषत्वात् । किञ्च यत्र रङ्गरजतयोरिमे रजते रङ्गे वेति ज्ञानं जातं तत्र न कारणबाधोऽपि ।

कारण मान लिया जाय । प्रभा० सम्वादि प्रवृत्ति में विशिष्टज्ञान और विसम्वादिप्रवृत्ति में भेदाग्रह को ही कारण मान लिया जाय । नैयायि विशिष्टज्ञान को ही प्रवृत्तिमात्र में कारण मानने में लाघव है । [ अन्यथा सवादिप्रवृत्ति में विशिष्ट ज्ञान तथा विसम्वादिप्रवृत्ति में भेदाग्रह को कारण मानने में गौरव होगा ] इस प्रकार रंग में होने वाली जो रजतबुद्धि उसके अनुरोध से रंग में रजत के भान के लिये ज्ञानलक्षणाप्रत्यासत्ति की कल्पना करने में भी कोई क्षति ( दोष ) नहीं है ।

उत्तर—यह फल मुख गौरव है अतः यह दोष नही है—दूसरी बात यह भी है कि जहाँ रंगरजत में-इमे रजते-अथवा इमे रंगे यह ज्ञान हुआ वहाँ रजतत्व अथवा रंगत्व के साथ चक्षुः संयुक्त समवायात्मक सन्निकर्ष का बाध भी नहीं है 'तथा भेदाग्रह रूप कारण का भी बाध

प्रश्न—गौरव दोष होगा ?

---

तत्कल्पनादिति । रंगनिष्ठविशेष्यतासंबन्धेनरजतत्वप्रकारकज्ञानस्य कारणत्वानुमाना- दित्यर्थः । तथा च "विसंवादिप्रवृत्तिः पुरोवर्त्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानजन्या प्रवृत्तित्वात् संवादिप्रवृत्तिवदित्यनुमानात् । विसंवादिप्रवृत्तिहेतुतया अन्यथाख्याति- सिद्धिः । अत्राऽप्रयोजकत्वमाशंकते । नचेति । संवादिप्रवृत्तौ । इष्टे इष्टतावच्छे- दकप्रकारकप्रवृत्तौ । तदिति । इष्टे इष्टतावच्छेदकप्रकारकज्ञानमित्यर्थं । विसंवादि- प्रवृत्तौ । इष्टभिन्नेइष्टतावच्छेदकप्रकारकप्रवृत्तौ । भेदाऽग्रह इति । रजतभेदाऽग्रह इत्यर्थः । असंसर्गाऽग्रह इति यावत् । यथाभुते रजते नेदंरजतमितिग्रहेपि प्रवृत्त्यापत्तेः प्रभाकरमते तत्र रजते रजतभेदग्रहाभावस्य सत्त्वात् अन्यथा अन्यथाख्यात्यापत्तेरिति ध्येयम् । एवं च पक्षीभूतविसंवादिप्रवृत्तौ साध्यसन्देहेन हेतावपि तादृशसंशयाधीन- व्यभिचारसंशयाद् व्याप्तिनिश्चयासंभवाद्धेतोरसाधकत्वमेवेति भावः । लाघवेनेति । लाघवज्ञानेनेत्यर्थः । उक्तकार्यकारणभावद्वयकल्पनापेक्षया प्रवृत्तिसामान्ये एक रूपेण कार्यकारणभावकल्पनेलाघवमितिलाघवज्ञानेन, प्रवृत्तिसामान्ये गुरुरूपेण एककारणत्व- कल्पनापेक्षया लघुरूपेण एककारणत्वकल्पनेलाघवमितिलाघवज्ञानेनचेत्यर्थः । तथा च लाघवज्ञानरूपानुकूलतर्कस्य सत्वान्नाप्रयोजकत्वमिति भावः । प्रवृत्तिमात्रे । प्रवृत्तिस्यामात्रे । तस्य । विशिष्टज्ञानस्य । हेतुत्वकल्पनादिति । हेतुत्वानुमाना- दित्यर्थः । रजतांशेसन्निकर्षाभावान्नान्यथाख्यातिसंभव इति प्रभाकरोक्तं दूषणमुद्धरति इति । इत्थं चेति । उक्तानुमानाद् विसंवादिप्रवृत्तावपि विशिष्टज्ञानजन्यत्वसिद्धौ

अपि च यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र युगपत्

नहीं है। जिस से भ्रम का अस्वीकार करना पड़े। और भी (दोष प्रभाकर मत में) है कि जहाँ रंग रजत में 'इमे रजतरंगे' यह समूहालंबन विपरीत ज्ञान हुवा अर्थात् रांगे को रजत, और रजत को रांगा समझा वहाँ उभयत्र (रंग तथा रजत में) एक काल में प्रवृत्ति तथा निवृत्ति होनी चाहिये। क्योंकि रंग में रंगभेदग्रह तथा रजत भेदग्रह स्वीकार करने पर तो

---

चेत्यर्थः। रंगे रजतत्वविशिष्टबुद्ध्यनुरोधेनेति। इदं रजतमिति भ्रमनिर्वाहायेत्यर्थः। ज्ञानलक्षणाप्रत्यासत्तिकल्पनेपीति। ज्ञानलक्षणायाः प्रत्यासत्तित्वकल्पनप्रयुक्त-गौरवनिश्चयेपीत्यर्थः। नक्षतिः। न कार्यकारणभावानुपपत्तिप्रसक्तिः। फलमुख-गौरवस्येति। फलं—निरुक्तकार्यकारणभावग्रहः। तन्मुखं-तत्प्रयोज्यं यद्गौरवं-गौरवज्ञानं तस्येत्यर्थः। अदोषत्वादिति। निरुक्तकार्यकारणभावग्रहाऽविघटकत्वा-दित्यर्थः। स्थलविशेषे लौकिकसन्निकर्षादिरूपकारणस्य बाधाभावात्प्राप्तमेव मिथ्या-ज्ञानमित्याह। किंचेति। तत्र। तादृशसमूहालंबनप्रत्यक्षेइत्यर्थः। न कारणबाधो-पीति। चक्षुः संयुक्तसमवायरूपलौकिकसन्निकर्षाऽसंभवोपि नेत्यर्थः। अपिना ज्ञान-लक्षणात्मकाऽलौकिकसन्निकर्षाऽसंभवः समुच्चीयते। तथा च यत्र रजते न रजतभेदग्रहः न वा रंगे रजतभेदग्रहः तत्र सति युगपदिन्द्रियसन्निकर्षे रङ्ग रजतयोरिये रजते इति ज्ञानेन किमपि बाधकम्। रजतत्वेन सहसंयुक्तसमवायस्य सत्त्वात्, तादृशञ्च ज्ञानं रङ्गांशे न प्रमात्मकंविशेषणवद्विशेष्यसन्निकर्षरूपप्रमा-सामग्र्यभावात्, किन्तु अन्यथाख्यातिरेवेति भावः। प्राभाकरमते प्रवृत्तौ भेदाऽग्रहः कारणम्। एवं सत्यरजतस्थले रजतस्याऽभेदग्रहो निवृत्तौ प्रतिबन्धकः, अतोऽभेदग्रहाभावो निवृत्तौहेतुर्वाच्यः। ईदृशरीत्या रजतभेदाऽग्रहः प्रवृत्तौ कारणम्, एवं रजताऽभेदाग्रहो निवृत्तौ कारणमिति निष्कर्षः। एवं सति यत्र रंगे "इदं रजतमिति ज्ञानं तत्र युगपत्प्रवृत्तिः—निवृत्तिश्च स्यात्, तथा हि—रंग रजतभेदसत्वेपि दोष-बलाद्भेदज्ञानविरहेण रजतभेदग्रहाभावरूपप्रवृत्तिकारणसत्वात्प्रवृत्त्यापत्तिः। एवं रंगे रजताऽभेदोनास्ति इति रजताऽभेदाभावसत्वेन नाऽभेदग्रहः, अन्यथाख्यातिस्वीकारा-पत्तेः। तथाचाऽभेदग्रहाभाव रूपनिवृत्तिकारणसत्वान्निवृत्तिरपि स्यात्। नचेष्टापत्तिः। तयोः सहानवस्थानादित्याशयेनाह। अपि ति। यत्रेति। यदेत्यर्थः। रंगरजतयोरिति। रंगरजतोभयविशेष्यकमित्यर्थः। इमे रजतरंगे इति ज्ञानमिति। रंगांशे रजतत्व-प्रकारकं—रजतांशे रंगत्वप्रकारकं ज्ञानं जातमित्यर्थः। तदा तव दोषाधीनभेदग्रहा-भावविशिष्टज्ञानद्वयस्यैवोत्पत्तेरिति शेषः। तत्र। तादृशकालोत्तरकाले। उभयत्रेति। रंगव्यक्तौरजतव्यक्तौचेत्यर्थः युगपत्। एकक्षणे। ननु प्रवृत्तौ इष्टभेदाऽग्रहस्य निवृत्तौ

प्रवृत्तिनिवृत्ती स्यातां रङ्गे रङ्गभेदग्रहे रजते रजत भेदग्रहे चान्यथाख्याति-भयात् त्वन्मते दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्वात्।

प्रभाकर को अन्यथा ख्याति माननी पड़ जायगी-क्योंकि स्व में स्व का भेदग्रह ही अन्यथा ख्याति वस्तु है। अतः अन्यथाख्याति के भय से रंग में रंगभेदाग्रह रजत में रजतभेदाग्रह को कारण जब कि अवश्य ही स्वीकार करना है। एवं त्वन्मत में अर्थात् तुम्हारे ( प्रभाकर के मत में ) चाक्चिक्यरूप दोष वश से भी रंग में रजत भेदाग्रह को अवश्य ही जब कि स्वीकार करना है तब युगपत् प्रवृत्ति-निवृत्ति की आपत्ति लग जाती है। क्योंकि रंग में यद्यपि रजतभेद है परन्तु फिर वह दोषवश प्रतीत नहीं हो रहा है अत भेदाग्रहरूप जो रंग में रजतार्थी की प्रवृत्ति का कारण-उसके सत्वप्रयुक्त तो प्रवृत्ति की आपत्ति लग रही है, और रजत में रंगभेदाग्रह रजतार्थी की निवृत्ति का कारण है-अर्थात् रजत को चाहने वाला पुरुष जिस काल में रजत को रांगा समझे हुवे है उस काल में उसकी रजत के आनयन में प्रवृत्ति नहीं होगी अत. वह रजत में रंगभेदाग्रह निवृत्ति का कारण हो रहा है।

---

इष्टभेदग्रहस्य "इष्टाऽभेदग्रहाभावस्य" च हेतुतयाएकदा एकत्र तदुभयकारणसत्ता-ऽसंभवात्कोकादिरित्याशंकां तदुभयसत्वप्रदर्शनेन परिहरति। रंगेरंगभेदग्रहे इत्यादिना। रंगेरंगभेदप्रकारकज्ञानस्वीकारेइत्यर्थः। रजते रजतभेदग्रहे चेति। रजते रजतभेदस्वीकारे चेत्यर्थः। अन्यथाख्यातिभयादिति। एतदनन्तरंरंगे रंग-भेदाऽग्रहस्य रजते रजतभेदाऽग्रहस्येति पूरणीयम्। पूरितस्यसत्वादित्यनेनाऽन्वयः। अन्यथाख्यातिभयादित्यस्य-अन्यथाख्यातिस्वीकारापत्तेरित्यर्थः। रंगे रंगभेदाऽग्रहस्य सत्वादित्यनेन रंगे अनिष्ट ( रंग ) भेदाग्रहरूपा "रजतार्थिनो" निवृत्तिसामग्री, रजते रजतभेदाग्रहस्यसत्वादित्यनेन च रजतेइष्टभेदाऽग्रहरूपप्रवृत्तिसामग्री च दर्शिता। इदानीं रंगविषयकप्रवृत्तिसामग्री रजतविषयकनिवृत्तिसामग्री च दर्शयति। त्वन्मते इति। मीमांसकमते इत्यर्थः। दोषादेवेति। रंगे रजतभेद-ग्रहप्रतिबन्धकात् रजते रंगभेदग्रहप्रतिबन्धकदोषादेवेत्यर्थः। एव कारेणाऽन्यथा-ख्यातिमीतेर्व्यवच्छेदः। त्वन्मते भेदाऽग्रहं प्रति दोषस्यैव हेतुत्वादिति भावः। रंगेरजतभेदाग्रहस्येति। अस्यसत्वादित्यनेनान्वयः। अयं च इष्टभेदाऽग्रहः प्रवृत्तिकारणम्। रजते रंगभेदाग्रहस्येति। अयं चाऽनिष्टभेदाग्रहोनिवृत्तिकारणम् सत्वादिति। तथाचोभयसत्वात्तदुभयोत्पत्तिः स्यात्, परस्परसामग्र्याः परस्परप्रतिबन्धकत्वे एकैकस्या अपि अनुत्पत्तिप्रसंगः। स च गुरुणा नेष्यते। अतोभेदाऽग्रहोनप्रवृत्तिकारणं किन्तु इष्टतावच्छेदकीभूत रजतत्वादि धर्मप्रकारकज्ञानं कारणम्। तादृशज्ञानस्य कारणत्वान्यथानुपपत्त्या अन्यथाख्यातिसिद्धिरिति भावः। प्रकारान्तरेणाऽन्यथाख्यातिसिद्धिं करोति। किंचेति।

किञ्चानुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वन्हिव्याप्यधूमवद्-भेदाग्रहादनुमितिर्निरावाधा । यदि च विशिष्टज्ञानं कारणं, तदाऽयोगोलके वन्हिव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितम् । सेयमुभयतः पाशारज्जुः । इत्थं चान्यथाख्यातौ प्रत्यक्षमेव प्रमाणं, रङ्गं रजततयाऽवेदिषम् इत्यनु-भवादिति संक्षेपः ॥ १३६ ॥

अन्यथाख्याति के स्वीकार में 'किञ्च' इस ग्रन्थ से और भी युक्ति देते हैं कि अनुमिति के प्रति भेदाग्रह को कारण मानने पर दोषवश होने वाला जो परामर्श रूप जलह्रद में वन्हि-व्याप्यधूमवत् का भेदाग्रह—तन्निबन्धन होने वाली जो 'ह्रदोवन्हिमान्' इत्याकारक निरावाध अनुमिति—उसका स्वीकार भी आवश्यक है वही तो अन्यथाख्याति रूप है। और यदि विशिष्ट ज्ञान को कारण मानते हो तो 'अयोगोलकं वन्हिमत्' इत्याकारक अनुमिति के अनुरोध से अयोगोलक वन्हिव्याप्यधूमवत् इत्याकारक परामर्श आपतित हो जाता है, जो कि परामर्श स्वयं अन्यथाख्याति रूप है। इस प्रकार प्रभाकर अन्यथाख्याति न मानने पर उभयतः पाशा-रज्जु बना रहेगा। इस प्रकार अन्यथाख्याति के स्वीकार में प्रत्यक्ष ही प्रमाण है कि मैं रांगे को रजत सलझ गया था। १३६

---

तत्र धूलीपटले धूमत्वभ्रमानन्तरं वन्हिव्याप्यधूमवान्पर्वत इति परामर्शः । ततः पर्वतोवन्हिमानिति प्रमात्मिकाऽनुमितिः अत्रानुमितौ वन्हिव्याप्यधूमवद्भेदा-ग्रहः कारणम् । अंससर्गाग्रहो वा तथा। तथा च सति वन्हिशून्येपि पर्वते वन्हिमा-नित्यनुमितिः स्यात्, तादृशभेदाऽग्रहस्य सत्वादिष्टापत्तौ तु अन्यथाख्यातिः स्वीकार्या इत्याह । **अनुमितिं प्रतीति** । अनुमितिसामान्यं प्रतीत्यर्थः । **भेदाऽग्रहस्य हेतुत्वे** इति । वन्हिव्याप्योधूमः—पर्वतः इति ज्ञानद्वयसहितस्य वन्हिव्याप्यधूमवद्भेदाऽग्रहस्य हेतुत्वे इत्यर्थः । **जलह्रदे इति** । जले ह्रदे इत्यर्थः । **वन्हिव्याप्यधूमवद्भेदाऽग्रहा-दिति** । तादृशभेदग्रहप्रतिबन्धकदोषसमवधानकालीन तादृशभेदाऽग्रहरूपकारणा-दित्यर्थः । **अनुमितिरिति** । जलं वन्हिमत् ह्रदोवन्हिमानित्यनुमितिरित्यर्थः । **निरावाधेति** । अवश्यमंगीकार्या इत्यर्थः । तथा च तदनंगीकारेऽन्वयव्यभिचारेण अनुमितिसामान्ये निरुक्तभेदाग्रहस्य हेतुत्वानुपपत्तिः—अंगीकारे तु अन्यथाख्याति-सिद्धिरिति भावः । **यदिचेति** । एवकारार्थकश्चकारः—विशिष्टज्ञानमित्युक्तसंयोजनीयः । तथा च साध्यव्याप्तिविशिष्टहेतुप्रकारता निरूपितपक्षतावच्छेदकावच्छिन्न विशेष्यता-शालिज्ञानमेवे त्यर्थः ।

तथा च तैरपि विशिष्टज्ञानस्य हेतुतास्वीकारेण जलादिपक्षकस्थले वन्हिव्याप्य-धूमप्रकारकजलादिविशेष्यकज्ञानरूपकारणाप्रसिद्धिः, तैरन्यथाख्यात्यनंगीकारात् । तथा च जलादौ न वन्ह्यादिविधेयकानुमितिप्रसक्तिरिति भावः । **तदा** । तथापीत्यर्थः ।

विशिष्टज्ञानस्यहेतुत्वस्वीकारेपीत्यर्थः । **अयोगोलकेवन्हिव्याप्यधूमज्ञानमिति** । वन्हिव्याप्यधूमवदयोगोलकमितिभ्रमात्मकंज्ञानमित्यर्थः । **अनुमित्यनुरोधादिति** । अयोगोलकंवन्हिमदितिप्रमात्मकानुमित्यनुपपत्तिभयादित्यर्थः । **आपतितमिति** । अवश्यमङ्गीकार्यमित्यर्थः । तथा च वन्हिव्याप्यधूमवदयोगोलकमितिभ्रमस्थानाभिषिक्तं यद्वन्हिव्याप्योधूमः-अयोगोलकमिति ज्ञानद्वयं तदुत्तरं अयोगोलकंवन्हिमदित्यनुमितिः त्वयापि स्वीकरणीयतया तादृशानुमितिपूर्वं तादृशविशिष्टज्ञानाऽस्वीकारेव्यतिरेकव्यभिचारादनुमितिसामान्ये विशिष्टज्ञानस्यहेतुत्वाऽसंभवः । अनुमितिपूर्वंतत्स्वीकारे तु अन्यथाख्यातिसिद्धिर्निष्प्रत्यूहैवेति भावः । एवं च उभयतः पाशारज्जुन्यायेन गुरुमतेपि अन्यथाख्यातिसिद्धिः । अन्यथाख्यातौ प्रत्यक्षमपि प्रमाणमाह । **इत्थंचेति** । उक्तरीत्या अन्यथाख्यातिसिद्धौ चे त्यर्थः । **प्रत्यक्षमिति** । प्रत्यक्षमपीत्यर्थः । एवकारः प्रमाणमित्युत्तरं योजनीयः । **प्रमाणमिति** । प्रमाणमेवेत्यर्थः । तत्र हेतुमाह । **रंगमिति** । रंगविशेष्यकरजतत्वप्रकारकज्ञानवानहमिति मानसप्रत्यक्षादित्यर्थः । तथा च प्रत्यक्षेणाऽन्यथाख्यातिर्निःप्रत्यूहैवेतिभावः ।

अत्रेदं बोध्यम् । गुरुमते चक्षुः संयोगानन्तरं रंगादीनां सामान्यतो ज्ञानं न तु विशेषत इति कल्पना क्लिष्टा । तत्तांशप्रमोषेन स्मृतिकल्पनापि तथैव । विषययोर्भेदः स्वीक्रियते परन्तु भेदोन भासते इति चित्रम् । एवं ज्ञानयोरपि । नेदं रजतमितिबाधनिश्चयानन्तरं रजतशून्यदेशे रजतज्ञानाद् मे प्रवृत्तिर्निष्फलेति भ्रमोऽनुभवसिद्ध एव । तन्मते तु रजतस्मृतिरंगज्ञानयोर्भेदाऽग्रहान्मेप्रवृत्तिरिति बाधनिश्चयः स्यादित्यशयेन संक्षेप इत्युक्तम् ।

सिंहावलोकन्यायेन किंचिदुच्यते-न च प्रामाण्यं स्वाश्रयज्ञानहेतुमात्रजन्यवृत्ति अप्रामाण्येतरत्वे सति ज्ञानैकधर्मत्वाद् ज्ञानत्ववत् । एवं प्रामाण्यं ज्ञानहेतुमात्रजन्यवृत्ति अप्रामाण्येतरत्वे सति ज्ञानत्वन्यूनवृत्तित्वात् प्रत्यक्षत्ववदित्यनुमानं प्रामाण्यस्य स्वतग्राह्यत्वे मानमिति वाच्यम् । विकल्पा सहत्वात् । तथा हि-ज्ञानहेतुमात्रजन्य "व्यक्ति" वृत्तितामात्रं विवक्षितम्, उताऽन्यावृत्तित्वे सति तादृशव्यक्तिवृत्तित्वम्, नाद्यः-अंशतः सिद्धसाधनात्, अनुव्यवसायाऽनुमित्युपमितीनां स्वतः प्रमात्वस्य परैरपि अंगीकारात् । न द्वितीयः-प्रथमानुमाने दृष्टान्तस्य साध्यविकलत्वात्, ज्ञानत्वस्य दोषजन्याऽप्रमात्मकज्ञानवृत्तित्वात् । अप्रमायां ज्ञानत्वं न वर्तते तस्याः ज्ञानाऽभासत्वादितिचेत्-नैवम्-तथासति अप्रामाण्येतरत्वे सतीति विशेषणवैयर्थ्यापातात्, अप्रमायाः ज्ञानाभासत्वेनाऽप्रमात्वस्य ज्ञानावृत्तित्वात् ।

द्वितीयानुमाने च संशयत्वादिना व्यभिचारः-तथा हि संशयत्वं हि अप्रमात्वभिन्नत्वे सति ज्ञानत्वन्यूनवृत्ति-न तु ज्ञानहेतुमात्रजन्यवृत्ति, तिमिरादिदोषजन्यवृत्तित्वात् । दृष्टान्तस्य साध्यविकलता च, प्रत्यक्षत्वस्यापि परतः प्रामाण्यवादिना ज्ञानहेतुमात्रजन्यवृत्तित्वाभावात् । यन्मते प्रमात्वमेव ज्ञानहेतुमात्रवृत्ति न भवति "गुण विशिष्टज्ञानसामग्री जन्यवृत्तित्वात्" तस्य कथं तदवान्तर प्रत्यक्षत्वं

व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा।
हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छंकानिवर्त्तकः ॥ १३७ ॥

पूर्वं व्याप्तिरुक्ता, तदुग्रहोपायस्तु न दर्शित इत्यतस्तं दर्शयति व्यभिचारस्येति। व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहेकारणम्। व्यभि-

व्याप्ति का निरूपण पहिले अनुमाननिरूपण में कर चुके हैं किन्तु व्याप्ति ग्रहो पाय नहीं दिखलाया इसलिए अब उसे दिखलाते हैं—'व्यभिचारस्याग्रहोपि' इस ग्रन्थ से—व्यभिचार ज्ञानभाव और सहचार ज्ञान में कारण ( उपाय ) हैं। क्योंकि व्यभिचारज्ञान व्याप्तिज्ञान में प्रतिबन्धक है अतः व्यभिचारज्ञानाभाव प्रतिबन्धका भाव विधया कारण सिद्ध ही है। इसी प्रकार अन्वय व्यतिरेक से सहचार ज्ञान को भी कारणता सिद्ध है।

---

ज्ञानहेतुमात्रजन्यवृत्ति स्यात्। किंच ज्ञानस्य परतस्त्वेऽस्ति अनुमानं प्रमाणम्। अनीश्वरप्रमा विज्ञानहेत्वतिरिक्तहेतुजन्या कार्यत्वाद् घटवत्। किं ज्ञानव्यक्तेः प्रमाव्यक्तितोऽस्ति कश्चिद्विशेषः। किं वाप्रमाव्यक्तिरेव ज्ञानं-आद्ये-प्रत्यक्षज्ञान-व्यक्त्याऽपक्षेव्यभिचारः, प्रत्यक्षस्य विज्ञानहेत्वतिरिक्तहेत्व ( धीनत्वा ) भावात्। द्वितीयेपि जन्यापि विज्ञानरूपा प्रमा न ज्ञानहेत्वतिरिक्तहेत्वधीनेति बाध इतिचेत्—नैवम्। ज्ञानव्यक्तेः प्रमाव्यक्तितोभेदाभावेपि विज्ञानत्व-प्रमात्वधर्मयोर्भे-दात्। तथा च घटत्वस्य पृथिवीत्वप्रयोजकातिरिक्तप्रयोजकत्वसाधने इव प्रमायाः विज्ञानत्वप्रयोजकातिरिक्तप्रयोजकत्वसाधने बाधाभावात्। विपक्षे च प्रमात्वं यदि विज्ञानत्वप्रयोजकमात्रप्रयोज्यं स्यात्तर्हि ज्ञानत्ववदप्रमावृत्ति स्यादिति बाधकस्तर्को-बोध्यः। ननु सामग्र्या एवाऽ निरूपणात् तदतिरिक्तहेत्वधीनत्वं दुर्ग्रहमिति चेन्न। एवं सति अप्रमायाः परतस्त्वं दत्ताञ्जलि स्यात्। तदपि ज्ञानसामग्रीनिरूपणाधीननिरूपणं तस्य दोषानुषक्तविज्ञानसामग्रीजन्यताप्रतिज्ञानात्। तस्मान्नोत्पत्तौ प्रमायाः स्वतस्त्वम् ॥१३६॥

इति अन्यथाख्याति निरूपणम्।

ज्ञानप्रामाण्यव्यवस्थितिरनुमानाधीना, तच्च व्याप्तिज्ञानम्, तदुपायस्य ज्ञानप्रामाण्यव्यवस्थित्युपपादकत्वादुपोद्घातसंगत्या परतोज्ञानप्रामाण्यव्यवस्थित्य-नन्तरं व्याप्तिग्रहोपायं निरूपयति। पूर्वमिति। अनुमानखण्डे इत्यर्थः। अथवा हेतुमन्निष्ठविरहाऽप्रतियोगिना साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते इत्यनेनेति भावः। व्याप्तिरुक्तेति। सिद्धान्तव्याप्तिरुक्तेत्यर्थः। तदुग्रहोपायस्त्विति। व्याप्तिग्रहोपायस्तु न दर्शितः। कुतइत्यर्थकस्तुशब्दः न दर्शितः इत्यनेन सम्बध्यते। दर्शित इति। परतोग्राह्यत्वव्यवस्थापनानन्तरं कुतोन निरूपित इत्यर्थः। इत्यत इति। एतादृशशंकापरिहारायेत्यर्थः। तंनिरूपयतीति। व्याप्तिग्रहोपायं। निरूपयतीत्यर्थः। मूले-व्यभिचारस्येति। अस्य सहचारग्रहेऽन्वयभ्रमवारणाय।

**चारग्रहस्य व्याप्तिग्रहे प्रतिबन्धकत्वात्तदभावः कारणमित्यर्थः। एवमन्वय-व्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता, भूयोदर्शनं तु न कारणम्, व्यभिचारास्फूर्तौ सकृद्दर्शनेऽपि क्वचिद्व्याप्तिग्रहात्। क्वचिद्व्यभिचार-शंकाविधूननद्वारा भूयोदर्शनमुपयुज्यते।**

भूयोदर्शनव्याप्तिज्ञान में कारण नहीं है, क्योंकि व्यभिचार की अस्फूर्ति ( अज्ञान ) रहने पर साध्य-हेतु के एकबार सहचार दर्शन होने पर भी कहीं कहीं भूयोदर्शन व्याप्तिज्ञान में उपयोगी अवश्य है।

---

६। **व्यभिचाराऽग्रह इति।** संशयनिश्चयसाधारणव्यभिचारज्ञानत्वावच्छिन्नप्रति-योगिताकाभाव इत्यर्थः। **सहचारग्रहश्चेति।** साध्यसमानाधिकरणो हेतुरिति ग्रहश्चेत्यर्थः। **व्याप्तिग्रहे इति।** व्याप्तिनिश्चये इत्यर्थः। व्यभिचारग्रहाभावस्य सहचारग्रहस्य च व्याप्तिग्रहं प्रति क्रमेण कारणत्वमुपपादयति। **व्यभिचारग्रहस्येति।** साध्यतावच्छेदकं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकमिति ग्रहस्येत्यर्थः। साध्य-वदन्यवृत्तिर्हेतुरिति ग्रहस्य चेत्यर्थः। **व्याप्तिग्रहे इति।** व्याप्तिघटकव्यापकत्वग्रहे इत्यर्थः। साध्यतावच्छेदकं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकमितिग्रहे इति यावत्। इदमुपलक्षणम् साध्यवदन्यावृत्तिर्हेतुरिति ग्रहेपीत्यपि बोध्यम्। **प्रतिबन्धक-त्वादिति।** तद्वत्ताबुद्धिंप्रति तदभाववत्तानिश्चयस्यप्रतिबन्धकत्वादित्यर्थः। **तदभावः इति।** तादृशव्यभिचारज्ञानस्य सामान्याभाव इत्यर्थः। **कारणमिति।** यथेत्यादिः। तथा च व्याप्तिघटकाऽव्यभिचारनिश्चयहेतुतया व्याप्तिग्रहोपयोगित्वमितिभावः। सहचारग्रहस्य व्याप्तिग्रहेकारणत्वमुपपादयति। **एवमिति।** तथेत्यर्थः। **अन्वय-व्यतिरेकाभ्यामिति।** सहचारग्रहसत्वे व्याप्तिग्रहसत्वम्, सहचारग्रहाभावे व्याप्ति-ग्रहाभाव इत्यन्वयव्यतिरेकाभ्यामित्यर्थः। **सहचारज्ञानस्यापीति।** साध्यसमाना-धिकरणोहेतुरिति सहचारग्रहस्यापीत्यर्थः। अपिना व्यभिचारग्रहाभावस्य परिग्रहः। **हेतुतेति।** बोध्या इति शेषः।

यद्यपि व्याप्तेः साध्यसामानाधिकरण्यविशिष्टहेतुतावच्छेदकरूपतया तत्र साध्यसमानाधिकरणोहेतुरिति सहचारज्ञानस्य विशेषणज्ञानविधयैव हेतुत्वं शक्यते वक्तुम्, दीधितिकारादिभिः विशेषणज्ञानत्वेनैव तस्य हेतुत्वप्रतिपादनाच्च तथापि साध्यवदन्याऽवृत्तित्वरूपव्याप्तेः, हेतुव्यापकसाध्यसंबन्धितारूपव्याप्तेश्च सामाना-धिकरण्याऽघटिततया तादृशव्याप्तिग्रहे सहचारज्ञानस्य विशेषणज्ञानविधया हेतुत्वं न संभवतीति सकलव्याप्तिग्रहे सहचारग्रहस्य हेतुत्वसिद्ध्यर्थमन्वयव्यतिरेकाभ्या-मित्युमन्यस्तम्।

यत्र तु भूयोदर्शनादपि शंका नापैति तत्र विपक्षे बाधकस्तर्कोऽपेक्षितः । तथा हि वन्हिविरहिण्यपि धूमः स्यादिति यद्याशंका भवति, तदा सा वन्हिधूमयोः कार्यकारणभावस्य प्रतिसंधानान्निवर्त्तते । यद्ययं वन्हिमान्न स्यात्तदा धूमवान्न स्यात्, कारणं विना कार्यानुत्पत्तेः । यदि च क्वचित्

और जहाँ भूयोदर्शन से भी व्यभिचारशंका की निवृत्ति न हो वहाँ विपक्ष ( व्यभिचार से शंका ) निवर्त्तकतया तर्क अपेक्षित होता है । तथा हि—'वन्हिशून्य देश में भी धूम उत्पन्न होता है' यह यदि व्यभिचार शंका हो तो उसे वन्हि धूम के कार्यकारण भाव के निश्चयात्मक तर्क से निवृत्त कर दी जाती है । जैसे–धूमवत्तया निश्चित यह पर्वत यदि वन्हिवाला नहीं है तब धूम वाला भी नहीं हो सकता है, क्योंकि कारण के बिना कार्य की उत्पत्ति नहीं

---

अत्र सकृद्दर्शनं न व्याप्तिग्राहकं, रासभवन्ह्योः सकृत्सहचारदर्शने व्याप्त्यग्रहात्, किं तु भूयोदर्शनम् तथा, एवं च वन्हिशून्यदेशेपि रासभदर्शनेन भूयोदर्शनरूपकारणाभावात् न व्याप्तिग्रह इति केषांचिन्मतं निरस्यति । **भूयोदर्शनमिति** । भूयस्सु स्थानेषु साध्यसाधनसहचारदर्शनम्, भूयसां साध्यानां साधनानां च सहचारदर्शनम्, भूयस्त्वविशिष्टं साध्यसाधनसहचारदर्शनं चेत्यर्थः । **न कारणमिति** । न व्याप्तिनिश्चयकारणमित्यर्थः । व्यतिरेकव्यभिचारादिति भावः । व्यतिरेकव्यभिचारमाह । **व्यभिचाराऽस्फूर्ताविति** । व्यभिचाराऽस्फूर्तावित्यर्थः । व्यभिचारनिश्चयाऽभावसत्वे इति यावत् । **क्वचिदिति** । एतद्रूपवान् एतद्रसादित्यादौ इत्यर्थः । **व्याप्तिग्रहादिति** । एतद्रूपव्याप्यमेतद्रसमिति व्याप्तिग्रहादित्यर्थः । भूयस्त्वस्य त्रिचतुरादित्वेन त्रिचतुरादिभेदेनाऽननुगमाच्च, शतशः सहचरितयोरपि पार्थिवत्वलोहलेख्यत्वयोर्हीरके व्यभिचारदर्शनाच्चेत्यपि बोध्यम् । भूयोदर्शनस्याऽकारणत्वेपि प्रयोजकत्वमावश्यकमित्याह । **क्वचिदिति** । व्याप्तिग्रहविशेषे इत्यर्थः । **व्यभिचारशंकाविधूनद्वारेति** । हेतुः साध्याभाववद्वृत्तिर्नवेति व्यभिचारसंशयनिरसनं कृत्वाइत्यर्थः । **उपयुज्यते इति** । पूर्ववर्त्तित्वरूपप्रयोजकतावद् भवति इत्यर्थः । यत्र तु न व्यभिचारशंका तत्र नोपयुज्यते इति भावः ।

इति व्याप्तिग्रहोपायनिरूपणम् ।

**शंका** व्यभिचारशंका । **नापैति** । न निवर्त्तते । **विपक्षे** साध्याभाववति । **बाधकतर्कइति** । हेतोः सत्वबाधके तर्क इत्यर्थः । व्यभिचारशंकानिवर्तकस्तर्क इति यावत् । **अपेक्षित इति** । अवश्यं संपादनीय इत्यर्थः । व्यभिचारशंकाया व्याप्तिज्ञानप्रतिबन्धकत्वादिति भावः । प्रथमतोऽव्यभिचारशंकां दर्शयति । **तथाहीति** । धूमोऽस्तुवन्हिर्मास्तु इति शंकास्वरूपम्, तदाह **वन्हिविरहिण्यपीति** । विपक्षे

इत्यर्थः । **धूमःस्यादिति** । अनेन हेतुसत्त्वंप्रतिपादितम् । धूमोवन्ह्यभाववद्वृत्तिर्नवेति फलितम् । **यद्याशंका भवतीति** । इत्यांशंका यदि भवतीति योजना । **तदा सेति** । निरुक्तव्यभिचारशंकेत्यर्थः । व्यतिरेकव्यभिचारशंकेति यावत् । यत्र साध्याभावस्तत्र हेत्वभाव इति व्यतिरेकसहचारः साध्याभाववति हेतुसत्वं व्यतिरेकव्यभिचारः । **प्रतिसन्धानादिति** । धूमोवन्हिजन्यः वन्हिधूमजनक इति कार्यत्वस्य कारणत्वस्य च निश्चयादित्यर्थः । तर्कमाह । **यदीति** । **अयमिति** । धूमवान् पर्वत इत्यर्थः । **वन्हिमान्नस्यादिति** । वन्हिमद्भेदवान् स्यादित्यर्थः । वन्ह्यभाववान् स्यादिति यावत् । धर्मिभेदधर्मात्यन्ताभावयोरैक्यादिति भावः । **तदा धूमवान् न स्यादिति** । धूमवद्भेदवान् स्यादित्यर्थः । धूमाभाववान् स्यादिति यावत् । तथा च धूमो यदि वन्हिव्यभिचारीस्यात्तदा वन्हिजन्यो न स्यादितितर्काकारोबोध्यः । यथाश्रुतस्य तादृशतर्कस्य विपयशोधकत्वेपि व्याप्तिग्रहानुपयोगित्वेनाऽसंगत्यापत्तेः ।

अयं भावः व्याप्यारोपेण व्यापकारोपस्तर्कः । तदर्थस्तु व्याप्यस्य वन्ह्यभावस्य । आरोपेण आहार्यज्ञानेन । व्यापकस्य धूमाभावस्य । आरोपः आहार्यज्ञानमित्यर्थः । आहार्यव्याप्यवत्ताभ्रमजन्याऽऽहार्यव्यापकवत्ताभ्रम इत्यर्थः । आहार्यं च बाधकालीनेच्छाजन्यं ज्ञानम् । प्रकृते बाधनिश्चयश्च वन्हिधूमयोः पर्वतादौ निश्चयः, तत्कालीनेच्छा वन्हिव्याप्यधूमवति पर्वते वन्ह्यभाववज्ज्ञानं धूमाभावज्ञानं च जायतामित्याकारिका तज्जन्यज्ञानं पर्वतो यदि वन्ह्यभाववान् स्यात् धूमाभाववान् स्यादिति ज्ञानम् तदेव तर्कः ।

अत्रेदं बोध्यम् । तर्कं प्रति यथाऽऽपाद्यव्यतिरेकनिश्चयः कारणं—तथाऽऽपाद्यव्याप्याऽऽहार्याऽऽपादकवत्तानिश्चयः कारणम् । अतोधूमो यदि वन्हिव्यभिचारी स्यात्तदा वन्हिजन्यो न स्यादित्यापत्ति प्रति धूमोवन्हिजन्यः इति निश्चयो यथा कारणं तथा वन्हिजन्यत्वाभावव्याप्यवन्हिव्यभिचारित्ववान् धूम इति वन्हिव्यभिचारित्वांशे आहार्यनिश्चयोपि कारणम् । न च तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वात् धूमे वन्हिजन्यत्वनिश्चयसत्वे कथं धूमे वन्हिजन्यत्वस्यापत्तिः संभवतीति वाच्यम् । अनाहार्यतद्वत्ताबुद्धिं प्रत्येव तदभावनिश्चयस्य प्रतिबन्धकत्वात् । आपत्तेस्तु आहार्यतया बाधनिश्चयाऽप्रतिबध्यत्वात् । अत्राऽऽपाद्याऽऽपादकयोर्व्याप्ति द्विविधा—आपादकव्यापकाऽऽपाद्यसामानाधिकरण्यरूपाऽन्वयव्याप्तिः । आपाद्याभावव्यापकीभूताभावप्रतियोगित्वरूपा व्यतिरेकव्याप्तिश्च । तथा धूमोयदि वन्हिजन्योन स्यात् वन्हिव्यभिचारीस्यादित्यापत्तिरपि संभवात् । तत्र वन्हिव्यभिचारित्वव्यापकवन्हि-[illegible]
जन्यत्वाभावसम [illegible]
कारणम् । एवं [illegible]
वान् धूम इति व्यतिरेकव्याप्त्यवगाहिनिश्चयोपि कारणम् । [illegible]
वन्हिजन्यत्वनिश्चयः आपाद्यव्यतिरेकनिश्चयविषयोऽस्ति, वन्हिव्यभिचारित्वव्यापक
वन्हिजन्यत्वाभावसमानाधिकरण वन्हिव्यभिचारित्ववान् धूम इत्यन्वयपरामर्शो

कारणं विनापि कार्यं भविष्यति, तदाऽहेतुक एव भविष्यति, इति तत्राप्याशंका भवेत् तदा सा व्याघातादपसारणीया ।

हो सकती है । [ प्रकृत में वन्हिरूपकरण के विना धूमात्मक कार्य की भी उत्पत्ति कैसे हो सकती है ] और यदि कहो कि कारण के बिना भी कार्य उत्पन्न हो सकता है यह यदि शंका हो तो उसे व्याघात से दूर कर देना चाहिये ।

---

विषयतया वन्हिजन्यत्वाभावे वन्हिव्यभिचारित्वव्यापकत्वनिश्चयोपि वर्तते । धूमव्यापकत्वेन गृहीतस्य वन्हेरभावस्य ह्रदे निश्चये ह्रदे धूमवत्ताबुद्धिर्न जायते, तथा वन्हिव्यभिचारित्वव्यापकत्वेन गृहीतस्य वन्हिजन्यत्वाभावस्याभावनिश्चये धूमे वन्हिव्यभिचारित्ववत्ताबुद्धिरनाहार्या न जायते । तद्वत्ताबुद्धिं प्रति तद्व्यापकत्वेन-गृहीतधर्मस्याभावप्रकारकनिश्चयस्य विरोधित्वात् । एवं वन्हिजन्यत्वाभावाभाव "वन्हिजन्यत्व" व्यापकीभूताभावप्रतियोगिवन्हिव्यभिचारित्वान् धूम इति व्यतिरेक परामर्शेविषयतया वन्हिव्यभिचारित्वाभावे वन्हिजन्यत्वाभावव्यापकत्वनिश्चये वन्हिजन्यत्वस्य धूमे निश्चये वन्हिव्यभिचारित्ववत्ताबुद्धिराहार्या न जायते । वन्हिव्यभिचारित्ववत्ताबुद्धिंप्रति वन्हिव्यभिचारित्वाभावधर्मिकवन्हिजन्यत्व व्यापकतानिश्चयविशिष्ट धूमधर्मिकवन्हिजन्यत्वनिश्चयस्य "वन्हिजन्यत्ववान् वन्हिव्यभिचारित्वाभाववान्, वन्हिजन्यत्ववान् धूम इत्याकारकस्य" प्रतिबन्धकत्वम् । अत एव जलव्यापकोवन्ह्यभावः—जलवान् ह्रदः इति निश्चयस्य सत्वे ह्रदोवन्हिमानिति बुद्धिर्न जायते । एवं तर्कं प्रति आपाद्यव्याप्याऽऽपादकवत्वांशे आहार्यनिश्चयः कारणम् । तत्राऽऽहार्यवन्हिव्यभिचारित्ववत्ताबुद्धिं प्रत्येव तर्कस्यविरोधित्वम् । भवति हि आपाद्यस्याऽनिष्टस्य प्रदर्शनेनाऽऽपादकवताबोधस्येच्छाविच्छेद इति आहार्यजनकीभूताऽऽपादकवत्ववोध "रूपद्विष्टसाधनतावोध" विषयकेच्छाविघटकतया तर्कस्याऽऽहार्याऽपादकवत्ताबोधविघटकत्वम् ।

अथ किं तर्केण—तर्कहेतुरापाद्यव्यतिरेकनिश्चयएवाऽऽपादककोटिकशंकां निवर्तयिष्यति, आपादकस्याऽऽपाद्यव्याप्यतयाऽऽपाद्यव्यतिरेकस्याऽऽपादक व्यतिरेकव्याप्यतयाऽऽ पाद्यव्यतिरेकनिश्चयस्य विशेषदर्शनत्वादिति चेन्न । तर्ककारणीभूतज्ञाननाशेपि तर्कसत्वे शंकानुत्पत्त्यनुरोधेन तर्कस्योपयोगित्वात् ।

केचित्तु विशेषदर्शनादनाहार्यसंशयनिवृत्तावपि आहार्यसंशयनिवृत्त्यर्थं तर्कापेक्षा—तथा हि—व्याप्यप्रसंजनेन व्यापकप्रसंजनमाहार्यज्ञानम्, व्यापकप्रसंजनेन दुःखात् तत्र द्वेषात् तत्प्रयोजक व्याप्यप्रसंजनेपि द्वेषादिष्टसाधनताज्ञानाभावाच्चेच्छानिवृत्तौ कारणाभावादेवाऽऽहार्यशंकानुत्पाद इति वदन्ति ।

न च तर्कं प्रति आपाद्यव्याप्याऽऽपादकवत्तानिश्चयत्वेन कारणत्वे आपादके आपाद्यव्यभिचारशंकानिवृत्त्यर्थं तर्कान्तरमपेक्षणीयम् । स च तर्कः वन्हिव्यभिचारित्वं यदि वन्हिजन्यत्वाभावव्यभिचारि स्यात् वन्हिजन्यतावच्छेदकं स्यादित्याकारकः । अत्रापि आपादके आपाद्यव्यभिचारसंशयनिवृत्त्यर्थं तर्कान्तरमपेक्षणीयमित्यनवस्थे

**यदि हि कारणं विना कार्यं स्यात् तदा धूमार्थं वन्हेस्तृप्त्यर्थं भोजनस्य वा नियमत उपादानं तवैव न स्यात्तस्मात्तदुपादानमेव तादृशशंकाप्रतिबन्धक-**

कि यदि कारण के बिना भी कार्य होता हो तो धूम के लिये वन्हि का तथा तृप्ति के लिये भोजन का होने वाला नियम से उपादान ( ग्रहण ) तुम्हीं को नहीं होना चाहिये।

---

त्याशंकायामाह । **कारणं विना कार्यानुत्पत्तेरिति** । वन्ह्यभाववति धूमोत्पत्त्य-भावादित्यर्थः। तथा च यदि वन्हिर्न स्यात् धूमोपि न स्यादिति भावः। ननु अत्रापि वन्हिं विनापि धूमोभवतु इत्याशंका, धूमोऽहेतुक एवास्तु इत्याद्याशंका वा तर्कविरोधिनी स्यादिति चेत्तत्राह। **सा**—शंका। **स्वक्रियाव्याघातादिति** । स्वस्य-तार्किकपुरुषस्य। **याक्रिया**—अन्वयव्यतिरेकानुविधायित्वज्ञानं। क्रियते-प्रवर्ततेऽने-नेतिव्युत्पत्तेः। **तदेवव्याघातो**—विरोधी-प्रतिबन्धकस्तस्मादित्यर्थः। **अपसारणीया**-निरसनीया। धूमेवन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानसत्वेपि वन्ह्यभाववतिसत्वं-सामा-न्यतोऽहेतुकत्वे शंकेतेति स्पष्टार्थः। अन्वयव्यतिरेकाभ्यां प्रत्यक्षतोवन्हिजन्यत्व-निश्चयस्यैव एतत्तर्कसहकारितया वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानस्य पूर्वं अवश्यं सत्वात्। तथा च तर्कप्रतिबन्धकशंकायाः तर्कान्तरेणाऽ निवृत्तौ नाऽनवस्थेति भावः।

ग्राह्याऽभावाऽनवगाहितया निरुक्तान्वयव्यतिरेकानुविधायित्वज्ञानस्योक्तशंका-द्वयाऽप्रतिबन्धकत्वेपि मणिमन्त्रादिन्यायेन शंका प्रतिबन्धकत्वे मानमाह यदिहीति। **कारणं विनेति** । गृहीतान्वयव्यतिरेकं हेतुं विनेत्यर्थः। वन्हिं विनेतिभावः। **कार्यंस्यादिति** । धूमः स्यादित्यर्थः। तथा च वन्ह्यभाववतिधूमः स्यादिति समुदितार्थः। अतएवोक्तं तदेव हि आशंकयेत, यस्मिन्नाशंक्यमाने स्वक्रिया-व्याघातोन भवेदिति। तथा च **धूमार्थं वन्हेरिति** । अस्योपादानमित्यनेनाऽन्वयः। एवमग्रेपि। **उपादानं कथं कुर्यादिति** । प्रवृत्तिः कथं भवेदित्यर्थः। तेन विनापि तत्संभवादिति भावः। **तवैवेति** । निरुक्तान्वयव्यतिरेकानुविधायित्वज्ञानस्य तादृश-शंकाद्वयप्रतिबन्धकत्वानंगीकर्तुरेवेत्यर्थः। **न स्यादिति** । इति ज्ञानेनसाऽपसारणीये-

[illegible] तादृशशंकाद्वयप्रतिबन्धकत्वा-

[illegible] इष्टसाधनताज्ञानानुरक्त्या

[illegible] ऽप्यविषयकस्यापि अन्वय-

धूमादिकार्यार्थ [illegible] व्यतिरेकानुविधायित्वज्ञानस्य मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वं स्वीकरणीयम्। **तस्मात्** । तादृशप्रवृत्तिनिर्वाहानुरोधात्। **तदुपादानमेव** । वन्ह्युपादनं-वन्ह्यन्वय-व्यतिरेकज्ञानम्। तस्योपादनं यस्मादिति व्युत्पत्तेः। एवकारेण तर्कान्तरस्य व्यावृत्तिः। **तादृशशंकाप्रतिबन्धकमिति** । अवन्हेरेव भविष्यति—अहेतुकएवोत्पत्स्यते इति शंकाद्वयप्रतिबन्धकमित्यर्थः। अन्यथा नियतान्वयव्यतिरेकानुविधायित्वज्ञानानन्तर-

मपि यदि शंकास्याचदा तृप्त्यर्थं भोजनादौ धूमार्थं वन्ह्यादौ प्रवृत्तिर्न स्यादिति ध्येयम् ।

तथा चागृहीतान्वयव्यतिरेकं कारणं विना कार्योत्पत्तिशंका न संभवति । धूमस्य ह्यन्वयव्यतिरेकानुविधायित्वं च पुरोवर्त्तिधूमे निश्चितमेव । तर्हि तदन्वयव्यतिरेकानुविधायित्वमेव तद्व्यभिचारशंकाविघटकमस्तु कृतं तर्केणेति चेन्न । पुरोवर्त्तिधूमे वन्ह्यन्वयव्यतिरेकानुविधायित्वनिश्चयेपि धूमत्वावच्छेदेनतदनिश्चयाद्व्यभिचारशंकाया अनुच्छेदात् । न च तर्केणापि कथं तदुच्छेद इति वाच्यम् । पुरोवर्त्तिधूमे वन्हिजन्यत्वसिद्धौ लाघवाद् धूमत्वावच्छेदेन तत्सिद्धेः । न च लाघवज्ञाने सत्यपि व्यभिचारशंका कथं न प्रतिबन्धिकेतिवाच्यम् । फलबलेन लाघवज्ञानकालीन व्यभिचारशंकाभिन्नाया एव व्यभिचारशंकायाः प्रतिबन्धकत्वोपगमात् । तथा च लाघवज्ञानसहकृतप्रथमोपदर्शिततर्कबलाद् धूमत्वावच्छेदेनवन्हिजन्यत्वसिद्धिः । ततो द्वितीयतर्कबलादव्यभिचारनिश्चयः । वस्तुतस्तु वन्ह्यन्वयव्यतिरेकानुविधायित्ववान् वन्हिजन्यत्ववान् वन्ह्यन्वयव्यतिरेकानुविधायित्ववान् धूमः—एवं वन्ह्यन्वयव्यतिरेकानुविधायित्ववान् सहेतुकत्ववान् वन्ह्यन्वयव्यतिरेकानुविधायित्ववान् धूमः इति ज्ञानविशिष्टज्ञानत्वेन वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानस्य वन्हिजन्यत्वसंशये अहेतुकत्वसंशये च प्रतिबन्धकत्वात् । सामानाधिकरण्येन बाधनिश्चयस्य सामानाधिकरण्यावगाहिबुद्ध्यप्रतिबन्धकत्वेपि व्यावर्तकधर्मदर्शनमुद्रया सामानाधिकरण्यावगाहिबुद्धि प्रतिबन्धकत्वे बाधकाभावादिति ।

व्यभिचारज्ञानाभावस्तर्कश्च स्वरूपसदेव कारणम्, न तु तयोर्ज्ञानम्, तथा सति व्यभिचारज्ञानाभावसत्वेपि तन्निश्चयाभावाद् व्याप्तिग्रहानुपपत्तेः । एवं शंकासत्वदशायामपि शंकाविरहानुकूलतर्कयोर्ज्ञानसंभवाद् व्याप्तिग्रहापत्तेरिति ध्येयम् ।

अयं भावः—धूमे वन्हिव्यभिचारित्वसन्देहे धूमे वन्हिव्याप्तिग्रहो न जायतेऽतोधूमे वन्हिव्यभिचारित्वसंशयनिरासकतर्कोवाच्यः । स च धूमो यदि वन्हिव्यभिचारी स्यात्तदा वन्हिजन्योन स्यादित्याकारकः । अत्र वन्हिव्यभिचारित्वमापादकम्, वन्हिजन्यत्वाभावः आपाद्यः । तथा च धूमधर्मिकवन्हिव्यभिचारित्ववत्ताबुद्धिं प्रति वन्हिव्यभिचारित्वापादकताऽऽपत्तित्वेन प्रतिबन्धकत्वात्, तादृशापत्त्या वन्हिव्यभिचारित्ववत्ता संशयनिरासात्, वन्हिव्यभिचारित्वाभावरूपव्याप्तिनिश्चयोजायते । तादृशापत्तौ धूमे वन्हिव्याप्यत्वनिश्चयः कारणम्, आपत्तिं प्रति आपाद्यव्यतिरेकनिश्चयस्य कारणत्वात्, निरुक्ततर्के वन्हिजन्यत्वाभावः आपाद्यः, तस्यव्यतिरेको— वन्हिजन्यत्वमेव । तथा च धूमोयदि वन्हिव्यभिचारीस्यात् वन्हिजन्यो न स्यादित्यापत्तिं प्रति धूमोवन्हिजन्यः इति निश्चयः कारणम् । परन्तु तत्र वन्हिजन्यत्वनिश्चये वन्हिजन्यत्वशंका विरोधिनी तादृशशंकाविरोधी तर्क उक्तो मणिकृतैव ।

तथा हि—धूमो यदि वन्ह्यसमवहिताजन्यत्वे सति वन्हिसमवहिताजन्यः स्यात् नोत्पन्नः स्यादिति । अत्र सम्-अव पूर्वक धाञ् धातोः क्तप्रत्यये धास्थाने हि आदेशेकृते समवहित इति रूपं जातम् । न समवहितः असमवहितः । वन्हिना असमवहितः वन्ह्यसमवहित इति तृतीयातत्पुरुषः । वन्ह्यसमवहितेनाऽजन्यः— वन्ह्यसमवहिताऽजन्यः इति तृतीयातत्पुरुषः । तस्य भावः वन्ह्यसमवहिताजन्यत्वम् ।

तस्मिन्निति व्युत्पत्तिः । वन्हिसमवहितजन्यत्वं च स्वाधिकरणदेशावच्छेदेन वन्हिमत्स्वाव्यवहितपूर्वक्षणकत्वम् । स्वं-धूमः । स्वाधिकरणं च संयोगेन । इते वन्हिमत्वं च कालिकेन । एवं च धूमस्याऽव्यवहितपूर्वोयः क्षण तत्क्षणे धूमाधिकरणं यत्पर्वतादि तदवच्छेदेय कालिकेन वन्हेः सत्वात, निरुक्तवन्हिसमवहितजन्यत्वं धूमे वर्तते । देशेकालस्येव काले कालिकसंबन्धेनवृत्तेर्देशस्याऽवच्छेदकत्वात् ।

अत्र केवलवन्हिसमवहितजन्यभिन्नत्वस्याऽऽपादकत्वे वन्हिशून्यतादशायां वन्हिदेशोत्पन्नोयोघटः तत्र निरुक्तवन्हिसमवहितजन्यभिन्नत्वस्य सत्वात्, जन्यत्वाभावस्य चाऽसत्वात्तत्र व्यभिचारः, अतो वन्ह्यसमवहिताऽजन्यत्वं वन्हिसमवहितजन्यभिन्नत्वविशेषणम् । वन्ह्यसमवहिताजन्यत्वं च स्वाधिकरणदेशावच्छेदेन वन्ह्याभाववत्स्वाव्यहितपूर्वक्षणकं यत्तदन्यत्वम् । स्वं-धूमः । वन्ह्यभावश्च कालिकसंबन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । तथा च वन्हिशून्यतादशायां वन्ह्यधिकरणदेशोत्पन्नो योघट तदव्यवहितपूर्वक्षणे तदधिकरणदेशावच्छेदेन कालिकसंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावस्य स्वरूपेण सत्वात् स्वाधिकरणदेशावच्छेदेन वन्ह्यभाववत्स्वाव्यवहितपूर्वक्षणक एव घटस्तदन्यत्वरूपवन्ह्यसमवहिताजन्यत्वस्य तद्घटे विरहान्न व्यभिचारः ।

ननु तद्वत्ता "वन्हिव्यभिचारित्ववत्ता" बुद्धिं प्रति तदापादकआपत्तित्वेन प्रतिबन्धकत्वे शुद्धतद्वत्ताबुद्धित्वमेव प्रतिबध्यतावच्छेदकं वक्तव्यम्, अन्यथा रूपं यदि गुणकर्मान्यत्वविशिष्टसत्तावत्स्यात् तदा द्रव्यं स्यादित्यापत्तेरपि रूपधर्मिकसत्तावत्ताबुद्धिप्रतिबन्धकत्वापत्तेः । एवं च वन्ह्यसमवहिताऽजन्यत्वविशिष्ट वन्हिसमवहितजन्यभिन्नत्वापादकापत्तेः कथं वन्हिसमवहितजन्यभिन्नत्ववत्ताबुद्धिप्रतिबन्धकत्वमिति चेन्न । शुद्धतद्वत्ताबुद्धिं प्रति यदि तदापादकाऽऽपत्तित्वमात्रेण प्रतिबन्धकता तदा सामान्यं यदि गुणकर्मान्यत्वविशिष्टसत्तावत्स्यात् द्रव्यं स्यादित्यापत्तेः सत्तावत्त्वबुद्धिप्रतिबन्धकत्वाभावप्रसंगः । एवं च नित्यभिन्नमिदं यदि नित्यभिन्नत्वे सति कार्यद्रव्य न स्यात् तदा द्रव्यं न स्यादित्यापत्तेरपि कार्यद्रव्यभेदवत्वबुद्धिप्रतिबन्धकत्वाभावप्रसंगः । अतः शुद्धतद्वत्ताबुद्धिं प्रति तदापादकापत्तित्वेनैव विशेष्यवत्ताबुद्धिं प्रति विशेषणवत्तानिश्चयसहकृतविशेष्यापादकापत्तित्वेनापि प्रतिबन्धकत्वान्तरं वक्तव्यम् । तथा च रूपं यदि गुणकर्मान्यत्वविशिष्टसत्तावत्स्यादित्यापत्तेर्न सत्तावत्वबुद्धिं प्रति प्रतिबन्धकत्वम्, रूपे गुणकर्मान्यत्वरूपविशेषणनिश्चयाभावात् ।

सामान्यं यदि गुणकर्मान्यत्वशिष्टसत्तावत्स्यात् तदा द्रव्यं स्यादित्यापत्तिस्तु सामान्ये सत्तावत्वबुद्धिविरोधिनीभवत्येव, सामान्ये गुणकर्मान्यत्वनिश्चयसत्वात् ।

एवं नित्यभिन्न मिदं यदि नित्यभिन्नत्वे सति कार्यद्रव्यं न स्यात्तदा द्रव्यं न स्यादित्यापत्तिरपि कार्यद्रव्यभेदवत्ताबुद्धिं विरोधिनी भवत्येव, इदन्त्वावच्छिन्ने नित्यान्यत्वरूपविशेषणवत्वनिश्चयात् ।

ननु एतादृशतर्को वन्हिसमवहित जन्यभिन्नत्वशंकानिवर्तकोऽस्तु न तु वन्हिजन्यभिन्नत्वशंकानिवर्त्तक इति एतादृशतर्कस्यधूमो यदि वन्हिव्यभिचारीस्यात्तदा-

वन्हिजन्यो न स्यादितियो व्याप्तिग्रहानुकूलस्तर्कः, तत्कारणीभूतोयोवन्हि-जन्यत्वनिश्चयः तत्प्रतिबन्धकीभूतोयोधूमेवन्हिजन्यत्वसंशयस्तदनिवर्तकत्वादिति चेन्न । प्रागुक्तवन्हिसमवहितजन्यत्वस्य वन्हिजन्यालोके सत्वात्, तत्र च वन्हि-जन्यत्वस्यापि सत्वात् । वन्हिजन्यतावच्छेदकत्वेन गृहीतं यद्वन्हिसमवहितजन्यत्वं धूमे तद्वत्ताज्ञानस्य "वन्हिसमवहितजन्यत्वं वन्हिजन्यतावच्छेदकं वन्हिसमवहित-जन्यत्ववान् धूम इत्याकारकस्य" धूमेवन्हिजन्यत्वशंकानिवर्तकत्वात् । तादृशव्यावर्तक-धर्मदर्शनसंपादक मूलकृदुक्ततर्कस्य धूमो यदि वन्हिव्यभिचारी स्यात् वन्हिजन्योन स्यादिति व्याप्तिग्रहोपयोगितर्कं प्रति उपयोगित्वान्न मूलोक्ततर्कस्य व्याप्तिग्रहा-नुपयोगित्वम् ।

अत्रकेचित—यथा धूमोवन्हिव्यभिचारी स्यात तदा वन्हिजन्योन स्यादिति तर्कोवन्हिव्यभिचारशंकानिवर्तकोभवति तथा धूमो यदि वन्हिव्यभिचारी स्यात्तदा स्वाधिकरणदेशावच्छेदेन वन्हिमत्स्वाव्यवहितपूर्वक्षणकोन स्यादितितर्कोपि व्यभि-चारसंशयनिवृत्ति द्वारा व्याप्तिग्रहोपयोगी भवति । तादृशतर्कं आपाद्यव्यतिरेकनिश्चय-विधया वन्हिसमवहितजन्यत्वस्य प्रागुक्तस्य निश्चयोहेतुः, तादृशनिश्चयप्रयोज्यतया मूलोक्ततर्कस्य व्याप्तिग्रहोपयोगित्वमिति वदन्ति ।

दीधितिकृतस्तु—मूलोक्तवन्हिसमवहितजन्यत्वपदस्य वन्हिजन्यत्वमेवार्थः । वन्ह्यसमवहिताजन्यत्वविशेषणं तु जन्यत्वाभावरूपं यदापाद्यं तत्प्रतियोगियज्जन्यत्वं, तत्रैव । तथा च धूमो यदि वन्हिजन्यो न स्यात्तदा वन्ह्यसमवहिताजन्यत्वे सति जन्यत्वे सति जन्यो न स्यात् इत्येव मूलोक्ततर्कः पर्यवसितः तथा च वन्हिजन्यभिन्नत्ववत्ता बुद्धिं प्रति वन्हिजन्यभिन्नत्वापादककापत्तित्वेन प्रतिबन्धकत्वात्, धूमो यदि वन्हि-व्यभिचारी स्यात्तदा वन्हिजन्यो न स्यादित्याकारकतर्कजनकीभूत धूमधर्मिकवन्हि-जन्यत्वनिश्चयविरोधिधूम धर्मिकवन्हिजन्यत्वशंकानिवर्तकत्वं मूलोक्ततर्कस्याऽक्षतमेव ।

अत्र वन्हिजन्यत्वाभावस्य वन्हिशून्यतादशायां वन्हिदेशोत्पन्नोयोघटस्तत्र सत्वात्, तत्र जन्यत्वाभावस्याऽसत्वाद्व्यभिचारोऽत आपाद्यप्रतियोगिनि वन्ह्यसम-वहिताऽजन्यत्वंविशेषणम् । तथा च वन्हिशून्यतादशायां वन्हिदेशोत्पन्नोयोघटस्तत्र प्रागुक्तवन्ह्यसमवहिताऽजन्यत्वस्य स्वाधिकरणदेशावच्छेदेन वन्ह्यभाववत्स्वाव्य-वहितपूर्वक्षणकान्यत्वरूपस्य विरहान्न व्यभिचारः ।

न च वन्हिशून्यतादशायां वन्हिदेशोत्पन्नोयोघटस्तत्र व्यभिचारवारणार्थं स्वाधिकरणदेशावच्छेदेन वन्हिमत्स्वाव्यवहितपूर्वक्षणकत्वरूपवन्हिसमवहितजन्य-त्वस्याऽऽपाद्यप्रतियोगिविशेषणत्वेनैव वारणसंभवादभावद्वयोपादानं व्यर्थमिति वाच्यम् । यत्र वन्ह्यधिकरणे वन्ह्यनधिकरणे च देशे एक एव दीर्घदण्ड उत्पन्नस्तत्र वन्हिजन्यत्वाभावसत्वात्, स्वाधिकरणदेशावच्छेदेन वन्हिमत्स्वाव्यवहितपूर्वक्षण-कत्वविशिष्टजन्यत्वाभावस्याऽसत्वाद् व्यभिचारोऽतोऽभावद्वयोपादानम् । तथा च तादृशदण्डस्याऽव्यवहितपूर्वक्षणे स्वाधिकरणदेशावच्छेदेन वन्ह्यभाववत्स्वाव्यवहित-पूर्वक्षणकत्वान्यत्वरूपवन्ह्यसमवहिताऽजन्यत्वं नेति तादृशविशेषणविशिष्टस्याभाव-स्तादृशदीर्घदण्डे वर्तते इति न व्यभिचारः ।

नन्वेवमपि नान्तरीयकवह्निके घटे व्यभिचारः, तादृशघटे निरुक्तवह्न्यसमवहितजन्यत्वस्य सत्त्वाद् वह्न्यजन्यतद्घटे वह्न्यसमवहिताऽजन्यत्वविशिष्टजन्यत्वस्याऽभावस्सत्त्वादिति चेन्न। जन्यत्वं हि स्वाधिकरणदेशावच्छेदेन कालिकसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववद् वह्नितत्संयोगेतरयावत्कारणाधिकरणकत्वरूपम्। तथा च यावत्सु वह्नितत्संयोगेतरतादृशघटकारणाधिकरणक्षणेषु कालिकसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववत्त्वाभावात्। "तादृशयावत्कारणान्तर्गतघटीयचरमकारणाधिकरणक्षणे कालिकसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववत्त्वाभावात्" यद्विलंबेन वह्नितत्संयोगोत्पत्तिक्षणे तत्पूर्वं वा तादृशघटादेरनुत्पादो, वह्नितत्संयोगकालीनस्य तादृशकारणस्यापि यावत्तादृशकारणान्तर्गतत्वात्, तादृशकारणाधिकरणक्षणे तादृशवह्न्यभावविरहादिति कालिकसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववद्वह्नितत्संयोगेतरयावत्कारणकत्वरूपजन्यत्वविरहेण। नान्तरीयकघटे न व्यभिचारः। अत्र यावत्वविशिष्टेषु वह्नितत्संयोगेतरस्वकारणेषु तादृशवह्न्यभावकालीनत्वं विशेषम्। तेन नान्तरीयकवह्निके घटादौ यावन्ति तादृशवह्न्यभावकालीनानि स्वकारणानि (यत्किंचित्कारणानि) तज्जन्यत्वस्याऽक्षतत्वेऽपि न व्यभिचारतादवस्थ्यमित्यन्यत्र विस्तरः।

तर्कश्च अनुमित्यौपयिकव्याप्तिनिश्चयप्रतिबन्धकीभूतव्यभिचारशंकायाः निवर्तकः। तत्र तत्र तर्ककारणीभूतस्याऽऽपादकनिष्ठाऽऽपाद्यव्याप्तिनिश्चयस्य विरोधिनी या व्यभिचारशंका तन्निवृत्त्यर्थमपि तर्कान्तरमुपेयमित्यनवस्थिततर्कधारास्वीकारप्रसंग इत्याशंकां निराकरोति। यत्रेति। "यत्साध्यहेत्वोः" व्याप्तिज्ञाने इत्यर्थः। विरोधित्वं सप्तम्यर्थः। तच्च शंकायामन्वेति। स्वत एवेति। शंकाजनकसामग्र्यभावादेवेत्यर्थः। शंका नावतरतीति। तर्कमूलव्याप्तिनिश्चयविरोधिव्यभिचारशंका नोदेतीत्यर्थः। प्रवृत्तिव्याघातेन शंकानवतारोऽपि बोध्यः। तत्रेति। तादृशव्याप्तिज्ञाने इत्यर्थः। न तर्कापेक्षापीति। तर्कं विनैव व्याप्तिनिश्चयसंभवादिति भावः। तथा च तत्रैवविच्छेदान्नानवस्थितिरिति ध्येयम्। तथा च यत्र व्यभिचारशंकासामान्याभावः तर्काभावातिरिक्तकारणाभावप्रयुक्तो "न तु तर्कप्रयुक्तः" तत्र न तर्कापेक्षा, यत्र व्यभिचारशंकायाः तर्काभावेतरसकलकारणसंपत्तिस्तत्र तर्कान्तराभ्युपगम आवश्यक इति समुदितार्थः। तदिति। तदेवेत्यर्थः। पूर्वोक्तमेवेतियावत्।

इदमिति। "तर्कः क्वचिच्छंकानिवर्तक" इति मूलोक्तमित्यर्थः। क्वचिदिति। यत्र तर्कमूलव्याप्तौ व्यभिचारशंका तत्रैवेत्यर्थः।

तर्कोद्विविधः—सत्तर्कोऽसत्तर्कश्च। दोषत्रयरहितः सत्तर्कः दोषत्रयान्यतमजुष्टोऽसत्तर्कः। दोषाश्च—इष्टापत्ति—व्यभिचार—"विपर्ययानुमाने तत्कोटिमात्राऽपर्यवसायित्वाः। ह्रदो यदि वह्न्यभाववान् स्यात् धूमाभाववान् स्यादित्यत्राऽऽद्यः। ह्रदो यदि निर्वह्निः स्यात् द्रव्यत्वाभाववान् स्यादित्यत्र द्वितीयः। धूमो यदि

मिति । यत्र स्वत एव शंका नावतरति तत्र न तर्कापेक्षापीति तदिदमुक्तं तर्कः क्वचिच्छङ्कानिवर्त्तक इति ॥ १३७ ॥

अतः वन्हिका अन्वयव्यतिरेक ज्ञान ही तादृश शंका का प्रतिबन्धक है और जहाँ स्व ही व्यभिचार शंका का अवतरण नहीं होता है वहाँ तर्क की अपेक्षा भी नहीं है । वही कहा है कि तर्क कहीं स्थलविशेष में ही व्यभिचार शंका का निवर्त्तक होता है ॥१३७॥

---

वन्हितच्छून्यजन्यान्यतरोन स्यात् जन्योन स्यादित्यत्रतृतीयः । ननु धूमो वन्हि-वन्हित्वशून्यान्यतरजन्यः जन्यत्वादित्ति विपर्ययानुमाने वन्हिजन्यत्वपर्यवसायित्वाभावः । तद्धर्मावच्छिन्नाभावापादककतर्कस्यैव तदवच्छिन्नशंकाविरोधित्वात् । न च मूलकुन्मतेपि कथं वन्हिजन्यत्वे पर्यवसानम्, अस्यापि तर्कस्य वन्ह्यसमवहितजन्यत्वत्वसाधारणरूपेण वन्हिजन्यत्वपर्यवसायित्वादिति वाच्यम् । वन्ह्यसमवहिताजन्यत्वस्य पक्षीभूते धूमेपि विशेषणत्वेन विशेषणवत्तानिश्चयकालीनविशिष्टाऽभावानुमिते विशेष्याभावमात्रविधेयकत्वात् । आपाद्यप्रतियोगिविशेषणत्वे तु न दोषः ।

ऊहत्वं तर्कस्य लक्षणम् । ऊहत्वं च मानसत्वव्याप्योजातिविशेषः, तर्कयामीत्यनुभवसिद्धः । धूमो यदि वन्हिव्यभिचारी स्यात् वन्हिजन्योन स्यादित्यनेन व्यभिचारशंकानिरासे निरंकुशेन व्याप्तिज्ञानेनाऽनुमितिरिति परंपरया तस्याऽनुमितौ उपयोगो बोध्यः प्रकारान्तरेण तर्कः पंचविधः । आत्माश्रयाऽन्योन्याश्रय-चक्रकाऽनवस्था-तदन्यबाधितार्थप्रसंगभेदात् ।

तत्र स्वस्य स्वापेक्षित्वनिबन्धनोऽनिष्टप्रसंगः आत्माश्रयः । स चोत्पत्तिस्थितिज्ञप्तिद्वारात्रिविधः । यथा—(१) यद्ययं घट एतद्घटजन्यः स्यात् एतद्घटानधिकरणक्षणोत्तरवर्त्ती न स्यात् । (२) यद्ययं घटः एतद्घटवृत्तिः स्यात्, एतद्घटव्याप्योन स्यात् । (३) यद्ययं घटः एतद्घटज्ञानाऽभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यात्, एतद्घटभिन्नः स्यादिति वा सर्वत्राऽऽपाद्यम् ।

तदपेक्ष्यापेक्षित्वनिबन्धनोऽनिष्टप्रसंगोऽन्योन्याश्रयः । सोपिपूर्ववत् त्रेधा । तदपेक्ष्यापक्ष्यापेक्षित्वनिबन्धनोऽनिष्टप्रसंगश्चक्रकम् । एवं चतुःकक्षादावपि चक्रकत्वान्नाधिक्यम् । अन्योन्याश्रय-चक्रकयोरात्माश्रयव्याप्यतया चक्रकस्याऽऽत्माश्रयाऽन्योन्याश्रयव्याप्यतया व्याप्यसत्वेव्यापकसत्वस्याऽवश्यकतया अन्योन्याश्रयसत्वे आत्माश्रयसत्वम्, चक्रकसत्वेद्वयोः सत्त्वम् ।

अव्यवस्थितपरंपरारोपाधीनाऽनिष्टप्रसंगोनवस्था । यथा जातिर्यदि जातिमती स्यात् द्रव्यगुणकर्मान्यतमत्ववती स्यात्, 'तादृशान्यतमत्वव्याप्या न स्यादिति वा । तदन्यबाधितार्थप्रसंगस्तु धूमोयदिवन्हिव्यभिचारीस्यात् वन्हिजन्योन स्यादित्यादिः । प्रथमोपस्थितपरत्वोत्सर्ग-विनिगमनाविरह-लाघव-गौरवादिकंतु न तर्कः–किन्तु प्रमाणसहकारित्वरूपसाधर्म्यात्तथा व्यवहार इति संक्षेपः ॥१३७॥

इतितर्कनिरूपणम् ।

साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा ।
स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥ १३८ ॥

इदानीं परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयति साध्यस्येति । साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वमुपाधित्वमित्यर्थः । ननु स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजन्यत्वं नोपाधिः स्यात्, तस्य साध्यव्यापकत्वाभावात्, श्यामत्वस्य घटादावपि सत्त्वात् ।

उपाधि का निरूपण करते हैं—'साध्यस्य' इस ग्रन्थ से—जो साध्यत्वेन अभिमत का व्यापक हो तथा साधनत्वेन अभिमत का अव्यापक हो उसे उपाधि कहते हैं ।

प्रश्न—साध्य का व्यापक और साधन का अव्यापक ऐसा उपाधि का लक्षण करने पर "सश्यामो मित्रातनयत्वात्" यहाँ पर शाकपाकजन्यत्व उपाधि नहीं बनेगी—क्योंकि शाकपाक-जन्यत्व उपाधि साध्य का व्यापक ही नहीं है कारण कि श्यामत्व ( साध्य ) घट में भी है और

---

इदानीमिति । व्याप्तिग्रहोपायनिरूपणानन्तरमित्यर्थः परकीयव्याप्तिग्रहप्रति-बन्धार्थमिति । यथा परप्रयुक्तहेतौ उपाध्युद्भावने उपाधिज्ञानाद्विजयः, तथास्वीयहेतौ व्याप्तिग्रहोपायसत्वे व्याप्तिनिश्चयाद्विजयः, विजयलक्षणैककार्यानुकूलत्वसंगतिर्बोध्या उपाधिंनिरूपयतीति । तथा च परकीयहेतौ व्याप्तिनिश्चयप्रतिबन्धाय उपाधिरुद्भाव्यः, स्वीयहेतौ व्याप्तिनिश्चयाय उपाधिर्निरस्यः तदुद्भावन-तन्निरासौ च नोपाधिज्ञानं विनेति तन्निरूपणमिति भावः । सत्यन्तदलानुपादाने वन्हिमान्धूमादित्यादौ पर्व-तत्वादावतिव्याप्तिः स्यात् । तन्मात्रोपादाने द्रव्यत्वादावतिव्याप्तिः स्यादतउभयो-पादानम् । साध्यत्वसाधनत्वे सोपाधिकहेतुस्थले वास्तविकतया न स्तः इत्यतोऽभि-मतपदम् । तदपि न लक्षणघटकम्, यत्र न तादृशाभिमानं तत्रत्योपाधावव्याप्तेः । तथा च योयदवच्छिन्नव्यापकत्वे सति यदवच्छिन्नाऽव्यापकः स तदवच्छिन्नसाध्यक तदवच्छिन्नहेतौ उपाधिरित्यर्थः । साधनावच्छिन्नसाध्यव्यापके-पक्षधर्मावच्छिन्नसाध्य-व्यापके चोपाधौ अव्याप्तिमाशंकते । नन्विति । सः-काकः । अत्र तच्छब्दस्य मित्रातनयपरत्वे ध्वंसोविनाशी जन्यत्वादित्यनेन पौनरुक्त्यापत्तेः । काकपरत्वे तु अत्रत्योपाधेः साधनावच्छिन्नसाध्यव्यापकत्वादग्रिमस्य साधनरूपपक्षधर्मा-वच्छिन्नसाधनाव्यापकत्त्वान्न पौनरुक्त्यम् इत्यत्र । हेतौ तस्य-शाकपाक जत्वस्य । साध्यव्यापकत्वाभावादिति । केवलसाध्यवन्निष्ठाभावाप्रतियोगित्वा-भावादित्यर्थः । एतदेवोपपादयति । श्यामत्वस्येति । श्यामत्वरूपसाध्यस्ये-त्यर्थः । घटादावपीति । आदिना, शाकपाकजेतरश्यामद्रव्यमात्रपरिग्रहः । ननु साधनावच्छिन्नसाध्यव्यापकत्वं विवक्षणीम्, तथा च मित्रातनयत्वविशिष्टश्या-

एवं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वं नोपाधिः स्यात्, प्रत्यक्षत्वस्यात्मादिषुसत्वात्तत्र च रूपाभावात् । एवं ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वं नोपाधिः स्यात्, विनाशित्वस्य प्रागभावेऽपि सत्त्वात्तत्र च भावत्वाभावात् इति चेन्न ।

यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थेतात्पर्यात् । मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वं, तदवच्छिन्नसाधनाव्यापकंच । एवं पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य

वहाँ शाकपाकजन्यत्व उपाधि नहीं है । एवं 'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्' यहाँ पर उद्भूतरूप उपाधि नहीं हो सकेगी—क्योंकि प्रत्यक्षत्व साध्य आत्मा वगैरह में भी है और वहाँ रूप नहीं है । एवं 'ध्वंसो विनाशी जन्यत्वात्' यहाँ पर भावत्व उपाधि नहीं हो सकेगी—क्योंकि विनाशित्व ( साध्य ) प्रागभाव में भी है और वहाँ भावत्व नहीं है ।

उत्तर—यद्धर्मविशिष्टसाध्य का उपाधि व्यापक हो तद्धर्मविशिष्ट साधन का अव्यापक होनी चाहिये । इस अर्थ में तात्पर्य है । 'स श्यामो मित्रातनयत्वात्' यहाँ पर शाकपाक जन्यत्व रूप उपाधि मित्रातनयत्वरूपयद्धर्मविशिष्टश्यामत्वरूप साध्य का व्यापक है—( क्योंकि शाकपाक जन्यश्याममित्रातनय में श्यामत्वरूप साध्य है, और शाकपाकजन्यत्वरूपउपाधि भी है ) और तद्धर्मविशिष्टमित्रातनयत्व रूपहेतु गौरमित्रा तनय में भी है वहाँ शाकपाकजन्यत्वरूप उपाधि नहीं है अतः साधन का अव्यापक यह उपाधि हुवी । एवं 'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् यहाँ पर वायु रूप पक्ष का धर्म जो वहिर्द्रव्यत्वरूप यद्धर्म विशिष्ट जो प्रत्यक्षत्व रूप साध्य उसका व्यापक उद्भूत रूप उपाधि है । [ क्योंकि वहिर्द्रव्यत्वविशिष्ट प्रत्यक्षत्व घट में है और वहाँ उद्भूत रूप उपाधि भी है ] और वहिर्द्रव्यत्वविशिष्ट प्रत्यक्षस्पर्शाश्रयत्वरूपहेतु वायु में है वहाँ उद्भूत रूप उक्त उपाधि नहीं है अतः उपाधि साधन का अव्यापक भी है ।

---

मरत्वव्यापकत्वस्य शाकपाकजन्यत्वरूपोपाधौ सत्वान्नोक्ताव्याप्तिरत आह । एवमिति । उद्भूतरूपवत्त्वमिति । अत्रोद्भूतेतिव्यर्थम्, रूपवत्त्वस्यैवसम्यक्त्वात् । तत्र चेति । आत्मनि चेत्यर्थः । रूपाभावादिति उद्भूतेरूपाभावादित्यर्थः । इदमुपलक्षणम्-हेतुभूतप्रत्यक्षस्पर्शाश्रयत्वविशिष्टप्रत्यक्षत्वाभावाच्चेत्यपि बोध्यम् ।

इत्यर्थे तात्पर्यादिति । साध्यस्य व्यापकोयस्तु इत्यादिमूलस्य उक्तार्थबोधेच्छया प्रयुक्तत्वादित्यर्थः । तथा च मूलस्थसाध्यपदस्य यद्धर्मावच्छिन्नसाध्यपरत्वात् साधनपदस्यापि यद्धर्मावच्छिन्नसाधनपरत्वादुक्तार्थलाभ इति भावः । न च साधन-पक्षधर्मावच्छिन्नसाध्यव्यापकयोर्नोपाधित्वम् । वक्ष्यमाणरीत्या उभयत्रैव व्यभिचारोन्नायकत्वासत्वात् । उक्तोपाधिषु अव्याप्तिंवारयति । मित्रात—

व्यापकमुद्भूतरूपवत्त्वम् वहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकं च। एवं ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकं भावत्वं बोध्यम्।

सद्धेतौ तु एतादृशोधर्मोनास्ति यदवच्छिन्नस्य साध्यस्य व्यापकं तदवच्छिन्नस्य साधनस्य चाव्यापकं किंचित् स्यात्। व्यभिचारिणि तु उपाध्यधिकरणं यत्साध्याधिकरणं यच्चोपाधिशून्यं साध्यव्यभिचारनिरूपकमधिकरणं तदन्यतरत्त्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेरन्ततः संभवति इति ॥१३८॥

एवं "ध्वंसो विनाशी जन्यत्वात्" यहाँ पर 'भावत्व' उपाधि जन्यत्वरूपयद्धर्म विशिष्ट विनाशित्वरूपसाध्य का व्यापक है। [क्योंकि घट में जन्यत्वरूप यद्धर्म विशिष्ट विनाशित्वरूपसाध्य है और उसमें भावत्व भी है] और जन्यत्व हेतु ध्वंस रूप पक्ष में भी है वहाँ भावत्व उपाधि नहीं है अतः साधन की अव्यापक है।

और सद्धेतु में कोई भी ऐसा धर्म नहीं है कि जो यद्धर्मविशिष्टसाध्य का व्यापक और तद्धर्म विशिष्ट साधन का अव्यापक होवे। व्यभिचारिस्थल (धूमवान् वन्हेः) में आर्द्रेन्धनसंयोगरूप उपाधि का अधिकरण जो धूमात्मक साध्य का अधिकरण महानस आदि है और जो उपाधिशून्य तथा साध्य के व्यभिचार का अधिकरण अयोगोलक है—उस महानस-अयोगोलकान्यतरत्व को यद्धर्म पद से लेकर उस अन्यतरत्व विशिष्ट साध्य का व्यापक तथा तादृशान्यतरत्वविशिष्ट साधन का अव्यापक को उपाधि आखीर में कहना होगा। [जैसे 'धूमवान् वन्हे' यहाँ उपाधि का अधिकरण जो धूमात्मक साध्याधिकरण हुआ महानस और आर्द्रेन्धनसंयोगात्मक उपाधि से शून्य तथा साध्य व्यभिचाराधिकरण जो अयोगोलक-इन दोनों में अन्यतरान्तर्गत जो हुवा महानस उस महानसनिष्ठ अन्यतरत्वावच्छिन्न साध्य के महानस-पर्वत आदि अधिकरणों में रहने के नाते उपाधि साध्य की व्यापक हुवी-और अन्यतरान्तर्गत अयोगोलकनिष्ठ अन्यतरत्वावच्छिन्न साधन अयोगोलक में है और वहाँ आर्द्रेन्धनसंयोग उपाधि नहीं है-अतः उपाधि साधन की अव्यापक हुवी ॥१३८॥

---

वच्छिन्नेति। जन्यत्वावच्छिन्नेति। साधनावच्छिन्नेत्यर्थः। अत्र यद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाऽव्यापकत्वमात्रोक्तौ वन्हिमान् धूमादित्यादौ महानसीयेतरवन्हिरुपाधिः स्यात्, पर्वतत्वविशिष्टवन्हिव्यापकत्वस्य महानसीयेतरवन्हौ सत्वात्, अतस्तद्धर्मावच्छिन्नत्वं साधने विशेषणम्। तथा च सद्धेतुमात्रे न दोष इत्याशयेनाह। सद्धेतौ तु इति। व्यभिचारिणि तु इति। व्यभिचारिमात्रे इत्यर्थः। तदन्यतरत्वावच्छिन्नस्येति। महानसाऽयोगोलकान्यतरत्वविशिष्टस्ये त्यर्थः। साध्यस्येति। धूमस्येत्यर्थः। तादृशान्यतरत्वविशिष्टस्येत्यादिः। साधनस्य। वन्हेः। उपाधेः। आर्द्रेन्धनसंयोगस्य। अन्ततः। तादृशधर्मान्तराऽस्फूर्तौ। उपाधेः। उपाधिसामान्यस्य।

सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः ।
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥१३९॥
व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम् ॥

अतएव लक्ष्यमप्युपाधिस्वरूपमेतदनुसारेण दर्शयति—सर्व इत्यादिना । स्वसाध्येति । स्वमुपाधिः । स्वं च साध्यं च स्वसाध्ये तयोर्व्यभिचारितेत्यर्थः ॥१३९॥

सभी उपाधियाँ ( साध्य व्यापक होने के नाते ) साध्यसमानाधिकरण होती हैं । और जिन उपाधियों का हेतु के किसी एक आश्रय ( अयोगोल ) में व्यभिचारित्व तथा साध्य ( धूम ) का व्यभिचारित्व अवश्य ही होता है अर्थात् 'धूमवान्वन्हेः' में जैसे ( वन्हि ) के अधिकरण अयोगोलक में न आर्द्रेन्धनसंयोग उपाधि ही है, और न धूम साध्य ही है ॥१३९॥

उपाधि को दूषकता का कारण बतलाते हैं—व्यभिचारस्येति । उपाधिव्यभिचाररूप हेतु के द्वारा हेतु में साध्य के व्यभिचार का अनुमान हो जाना यही उपाधि का प्रयोजन है ।

---

अत्रेदं बोध्यम् । वायुः प्रत्यक्षः द्रव्यत्वादित्यत्र उद्भूतरूपात्मकोपाधौ अव्याप्तिः स्यात्, प्रत्यक्षत्वरूपसाध्याधिकरणमात्मा, उद्भूतरूपशून्यं साध्यव्यभिचाराधिकरणं गगनं, एतदन्यतरत्वविशिष्टप्रत्यक्षत्वव्यापकत्वाभावात् अत उपाध्यधिकरणमिति । उद्भूतरूपाधिकरणपरमाण्वाकाशान्यतरत्वावच्छिन्नसाध्याऽप्रसिद्धयाऽव्याप्तितादवस्थ्यमत साध्याधिकरणमिति । उद्भूतरूपाधिकरणं यत्प्रत्यक्षत्वाधिकरणं घटादि तद्वृत्तिद्रव्यत्वावच्छिन्नसाध्यव्यापकत्वाभावात्तद्दोषतादवस्थ्यमतो यच्चोपाधिशून्यं साध्यव्यभिचारनिरूपकाधिकरणमिति । तत्रापि साध्यव्यभिचाराधिकरणपरमाणुघटान्यतरत्वावच्छिन्नद्रव्यत्वात्मकसाधनव्यापकत्वात्तद्दोषतादवस्थ्यमत उपाधिशून्यमिति । उपाध्यधिकरणं साध्याधिकरणं घटः उपाधिशून्यं आत्मा तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वाभावात्तद्दोषतादवस्थ्यमतः साध्यव्यभिचारनिरूपकाधिकरणमिति ।

अतएवेति । एतादृशोपाधिलक्षणस्य मूलकृदभिमतत्वादेवेत्यर्थः । लक्ष्यमपीति । एतदनुसारेण उपाधिस्वरूपं लक्ष्यमपि दर्शयतीति योजना मूले सर्वे इति । ते सर्वे साध्यसमानाधिकरणाउपाधय इति योजना । भवन्तीतिशेषः । ते के इत्याकांक्षायामाह । हेतोरिति । धूमादिसाध्यकवन्ह्यादिहेतोरित्यर्थः । निष्ठत्वं षष्ठ्यर्थः । एकाश्रये इति । एकस्मिन्नाश्रये इत्यर्थः । एकाश्रयावच्छेदेनेत्यर्थः । येषां । उपाधीनां । तथाचाऽयोगोलकावच्छेदेन वन्हौ आर्द्रेन्धनसंयोगात्मकोपाधेः धूमस्य च व्यभिचारिताऽस्तीति आर्द्रेन्धनसंयोगः उपाधिरिति भावः । वायुः

उपाधे र्दूषकताबीजमाह-व्यभिचारस्येति । उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः । तथाहि-यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनैवोपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा धूमवान् वन्हे रित्यत्र वन्हिर्धूमव्यभिचारी तद्व्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादिति व्यापकव्यभिचारिणोव्याप्यव्यभिचारावश्यकत्वात् ।

यत्र तु किञ्चिद्धर्मावच्छिन्नसाध्यस्य व्यापक उपाधिस्तत्र तद्धर्मवति उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा स श्यामो मित्रातनयत्वात् इत्यादौ मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभि-

तथाहि—जहाँ शुद्ध साध्य का व्यापक उपाधि है वहाँ शुद्ध उपाधिव्यभिचारूप हेतु से ही साध्य के व्यभिचार का अनुमान होता है। जैसे—'धूमवान् वन्हेः' यहाँ पर वन्हिर्धूमव्यभिचारी धूमव्यापक आर्द्रेन्धनसंयोगव्यभिचारित्वात् अर्थात् वन्हि (हेतु) धूम (साध्य) का व्यभिचारी है धूम का व्यापक जो आर्द्रेन्धनसंयोग उसका व्यभिचारी होने से) जो व्यापक का व्यभिचारी होता है वह व्याप्य का व्यभिचारी अवश्य होता है अर्थात् जब कि हेतु साध्य का व्यापक जो उपाधि उसका व्यभिचारी है तब वह उपाधि का व्याप्य जो साध्य उसका व्यभिचारी अवश्य होगा।

और जहाँ पर किञ्चिद्धर्मावच्छिन्न (यत्किञ्चिद्धर्म से विशिष्ट) साध्य व्यापक उपाधि होती है वहाँ पर यत्किञ्चित् धर्मवन् (मित्रातनय) में उपाधिव्यभिचार से अर्थात् उपाधिव्यभिचाररूप हेतु के द्वारा साध्य के व्यभिचार का अनुमान (पहिले वास्तविक हेतु में) होता है।

---

प्रत्यक्षः द्रव्यत्वादित्यत्र द्रव्यत्वहेतोः आत्मनि आत्मभिन्नत्वव्यभिचारित्वात्, आकाशाद्यन्तर्भावेण साध्यव्यभिचारित्वाच्च, साध्यसमानाधिकरणस्वात्यन्ताऽत्म-भिन्नत्वस्य लक्षणावच्छेदकाक्रान्ततया तद्व्य च पक्षधर्मावच्छिन्नसाधनाऽव्यापकत्व-घटितलक्षणाभावादव्याप्तिशंकानिराकरणार्थं पक्षाश्रये इति । तथा च द्रव्यत्वहेतोरे-काश्रये उभय "साध्योपाधि" व्यभिचारित्वाभावान्न तस्य लक्ष्यत्वमिति भावः । १३९

मित्रातनयेशाकपाकजत्वव्यभिचारित्वादिति । शाकपाकजत्वाभाववन्मि-त्रातनयवृत्तित्वादित्यर्थः । इदमुपलक्षणम् । प्रत्यक्षस्पर्शाश्रयत्वं भत्यक्षत्वव्यभिचारि उद्भूतरूपाभाववद्धहिर्द्रव्यवृत्तित्वात् । जन्यत्वं जन्यत्वविशिष्टविनाशित्वव्यभिचारि भावत्वाभाववद् जन्य ध्वंस वृत्तित्वादित्यपि बोध्यम् । अथ पक्षेतरत्वे "पक्षेतरत्वे" भावत्वाभाववद्-ऽतिव्याप्तिः, निश्चितसाध्यवतः "महानसादेः" पक्षेतरत्वात्, साधनीभूतधूमादेः पक्षेपि सत्वेन तत्र पक्षेतरत्वविरहादित्यत आह । बाधानुन्नीतपक्षेतरस्त्विति । तुशब्दोवधारणे-बाधानुन्नीतपक्षेतरत्वमेवेत्यर्थः । बाधेन प्रकृतसाध्याभाववत्वेन अनुन्नीतः अनिर्णीतायः पक्षः तदितरत्वमेवेत्यर्थः । अस्य नोपाधिरित्यनेनाऽन्वयः । उपाधि-

**चारित्वादिति । बाधानुन्नीतपक्षेतरस्तु साध्यव्यापकताग्राहकप्रमाणाऽभावात् स्वव्याघातकत्वाच्च नोपाधिः । बाधोन्नीतस्तूपाधिर्भवत्येव । यथा वन्हिरनुष्णः कृतकत्वादित्यादौ प्रत्यक्षेण वन्हेरुष्णत्वग्रहे वन्हीतरत्वमुपाधिः ।**

जैसे "स श्यामो मित्रातनयत्वात्" यहाँ पर मित्रातनयत्व रूप यद्धर्म से विशिष्ट जो साध्य (श्यामत्व) उसका व्यापक शाकपाकजन्यत्व उपाधि है अतः शाकपाकजन्यत्वरूप उपाधि के व्यभिचाररूपहेतु के द्वारा मित्रातनयत्वरूप हेतु में साध्यव्यभिचारानुमान हो जाता है, कि "मित्रातनयत्वं श्यामत्वव्यभिचारी मित्रातनये शाकपाकजन्यत्वव्यभिचारित्वात्" अर्थात् मित्रातनयत्व (गौरमित्रातनय में) श्यामत्व का व्यभिचारी है (गौर वर्ण वाले) मित्रातनय में शाकपाकजत्व का व्यभिचारी होने से ।

जिस पर्वत आदि पक्ष में पक्षनिष्ठसाध्याभाववत्त्वरूपबाध अनिश्चित हो वहाँ पक्षेतरत्व (पर्वतेतरत्व) उपाधि इसलिये नहीं मानी गयी है कि उस (पक्षेतरत्व) उपाधि में सर्वप्रथम तो साध्य की व्यापकता का ग्राहक कोई प्रमाण ही नहीं है । दूसरी बात यह है कि सब सद्धेतुमात्र में पक्षेतरत्व उपाधि लग जाने से अनुमान का उच्छेद हो जायगा इसलिये उपाधि को वहाँ (पर्वतोवन्हिमान्धूमात्) इत्यादिसद्धेतुस्थल में दूषक ही नहीं माना जायगा-ऐसी परिस्थिति में उपाधि अपना ही व्याघातक बन जायगी-अर्थात् उपाधिव्यभिचार से साध्यव्यभिचारानुमान नहीं हो सकेगा । यही मूल में कहा है कि "स्वव्याघातकत्वाच्च" इति ।

और जिस पक्ष में साध्याभाववत्त्वरूपबाध का निश्चय होता है वहाँ पक्षेतरत्व उपाधि होती ही है । जैसे—"वन्हिरनुष्णः कृतकत्वात्" यहाँ पर वन्हि (पक्ष) में अनुष्णत्वरूप साध्य के अभावस्वरूप उष्णत्व रूप साध्य के बाध का ग्रह (निश्चय) प्रत्यक्ष से हो जाने से

---

त्वाभावे हेतुमाह । **साध्यव्यापकताग्राहकप्रमाणाभावादिति** । पक्षेतरत्वं साध्यव्यापकमिति योग्रहः तज्जनकसामग्र्यभावादित्यर्थः । पक्षे साध्याभावनिश्चयस्यैव पक्षेतरत्वे साध्यव्यापकतानिर्णायकतया तदभावादिति भावः । **स्वव्याघातकत्वाच्चेति** । उपाधिमात्रस्य दूषकत्वव्याघातकत्वादित्यर्थः । पक्षेतरत्वस्योपाधित्वे सर्वत्रानुमाने पक्षेतरत्वोपाधेः संभवात् अनुमानमात्रोच्छेदापत्त्या व्यभिचारानुमानाधीनस्योपाधेर्दूषकत्वस्याऽसंभवादिति भावः । **नोपाधिरिति** । तथा च पक्षेतरत्वे नातिव्याप्तिरिति भावः । **बाधोन्नीतपक्षेतरस्तु** इति । बाधेन प्रकृतसाध्याभाववत्त्वेन उन्नीतः निर्णीतः निश्चयविशेष्यभूत इति यावत् । एवं भूतोयः पक्षस्तदितरत्वं तु इत्यर्थः । "बाधोन्नीत" पक्षेतरत्वस्योपाधित्वं दर्शयति । **तथेति** । **इत्यादौ** । इत्यादिन्यायस्थलीयहेतौ । अस्य वन्हीतरत्वमित्यनेनाऽन्वयः । प्रत्यक्षेण संयुक्तसमवायसन्निकर्षसहितेन त्वचा । **वन्हावुष्णत्वग्रहे** इति । अनुष्णत्वाभाववान् वह्निरिति बाधनिश्चये सतीत्यर्थः ।

यस्य तूपाधेः साध्यव्यापकता संदिह्यते स संदिग्धोपाधिः पक्षेतरस्तु संदिग्धोपाधिरपि नोद्भावनीयः, कथकसंप्रदायानुरोधादिति ।

केचित्तु सत्प्रतिपक्षोत्थापनमुपाधिफलम् । तथाहि-अयोगोलकं धूमवद् वन्हेरित्यादावयोगोलकं धूमाभाववदार्द्रेन्धनसंयोगाभावादिति सत्प्रतिपक्षसंभवात् । इत्थं च साधनव्यापकोऽपि क्वचिदुपाधिः । यथा

पक्ष जो वन्हि तदितरत्व अर्थात् वन्हीतरत्व उपाधि बन जाती है । और जहाँ पर उपाधि में साध्य की व्यापकता का सन्देह हो वह संदिग्धोपाधि मानी गयी है । पक्षेतरत्व को संदिग्धोपाधि भी भाष्यकार ( कथक ) के संप्रदाय के अनुरोध से नहीं माना जा सकता है ।

कोई लोग सत्प्रतिपक्ष के उत्थापन को ही उपाधि का फल कहते हैं । तथाहि—अयोगोलकं धूमवद्वन्हेः" यहाँ पर "धूमव्याप्यवन्हिमदयोगोलम्" इस परामर्शकाल में "धूमाभावव्याप्य "आर्द्रेन्धनसंयोगाभाववदयोगोलकम्" इस विरोधी परामर्श के उपस्थित हो जाने से "अयोगोलकं धूमाभाववत् आर्द्रेन्धनसंयोगाभावात्" यह सत्प्रतिपक्ष संभव है । इस मत में अर्थात् सत्प्रतिपक्षोत्थापन उपाधि का फल है जिस मत में उनके यहाँ साधन का व्यापक भी

---

उपाधिरिति । वन्हीतरत्वे उक्तसाधनिश्चयबलात्साध्यव्यापकत्वनिश्चयादिति भावः ।

उपाधिर्द्विविधः । निश्चितः सन्दिग्धश्च । साध्यव्यापकत्वेन साधनाऽव्यापकत्वेन च निश्चितः व्यभिचारनिश्चयाधायक. निश्चितोपाधिः । यथा धूमवान्वन्हेरित्यत्राऽऽर्द्रेन्धनसंयोगः । सन्दिग्धोपाधि लक्षयति । यस्येति । यादृशस्येत्यर्थः । वस्तुतः उपाधित्वविशिष्टस्येति यावत् । साध्यव्यापकतेति । साधनाऽव्यापकत्वेति च बोध्यम् । सन्दिग्धोपाधिरिति । तथा च यत्र साधनाऽव्यापकत्वसंशयः, साध्यव्यापकत्वसंशयो तदुभयसंशयो वा तत्र सन्दिग्धोपाधिः । मित्रातनयत्वेन श्यामत्वे साध्ये शाकपाकजन्यत्वम् । कथकेति । प्राचीनभाष्यकारादीत्यर्थः ।

उपाधिः स्वव्यतिरेकेण साध्याभावसाधकतया दूषणम् । पक्षेतरत्वव्यतिरेकश्च न साध्याभावसाधकः तस्य पक्षमात्रवृत्तित्वेन सपक्षविपक्षव्यावृत्तत्वरूपाऽसाधारण्यात् । न च हेतौ उपाधिव्यभिचारेण साध्यव्यभिचारानुमापकतया उपाधित्वात् । उपाधिव्यभिचारितया साध्यव्यभिचारित्वं दोषः तत्र च नाऽसाधारण्यमिति वाच्यम् । तुल्ययुक्त्या उपाधिः साध्यव्यापकत्वाभाववान् साध्यव्याप्यहेत्वव्यापकत्वादित्यपि अनुमेयम् । न च हेतुज्ञानं कथं जातमिति वाच्यम् । हेतौ उपाधिहि अनुमेयम् । यथा साध्यस्य व्यभिचारित्वे ज्ञायमाने उपाधावपि हेत्वव्यापकत्वज्ञानस्यावश्यकत्वात् । यथा साध्यस्य व्यभिचारित्वे ज्ञायमाने उपाधावपि हेत्वव्यापकत्वज्ञानस्यावश्यकत्वात् । तथा हेतावपि साध्यव्याप्यउपाधिव्याप्यताग्राहकव्यभिचाराऽदर्शन-सहचारदर्शने स्तः-तथा हेतावपि साध्यव्याप्यताग्राहके स्तः, न हि तदानीं हेतौ साध्यव्यभिचारज्ञानमप्यस्ति, स्फुटे व्यभिचारे उपाध्युपन्यासस्य वैयर्थ्यात् । तस्माद्यथा साध्यव्याप्येन हेतुना साध्यमनुमेयं तथा साध्य

करका पृथिवी कठिनसंयोगवत्त्वादित्यादावनुष्णाशीतस्पर्शवत्त्वम् । नचात्र स्वरूपासिद्धिरेव दूषणमिति वाच्यम् । सर्वत्रोपाधेर्दूषणान्तरसांकर्यात् । अत्र च साध्यव्यापकः पक्षावृत्तिरुपाधिरित्याहुः ।

इत्युपाधिनिरूपणम् ।

कहीं उपाधि मानी गयी है । जैसे "करका पृथिवी कठिनसंयोगवत्त्वात्" यहाँ पर अनुष्णाशीत-स्पर्शवत्त्व उपाधि कठिनसंयोगवत्त्वरूप हेतु का व्यापक है क्योंकि जहाँ भी पृथिवी ( घटपट आदि ) में अनुष्णाशीतस्पर्शवत्त्व है वहाँ कठिन संयोग हेतु भी है ।

प्रश्न—"करका पृथिवी कठिनसंयोगवत्त्वात्" यहाँ पर करका के पिघल जाने के बाद न उसमें कठिनसंयोगवत्त्वरूप हेतु ही है, और न उसमें पृथिवीत्व साध्य ही है, अतः हेतु के न रहने प्रयुक्तस्वरूपासिद्धि है और साध्य के न रहने प्रयुक्त बाध है, तब फिर इन्हीं स्वरूपा-सिद्धि तथा बाध दोष से हेतु में दुष्टत्व व्यवहार बन जायेगा, साधन के व्यापक अनुष्णाशीत-स्पर्शवत्त्व को उपाधि क्यों मानना—इसी अभिप्राय से कहते हैं कि—न चात्र स्वरूपासिद्धिरेव दूषणम्" इत्यादि ।

उत्तर—सर्वत्र व्यभिचारि स्थल में उपाधि का दूषणान्तरों के साथ सांकर्य होता ही है । विशेषता इतनी ही है कि जो लोग सत्प्रतिपक्षोत्थापन ही उपाधि का फल मानते हैं उनके मत में साध्य का व्यापक पक्षावृत्ति उपाधि मानी गयी है अर्थात् 'साध्यव्यापकत्वे सति पक्षावृत्तित्व' यही उनके मत में उपाधि का लक्षण है ।

---

व्यापकोपाध्यभावेन साध्याभावोऽनुमेय इति सत्प्रतिपक्षएव दूषकताबीजमिति वदत मतमुपन्यस्यति । **केचित्त्विति** । **आर्द्रेन्धनाभावादिति** । धूमव्यापकेत्यादिः सत्प्रतिपक्षोत्थापकतया उपाधेर्दूषकत्वपक्षे हेतौ उपाधिव्यभिचारित्वज्ञानस्याऽनपेक्षि तत्वेन तुल्यवित्तिवेद्यतया उपाधौ साधनाव्यापकत्वज्ञानस्याप्यनावश्यकत्वमित्याशये नाह । **इत्थं चेति** । सत्प्रतिपक्षोत्थापकत्वमात्रेण दूषकत्वे इत्यर्थः । **साधनव्य पकोपीति** । अपिना साधनाऽव्यापकः समुच्चीयते । तथा च यथा साध्यव्यापक साधनाऽव्यापक उपाधिस्तथा साध्यव्यापकः साधनव्यापकश्चोपाधिरिति भावः द्वितीयमुपाधिमुदाहरति । **यथेति** । **अनुष्णाशीतस्पर्शवत्वमिति** । उपाधिरि पूर्वेणाऽन्वयः । अस्य पक्षाऽवृत्तित्वात्साध्याभावानुमापकत्वं बोध्यम् । तथा च साध्य व्यापकत्वे सति पक्षावृत्तिरपि उपाधिः । अनुपदमेवक्ष्यतिअत्रचेति । शंकते । **नचेति** अत्र । कठिनसंयोगवत्वहेतौ । दूषणान्तरसांकर्यादिति । तथा च "उपधेयसंकरेऽपि उपाधेरसङ्करादिति न्यायेन एकस्मिन् नानादोषसंकरेबाधकाभावात् । वदन्ती त्यस्वरसः, तद्बीजं तु सत्प्रतिपक्षे यथा सत्प्रतिपक्षान्तरं न स्वीक्रियते एकेनापि भूयसां प्रतिबन्धात् सत्प्रतिपक्षबाहुल्यस्याऽप्रयोजकत्वात्, तथा सत्प्रतिपक्षे-उपाध्युद्भावनमपि न स्यात्, भवन्मते उपाधिमुद्भाव्य सत्प्रतिपक्षान्तरस्यैव

शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते ॥१४०॥

शब्दोपमानयोरिति । वैशेषिकाणां मते प्रत्यक्षमनुमानं च प्रमाणम् । शब्दोपमानयोस्तु अनुमानविधयैव प्रामाण्यम् । तथाहि–दण्डेन गामानये-

शब्दोपमानयोरिति ।

वैशेषिक लोगों के मत में प्रत्यक्ष और अनुमान दो ही प्रमाण हैं । शब्द तथा उपमान को अनुमान के द्वारा ही प्रामाण्य है, जैसे कि "दण्डेन गामानय" इत्यादि लौकिक पद, एवं "यजेत" इत्यादि वैदिकवाक्य अभ्रान्तवक्ता के तात्पर्य के विषयीभूत जो शक्ति-लक्षणान्यतरवृत्तिरूपसम्बन्धद्वारा पदों से स्मारित ( उपस्थापित ) दण्ड-करणत्व-गो-कर्मत्व-

---

स्वीकरणीयत्वात् तस्य चाऽप्रयोजकत्वादिति । किं च वन्हिरनुष्णः कृतकत्वादित्यत्र वन्हीतरत्वं नोपाधिः स्यात्, साध्याभावसाधने तद्व्यतिरेकस्याऽसाधारणत्वादिति ।

ननुउपाधेर्व्यभिचारोन्नायकतयादूषकत्वं दूषितंप्राक्, इदानीं सत्प्रतिपक्षो-न्नायकतयापि दूषकत्वं दूषितंभवता तदा कथमुपाधिर्दोष इति चेन्न । साध्यव्याप्यत्व साध्यव्यापकाव्याप्यत्वयोः साध्यव्यापकत्व–साध्यव्याप्याऽव्यापकत्वयोःश्रव्याप्ति-ग्राहकसाम्ये विरोधान्नव्याप्तिनिश्चयः, किंतुउभयत्रव्यभिचारसंशयः तथा च व्यभिचार-शंकाधायकत्वेनोपाधेर्दूषकत्वंबोध्यम् । तदुक्तमिति आचार्यैरितिशेषः । उपाधेरेव व्यभिचारशंकेति । एवकारोव्यभिचारशंकेत्युत्तरं योजनीयः । उपाधे र्व्यभिचार शंकैवेत्यर्थः ।

इत्युपाधिनिरूपणम्

मूले–शब्दोपमानयोरिति । अत्र यद्यपि उपमानशब्दयोरित्येववक्तुमुचितम्, तथापि स्वेच्छैवात्र मूलं प्रतिभाति । अनुमानविधयैवेति । अनुमितिकरणत्वेनैवे-त्यर्थः । प्रमाणमिति । प्रमाकरणत्वमित्यर्थः । तथा च शब्दोऽनुमानम्, पदार्थ-संसर्गस्याऽनुमानादेव सिद्धेरितिभावः । अनुमानप्रकारमाह । तथा हि इत्यादिना । दण्डेन गामभ्याजेति । लौकिकपदानीति । लौकिकवाक्यानीत्यर्थः विधिवाक्य-स्यैव प्रमाण्याभिप्रायेणाह यजेतेत्यादीति । पक्षता च वाक्यविशेषत्वेन न तु लौकिक-वैदिकत्वादिनेत्यवधेयम् । स्मारितः वृत्तिज्ञानाधीनोपस्थितिविषयीभूतः । एवंभूतयोः पदार्थस्तस्य यस्तात्पर्यविषयः संसर्गः, तस्य या प्रमा तत्पूर्वकत्वं साध्यम् । संसर्गस्य बहुविधत्वेनाऽनभिमतसंसर्गस्यसिद्ध्याऽर्थान्तरवारणाय तात्पर्यविषयेतिसंसर्गविशे-षणम् । तस्य तात्पर्याऽविषयत्वाद्वारणम् । आमार्थे पदार्थान्तरसंसर्गप्रमापूर्वकत्व-सिद्ध्याऽर्थान्तरवारणाय स्मारितेति पदार्थविशेषणम्-आकांक्षादीति । आकांक्षा-योग्यताऽऽसत्तिमत्पदकदंबत्वादित्यर्थः । अनुमितौ च प्रमाऽवच्छेदकतयासंसर्गसिद्धिः । ननु उक्तानुमानेन पदार्थसंसर्गप्रमापूर्वकत्वसिद्धावपि न पदार्थसंसर्गसिद्धिः पदार्थ-

स्यादिलौकिकपदानि, यजेतेत्यादिवैदिकपदानि वा तात्पर्यविषयस्मारितपदार्थ-संसर्गप्रमापूर्वकाणि आकांक्षादिमत्पदकदम्बत्वात् घटमानयेत्यादिपदकदम्बवत्।

यद्वा एते पदार्थाः परस्परं संसर्गवन्तः योग्यतादिमत्पदोपस्थापित-त्वात्, तादृशपदार्थवत्। दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरिति। एवं

आनयन-कृति-रूप पदार्थों का परस्पर सम्बन्ध, तथा 'यजेत' यहाँपर-याग-इष्टसाधनत्व-कृति-साध्यत्व, बलवदनिष्टाननुबन्धित्वरूप पदार्थों का पारस्परिकसम्बन्ध, उस सम्बन्ध के यथार्थज्ञान-पूर्वक हैं, क्योंकि आकांक्षा-योग्यता आदि वाला पदों का समुदाय होने से "घटमानय" इस पदसमुदाय की तरह। अथवा 'दण्डेन गामानय' यहाँ पर दण्ड-करणत्व-गौ आदि पदार्थ परस्पर सम्बन्धवाले हैं क्योंकि योग्यता आदि वाले पदों के द्वारा उपस्थापित होने से, 'घटमानय' इस वाक्य से बोध्य घट-कर्मत्व आदि पदार्थों की तरह।

प्रश्न—"घटमानय" इस दृष्टान्त में 'मिथः संसर्गवत्व' रूप साध्य की सिद्धि (निश्चय) कैसे आपको हुवी।

---

संसर्गप्रमा हि उक्तानुमितेर्विषयः, न तु पदार्थसंसर्गोपि इतिचेन्न। ज्ञानज्ञानस्य तद्विषयविषयकत्वनियमात्। अस्यार्थस्तु ज्ञानस्ययद्ज्ञानं तस्य, ज्ञानगोचरज्ञानस्ये-त्यर्थः। तस्य योविषयः स एव विषयो यस्य तत् तद्विषयविषयकं तस्य भावोयद्विषय-विषयकत्वं तन्नियमादित्यर्थः तद्विषयेत्यत्र प्रथमज्ञानं तच्छब्दार्थः। विषयोयस्येति यच्छब्देन द्वितीयज्ञानं परामृश्यते। तथा च प्रकृते संसर्गप्रमा प्रथमं ज्ञानं तद्विषयिणी प्रकृतानुमिति द्वितीयं ज्ञानम् एवं च प्रथमज्ञानविषयः संसर्गः द्वितीयज्ञानस्यापि विषय इति प्रकृतानुमित्यैव संसर्गसिद्धिरिति भावः। न चोक्तनियमे एव मानाभावः। अनुव्यवसायादौ तथा दर्शनात्।

अथैवं भ्रान्तिज्ञानस्यापि भ्रमविषयभूताऽसद्वैशिष्ट्यावगाहितया भ्रमत्व-प्रसंगः। न चेष्टापत्तिः। ईश्वरस्यापि भ्रान्तत्वापत्तेः। इदं रजतमिति भ्रान्तिमत इव शुक्तौरजतज्ञानवानयमिति ज्ञानवतोपि प्रवृत्त्यापत्तेः। न च विशेषदर्शनादिना तत्र शुक्तौ नाऽसद्वैशिष्ट्यभानमिति वाच्यम्। तथापि उक्तनियमे व्यभिचारस्य दुर्वारत्वा-दिति चेन्न। न हि असद्विषयकत्वेनज्ञानस्य भ्रमत्वम्, अनभ्युपगमात्, भ्रमविषया-णांशुक्त्यादीनां पारमार्थिकत्वाच्च। किन्तु व्यधिकरणप्रकारताकत्वेन भ्रमत्वम्। न हि भ्रमस्य ज्ञाने व्यधिकरणप्रकारताकत्वमस्ति रजतत्वप्रकारकत्वस्य भ्रमे सत्वात्। एवं च रजतत्वप्रकारताकत्वप्रकारकं भ्रमस्य ज्ञानं न भ्रमः तस्य रजत्वप्रकारतानिरूप-कत्वाभावात्, भ्रान्तेस्तु रजतत्वं प्रकारः तच्च व्यधिकरणमिति तस्य भ्रमत्वमिति ध्येयम्।

पदपक्षकानुमानमुक्त्वा पदार्थपक्षकानुमानमाह यद्वेतिएते पदार्थाइति। पद-ज्ञानानन्तरं वृत्त्या पदजन्यपदार्थस्मरणे सतीत्यादिः। परस्परमिति। इदं चोदासीन-पदार्थसंसर्गवारणाय। अथ दृष्टान्तेपि कथं साध्यसिद्धिरित्यत आह। दृष्टान्ते

गवयव्यक्तिप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम्, असति 'वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्। असति वृत्त्यन्तरे वृद्धैर्यत्र यत् प्रयुज्यते तत्र तत् तत्प्रवृत्तिनिमित्तकम्, यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम्।

उत्तर—'घटमानय' इस दूसरे दृष्टान्त के द्वारा। [ इससे शब्द का अनुमान में अन्तर्भाव कर दिया। ]

( इसी प्रकार अब उपमान का अनुमान में अन्तर्भाव करते हैं ) "एवं गवयव्यक्ति-के प्रत्यक्ष होने के अनन्तर यह अनुमान होता है कि-"गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् असति वृत्त्यन्तरे वृद्धैस्तत्रप्रयुज्यमानत्वात्" अर्थात् गवयपदरूपपद गवयत्वप्रवृत्तिनिमित्तक है ( गवयपदका शक्यतावच्छेदक गवयत्व है-प्रवृत्तिनिमित्त नाम शक्यतावच्छेदक का है, इसी का स्पष्ट अर्थ है कि गवयपद की गवयरूप अर्थ में शक्ति है, क्योंकि गवयपद की जब कि गवयरूप अर्थ में शक्ति है तो गवयरूप अर्थ गवयपद का शक्य ( शक्त्याश्रय ) हुआ, और शक्यतावच्छेदक हुवा गवयत्व ) इसमें हेतु देते हैं कि-"असति वृत्त्यन्तरे" इत्यादि, अर्थात् लक्षणावृत्ति के न होने पर भी वृद्ध लोग गवयपद का गवयरूप अर्थ में ही प्रयोग करते हैं। यह नियम है कि लक्षणारूप वृत्त्यन्तर के न होने पर वृद्ध लोग जिस अर्थ में जिस पद का प्रयोग करते हैं वह अर्थ उस पद की शक्ति का आश्रय होता है और उस अर्थ में रहने वाला असाधारणधर्म प्रवृत्तिनिमित्त होता है, जैसे गोपद का प्रवृत्तिनिमित्त गोत्व होता है।

---

पीति। दृष्टान्तान्तरेणेति। अनुमानान्तरेणेत्यर्थः। एवं तत्र तत्रापि। न चाऽन-वस्था। अनादित्वात्।

भूतले घट इति वाक्यप्रयोगकालेभूतले घटास्तित्वं प्रत्यक्षेणैव यथावगतं तत्र निरुक्तहेतुमति तत्र भूतलास्तित्वविशिष्टघटे दृष्टान्तान्तरापेक्षां विना साध्यस्य प्रत्यक्षेणैव सिद्धिसंभवात्तदृष्टान्तेनाऽन्यवाक्यस्थलेपि तत्तदर्थेषु पूर्वोक्तलिंगेन साध्या-नुमितिसंभवान्न तदर्थे शब्दस्य पृथक् प्रामाण्यमावश्यकमिति भावः।

इदानीमुपमानस्याऽनुमानान्तर्गतत्वमुपपादयति। एवमिति। गवयत्व-प्रवृत्तिनिमित्तकमिति। गवयत्वं प्रवृत्तिनिमित्तं यस्य तत्, तस्य भावस्तत्त्वम्। प्रवृत्तिनिमित्तलक्षणं तु वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वम्। गवयत्वावच्छिन्ने शक्तमितितदर्थः। असतिवृत्त्यन्तरे इति। तत्तद्धर्मावच्छिन्न-लाक्षणिकत्वमहविशेष्यत्वाभाववत्त्वेसतीत्यर्थः। वृद्धैः-आप्तैः तत्र-गवयत्वावच्छिन्ने। प्रयुज्यमानत्वादिति। गवयकर्दमस्य प्रक्षालनाभिप्रायेण प्रयुक्ते गवयं प्रक्षालयेति वाक्ये लाक्षणिकगवयपदे गवयत्वप्रवृत्तिनिमित्तकत्वविरहेण व्यभिचारवारणाय असतिवृत्त्यन्तरे इति। गवयपदं मृगे शक्तमिति शक्तिभ्रमवता पुरुषेण प्रयुक्ते गवयपदे व्यभिचारवारणाय वृद्धैरिति। वृद्धत्व स्वप्रयुक्तवाक्यार्थयथार्थज्ञानवत्।

**यद्वा गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वात् इत्यनुमानेन पक्षधर्मताबलाद् गवयत्वप्रवृत्तिनिमित्तकत्वं सिद्धयति ॥१४०॥**

अथवा "गवयपद सप्रवृत्तिनिमित्तक है ( अर्थात् गवयपद का कोई प्रवृत्तिनिमित्त अवश्य है ) साधुपद होने से" इस अनुमान के द्वारा पक्षधर्मता ( इतरबाधनिश्चय ) की सहायता से गवयपद में गवयत्वप्रवृत्तिनिमित्तकत्व सिद्ध हो जाता है। ( अभिप्राय यह है कि गवयपद का प्रवृत्तिनिमित्त कोई अवश्य है यह तो निर्विवादविषय है, अब रहा कि वह है कौन गवयपद का प्रवृत्तिनिमित्त, सो घटत्व-पटत्व आदि तो गवयपद के प्रवृत्तिनिमित्त हो नहीं सकते हैं कारण कि घटत्व-पटत्व आदि घट-पट आदि पदों के ही प्रवृत्तिनिमित्त हो सकते हैं अतः गवयपद का प्रवृत्तिनिमित्त गवयत्व को ही मानना होगा। )

---

भ्रमरहित इति यावत्। अथ विशेषणासिद्धिः, शक्तिज्ञानविरहे वृत्त्यन्तरं विना प्रयोगस्य ज्ञातुमशक्यत्वादिति चेन्न। वृत्त्यन्तरस्यानुपपत्तिगम्यत्वात्तदभावेतदभावस्य निश्चयाद्विशेषणासिद्धेरभावात्। गोसदृशो गवय इत्याप्तवाक्यात् सादृश्यविशिष्टे गवयशब्दवाच्यत्वोपगमाद् गवयत्वविशिष्टे गवयपदप्रयोगोऽसिद्ध इति विशेष्यासिद्धिर्नाशंकनीया—गवयत्वोपस्थितौ तस्य जातित्वेनाखण्डत्वात् गोसादृश्यस्य उपाधित्वेन गुरुत्वात्, अप्रतीतगूनां वनेचराणामप्रयोगापत्तेश्च गवयत्वप्रवृत्तिनिमित्तकत्वस्य निश्चयादिति। सामान्यव्याप्तिमाह **असतीति**। अत्रायं क्रमः—गवयपदेऽव्युत्पन्नं नागरिकं प्रति आरण्यकेन गोसदृशोगवय इति प्रयुक्ते वनं गतस्य गवयपिण्डं प्रत्यक्षयतो नागरिकस्याऽतिदेशवाक्यं स्मरतोऽनुमानं भवतीति।

गवयपदं गवयत्वप्रवृत्तिनिमित्तकं गवयत्वेतराऽप्रवृत्तिनिमित्तकत्वे सतिसप्रवृत्तिनिमित्तकत्वादित्यनुमानेन गवयत्वप्रवृत्तिनिमित्तकत्वं साधनीयम्, तत्रेतराऽप्रवृत्तिनिमित्तकत्वे वादिनामविवाद एव। गोत्वादेर्गवयाऽवृत्तित्वात्, द्रव्यत्वादेरतिप्रसक्तत्वात्, सादृश्यस्य गुरुत्वाच्चेति मन्तव्यम्। तत्र विशेष्यासिद्धिनिरासायाऽऽह। **यद्वेति**। **सप्रवृत्तिनिमित्तकमिति**। किंचिद्धर्मावच्छिन्ने शक्तमित्यर्थः। **साधुपदत्वादिति**। साधुत्वं च शक्तिभ्रमानधीनशाब्दबोधजनकत्वम्। व्याकरणनिष्पादित्वमित्यपि केचित्। **पक्षधर्मताबलादिति**। इतरबाधनिश्चयसहकृतादित्यादिः।

न च गवयपदे गवयत्वावच्छिन्नशक्तत्वानुमितावपि गवयेगवयपदवाच्यत्वाऽसिद्धेः, तदर्थमुपमानस्य पृथक् प्रामाण्यं स्वीकार्यमिति वाच्यम्। गवयप्रत्यक्षानन्तरं गवयो गवयपदवाच्यः गवयपदनिरूपितलक्ष्यत्वाभाववत्त्वे सति तत्पदनिरूपितशक्तिज्ञानजन्योपस्थितिविशेष्यत्वात्। योऽर्थः यत्पदनिरूपितलक्ष्यत्वाभाववत्त्वे सति यत्पदनिरूपितशक्तिज्ञानजन्योपस्थितिविशेष्यतावान् सोऽर्थः तत्पदवाच्योभवतियथा गौरित्यनुमानात् गवयेगवयपदवाच्यत्वानुमितेः संभवात्। एवं गवयो गवयपदवाच्यः असति वृत्यन्तरे गवयशब्दप्रयोगविषयत्वादित्यनुमानादपीति ॥१४०॥

**गवयव्यक्तिप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्। असति वृत्त्यन्तरे वृद्धैर्यत्र यत् प्रयुज्यते तत्र तत् तत्प्रवृत्तिनिमित्तकम्, यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम्।**

उत्तर—'घटमानय' इस दूसरे दृष्टान्त के द्वारा। [ इससे शब्द का अनुमान में अन्तर्भाव कर दिया। ]

( इसी प्रकार अब उपमान का अनुमान में अन्तर्भाव करते हैं ) "एवं गवयव्यक्ति-के प्रत्यक्ष होने के अनन्तर यह अनुमान होता है कि—"गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् असति वृत्त्यन्तरे वृद्धैस्तत्रप्रयुज्यमानत्वात्" अर्थात् गवयशब्दपद गवयत्वप्रवृत्तिनिमित्तक है ( गवयपदका शक्यतावच्छेदक गवयत्व है—प्रवृत्तिनिमित्त नाम शक्यतावच्छेदक का है, इसी का स्पष्ट अर्थ है कि गवयपद की गवयरूप अर्थ में शक्ति है, क्योंकि गवयपद की जब कि गवयरूप अर्थ में शक्ति है तो गवयरूप अर्थ गवयपद का शक्य ( शक्त्याश्रय ) हुवा, और शक्यतावच्छेदक हुवा गवयत्व ) इसमें हेतु देते हैं कि—"असति वृत्यन्तरे" इत्यादि, अर्थात् लक्षणावृत्ति के न होने पर भी वृद्ध लोग गवयपद का गवयरूप अर्थ में ही प्रयोग करते हैं। यह नियम है कि लक्षणारूप वृत्त्यन्तर के न होने पर वृद्ध लोग जिस अर्थ में जिस पद का प्रयोग करते हैं वह अर्थ उस पद की शक्ति का आश्रय होता है और उस अर्थ में रहने वाला असाधारणधर्म प्रवृत्तिनिमित्त होता है, जैसे गोपद का प्रवृत्तिनिमित्त गोत्व होता है।

---

पीति। **दृष्टान्तान्तरेणे ति**। अनुमानान्तरेणेत्यर्थः। एवं तत्र तत्रापि। न चाऽनवस्था। अनादित्वात्।

भूतले घट इति वाक्यप्रयोगकालेभूतले घटास्तित्वं प्रत्यक्षतो यत्रावगतं तत्र निरुक्तहेतुमति तत्र भूतलास्तित्वविशिष्टघटे दृष्टान्तान्तरापेक्षां विना साध्यस्य प्रात्यक्षिकसिद्धिसंभवात्तद्दृष्टान्तेनाऽन्यवाक्यस्थलेपि तत्तदर्थेषु पूर्वोक्तलिंगेन साध्यानुमितिसंभवाच्च न तदर्थं शब्दस्य पृथक् प्रामाण्यमावश्यकमिति प्रमाकृतः।

इदानीमुपमानस्याऽनुमानान्तर्गतत्वमुपपादयति। **एवमिति**। **गवयत्वप्रवृत्तिनिमित्तकमिति**। गवयत्वं प्रवृत्तिनिमित्तं यस्य तत्, तस्य भावस्तत्त्वम्। प्रवृत्तिनिमित्तलक्षणं तु वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वम्। गवयत्वावच्छिन्ने शक्तमितितदर्थः। **असतिवृत्त्यन्तरे इति**। तत्तद्धर्मावच्छिन्नलाक्षणिकत्वग्रहविशेष्यत्वाभाववत्वेसतीत्यर्थः। **वृद्धैः**—आप्तैः तत्र गवयत्वावच्छिन्ने। **प्रयुज्यमानत्वादिति**। गवयकर्दमस्य प्रक्षालनाभिप्रायेण प्रयुक्ते गवयं प्रक्षालयेति वाक्ये लाक्षणिकगवयपदे गवयत्वप्रवृत्तिनिमित्तकत्वविरहेण व्यभिचारवारणाय **असतिवृत्त्यन्तरे इति**। गवयपदं मृगे शक्तमिति शक्तिभ्रमवता पुरुषेण प्रयुक्त गवयपदे व्यभिचारवारणाय **वृद्धैरिति**। वृद्धश्च स्वप्रयुक्तवाक्यार्थयथार्थज्ञानवान्।

यद्वा गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वात् इत्यनुमानेन पक्षधर्मताबलाद् गवयत्वप्रवृत्तिनिमित्तकत्वं सिद्धयति ॥१४०।

अथवा "गवयपद सप्रवृत्तिनिमित्तक है ( अर्थात् गवयपद का कोई प्रवृत्तिनिमित्त अवश्य है ) साधुपद होने से" इस अनुमान के द्वारा पक्षधर्मता ( इतरबाधनिश्चय ) की सहायता से गवयपद में गवयत्वप्रवृत्तिनिमित्तकत्व सिद्ध हो जाता है। ( अभिप्राय यह है कि गवयपद का प्रवृत्तिनिमित्त कोई अवश्य है यह तो निर्विवादविषय है, अब रहा कि वह है कौन गवयपद का प्रवृत्तिनिमित्त, सो घटत्व-पटत्व आदि तो गवयपद के प्रवृत्तिनिमित्त हो नहीं सकते हैं कारण कि घटत्व-पटत्व आदि घट-पट आदि पदों के ही प्रवृत्तिनिमित्त हो सकते हैं अतः गवयपद का प्रवृत्तिनिमित्त गवयत्व को ही मानना होगा। )

---

भ्रमरहित इति यावत्। अथ विशेषणासिद्धिः, शक्तिज्ञानविरहे वृत्त्यन्तरं विना प्रयोगस्य ज्ञातुमशक्यत्वादिति चेन्न। वृत्त्यन्तरस्यानुपपत्तिगम्यत्वात्तदभावेतदभानस्य निश्चयाद्विशेषणासिद्धेरभावात्। गोसदृशो गवय इत्याप्तवाक्यात् सादृश्यविशिष्टे गवयशब्दवाच्यत्वोपगमाद् गवयत्वविशिष्टे गवयपदप्रयोगोऽसिद्ध इति विशेष्यासिद्धिर्नाशंकनीया—गवयत्वोपस्थितौ तस्य जातित्वेनाखण्डत्वात् गोसादृश्यस्य उपाधित्वेन गुरुत्वात्, अप्रतीवगूनां वनेचराणामप्रयोगापत्तेश्च गवयत्वप्रवृत्तिनिमित्तकत्वस्य निश्चयादिति। सामान्यव्याप्तिमाह अप्रतीति। अत्रायं क्रमः—गवयपदेऽव्युत्पन्नं नागरिकं प्रति आरण्यकेन गोसदृशोगवय इति प्रयुक्ते वनं गतस्य गवयपिण्डं प्रत्यक्षयतो नागरिकस्याऽतिदेशवाक्यं स्मरतोऽनुमानं भवतीति।

गवयपदं गवयत्वप्रवृत्तिनिमित्तकं गवयत्वेतराऽप्रवृत्तिनिमित्तकत्वे सतिसप्रवृत्तिनिमत्तकत्वादित्यनुमानेन गवयत्वप्रवृत्तिनिमित्तकत्वं साधनीयम्, तत्रेतराऽप्रवृत्तिनिमित्तकत्वे वादिनामविवाद एव। गोत्वादेर्गवयाऽवृत्तित्वात्, द्रव्यत्वादेरतिप्रसक्तत्वात्, सादृश्यस्य गुरुत्वाच्चेति मन्तव्यम्। तत्र विशेष्यासिद्धिनिरासायाऽऽह। यद्वेति। सप्रवृत्तिनिमित्तकमिति। किंचिद्धर्मावच्छिन्ने शक्तमित्यर्थः। साधुपदत्वादिति। साधुत्वं च शक्तिप्रमानधीनशाब्दबोधजनकत्वम्। व्याकरणनिष्पादित्वमित्यपि केचित्। पक्षधर्मताबलादिति। इतरबाधनिश्चयसहकृतादित्यादिः।

न च गवयपदे गवयत्वावच्छिन्नशक्तत्वानुमितावपि गवयेगवयपदवाच्यत्वाऽसिद्धेः, तदर्थमुपमानस्य पृथक् प्रामाण्यं स्वीकार्यमिति वाच्यम्। गवयप्रत्यक्षानन्तरं गवयो गवयपदवाच्यः गवयपदनिरूपितलक्ष्यत्वाभाववत्वे सति तत्पदनिरूपितशक्तिज्ञानजन्योपस्थितिविशेष्यत्वात्। योर्थः यत्पदनिरूपितलक्ष्यत्वाभाववत्वे सति यत्पदनिरूपितशक्तिज्ञानजन्योपस्थितिविशेष्यतावान् सोर्थः तत्पदवाच्योभवति-यथा गौरित्यनुमानात् गवयेगवयपदवाच्यत्वानुमितेः संभवात्। एवं गवयो गवयपदवाच्यः असति वृत्यन्तरे गवयशब्दप्रयोगविषयत्वादित्यनुमानादपीति ॥१४०॥

अनुमानगतार्थत्वादिति वैशेषिकं मतम् ।
तन्न सम्यग्विना व्याप्तिबोधं शाब्दादिबोधतः ॥१४१॥

तन्मतं दूषयति—तन्नसम्यगिति । व्याप्तिज्ञानं विनापि शाब्दबोधस्यानुभवसिद्धत्वात् । नहिसर्वत्रशब्दश्रवणानन्तरं व्याप्तिज्ञाने प्रमाणमस्तीति ।

नैयायिक लोग वैशेषिकमत का खण्डन करते हैं—'तन्न सम्यक्' व्याप्तिज्ञान के बिना भी शाब्दबोध अनुभवसिद्ध है । क्योंकि सर्वत्र शब्द को सुनने के बाद ही व्याप्ति ज्ञान होता है

---

मूले—अनुमानगतार्थत्वादिति । अनुमानेऽन्तर्भावादित्यर्थः । अत्र प्रत्यक्षानुमानान्यतरत्वं प्रमाणत्वव्यापकं न वा । प्रत्यक्षानुमित्यन्यतरत्वं प्रमात्वव्यापकं नवेति विप्रतिपत्तिर्बोध्या ।

तन्मतमिति । वैशेषिकमतमित्यर्थः । दूषयतीति । पदार्थपक्षकानुमानं दूषयतीत्यर्थः । व्याप्तिबोधं विनापीति । आकांक्षादिमत्पदस्मारितत्वं परस्परसंसर्गव्याप्यमिति व्याप्तिज्ञानविरहकालेऽपीत्यर्थः । इदमुपलक्षणम् । पदस्मारितत्वाभाववती गौरिति पक्षधर्मताभावनिश्चयदशायामित्यपि बोध्यम् । तथा च तदानीं परामर्शानुत्पादेन तदानीमुत्पन्नस्याऽन्वयबोधस्यानुमितित्वं दुर्घटमिति भावः । शाब्दबोधस्यानुभवसिद्धत्वादिति । पदस्मारितत्वाभावसहकालेपि घटमानयेति वाक्यात् घटकर्मकऽऽनयनानुकूलकृतिमानिति शाब्दबोधस्यानुभवसिद्धत्वात् उक्तपरामर्शासंभवेन कुतोऽनुमानेऽन्तर्भाव इति भावः । ननु शाब्दबोधे पदजन्यपदार्थोपस्थितिज्ञानमेव हेतुरिति पदजन्यस्मृतिविषयत्वरूपस्य पदस्मारितत्वस्याऽज्ञानदशायां शाब्दबोध एव न जायते इति चेन्न । पदजन्यपदार्थोपस्थितिः स्वरूपसती एव कारणम्, न तु ज्ञाता, प्रमाणाभावात्, अनुमितौ तु व्याप्यत्वनिश्चयस्यैव कारणत्वात् । पदैःस्मारितस्यापि पदजन्यपदार्थस्मृतत्वग्रहात् शाब्दबोधप्रसंगाच्च तथा च व्यतिरेकव्यभिचारादन्वयव्यभिचाराच्च व्याप्तिज्ञानं न शाब्दबोधहेतुरिति तत्वम् । अत्रेदमवधातव्यम् । एते पदार्थाः संसर्गवन्तः आकांक्षायोग्यतादिमत्पदस्मारितत्वादित्यत्र संसर्गवत्वं साध्यम्, तच्च नियमतः संसर्गवत्वम्, संसर्गस्वरूपयोग्यत्वं वा । आद्ये पयसा सिञ्चतीत्यादौ अनैकान्त्यः, पयस्त्वावच्छिन्ने सेचनकरणत्वस्याऽनियतत्वात् । सर्वासु पयोव्यक्तिषु सेचनकरणत्वाभावात् । तथा च येनैव पयसा न सेकः तत्रैव व्यभिचार इति भावः । द्वितीये न संसर्गनिश्चयः, संसर्गनिश्चयाभावे च प्रवृत्त्यनुपपत्तिः, तद्विषयकप्रवृत्तिं प्रति तन्निश्चयस्य हेतुत्वात् । अथ च योग्यता अन्वयप्रयोजकत्वरूपा "अन्वयः संसर्गः तत्प्रयोजकं पयस्त्वादिकं तद्वत्त्वम्" । तस्याः हेतुविशेषणत्वे सिद्धसाधनात् । हेतुतावच्छेदकरूपेण हेतुनिश्चयस्य पूर्वमपेक्षितत्वात् हेतुतावच्छेदककोटिप्रविष्टयोग्यतायाघटकतयैव अन्वयरूप

संसर्गसिद्धेः। बाधविरहरूपयोग्यताया निवेशे न सिद्धसाधनमिति तु न युक्तम्। परैस्तदनंगीकारात्। तादृशयोग्यतायाः पदार्थनिष्ठत्वेन पदधर्मत्वाभावेन तन्निवेशस्य कर्तुमशक्यत्वाच्च। अन्वयप्रयोजकरूपवत्त्वस्य तु पयस्त्वादेः पदवाच्यतया पदधर्मत्वात्। किं च बाधनिश्चयाभावेनान्यथासिद्धस्यबाधविरहरूपयोग्यतानिश्चयस्यानावश्यकत्वात्। तादृशयोग्यताया हेतुविशेषणत्वासंभवात्। एवमाकांक्षायाः स्वरूपसत्त्या एव हेतुताया तस्याः हेतुविशेषणत्वानुपपत्तिः, अनुमितौहेतुविशेषणनिश्चयस्यावश्यकत्वात्। एवं व्यापकतावच्छेदकरूपेणैवानुमितेर्व्यापकविषयत्वात्। विशेषसंसर्गासिद्धिः। तदभावे च प्रवृत्त्यनुपपत्तिः, विशेषरूपेण निश्चयस्यैव प्रवृत्तिहेतुत्वात्। तया च शाब्दबोधानन्तरं प्रवृत्तेरानुभविकतया तदुपपत्तये विशेषसंसर्गबोधकः शब्दः प्रमाणान्तरम्। एवं घटादन्य इत्यादौ भेदो घटप्रतियोगिताकः इति रीत्या पक्षविधयाऽन्यत्वस्य भानेपि अन्यत्वेनाऽन्यस्यानुमितौ भानाऽसंभवात्तदुपपत्त्यर्थं शब्दस्य प्रमाणान्तरत्वमित्यपि बोध्यम्।

एतानि पदानि तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकांक्षायोग्यताऽऽसत्तिमत्पदकदंबत्वात् घटमानयेति पदकदंबवत् इति पदपक्षकानुमानं परमवशिष्यते। तत्र नाऽऽकांक्षाया हेतुत्वसंभवः, आकांक्षा हि स्वरूपसती कारणम्, अनुमितौ च हेतुनिश्चयस्याऽऽवश्यकत्वात्। समभिव्याहृतपदस्मारितपदार्थजिज्ञासाया एवाऽऽकांक्षात्वात। तथाचैतादृशाऽऽकांक्षासत्वे तद्ज्ञानाभावेपि शाब्दबुद्धेरानुभविकतया तदुपपत्तये शब्दस्य प्रमाणान्तरत्वमावश्यकम्। यदि तु अजिज्ञासोरपि अन्वयबोधोभवतीत्युच्यते तदा जिज्ञासायोग्यत्वं विवक्षणीयमिति शब्दमणौ व्यक्तम्, इयंचाऽऽकांक्षा प्राचामनुमता नवीनमते तु समभिव्याहार एवाऽऽकांक्षा, सा च ज्ञातैवोपयुज्यते इति नोक्तदोषावकाशसंभवः। परन्तु परानुमतामेवाऽऽकांक्षामनुसृत्येदं दूषणम्। अथाऽऽकांक्षा यदि स्वरूपसती हेतुः तदा योग्यताऽऽसत्तिमत्पदकदंबत्वमेव हेतुरस्तु तयोर्द्वयोरपि निश्चितयोरेव शाब्दबोधहेतुत्वात्। न च योग्यतासंशयादपि शाब्दबोधस्यानुभविकतया तन्निश्चयोपि नावश्यक इति वाच्यम्। यतोबाधविरहस्य योग्यतात्वे एव तथा, बाधसंशयस्याऽप्रतिबन्धकतया बाधाभावसंशयेपि शाब्दबोधोत्पत्तेः। अन्वयप्रयोजकरूपवत्त्वस्य योग्यतात्वे तु न तथा, अन्वयप्रयोजकरूपसंशये शाब्दबोधानुत्पत्तेरिति चेन्न। अयमेति पुत्रोराज्ञः पुरुषोपसार्यतामित्यत्र "राज्ञः पुत्रेण सहान्वये" निराकांक्षयोः राजपुरुषपदयोर्व्यभिचारात्। एतेन हेतौ आकांक्षानिवेशप्रयोजनमपि सूचितम्। एवं वन्हिनासिञ्चतीत्यादौ संसर्गबोधापत्तिः, योग्यताभ्रमे तु भवत्येव बोधः। आसत्त्यनिवेशे गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ अन्वयबोधापत्ति र्बोध्या।

इदमुपलक्षणम् अर्थज्ञानमेव प्रवर्तकं, न तु तद्विषयकज्ञानज्ञानम्, गौरवात्, इदं रजतमित्यादिज्ञानात्प्रवृत्तिदर्शनेन व्यभिचाराच्च। यद्यपि रजतविषयकज्ञानज्ञानमपि रजतविषयकं तथापि तस्य रजतत्वप्रकारताकत्वं नास्ति। प्रवर्तकज्ञानं तु तथाविधमेव। अन्यथा भ्रान्तस्येव भ्रान्तिज्ञस्यापि प्रवृत्त्यापत्तेः। एवं अनुमिते-

**किंच सर्वत्रशाब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोधएव किं न स्वीक्रियतामिति ध्येयम् ॥१४१॥**

इसमें कोई प्रमाण नहीं है। दूसरी बात यह है कि सर्वत्र शाब्दबोधस्थल में (वैशेषिकलोग) यदि व्याप्तिज्ञान की कल्पना करके ही शाब्दबोध का अनुमिति में अन्तर्भाव करते हैं तब सर्वत्र अनुमितिस्थल में पदज्ञान की कल्पना करके अनुमिति का ही शाब्दबोध में अन्तर्भाव करके अनुमितिस्थल में शाब्दबोध ही क्यों न मान लिया जाय ॥१४१॥

---

व्यापकतावच्छेदकप्रकारकत्वनियमात् स्मारितपदार्थसंसर्गपूर्वकत्वसिद्धावपि रजतप्रमापूर्वकत्वमसिद्धमेव। न च तन्मात्रात् रजतार्थिनः प्रवृत्तिः। अतः प्रवृत्त्युपयोगिज्ञाननिर्वाहार्थं शब्दस्य प्रमाणान्तरत्वं स्वीकार्यम्।

वस्तुतो वाक्यार्थबोधस्याऽनुमितित्वे सत्येव आकांक्षादिमत्पदसमूहत्वलिंगकत्वं कल्प्यम्, परन्तु अनुमितित्वमेवा सिद्धम्, प्रमाणाभावात् शाब्दबोधोऽनुमितिः लिंगजत्वादित्यनुमानं तु स्वरूपासिद्धम्। न चाऽस्तित्वेन गामनुमिनोमीत्यनुव्यवसाय एव तत्र मानमिति वाच्यम्। अस्तित्वेन गामनुमिनोमीत्यनुव्यवसायाभावात्। प्रत्युताऽस्तित्वेन गौश्रुतोनत्वनुमित इत्येवानुभवात्। तादृशानुव्यवसायानंगीकारे वन्ह्याद्यनुमितिः वन्ह्यादिपदज्ञानजन्या अनुमितित्वादित्यनुमानेन पदजन्यत्वं प्रसाध्य अनुमितिः शाब्दबोधः पदजन्यत्वादित्यनुमानेन शाब्दत्वसिद्धौ अनुमानस्यैव प्रमाणान्तरत्वं भज्येते त्याशयवानाह। नहीति शब्दश्रवणानन्तरं सर्वत्रेति योजना। व्याप्तिज्ञाने प्रमाणमिति। व्याप्तिज्ञानकल्पकप्रमाणमित्यर्थः। ननु अनुमितिरूपकार्यान्यथानुपपत्तिरेव मानमिति चेत्तदाह। किंचेति। कल्प्यते इति। अनुमित्यात्मककार्यान्यथानुपपत्त्या इत्यादिः। स्वीक्रियता मिति। तस्मादेकेनाऽपरस्यापलापाऽसंभवात् शब्दस्यापि पृथक् प्रामाण्यमावश्यकमिति भावः।

न चाऽनुमितिः न शाब्दबोधः समानविषयकप्रत्यक्षसामग्र्यभावजन्यत्वादित्यनुमानेनानुमितौ शाब्दान्यत्वं साधनीयमिति वाच्यम्। शाब्दबोधोनानुमितिः समानविषयकप्रत्यक्षसामग्र्यभावजन्यत्वादित्यनुमानेनानुमित्यन्यत्वसाधने बाधकाभावात्। न च तथापि-अनुमितेः पदजन्यत्वं प्रसाध्यान्वयबोधत्वस्वीकारो न युज्यते, शाब्दबोधे आकांक्षाद्यवगमस्य हेतुत्वात्, वन्ह्याद्यनुमितौ तु पूर्वमाकांक्षाज्ञानाऽसंभवात्कथंमन्वयबोधत्वमिति वाच्यम्। घटादिपदैरर्थस्य घटादेः स्मरणे सति तदीयव्याप्तेरिव वन्ह्याद्यर्थैः वन्ह्यादिपदस्य स्मरणोत्तरं तत्राऽऽकांक्षावगमस्य सुवचत्वादित्यास्तां विस्तरः।

एवं गवयपदं गवयत्वप्रवृत्तिनिमित्तकमित्यनुमितावपि साध्याप्रसिद्धिः, पूर्वं गवयत्वस्यानुपस्थितत्वात्। व्याप्त्यप्रतिसन्धानेपि गवयत्वाश्रयो गवयपदवाच्य इति बुद्धेरनुभवसिद्धत्वाच्च।

त्रैविध्यमनुमानस्य केवलान्वयिभेदतः।
द्वैविध्यं तु भवेद् व्याप्तेरन्वयव्यतिरेकतः॥१४२॥

त्रैविध्यमिति। अनुमानं हि त्रिविधं-केवलान्वयि-केवलव्यतिरेकि-

अनुमान तीन प्रकार का है। केवलान्वयी-केवलव्यतिरेकी-अन्वय-व्यतिरेकिभेद से।

---

गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेनापि "गोत्वादिकं च तत्रनप्रवृत्तिनिमित्तमितिज्ञानकालेपि" गवयत्वप्रवृत्तिनिमित्तकत्वं न सिद्ध्यति। व्यापकतावच्छेदकरूपेणैवानुमितेर्व्यापकविषयत्वात्। तथा च गवयत्वप्रवृत्तिनिमित्तकत्वसाधनार्थं मानान्तरमावश्यकम्। एवं च विशिष्य गवयत्वंप्रवृत्तिनिमित्तकत्वमुपमान फलम्।

ननु गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यादेव शक्तिधीरस्तु गवयत्वविशिष्टोधर्मी गवयपदवाच्यो गोसदृशत्वादित्यनुमानाद्वा अस्तु इति चेत् अतिदेशवाक्यात् गोसदृशत्वं गवयपदशक्यतावच्छेदकं स्यात्, तच्चायुक्तम्, संभवति लघौ धर्मे गुरुधर्मस्यावच्छेदकत्वानभ्युपगमात्। अनुमानेन तु गवयत्वविशिष्टो-गोसदृश इति पक्षधर्मताबलाद् गवयत्वस्य शक्यतावच्छेदकत्व लाभः। व्यतिरेकेण गवादिर्दृष्टान्तः। तथा च गवये गवयपदस्य शक्तिग्रहः शब्दादनुमानाद्वा न भवितुमर्हति। गवयत्वस्य तेन पुंसाऽगृहीतत्वात्, न हि अगृहीतधर्मस्यावच्छेदकतया भानं संभवति विशेषणज्ञानस्य विशिष्टबुद्धौ हेतुत्वात्। तथा च नातिदेशवाक्याच्छक्तिग्रहसंभवः। यदा च गवयत्वं प्रत्यक्षं तदापि नातिदेशवाक्यात् गवयत्वविशिष्टे शक्तिग्रहसंभवः। अतिदेशवाक्यतोगवयत्वविशिष्टे गवयपदवाच्यत्वाप्रतीतेः। नाप्यनुमानात्, पक्षतावच्छेदकीभूतगवयत्वस्य पूर्वमगृहीततया पक्षतावच्छेदकावच्छेदेन परामर्शाऽसंभवात्। प्रत्यक्षस्य शक्तिग्रहेऽसामर्थ्यादित्यपि बोध्यम्। अतः प्रमाणान्तरमेवोपमानम्। न च सादृश्यमेव प्रवृत्तिनिमित्तमस्तु तस्य च पूर्वमुपस्थितत्वादिति वाच्यम्। तस्य गवयपदप्रवृत्तिनिमित्तत्वाभावात्। तदुक्तमाचार्यैः-

सादृश्यस्याऽनिमित्तत्वात् निमित्तस्याऽप्रतीतितः।
समयोद्ग्रहः पूर्वं शब्देनानुमयापि वा इति।

समयः शक्तिरूपसंबन्धः। न च तथापि उपमानस्य कथं शक्तिग्राहकत्वम्, व्यवहारादपि शक्तिग्रहेण व्यभिचारादिति वाच्यम्। कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशेन व्यभिचारविरहात्।

संबन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुरित्याचार्याः।

एवमुपमिनोमि इत्यनुव्यवसायसिद्धोपमितित्वजातिमत्वं लक्षणं बोध्यम्। १४१

इति शब्दोपमानयोः पृथक् प्रामाण्यनिरूपणम्।

त्रैविध्यमिति अत्र त्रिविधत्वं साध्यम्, तच्च केवलान्वयित्वकेवलव्यतिरेकित्व अन्वयव्यतिरेकित्वगतं त्रित्वम्, तस्य साध्यता च स्वाश्रयाश्रयत्व सं०। उद्देश्यता-

**अन्वयव्यतिरेकिभेदात्। तत्रासद्विपक्षः केवलान्वयी, यथा घटोऽभिधेयः प्रमेयत्वादित्यादौ, तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्त्वम्।**

जिस साध्य का विपक्ष अप्रसिद्ध हो तादृशसाध्यक जो अनुमिति, उस अनुमिति का कारण जो अनुमान उसे केवलान्वयी अनुमान कहते हैं। जैसे—"घटोऽभिधेयः प्रमेयत्वात्" यहाँ पर अभिधेयत्वरूपसाध्य के अभाववाला कोई भी नहीं है जिसे कि विपक्ष कहा जाय, अतः यहाँ विपक्ष

---

वच्छेदकसमनियतसंख्यावत्त्वं विधप्रत्ययार्थः। समनियतत्वं च व्याप्यत्वे सति व्यापकत्वम्। तथा चोद्देश्यतावच्छेदकीभूताऽनुमानत्वस्य व्याप्यत्वं व्यापकत्वं च तादृशसंबन्धेन त्रित्वे स्तीति। अत्र संख्यायामुद्देश्यतावच्छेदकसामानाधिकरण्यमात्रोक्तौ केवलान्वयित्वगतैकत्वमादाय "अनुमानस्यैकविधत्वप्रसंगः, व्याप्यत्वमात्रोक्तौ स एव दोषः, अतोऽव्यापकत्वोपादानम्। व्याप्यत्वोपादानं तु केवलान्वयित्व-केवलव्यतिरेकित्व-अन्वयव्यतिरेकित्वघटत्वगतचतुष्ट्वसंख्यामादाय अनुमानस्य चतुर्विधत्ववारणाय। न चैवपि अनुमानत्व केवलान्वयित्व केवलव्यतिरेकित्व अन्वयव्यतिरेकित्व-गतचतुष्ट्वमादाय अनुमानस्य चतुर्विधत्वापत्तिरिति वाच्यम्। संख्यायां वस्तुमदन्यत्वस्यापि विशेषणीयत्वात्। वस्तुमत्ता च स्ववृत्तित्व-स्वसमानाधिकरणस्वेतरवृत्तित्वोभयसंबन्धेन। तथा च अनुमान अनुमानत्वसमनियततादृशत्रित्वसख्यावत्-केवलान्वयि-केवलव्यतिरेकि-अनुव्वयव्यतिरेकिभेदादिति हेतुः—तदर्थश्च केवलान्वयिभेद्-केवलव्यतिरेकिभेद-पन्वयव्यतिरेकिभेद-एतदन्यतमत्त्वादिति। हेतुतावच्छेदकसंबन्धश्च स्वनिरूपितप्रतियोगितावत्त्वमिति।

**तत्र।** तेषुमध्ये। **असद्विपक्ष** इति।—असन् विपक्षोयस्येति व्युत्पत्तिः। न च सिद्ध्यसिद्धिभ्यां व्याघातः। अत्यन्ताभावाऽप्रतियोगिसाध्यकत्वंकेवलान्वयित्वमितिविवक्षणात्। **विपक्षाऽसत्त्वमिति।** *विपक्षविरहइत्यर्थः।* न वाच्यत्वाभावाधिकरणमिति यावत्, अभिधानेऽनभिधाने वा विपक्षत्वव्याघादिनिभावः। अयं भावः—अभिधेयत्वं यदधिकरणनिष्ठात्यन्ताभावप्रतियोगितया अभिमतं तदधिकरणमेवविपक्षः स्यात्, तदधिकरणस्य शब्दवाच्यत्वे विपक्षत्वस्य—"अभिधेयत्वाभाववत्त्वस्याप्रसिद्धिः, प्रतियोग्यभावयोरेकत्राऽसत्वात्। विपक्षस्याऽनभिधाने "शब्दाऽवाच्यत्वे—" विपक्षत्व व्याघातादिति-अभिधेयत्वाभावाधिकरणत्वाऽप्रसिद्धेः—शब्दान्यज्ञानाऽविषयत्वेनालीकत्वादिति ध्येयम्।

न चाऽत्यन्ताभावाऽप्रतियोगित्वस्य केवलान्वयित्वे गगनाभावस्य कपिसंयोगाभावस्य च केवलान्वयित्वानुपपत्ति, तयोः स्वाभावप्रतियोगित्वादिति वाच्यम्। प्रथमानुपपत्तिवारणाय वृत्तिमत्त्वमभावे विशेषणीयम्। *द्वितीयानुपपत्ति-*

**असत्सपक्षः केवलव्यतिरेकी, यथा पृथिवीइतरेभ्योभिद्यते गन्धवत्त्वादित्यादौ, तत्र हि जलादित्रयोदशभेदस्य पूर्वमनिश्चितया निश्चितसाध्यवतः सपक्षस्याभाव इति।**

अप्रसिद्ध है क्योंकि सभी अभिधेय हैं। जिस साध्य का सपक्ष अप्रसिद्ध हो तादृशसाध्यकानुमिति-करण जो अनुमान उसे केवलव्यतिरेकी अनुमान कहते हैं। जैसे—"पृथिवी इतरेभ्योभिद्यते गन्धवत्वात्" यहाँ पर जलादि जो त्रयोदश (जल है आदि में जिन्हों के ऐसे जो जलादित्रयोदश अर्थात् जल के सहित १४ चतुर्दश—"१–जल, २–तेज, ३–वायु, ४–आकाश, ५–काल, ६–दिक्, ७–आत्मा, ८–मन। एवं—१–गुण, २–कर्म, ३–सामान्य, ४–विशेष, ५–समवाय, ६–अभाव।" उनका भेद रूप जो साध्य उस साध्य का पूर्व में कहीं निश्चय (प्रसिद्धि) न होने के नाते 'निश्चित साध्यवात्' सपक्ष अप्रसिद्ध है। (अर्थात् जलादि रूप जो इतर १४ चतुर्दश उनका भेदात्मक जो साध्य है वह पृथिवी में तो प्रसिद्ध हो नहीं सकता कारण कि पृथिवी तो पक्ष है और पक्ष में हमेशा साध्य का सन्देह ही रहा करता है। और जलादि में जलादि का भेद इस लिये नहीं रह सकता है कि स्व में स्व का भेद सर्वथा बाधित है—अथ च सपक्ष वह कहलाता है जिस में साध्य का निश्चय हो, क्योंकि "निश्चित साध्यवान् सपक्षः" अतः यहाँ पर सपक्ष के सर्वथा अप्रसिद्ध होने के नाते "पृथिवी इतरेभ्योभिद्यते" इत्यादि अनुमान केवल व्यतिरेकी अनुमान कहलाता है)। और जिस अनुमान में सपक्ष तथा विपक्ष दोनों विद्यमान हों वह अनुमान अन्वयव्यतिरेकि कहलाता है। जैसे "पर्वतो वन्हिमान् धूमात्" यहाँ पर सपक्ष महानस है क्योंकि महानस में साध्य (वन्हि) प्रसिद्ध (निश्चित) है। और विपक्ष जलहृद प्रसिद्ध है क्योंकि जलहृद में साध्याभाव (वन्ह्यभाव) का निश्चय है (निश्चितसाध्याभाववान् विपक्षः)।

---

वारणाय प्रतियोगिवैयधिकरण्यमभावे विशेषणीयम्। तथा च स्वावच्छेदकसंबन्धेन स्वाश्रयानधिकरणवृत्त्यभावीयतत्संबन्धावच्छिन्न प्रतियोगित्वाभाववत्त्वमेव तत्संबन्धेन केवलान्वयित्वम्। प्रतियोगिता विशिष्टप्रतियोगित्वाभाववत्वं केवलान्वयित्वमित्यनुगमः। वै० स्वतादात्म्य-स्वविशिष्टाधिकरणवृत्त्यभावीयत्व-स्वावच्छेदकसंबन्धावच्छिन्नत्वएतत्त्रितयसंबन्धेन। अधिकरणे स्ववै० स्वाश्रयाधिकरणत्वसंबन्धावच्छिन्न-स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसंबन्धेनेति। एवं च प्रतियोगिव्यधिकरण-वृत्तिमदभावाप्रतियोगिसाध्यकानुमितिकरणत्वं केवलान्वयित्वमिति-समुदितार्थः।

असत्सपक्ष इति। अत्रापि असन् सपक्षो "निश्चितसाध्यवान्" यस्येति यथाश्रुतार्थे पूर्ववद्व्याघातोबोध्यः। प्रकृतहेतुधर्मिकसाध्यसहचारग्रहाऽजन्या या प्रकृतहेतुका अथ च अवच्छिन्नवृत्तिकान्यविरहप्रतियोगिसाध्यकाऽनुमितिस्तत्करणत्वं केवलव्यतिरेकित्वम्। अन्वयव्यतिरेकिणि अतिव्याप्तिवारणायाऽजन्यान्तम्। तन्मात्रोक्तौ च अन्वयसहचाराऽग्रहदशायां "इदंवाच्यंज्ञेयत्वादित्यत्र" केवलान्वयिनि-अतिव्याप्तिः, अन्वयसहचाराऽग्रहदशायामपि ज्ञेयत्वहेतोः अत्यन्ताभावाप्रतियोगि-साध्यकत्वरूपकेवलान्वयित्वात्, व्यतिरेकाऽप्रतियोगित्वाच्च। अभावेऽ वच्छिन्न-

अन्वयव्याप्तिरुक्तैव व्यतिरेकादिहोच्यते ।
साध्याभावव्यापकत्वं हेत्वभावस्य यद् भवेत् ॥१४३॥

---

वृत्तिकान्यत्वविशेषणाच्च "अन्वयसहचाराऽसहदशायां "संयोगाभाववान् वाच्यत्वादित्यत्र" केवलान्वयिनि व्याप्तिव्याप्तिः, संयोगाभावाभावत्वाऽवच्छिन्नवृत्तिकान्यत्वविरहात् । उदाहरणमाह । यथेति । इतरेभ्यो भिद्यते इति । पृथिवीतरभेदवतीत्यर्थः । अत्र "यो गन्धवान् स पृथिवीतरभिन्न" इत्यन्वयदृष्टान्तोनास्ति पृथिवीमात्रस्य पक्षत्वात्, तदेवाह । जलादित्रयोदशभेदस्येति । त्रयोदशसु भेद इति त्रयोदशभेदः । जलादीनां त्रयोदशभेद इति जलादित्रयोदशभेदस्तस्येति विग्रहः । जलादित्रयोदशसु जलादिचतुर्दशप्रतियोगिकभेदा इत्यर्थः । जलादिप्रतियोगिकचतुर्दशभेदानां मध्ये एकैकभेदस्य स्वप्रतियोगिभिन्नत्रयोदशसु प्रसिद्धस्येति यावत् । तादृशैकैकभेदघटितभेदचतुर्दशत्वावच्छिन्नस्येति भावः । पूर्वमिति । अनुमितिपूर्वमित्यर्थः । अप्रसिद्धतयेति । तादृशभेदचतुर्दशस्य क्वाप्यप्रसिद्धतयेत्यर्थः । तादृशभेदचतुर्दशत्वावच्छिन्नाधिकरणताया पृथिवीभिन्ने कुत्राप्यवर्तमानत्वात्, पृथिव्यां तादृशाधिकरणतासत्त्वेपि अनुमितेः पूर्वं तत्राऽनिश्चितत्वादिति भावः ।

अन्वयव्यतिरेकिणं लक्षयति । सत्सपक्षविपक्ष इति । प्रकृतहेतुधर्मिकसाध्यसहचारग्रहजन्यव्याप्तिज्ञानजन्यप्रकृतहेतुकव्यतिरेकिसाध्यकानुमितिकरणत्वमित्यर्थः । उदाहरणमाह । यथेति । सपक्षस्य—निश्चितसाध्यवतः । विपक्षस्य—निश्चितसाध्याभाववतः ।

व्याप्तिं विभजते । मूले-द्वैविध्यं तु इति । एवकारार्थकस्तुशब्दः । द्वैविध्यमेवेत्यर्थः । अन्वयव्यतिरेकतः इति । अभेदे पंचमी-अन्वयाभिन्ना व्याप्तिः, व्यतिरेकाऽभिन्ना व्याप्तिश्चेत्यर्थः । १४२ ।

इत्यनुमानत्रैविध्यनिरूपणम्

व्यतिरेकादिति । व्यतिरेकव्याप्तिरित्यर्थः । तत्र । लिङ्गत्रयमध्ये । हि-हेतौ । साध्यतावच्छेदकरूपेणसाध्यनिश्चयाभावादिति यावत् । व्यतिरेकिणि इति । व्यतिरेकिसाध्यकानुमिताविइत्यर्थः । व्यतिरेकव्याप्तिज्ञानमिति । व्यतिरेकव्याप्तिज्ञानमेवेत्यर्थः । तदर्थं । व्यतिरेकव्याप्तिज्ञानार्थं । मूले-साध्याभावव्यापकत्वमिति । अथ साध्याभावव्यापकत्वस्य व्याप्तित्वे तस्य स्वरूपसंबन्धेन हेत्वभावनिष्ठत्वेपि हेतुनिष्ठत्वाभावाद् हेतौ व्याप्यत्वव्यवहारोनुपपन्न इति चेन्न । स्वाश्रयीभूताभावप्रतियोगित्वसंबन्धेन तस्य हेतुनिष्ठत्वाज्ञानपपत्तिरित्याह । साध्याभावव्यापकीभूताभावेति । अत्र

साध्याभावसमानां

सत्वाद् धूमवान्

सत्सपक्षविपक्षोऽन्वयव्यतिरेकी, यथा वन्हिमान् धूमादित्यादौ तत्र सपक्षस्य महानसादे विपक्षस्य जलह्रदादेश्च सत्त्वमिति ॥

तत्र व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तदर्थं व्यतिरेकव्याप्तिं निर्वक्ति साध्यभावेति । साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः । अत्रेदं बोध्यम्–यत्सम्बन्धेन यद्वच्छिन्नं प्रति येन सम्बन्धेन येन रूपेण व्यापकता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभाववत्ता-ज्ञानात्तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति । इत्थं च यत्र विशेषणतादिसम्बन्धेनेतरत्वव्यापकत्वं गन्धात्यन्ताभावे गृह्यते तत्र गन्धाभावाभावेनेतरत्वात्यन्ताभावः सिद्ध्यति ।

व्यतिरेकी अनुमान में व्यतिरेक व्याप्तिज्ञान कारण होता है–इसलिये व्यतिरेक व्याप्ति का निर्वचन करते हैं–साध्याभावेति । साध्याभाव का व्यापकीभूत जो अभाव तादृशाभावप्रतियोगित्व ही व्यतिरेकव्याप्ति है । यहाँ पर यह जानना चाहिये कि—जिस सम्बन्ध से 'यदवच्छिन्न' यद्धर्मावच्छिन्न के प्रति ( जिसको ) जिस सम्बन्ध से तथा जिस रूप से व्यापकता गृहीत हो उस सम्बन्ध से अवच्छिन्न ( युक्त ) है प्रतियोगिता जिसकी ऐसा जो तद्धर्मा वच्छिन्न प्रतियोगिता कतद्धर्मावच्छिन्नाभाव की सिद्धि ( अनुमिति ) होती है । ( जैसे–वन्हिमान् धूमात् यहाँ पर-यत् संबन्धेन ( संयोगसम्बन्धेन ) यदवच्छिन्नं प्रति ( धूमत्वावच्छिन्नं प्रतियेन सम्बन्धेन ( संयोगसम्बन्धेन ) येन रूपेण ( वन्हित्वेन रूपेण ) वन्हि में व्यापकता ग्रह होने से तत्सम्बन्धा-वच्छिन्न ( संयोग सम्बन्धावच्छिन्न ) प्रतियोगिताक तद्धर्मावच्छिन्न ( वन्हित्वावच्छिन्न ) के अभाववत्ता ( अभाव प्रकारक ) ज्ञान से तत्सम्बन्धावच्छिन्न ( संयोगसम्बन्धावच्छिन्न ) प्रतियोगिताक तद्धर्मावच्छिन्न ( धूमत्वावच्छिन्न ) के अभाव की सिद्धि ( अनुमिति ) जलह्रद में हो जाती है 'ह्रदो धूमाभाववान् वन्ह्यभावात्' इत्यादि रूप से ) इत्थं चेति—इस प्रकार "पृथिवी इतरभिन्ना गन्धात्" यहाँ पर यदि विशेषणता ( स्वरूप ) सम्बन्ध से इतरत्व की व्यापकता का गन्धात्यन्ताभाव में ग्रहण ( निश्चय ) होता है तो वहाँ व्यापक जो गन्धाभाव उसके अभाव अर्थात् गन्धाभावाभाव ( गन्ध ) से व्याप्य ( इतरत्व ) का अत्यन्ताभाव ( इतरत्वा-त्यन्ताभाव ) सिद्ध होता है । ( पृथिवी इतरत्वात्यन्ताभाववती गन्धात् यह अनुमिति होती

---

भावव्यापकत्वं च साध्याभावाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वम्, साध्या-भावाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकत्वं वा । अत्र साध्याभावे हेत्वभावे च प्रतियोगिवैयधिकरण्यं निवेशनीयम्, तेन कपिसंयोगी एतद्वृक्षत्वात्, एतद्वृक्षत्ववान् कपिसंयोगादित्यादौ नाव्याप्त्यतिव्याप्ती । अथ वा साध्यमभावोयस्येतिव्युत्पत्त्या-साध्यवद्भेदः एवं हेत्वभावस्येत्यत्रापि बहुव्रीह्याश्रयणेन हेतुमद्भेदोलभ्यते तथा च साध्यवद्भेदव्यापकीभूतभेदप्रतियोगितावच्छेदकत्वमित्यर्थलाभान्नोपादेयमेव प्रति-योगिवैयधिकरण्यद्वयम् । यथा अन्वयिनि व्याप्यतावच्छेदकसंबन्धेन व्याप्यवत्ता-ज्ञानात् व्यापकतावच्छेदकसंबन्धेन व्यापकःसिद्ध्यति । तेन न धूमावयवे संयोगेन

यत्र तु तादात्म्यसंबन्धेनेतरव्यापकत्वं गन्धाभावे गृह्यते तत्र तादात्म्यसम्बन्धेनेतराभावः सिद्ध्यति। स एव चान्योन्याभावः। एवं यत्र संयोगेन धूमं प्रति संयोगसंबन्धेनवन्हेर्व्यापकता गृह्यते तत्र संयोगसंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावेन ह्रदे संयोगसंबन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिद्ध्यति।

अत्र च व्यतिरेक व्याप्तिग्रहे व्यतिरेकसहचारग्रहः कारणम्।

है ) और जब कि तादात्म्यसम्बन्ध से इतरत्व व्यापकता गन्धाभाव में गृहीत होती है तब तादात्म्यसम्बन्ध से ही इतर का अभाव सिद्ध होता है यही तादात्म्य सम्बन्ध से सिद्ध होने वाला अभाव अन्योन्याभाव ( इतर भेद ) कहलाता है।

इसी प्रकार जहाँ संयोगसम्बन्ध से धूम के प्रति संयोगसम्बन्ध से वन्हि में व्यापकता गृहीत होती है वहाँ संयोग सम्बन्धावच्छिन्न प्रतियोगिताकवन्ह्यभाव ( हेतु ) से जलह्रद में संयोग सम्बन्धावच्छिन्न प्रतियोगिताक धूमाभाव सिद्ध हो जाता है। ( अर्थात् ह्रदो धूमाभाववान् वन्ह्यभावात् ) और यहाँ केवलव्यतिरेकि हेतुस्थल में व्यतिरेक व्याप्ति ज्ञान के प्रति व्यतिरेक सहचार ज्ञान अर्थात् यत्र साध्याभावस्तत्र हेत्वभाव, कारण है।

---

वन्हिधीः, न वा संयोगेन धूमाधिकरणे पर्वते समवायेन वन्हिधीः। तथा व्यतिरेकिणि व्यापकतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकव्यापकाभावेन व्याप्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकव्याप्याभावः सिद्ध्यति इत्याह। अत्रेदं बोध्यमिति।

यत्संबन्धावच्छिन्नेति। व्यापकतावच्छेदकसंबन्धावच्छिन्नेत्यर्थः। यद्धर्मावच्छिन्नाभाववत्ताज्ञानादिति। व्यापकतावच्छेदकधर्मावच्छिन्नाभाववत्ताज्ञानादित्यर्थः। तत्संबन्धावच्छिन्नेति। व्याप्यतावच्छेदकसंबन्धावच्छिन्नेत्यर्थः। तद्धर्मावच्छिन्नाभावस्य सिद्धिरिति। व्याप्यतावच्छेदकावच्छिन्नप्रतियोगिताकव्याप्याभावस्यसिद्धिरित्यर्थः। तेन न समवायेन वन्हिविरहिणि महानसे संयोगसंबन्धावच्छिन्नप्रतियोगिताकधूमाभावसिद्धिः, न वा संयोगेन वन्हिविरहिणि धूमावयवे समवायसंबन्धावच्छिन्नप्रतियोगिताकधूमाभावसिद्धिः। इत्थं चेति। व्यापकाभावेन व्याप्याभावानुमितिस्वीकारे चेत्यर्थः। यत्र। जलं गन्धाभाववत् पृथिवीतरत्वादित्यत्र। तत्र। तादृशस्थले। तथा च पृथिवी पृथिवीतरत्वाभाववती गन्धादित्यनुमानेन पृथिवीतरत्वात्यन्ताभावः सिद्ध्यतीति भावः।

यत्र तु इति। जलं गन्धाभाववत् जलादित्यत्रेत्यर्थः। तत्र। तादृशस्थले। सिद्ध्यतीति। पृथिवी इतरभेदवती गन्धादित्यनुमानेनेतरभेदसिद्धिरिति भावः। स एवेति। तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभाव एवेत्यर्थः। अत्र

केचित्तु व्यतिरेकसहचारग्रहेणाऽन्वयव्याप्तिरेव गृह्यते नतुव्यतिरेकव्याप्ति-रपि कारणम् । यत्रव्यतिरेकसहचाराद् व्याप्तिग्रहः तद्व्यतिरेकीत्युच्यते,

कुछ आचार्य लोगों का कहना यह है कि ( अनुमितिमात्र के प्रति अन्वयव्याप्तिज्ञान ही कारण है न कि व्यतिरेकव्याप्तिज्ञान ) व्यतिरेकसहचार से भी अन्वय व्याप्ति का ही निश्चय होता है । अतः व्यतिरेकव्याप्तिज्ञान कारण ही नहीं है । ( जिससे कि व्यतिरेक व्याप्ति का निश्चय व्यतिरेक सहचार से किया जाय ) ।

प्रश्न—जब कि सर्वत्र अन्वय व्याप्ति ज्ञान से ही अनुमिति होती है तब तो सभी हेतु अन्वयी ही कहलायेंगे—व्यतिरेकी हेतु ही अप्रसिद्ध हो जायगा ।

उत्तर—जहाँ व्यतिरेकसहचार से व्याप्तिग्रह हुआ तत्स्थलीय हेतु ही व्यतिरेकी हेतु कहलाता है ।

---

चेति । केवलव्यतिरेकिण्यपीत्यर्थः । व्यतिरेकव्याप्तिग्रहे इति । हेतौ साध्याभाव-व्यापकीभूताभावप्रतियोगित्वग्रहे इत्यर्थः । व्यतिरेकसहचारग्रह इति । साध्या-भावोहेत्वभावसमानाधिकरण इत्यर्थः । तथा च व्यतिरेकसहचारेणैव व्यतिरेक-व्याप्तिग्रहान्नान्वयसहचारग्रहापेक्षेति भावः । इदं चोपाध्यायमतम्, तन्मते व्यतिरेक-व्याप्तिज्ञानमपि अनुमिति हेतुः, न तु व्यतिरेकसहचारेणा ऽन्वयव्याप्तिरेव गृह्यते इति । तथा च प्रकृतहेतुकप्रकृतसाध्यकानुमित्यौपयिकव्याप्तित्वव्यापकव्यतिरेक-व्याप्तित्वकत्वं केवलव्यतिरेकिणोलक्षणम् ।

आचार्यास्तु अनुमितिसामान्येऽन्वयव्याप्तिरेव कारणम्, न तु साध्याभाव-व्यापकीभूताभावप्रतियोगित्वज्ञानम् तथा, गौरवात्, केवलान्वयिनि "केवलान्वयित्व-ग्रहकालीनानुमितौ च" अभावात् । अथ साध्याभावव्यापकीभूताभावप्रतियोगित्वेन साध्यव्याप्यत्वमनुमेयम्, एवं च व्यतिरेकव्याप्त्याऽन्वयव्याप्तिमनुमाय यत्रानुमितिः स एव व्यतिरेकीत्युच्यते । तन्न । अन्वयव्याप्त्यनुकूलतया च तदुपन्यासे अन्वय-व्याप्तिमनुपन्यस्य तदुपन्यासस्याऽप्राप्तकालत्वम् । न चैवं पृथिवीतरभ्योभिद्यते गन्ध-वत्वादित्यादौ अनुमित्यनुपपत्तिः, तत्राऽन्वयसहचारग्रहाभावेनाऽ न्वयव्याप्तिग्रहा-ऽसंभवादितिवाच्यम् । तत्र व्यतिरेकसहचारेणैवाऽन्वयव्याप्तिज्ञानसंभवात् । अन्वय-सहचारस्येव क्वचिद्व्यतिरेकसहचारस्य हेतुत्वस्वीकारात् । अत एवोक्तं "निरुपधि-व्यतिरेकसहचारेणाऽन्वयव्याप्तिरेवगृह्यते" इति । एवं च साध्यभावधर्मिकस्वाभाव-सहचारग्रहाऽजन्यप्रकृतसाध्यव्याप्तिग्रहविशेष्यत्वं केवलान्वयित्वम् । "हेतुः साध्यसमा-नाधिकरण इति" अन्वयसहचारग्रहाजन्यव्यतिरेकसहचारग्रहजन्याऽन्वयव्याप्तिग्रहवि-शेष्यत्वं केवलव्यतिरेकित्वम् । उभयसहचारगृहीतान्वयव्याप्तिग्रहविशेष्यत्वमन्वव्यतिरे-कित्वं निर्वाच्यमिति वदन्ति । तन्मतमुपन्यस्यति । केचित्तु इति । व्यतिरेकसहचारेण । व्यतिरेकसहचारज्ञानेन । व्यतिरेकव्याप्तिरपिकारणमिति । अनुमितावित्यादिः । यत्र ।

**साध्यप्रसिद्धिस्तु घटादावेवजायते, पश्चात् पृथिवीत्वावच्छेदेन साध्यते इति वदन्ति ॥१४३॥**

प्रश्न—इतरभेदात्मक साध्य सर्वथा अप्रसिद्ध है, क्योंकि इतर ( जलादि ) में तो इतर ( जलादि ) का भेद रहेगा नहीं स्व में स्व का भेद रह नहीं सकता है, पृथिवी ( पक्ष ) में अभी सिद्ध ही कर रहे हैं। अतः इतरभेदात्मकसाध्य के अप्रसिद्ध होने के नाते "पृथिवी इतरभिन्ना" यहाँ पर साध्याप्रसिद्धि ही क्यों न कह दी जावे।

उत्तर—पृथिवीत्व सामानाधिकरण्येन अर्थात् यत्किंचित् घटादिरूप पृथिवी में इतरभेद ( साध्य ) को प्रसिद्ध करके फिर पृथिवीत्वावच्छेदेन अर्थात् पृथिवीमात्र में इतरभेद सिद्ध कर देने से साध्याप्रसिद्धि दोष नहीं है ॥ १४३ ॥

---

विशेष्यकत्वंसम्बन्ध्यर्थः। तस्य व्याप्तिग्रहेऽन्वयः। व्यतिरेकसहचारादिति। प्रयोज्यत्वे पंचम्यर्थः। व्याप्तिग्रहः। अन्वयव्याप्तिग्रहः। तद्व्यतिरेकीत्युच्यते इति। तल्लिङ्गं व्यतिरेकिशब्देन व्यवह्रियते इत्यर्थः। ननु कुत्रापि साध्यसहचारग्रहाऽसंभवात्कथमन्वयव्याप्तिग्रह इत्यत आह। **साध्यप्रसिद्धिस्तु** इति। साध्यनिश्चयश्चेत्यर्थः। घटादावेव। पक्षैकदेशघटादावेव। ननु सिद्धेः प्रतिबन्धकत्वात्कथमनुमितिरित्यत आह। पश्चादिति। साध्यनिश्चयोत्तरमित्यर्थः। **पृथिवीत्वावच्छेदेनेति**। तथा चावच्छेदावच्छेदेनानुमितौ सामानाधिकरण्येन सिद्धेरप्रतिबन्धकत्वादिति भावः। वदन्तीत्यस्वरसः, तद्बीजं तु तर्हि पृथिवी इतरभिन्ना गन्धवत्वाद् घटवदित्यन्वय्यनुमानस्यैव इतरभेदसाधकत्वे व्यतिरेकव्याप्त्युपन्यासोऽव्यर्थ एव स्यात्। यथा अयं घटः पूर्वानुभूतघटाऽभिन्नः तद्घटवृत्तिविलक्षणसंस्थानवत्वादित्यादिस्थैर्यसाधकाऽभेदानुमानवत्, घटसाधारण्यपक्षत्वेऽपि पक्षस्य दृष्टान्तत्वेऽविरोधात्। पक्षान्यत्वं हि न दृष्टान्तत्वे प्रयोजकम्, अपि तु साध्यवत्तया निश्चितत्वं प्रयोजकमिति।

इदमप्याततः—यथाऽन्वयव्याप्तिज्ञानस्य व्यतिरेकव्याप्तिज्ञानविरहकालेऽनुमितिजनकत्वमनुभवसिद्धं तथाऽन्वयव्याप्तिज्ञानविरहस्थले व्यतिरेकव्याप्तिज्ञानस्यकारणतापि अनुभवसिद्धा। अन्वयव्याप्त्यनुपन्यासदशायां व्यतिरेकव्याप्त्युपन्यासस्याऽपर्यनुयोज्यत्वात्। तदुक्तम्—"आस्तांतावदयंसुहृदुपदेशःकेवलव्यतिरेकिलक्षणंतावन्निर्व्यूढम्" अस्यार्थः—अन्वयिनैवतावदितरभेदसिद्धौ किं व्यतिरेक्युपन्यासेनेति सुहृदुपदेश इत्यर्थः। केवलव्यतिरेकिलक्षणमिति। केवलव्यतिरेकिस्वरूपमित्यर्थः। निर्व्यूढमिति अन्वयव्याप्त्यनुपन्यासदशायामपि व्यतिरेकव्याप्तिज्ञानादनुमितेरनुभवसिद्धत्वेन तस्यापि हेतुत्वादिति भावः।

अत्रेदंबोध्यम्। जलादीनां चतुर्दशान्योन्याभावाःत्रयोदशसु प्रसिद्धाः पृथिव्यां साध्यन्ते चतुर्दशत्वरूपेण। न च चतुर्दशान्योन्याभावानां प्रातिस्विकरूपेण त्रयोदशसु प्रसिद्धत्वेपि साध्यतावच्छेदकीभूतचतुर्दशत्वप्रकारेण सिद्ध्यभावात्

कथमनुमितिरिति वाच्यम् भिन्नाभिन्नाधिकरणस्थानामपि अभावानां चतुर्दशत्वादिना ज्ञानसंभवात्, भिन्नाधिकरणस्थितयोर्घटयोर्द्वौ घटौ इत्यादिप्रतीतिवत्। जलादिमिलितप्रतियोगिकाऽन्योन्याभावस्तु न साध्यः, तथासति "गगनमितरभिन्नमिति आकाशेतरत्वावच्छिन्नप्रतियोगिताकान्योन्याभावावगाहिन्या अनुमितेरनुपपत्तिः स्यात्, आकाशस्यैकव्यक्तित्वेन तत्रैकदेशेपि साध्यप्रसिद्ध्यसंभवात्। अतश्चतुर्दशान्योन्याभावा एव साध्याः। तथा चोक्तगन्धवत्त्वहेतोर्नान्वयित्वम्, न वाऽ साधारण्यम् एतेन

साध्याऽप्रसिद्धिर्वैधर्म्यं व्यर्थतोपनयस्य च।
अन्वयेनैवसिद्धिश्च व्यतिरेकिणि दूषणम्॥

इत्यपि प्रत्याख्यातम्। अस्यार्थस्तु पृथिवी इतरभेदवती इतरभेदात्मकसाध्यनिश्चये सति तादृशे साध्यनिश्चयधर्मिणि हेतोरभावे तु सपक्षविपक्षव्यावृत्ततयाऽसाधारण्यम्। हेतोः सत्त्वे तु अन्वयित्वम्। यत्र कुत्रचिद्धर्मिणिसाध्यप्रकारकनिश्चयविरहे तु संशयरूपपक्षताया अनुपपत्तिः, संशयकारणस्य साध्यप्रकारकनिश्चयाधीनस्य साध्यतदभावसहचरितधर्मवद्धर्मिज्ञानस्य विरहात्। सिषाधयिषाकारणस्य सिद्धिधर्मिकेष्टसाधनताज्ञानस्य चाऽभावात्, तस्य साध्यप्रकारकनिश्चयाधीनत्वात्। न च सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वे नानुपपत्तिरिति वाच्यम्। तथापि तादृशानुमितेरनुपपत्तिः, विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणत्वात्।

किं च साध्याभावहेत्वभावयोरन्वयव्याप्तिः, व्याप्यस्य "साध्याभावस्य" न पक्षधर्मत्वम्, प्रकृतहेतोर्नव्याप्यत्वमिति वैधर्म्यम्। व्याप्तिपक्षधर्मताविशिष्टहेतुप्रतिपादनेनोपनयसार्थक्यं भवति। अत्र तु तदसंभवादुपनयवैयर्थ्यं च, अगृहीतव्याप्तिकस्य वस्तुनः उपनयेनाऽप्रतिपादनादिति पद्यतात्पर्यम्।

तत्रेदं बोध्यम्। इतरेषां जलादीनांभेदस्य घटे एव प्रसिद्धेः। वाय्वादेरतीन्द्रियस्यापि भेदस्य घटादौप्रत्यक्षतएव सिद्धत्वात्। अन्योन्याभावप्रत्यक्षे अधिकरणयोग्यतायास्तन्त्रत्वात्। नचैवं तर्हि घट एव दृष्टान्तोस्तु किं व्यतिरेकिणा।

ऋजुमार्गेणसिद्ध्यन्तं को हि वक्रेणसाधयेदिति" वाच्यम्। व्यतिरेकिलिंगंचेद्दोषरहितं तदाऽयमपि मार्गः ऋजुरेव। तथा च बोधयितुरन्वयव्यतिरेकसहचारग्रहे बुभुत्सोर्व्यतिरेकसहचारमात्रग्रहे बोधयितुरन्वयव्यतिरेकी—बुभुत्सोश्च केवलव्यतिरेकी अयं हेतुर्भवतीति न व्यतिरेकित्वहानिरित्याशयः। साध्याप्रसिद्धेर्निरासे तन्मूलकदोषाणां निरासः। **ग्रहादिति**। तथा च व्यतिरेकसहचारगृहीतव्याप्तिकव्यतिरेकिसाध्यकहेतुरेव केवलव्यतिरेकीत्युच्यते इति भावः। ननु व्यतिरेकव्याप्तिनिरपेक्षात् व्यतिरेकसहचारग्रहाच्चेदन्वयव्याप्तिज्ञानं व्यर्थमेव तर्हि व्यतिरेकव्याप्तिग्राहकोदाहरणमुपनयश्चेति चेत्—सत्यम्—धूमो वन्हिव्याप्यः वन्ह्यभावव्यापकीभूताभावप्रतियोगित्वादित्यनुमितिहेतुभूतव्यतिरेकव्याप्तिज्ञानजनकत्वेन व्यतिरेकसहचारस्यानुमित्यौपयिकान्वयव्याप्तिग्रहप्रयोजकत्वमस्तीति

तादृशहेतोरपि न व्यतिरेकित्वहानिरिति भावः। नापि वैयर्थ्यम्, साध्यान्वयव्याप्यस्य हेतोः पक्षधर्मत्वात्। नाप्युपनयवैयर्थ्यम्। व्यतिरेकव्याप्तिप्रतिपादनद्वारा अन्वयव्याप्तिज्ञापनम्, तथाविधव्याप्यहेतोः पक्षधर्मत्वप्रतिपादनस्योपनयार्थत्वात्। नाप्यपसिद्धान्तः, तदुक्तम्—

नियम्यत्वनियन्तृत्वे भावयोर्यादृशीमते।
त एव विपरीते तु विज्ञेये तदभावयोरिति॥

हेत्वभावे साध्याभावव्यापकत्वं हेतौ साध्यव्याप्तिरेव, साध्याभावव्यापकीभूताभावप्रतियोगित्वस्य साध्यान्वयव्याप्तिनियतसत्ताकत्वात् तत्साध्यकतद्धेतुकानुमितिप्रयोजकत्वाच्च। अथ च व्यतिरेकिणि साध्याप्रसिद्धिर्न दूषणम्, अपि तु भूषणम्। साध्याप्रसिद्धिश्च साध्यज्ञानाभावः। अत एव साध्यविशेष्यकानुमितिरुपपद्यते, साध्यविशेष्यकानुमितौ तु साध्यज्ञानाभाव एव पक्षतेति संक्षेपः॥१४३॥

इति व्यतिरेकव्याप्तिनिरूपणम्

मीमांसकमते वेदान्तिमते च व्यतिरेक्यनुमानं न प्रमाणम्। अर्थापत्तिप्रमाणेनैव गतार्थत्वात्। तथा हि इतरभेदं विना गन्धवत्त्वमनुपपन्नमतोगन्धवत्त्वेन इतरभेदकल्पना अर्थापत्तिरेव। अथ वा गन्धेन इतरभेदं पृथिव्यामनुमिनोमीत्यनुव्यवसायवत् गन्धानुपपत्त्या इतरभेदं कल्पयामीत्यनुव्यवसायेनार्थापत्तिरपि सिद्धैव, एकेना परस्य निषेधासंभवात्, अनुव्यवसायस्योभयत्र तुल्यत्वात्। अर्थापत्तित्वं च आपादयामीत्यनुभवसिद्धोजातिविशेषः। न च व्यतिरेकव्याप्तिज्ञानजन्यानुमितित्वमेव तादृशानुभवविषयः इति वाच्यम्। अननुगतत्वात्, तदुपस्थितिं विनापि तादृशबुद्धेर्जायमानत्वात्।

अथाऽस्तु अर्थापत्तित्वं जातिविशेषः, स चानुमितित्वव्याप्य एव। न च तस्य तद्व्याप्यत्वे मानाभावः। व्यतिरेकव्याप्तिज्ञानजन्यज्ञाने ऽनुमिनोमीत्यनुव्यवसायस्याऽनुमितिसामग्रीजन्यत्वस्य च मानत्वात् इति चेन्न तत्र तादृशानुव्यवसायस्यैवाऽसिद्धेः। प्रत्युत न साक्षात्कृतं, न वा ऽनुमितं, परंतु अर्थापत्त्याऽवगतमित्येवानुभवात्।

अत्र विप्रतिपत्तिश्च व्यतिरेकव्याप्तिज्ञानं व्यतिरेकव्याप्यविषयकानुमितिभिन्नप्रमितिकरणं न वेत्याकारिका प्रमाणत्वं प्रत्यक्षादिचतुष्टयप्रमाणान्यतमत्वव्याप्यं न वेत्याकारिका बोध्या। न वा, प्रमात्वं प्रत्यक्षादिचतुष्टयप्रमित्यन्यतमत्वव्याप्यं न वेत्याकारिका बोध्या।

अर्थस्याऽऽपत्तिर्यस्मादिति बहुव्रीह्याश्रयणेन प्रमाणे अर्थापत्तिशब्दप्रयोगः। अर्थस्याऽऽपत्तिरिति षष्ठीतत्पुरुषाश्रयणेन प्रमायां तत्प्रयोगः।

उपपाद्यज्ञानेनोपपादककल्पनम्, अर्थापत्तिप्रमा।

येन विना यदनुपपन्नं तदुपपाद्यम्। यथा शतवर्षजीविनो गृहासत्त्वम्, तच्च ... र्था-

बहिःसत्त्वं विना ...

पत्तिप्रमाणम्।

फलितम्। येन विना अनुपपत्तिः, तदुपपादकम्, यथा ...

अर्थापत्तेस्तु नैवेह प्रमाणान्तरतेष्यते।
व्यतिरेकव्याप्तिबुद्ध्याचरितार्था हि सा यतः ॥१४४॥

अर्थापत्तिरिति। अर्थापत्तिं प्रमाणान्तरं केचन मन्यन्ते। तथा

अर्थापत्ति प्रमाणान्तर है ऐसा मीमांसक वगैरह मानते हैं। तथाहि किसी व्यक्ति ने देवदत्त सौ वर्ष जीवेगा यह ज्योतिःशास्त्र से अच्छी प्रकार निश्चय कर लिया। इसके बाद देवदत्त जीवी (जिन्दा) है तथा घर में नहीं है ऐसा प्रत्यक्ष से उसे ज्ञान हुवा। तब ऐसी परिस्थिति

---

तद्ज्ञानमर्थापत्तिप्रमा। व्यापकस्यैवोपपादकत्वात्, अन्यथा किं कस्योपपादकमिति नियामकाभावेन जीविनोगृहासत्वं घटं विना ऽनुपपन्नमित्यपि किं न स्यात्। अथ एतावतासिद्धं उपपादकज्ञानकारणं यदुपपाद्यज्ञानं तदर्थापत्तिः प्रमाणम्, व्यापकज्ञानकारणं व्याप्यज्ञानमिति यावत्। तच्चानुमानमेव, अनुमानप्रमाणभेदस्याऽऽप्रतीयमानत्वादिति चेन्न पूर्वोक्तानुव्यवसाययोरेव परस्परवैलक्षण्येन तद्भेदात्।

इदमत्रावधेयम्। अर्थापत्तेर्नान्वयव्याप्तिज्ञानेऽन्तर्भावः, जीवित्ववहिः सत्वयोः सहचारदर्शनाभावात् जीवित्वस्यस्वव्यापकसाध्यसमानाधिकरण्यरूपाऽन्वयव्याप्तिग्रहाभावात्। प्रत्युत जीवित्वं सत्तामात्रव्याप्यमिति व्याप्तिग्रहस्यैव संभवात्, जीवित्वमात्रेण सत्तामात्रमनुमेयं नतु वहिःसत्वमिति। न च जीवित्व। ज्ञानात् सत्वं, गृहासत्वज्ञानाच्च वहिःसत्वमनुमेयम् इति वाच्यम्। गृहासत्वस्य वहिःसत्वव्याप्यत्वाभावेन गृहासत्वानुमित्यनुपपत्तेः। ननु मा भूदर्थापत्तेरन्वय्यनुमानेऽन्तर्भावः, व्यतिरेक्यनुमाने एवान्तर्भावोस्तु तथा हि दिवाभोजनाभाववतो रात्रिभोजनाभावे पीनत्वाभावः स्यादिति साध्यव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिबलेन पीनत्वज्ञानात्तस्य रात्रिभोजनानुमितिः सुघटा इति चेद् व्यतिरेकव्याप्तेरेवानुपगमात्। ननु जीविनोगृहासत्वं वहिःसत्वव्याप्यमतोजीवन् देवदत्तोवहिरस्ति गृहाऽसत्वात् गृहाऽस्थितस्वशरीरवदित्यनुमानत्वं घटते अर्थापत्तेः, न प्रमाणान्तरत्वमिति नाशंकनीयम्। अनुव्यवसायवैलक्षण्यादर्थापत्तेर्नानुमानत्वम्, अपि तु प्रमाणान्तरत्वमेवेति उक्तप्रायम्। साचाऽर्थापत्तिर्द्विविधा दृष्टार्थापत्तिः, श्रुतार्थापत्तिश्च। यत्रदृष्टेन उपपाद्येन उपपादककल्पनमाद्या, यथा पीनोयं दिवा न भुङ्क्ते इत्यादि। श्रुतेन उपपाद्येनोपपादककल्पनं द्वितीया यथाजीवन्देवदत्तो-गृहेनास्तीति। श्रुतार्थापत्तिश्च द्विविधा अभिधानानुपपत्ति अभिहितानुपपत्ति भेदात्। अभिधानस्य तात्पर्यस्य अनुपपत्तिराद्या यथा द्वारमित्यत्र पिधेहीति पदाध्याहारः। पदाध्याहारं विना तात्पर्यस्याऽनुपपन्नत्वात्। अत्र तात्पर्यमुपपाद्यम्, पदाध्याहारश्चोपपादकः। अभिहितस्य अर्थस्यानुपपत्तिर्द्वितीया। यथा स्वर्गकामोयजेतेत्यादि, श्रुतस्य वाक्यार्थस्य स्वर्गसाधनत्वरूपस्य अपूर्वं विना नुपपत्तिरिति

**हि यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनोगृहासत्त्वं च प्रत्यक्षादवगतं तत्र शतवर्षजीविनो गृहासत्त्वं बहिः सत्त्वं विनाऽनुपपन्नमिति बहिः सत्त्वं कल्प्यत इति ।**

में सौ वर्ष जीनेवाले उस देवदत्त का गृहासत्व ( घर में न रहना ) बहिःसत्व ( बाहर रहने ) के बिना अनुपपन्न ( नहीं बनता ) है, इस वास्ते देवदत्त के बहिःसत्व की कल्पना की जाती है कि देवदत्त बाहर है, इसी का नाम अर्थापत्ति है—अर्थात् बहिःसत्वरूप अर्थ की जो आपत्ति ( कल्पना ) ।

---

मीमांसकमतं दर्शयति । **केचनेति** । मीमांसका इत्यर्थः । तदुदाहरणं तावद्दर्शयति । **तथाहीति** । जीविदेवदत्तोगेहेनास्ति इति ज्ञानानन्तरं बहिरस्तीतिधीरुदाहरणम् । **यत्र** । यस्य । **ज्योतिःशास्त्रादवगतमिति** । जीवीगृहेएवेति नियमश्च प्रत्यक्षादवगतः, तत इति शेषः । **प्रत्यक्षादवगतमिति** । ततो जीवति न वेति संशयः ततः संशयनिरासार्थं बहिःसत्वं कल्प्यते इत्यन्वयः । **तत्र** । तस्य । **शतवर्षजीवित्वान्यथानुपपत्त्येति** । तादृशान्यथानुपपत्तिज्ञानरूपप्रमाणेनेत्यर्थः । **कल्प्यते इति** । गृहेऽवर्त्तमानः शतवर्षजीवी बहिःसत्ववानित्यर्थापत्तिप्रमा जन्यते इत्यर्थः । नचेदमनुमानम् । लिङ्गविशेषणस्य जीवित्वस्य तदानीं संशयेन तन्निश्चयाऽसंभवात् । किं च जीविदेवदत्तस्याभावो गृहे विद्यमानः न देवदत्तस्य बहिःसत्वं साधयितुमर्हति, तस्य देवदत्ताऽवृत्तित्वात्, बहिःसत्व-गृहनिष्ठाभावयोर्व्यधिकरणत्वेन नियतसामानाधिकरण्यरूपव्याप्त्यभावात् । किं च देवदत्तस्य तदानीमप्रत्यक्षत्वेन तद्विशेष्यकपरामर्शाऽसंभवादपि नानुमानम् । **तदपीति** । अर्थापत्तेः प्रमाणान्तरत्वमपीत्यर्थः । **नेष्यते इति** । नाङ्गीक्रियते इत्यर्थः । तत्र हेतुमाह । **अनुमानेन गतार्थत्वादिति** । अर्थापत्तिज्ञानस्याऽनुमितिरूपत्वे व्याप्तिं प्रदर्शयति । **तथाहीत्यादिना** । **यत्र** । देवदत्ते । **गृहीतमिति** । देवदत्तोगृहसत्व-बहिःसत्वान्यतरव्याप्यजीवित्ववानिति परामर्शो गृहीतः इत्यर्थः । **तत्र** । जीवित्ववति । **अन्यतरसिद्धौ जायमानायामिति** । देवदत्तोगृहसत्व-बहिसत्वान्यतरवान् जीवित्वादित्यनुमानेनान्यतरसिद्धौ जायमानायामित्यर्थः । बहिःसत्वमेवानुमितौ विषयीक्रियते इत्यन्वयः । तत्र हेतुमाह । **गृहसत्वबाधादिति** । इतरबाधसहकारादित्यर्थः । बहिःसत्वस्यविधेयता तु तादृशान्यतरत्वेन बहिःसत्वत्वेन वा इत्यन्यदेतत् ।

अथ हेतुभूतस्य हेतुघटकस्य वा जीवित्वस्य संशयात्कथमनुमानम् इतिचेत् यतोदेवदत्तोजीवनमरणान्यतरप्रतियोगी प्राणित्वात् मद्वत् इति सामान्य-

तोदृष्टमनुमानं लाघवतर्कसहकारेण जीवनप्रतियोगित्वं विषयीकरोति। तथा सति जीवित्वस्य निश्चयादनुमानादेव तत्सिद्धिः। न च बहिःसत्वकल्पनया "जीवी गृहे एव" इति नियमग्राहकप्रमाणबाधकल्पनवत्, मरणं कल्पयित्वा जीवनग्राहक-प्रमाणबाधकल्पनापि संभवतीति वाच्यम्। मरणस्थले देवदत्तःशतवर्षजीवी, जीवी गृहे एव, इति नियमद्वयस्यैव बाधा स्यात्, जीवनबाधे तन्नियमबाधस्यावश्यकत्वात्। किं च शतवर्षजीविनोऽद्य जीवति, श्वोजीविष्यति, इत्यादि बहुतरलवक्षणमुहूर्तादि-समयोपाधिनियतं जीवनमिति तद्बाधे बहुतरव्याप्तिबाधः स्यात्, जीवीगृहे एव इत्यस्य बाधे तु देवदत्ततदवयवगृहसत्वव्याप्तिरल्पैव बाधिता भवति। किं च मरणा-पेक्षया जीवनं लघु इति ज्ञानात्तदेव कल्पयितुमुचितम्।

अपि च नियमद्वयविषयकसंशयानन्तरं अनयोरकतरं अप्रमाणं विरुद्धार्थ-कत्वादिति सामान्यतोदृष्टमनुमानं "ज्योतिःशास्त्राद् यथार्थजीवनग्राहकं" लाघव-तर्कसहकारेण जीवनविषयकं गृहसत्वनियमग्राहकस्यैवा प्रामाण्यं पर्यवसाययतीति-जीवित्वनिश्चयः। न हिं जीवननियमग्राहकयोः प्रमाणयोस्तुल्यबलत्वे बहिःसत्व-कल्पना संभवति, विशेषदर्शनाभावात। तस्माद् यत्र शतवर्षजीवित्वं दृढतरप्रामाणा-वधृतं गृहाभावश्च निश्चितः तत्र बहिः सत्वकल्पनम्, न तु जीवनसंशये, इति क्व जीवित्वस्य संशयः।

न च गृहनिष्ठाभाव-देवदत्तनिष्ठबहिःसत्वयोर्व्यधिकरणत्वादनुमानाऽसंभवा-दनुपपत्तिज्ञानं करणमिति वाच्यम्। उपरि सविता भूमेरालोकवत्त्वादित्यनुमान-वदत्रापि गृहनिष्ठाभावप्रतियोगित्वेनाऽनुमानसंभवात्। उक्तानुमाने हि भूमिः पक्षः सवितृसंयुक्तोपरिदेशकत्वं साध्यम्। उपर्यवच्छेदेना लोकसंयोगो हेतुः। एतेन भूमिनिष्ठाऽऽलोकसंयोगस्य कथमुपरिदेशे संयोगसंबन्धेन सवित्रनुमापकत्वम्, पक्षाऽवृत्तित्वादव्याप्यत्वाच्चेति निरस्तम्। न च गृहनिष्ठाभावप्रतियोगित्वस्य देवदत्तधर्मतया तस्य चाऽसन्निकृष्टतया प्रत्यक्षेण ज्ञातुमशक्यत्वात् देवदत्तविशेष्यक-तृतीयलिंगपरामर्शाऽसंभवाच्च नानुमानम्, अतो व्यतिरेकव्याप्तिमुपजीव्य जीवि-नोदेवदत्तस्य गृहाभावोबहिःसत्वं कल्पयतीति वाच्यम्। देवदत्तस्याऽसन्निकृष्टत्वेपि गृहनिष्ठाभावप्रतियोगित्वस्य ( तन्निष्ठस्य ) प्रत्यक्षेणैव गृहीतुं शक्यत्वात्।

तथा हि गृहे देवदत्तस्याऽभाव इति प्रत्यक्षं तावत् देवदत्तं षष्ठ्यर्थं च "प्रतियोगित्वलक्षणमभावसंबन्धं" विषयीकरोति। प्रतियोगिना सममभावस्य संबन्धान्तराभावात्। संबन्धज्ञानस्य संबन्धिद्वयविषयकत्वात्, अभावप्रत्ययस्य विशिष्टवैशिष्ट्यावगाहित्वनियमाच्च देवदत्तप्रतियोगिकाभावस्य गृहवृत्तित्वम्, तद्वत तुल्यवित्तिवेद्यतया देवदत्तस्य गृहवृत्त्यभावप्रतियोगित्वमपि प्रत्यक्षेणैव शक्यं गृहीतुम्। प्रत्यक्षोपस्थिते च देवदत्तस्य गृहनिष्ठाभावप्रतियोगित्वे स्मृतव्याप्ति-वैशिष्ट्यमपि सुग्रहमेव। न चैवमपि देवदत्तविशेष्यकतृतीयलिंगपरामर्शाऽसंभ-वात्कथमनुमितिरिति वाच्यम्। पक्षवृत्तिलिंगपरामर्शस्य लाघवादनुमितिहेतुत्वो-पगमात्। सहकारिवशान्मनसैव स्मृतदेवदत्तविशेष्यकतृतीयलिंगपरामर्शसंभवाच्च।

तदप्यनुमानेन गतार्थत्वान्नेष्यते। तथा हि यत्र जीवित्वस्य बहिः सत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिः सत्त्वमनुमितौ भासते। एवं पीनोदेवदत्तोदिवा न भुङ्क्ते, इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद् भोजनसिद्धौ दिवाभोजनबाधे रात्रिभोजनं सिद्ध्यतीति।

नैयायिक कहता है कि—"तदनुमानेन गतार्थत्वात् नेष्यते" अर्थात् शतवर्षजीवी देवदत्त के बहिःसत्त्व का ज्ञान अनुमान प्रमाण से ही जब कि सम्भव है तो इसके लिये स्वतन्त्र एक अर्थापत्ति प्रमाण इष्ट नहीं है, तथाहि—जब कि देवदत्त में रहने वाले जीवित्व में बहिःसत्त्व एवं गृहसत्त्व अन्यतर (दोनों में से एक) की व्याप्यता का निश्चय हो चुका तब उस जीवी देवदत्त में गृहसत्त्व-बहिःसत्त्व अन्यतर की सिद्धि (निश्चय) हो जाने पर प्रत्यक्षतः गृहसत्त्व का बाध हो जाने से बहिःसत्त्व ही अनुमिति में भासता है कि—"देवदत्तो बहिरस्ति जीवित्वेसति गृहेऽसत्त्वात्"।

इसी प्रकार "देवदत्त पीन (मोटा-ताजा) है–तथा दिन में नहीं खाता है" इत्यादि स्थल में जब कि दिवा भोजन का बाध है तब रात्रि भोजन अर्थतः सिद्ध हो रहा है (कि देवदत्त जब दिन में नहीं खाता है तो रात्रि को अवश्य ही खाता है) क्योंकि पीनत्व भोजन का व्याप्य है (व्याप्ति यह है कि–"यत्र=पीनत्वं तत्र=भोजनम्") इससे भोजन सिद्ध है। [अतः यहाँ पीन देवदत्त में दिवाभोजन का बाध देखकर रात्रिभोजन रूप अर्थ की आपत्ति (कल्पना) रूप अर्थापत्ति प्रमाण भी निरस्त हो गया, कारण कि देवदत्त में रात्रिभोजित्व का ज्ञान तो अनुमान से ही हो जायगा कि "देवदत्तः रात्रिभोजी दिवाऽभुञ्जानत्वे सति पीनत्वात्"]

---

न च व्यतिरेकयोर्व्याप्तिः, अन्वयस्य पक्षधर्मतेति व्याप्तिधीजन्यमपि बहिः सत्त्वज्ञानं नानुमितिः, तस्याः व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वनियमादिति वाच्यम्। अन्वयिन्येव व्याप्तिविशिष्टपक्षधर्मताज्ञानस्य हेतुत्वम्, व्यतिरेकिणि तु साध्याभावव्यापकीभूताभावप्रतियोगित्वेन पक्षधर्मस्य ज्ञानमनुमितिप्रयोजकमित्यभ्युपगमात्। यद्वा व्यतिरेकव्याप्तेरेवाऽऽन्वयेन गम्यगमकभावः, तथा हि साध्याभावव्यापकीभूतसाधनाभावस्याभावेन "साधनेन" साध्याभावाभावस्य "साध्यस्य" अवगतिः। व्यापकाभावेन व्याप्याभावस्यावश्यकत्वादिति संक्षेपः।

श्रुतार्थापत्तेः प्रमाणान्तरत्वं निरस्य दृष्टार्थापत्तेः प्रमाणत्वं निरसितुं तामुदाहरति। एवंमिति। यादृशदेवदत्ते पीनत्वं दिवाऽभुञ्जानत्वमपि दृष्टम्, दिवाऽभुञ्जानस्य तस्य पीनत्वान्यथानुपपत्तिप्रमाणेन तादृशपुरुषविशेष्यकरात्रिभोजनप्रकारकाऽर्थापत्तिप्रमा जन्यते इति। भोजनव्याप्यत्वावगमादिति। भोजनव्याप्यपीनत्ववानयमितिपरामर्शादित्यर्थः। तादृशपरामर्शे दिवाभोजनरात्रिभोजनान्यतराभा

**अभावप्रत्यक्षस्यानुभविकत्वादनुपलम्भोपि न प्रमाणान्तरम्। किं चानुपलम्भस्याज्ञातस्य हेतुत्वे ज्ञानाऽकरणकत्वात्प्रत्यक्षत्वम्। ज्ञातस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था।**

अनुपलंभ ( अनुपलब्धि ) भी कोई अभाव का ग्राहक अतिरिक्त प्रमाण नहीं है कारण कि "घटाभाववद्भूतलम्" यहां पर विशेषणतासन्निकर्ष से अभाव का प्रत्यक्ष अनुभव सिद्ध है ( अतः प्रत्यक्षप्रमाण ही जब कि अभाव ग्राहक हो रहा है तो अनुपलब्धि को भी फिर एक अतिरिक्त प्रमाण मानने की क्या आवश्यकता है, इस वास्ते अनुपब्धि का प्रत्यक्षप्रमाण में ही अन्तर्भाव है )

---

व्यापकीभूताभावप्रतियोगित्वरूपव्याप्तिप्रकारकनिश्चयः कारणम्। **भोजनसिद्धाविति।** दिवाभोजनरात्रिभोजनान्यतरवान् इत्यनुमितौ इत्यर्थः। **दिवाभोजनबाधेसतीति।** दिवाभोजित्वाभावनिश्चये सतीत्यर्थः। इतरबाधनिश्चयसहकृतात्तादृशपरामर्शादिति यावत्। **रात्रिभोजनमिति।** रात्रिभोजनमात्रमित्यर्थः। **सिद्धयतीति।** अयं रात्रिभोजी दिवाऽभुञ्जानत्वे सति पीनत्वादित्यनुमानेन रात्रिभोजनं सिद्धयतीत्यर्थः।

मीमांसकानां अर्थापत्तिसामग्रीकाले नैयायिकाभिमतानुमितिसामग्र्याः नियमतः सत्वे विवाद एव, तथा हि मीमांसकैरर्थापत्तिरापत्तिरूपैव प्रमाणान्तरतया स्वीक्रियते। आपत्तिं प्रति आपाद्यव्याप्याऽऽपादकवत्तानिश्चयः कारणम्। तथा च चैत्रो यदि गृहसत्त्वबहिःसत्वान्यतराभावान् तदाजीवित्वाभाववान् स्यादित्याकारिकाया आपत्तेः गृहसत्त्वबाधसहकृताया बहिःसत्वकल्पकत्वं तदैव स्यात् यदि तादृशापत्तेः पूर्वं आपाद्यापादकयोर्व्याप्तिनिश्चयः स्यात्, तादृशव्याप्तिनिश्चयस्य च जीवित्वे गृहसत्त्वबहिःसत्वयो व्यतिरेकनिश्चयरूपतायाः आवश्यकत्वमिति अनुमानेनैव चारितार्थ्यं संभवदुक्तिकमेवेति।

इत्यर्थापत्तेः प्रमाणान्तरत्वनिरासः।

**अभावप्रत्यक्षस्यानुभविकत्वादिति।** घटाभावप्रत्यक्षस्याऽनुभवसिद्धत्वादित्यर्थः। तथा च घटाभावं साक्षात्करोमीत्यनुभवात् अनुपलब्धिजन्याऽभावप्रतीतेः प्रत्यक्षत्वं, न तु तद्विजातीयप्रमात्वं यत्रानुपलब्धिः प्रमाणान्तरं स्यात् इति भावः। विमतमनुपलब्धिजन्यमभावज्ञानमिन्द्रियकरणकं प्रत्यक्षज्ञानत्वात् घटादिप्रत्यक्षवदित्यनुमानेनाऽभावज्ञानस्येन्द्रियकरणकत्वसिद्धिः। नैयायिकमते अभावप्रत्यक्षे इन्द्रियमेव करणम्, अनुपलब्धिः सहकारिणी न तु करणम्, व्यापारवत्वाभावात्, व्यापारवदसाधारणकारणस्यैव करणत्वात्। एवमिन्द्रियाणि अभावविषयकप्रत्यक्षस्वरूपयोग्यानि तत्प्रतियोगिविषयकप्रत्यक्षस्वरूपयोग्यत्वात्। योयत्प्रतियोगिग्राहकः स

एवं चेष्टापि न प्रमाणान्तरं तस्याः संकेतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावात्। यत्र च व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति ॥१४४॥

एवं चेष्टा भी अतिरिक्त प्रमाण नहीं है क्योंकि चेष्टा भी नेत्र आदि के निमेष द्वारा आह्वानरूप जो संकेतितअर्थ तादृशअर्थज्ञान का कारण जो शब्द उस शब्द का स्मारक होने के नाते लिपि आदि के समान है, अर्थात् लिपि आदि से होनेवाला बोध जैसे शाब्दबोधरूप है अतः लिपि जैसे प्रमाणान्तर नहीं है, वैसे ही चेष्टा भी प्रमाणान्तर नहीं है किन्तु शब्द में ही अन्तर्भाव है। और जिस स्थल में चेष्टा के द्वारा व्याप्तिज्ञान होकर ही बोध होता है उस स्थल में वह बोध अनुमितिरूप है इस नाते चेष्टा का अनुमान में ही अन्तर्भाव है।

---

तदभावग्राहक इति सामान्यतोव्याप्त्या चेन्द्रियाणामभावग्राहकत्वम्। यथाऽनुमानं घटस्येव घटाभावस्यापि ग्राहकमिति दृष्टान्तोबोध्यः।

न च अनन्यथासिद्धत्वमुपाधिः। तस्य साध्यव्यापकताऽनुपलब्धौ, इन्द्रिये च साधनाऽव्यापकता, प्रतियोगिग्राहकत्वसत्वेपि अनन्यथासिद्धत्वाभावात्, अधिकरणप्रत्यक्षेण इन्द्रियस्याऽन्यथासिद्धत्वात्। एवं च प्रतियोगिग्राहकत्वं अभावग्राहकत्वव्यभिचारि अन्यथासिद्धत्वव्यभिचारित्वादित्यनुमानेन साध्यव्यभिचारोऽनुमेय इति वाच्यम्। व्यापारेण व्यापारिणोऽन्यथासिद्ध्यभावात्, अन्यथा भ्रम्यादिना दण्डादेरपि अन्यथासिद्धत्वापत्तेः। एवमिन्द्रियमभावप्रमाकरणं तद्-भ्रमकरणत्वात् रूपप्रमाकरणचक्षुर्वदित्यनुमानेनेन्द्रियाणां करणत्वसिद्धिः। अ-भावः दोषोऽप्रमायाजनकः, दोषश्च इन्द्रियनिष्ठ एव, अनुपलब्धेर्दोषवत्वाभावात् पित्तादिना इन्द्रियस्यैव दुष्टत्वादिति। एव घटाभाववद्भूतलमिति विशिष्ट धीर्नेन्द्रियजन्या अभावधीत्वात्। तन्मतेऽभावधिय इन्द्रियाजन्यत्वादितिभावः। नानुपलब्धिकारणजा भावधीत्वात्। अधिकरणादिभावपदार्थज्ञानस्याऽनुपलब्धि-करणकत्वस्यत्वयाप्यनभ्युपगमादिति ध्येयम्। अत इन्द्रियंविशिष्टग्राहि इति अवश्यं स्वीकार्यम्। तदेतत्सर्वमभिप्रेत्याह। अनुपलम्भोपीति। योग्यानुपलब्धिरपीत्यर्थः। न प्रमाणान्तरमिति। न विजातीयप्रमाजनकमित्यर्थः। विप्रतिपत्तिस्तु अनुप-लब्धिरभावग्राहिका नवेत्याकारिका बोध्या। दोषान्तरमाह। किंचेति। अनुपलब्धिः स्वरूपसती कारणम्, ज्ञाता वा, आद्यं अज्ञातानुपलब्धिजन्याऽभावज्ञानस्य प्रत्यक्षत्वं न विरुद्धम्, ज्ञानाऽकरणकज्ञानत्वादित्याह। यत्रेति। अनुपलंभस्येति। अभावज्ञान-अनुपलब्धेः। अज्ञातस्य। स्वरूपसतः। ज्ञानाकरणकत्वादिति। अनुपलब्धावपि। अनवस्थेति। स्येत्यादिः। द्वितीयेत्याह। ज्ञातस्येति। तत्रापि।

सुखं तु जगतामेव काम्यं धर्मेण जायते ।
अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् । १४५

सुखं निरूपयति । सुखं तु जगतामेवेति । काम्यमभिलाषविषयः । धर्मेणेति । धर्मत्वेन सुखत्वेन कार्यकारणभाव इत्यर्थः ।

इति सुखनिरूपणम् ।

दुःखं निरूपयति । अधर्मेति । अधर्मत्वेन दुःखत्वेन कार्यकारणभाव इत्यर्थः । प्रतिकूलमिति । दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकद्वेषविषय इत्यर्थः । १४५

इति दुःखनिरूपणम् ।

सुख का निरूपण करते हैं—सुखन्त्विति । सब स्पष्ट ही है ॥१४५॥
दुःख का निरूपण करते हैं—अधर्मेति । यह सब भी स्पष्ट ही है ।

---

न हि अनुपलब्धिः ज्ञाता सती करणम्, तथात्वे अनुपलब्धेरपि उपलब्ध्यभावरूपतया तद्ज्ञाने तदनुपलब्धिज्ञानमपेक्षणीयम, एवं तत्र तत्रापीत्यनवस्था स्यादिति भावः । न चाऽभावग्रहे चक्षुरादेरन्वयव्यतिरेकोऽसिद्धः । निमीलितलोचनस्याऽन्धस्य च घटाभावप्रत्यक्षापत्तेः । न च भवत्येव तस्यापि स्पार्शनमिति वाच्यम् । तत्रापि त्वगिन्द्रियान्वयव्यतिरेकानुविधायित्वात् । अन्यथोपहतत्वगिन्द्रियस्यापि घटाभावप्रत्यक्षापत्तेः ।

नापि अधिकरणप्रत्यक्षेणाऽन्यथासिद्धिः, अधिकरणप्रत्यक्षाभावेपि आकाशे शब्दध्वंसस्य वायौ रूपाभावस्य च ग्रहात् । चेष्टापीति । अपिना अर्थापत्तिपरिग्रहः । न प्रमाणान्तरमिति । न विजातीयप्रमाजनकमित्यर्थः । मानाभावादिति हेतुः पूरणीयः । तस्याः । संकेतग्राहकशब्दस्मारकत्वेनेति । अभिमतार्थकशब्दस्मारकत्वेनेत्यर्थः । लिप्यादिसमशीलत्वादिति । लिप्यादितुल्यत्वादित्यर्थः । शब्दे एवान्तर्भवतीति । शब्दप्रमाणमुत्पाद्य विश्राम्यतीत्यर्थः । तथा च यथा लिपिदर्शनस्य शब्दस्मृतिद्वाराशाब्दबोधप्रयोजकत्वम् तथा चेष्टाविशेषदर्शनस्यापि शब्दविशेषस्मृतिद्वारा शाब्दबोधप्रयोजकत्वम्, न तु प्रमाणान्तरत्वमिति भावः । यत्र च व्याप्तिग्रह इति । यत्राऽऽह्वानानुकूलचेष्टा तत्राऽऽह्वानकर्तृत्वमितिव्याप्तिग्रहः । तत्रानुमितिरेवेति । अयं मामाह्वयति विलक्षणचेष्टावत्वादित्यनुमितिरेवेत्यर्थः । एवकारेण प्रमान्तरत्वव्यवच्छेदः । १४४

अनुपलब्धि चेष्टयोः प्रमाणान्तरत्वनिरूपणम् ।

**जगतामेवेति** । प्राणिनामेवेत्यर्थः । *अभिलापविषय इति* । इच्छाविषय इत्यर्थः । इच्छाविषये भोजनादावतिव्याप्तिवारणाय अन्येच्छानधीनत्वमिच्छायां विशेषणीयम् ।

फलं द्विविधम् । गौणमुख्यभेदात् । मुख्यं फलं सुखं दुःखाभावश्च । गौणफलं तु सुखसाधनं दुःखाभावसाधनं च । तत्त्वं च इच्छाविषयत्वम् । तथा चेतरेच्छानधीनेच्छाविषयत्वं सुखस्य लक्षणम् । दुःखाभावस्यापि तादृशत्वात्तत्रातिव्याप्तिवारणाय द्वेषानधीनत्वमपि इच्छायां विशेषणीयम् । एवं सुखत्वजातिमत्त्वमपि तल्लक्षणं बोध्यम् । स्वाश्रयसमानाधिकरणसमानकालीनसाक्षात्कारविषयताव्याप्य-दुःखत्वेतरजातिमत्सुखम् । इदं च चतुर्विधम् । किञ्चिदाध्यासिकं यथा मृगयादिषु । किञ्चिदाभिमानिकं यथा चुम्बनादिषु । किञ्चिद्वैषयिकं यथासुरभि मधुर गन्धादिसन्निकर्षाज्जायते । तत्र सन्निकर्षो न सुखहेतुः सत्यपि तस्मिन् विषयाऽज्ञाने सुखानुत्पत्तेः, किन्तु विषयज्ञानवत्त्येव सुखोत्पत्तेः, तद्ज्ञानमेव तथा । नन्वेवं योगिनामसत्यपि स्रक्चन्दनादिसंयोगे तदापत्तिः । न चेष्टापत्तिः । कायव्यूहेन्द्रियार्थनिर्माणवैयर्थ्यात्, इष्टानिष्टसाक्षात्कारस्यैकस्मिन्नेव शरीरे मनसैव सिद्धत्वादितिचेन्न । कायव्यूहं विना यौगपद्यानुपपत्तेः । किञ्चिन्मानोरथिकं यथा भाविपुत्रजन्मादिनोत्सवचिन्तनादिषु उत्पद्यमानम् ।

ननु स्वप्नान्तिकं सुखं पञ्चमं स्यात्, अस्ति च तत् । स्वप्नसुखप्रतीतेर्बाधकं विना प्रमात्वात् । चन्दनादिसन्निकर्षस्तु सुखविशेषे एव हेतुः, अतो न कारणबाधोपि, कारणं तत्र स्वप्ने विषयसाक्षात्कार एवेति चेन्न । चन्दनादिजन्यसुखजातीयत्वस्यैव तथानुभवेनेतरकारणकत्वाकल्पने कारणबाधात्कार्यस्याऽसत्वात्भ्रमत्वात् । तत्र स्वप्नोन सुखं न वा दुःखं यदि च तदुभयान्यतरसाधनमपि न स्याद् धर्माधर्मकार्यो न स्यात्, स्वीकृतं च तथात्वम्, अन्यथा स्वप्नवैचित्र्यानुपपत्तेरिति वाच्यम् । स्वप्नस्य सुखदुःखसाक्षात्कारत्वेनाऽदृष्टफलकत्वात् । सुखमेव धर्ममात्रजन्यशरीरोपभोग्यं स्वर्ग इत्युच्यते । सुखं ज्ञानविशेष इति वाह्याः । **सुखत्वेनेति** । इदं च प्राचीनमतम् । जन्यसुखत्वेनेति नव्याः । तैर्नित्यसुखाङ्गीकारात् ।

इति सुखनिरूपणम् ।

अहं दुःखीति प्रतीतिसाक्षिकोगुणविशेषोदुःखम् । दुःखत्वजातिमत्त्वं वा दुःखस्य लक्षणम् । तच्च द्विविधं ऐहिकं आमुष्मिकं च । आद्यं च दुरीश्वरोपसर्पणादिप्रभवम् । अन्त्यं च अधर्ममात्रजन्यशरीरोपभोग्यं यन्नरक इत्याख्यायते । **सर्वेषां** । प्राणिनां । **स्वाभाविकेति** । अन्यविषयकद्वेषानधीनेत्यर्थः । तथा चाऽन्यविषयकद्वेषानधीनद्वेषविषयो दुःखमिति भावः । तेन दुःखोपाये सर्पादौ नातिव्याप्तिः । १४५

इति दुःखनिरूपणम् ।

**निर्दुःखत्वे सुखे चेच्छा तद्ज्ञानादेव जायते ।**
**इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि । १४६**

इच्छांनिरूपयति । निर्दुःखत्वे इति । इच्छा द्विविधा । फलविषयिणी उपायविषयिणी च । फलं तु सुखं दुःखाभावश्च । तत्र फलेच्छां प्रति फलज्ञानं कारणम् । अत एव पुरुषार्थः संभवति । यद् ज्ञातं सत् स्ववृत्तितयेष्यते स पुरुषार्थ इति तल्लक्षणात् । इतरेच्छानधीनेच्छाविषयत्वं फलितोर्थः । उपायेच्छां प्रति इष्टसाधनताज्ञानं कारणम् । १४६

इच्छा का निरूपण करते हैं–निर्दुःखत्व इति ।

निर्दुःखत्व ( दुःखाभाव ) में तथा सुख में इच्छा होती है । और वह इच्छा दुःखाभाव–सुख दोनों के ज्ञान से होती है । और सुख-दुःखाभाव के उपाय ( साधन ) में यदि इष्टोपायत्व प्रकारक ज्ञान "इदं मदिष्टसाधनम्" हो तब इच्छा होती है ।

इच्छा दो प्रकार की है फलेच्छा तथा उपायेच्छा । फल सुख और दुःखाभाव को कहते हैं । फलेच्छा के प्रति फलज्ञान कारण है । इसीलिये सुख-दुःखाभाव दोनों पुरुषार्थ हो सकते हैं । कारण कि जो ज्ञात होकर आत्मवृत्तितया इच्छा का विषय हो वही पुरुषार्थ कहलाता है, अर्थात् दूसरे की इच्छा के अनधीन इच्छा ( अपनी इच्छा ) का विषय जो हो वही पुरुषार्थ वस्तु है । उपायेच्छा के प्रति इष्टसाधनताज्ञान कारण होता है ॥१४६॥

---

इच्छांनिरूपयतीति । क्रमप्राप्तामित्यादिः । इच्छामीतिप्रतीतिसिद्धेच्छात्वजातिमत्वमिच्छालक्षणम् । कामो भिलापो रागः संकल्पः कारुण्यं वैराग्यं माया भावः इत्यादयइच्छाभेदाः । तत्र मैथुनेच्छा कामः । भोजनादीच्छा अभिलाषः । उत्कटफलेच्छा रागः । अनागतफलेच्छा संकल्पः । निरूपधिपरदुःखप्रहाणेच्छा कारुण्यम् । दोषदर्शनाद्विषयपरित्यागेच्छा वैराग्यम् । परवञ्चनेच्छा माया । अन्तर्निगूढेच्छा भावः । परेष्टनिवारणेच्छा मात्सर्यम् । अप्राप्ते प्राप्तीच्छा स्पृहा । इदं मा क्षीयतामितीच्छा तृष्णा । उचितव्ययहेतूपस्थितौधनरक्षणेच्छाकार्पण्यम् । कपटेन धार्मिकत्वादिना स्वोत्कर्षप्रतिपादनेच्छा दंभः । एवमन्येपि ।

भगवदिच्छायामपि सा जातिरस्त्येव न तत्राव्याप्तिः । इच्छायाद्वैविध्यमनुपदमेव वक्ष्यति । तत्र फलेच्छास्वरूपं तत्कारणं चादावाह । **मूले–निर्दुःखत्वे** इति । तथा च दुःखाभावविषयिणीसुखविषयिणी च या इच्छा सैव फलेच्छा । सा च दुःखाभावोजायतामित्याकारिका सुखं जायतामित्याकारिका च बोध्या । तथा च फलविशेष्यकेच्छात्वं फलेच्छालक्षणम् । फलेच्छाकारणमाह । **तद्ज्ञानादेवेति** सुख-दुःखाभावज्ञानादेवेत्यर्थः । तथा च फलेच्छांप्रति फलज्ञानं कारणमिति–

चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत् ।
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥१४७॥

---

उपायेच्छास्वरूपं तत्कारणं चाह । **इच्छा तु तदुपाये इति ।** फलोपाये इत्यर्थः । तथा चोपायविशेष्यकेच्छात्वमुपायेच्छालक्षणम् । उपायेच्छाकारणमाह । **इष्टोपायत्वधीर्यदीति ।** तथाचोपायेच्छां प्रति इष्टसाधनताज्ञानं कारणमित्यर्थः । तत्र इच्छयोर्मध्ये । **अतएव ।** फलज्ञानस्य फलेच्छां प्रति हेतुत्वादेव । **पुरुषार्थः संभवतीति ।** सुखं दुःखाभावश्च पुरुषार्थो भवतीत्यर्थः । पुरुषार्थस्वरूपमाह । **यद्ज्ञातं सदिति ।** यद्ज्ञातंसदेवेत्यर्थः । स्ववृत्तितयेति । **इष्यते इति ।** इच्छाविषयोभवतीत्यर्थः । तथा च स्वज्ञानमात्राधीनेच्छाविषयत्वं पुरुषार्थत्वमिति भावः । अथैवमुपायेऽतिव्याप्तिः, तस्यापि स्वविषयकेष्टसाधनताज्ञानजन्येच्छाविषयत्वादत आह । **इतरेच्छेति ।** **फलितोर्थ** तादृशेच्छाविषयत्वं पुरुषार्थत्वमिति फलितार्थः । "**इच्छा तु तदुपायेत्यादिष्टोपायत्वधीर्यदीति** मूलस्य प्रतीकमधृत्वाऽर्थमाह । **उपायेच्छांप्रतीति ।** सुखत्वप्रकारत्वानिरूपितोद्देश्यतासंबन्धेनेच्छां प्रतीत्यर्थः । तेन सुखत्वेन पाकाद्यवगाहि "सुखमित्याकारक" भ्रमोत्तरं पाकविषयकेच्छोत्पादेन तत्र चेष्टसाधनज्ञानविरहेपि न व्यभिचारः । अथैतादृशकार्यकारणभावे किं प्रमाणमितिचेन्न । निष्फले चैत्यवन्दनादौ प्रवृत्त्यभावस्यैव प्रमाणत्वात् । अथैवमपि फलेच्छाविरहे फलसाधनताज्ञानसत्वे फलोपायेच्छोत्पादापत्तिः, न च स्वरूपसदिच्छाविषयसाधनताज्ञानस्य कारणत्वोक्तौ न दोषः । अत एवोपायेच्छां प्रति फलेच्छाकारणमितिमूलसंगतिरिति वाच्यम् । यत्रौदनस्यौदनत्वेन "ओदनोभवतु इति" इच्छाविषयता, द्रव्यत्वेनौदनसाधनता च पाके गृहीता, तत्र पाकेच्छोत्पादापत्तेः, एवं उक्तस्थले ओदनादिविषयकेच्छाविरहकालेपि कालान्तरीणतद्विषयतामादायेदानीं तत्ततसाधनताज्ञानसत्वेपि पाकाद्यविच्छोत्पादापत्तेश्चेति चेन्न । स्वरूपसदिच्छाविषयतावच्छेदकावच्छिन्नसाधनताज्ञानस्यैव उपायेच्छां प्रति कारणत्वादिति संक्षेपः । १४६

चिकीर्षां निरूपयति । **चिकीर्षेति ।** **कृतिसाध्यत्वप्रकारा इति ।** कृतिसाध्यत्वं प्रकारोयत्रेति बहुव्रीहिविग्रहप्रतिपादार्थमाह । **कृतिसाध्यत्वप्रकारिकेति । कृतिसाध्यविषयिणीति** स्पष्टार्थम् । तथा च कृतिसाध्यत्वप्रकारकेच्छात्वं चिकीर्षालक्षणम् । वस्तुतः कर्तुमिच्छा चिकीर्षा । अत्र प्रयोज्यत्वं तुमुन्प्रत्ययार्थः । तथा च व्युत्पत्तिबलादेवकृतिसाध्यत्वप्रकारिका इच्छेति अर्थोलब्ध एव । इच्छायाः कृतिसाध्यत्वप्रकारकत्वे अनुभवमप्याह । **पाकंकृत्यासाधयामीति ।** अत्र पाकमिति

चिकीर्षेति । कृतिसाध्यत्वप्रकारिका कृति साध्यविषयिणीच्छा चिकीर्षा । पाकं कृत्यासाधयामीति तदनुभवात् । चिकीर्षां प्रति कृतिसाध्यता ज्ञानमिष्टसाधनताज्ञानं च कारणम् । तद्धेतुरिति । अतएव वृष्ट्यादौ कृति-साध्यताज्ञानाभावान्न चिकीर्षा ॥१४७॥

कृतिसाध्यत्वप्रकारिका अर्थात् कृतिसाध्यविषयिणी जो इच्छा उसे चिकीर्षा कहते हैं "पाकं कृत्या साधयामि" यह अनुभव होता है। चिकीर्षा के प्रति कृतिसाध्यताज्ञान अर्थात् "इदं मत्कृतिसाध्यम्" तथा इष्टसाधनताज्ञान अर्थात् "इदं मदिष्टसाधनम्" यह ज्ञान कारण होता है। इसीलिये कृतिसाध्यताज्ञानरूप कारण के न रहने प्रयुक्त ही वृष्टि में चिकीर्षा नहीं होती है ॥१४७॥

---

द्वितीयार्थो विषयकत्वं "विशेष्यकत्वं" धात्वर्थेच्छायां तस्याऽन्वयः । कृत्या । साध्यतासंबन्धेन कृतिप्रकारेण कृतिसाध्यत्वप्रकारेणेति यावत् । साधयामीति । इच्छामीत्यर्थः । तथा च पाकविशेष्यककृतिसाध्यत्वप्रकारकेच्छावानहमितिबोधा-त्तादृशार्थे प्रमाणत्वमनुभवस्येति भावः । मूले तद्धेतुरिति । चिकीर्षाहेतुरित्यर्थः । कृतिसाध्येष्टसाधनयोर्द्वन्द्वः । तयोर्भावस्तत्त्वम् । तस्य मतिरित्यर्थः । फलितार्थमाह । चिकीर्षां प्रतीति । तथा च केवलेष्टसाधनताज्ञानादुपायेच्छा भवति कृतिसाध्यता-ज्ञानसमानकालीनेष्टसाधनताज्ञानाच्चिकीर्षा भवतीति विवेकः ।

अथ कृत्यसाध्यत्वप्रकारकनिश्चयस्य चिकीर्षां प्रति प्रतिबन्धकत्वमस्तु—एवं च तादृशनिश्चयाभावस्य प्रतिबन्धकाभावविधया कारणत्वेन निर्वाहे अलं कृति साध्यताज्ञानस्य कारणत्वेनेत्यत आह। अत एवेति । कृतिसाध्यत्वप्रकारकज्ञानस्य हेतुत्वादेवेत्यर्थः । न चिकीर्षेति । अन्यथा कृत्यसाध्यताज्ञानाभावरूपकारणात्तत्र चिकीर्षापत्तेः, कृतिसाध्यताज्ञानस्य हेतुत्वमावश्यकमिति भावः ॥१४७॥

ननु एतावता उपायेच्छां प्रति इष्टसाधनताज्ञानं कारणम्, चिकीर्षां प्रति कृतिसाध्यताज्ञानं इष्टसाधनताज्ञानं च कारणमिति सिद्धम्, एवं च मधुविषसंयुक्तान्न-भक्षणादौ चिकीर्षापत्तिः, तादृशभक्षणादौ तृप्तिरूपेष्टसाधनत्व कृतिसाध्यत्वज्ञान-सत्वात्, ततश्च प्रवृत्त्यापत्तिः, न चेष्टापत्तिः संभवतीत्यत आह। मूले-बलवद्द्विष्टेति । द्विष्टत्वं द्वेषविषयत्वम्, तच्च दुःखे, एवं च द्वेषविषयीभूत दुःखसाधनताज्ञानं चिकीर्षाप्रतिबन्धकमित्यर्थः । तदेवाह । बलवदिति । बलवत्त्वं द्वेषनिष्ठोजातिविशेषः । तेन "कष्टं कर्म" इति न्यायेनयागस्यापि नान्तरीयकदुःखजनकतया द्वेष-विषयीभूतदुःखसाधनताधीसत्वेपि न चिकीर्षानुपपत्तिः । तत्र । चिकीर्षायाम् । प्रतिबन्धकमिति । तथा च चिकीर्षां प्रति बलवद्द्वेषविषयतावच्छेदकीभूतधर्मावच्छिन्न-निरूपितसाधनताज्ञानं प्रतिबन्धकमित्यर्थः । एवं च मधुविषसंयुक्तान्नभक्षणादौ निरुक्तकारणसत्वेपि प्रतिबन्धकसत्वान्न चिकीर्षापत्तिरिति भावः । अतः । प्रतिबन्धक-

**बलवद्द्विष्टहेतुत्वमतिः स्यात् प्रतिबन्धिका ।**

**बलवदिति । बलवद्द्विष्टसाधनताज्ञानं प्रतिबन्धकम्, अतो मधुविष-संपृक्तान्नभोजने न चिकीर्षा । बलवद्द्वेषः प्रतिबन्धक इत्यन्ये ॥**

बलवद्द्विष्टसाधनताज्ञान को चिकीर्षा के प्रति प्रतिबन्धक माना गया है इसी वास्ते मधु-विष सम्पृक्त अन्नभोजन में चिकीर्षा नहीं होती है। अन्य कोई लोग कहते हैं कि मधुविष सम्पृक्त अन्नभोजन में न होनेवाली चिकीर्षा के प्रति बलवद्द्वेष ही प्रतिबन्धक है ॥१४८॥

---

सत्वात् । **बलवद्द्वेष** इति । बलवद्द्विष्टसाधनताज्ञानाधीनद्वेष इत्यर्थः । फले द्वेषात्त-दुपायेपि द्वेष इति भावः । तथा च पाकादिगोचरेच्छायां "बलवद्द्वेषविषयीभूतदु.ख साधनताज्ञानजन्यः" पाकविषयकद्वेषः प्रतिबन्धक इतिध्येयम् ।

यत्र यदा इष्टसाधनताज्ञानं द्विष्टसाधनताज्ञानजनकसामग्रीसमवधानं च तदुत्तरक्षणे द्विष्टसाधनताज्ञानस्यैव इच्छाया उत्पत्तिप्रसंगः, प्रतिबन्धकाभावविधया द्वेषाभावरूप सत्वादित्यस्वरसोऽन्ये इत्यनेनसूचितः । मूले-तदिति । बलवद्द्विष्टेत्यर्थः तदेवाह । **बलवदनिष्टेति** । यदा बलवदनिष्टानुबन्धित्वनिश्चयः बलवदनिष्टाननु-बन्धित्वज्ञान च नास्ति तदा इच्छानुत्पत्तिप्रसंगः, इत्यस्वरसः कस्यचिन्मते इत्यनेन दर्शितः ।

अथ बलवदनिष्टाननुबन्धित्वज्ञानस्याहेतुत्वे तस्य विध्यर्थत्वानुपपत्तिः, प्रवृत्तिजनकेच्छाजनकज्ञानविषयस्यैव विध्यर्थत्वात् । प्रवर्तकचिकीर्षाया हेतुधी-विषयोविधिरित्याचार्योक्ते । न चेष्टापत्तिः । न कलञ्जंभक्षयेदित्यादिवाक्यानाम-प्रामाण्यप्रसंगात् । कलञ्जभक्षणे कृतिसाध्यत्वस्य इष्टसाधनत्वस्य च सत्वेनाऽगत्या बलवदनिष्टाननुबन्धित्वस्य विध्यर्थत्वावश्यकत्वादिति चेन्न । तद्ज्ञानस्य प्रवृत्त्यजन-कत्वेपि प्रवृत्तिजनकेच्छाप्रतिबन्धकज्ञानविघटकत्वेन प्रवृत्तिप्रयोजकतया तद्विषयस्य विध्यर्थत्वोपपत्तेः ॥१४८॥

इति इच्छानिरूपणम्

द्वेषं निरूपयति । **द्विष्टेति** । दुःखोपायविषयकद्वेषं प्रति बलवद्द्विष्टसाधनता-ज्ञानं कारणमित्यर्थः । बलवदिष्टसाधनताज्ञानं प्रतिबन्धकम्, तेन नान्तरीयकदुःख-जनके पाठकादौ न द्वेषः ।

निवृत्तेः साक्षादनुकूलत्वं द्वेषलक्षणम् । ज्ञानवारणाय साक्षादिति । दुःखोपाय-**विषयकमिति** । दुःखोपायभूता ये सर्पादयः तद्विषयकमित्यर्थः एवं च द्विष्टसाधनता-ज्ञानजन्यतावच्छेदकद्वेषत्वजातिमत्वं द्वेषस्य लक्षणम् । तस्य तु द्रोहः क्रोधो मन्यु-रक्षमा-अमर्ष इति भेदाः । अलक्षितविकारश्चिरानुवृत्तापकारावसानोद्रोहः । शरीरादि-विकारहेतुः क्षणविनाशी द्वेषः क्रोधः । अपकाराऽसमर्थस्याऽन्तर्निगूढो द्वेषो मन्युः ।

तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥१४८॥

तदहेतुत्वेति। बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः ॥१४८॥

इति इच्छानिरूपणम्

द्विष्टसाधनताबुद्धिर्भवेद् द्वेषस्य कारणम्।

प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥१४९॥

एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्त्तितम् ॥

प्रयत्नं निरूपयति प्रवृत्तिश्चेति। प्रवृत्ति-निवृत्ति-जीवनयोनियत्नभेदात् प्रयत्नस्त्रिविधइत्यर्थः ॥

द्वेष का निरूपण करते हैं—द्विष्टसाधनतेति।

द्वेष दो प्रकार का है (१) दुःखविषयक, अर्थात् दुःख के प्रति जो द्वेष वह हुवा दुःखविषयक द्वेष। दूसरा दुःखोपायविषयक, अर्थात् दुःख के उपाय (कारण) जिस कारण से दुःख होता है वह दुःखोपायविषयक द्वेष कहलाता है, सो दुःखोपायविषयक द्वेष के प्रति बलवद्द्विष्टसाधनताज्ञान कारण है। और उस द्वेष के प्रति बलवद्द्विष्टसाधनताज्ञान प्रतिबन्धक है। इसलिये नान्तरीयक अर्थात् जिस दुःख के बिना पाक नहीं हो सकता है, जैसे पाकनिर्माणकाल में हाथ वगैरह का जल जाना, तथा आँख में धुआँ लगना इत्यादि। उस दुःख के जनक पाक में द्विष्टसाधनताज्ञानरूप द्वेष का कारण रहते हुवे भी द्वेष इसलिये नहीं होता है कि उस द्वेष का प्रतिबन्धक बलवदिष्टसाधनताज्ञान बैठा हुवा है क्योंकि पाक बलवान् इष्ट जो तृप्ति उसका साधन है ॥१४९॥

प्रयत्न का निरूपण करते हैं-प्रवृत्तिश्चेति ॥१५०॥

प्रवृत्ति में कौन-कौन कारण हैं—चिकीर्षेति। १—चिकीर्षा। २—कृतिसाध्यताज्ञान। ३—इष्टसाधनताज्ञान। ४—समवायिकारण का प्रत्यक्ष ये चार प्रवृत्ति में कारण होते हैं।

---

परगुणद्वेषोऽक्षमास्वगुणपरिभवाऽक्षमोद्वेषोऽमर्षः। तेन। द्वेषे बलवत्वविशेषणेन। दुःखे नान्तरीयकत्वं च प्रकृत कार्यनियतपूर्ववर्तित्वे सति प्रकृतकार्याऽजनकत्वम्।

इति द्वेषनिरूपणम्

मूले-जीवनकारणमिति। जीवनयोनिरित्यर्थः। तथा च प्रयत्नपदशक्यतावच्छेदकतया सिद्धोजातिविशेषः प्रयत्नत्वं प्रयत्नसामान्यलक्षणम्। प्रयत्न एव कृतिः भावना इति चोच्यते भाव्यते फलमनया इति व्युत्पत्तेः। तस्य भेदानाह। प्रवृत्तीत्यादि।

"प्रवृत्तोस्मीति प्रतीतिसिद्ध" प्रवृत्तित्वजातिमत्वं प्रवृत्तेर्लक्षणम्। तस्याः कारणान्याह। मूले—चिकीर्षेति। कृतिसाध्यत्वप्रकारिका इच्छेत्यर्थः। सा च

चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ॥१५०॥
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ।

चिकीर्षेत्यादि । मधुविषसंपृक्तान्नभोजनादौ बलवदनिष्टानुबन्धित्वेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः । कृतिसाध्यताज्ञानादिवद्बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यतिरेकाभ्यां प्रवृत्तौ कारणमित्यपि वदन्ति।

चन्द्रमण्डलानयन में कृतिसाध्यताज्ञान न होने से, अग्नि प्रवेश में इष्टसाधनताज्ञान न होने से, तथा द्व्यणुक को पैदा करने में परमाणु ( द्व्यणुक के कारण ) का प्रत्यक्ष न होने से, मनुष्यमात्र की प्रवृत्ति नहीं होती है । और घट के निर्माण में प्रवृत्ति कुलाल की इस कारण से होती है कि वहाँ कारणचतुष्टय मौजूद है । यह कारिकार्थ हुवा ।

मधु और विष से संपृक्त ( मिला हुवा ) अन्नस्वरूप भोजन बलवान् अनिष्ट ( मरण ) का अनुबन्धी ( कारण ) है इसलिये उसको करने की इच्छा न होने से प्रवृत्ति नहीं होती है । किसी का सिद्धान्त है कि कृतिसाध्यता-इष्टसाधनताज्ञान आदि की

---

प्रवृत्तौ कारणम्, तदसत्त्वे इतरकारणकलापसत्त्वे प्रवृत्त्यनुपपत्तेः । तथा च समवायेन प्रवृत्तिं प्रति समवायेन चिकीर्षा कारणम् । जन्यतावच्छेदकतावच्छेदकसंबन्धश्च समवायकालिकैतदुभयम् । तेन प्रवृत्तित्वस्येश्वरप्रवृत्तिवृत्तित्वेपि न क्षतिः । एवं प्रवृत्तौ कृतिसाध्यताज्ञानं कारणम् । अतश्चन्द्रमण्डलाऽऽनयने इष्टसाधनताज्ञानसत्त्वेपि कृतिसाध्यताज्ञानाभावान्न प्रवृत्तिः । एवं तत्र इष्टसाधनताज्ञानमपि कारणम्, अतो मधुविषसंपृक्तान्नभक्षणादौ कृतिसाध्यताज्ञानसत्त्वेपि न प्रवृत्तिः ।

अथ मधुविषसंपृक्तान्नभक्षणे कथं न प्रवृत्तिः, तृप्तिरूपेष्टसाधनताज्ञानसद्भावात इत्यत आह । मधुविषसंपृक्तान्नभोजनादाविति । बलवदनिष्टानुबन्धित्वेनेति । बलवदनिष्टजनकतासत्त्वेनेत्यर्थः । तादृशभोजनं बलवदनिष्टानुबन्धीति ज्ञानसत्त्वेनेति यावत् । चिकीर्षाभावादिति । तथा च चिकीर्षां प्रति बलवदनिष्टानुबन्धित्वज्ञानस्य "स्वातन्त्र्येणोक्ततया प्रतिबन्धकतायाः पूर्वं बलवद्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिके" प्रतिबन्धकत्वात् मधुविषसंपृक्तान्नभक्षणादौ प्रतिबन्धकाभावरूपकारणाभावात् चिकीर्षानुत्पत्त्या न प्रवृत्तिरिति भावः ।

कस्य चिन्मतमाह । कृतिसाध्यताज्ञानादिवदिति । आदिना चिकीर्षेष्टसाधनत्वज्ञानयोः परिग्रहः । बलवदनिष्टाननुबन्धित्वज्ञानमपीति । बलवदनिष्टाजनकत्वज्ञानमपीत्यर्थः । स्वतन्त्रेति । चिकीर्षाऽद्वारकेत्यर्थः । अन्यथा कृतिसाध्यताज्ञानादेरपि चिकीर्षायामेव हेतुत्वं स्यान्नतु प्रवृत्तौ, व्यापारेण व्यापारिणोऽन्यथासिद्धत्वमिति तु प्रकृतेऽपि समानमिति भावः । चिकीर्षां प्रति बलवदनिष्टानुबन्धित्वज्ञानाभावस्य हेतुत्वस्वीकारेणैव सामंजस्ये बलवदनिष्टाननुबन्धित्वज्ञानस्यहेतुत्वाकल्पनात्

कार्यताज्ञानं प्रवर्त्तकमिति गुरवः। तथाहि–ज्ञानस्यप्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति। साच कृतिसाध्यताज्ञानसाध्या, इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमात्। चिकीर्षा हि कृतिसाध्यत्वप्रकारिकेच्छा।

तरह बलवदनिष्ट का अननुबन्धित्व (अकारणत्व) ज्ञान भी प्रतिबन्धकाभावविधया स्वतंत्र अन्वय-व्यतिरेक के द्वारा प्रवृत्ति में कारण है। और गुरु प्रभाकर का सिद्धान्त है कि कार्यताज्ञान (कृतिसाध्यताज्ञान) प्रवृत्ति में कारण है। तथाहि ज्ञान (कृतिसाध्यता ज्ञान) प्रवृत्ति को उत्पन्न करने में चिकीर्षा के अतिरिक्त (इष्टसाधनताज्ञान आदि की) अपेक्षा नहीं रखता है। और वह चिकीर्षा कृतिसाध्यता ज्ञान से साध्य (प्रयोज्य) है, कारण कि इच्छा अपने समानप्रकारक ज्ञान से उत्पन्न होती है। (अभिप्राय यह है कि 'कर्त्तुम् इच्छा चिकीर्षा' इस व्युत्पत्ति में 'तुमुन्' प्रत्ययान्त 'कृ' धातुका अर्थ है 'कृतिसाध्य', इच्छा का 'इच्छा' ही अर्थ है अब समुदित का अर्थ हुवा "कृतिसाध्यत्वप्रकारिका इच्छा"। और यह नियम है कि इच्छा अपने समानप्रकारक ज्ञान से साध्य (जन्य) होती है। अर्थात् स्व (चिकीर्षा) में जो प्रकार (कृतिसाध्यत्व) तत्प्रकारक (कृतिसाध्यत्वप्रकारक) जो धी "घटो मत्कृतिसाध्यः", ऐसा कृतिसाध्यत्वप्रकारकज्ञान होने पर ही घट की इच्छा होती है) वही मूल में कहा है कि "इच्छायाः स्वप्रकार प्रकारक धी साध्यत्व नियमात्" अर्थात् इच्छा (चिकीर्षा) स्व (चिकीर्षा) में जो प्रकार (कृतिसाध्यत्व) तत्प्रकारक धी से नियम से साध्य है। चिकीर्षा नाम है कृतिसाध्यत्वप्रकारिका इच्छा का, चिकीर्षा

---

अन्यथा यदा बलवदनिष्टाननुबन्धित्वज्ञानं च नास्ति तदा सर्वानुभवसिद्धचिकीर्षापलापप्रसंग इत्यस्वरसोवदन्तीत्यनेन सूचितः।

अत्रेदं बोध्यम् प्रवृत्तौ चिकीर्षायाः साक्षात्कारणत्वम्, कृतिसाध्यत्वेष्टसाधनताज्ञानयोश्चिकीर्षाद्वारा हेतुत्वमिति।

प्रवृत्तिं प्रति कृतिसाध्यताज्ञानमात्रं कारणम्, अतः कृतिसाध्यत्वमेव विध्यर्थः इति प्राभाकरमतं निरसितुमादौ तन्मतमुपन्यस्यति। **कार्यताज्ञानमिति**। कृतिसाध्यताज्ञानमित्यर्थः। **प्रवर्तकमिति**। चिकीर्षाद्वारा प्रवृत्तिकारणमित्यर्थः। **गुरव** इति। वदन्तीति शेषः। **ज्ञानस्य**। कृतिसाध्यताज्ञानस्य। **चिकीर्षातिरिक्त**। चिकीर्षारूपव्यापारभिन्नं। **नापेक्षितमस्तीति**। सहकारिकारणं किमपिनास्तीत्यर्थः। तथा च कार्यताज्ञानं इष्टसाधानताज्ञानाऽसहकृतं सत् चिकार्षाद्वारा प्रवृत्तिं जनयतीति भावः। यथा श्रुते आत्ममनःसंयोगादेरपि कारणत्वादसंगत्यापत्तेः। चिकीर्षाया व्यापारत्वमुपपादयति। **साचेति**। चिकीर्षाचेत्यर्थः। चकारः एवकारार्थकः, साध्येत्युत्तरं योजनीयः। तत्र हेतुमाह। **इच्छाया** इति। चिकीर्षाया इत्यर्थः। **स्वप्रकारप्रकारकधीसाध्यत्वनियमादिति**। स्वं चिकीर्षा तस्यां प्रकार एव प्रकारोयस्यां सा स्वप्रकारप्रकारकधीः तत्साध्यत्वनियमादिति। कृतिसाध्यताज्ञानसत्वे

तत्र कृतिसाध्यत्वं प्रकारस्तत्प्रकारकज्ञानं चिकीर्षायां तद्द्वारा च प्रवृत्तौ कारणं नत्विष्टसाधनताज्ञानं तत्र हेतुः। कृत्यसाध्येऽपि चन्द्रमण्डलानयनादौ प्रवृत्त्यापत्तेः।

ननुकृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेन्न। तदभावापेक्षया कृतिसाध्यताज्ञानस्य लघुत्वात्। न च द्वयोरेव हेतुत्वं, गौरवात्। ननु

में 'कृतिसाध्यत्व' प्रकार है, इसीलिये कृतिसाध्यत्व प्रकारक ज्ञान चिकीर्षा में और चिकीर्षा द्वारा प्रवृत्ति में कारण है। किन्तु इष्टसाधनता ज्ञान प्रवृत्ति में कारण नहीं है। क्योंकि इष्टसाधनता ज्ञान को कारण मानने पर चन्द्रमण्डल के आनयन में प्रवृत्ति की आपत्ति लग जायगी। (और कृतिसाध्यताज्ञान को प्रवृत्ति में कारण मानने पर वह आपत्ति इसलिये वारित हो जाती है कि वह चन्द्रमण्डलानयन कृति से सर्वथा असाध्य है अतः कृतिसाध्यताज्ञान के अभाव होने से प्रवृत्ति नहीं होती है)।

प्रश्न—नैयायिक कहता है कि वहाँ पर अर्थात् चन्द्रमण्डलानयनस्थल में कृतिसाध्यताज्ञानाभाव को प्रतिबन्धक मान लिया जायगा, सो वहाँ पर कृतिसाध्यताज्ञानाभावरूप प्रतिबन्धक के मौजूद होने से प्रवृत्ति नहीं होती है।

उत्तर—प्रभाकर कहता है कि तदभाव (कृतिसाध्यताज्ञानाभाव) को प्रतिबन्धक मानने की अपेक्षया कृतिसाध्यताज्ञान को कारण मानने में लाघव है। नैया० दोनों (इष्टसाधनता-

---

चिकीर्षासत्वं तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यां कृतिसाध्यताज्ञानजन्यत्वावश्यकत्वादित्यर्थः। कृत्यसाध्यताज्ञाने सति चिकीर्षानुदयादिति भावः। उक्तार्थमेवस्मारयति। चिकीर्षाहीति। हि यतः। तथा च यतश्चिकीर्षाकृतिसाध्यत्वप्रकारकेच्छारूपाइत्यर्थः। तत्रेति। अत इत्यादिः। चिकीर्षायामित्यर्थः। तत्प्रकारकं ज्ञानमिति। कृतिसाध्यत्वप्रकारकं ज्ञानमित्यर्थः। अत्रेदंतत्वम्। लाघवात् साध्यतासंबन्धेन कृतिप्रकारिका पाकोमत्कृतिमान् भवतु इत्याकारिकेच्छैव द्वारं, न तु कृतिसाध्यत्वप्रकारिका गौरवात्। अत एव ज्ञानमपि साध्यतासंबन्धेन कृतिप्रकारकमेव हेतुरिति। चिकीर्षायामिति। अस्य हेतुरित्यनेनान्वयः। तद्द्वारा। चिकीर्षाद्वारा। प्रवृत्ताविति। प्रवृत्तावपीत्यर्थः। नत्विष्टसाधनताज्ञानमिति। इष्टसाधनत्वादिज्ञानमित्यर्थः। आदिना बलवदनिष्टाननुबन्धित्वपरिग्रहः। तत्रेति। निरये इति। तदभावादिति। इष्टसाधनत्वाभावादित्यर्थः। अन्यथासिद्धत्वादित्यपि बोध्यम्। केचित्तु तत्रेति। चिकीर्षासामान्येइत्यर्थः। तेन विशेषतोहेतुत्वेपि न क्षति रित्याहुः। तच्चिन्त्यम्।

शंकते। नन्विति। कृत्यसाध्यताज्ञानं प्रतिबन्धकम्, "अन्यथा" कृत्यसाध्येपि प्रवृत्त्यापत्तेरिति योजना। तदभावापेक्षयेति। कृत्यसाध्यतानिश्चयाभावाऽपेक्षयेत्यर्थः।

**त्वन्मतेऽपि मधुविषसंपृक्तान्नभोजने चैत्यवन्दने च प्रवृत्त्यापत्तिः, कार्यता ज्ञानस्य सत्त्वादिति चेन्न।**

ज्ञान-कृतिसाध्यताज्ञान ) को ही कारण मान लिया जावे। प्रमा० गौरव है। नैया० तुम्हारे प्रभाकर के मत में मधु और विष से मिले हुवे भोजन में तथा चैत्य ( बौद्ध देवता ) के वन्दन में प्रवृत्ति होनी चाहिये। क्योंकि कार्यता ( कृतिसाध्यता ) ज्ञान उभयत्र मधुविषसम्पृक्तान्नभोजन तथा चैतवन्दन में ) वर्त्तमान है। प्रभाकर—यह कथन ठीक नहीं क्योंकि स्वविशेषणवत्ता-

---

अत्रेदं बोध्यम्। स्वकृतिसाध्यत्वप्रकारकेच्छैव प्रवृत्तौ हेतुः, स्वकृत्यसाध्यतया ज्ञाते पुरुषान्तरीयकृतिसाध्यताज्ञानवतस्तत्प्रकारकेच्छा संभवेय्य प्रवृत्तेः। साध्यत्वमपि फलोपधानात्मकसाधनताघटित मेव ग्राह्यम्, तेनाऽस्मदादि कृतेः कृतित्वेन मेरुलङ्घनादावपि स्वरूपयोग्यतया तत्साध्यताज्ञानान्नमेरुलङ्घनादौ प्रवृत्त्यापत्तिः। ईदृशसाध्यत्वस्य फलोत्पत्तेः पूर्वं सर्वत्र निश्चयाऽसंभवेन संशयनिश्चयसाधारणज्ञानत्वेन रूपेणैव कृतिसाध्यताज्ञानस्य प्रवृत्तिकारणचिकीर्षाहेतुत्वं वक्तव्यम्। तथा च कृत्यसाध्यतानिश्चयस्य प्रतिबन्धकत्वे निश्चयत्वप्रवेशेंवगौरवमपीति।

ननु कृत्यसाध्यतानिश्चयाऽभावः सर्वत्र चिकीर्षोत्पत्तिपूर्वं उभयमतसिद्धः, कृतिसाध्यताज्ञानं तु न तथा, तथा च कृतिसाध्यताज्ञानत्वस्य कारणतावच्छेदकत्वे लाघवं "सदपि" न विनिगमकम्, तत्र नियतपूर्ववर्त्तितावच्छेदकत्वकल्पनगौरवस्य दुर्वारत्वात्, कृत्यसाध्यतानिश्चयाभावत्वे चाऽन्यथासिद्धिनिरूपकतानवच्छेदकत्वस्यैव कल्प्यतया तत्रापि लाघवगौरयोस्तौल्यात्, तथा च कारणतावच्छेदकगौरवमकिंचित्करमेवेति विनिगमनाविरहादुभयोरेव हेतुत्वमावश्यकमित्याशंकते। **नचेति।** नहीत्यर्थः। अस्य हेतुत्वमित्यनेनाऽन्वयः। **द्वयोरेवेति।** कृत्यसाध्यतानिश्चयाभावत्व कृतिसाध्यताज्ञानत्वाभ्यामित्यादिः। तादृशाभाव तादृशज्ञानयोरपीत्यर्थः। हेतुत्वाभावे हेतुमाह। **गौरवादिति।** कृत्यसाध्यतानिश्चयाभावत्वस्य गुरुरूपत्वादित्यर्थः। तथा च द्वयोर्लघुधर्मरूपत्वे विनिगमनाविरहेण कृतिसाध्यताज्ञानत्वेनेव तादृशनिश्चयाभावत्वेन हेतुत्वमापद्येत, न चैवम्, तादृशनिश्चयाभावत्वस्य गुरुरूपत्वादिति भावः। वस्तुतस्तु इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमस्याऽनुपदमेवोपदर्शिततया स्वयं नियतपूर्ववर्त्तित्वस्य कृतिसाध्यताज्ञाने ऽकल्पनीयतया तादृशकल्पनागौरवमपि नास्तीति ध्येयम्।

न चैवं सति कृत्यसाध्यता ज्ञानं कृतिसाध्यताज्ञानं च यदा नास्ति तदा चिकीर्षाप्रवृत्त्योरनुत्पत्तिप्रसंगइतिवाच्यम्। इष्टापत्तेः। अज्ञातार्थविषयकचिकीर्षापत्तिवारणाय तत्प्रकारकचिकीर्षां प्रति तत्प्रकारकज्ञानस्य हेतुताया आवश्यकत्वात्।

नैयायिकः शंकते। **नन्विति। त्वन्मतेपीति।** अपिशब्दः प्रवृत्त्यापत्तिरित्युत्तरं योजनीयः। प्राभाकरमतेपीत्यर्थः। **प्रवृत्त्यापत्तिरिति** बलवदनिष्टानुबन्धित्वादिरूप

स्वविशेषणवत्ताप्रतिसंधानजन्यकार्यता ज्ञानस्य प्रवर्त्तकत्वात्। काम्ये हि पाकयागादौ कामनास्वविशेषणम्। ततश्च बलवदनिष्टाननुबन्धि-काम्यसाधनताज्ञानेन कार्यताज्ञानं, ततः प्रवृत्तिः। तृप्तस्य भोजने न प्रवर्तते तदानीं कामनायाः पुरुषविशेषणत्वाभावात्। नित्ये च शौचादिकं पुरुषविशेषणम्। तेन शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात् तत्र प्रवृत्तिः।

प्रतिसन्धानजन्य कार्यताज्ञान ही प्रवृर्त्तक है। ( स्वपद से प्रवर्त्तमान पुरुष को लेना चाहिये ) काम्यप्रयोग याग एवं पाक आदि में कामना स्व ( पुरुष ) का विशेषण है। इसके बाद बलवान् अनिष्ट के अननुबन्धी काम्यसाधनताज्ञान से कार्यताज्ञान होता है तब प्रवृत्ति होती है। तृप्त व्यक्ति की भोजन में प्रवृत्ति इसलिये नहीं होती है कि उस समय कामना ( इच्छा ) पुरुष का विशेषण नहीं है। ( अर्थात् उस ( तृप्ति ) काल कामनावान् ( इच्छावान् ) यदि पुरुष होता तो कामना पुरुष का विशेषण होती, परन्तु तृप्तिकाल में पुरुष को भोजन की इच्छा ही नहीं है, अतः वहाँ पुनः भोजन में प्रवृत्ति नहीं होती है। इसी प्रकार मधु-विष से संयुक्त अन्न भोजन में भी अगाड़ी ( खाने के बाद ) होनेवाले मरणरूप अनिष्ट को देखकर कामना ( इच्छा ) नहीं होती है अतः वहाँ भी स्वविशेषणवत्ता ( प्रवर्त्तमान पुरुष कामनावत्ता ) प्रति-सन्धानजन्य (ज्ञानजन्य) कार्यताज्ञान के न होने से प्रवृत्ति नहीं होती है )। नित्यप्रयोग ( सन्ध्या-वन्दन आदि ) स्थल में शौच ( पवित्रता ) आदि पुरुष के विशेषण हैं, इसलिये वहाँ शौच आदि के ज्ञानाधीन कृतिसाध्यताज्ञान से प्रवृत्ति होती है। ( और पूर्वोक्त चैत्यवन्दन में केवल कृतिसाध्यताज्ञान होते हुवे भी शौचादिरूपकामनाज्ञाधीनकृतिसाध्यताज्ञान नहीं है अतः आस्तिक की प्रवृत्ति नहीं होती है )।

---

बाधनिश्चयदशायामित्यादिः। तेन नेष्टापत्तिसंभवः। इदमुपलक्षणम्। पाश्चादावपि बाधनिश्चयदशायां तथा प्रसंगोबोध्यः। **चिकीर्षापत्तिः**—तद्द्वारा प्रवृत्त्यापत्तिश्चेत्यर्थः। **कार्यताज्ञानस्य सत्वादिति**। कृतिसाध्यताज्ञानस्य सत्वाद्दित्यर्थः। बलवदनिष्टा-ननुबन्धित्वेष्टसाधनत्वभ्रमोत्तरं तादृशस्थले प्रवृत्तेरानुभवविकत्वेन कृतिसाध्यताया [illegible] विषभक्षणादौ सत्वेन तद्ज्ञानस्य [illegible] सत्वादिति भावः। इदमत्रावधेयम्। [illegible] चैत्यवन्दनरूपोदाहरणद्वयोपन्यासः। [illegible] संपादनाय मूले मधुविषसंपृक्तान्नभोजन [illegible] चाद्योदाहरणे मधुपदोपादानम्। यद्यपि चैत्यवन्दनस्य साधनताज्ञानसंपादनायैव [illegible] *निषिद्धतया* तत्रापि बलवदनिष्टानु-निष्फलत्वेन न कुर्यान्निष्फलं कर्मेत्यनेन बन्धित्वबुद्धिभ्रमरूपा संभवत्येव, तथापि चैत्यवन्दने तदनुबन्धित्वज्ञानस्य नास्तिका-दिसाधारण्याभावेनाद्योदाहरणोपन्यासः। प्रभाकरःसमाधत्ते। **स्वविशेषणवत्ते-त्यादि**। स्वं-प्रवृत्याश्रयः पुरुषः—तत्र विशेषणं काम्ये "स्वर्गादि" कामना—*नित्ये*-शौचादि—तद्वत्ता—तद्विषयसाधनता-इष्टसाधनतेतियावत् तत्प्रतिसन्धानं—*तन्निश्चयः*।

जन्यत्वम्-अव्यवहितोत्तरत्वम् ।[1] **कार्यताज्ञानस्येति** । कृतिसाध्यताज्ञानस्येत्यर्थः । **प्रवर्तकत्वादिति** चिकीर्षा द्वारा प्रवृत्तिहेतुत्वस्वीकारादित्यर्थः । तथा च काम्यगोचर प्रवृत्तौ इष्टसाधनताज्ञानाव्यवहितोत्तरकृतिसाध्यताज्ञानं कारणम् । एवं नित्यविषयक-प्रवृत्तौशुचितत्कालजीवित्वज्ञानाव्यवहितोत्तरकृतिसाध्यताज्ञानं कारणम् ।

जन्यत्वस्य यथाश्रुतार्थकत्वे तु इष्टसाधनताज्ञानस्य लिङ्गज्ञानविधया कृति-विधया कृतिसाध्यताज्ञानहेतुत्वं बोध्यम्-तथा हि-पाकोमत्कृतिसाध्यः—मत्कृतिं विना-ऽसत्त्वे सति मदिष्टसाधनत्वादित्यनुमानं बोध्यम् ।

ननु यागादिः स्वेच्छाधीनमत्कृतिसाध्यः स्वेच्छाधीनमत्कृतिव्यतिरेकप्रयुक्ता-भावप्रतियोगित्वात्, स्वेच्छाधीनमत्कृतिं विना असत्वे सति सत्वाद्वा इत्यनुमाना-ज्जायमानस्वेच्छाधीनकृतिसाध्यत्वप्रकारकानुमित्यात्मकज्ञानादपि प्रवृत्त्यापत्तिः, तादृशानुमितेरपि कृतिरूपस्वविशेषणघटितहेतुप्रतिसन्धानजन्यत्वात् । न चेष्टापत्तिः । इष्टसाधनताज्ञानशून्यकालीनतादृशकार्यताज्ञानस्य प्रवृत्तिहेतुतायाः सर्वमतविरुद्धत्वादत आह । **काम्ये हीति** । हि-यतः । **कामना**—कामनैव । **स्वविशेषणमिति** । स्वविशेषणशब्देन विवक्षितमित्यर्थः । एवं विशेषणशब्दोत्तरमतुप्प्रत्ययेन स्वविषय-साधनतैव विवक्षितेत्यर्थः । अतोनोक्तदोष इति शेषः । तथा च स्वविशेषणवत्ताप्रति-सन्धानशब्देन कामनाविषयसाधनताज्ञानस्यैव विवक्षितत्वात्, निरुक्तहेतुककार्यत्वानु-मितेः कामनाविषयसाधनताज्ञानाऽजन्यत्वेन इष्टसाधनताज्ञानशून्यकालीननिरुक्त-लिङ्गककृतिसाध्यताज्ञानान्न प्रवृत्त्यापत्तिरिति भावः ।

नन्वेवमपि मधुविषसंपृक्तान्नभक्षणादौ प्रवृत्त्यापत्तिः, तत्रापि स्वेच्छाधीन-मत्कृतिं विनाऽसत्वविशिष्टमदिष्टसाधनताज्ञानजन्यस्वेच्छाधीनमत्कृतिसाध्यताज्ञान-सत्वादत आह । **ततश्चेति** । तत एवेत्यर्थः । निरुक्तहेतौ बलवदनिष्टाननुबन्धित्व-विशेषणादेवेतिभावः । हेतौ बलवदनिष्टाननुबन्धित्वविशेषणदानेन फलितार्थमाह । **बलवदिति** । तृतीयार्थोऽव्यवहितोत्तरत्वम्, जन्यत्वं वा । तथा च बलवदनिष्टाननु-बन्धिकाम्यसाधनताज्ञानाव्यवहितोत्तरं, तादृशज्ञानजन्यं वेत्यर्थः । **कार्यताज्ञानं** । कृतिसाध्यताज्ञानं । **तत** इति । कृतिसाध्यताज्ञानादित्यर्थः । **प्रवृत्तिरिति** । वाच्येति शेषः । तथा च मधुविषसंपृक्तान्नभक्षणादौ बलवदनिष्टाननुबन्धित्वाभावेन तद्घटित-लिङ्गज्ञानाधीनकार्यताज्ञानस्य सुतरामभावेन न प्रवृत्त्यापत्तिरिति भावः ।

ननु तृप्तस्यापि भोजने प्रवृत्त्यापत्तिः, तत्रापि तदीयपूर्वकालीनकामनाविषय-साधनत्वघटितलिङ्गज्ञानाधीनकार्यताज्ञानसत्वादत आह । **तृप्तश्चेति** । एवकारार्थ-कश्चशब्दोनेत्युत्तरं योजनीयः । **न प्रवर्तते** इति । नैव प्रवर्तते इत्यर्थः । **तदानीं** ।

---

१—नियतोत्तरवर्त्तित्वरूपस्य जन्यत्वस्य प्रवेशे गौरवं बोध्यम् । अव्यवहितो-त्तरत्वनिवेशेनक्वचिदिष्टसाधनतास्मरणानन्तरंकृतिसाध्यत्वस्य हेत्वन्तराधीनज्ञान-विषयत्वेपि न प्रवृत्त्यनुपपत्तिः ।

ननु तदपेक्षया लाघवेनबलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यताज्ञानत्वेन हेतुत्वमस्तु, बलवदनिष्टाननुबन्धित्वञ्च इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं बलवद्द्वेषविषयदुःखाजनकत्वं वेति चेन्न। इष्टसाधनत्वकृति-

प्रश्न—नैया० स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञान से लब्ध बलवदनिष्टाननुबन्धित्वविशिष्टइष्टसाधनताज्ञानजन्यकार्यताज्ञान को कारण मानने की अपेक्षया बलवदनिष्टाननुबन्धित्वविशिष्ट इष्टसाधनताविषयककार्यताज्ञान को ही लाघवात् कारण मान लिया जाय। ( इसमें लाघव यह है कि जन्यत्व का निवेश नहीं है )। बलवदनिष्टाननुबन्धित्व यह वह है कि अपने इष्ट की उत्पत्ति में नान्तरीयक ( आवश्यक ) दुःख से अधिक दुःख का जनक न होना, अथवा बलवद्द्वेष के विषय दुःख का जनक न होना। समाधान—मीमांसक यह नैयायिक का कथन ठीक नहीं है—क्योंकि इष्टसाधनत्व–कृतिसाध्यत्व ये दोनों युगपत् ( एककाल ) में ज्ञातुम् अशक्य हैं, कारण कि साध्यत्व और साधनत्व दोनों का विरोध है,

---

तृप्तिकाले। **पुरुषविशेषणत्वाभावादिति।** पुरुषवृत्तित्वाभावादित्यर्थः। तथा च स्वविशेषणीभूतकामनायां तत्कालीनत्वं विशेषणीयम्। तत्कालीनकामनाविषयसाधनत्वघटितलिङ्गज्ञानजन्यकार्यताज्ञानं तत्कालीनप्रवृत्तिकारणम्। तृप्तिकालीनपुरुषे तादृशकार्यताज्ञानरूपकारणाभावात्तृप्तिकाले न तस्य प्रवृत्तिरिति भावः। ननु काम्ये कर्मणि इष्टसाधनताज्ञानशून्यकाले प्रवृत्त्यनुदयेन तदनुरोधेन इष्टसाधनत्वघटितलिङ्गज्ञानाधीनकार्यताज्ञानस्य प्रवर्तकत्वस्वीकारे नित्ये कर्मणि इष्टाभावेन इष्टसाधनताज्ञानं विनापि प्रवृत्तेः सर्वानुभवसिद्धतया स्वेच्छाधीनमत्कृतिव्यतिरेकप्रयुक्ताभावप्रतियोगित्वादिलिङ्गज्ञानजन्यकार्यताज्ञानात्सन्ध्यावन्दने प्रवृत्त्यापत्तिः, कृतेरपि स्वविशेषणत्वादित आह। **नित्ये** इति। सन्ध्यावन्दनादावित्यर्थः। **शौचादिकमिति।** आदिना विहितकालजीवित्वादेः परिग्रहः। **पुरुषविशेषणमिति।** स्वविशेषणशब्देन विवक्षितमित्यर्थः। तथा च प्रकृते शुचित्व—विहितकालजीवित्वादेरेव स्वविशेषणशब्देन बोध्यतया स्वरूपसंबन्धस्यैव मतुबर्थतया शुचित्वाद्याश्रयत्वरूपलिङ्गज्ञानाधीनकार्यताज्ञानस्यैव प्रवर्तकत्वलाभात्र लिङ्गान्तरजन्यकार्यताज्ञानात्प्रवृत्त्यापत्तिरिति भावः। **शौचज्ञानात्तदेवाह। तेनेति।** स्वविशेषणशब्देन शुचित्वादेर्विवक्षितत्वेनेत्यर्थः। **शौचज्ञानाधीनकृतिसाध्यताज्ञानादिति।** तादृशज्ञानादेवेत्यर्थः। **तत्र।** सन्ध्यावन्दनादिकर्मणि। **प्रवृत्तिरिति।** संभवतीति शेषः।

विशिष्टस्य कृतिसाध्यत्वस्य प्रवर्तकत्वं, विध्यर्थत्वं चेति वादिनां मतमुपन्यस्य दूषयति। **नन्विति। तदपेक्षयेति।** बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानजन्यकार्यताज्ञानत्वेन हेतुत्वापेक्षया इत्यर्थः। **लाघवेनेति।** जन्यत्वस्य ज्ञानत्वस्याऽनिवेशप्रयुक्तलाघवेनेत्यर्थः। बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यता-

साध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात् साध्यत्वसाधनत्वयोर्विरोधित्वात् । असि-

क्योंकि असिद्ध को अर्थात् जबतक कार्य की सिद्धि ( उत्पत्ति ) नहीं होती है तबतक वह कार्य कृतिसाध्य होता है, और सिद्ध अर्थात् उत्पन्न हो जाने पर वह किसी इष्ट का साधन माना

---

ज्ञानमेवेति । बलवदनिष्टाननुबन्धित्वे-ष्टसाधनत्व-कृतिसाध्यताविषयकज्ञानमेवेत्यर्थः । हेतुरस्त्विति । निरुक्तत्रितयविषयकज्ञानत्वेन कारणमस्तु इत्यर्थः । बलवदनिष्टाऽजनकत्वं निर्वक्ति । बलवदनिष्टाननुबन्धित्वं चेति । अवधारणार्थकश्चशब्दो-दुःखाजनकत्वमित्युत्तरं योजनीयः । इष्टोत्पत्तिनान्तरीयकेति । इष्टोत्पत्ति साधनीभूतकर्मजन्येत्यर्थः । तथा च इष्टोत्पत्तिसाधनीभूतकर्मजन्यदुःखातिरिक्त-दुःखाजनकत्वं समुदितार्थः । तेन मधुविषसंपृक्तान्नभोजने न प्रवृत्त्यापत्तिः, तेन इष्टोत्पत्तिनान्तरीयकदुःखातिरिक्त "मरणरूप" दुःखजननात् । नन्वेवमपि रागान्ध-स्याऽगम्य । गमनादौ प्रवृत्तिर्न स्यात्, तादृशगमनस्य नरकसाधनत्वादित्यस्वरसा-दाह । बलवद्द्वेषविषयेति । विजातीयद्वेषविषयेत्यर्थः । बलवद्द्वेषविषयतावच्छेदकी-भूत "दुःखत्व" धर्मावच्छिन्ननिरूपितसाधनताज्ञानस्येच्छां प्रति प्रतिबन्धकतया तादृशप्रतिबन्धकतावच्छेदकघटकतया द्वेषे वैजात्यसिद्धिर्बोध्या । इत्थं च रागान्ध-विषयकनरकविषयकद्वेषे तादृशवैजात्याभावान्नोक्तप्रवृत्त्यनुपपत्तिरिति ।

वस्तुतस्तु नरकाऽजनकत्वं—पापाजनकत्वं वा बलवदनिष्टाननुबन्धित्वम् । तेन दुःखमात्रस्य विरक्तानां बलवद्द्वेषविषयत्वेन तादृशवैजात्यस्याऽव्यावर्त्तकत्वेपि न क्षतिः । इष्टसाधनत्वकृतिसाध्यत्वयोरिति । इष्टोत्पत्त्यव्यवहितपूर्वक्षणावच्छेदे-नेष्टव्यापकत्वरूपस्येष्टसाधनत्वस्य इष्टोत्पत्त्यव्यवहितपूर्वक्षणवृत्तित्वघटितस्य—कृत्यव्यवहितोत्तरक्षणवृत्तित्वे सति कृतिव्याप्यत्वरूपस्य कृतिसाध्यत्वस्य कृत्यव्यव-हितोत्तरसंबन्धघटितस्य चेत्यर्थः । युगपद्ज्ञातुमशक्यत्वादिति । एककालावच्छे-देनैकविशेष्यकज्ञानीयप्रकारताशून्यत्वादित्यर्थः । तत्र हेतुमाह । साध्यत्वसाधनत्वयो-रिति । क्षणविशेषघटितयोस्तयोरित्यर्थः । विरोधादिति । एकक्षणावच्छेदेनैकत्रा-ऽवर्तमानत्वादित्यर्थः विरोधमुपपादयति । असिद्धस्य हीति । असिद्धस्यैवेत्यर्थः । आद्यक्षणवृत्तित्वविशिष्टस्ययागपाकादेरिति यावत् । सिद्धस्य चेति । आद्यक्षणा-न्यक्षणवृत्तित्वविशिष्टस्यैवेत्यर्थः । कृत्यव्यवहितोत्तरसंबन्धघटितकृतिसाध्यत्वस्य यागपाकाद्युत्पत्तिक्षणे एव यागपाकादिवृत्तित्वात्, स्वर्गौदनाद्यव्यवहितपूर्वक्षणवृत्ति-त्वघटितस्य कालान्तरभाविस्वर्गौदनादीष्टसाधनत्वस्य चोत्पत्तिक्षणावच्छेदेन याग-पाकाद्यवृत्तित्वाच्च तयोरेकक्षणावच्छेदेनैकत्राऽवर्तमानत्वरूपविरोधो दुर्वार इति भावः । तयोर्विरोधमुपपाद्य इदानीमेकज्ञानाऽविषयत्वमुपपादयति । न चैकमेकेनैकदेति । एकेन एकदा इदं सिद्धं, तदसिद्धमिति ज्ञायते इत्येकमुक्तम् । एकं एकेन सिद्धं

**ननु तदपेक्षया लाघवेनबलवनिष्टाननुबन्धीष्टसाधनताविषयककार्यता-ज्ञानत्वेन हेतुत्वमस्तु, बलवनिष्टाननुबन्धित्वञ्च इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं बलवद्द्वेषविषयदुःखाजनकत्वं वेति चेन्न। इष्टसाधनत्वकृति-**

प्रश्न—नैया० स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञान से लभ्य बलवदनिष्टाननुबन्धित्वविशिष्टइष्टसाधनताज्ञानजन्यकार्यताज्ञान को कारण मानने की अपेक्षया बलवदनिष्टाननुबन्धित्वविशिष्ट इष्टसाधनताविषयककार्यताज्ञान को ही लाघवात् कारण मान लिया जाय। (इसमें लाघव यह है कि जन्यत्व का निवेश नहीं है)। बलवदनिष्टाननुबन्धित्व यह वस्तु है कि अपने इष्ट की उत्पत्ति में नान्तरीयक (आवश्यक) दुःख से अधिक दुःख का जनक न होना, अथवा बलवद्द्वेष के विषय दुःख का जनक न होना। समाधान-मीमांसक यह नैयायिक का कथन ठीक नहीं है—क्योंकि इष्टसाधनत्व—कृतिसाध्यत्व ये दोनों युगपत् (एककाल) में ज्ञातुम् अशक्य है, कारण कि साध्यत्व और साधनत्व दोनों का विरोध है,

---

तृप्तिकाले। पुरुषविशेषणत्वाभावादिति। पुरुषवृत्तित्वाभावादित्यर्थः। तथा च स्वविशेषणीभूतकामनायां तत्कालीनत्वं विशेषणीयम्। तत्कालीनकामनाविषयसाधनत्वघटितलिङ्गज्ञानजन्यकार्यताज्ञानं तत्कालीनप्रवृत्तिकारणम्। तृप्तिकालीनपुरुषे तादृशकार्यताज्ञानरूपकारणाभावात्तृप्तिकाले न तस्य प्रवृत्तिरिति भावः। ननु काम्ये कर्मणि इष्टसाधनताज्ञानशून्यकाले प्रवृत्त्यनुदयेन तदनुरोधेन इष्टसाधनत्वघटितलिङ्गज्ञानाधीनकार्यताज्ञानस्य प्रवर्तकत्वस्वीकारे नित्ये कर्मणि इष्टाभावेन इष्टसाधनताज्ञानं [illegible]

त आह। नित्ये इति। सन्ध्यावन्दनादावित्यर्थः। शौचादिकामिति। [illegible] विहितकालजीवित्वादेः परिग्रहः। पुरुषविशेषणमिति। स्वविशेषणशब्देन विवक्षितमित्यर्थः। तथा च प्रकृते शुचित्व—विहितकालजीवित्वादेरेव स्वविशेषणशब्देन बोध्यतया स्वरूपसंबन्धस्यैव मतुबर्थतया शुचित्वाद्याश्रयत्वरूपलिङ्गज्ञानाधीनकार्यताज्ञानस्यैव प्रवर्तकत्वलाभान्न लिङ्गान्तरजन्यकार्यताज्ञानात्प्रवृत्त्यापत्तिरिति भावः। शौचज्ञानात्तदेवाह। तेनेति। स्वविशेषणशब्देन शुचित्वादेर्विवक्षितत्वेनेत्यर्थः। तत्र। सन्ध्यावन्दनादिकर्मणि। प्रवृत्तिरिति। संभवतीति शेषः। धीनकृतिसाध्यताज्ञानादिति। तादृशज्ञानादेवेत्यर्थः।

*विशिष्टस्य कृतिसाध्यत्वस्य प्रवर्तकत्वं, विध्यर्थत्वं चेति वादिनां मतमुपन्यस्य* दूषयति। नन्विति। तदपेक्षयेति। बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानजन्यकार्यताज्ञानत्वेन हेतुत्वापेक्षया इत्यर्थः। लाघवेनेति। जन्यत्वस्य ज्ञानत्वस्याऽनिवेशप्रयुक्तलाघवेनेत्यर्थः। बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यता-

द्धस्य हि साध्यत्वं सिद्धस्य च साधनत्वम्। न चैकमेकेनैकदा सिद्धमसिद्धश्चेति ज्ञायते तस्मात् कालभेदादुभयं ज्ञायते इति।

मैवम्। लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञा-

गया है। और एक मनुष्य एक वस्तु को एककाल में सिद्ध और असिद्ध इस उभयरूप से कैसे जान सकता है, अतः कालभेद से ही उभय ( दोनों वस्तु ) जानी जा सकती हैं। खण्डन-नैयायिक कहता है कि पूर्वोक्त कथन प्रभाकर का ठीक नहीं है-क्योंकि लाघव होने के नाते बलवदनिष्टाननुबन्धी इष्टसाधनताविषयककृतिसाध्यताज्ञान ही प्रवृत्ति में कारण है।

---

अपरेणाऽसिद्धमिति ज्ञायते इति एकेनेत्युक्तम्। एकेन एकं विभिन्नकालावच्छेदेन ज्ञायते इति एकदेत्युक्तम्। प्राभाकरमतमुपसंहरति। तस्मादिति। उक्तरीत्या निरुक्तसाधनत्व-साध्यत्वविषयकसमूहालंबनाऽसंभवादित्यर्थः। न चेदानीमसिद्धः पाकः कृतिसाध्यः, कालान्तरे सिद्धः पाकः इष्टसाधनमिति संमूहालंबनज्ञानादेवप्रवृत्तिसंभव इति वाच्यम्। इदानीन्तनकालकालान्तरयोरननुगमात। कालभेदादुभयंज्ञायते इति। भिन्नक्षणावच्छेदेन एकैकज्ञाननिरूपितविषयतावदेव निरुक्तसाध्यत्वसाधनत्वोभयमित्यर्थः। तथा चेष्टसाधनत्वकृतिसाध्यत्वोभयविषयकज्ञानस्याप्रामाणिकतया नैयायिकैस्तादृशोभयविषयकज्ञानत्वेन प्रवृत्तिहेतुताया वक्तुमशक्यत्वादन्यथा सर्वैरपि तादृशकार्यताज्ञानत्वेनैव हेतुत्वं स्वीकार्यमिति प्राभाकराभिप्रायः। कृतिसाध्यत्वादेर्विशेषणविशेष्यभावव्यत्यासेन गुरुतरशक्तिपट्कापत्तेश्चेति ध्येयम्।

प्रभाकरमते योग्यताज्ञानं शाब्दबुद्धौ कारणम्। योग्यत्वं चाऽन्वयप्रयोजकरूपवत्त्वम्, तत्त्वं च तदभावप्रयोजकीभूताभावप्रतियोगित्वम्। यथा कृतिसाध्यत्वाभावप्रयोजको य इष्टसाधनत्वाभावस्तत्प्रतियोगीष्टसाधनत्वं यागे कृतिसाध्यत्वान्वययोग्यता। ईदृशयोग्यताज्ञानस्याऽहेतुत्वे स्वर्गकामः पचेत इत्यादेरपि प्रामाण्यापत्तिः, स्वर्गकामकृतिसाध्यत्वस्य पाकादौ सत्वात्। इदानीं तु स्वर्गसाधनत्वस्य तत्राऽसत्वान्न प्रामाण्यापत्तिः। एवं च "स्वर्गकामोयजेत" इत्यादौ यागः स्वर्गकामकृतिसाध्यतावानित्याकारकः प्रथमं न बोधः। स्वर्गकामकृतिसाध्यत्वान्वये प्रयोजकस्य स्वर्गसाधनत्वस्य पूर्वं यागे ऽगृहीतत्वात्, साक्षात्स्वर्गसाधनत्वस्य तत्राऽसत्वात्, स्वर्गपर्यन्तस्थायिस्वव्यापारवत्त्वस्य व्यापारानुपस्थित्या ग्रहाऽसंभवात्। न च स्वर्गकामनियोज्यताकः "नियोज्यतासंबन्धेनस्वर्गकामीयोवा" यागः कृतिसाध्यतावानित्येवबोधोऽस्तु इति वाच्यम्। स्वर्गकामनियोज्यत्वं हि यदि तत्कृतिसाध्यत्वम्, तदा स्वर्गकामकृतिसाध्यताविशिष्टे यागे लिङर्थकृतिसाध्यत्वस्याऽन्वये निराकांक्षत्वापत्तेः, उद्देश्यतावच्छेदकविधेययोरैक्यात्। यदि च स्वर्गकामीयकृतिसाध्यत्वधीविशेष्यत्वम्, तदा "स्वर्गकामः पचेत" इत्यादेरपि प्रामाण्यापत्तेः। किन्तु स्वर्गकामनिष्ठा या स्वर्गसाधनताधीः तज्जन्यकृतिसाध्यताज्ञानविशेष्यत्वंतत्, तदन्वयप्रयोजकं च स्वर्गसाधनत्वं साक्षादसाधनस्य यागादेः स्वर्गपर्यन्तस्थायिव्यापारानुपस्थित्या प्रथमं दुर्ग्रहम्।

नस्य तत्र हेतुत्वात्। न च साध्यत्वसाधनत्वयोर्विरोधः, यदाकदाचित् साध्यत्वसाधनत्वयोरविरोधात् एकदा साध्यत्वसाधनत्वयोश्चज्ञानात्।

प्रश्न—प्रभाकर कहता है कि कृतिसाध्यत्व-इष्टसाधनत्व–इन दोनों का एककाल में एक वस्तु में न रहने प्रयुक्त विरोध हो जायगा।

उत्तर—साध्यत्व (कृतिसाध्यत्व) साधनत्व (इष्टसाधनत्व) का विरोध नहीं है, क्योंकि कालभेद से (यदाकदाचित्) एक वस्तु में साध्यत्व-साधनत्व के रहने में कोई भी विरोध नहीं है अतः एक वस्तु में साध्यत्व तथा साधनत्व का ज्ञान हो जायेगा। प्रभाकर

---

अतः कार्ये "अपूर्वे" एव लिङः शक्तिः, तत्रैव धात्वर्थयागस्यस्वर्गकामनियोज्यताकत्वस्य च युगपदन्वया। इत्थं च "स्वर्गकामोयजेत" इति विधिवाक्यात् स्वर्गकामनियोज्यताकं यागविषयकं कार्यमित्याकारक एव प्रथमं बोधः। ततश्च यागकार्यस्य स्वर्गकामकृतिसाध्यत्वं स्वर्गकामनियोज्यताकत्वं वा यागस्य स्वर्गसाधनत्वं विनाऽनुपपन्नमित्यनुपपत्तिधीसहकृतेन तेनैवशब्देनाऽर्थापत्तिरूपपञ्चमप्रमाणतामापन्नेन यागः स्वर्गकामस्य कृतिसाध्यइत्याकारकः स्वर्गकामनियोज्यताको यागः कृतिसाध्य इत्याकारको वा प्रवृत्तौ ययिकोबोध उपगम्यते। प्रभाकर सिद्धान्तः।

प्राभाकरमतं दूषयति। **मैवमिति**। **लाघवेनेति**। कारणतावच्छेदककोटौ-जन्यत्वज्ञानत्वाऽनिवेशप्रयुक्तलाघवेनेत्यर्थः। **बलवदनिष्टाननुबन्धीत्यादि**। बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वकृतिसाध्यत्वविषयकनिश्चयस्येत्यर्थः। **तत्र**। **प्रवृत्तौ**। **हेतुत्वादिति**। तादृशत्रितयविषयकनिश्चयत्वेनैव हेतुत्वादित्यर्थः। प्राभाकरोक्तसाध्यत्वसाधनत्वयोर्विरोधं परिहरति। **नचेति**। नहीत्यर्थः। अविरोधमुपपादयति। **यदा कदाचिदिति**। यत्किंचित्कालीनसाध्यत्वस्य यत्किंचित्कालीनेनसाधनत्वेन सह विरोधाभावादित्यर्थः। कालविशेषा घटितयोः साध्यत्वसाधनत्वयोरेकत्र वृत्तौ बाधकाभावादित्यर्थः। नतथाच एककालावच्छेदेन साध्यत्वसाधनत्वयोरेकत्रावृत्तित्वेपि न क्षतिः। तद्ज्ञानस्य प्रवर्तकत्वानभ्युपगमात्, किन्तु साध्यत्वसाधनत्वयोरनवच्छिन्नयोरविरुद्धयोर्ज्ञानमेव प्रवर्त्तकं, अव्याप्यवृत्तिज्ञानस्यावच्छेदकावगाहित्वनियमे मानाभावात्, वृक्षः कपिसंयोगीत्यपि प्रतीतेः सर्वानुभवसिद्धत्वादिति भावः। तथा च निर्विशेपितयोः सामान्यतः कृतिसाध्यत्वेष्टसाधनत्वयोर्ज्ञानस्यैव हेतुत्वाङ्गीकार इति फलितम्। **एकदेति**। इदं च ज्ञाने साध्यत्व-साधनत्वयोश्चाऽन्वेति, **साध्यत्व साधनत्वयोरिति**। निर्विशेपितयोरित्यादिः। **ज्ञानादिति**। ज्ञानसंभवादित्यर्थ। तथा च एकदा तादृशज्ञानसंभवान्न प्रवृत्त्यनुपपत्तिरिति भावः।

नव्यास्तु ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्त्तकमनागते तस्य ज्ञातुमशक्यत्वात्। किन्तु यादृशस्य पुंसः कृतिसाध्यं यद्दृष्टं तादृशत्वं स्वस्य प्रतिसंधाय तत्र प्रवर्त्तते। तेनौदनकामस्य तत्साधनताज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यः तादृशश्चाहमिति प्रतिसंधाय पाके प्रवर्त्तत इत्याहुः।

मतावलम्बी नवीनों का कथन है कि—"ममेदं कृतिसाध्यम्" यह ज्ञान प्रवर्तक नहीं है, कारण कि अनागतकाल में होनेवाले पाक आदि में "ममेदं कृतिसाध्यम्" यह ज्ञान सर्वथा अशक्य है (क्योंकि—इदंपदार्थ की प्रत्यक्षविषयीभूतपदार्थ में शक्ति है) किन्तु जिस किसी पुरुष की कृति से साध्य जो कार्य देखा गया है अन्य पुरुष उस कार्य को यदि अपनी कृति से साध्य समझेगा तो उस कार्य में प्रवृत्त होगा—अन्यथा नहीं होगा। इसीलिये ओदन पाक की कामनावाले तथा ओदन विषयक कृतिसाध्यताज्ञानवाले एवं ओदन सम्बन्धी उपकरण (सामग्री) वाले व्यक्ति की पाक में तभी प्रवृत्ति होती है जब कि वह व्यक्ति पाक को अपनी कृति से साध्य, (अर्थात् मैं भी ओदन सम्बन्धी पाक का निर्माण कर सकता हूँ) तथा ओदन पाक की उपकरण सामग्री भी मेरे पास में है ऐसा प्रतिसन्धान (ज्ञान) कर पाता है।

---

प्राभाकरमतानुयायिनवीनमतमाह। नव्यास्त्विति। ममेदं कृतिसाध्यमितिज्ञानमिति। इदं मत्समवेतकृतिसाध्यमिति ज्ञानमित्यर्थः। न प्रवर्तकमिति। चिकीर्षाद्वारा न प्रवृत्तिजनकमित्यर्थः। प्रवृत्तिजनकत्वाभावे हेतुमाह। अनागते इति। भविष्यत्पाके इत्यर्थः। तस्य। मत्समवेतकृतिसाध्यत्वस्य। ज्ञातुमशक्यत्वादिति। भविष्यत्पाकस्य ज्ञानाऽसंभवेन तद्विशेष्यकमत्समवेतकृतिसाध्यत्वप्रकारकज्ञानाऽसंभवादित्यर्थः। न च पाकोत्पत्त्यनन्तरं लौकिकसन्निकर्षबलात्तादृशपाके कृतिसाध्यत्वज्ञानसंभवेन ततश्च सामान्यलक्षणया भविष्यत्पाकविशेष्यकतादृशकृतिसाध्यत्वप्रकारकज्ञानसंभव इति वाच्यम्। सामान्यलक्षणायाः प्रत्यासत्तित्वानङ्गीकर्तृमते तादृशज्ञानासंभवात्। लौकिकसन्निकर्षाधीनप्रत्यक्षस्य च प्रवृत्त्युत्तरकालीनतया प्रवृत्तिहेतुत्वाऽसंभवात्। भविष्यत्पाकरूपपक्षज्ञानाऽसंभवेन भविष्यत्पाकविशेष्यकतादृशकृतिसाध्यत्वप्रकारकानुमितेरप्यसंभवाच्चेति भावः। यादृशस्येति। कृत्युत्पादकसामग्रीविशिष्टस्येत्यर्थः। यद्दृष्टमिति। पाकोऽदृष्ट इत्यर्थः। तादृशत्वं। तादृशसामग्रीविशिष्टत्वं। स्वस्यप्रतिसन्धायेति। तादृशसामग्रीमानहमिति निश्चित्ये-त्यर्थः। तत्र। पाके। तेन। ईदृशज्ञानस्य प्रवर्तकत्वस्वीकारेण। ओदनकामस्य। चैत्रादेः। तत्साध्यताज्ञानवतः। अन्यदीयपाकधर्मिकमन्यदीयकृतिसाध्यताप्रकारकप्रत्यक्षप्रमावतः। तदुपकरणवतः। तत्सामग्रीमतः। पाकः कृतिसाध्य इति। प्रमित इति शेषः। तादृशश्चाहमितिप्रतिसन्धायेति। तादृशसामग्रीमानहमिति

तन्न । स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामोद्भेदादिना संभोगादौ च तदभावात् । इदंन्तु बोध्यम्—इदानींतनेष्टसाधनत्वादिज्ञानं प्रवर्त्तकम् । तेन भावियौवराज्ये बालस्य न प्रवृत्तिः तदानीं कृतिसाध्यत्वाज्ञानात् । एवं तृप्तश्च भोजने न प्रवर्त्तते तदानीमिष्टसाधनत्वाज्ञानात् । प्रवर्त्तते च दोषदूषितचित्तोविषादिभक्षणे, तदानीं बलवदनिष्टाननुबन्धित्वज्ञानात् । न चास्तिक-

खण्डन—यह मीमांसक का कथन ठीक है क्योंकि स्वयं अपने कल्पित लिपी आदि में तथा यौवन में कामोद्भेदन ( कामातुरता ) से होने वाले संभोग आदि में मनुष्यों की प्रवृत्ति नहीं हो सकेगी ( क्योंकि न उसने उस लिपी को बनाते हुवे किसी को देखा, और न संभोग करते हुवे किसी को देखा जिससे कि वह व्यक्ति "तादृशश्चाहम्" ऐसा निश्चय कर सके )।

नैयायिक कहता है कि यह और जानना चाहिये कि इदानींतनइष्टसाधनताज्ञान-इदानींतनकृतिसाध्यताज्ञान-एवं इदानींतनबलवदानिष्टाननुबान्धित्वज्ञान ही प्रवृत्ति में कारण हैं, न कि केवल इष्टसाधनता ज्ञानादि । तीनों इदानींतननिवेशका फल क्रम से बतलाते हैं कि "तेन भावियौवरा इति । अर्थात् कृतिसाध्यताज्ञान घटक कृति में यदि इदानींतन का निवेश करने से बालक की भावियौवराज्य में प्रवृत्ति नहीं होती है, क्योंकि "तदानीं" बाल्यावस्था में भावियौवराज्यसम्बन्धी कृतिसाध्यताज्ञान नहीं है । इष्टसाधनताज्ञान में इदानींतननिवेश का फल बतलाते हैं कि—"एवं तृप्तश्च" इति । अर्थात् तृप्त व्यक्ति की भोजन में प्रवृत्ति नहीं होती है क्योंकि तृप्तिकाल में उस मनुष्य को भोजन में इष्टसाधनताज्ञान नहीं है । बलवदनिष्टाननुबन्धित्वज्ञान से इदानींतन के निवेश का फल बतलाते कि ""प्रवर्त्ततेच रोषदूषितचित्तः" इति । अर्थात् रोष से दूषितचित्त वाले व्यक्ति की विष आदि के भक्षण में प्रवृत्ति इसलिये हो जाती है कि उस काल में उसे बलवान् अनिष्ट के अनुबन्धित्व का ज्ञान नहीं है ।

---

निश्चियेत्यर्थः । स्वकल्पितलिप्यादिप्रवृत्ताविति । स्व"पुरुषविशेष" कल्पितविजातीयलिपिविजातीयभाषाविषयकप्रवृत्ताविस्यर्थः । इदं च तदभावादित्यनेनान्वेति । तदभावादित्यस्य च यादृशस्य पुंसः कृतिसाध्यं यद्दृष्टं तादृशत्वज्ञानाभावादित्यर्थः । तथा च व्यभिचार इति भावः । कामोद्भेदादिनेति । कामातिशयेनेत्यर्थः । आदिना बाल्येऽविवेकेनेत्यादेः परिग्रहः । तदभावादिति । तथा च पुरुषान्तरकर्तृकैतादृशविजातीयसंभोगादेरप्रसिद्धया प्रवृत्तिपूर्वं विजायसंभोगादिदर्शनासंभवेन तादृशश्चाहमिति प्रवर्तकज्ञानस्य सुतरामसंभवेन व्यभिचारान्नतादृशनिश्चयस्य प्रवर्तकत्वमिति भावः ।

ननु सिद्धान्ते केवलेष्टसाधनत्वादित्रितयविषयकज्ञानस्य प्रवर्तकत्वे भावियौवराज्ये प्रवृत्त्यापत्तिरत आह । इदन्तु बोध्यमिति । अनुपदं वक्ष्यमाणमेव प्रवर्तकमिति बोध्यमित्यर्थः ।

स्यागम्यागमनशत्रुवधादिप्रवृत्तौ कथं बलवदनिष्टाननुबन्धित्वबुद्धिर्नरकसाधनत्वज्ञानादिति वाच्यम्। उत्कटरागादिना नरकसाधनताधीतिरोधानात्। वृष्ट्यादौ तु कृतिसाध्यताज्ञानाभावान्न चिकीर्षाप्रवृत्ती, किन्त्विष्टसाधनताज्ञानादिच्छामात्रम्। कृतिश्च प्रवृत्तिरूपा बोध्या। तेनजीवनयोनिसाध्ये प्राणपञ्चकसञ्चारे न प्रवृत्तिः।

प्रश्न—आस्तिक मनुष्य की अगम्या ( पर स्त्री ) के साथ गमन ( सभोग ) में, तथा शत्रुवध आदि में होनेवाली प्रवृत्ति में बलवदनिष्टाननुबन्धित्वज्ञान कैसे हुआ जब कि ( अगम्यागमन में तथा शत्रुवधादि में ) नरक साधनत्वज्ञान उसे हो रहा है।

उत्तर—उत्कटराग-एवं उत्कट द्वेष होने के कारण नरकसाधनताज्ञान तिरोहित हो रहा है। वृष्टि आदि में कृतिसाध्यताज्ञान न होने के कारण चिकीर्षा-प्रवृत्ति नहीं होती है, किन्तु इष्टसाधनताज्ञान से इच्छामात्र ही होती है। और कृतिसाध्यताज्ञान घटक कृति का प्रवृत्तिरूप अर्थ समझना चाहिये, इसीलिये जीवनयोनियत्न से साध्य श्वास आदि पाँचवायुओं के संचार में प्रवृत्ति नहीं होती है।

---

इदानीन्तनेष्टसाधनत्वादिज्ञानमिति। आदिपदात् इदानीन्तनबलवदनिष्टाननुबन्धित्व-इदानीन्तनकृतिसाध्यत्वयोः परिग्रहः। इष्टसाधनत्वं च इच्छाविषयीयस्तत्साधनत्वमित्यर्थः। तत्रेच्छायां इदानीन्तनत्वविशेषणम्। बलवदनिष्टाननुबन्धित्वं च बलवद्द्वेषविषयदुःखाजनकत्वम्, तत्र द्वेषे इदानीन्तनत्वं विशेषणीयम्। एवं कृतौ इदानीन्तनत्वं विशेषणं बोध्यम्।

वस्तुतस्तु विशिष्टस्य कारणत्वे विशेष्यविशेषणभावे विनिगमनाविरहेण कार्यकारणभावषट्कापत्त्या तद्विषयकेच्छा तत्साधनताज्ञान तद्विषयकबलवद्द्वेष तदननुबन्धित्वज्ञान तत्कालीनकृतिसाध्यताज्ञानानां पञ्चविधाः पृथगेव कार्यकारणभावा वाच्याः। एवं तत्कालीनकृतिसाध्यताज्ञानेत्यत्रापि तत्कालकृतिसाध्यताज्ञानयोरेव कारणत्वं स्वीक्रियते।

स्थलत्रयेऽप्यिदानीन्तनत्वविशेषणस्य क्रमेण प्रयोजनमाह। तेनेति। कृतिसाध्यत्वघटककृतौ इदानीन्तनत्वविशेषणेनेत्यर्थः। यौवराज्ये इति। सिंहासनारोहणविषये इत्यर्थः तदानीं। बाल्यावस्थायां। बालस्येति शेषः। इष्टसाधनत्वघटकेच्छायामिदानीन्तनत्वविशेषणस्य प्रयोजनमाह। एवमिति। तादृशेच्छायामिदानीन्तनत्वविशेषणेनेत्यर्थः। तदानीं। तृप्तिसमये। तृप्तस्येति शेषः इष्टसाधनत्वाज्ञानादिति। तदानीमिष्टत्वस्य "इच्छाविषयत्वस्य" तृप्त्यभावेन विशिष्टतृप्तिसाधनत्वज्ञानाऽसंभवादित्यर्थः। एकक्षणावच्छिन्नैककालवृत्तित्वसंबन्धेन तद्विषयकेच्छाविशिष्टं तत्साधनताज्ञानं फलितम्। वै० एकक्षणावच्छिन्नैककालवृत्तित्वसंबन्धेन। तथा चेच्छास्वरूपमतो

**इत्थञ्च प्रवर्त्तकत्वानुरोधाद्विधेरपीष्टसाधनत्वादिकमेवार्थः ।**

इसलिये प्रवर्त्तकत्व के अनुरोध से "गच्छेत्" "पठेत्" इत्यादि विधिस्थलों में विधि का भी इष्टसाधनत्व-आदिपद ग्राह्य बलवदनिष्टाननुबन्धित्व-कृतिसाध्यत्व-अर्थ है। (अर्थात् बलवद-निष्टाननुबन्धीष्ट-साधनत्वविशिष्टकृतिसाध्यत्व अर्थ है)।

---

एवविशेषणम्। तेनेच्छाया ज्ञातानुपयोगित्वेपि न क्षतिः। बलवद्द्वेषे तद्विशेषण-प्रयोजनमाह। **प्रवर्तते चेति**। प्रवर्तते एवेत्यर्थः। **दोषदूषितचित्त इति**। दोषैः रागद्वेषमोहैर्दूषितं चित्तं यस्य स तथा। **विषादिभक्षणे इति**। आदिना मरणसाध-नान्तराणां परिग्रहः। **तदानीं**। विषादिभक्षणप्रवृत्त्यव्यहितपूर्वकाले। दोषदूषित चित्तस्येतिशेषः। **बलवदनिष्टाननुबन्धित्वज्ञानादिति**। बलवद्द्वेषविषयदुःखाजन कत्वज्ञानस्यापिसंभवादित्यर्थः। तथा च विषादिभक्षणे तज्जन्यमरणे तदानीं द्वेषाभावेन तत्कालीनबलवद्द्वेषविषयपदार्थान्तराननुबन्धित्वस्य तादृशप्रवृत्तौ सत्त्वेन तदानीं तादृशज्ञानसंभवादिति भावः। **आस्तिकस्येति**। अस्ति परलोक इति ज्ञानवत इत्यर्थः। **अगम्याऽगमनशत्रुवधादिप्रवृत्ताविति**। गन्तुं संवद्धुमयोग्या अगम्या-तस्याः-गमने-संभोगे-विषयकत्वं सप्तम्यर्थः-तथा चाऽगम्यागमनविषयक प्रवृत्तौ शत्रुवधादिविषयकप्रवृत्ताविस्यर्थः। आदिपदात्सुरापानादिपरिग्रहः। **प्रवृत्त** प्रवृत्त्यऽव्यवहितपूर्वमिति यावत्। **कथं बलवद्विष्टाननुबन्धित्वबुद्धिरिति**। कः बलवद्द्वेषविषयदुःखाजनकत्वबुद्धिरित्यर्थः। तत्रहेतुमाह। **नरकसाधनत्वज्ञानादि** अगम्यागमनादिविशेष्यक बलवद्द्वेषविषयदुःखजनकत्वनिश्चयरूपप्रतिबन्धकसत्त्व दित्यर्थः। तथा च व्यतिरेकव्यभिचारान्न प्रवृत्तिसामान्ये तादृशबुद्धेर्हेतुत्वमि भावः। **उत्कटरागादिनेति**। अगम्यागमनादिजन्यसुखविषयकोत्कटेच्छयेत्यर्थः **नरकसाधनताधीतिरोधानादिति**। बलवद्द्वेषविषयदुःखजनकत्वनिश्चयानुत्पाद दित्यर्थः। अगम्यागमने तज्जन्ये सुखे नरके वा बलवद्द्वेषाभावादिति भावः। न इष्टसाधनताज्ञानं चिकीर्षाद्वारा प्रवृत्तिहेतुरस्तु किमुपायेच्छां प्रति इष्टसाधन ज्ञानस्य हेतुताकल्पनेनेत्यत आह। **वृष्ट्यादौत्विति**। आदिना नन्दनवनसत्त्वा परिग्रहः। **कृतिसाध्यताज्ञानाभावादिति**। वृष्टिर्मत्कृतिसाध्येतिज्ञानाभावादित्यर्थ **नचिकीर्षा**। नवृष्टिविशेष्यककृतिसाध्यत्वप्रकारकेच्छा। चिकीर्षाऽभावात्तत्प्रवृत्तिरिर्ग नेति भावः। **किन्त्विति**। **इष्टसाधनताज्ञानादिति**। वृष्टिर्भवेदिष्टसाधनमि ज्ञानादित्यर्थः। **इच्छामात्रमिति**। वृष्टिर्भवतु इति उपायेच्छामात्रमित्यर्थः उपायेच्छोत्पत्त्यनुरोधात्तत्रेष्टसाधनताज्ञानं स्वातन्त्र्येण हेतुर्वाच्य इति भावः।

ननु कृतिसाध्यताज्ञानस्य प्रवृत्तिकारणत्वेऽन्वयव्यभिचारः, जीवनयोनियत्नसाध्ये प्राणपञ्चकसंचारे प्रवृत्त्यभावदर्शनादत आह । कृतिश्चेति । कृतिसाध्यताज्ञानमित्यत्र कृतिसाध्यत्वप्रकारकेच्छारूपचिकीर्षेत्यत्र च कृतिश्चेत्यर्थः प्रवृत्तिरूपेति । तथा चोभयत्र कृतिशब्दस्य प्रवृत्तित्वावच्छिन्नेत्यर्थ इति भावः । एवं च प्रवृत्तित्वावच्छिन्नेत्यर्थ इति भावः । एवं च प्रवृत्तिसाध्यताज्ञानं प्रवृत्तिसाध्यत्वप्रकारकेच्छारूपचिकीर्षां प्रति तद्द्वारा च प्रवृत्तौ कारणं बोध्यम् । तेन । प्रवृत्तित्वेन प्रवेशेन । यत्नत्वावच्छिन्नसाध्यताज्ञानस्य प्रवर्तकत्वास्वीकारेणेति यावत् । जीवनयोनिसाध्ये इति । जीवनयोनियत्नमात्रसाध्ये इत्यर्थः । प्रवृत्त्यसाध्ये इति । यावत् । न प्रवृत्तिरिति । प्रवृत्तिं प्रति कृत्यसाध्यताज्ञानस्य प्रतिबन्धकत्वादिति भावः ।

इत्थं चेति । प्रवृत्तिं प्रतीष्टसाधनत्वादिज्ञानस्य हेतुत्वे चेत्यर्थः । प्रवर्तकत्वानुरोधादिति । प्रवर्तकत्वादित्यर्थः । लिङ्श्रवणेऽयं मां प्रवर्तयतीतिनियमतोऽवबोधादिति भावः । विधेरपीति । लिङ्लोट्तव्यप्रत्ययानामपीत्यर्थः । इष्टसाधनत्वादिकमेवेति । आदिना बलवदनिष्टाननुबन्धित्व कृतिसाध्यत्वयोः परिग्रहः । अर्थ इति । वाच्य इति शेषः तथा च विधेराख्यातत्वेन कृतौ शक्तिः, विधित्वेनेष्टसाधनत्वादौ इति फलितम् ।

अत्र भट्टपादाः—प्रवृत्तिस्तावद् द्विविधा—स्वाधीना-पराधीना च । तत्राऽऽद्यायामिष्टसाधनताज्ञानं कारणम् । द्वितीयायां तु आज्ञादिज्ञानं कारणम् । अनिच्छन्तमपि मां राजा प्रेरयतीत्यनुभवात् । तत्राऽऽज्ञादेः प्रत्येकं ज्ञानं न प्रवृत्तिहेतुः, गौरवात् किन्तु आज्ञादिसर्वानुगतं प्रवर्तनात्वप्रकारकज्ञानं तथा लाघवात् । प्रवर्तना च प्रवर्तयितुः परप्रवृत्त्यनुकूलः स्वनिष्ठो व्यापारविशेषः । स च चेतनस्य राजादेराज्ञादिः, अचेतनस्य तु वेदस्य अभिधानामकः स्वसमवेतः स्वजन्यः कश्चिदलौकिको व्यापारो लिङादिशब्दः । शब्दाश्रितत्वात् शाब्दीभावना इत्युच्यते, भावनाशब्दस्य व्यापारवाचित्वात्, भाव्यतेऽनया इति व्युत्पत्तेः । अत एवाऽऽख्यातार्थभावनापि व्यापाररूपैव । विधेः प्रवर्तकत्वं तु विधिर्मां प्रवर्तयतीत्यनुभवसिद्धम् । तथा च तदुपपत्त्यर्थं लिङादेः स्वनिष्ठव्यापारविशेषोऽवश्यमभ्युपेयः ।

स्वनिष्ठव्यापारद्वारैव परनिष्ठव्यापारजनकत्वनियमात् । दण्डस्य स्वनिष्ठस्पन्दद्वारा चक्रनिष्ठस्पन्दजनकत्वदर्शनात् । व्यापारिणः स्वनिष्ठव्यापारजननेऽपि व्यापारापेक्षायामनवस्थापत्तिरित्यतः परनिष्ठेति । ज्ञानद्वारा लिङादेः प्रवृत्तिजनकत्वेऽपगमे शब्दाश्रयोऽभिधानामको व्यापारोऽन सिद्ध्यतीत्यतः स्वनिष्ठेति । तथा च परप्रवृत्तिजनकेन लिङादिपदेनापि स्वनिष्ठव्यापारोऽभिधानामकोऽवश्यं जननीयः ।

एवं विधिः प्रवृत्तिजनकधर्मसमवायिकारणं तज्जनकव्यापारवत्त्वा-दित्यनुमानमपि लिङादिसमवेताऽभिधानामकव्यापारे मानम् । परमतेऽत्र हेतु-द्रव्यत्वाभावासिद्धिः ।

इत्थञ्च विश्वजिता यजेतेत्यादौ यत्र फलं न श्रूयते तत्रापि स्वर्गः फलं

इसीलिये तीन को विधि का अर्थ मानने से "विश्वजिता यजेत" इत्यादिस्थलों में जहाँ पर फल श्रवण नहीं होता है वहाँ भी स्वर्गात्मक इष्टफल की कल्पना कर ली जाती है और उसी स्वर्गरूप इष्टसाधनताज्ञान से याग में फिर प्रवृत्ति होती है।

---

सेयमभिधा लिङादिपदमात्रशक्या। तथा हि—यजेतेत्यादौ लिङोंऽशद्वय-मस्ति, लिङ्त्वं आख्यातत्वं च। तत्र लिङ्त्वेनाऽभिधायां शक्तिः, सैव शाब्दी-भावना। आख्यातत्वेनोत्पादनायां शक्तिः, सैवचार्थीभावना इत्युच्यते।

द्विविधापि भावना साध्य-साधने-तिकर्तव्यतारूपांऽशत्रयसाकांक्षा। एतत्त्रितय-साकांक्षत्वमेव भावनात्वम्। तत्र तावदार्थीभावनाया अंशत्रयमुच्यते। किं भावयेत् केन भावयेत् कथं भावयेदिति। किमित्याकांक्षायां "कामश्रुतिसमर्पितं" स्वर्गादिफलं भाव्यतयाऽन्वेति। केनेत्याकांक्षायां प्रकृत्यर्थोयागः करणतयाऽन्वेति। यद्यपि कृतिरू-पाया आर्थीभावनाया न यागजन्यत्वं प्रत्युतयागजनिकैव सेति तत्र करणतया यागा-न्वयोन संभवति तथापि भाव्ये स्वर्गादौ यागस्य करणत्वात् तद्विशिष्टभावनायामपि तस्य तथात्वोपचारात्तत्र तस्य करणत्वेनाऽन्वय इत्यदोषः। कथमित्याकांक्षायां प्रयाजाद्यङ्गजातमितिकर्तव्यतात्वेनाऽन्वेति। तथा च स्वर्गकामनिष्ठा यागकरणिका प्रयाजादीतिकर्तव्यताका स्वर्गफलिका भावना इत्यार्थीभावनाबोधः।

इयमेवार्थीभावना प्रवृत्तिरूपा शाब्दीभावनायां भाव्यतयाऽन्वेति। केनेत्य-पेक्षायां अभिधायां लिङः शक्तिग्रहः करणतयाऽन्वेति। कथमित्याकांक्षायामर्थवादो-पस्थितं स्तुत्यादिकमितिकर्तव्यकतात्वेनाऽन्वेति। यदाहुः—

लिङोभिधा सैव च शब्दभावना भाव्या च तस्यां पुरुषप्रवृत्तिः।
संबन्धबोधः करणं तदीयं प्ररोचनोचाङ्ग तयोपयुज्यते इति।

तथा च विधिनिष्ठा शक्तिग्रहकरणिका स्तुत्यर्थवादोपकृता यागप्रवृत्तिजनिका भावना इति शाब्दीभावनाबोधः। अत्र च प्रवर्तनात्वेन शाब्दीभावनायां लिङादेः शक्तिः, एकपदोपात्तत्वप्रत्यासत्त्या च भावनयोः परस्परमन्वयबोधः प्रथमतोजायते। स च प्रवर्तनाविषयः कृतिरित्याकारकः। विषयत्वंजन्यत्वम्। तदुक्तम्।

विधिभावनयोः श्रुत्या सङ्गतिः पूर्वमिष्यते इति।

विधिः शाब्दीभावना। भावना आर्थीभावना। अत एव विध्युपरक्ताभावना-लिङर्थ इति भट्टसिद्धान्तः। विधिः प्रवर्तना, तदुपरक्ता तद्विशिष्टा आर्थीभावना लिङर्थ इत्यर्थः। यागविषयकभावनाजन्यव्यापारवान्पुरुष इत्यन्वयबोध इत्यन्ये। तत्र यागविषयत्वं भावनाजन्यत्वं च व्यापारविशेषणम्। भावना शाब्दीभावना। व्यापारः प्रवृत्तिः।

न चैवमपि प्रवृत्तिहेतोरिष्टसाधनताज्ञानस्याऽलाभात्कथं प्रवृत्तिरिति वाच्यम्। आर्थीभावनायां शाब्दीभावनाजन्यत्वस्यान्वये तस्या इष्टसाधनत्वं योग्यतेति तत्र

कल्प्यते। नन्वहरहः संध्यामुपासीतेत्यादाविष्टानुत्पत्तेः प्रवृत्तिः कथम्। न चार्थवादादिकं ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यम्। तथा सति काम्यत्वेनित्यत्वहान्यापत्तेः, कामनाभावे चाकरणापत्तेः, इत्थञ्च यत्र फलश्रुतिस्तत्रार्थवादमात्रमितिचेन्न।

प्रश्न—मीमांसक नैयायिक से कहता है कि यदि इष्टसाधनत्व ही विध्यर्थ है तब "अहरहः सन्ध्यामुपासीत" यहाँ विधिवाक्य से बोधित संध्योपासनरूप नित्यकर्म में इष्ट (फलविशेष) की अनुत्पत्ति होने से संध्योपासन में प्रवृत्ति कैसे होगी।

उत्तर—वहाँ पर भी "संध्यामुपासते ये तु सततंसंशितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्" इस अर्थवाद से सिद्ध ब्रह्मलोकादि अथवा प्रत्यवायाभाव फल है, और उस ब्रह्मलोक अथवा प्रत्यवायाभावरूप फल की साधनता का ज्ञान संध्योपासन में होने से प्रवृत्ति बन जायगी।

प्रश्न—मीमांसक कहता है यह कथन ठीक नहीं है क्योंकि तब तो सन्ध्योपासन कर्म के काम्य हो जाने से नित्यत्व की हानि हो जावेगी। और काम्य न मानने से अकरणापत्ति लग जावेगी, इस प्रकार "सन्ध्यामुपासते" इत्यादिस्थलों में यहाँ नित्य कर्मों की फलश्रुति देखने में आती है वहाँ अर्थवादमात्र फल मानना उचित है।

---

तत्लाभात्। अस्तु वा तदपि विध्यर्थः, तच्च स्वपदोपात्ताख्यातार्थीभावनायामन्वेति। न चेष्टसाधनत्वस्य विध्यर्थत्वे न्यायमताऽविशेष इति वाच्यम्। न्यायमते यागादिगतमिष्टसाधनत्वं विध्यर्थः। भट्टमते तु प्रवृत्तिगतं तत्तथेति विशेषात्। आर्थीभावनाया इष्टसाधनत्वं क्रियागतेष्टसाधनत्वं विनानेति क्रियागतेष्टसाधनत्वधीरपीति प्रवृत्तिर्नानुपपन्नेति प्राहुः।

अथ विधिवाक्यादिष्टसाधनत्वघटकस्य इष्टस्य यदि इष्टत्वेनोपस्थितिस्तदा स्वर्गकामः पचेते त्यादेरपि प्रामाण्यापत्तिः, स्वर्गकामकृतिसाध्यस्य पाकादेरोदनादिरूपेष्टसाधनत्वादिति चेद् स्वर्गकामादिसमभिव्याहृतविधिवाक्यस्य स्वर्गत्वादिरूपणैव बोधे साकांक्षत्वात्, इष्टान्तरसाधनत्वे शक्तिमत्त्वेऽपि निराकांक्षतया तद्रूपेणैव विधेस्तद्बोधकत्वाऽसंभवात्। परन्तु यत्र इष्टस्य स्वर्गत्वाद्यन्तररूपेण विधिवाक्याद्बोधः, तत्र तादृशान्तररूपेणैवेष्टं विधेः शक्यतावच्छेदकम्, यदि इष्टत्वेनैव विधिवाक्याद्बोधस्तदा इष्टत्वेनैव। अत एव "विश्वजिता यजेत" इत्यादौ इष्टसामान्यसाधनत्वस्यैव विधिना बोधनात् तस्य चाऽप्रवर्तकतया प्रवर्तकस्य इष्टविशेषसाधनत्वावगाहिज्ञानस्य संपत्तये स्वर्गः फलं कल्प्यते इत्याह। इत्थं चेति। इष्टसाधनत्वादेर्विध्यर्थत्वे चेत्यर्थः। स्वर्गः फलमिति। तथा च स्वर्गकामपदमध्याहर्तव्यमिति भावः।

**ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव भरणीश्राद्धे काम्यत्वनैमित्तिकत्वयोरिव नित्यत्वकाम्यत्वयोरपि अविरोधात्।**

उत्तर—नैयायिक कहता है परन्तु यह भी ठीक नहीं है कारण कि ग्रहणनिमित्तक श्राद्ध तथा स्नान आदि में नित्यत्व का प्रतिपादन किया है तो ग्रहण श्राद्ध में जैसे कि नित्यत्व-नैमित्तिकत्व अविरुद्ध हैं उसी प्रकार नित्यत्व-काम्यत्व का भी अविरोध है। और यह जो पहिले प्रभाकरानुयायी ने कहा था कि सन्ध्या-वन्दन आदि कर्मों को यदि काम्य नहीं मानेंगे तो अकरणापत्ति लग जायेगी—अर्थात् उन कर्मों में कामना का अभाव हो जाने पर करना ही

---

ननु इष्टसाधनत्वस्य विध्यर्थत्वे "प्रत्यहं सन्ध्यामुपासीत" इत्यादिविधेरप्रामाण्यापत्तिः, नित्यकर्मणः फलाभावादिति प्राभाकरः शंकते। **नन्विति। इत्यादाविति।** इत्यादिविधिवाक्यप्रतिपाद्यसन्ध्योपासनादिकर्मणीत्यर्थः। अस्य कथं प्रवृत्तिरित्यनेनाऽन्वयः। तत्र हेतुमाह। **इष्टानुत्पत्तेरिति।** तादृशकर्मणा फलानुत्पत्तेरित्यर्थः। *रात्रिसत्रन्यायेन सन्ध्योपासनादेरपि आर्थवादिकफलसंबन्धः स्वीकार्य इति शंकते।* **नचेति। आर्थवादिकमिति।**

"सन्ध्यामुपासते ये तु सततं संशितव्रताः।

विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनमित्यर्थवादोक्तमित्यर्थः। **ब्रह्मलोकादीति।** ब्रह्मलोकादिप्राप्तिरित्यर्थः। **प्रत्यवायाभावोवेति।** वाकारश्चार्थे। प्रत्यवायानुत्पत्तिरित्यर्थः। **फलमिति।** तथाच प्रवृत्तिर्नानुपपन्नेति भावः। **तथासति।** नित्यस्यापि फलसाधनत्वे। **काम्यत्वे इति।** काम्यत्वं च सफलत्वे सति विधिप्रतिपाद्यत्वम्। एवं नित्यत्वं निष्फलत्वे सति विधिप्रतिपाद्यत्वम्। **नित्यत्वहान्यापत्तेरिति।** नित्यत्वाभावप्रसङ्गादित्यर्थः। नित्यत्वकाम्यत्वयोर्विरोधादिति भावः। अविरोधे त्वाह। **कामनाऽभावे इति।** फलेच्छाविरहे सतीत्यर्थः। **अकरणतापत्तेरिति।** अकरणे प्रत्यवायानुत्पत्तेः पुत्रेष्ट्यादिवदित्यर्थः। नित्यस्थलीयफलश्रुतेर्वैयर्थ्यं नाशंकनीयम्, तस्या अर्थवादतया प्राशस्त्यमात्रबोधे तात्पर्यादित्याह। **इत्थंचेति।** अकरणतापत्तिभिया निष्फलत्वसिद्धौ चेत्यर्थः। **फलश्रुतिरिति।** फलप्रतिपादकसन्ध्यामुपासते इत्यर्थवादः इत्यर्थः। **तत्र।** सन्ध्योपासनकर्तरि। **अर्थवादमात्रमिति।** प्राशस्त्यबोधतात्पर्यका, न तु फलत्वबोधतात्पर्यका इत्यर्थः।

नैयायिकः समाधत्ते। **ग्रहणश्राद्धादाविति।** नित्यत्वनैमित्तिकत्वयोरिवेति। **उपरागेश्राद्धंकुर्वीत, उपरागेस्नायादिति** विधिवाक्येन श्राद्धस्नानयोर्नित्यत्वप्रतिपादनात्, ग्रहणनिमित्तकत्वप्रतिपादनाच्च तयोर्नित्यत्वनैमित्तिवदित्यर्थः।

न च कामनाऽभावेऽकरणतापत्तिः । त्रिकालस्तवपाठादाविव कामना-सद्भावस्यैव कल्पनात् । न तु वेदबोधितकार्यताज्ञानात् प्रवृत्तिरिति संभवति स्वेष्टसाधनत्वमविज्ञाय तादृशकार्यताज्ञानसहस्रेणापि प्रवृत्तेरसंभवात् । यदपि

ऽनर्थ हो जायगा । नैयायिक—यह भी प्रभाकरानुयायी का कथन ठीक नहीं है, क्योंकि त्रिकाल-स्तवपाठ विष्णुसहस्रनाम आदि जैसे विधि प्राप्त होने से यद्यपि काम्य नहीं है, परन्तु फिर भी "त्रिसन्ध्यं कीर्तयेद्यस्तु सर्वान् कामानवाप्नुयात्" इस फलकामना के सद्भाव से लोग उसमें प्रवृत्त होते हैं और उन्हें वैसा ही फल भी होता है । उसी प्रकार संध्या-उपासनादि स्थल में भी "अकुर्वन् विहित कर्म नरो भवति किल्विषी" इस वचन के अनुसार प्रत्यवायाभावरूप फल की कामना अवश्य कर लेनी चाहिये, यही "त्रिकालस्तव पाठादाविव" इत्यादि पंक्ति का अर्थ है । और मीमांसक जो कहता है कि वेदबोधितकार्यताज्ञान से प्रवृत्ति होती है यह तो संभव ही नहीं है क्योंकि अपने इष्टसाधनता का ज्ञान जिसे नहीं है उसकी हजार कार्यताज्ञानों से भी प्रवृत्ति संभव नहीं है ।

---

भरणीश्राद्धे इति । भरणीनक्षत्रनिमित्तकश्राद्धे इत्यर्थः । काम्यत्वनैमित्तिकत्व-योरिवेति । सप्तविंशतिनक्षत्राणां मध्ये एकैकनक्षत्रनिमित्तकं श्राद्धमुक्तम्, पशुपुत्रादि-रूपैकैकफलाभ्युदयं चोक्तम् । ततश्च भरणीश्राद्धकर्तुः तावत्फलवत्त्वस्य इतिवचनादौ प्रतिपादितत्वान्नक्षत्रनिमित्तकत्वाच्च भरणीश्राद्धस्य काम्यत्वनैमित्तिकत्ववदित्यर्थः । नित्यत्वकाम्यत्वयोरपीति । सन्ध्योपासनादेरित्यादिः । अविरोधादिति । अविरोधस्वीकारादित्यर्थः । वस्तुतो नहि निष्फलत्वे सति वेदबोधितत्वं नित्यत्वम्, असिद्धेः । प्रवृत्तिसामान्यं प्रत्येव काम्यसाधनताधियो हेतुत्वात् । यदकरणात्प्रत्य-वायस्तत्त्वम् । तच्च काम्यत्वेऽपि अविरुद्धमिति ध्येयम् । कामनाऽभावे इति । कामनाविरहिण इत्यर्थः । अकरणतापत्तिरिति । अकरणे प्रत्यवायो न स्यादुक्ते-ष्टाद्विवदित्यर्थः । कल्पनादिति । तथा च सन्ध्योपासनादावपि कामनासत्त्वमाव-श्यकमिति भावः । ननु सन्ध्योपासनं अफलमपि करणीयम् वेदबोधितत्वादिति गुरुमतमाक्षिपति । नत्विति । अत्र संभवतीत्यनेनाऽन्वयः वेदबोधितकार्यता-ज्ञानादिति । वेदबोधितकृतिसाध्यताज्ञानादेवेत्यर्थः । तेनेष्टसाधनताज्ञानव्यवच्छेदः । स्वेष्टसाधनत्वमविज्ञायेति । स्वेष्टसाधनत्वज्ञानविरहे इति यावत् ।

प्रवृत्तेरसंभवादिति । प्रवृत्त्यभावादित्यर्थः । अनेन इष्टसाधनताज्ञानाभावे प्रवृत्त्यभाव इति व्यतिरेकसहचारो दर्शितः । इदमुपलक्षणम् । इष्टसाधनताज्ञानसत्त्वे प्रवृत्तिसत्त्वमित्यन्वयसहचारोऽपि बोध्यः । तादृशकार्यताज्ञानसहस्रेणापीति । वेद-बोधितकृतिसाध्यताज्ञानसत्त्वेऽपीत्यर्थः । अनेन तादृशकार्यताज्ञानसत्त्वे प्रवृत्त्यभाव

पण्डापूर्वं फलमिति तदपि न, कामनाभावेऽकरणापत्तेस्तौल्यात्। कामनाकल्पने तु अर्थवादादिकं फलमेव रात्रिसत्रन्यायात् कल्प्यताम्। अन्यथा प्रवृत्त्यनुपपत्तेः। तेनानुत्पत्तिं प्रत्यवायस्यान्ये मन्यंते।

प्रश्न—प्रभाकर कहता है कि—पण्डात्मक अपूर्व ही सन्ध्योपासन का फल मान लेना चाहिये। ( जिस अपूर्व से कोई फल न हो उसे "पण्डा" कहते हैं )

उत्तर—यह भी ठीक नहीं है—क्योंकि जिसे पण्डापूर्वरूप फल की इच्छा नहीं है उस उस पुरुष को सन्ध्यावन्दन कर्म के अकरण की आपत्ति लग जावेगी, अर्थात् उसे सन्ध्यावन्दन नहीं करना चाहिये—यह दोष प्रभाकर के मत में भी तुल्य ही है। यदि पण्डापूर्वरूपफल की कामना की कल्पना करते हो तो रात्रिसत्रन्याय से अर्थवाद वाक्य से बोधित जो फल उसकी कल्पना ही श्रेयस्कर है।

---

इत्यन्वयव्यभिचारोदर्शितः। एवं तादृशकार्यताज्ञानाभावेप्रवृत्तिसत्त्वमितिव्यतिरेकव्यभिचारोऽपि बोध्यः। तथा च निष्फलेप्रवृत्त्यभावेनाऽन्वयव्यतिरेकाभ्यां प्रवृत्तित्वेन इष्टसाधनताज्ञानत्वे न कार्यकारणभावस्य निर्धारितत्वादिति भावः। अत एव कुसुमाञ्जलौ "सन्ध्योपासनमफलमपि क्रियते वेदबोधितत्वादिति गुरुमतमाशंक्य सन्ध्योपासनं सफलं शिष्टैरनुष्ठीयमानत्वादित्यनुमानेन तस्यसफलत्वं प्रसाध्य निष्फलत्वसाधकहेतोः ज्योतिष्टोमादौ व्यभिचारदर्शनेन तन्मतंनिरस्य **"गुरुमतमेतन्नगुरोर्मतमि"** त्यभिधावैवोपेक्षितमाचार्यैः। यच्च सुखदुःखाभावयोरिव पण्डापूर्वं स्वतःप्रयोजनं नित्यस्य कर्मण इति प्राभाकरमतं, तदपि दूषयति। **यदपीति। पण्डापूर्वमिति।** सदसद्विवेचिनी बुद्धिः—पण्डा। **पण्डापूर्वमिति।** तादृशबुद्ध्यपूर्वमित्यर्थः। कामनाविरहतत्सत्त्वाभ्यां विकल्प्य दूषयति। **कामनाभावे इति।** पण्डापूर्वात्मकफलकामनाविरहे इत्यर्थः। **अकरणतापत्तेरिति।** अकरणेप्रत्यवायो न स्यादित्यर्थः। **तौल्यादिति।** तुल्यत्वादित्यर्थः। पुत्रेष्ट्यादितुल्यत्वादिति भावः। **कामनाकल्पने तु इति।** कामनास्वीकारे तु इत्यर्थः। **आर्थवादिकं फलमेवेति।** अर्थवादोक्तं प्रत्यवायानुत्पत्तिरूपफलमेवेत्यर्थः। एवकारेण पण्डापूर्वव्यवच्छेदः। **रात्रिसत्रन्यायादिति। रात्रिसत्रेण यजेतेति** विधिवाक्ये फलाऽश्रवणेन फल जिज्ञासायां "प्रतितिष्ठन्ति ह वा य एतारात्रीरुपयन्ति" इत्यर्थवादबोधितप्रतिष्ठारूपफलं यथा सिद्धान्तितंतथाऽत्रापि लाघवात् **"सन्ध्यामुपासते ये तु"** इत्यादि अर्थवादोक्तब्रह्मलोकावाप्तिरूपफलमवश्यं स्वीकार्यमित्यर्थः। **अन्यथा** तस्य निष्फलत्वे। **प्रवृत्त्यनुपपत्तेरिति।** प्रवृत्तिं प्रति इष्टसाधनताज्ञानस्य कारणत्वादिति

एवं "सन्ध्यामुपासते ये तु सततं शंसितव्रताः ॥
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ।"
एवं "दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन् ॥"

इति प्रीत्यात्मकमेव फलमस्तु ।

न च पितृप्रीतिः कथं फलं व्यधिकरणत्वात् इति वाच्यम् । अतएवोक्तं "शास्त्रदर्शितं फलमनुष्ठानकर्तरीत्युत्सर्गः" इति । पितॄणां मुक्तत्वे तु

[ अभिप्राय यह है कि—जैसे रात्रिसत्र ( रात में किये हुवे यज्ञ ) का कोई फल श्रुत नहीं है किन्तु रात्रिसत्र का "प्रतितिष्ठन्ति ह वा य" इत्यादि अर्थवाद वाक्य द्वारा प्रतिष्ठारूप फल मीमांसकों ने माना है । इसी प्रकार सन्ध्यावन्दन आदि नित्य कर्मों का भी 'सन्ध्यामुपासते ये तु सततं शंसितव्रताः' इस अर्थवाद वाक्य से प्रतिपादित ब्रह्मलोक प्राप्ति आदि ही फल मानना चाहिये ] अन्यथा ( नित्य कर्मों का यदि कुछ भी फल न माना जायगा तो ) नित्य कर्मों में प्रवृत्ति ही नहीं होगी । इसीलिये कुछ अन्य नवीन लोग प्रत्यवाय की अनुत्पत्ति ही सन्ध्यावन्दन आदि नित्यकर्मों का फल मानते हैं । इसी दृष्टि से प्राचीन लोग सन्ध्यावन्दन आदि नित्य कर्मों का "सन्ध्यामुपासते ये तु सततं ये तु शंसितव्रता—विधूतपापास्तेयान्ति ब्रह्मलोक-मनामयम्" इस अर्थवाद समन्वित वाक्यों के आधार पर ब्रह्मलोकप्राप्ति ही फल मानते हैं । एवं "दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्" इस अर्थवादबोधक वाक्य के आधार पर नित्यकर्मात्मक पितृश्राद्ध का पितृप्रीति ही फल है ।

प्रश्न—पितृश्राद्ध का फल पितृ लोगों की प्रसन्नता कैसे हो सकती है, व्यधिकरण ( विभिन्न अधिकरण में वृत्ति ) होने से । [ क्योंकि पुत्र जब पिता का श्राद्ध करता है तब पितृगण पुत्र पर प्रसन्न होते हैं—यहाँ पर श्राद्धक्रियाकर्तृत्व पुत्र में है और प्रसन्नता पितरों में है—दोनों का विभिन्न अधिकरण होने के नाते वैयधिकरण्य है, अतः इन दोनों का कार्यकारण भाव सर्वथा अनुपपन्न है—क्योंकि 'ययोः सामानाधिकरण्यं तयोरेव कार्यकारणभावः' ]

---

भावः । तेन । आर्थवादिकफलकल्पनेन । अनुत्पत्तिं प्रत्यवायस्येति । प्रत्यवाय-स्यानुत्पत्तिमिति योजना । अनुत्पत्तिः प्रागभावः । अनामयमिति । मनुते इति शेषः । प्रीतिमावहन्निति । इत्यर्थवादोपस्थितेरित्यर्थः । फलमस्त्विति । फलपदं कर्त्तव्यमित्यर्थः । व्यधिकरणत्वादिति । यः कर्त्ता स एव भोक्ता इति न्यायेन पितृप्रीतेः कर्तृनिष्ठत्वाभावेन तस्याः श्राद्धफलत्वं न संभवतीत्याशयः । गयाश्राद्धा-दाविवेति । आदिना महाकपालश्राद्धादेः परिग्रहः । "गयायां पिण्डदानं च पितृप्रीतिकरं भवेद्" इति वचनेन गयाश्राद्धस्य पितृतृप्तिहेतुत्वप्रतिपादनात्

स्नस्य स्वर्गादि एव फलम् । यावन्नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गजनकत्वात् ।

पण्डाऽपूर्वार्थं प्रवृत्तिश्च न संभवति । न तत्सुखदुःखाभाववत्स्वतः

उत्तर—गया श्राद्ध की तरह उद्देश्यतासम्बन्ध से स्वर्गात्मक फलजनकत्व की कल्पना कर लेनी चाहिये । [ अर्थात् जिसके उद्देश्य से गयाश्राद्ध किया जायगा उस गयाश्राद्ध का फल ( स्वर्ग ) उसी उद्दिष्ट व्यक्ति को होता है, इसी प्रकार अहरहः ( प्रतिदिन ) श्राद्धस्थल में भी पुत्र जब कि पितृ लोगों की प्रसन्नता के ही उद्देश्य से श्राद्ध करता है तो श्राद्ध क्रिया भी उद्देश्यता सम्बन्ध से पितृ लोगों में है और प्रसन्नता ( प्रीति ) भी सुखस्वरूप होने के नाते समवायसम्बन्ध से पितृओं में है अतः सामानाधिकरण्यप्रयुक्त श्राद्ध क्रियात्मक कारण का तथा स्वर्ग एवं प्रीत्यात्मक फल का कार्यकारणभाव बन जाता है ] इसीलिये शास्त्र प्रतिपादित क्रिया का फल अनुष्ठान कर्त्ता को होता है इसे उत्सर्गवाद बतलाया है । ( अर्थात् प्रायः अनुष्ठानकर्त्ता को तो होता ही है परन्तु जिसको उद्देश्य किया जावे उसे भी फल होता है । उत्सर्ग नाम प्रायः का है । )

प्रश्न—गया श्राद्ध का फल जब कि आपने पितृमुक्ति अथवा पितृ लोगों को स्वर्गप्राप्ति बतलाया है तब गयाश्राद्ध से पहिले ही यदि पितृ लोग मुक्त हो गये, या इन्हें स्वर्ग प्राप्ति हो गयी तो पुत्र द्वारा किये हुवे गयाश्राद्ध का क्या फल होगा ?

उत्तर—पितृओं के मुक्त हो जाने पर श्राद्ध करने वाले पुत्र को स्वर्गफल होगा । क्योंकि यावत् ( समस्त ) नित्य-नैमित्तिक कर्मानुष्ठान को सामान्यरूप से स्वर्ग जनकत्व माना गया है ।

प्रश्न—पण्डा पूर्व फल क्यों नहीं है ।

प्रश्न—हमारे यहाँ सुख-दुःखाभाव-तथा इनके साधनभूत उपाय-इन तीन को ही स्वयं पुरुषार्थ माना है, वह पण्डापूर्व सुख-दुःखाभाव तथा उनके साधन की तरह स्वतः पुरुषार्थ नहीं है । [ अतः पण्डापूर्व सन्ध्यावन्दन आदि नित्य कर्मों का फल नहीं हो सकता है ]

---

तदनुरोधेन पितृनिष्ठतृप्तिं प्रति उद्देश्यतासंबन्धेन गयाश्राद्धस्य हेतुत्वस्वीकारवदित्यर्थः । अतएव । पितृप्रीतेः श्राद्धफलत्वादेव । उक्तमिति । भट्टैरित्यादिः । उत्सर्ग इतीति । श्राद्धादिफलस्य कर्तृमात्रगतत्वे तु व्यभिचाराभावान्नियम एव स्यादिति भावः । मुक्तत्वे तु इति । अवधारणार्थकस्तुशब्दः स्वर्ग इत्युत्तरं योजनीयः स्नस्य । श्राद्धकर्तुः । यावदिति । सर्वस्येत्यर्थः । सामान्यतः । विहितकर्मत्वेन । स्वर्गफलकत्वादिति । स्वर्गफलकत्वस्वीकारादित्यर्थः । स स्वर्गः सर्वान्प्रत्यविशिष्टत्वादिति न्यायादिति भावः । पण्डापूर्वस्य फलत्वमेव न संभवतीत्याह । पण्डापूर्वार्थमिति । पण्डापूर्वमुद्दिश्येत्यर्थः । प्रवृत्तिश्चेति । सन्ध्योपासनादिविधेयकप्रवृत्तिश्चेत्यर्थः ।

पुरुषार्थो, न वा तत्साधनम्। प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेद्—इत्थम्। यथा हि—नित्ये कृते प्रत्यवायाभावस्तिष्ठति तदभावे तदभावः। एवं प्रत्यवायाभावस्य सत्वे दुःखप्रागभावसत्वं, तदभावे तदभाव इति योगक्षेम-साधारणकारणताया दुःखप्रागभावं प्रत्यपि सुवचत्वात्। एवमेव प्रायश्चित्त-स्यापि दुःखप्रागभावहेतुत्वमिति।

प्रश्न—प्रत्यवाय की अनुत्पत्ति अर्थात् प्रत्यवाय के अभाव में कैसे प्रवृत्ति होती है। [ क्योंकि प्रत्यवायाभाव भी पण्डापूर्व के समान सुख-दुःखाभाव एवं तत्साधनरूप न होने के नाते स्वतः पुरुषार्थ नहीं है अतः प्रत्यवाय ( पाप ) की अनुत्पत्ति के लिये जो विद्वान् लोगों की सन्ध्यावन्दन आदि नित्य कर्मों में प्रवृत्ति होती है वह कैसे होगी ]

उत्तर—जैसे नित्य कर्म करने पर प्रत्यवायाभाव रहता है, और न करने पर तदभाव अर्थात् प्रत्यवायाभाव का अभाव ( पाप ) रहता है। ऐसे ही प्रत्यवायाभाव रहने पर दुःख प्रागभाव रहता है, और प्रत्यवायाभाव के अभाव रहने पर दुःखप्रागभाव का अभाव ( दुःख ) रहता है इस प्रकार योगक्षेम साधारण प्रवृत्ति कारणता दुःखप्रागभाव के प्रति भी सुवच है [ इस दृष्टि से प्रत्यवायाभाव में अर्थात् प्रत्यवाय की अनुत्पत्ति में प्रवृत्ति होती है कि जिससे दुःखप्रागभाव बना रहे ] इसी प्रकार प्रायश्चित्त को भी दुःखप्रागभाव का हेतु जानकर प्रायश्चित के करने में विद्वान् लोग प्रवृत्त होते हैं।

---

प्रवृत्त्यसंभवमेवोपपादयति। नहीति। तत्। पण्डापूर्वं। स्वतः पुरुषार्थ इति। इतरेच्छानधीनेच्छाविषय इत्यर्थः। तथा चेच्छाविषयत्वाभावान्न तस्य फलत्वमिति भावः। ननु मास्तु उद्देश्यतया प्रवृत्तिः विधेयतयैव प्रवृत्तिरस्त्वित्यत आह। नवेति। तत्साधनमिति। फलसाधनमित्यर्थः। फलसाधनत्वखण्डत्वयोर्विरुद्धत्वा-दिति भावः। ननु नैयायिकमते प्रत्यवायानुत्पत्तिः कथं फलम्, तस्याः स्वतः पुरुषार्थत्वाभावात्, तस्या पुरुषार्थसाधनत्वाभावाच्चेत्याशंकते। प्रत्यवायानुत्पत्ता-विति। प्रत्यवायप्रागभावे इत्यर्थः। कथं प्रवृत्तिरिति। उद्देश्यताविधेयताऽन्यतरा-भावादित्यर्थः। इत्थमिति। वाच्यमाणप्रकारेणेत्यर्थः। तादृशप्रकारमेवाह। यथा हीति। नित्ये कृते। सन्ध्योपासनादिकरणे सति। प्रत्यवायाभावस्तिष्ठति। प्रत्यवाय-प्रागभावस्तिष्ठति तदभावे। सन्ध्योपासनाद्यकरणे। तदभावः। प्रत्यवायप्रागभावा-भावः। दुःखप्रागभावध्वंस इति यावत्। प्रत्यवायानुत्पत्तेः दुःखानुत्पत्तिहेतुत्व-मुपपादयति। एवमिति। तदभावे। प्रत्यवायप्रागभावाभावे। तदभावः।

**ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे कथं नञर्थाऽन्वयः। इष्ट-साधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति चेन्न।**

प्रश्न—तटस्थ पूछ रहा है कि—इष्टसाधनत्व तथा कृतिसाध्यत्व ही यदि विध्यर्थ है तो "न कलञ्जं भक्षयेत्" यहाँ पर विध्यर्थ के साथ नञर्थ अभाव का यदि अन्वय करेंगे तो यह बोध होगा कि कलञ्जभक्षण न तो मेरे इष्ट का साधन है और न कृतिसाध्य ही है। (अर्थात् कलञ्जभक्षणं इष्टसाधनत्वाभाववत्—कृतिसाध्यत्वाभाववच्च) परन्तु यह बोध सर्वथा अशक्य (बाधित) है। (क्योंकि शुष्कमांसस्वरूप कलञ्जभक्षण में तृप्तिरूप इष्टसाधनत्व भी है और कृतिसाध्यत्व तो है ही है)

---

दुःखप्रागभावाभावः। **योगक्षेमसाधारणेति** । जन्याऽजन्यनिरूपितेत्यर्थः । अन्वयव्यतिरेकसिद्धेति यावत्। **एवमेव**। योगक्षेमसाधारणमेव। **प्रायश्चित्त-स्यापीति**। अपिना प्रत्यवायानुत्पत्तिसमुच्चयः। दुःखप्रागभावहेतुत्वमिति। इष्टमिति शेषः। नव्यास्तु सन्ध्योपासनादेः प्रत्यवायप्रागभावः, प्रत्यवायप्रागभावस्य च दुःखप्रागभावो वा न फलम्, प्रागभावे एव मानाभावात्, किन्तु प्रत्यवायात्यन्ता-भावः, तस्य च दुःखात्यन्ताभावः फलम्, तयोरपि योगक्षेमसाधारणकारणत्व-संभवादित्याहुः।

शंकते। **नन्विति**। **कलञ्जमिति**। विषाक्तबाणहतमृगपक्षिमांसं शुष्कमांसं वा कलञ्जम्—उक्तम्—

विषाक्तेनैवबाणेनहतौयौमृगपक्षिणौ।
तयोर्मांसंकलञ्जंस्यात्शुष्कमांसमथापिवा इति॥

**विध्यर्थे कथं नञर्थान्वय इति**। विध्यर्थनञर्थयोः कथमन्वयः विध्यर्थेष्ट-साधनत्वकृतिसाध्यत्वाभ्यामन्वितस्य नञर्थाभावस्य कलञ्जभक्षणे कथमन्वय इत्यर्थः। **अशक्यत्वादिति**। कलञ्जभक्षणे इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभाव-स्य च बाधादिति भावः। तथा च कलञ्जभक्षणमिष्टसाधनत्वाभाववदिति बोधोबाधित एवेति शंकितुराशयः। न च कलञ्जभक्षणाभावइष्टसाधनमित्येव बोध इति वाच्यम्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिभङ्गप्रसंगात्। तावतापि कलञ्जभक्ष-स्या।।निष्टहेतुत्वानवगमेन ततोनिवृत्त्यनुपपत्तेश्च। न चेष्टसाधनत्वैकदेशेइष्टांशे नञोऽन्वयाभ्युपगमेन कलञ्जभक्षणमनिष्टसाधनमित्यन्वयबोधात्ततोनिवृत्त्युपपत्तिरिति वाच्यम्। पदार्थैकदेशेपदार्थान्तरान्वयाव्युत्पत्तेः। समाधत्ते। **तत्रेति**। कलञ्ज-भक्षणे इत्यर्थः। **बाधादिति**। इष्टसाधनत्वकृतिसाध्यत्वाभावयोरित्यादिः। तस्य साक्षादेवतृप्तिरूपेष्टसाधनत्वादिति भावः। **न विध्यर्थ इति**। न प्रकृतविधितात्पर्य-

तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वं च न विध्यर्थः, किन्तु बलवदनिष्टाननुबन्धित्वमात्रम्, तदभावश्च नञा बोध्यते। अथवा बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः। तदभावश्च नञा बोध्यमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्यति।

ननु श्येनेनाभिचरन् यजेत इत्यादौ कथं बलवदनिष्टाननुबन्धित्वं विध्यर्थः। श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात्। न

उत्तर—कलञ्जभक्षण में इष्टसाधनत्व-कृतिसाध्यत्व का बाध होने से वह विध्यर्थ नहीं माना जा सकता है, किन्तु बलवदनिष्टाननुबन्धित्वमात्र विध्यर्थ है और उसका अभाव अर्थात् बलवदनिष्ट का अनुबन्धित्व ( जनकत्व ) नञ् से बोध्य है। ( अर्थात् कलञ्जभक्षण बलवदनिष्टाननुबन्धित्वाभाववत् ] अथवा बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्व विध्यर्थ मान लिया जाय। नञ् से बोध्यमान जो विशिष्टाभाव ( बलवदनिष्टाननुबन्धीष्टसाधनत्वविशिष्टकृतिसाध्यत्वाभाव ) उसका कृतिसाध्यत्वरूपविशेष्य वाले कलञ्जभक्षण में रहने वाले बलवदनिष्टाननुबन्धित्वाभाव अर्थात् बलवान् अनिष्ट के अनुबन्धित्वरूप विध्यर्थाभावरूपविशेषणाभाव में पर्यवसान हो जाता है।

प्रश्न—'श्येनेनाभिचरन् यजेत' ( शत्रुवध की कामना करने वाला पुरुष श्येनयाग करे ) यहाँ पर बलवदनिष्टाननुबन्धित्व विधि का अर्थ कैसे हो सकता है। क्योंकि शत्रु को मारणरूप जो अभिचार कर्म है वह हिंसारूप होने के नाते नरकरूप जो बलवान् अनिष्ट उसका

---

विषय इत्यर्थः। बलवदनिष्टाननुबन्धित्वमात्रमिति। विधेःकृतिसाध्यत्वादिषु शक्तिस्वीकारेण कश्चित् कस्यचित् क्वचित् कस्य चिद्विध्यर्थस्य बोधस्वीकारादिति भावः। तदभावश्च। बलवदनिष्टाननुबन्धित्वाभावश्च। नञा बोध्यते इति। तादृशाभावस्यकलञ्जभक्षणान्वययोग्यत्वादितिभावः। तथा च कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वाभाववदिति बोध इति भावः। इदमुपलक्षणम्। श्येनेनाभिचरन्यजेतेत्यत्र कृतिसाध्यत्वेसतीष्टसाधनत्वमात्रमेव विधिवाक्यजन्यशाब्दबोधे भासते, न तु बलवदनिष्टाननुबन्धित्वमपि तत्र तस्य बाधादिति। प्रवृत्तिं प्रति कृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वज्ञानत्वेनैकस्यैव हेतुत्वं, लाघवात्, न तु कृतिसाध्यत्वादिप्रत्येकविषयकज्ञानत्वेन गौरवादतोविधेरपि विशिष्टे एव शक्तिर्वाच्या, एवं च निषेधस्थले विशिष्टाभावो विधिसमभिव्याहृतनञा बोध्यते इत्यभिप्रायेणाह। अथवेति। तदभावश्च। विशिष्टाभावश्च। अवधारणार्थकश्चशब्दःविशेषणाभावे इत्युत्तरं योजनीयः। विशेष्यवति। इष्टसाधनत्ववति कलञ्जभक्षणादौ। विशेषणाभावे। बलवदनिष्टाननुबन्धित्वाभावे एव। विश्राम्यतीति। पर्यवस्यतीत्यर्थः। व्यतिरिक्ताभावकल्पने गौरवादिति भावः।

**च वैधत्वान्न निषेध इति वाच्यम्। अभिचारे प्रायश्चित्तोपदेशात्। न च मरणानुकूलव्यापारमात्रं यदि हिंसा, तदाखड्गकारस्य कूपकर्त्तुश्च हिंसकत्वापत्तिः, गललग्नान्नभक्षणजन्यमरणे स्वात्मवधत्वापत्तिश्चेति वाच्यम्।**

साधन ( अनुबन्धी ही है। यदि यह कहा जाय कि वह वैधहिंसा है अतः उसका निषेध उचित नहीं है अर्थात् वह हिंसा हिंसा ही नहीं है। तब फिर अभिचार कर्म में प्रायश्चित्त का जो उपदेश किया है वह क्यों किया है कि—"अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहति" इत्यादि। यदि यह कहा जाय कि मरण का कारणीभूतव्यापारमात्र ही हिंसा है, तब फिर तलवार बनाने वाले को तथा कुवा खुदवाने वाले को भी हिंसा लगनी चाहिये। [ क्योंकि तलवार से भी

---

विशिष्टस्य विध्यर्थत्वे श्येनयागे बलवदनिष्टाननुबन्धित्वरूपविशेषणबाधात् कथं विशिष्टस्य विध्यर्थस्य बोध इत्याशंकते। **नन्विति। श्येनेनाभिचरन् यजेतेत्यादाविति।** वैरिमरणं कामयन् श्येननामकं यागं कुर्यादित्यर्थकविधिवाक्ये इत्यर्थः। **अर्थ** इति। विध्यर्थइत्यर्थः। श्येनयागे बलवदनिष्टाननुबन्धित्वस्य बाधादिति भावः। बाधमुपपादयति। **श्येनस्य।** श्येनयागस्य। **मरणानुकूलव्यापारस्य।** शत्रुमरणानुकूलव्यापारस्य। **नरकसाधनत्वादिति।** शत्रुवधद्वारा तस्य नरकोत्पादकत्वात्, नरकस्य च बलवदनिष्टत्वादिति भावः।

ननु बलवदनिष्टाननुबन्धित्वं न बलवद्दुःखाजनकत्वं, येन श्येनयागस्य नरकोत्पादकत्वेन बलवद्दुःखजनकत्वाद् बाधः स्यात्। किं तु बलवद्द्वेषविषयदुःखाजनकत्वं तत्, तथा च शत्रुवधे उत्कटरागवशात् श्येने प्रवृत्तस्य तन्निष्पाद्यनरके बलवद्द्वेषाभावाद् बलवदनिष्टाननुबन्धित्वस्य तत्र न बाध इति चेन्न। बलवदनिष्टाननुबन्धित्वं हि न बलवद्द्वेषविषययत्किंचिद्दुःखजनकत्वाभावः, बलवदनिष्टानुबन्धिन्यपि तत्सत्त्वात्, किन्तु बलवद्द्वेषविषयदुःखजनकत्वसामान्याभावस्तथा। तथा च श्येनस्य शत्रुवधरूपेष्टसाधनत्वे सत्यपि तन्निष्पाद्यनरके बलवद्द्वेषवतां शिष्टानां तत्राऽप्रवृत्तिदर्शनात् बलवद्द्वेषविषयदुःखजनकत्वसामान्याभावस्तत्र बाधित एवेति न बलवदनिष्टाननुबन्धित्वस्य विधिप्रत्ययार्थत्वसंभव इति ध्येयम्।

**वैधत्वान्न निषेध** इति। **मा हिंस्यात्सर्वाभूतानीति** सामान्यशास्त्रस्य वैधहिंसेतरहिंसाया एव निषिद्धत्वपरतया श्येनयागस्यापि नरकसाधनत्वाभावादिति भावः। **अभिचारे** इति। अभिचारकर्मणि कृते सतीत्यर्थः। **प्रायश्चित्तोपदेशादिति।** कर्तुः प्रायश्चित्तोपदेशादित्यर्थः। अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहतीत्यनेन कृच्छ्रत्रयरूपप्रायश्चित्तविधानात्, उक्तप्रायश्चित्तवैयर्थ्यापत्त्या अनुपदिष्टप्रायश्चित्तहिंसेतरहिंसापरत्वात् माहिंस्यादिति निषेधविधेरिति। प्रकृते श्येननामकाभिचारकर्मणः उपदिष्टप्रायश्चित्तहिंसारूपतया सामान्यशास्त्रप्रवृत्तेरिति भावः।

मरणोद्देश्यकत्वस्यापि विशेषणत्वात् । अन्योद्देश्यकविशिखाद्यनहतब्राह्मणस्य तु वाचनिकं प्रायश्चित्तमिति चेन्न ।

तत्र बलवदनिष्टाननुबन्धित्वस्य विध्यर्थत्वाभावात् । वस्तुतः श्येनमरणायाऽदृष्टाऽद्वारकत्वेन विशेषणीयम् । अत एव काशीमरणार्थं कृतशिव-

कोई मरता ही है, एवं कुवे में गिरकर भी कोई मरता ही है अतः मरणानुकूलव्यापारवाले खड्गकर्त्ता तथा कूपकर्त्ता भी हो गया इसलिये वह भी हिंसक कहा जाना चाहिये ] एवं जिस पुरुष को भोजन करते समय गले में अन्न रुक जाने से मृत्यु हो गयी उसे भी आत्म हत्या का पाप लगना चाहिये, अतः इन सब दोषों के वारणार्थ मरणानुकूलव्यापार में मरणोद्देश्यकत्व भी विशेषण दे देना, अर्थात् मरणोद्देश्यक जो मरणानुकूल व्यापार वही हिंसा पद है। कूप-खड्ग आदि का निर्माणात्मक व्यापार मरण के उद्देश्य से नहीं हुआ है। इसीलिये अन्य उद्देश्य से फेंके हुवे बाण ( नाराच ) से अकस्मात् ब्राह्मण की हत्या हो गयी वहाँ बाण फेंकने वाले को वाचनिक प्रायश्चित्तमात्र का विधान है।

उत्तर—श्येनयागस्थल के लिये मरणानुकूलव्यापार में अदृष्टाद्वारकत्व विशेषण और दे देना चाहिये, ( अर्थात् अदृष्टाद्वारकत्वे सति मरणोद्देश्यकत्वे सति मरणानुकूलव्यापारो हिंसा ) जो श्येनयाग अदृष्ट द्वारा ही शत्रुनाशक है। इसीलिये जिस पुरुष ने काशी मरण के उद्देश्य से भगवान् शिव की पूजा वगैरह की है उसे भी हिंसा नहीं होती है क्योंकि वह भी भगवान् शंकर की पूजा अदृष्टद्वारक ही है।

प्रश्न—साक्षात् मरण के जनक व्यापार को ही हिंसा कह दिया जाय ( अदृष्टाद्वारकत्व विशेषण देना गौरवग्रस्त है ) श्येनयाग साक्षात् शत्रुमरण का जनक नहीं है। अपितु अदृष्ट द्वारा।

---

मरणानुकूलव्यापारमात्रमिति । साक्षात्परंपरयेत्यादिः । यदि हिंसेति । माहिंस्यादितिश्रुतिघटकहिंसापदार्थोयदीत्यर्थः । विशेषणत्वादिति । तथा च मरणो-[illegible]

[illegible]

नाराचेन यत्र ब्राह्मणमृतिस्तत्र प्रायश्चित्तं न स्यात्, ब्राह्मणमरणस्य हिंसात्वाभावेन मा हिंस्यादिति निषेधाविषयत्वादत आह । अन्योद्देश्यकेति । वाचनिकम्— सेतौ च स्नानमात्रेण ब्रह्महत्यां व्यपोहति इति वचनेन ब्राह्मणवधस्य सेतुस्नानादि-रूपप्रायश्चित्तविधानात्, सामान्यतो ब्राह्मणवधस्यापि वहिष्प्रायश्चित्तत्वेन हिंसात्वा-ऽनपायात् । अन्योद्देश्यकनाराचप्रक्षेपस्य मरणोद्देश्यकत्वाऽभावेन मा हिंस्यादिति निषेधशास्त्राविषयत्वेपि ब्राह्मणं न हन्यान्लोहितं कुर्यादिति विशेषनिषेधविधिना ब्राह्मणहननमात्रस्य निषेधप्रतिपादनात् तस्य हिंसात्वं, तत्कर्तुः प्रायश्चित्तविधानं चोपपन्नमिति भावः । अभिचारकर्मणि बलवदनिष्टाननुबन्धित्वं नविषयः किन्तु

पूजादेरपि न हिंसात्वम्, श्येनस्तु न तथा, किन्तु तज्जन्यापूर्वमिति वाच्यम्। खड्गाघातेन ब्राह्मणे व्रणपाकपरंपरया मृते हिंसात्वानापत्तेः।

केचित्तु श्येनस्य हिंसाफलम्, न तु मरणम्, तेन श्येनजन्यखड्गाघातादिरूपा हिंसाऽभिचारपदार्थः, तस्य च पापजनकत्वम्, अतः श्येनस्य वैधत्वात्पापाऽजनकत्वेपि अग्रिमपापं प्रतिसन्धाय सन्तो न प्रवर्तन्ते इत्याहुः।

उत्तर—यह भी ठीक नहीं है क्योंकि खड्ग के आघात से व्रण एवं आघात आदि परम्परा से जहाँ ब्राह्मण मरा वहाँ खड्गाघातजन्य हिंसा को हिंसा ही नहीं मानना चाहिये, क्योंकि खड्ग से हुवा आघात साक्षात् मरण का जनक नहीं है।

कुछ विद्वानों का ऐसा मत है कि—श्येनयाग का फल सिर्फ 'हिंसा' ही है—न कि मरण। अतः श्येनयाग से होने वाले जो शत्रु के ऊपर खड्गाघात आदि हैं वे ही साक्षात मरण के जनक होने के नाते हिंसारूप हैं और वही हिंसा अभिचार पद का अर्थ है। और उसी खड्गाघातादिरूप अभिचार पदार्थ को पापजनकत्व है [ श्येनयाग को नहीं—क्योंकि वह साक्षात् मरण का जनक नहीं। और इस मत में भी साक्षात्-मरण के जनक को ही हिंसा माना है—अथ च हिंसा ही पाप का जनक होती है ] अतः श्येनवैध होने के नाते पाप का अजनक होने पर भी इसी परम्परा के आधार पर अगाड़ी यह शत्रुमरणजन्यपाप न हो ऐसा प्रतिसन्धान करके सन्त लोग इसमें प्रवृत्त नहीं होते हैं।

---

कृतिसाध्येष्टसाधनत्वमात्रं तथा च विध्यर्थस्य बोधो नानुपपन्न इत्याशयेन समाधत्ते। तत्र। श्येनेनाभिचरन् यजेतेत्यत्र। विध्यर्थत्वाभावादिति। तथा च तत्र लक्षणया कृतिसाध्यत्वविशिष्टेष्टसाधनत्वबोध इत्यर्थः। न विधौ परः शब्दार्थ इति नियमस्य च विधिप्रत्ययातिरिक्त शब्दपरत्वादिति भावः। अत एवाऽस्वरसादाह। वस्तुत इति। श्येनवारणायेति। श्येनस्य बलवदनिष्टानुबन्धित्ववारणायेत्यर्थः। विशेषणीयमिति। "बलवदनिष्टानुबन्धित्वस्वरूपं" बलवद्द्वेषविषयदुःखजनकत्वमिति शेषः। एवं मरणोद्देश्यकत्वे सति अदृष्टाद्वारकत्वे सति मरणानुकूलव्यापारस्यैव मा हिंस्यादित्यत्र हिंसापदार्थतया श्येनस्याऽदृष्टद्वारैव वैरिमरणसाधनतया न हिंसात्वमिति भावः। अतएवेति। अदृष्टाद्वारकत्वविशेषणादेवेत्यर्थः। कृतशिवपूजनादेरपीति। अपिना श्येनपरिग्रहः। न हिंसात्वमिति। नाऽदृष्टाद्वारकमरणानुकूलव्यापारत्वमित्यर्थः। न बलवदनिष्टानुबन्धित्वमिति यावत्। ननु साक्षान्मरणजनकत्वविशेषणादेव तादृशशिवपूजनश्येनादेर्वारणे किमदृष्टाद्वारकत्वविशेषणेनेति शंकते। नचेति। साक्षान्मरणजनकस्यैवेति। एवकारेण परंपरयेत्यस्य व्यावृत्तिः। हिंसात्वमिति। अस्तु इति शेषः। न तथा। न साक्षान्मरणजनकः। तज्जन्या-

आचार्यास्तु आप्ताभिप्रायो विध्यर्थः। पाकं कुर्याः इत्यादौ आज्ञादिरूपेच्छावाचित्वलिङ्मात्रस्येच्छावाचित्वं लाघवात्। एवं च स्वर्गकामो यजेत

और उदयनाचार्य आप्तपुरुष की इच्छा (अभिप्राय) ही को विध्यर्थ मानते हैं। 'पाकं कुर्याः' यहाँ पर जैसे लिङ् की आज्ञारूप इच्छावाचित्व है वैसे ही सर्वत्र लिङ् मात्र को इच्छावाचकत्व है लाघव होने से। इसी प्रकार 'स्वर्गकामो यजेत' यहाँ पर भी याग स्वर्ग की इच्छा वाले पुरुष की कृति से साध्य होने के नाते आप्त पुरुष को इष्ट है। इसके बाद याग के

---

पूर्वमिति। साक्षान्मरणजनकमित्यनुसंधानीयम्। तथा च साक्षान्मरणानुकूलव्यापारस्य हिंसात्वस्वीकारेणैवोपपत्तौ अदृष्टाद्वारकत्वविशेषणमनर्थकमिति भावः। हिंसात्वानापत्तेरिति। तादृशखड्गाघातस्य हिंसात्वानुपपत्तेरित्यर्थः। तथा च साक्षान्मरणजनकव्यापारस्य हिंसात्वं न संभवतीति भावः। अदृष्टाद्वारकत्वविशेषणं विनैव श्येनं बलवदनिष्टाननुबन्धित्वमुपपादयतां मतमाह। केचित्त्विति। हिंसा। साक्षान्मरणानुकूलव्यापारः। तेन। साक्षान्मरणानुकूलव्यापारस्यैव हिंसात्वस्वीकारेण। खड्गाघातादिरूपा हिंसेति सावधारणम्। तस्य चेति। खड्गाघातादेरित्यर्थः। पापजनकत्वमिति। स्वीक्रियते इति शेषः। कुतस्तर्हि आस्तिकानां श्येने न प्रवृत्तिरत आह। अग्रिमपापं प्रतिसन्धायेति। खड्गाभिघातजन्यं पापं ज्ञात्वेत्यर्थः। न प्रवर्तन्ते इति। तथा च श्येनस्य मरणजनकत्वाभावेऽपि मरणप्रयोजकत्वात्सतां प्रवृत्त्यभाव इति भावः।

आचार्यास्त्विति। विध्यर्थ इति। लिङर्थ इत्यर्थः। तथा च प्रवृत्तिनिवृत्तिविषये आप्ताभिप्रायो लिङ्प्रत्ययार्थ इति भावः। पाकं कुर्याइत्यादाविति। आदिना पाकं कुर्याम्, पाकं कुर्यादित्यनयोः परिग्रहः। आज्ञादिरूपेच्छावाचित्ववदिति। आदिना संकल्पपरिग्रहः। कुर्याः इत्यत्र आज्ञा, कुर्यामित्यत्र संकल्प इति भेदः। या वक्तुरिच्छामनुविधानस्तत्संतोषमाहिनेति सा आज्ञा। या तु स्वकर्तव्यत्वेनेच्छा सा संकल्पः। एवं मध्यमोत्तमपुरुषयोरिच्छावाचित्ववत्प्रथमपुरुषस्यापि इच्छावाचित्वं लाघवात्। तदेवाह लिङ्मात्रस्येति। आज्ञादीत्यादिपदादध्येषणा अनुज्ञा संप्रश्न प्रार्थना आशीः परिग्रहः। या वक्तुरिच्छा श्रोतुः पूजासम्मानव्यंजिका इच्छा सा अध्येषणा। वारणाभावव्यंजिकेच्छा अनुज्ञा। अभिधानप्रयोजनेच्छा संप्रश्नः। लाभेच्छा प्रार्थना। शुभाशंसनं आशीः। लाघवादिति। कृतिसाध्यत्वादित्रितयापेक्षया इच्छात्वेन शक्तौ लाघवादित्यर्थः। अभिप्रायश्चेच्छा। एवं चेति। इच्छामात्रस्य विध्यर्थत्वे चेत्यर्थः। आप्तेष्ट इति। आप्तेच्छाविषय इत्यर्थः। आप्तेच्छा च यागः स्वर्गकामस्य कृतिसाध्योभवतु

इत्यादौ यागः स्वर्गकामकृतिसाध्यतया आप्तेष्ट इत्यर्थः । ततश्चाऽऽप्तेष्टत्वेनेष्ट-साधनत्वादिकमनुमाय प्रवर्तते, कलञ्जभक्षणे तदभावान्न प्रवर्तते ।

यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधिरेव, तावद् गर्भ इव श्रुतिकुमार्याः पुंयोगे मानम् । न च कर्त्रस्मरणं बाधकम् । कपिलकणादा-

आप्तेष्टत्व का निश्चय कर इष्टसाधनत्व का अनुमान करते हैं तब लोग इसमें प्रवृत्त होते हैं । और कलञ्जभक्षण में आप्तेष्टत्व नहीं है इसलिये प्रवृत्ति नही होती है ।

प्रश्न—'पाकं कुर्याः' 'त्वं गच्छ' इत्यादि लोकस्थल में लिङ् को वक्ता की इच्छा का वाचक मान कर विध्यर्थत्व का निर्वाह कर सकते हैं—परन्तु वेदस्थल में तो कोई वक्ता पुरुष ही नहीं है अतः वहाँ किसकी इच्छा का वाचक लिङ् को मानकर विध्यर्थत्व उपपन्न किया जाय ।

उत्तर—जैसे कुमारी के साथ पुरुष के संयोग में गर्भ ही प्रमाण होता है वैसे ही वेद में जो मीमांसक पौरुषेयत्व नहीं स्वीकार करते हैं उनके प्रति वेदस्थ विधिप्रत्यय ही वेद के साथ पुरुष का योग होने में अर्थात् वेद के पौरुषेयत्व में प्रमाण है, अन्यथा वेद में किसकी इच्छा को विध्यर्थ कहा जायगा ।

---

इत्याकारिका बोध्या । एवं न कलंजंभक्षयेदित्यस्य कलंजभक्षणं कृतिसाध्यतया नाप्तेच्छाविषय इत्यर्थो बोध्यः । ननु तावतापि प्रवृत्तिहेतोरिष्टसाधनताज्ञानस्य निवृत्तिहेतोरनिष्टसाधनताज्ञानस्य चालाभात् कथं प्रवृत्तिनिवृत्ती इत्यत आह । **ततश्चेति** । शाब्दबोधात्मक "कृतिसाध्यत्वप्रकारकाऽऽप्तसमवेतेच्छाविशेष्यत्वात्मक" लिङ्गज्ञानानन्तरमित्यर्थः । एवं शाब्दबोधात्मक "कृतिसाध्यत्वप्रकारकाऽऽप्तसमवेतेच्छा-विशेष्यत्वाभावात्मकऽऽलिङ्गज्ञानानन्तरमित्यपिबोध्यम् । **इष्टसाधनत्वादिकमिति** । आदिनाबलवदनिष्टाननुबन्धित्वपरिग्रहः । इदमुपलक्षणम् । अनिष्टसाधनत्वमपि बोध्यम् । **अनुमायेति** । अनुमितिविषयीकृत्येत्यर्थः । तथा च यागो "बलवद-निष्टाननुबन्धि" मदिष्टसाधनं मत्कृतिसाध्यत्वप्रकारकाऽऽप्तसमवेतेच्छाविशेष्यत्वात् मत्पित्रामत्कृतिसाध्यत्वप्रकारकमत्पितृसमवेतेच्छाविशेष्यमत्कर्तृकभोजनवदित्यनुमि-तिर्जायते इति भावः । सामान्यव्याप्तिश्च योयस्य कृतिसाध्यतया आप्तेनेष्यते स तस्य बलवदनिष्टाननुबन्धीष्टसाधनमित्याकारिका बोध्या ।

एवं कलंजभक्षणं मम बलवदनिष्टसाधनं मत्कृतिसाध्यतया आप्तेनाऽनिष्य-माणत्वात् मत्पित्रा मत्कृतिसाध्यतयाऽनिष्यमाणमधुविषसंपृक्ताश्नभोजनवत् । यो यस्य कृतिसाध्यतया आप्तेन नेष्यते स तस्य बलवदनिष्टसाधनमिति सामान्य-व्याप्त्या अनिष्टसाधनत्वसिद्धिः । तदेवाह । **कलंजभक्षणे इति** । **तदभावात्** । इष्टसाधनत्वज्ञानाभावात्, प्रत्युततद्विरोधि अनिष्टसाधनत्वज्ञानादिति यावत **न प्रवर्तते** । निवर्तते इति यावत् ।

**आचार्यास्तु आप्ताभिप्रायोविध्यर्थः। पाकं कुर्याः इत्यादौ आज्ञादिरूपेच्छावाचित्वलिङ्मात्रस्येच्छावाचित्वं लाघवात्। एवं च स्वर्गकामोयजेत**

और उदयनाचार्य आप्तपुरुष की इच्छा (अभिप्राय) ही को विध्यर्थ मानते हैं। 'पाकंकुर्याः' यहाँ पर जैसे लिङ् को आज्ञारूप इच्छावाचित्व है वैसे ही सर्वत्र लिङ् मात्र को इच्छावाचकत्व है लाघव होने से। इसी प्रकार 'स्वर्गकामोयजेत' यहाँ पर भी याग स्वर्ग की इच्छा वाले पुरुष की कृति से साध्य होने के नाते आप्त पुरुष को इष्ट है। इसके बाद याग के

---

**पूर्वमिति**। साक्षान्मरणजनकमित्यनुसंजनीयम्। तथा च साक्षान्मरणानुकूलव्यापारस्य हिंसात्वस्वीकारेणैवोपपत्तौ अदृष्टाद्वारकत्वविशेषणमनर्थकमिति भावः। **हिंसात्वानापत्तेरिति**। तादृशखड्गाघातस्य हिंसात्वानुपपत्तेरित्यर्थः। तथा च साक्षान्मरणजनकव्यापारस्य हिंसात्वं न संभवतीति भावः। अदृष्टाद्वारकत्वविशेषणं विनैव श्येने बलवदनिष्टाननुबन्धित्वमुपपादयतां मतमाह। **केचित्त्विति**। **हिंसा**। साक्षान्मरणानुकूलव्यापारः। **तेन**। साक्षान्मरणानुकूलव्यापारस्यैव हिंसात्वस्वीकारेण। खड्गाघातादिरूपाहिंसेति सावधारणम्। **तस्य चेति**। खड्गाघातादेरित्यर्थः। **पापजनकत्वमिति**। स्वीक्रियते इति शेषः। कुतस्तर्हिआस्तिकानांश्येने न प्रवृत्तिरत आह। **अग्रिमपापं प्रतिसन्धायेति**। खड्गाभिघातजन्यं पापं ज्ञात्वेत्यर्थः। **न प्रवर्तन्ते इति**। तथा च श्येनस्य मरणजनकत्वाभावेपि मरणप्रयोजकत्वात्सतां प्रवृत्त्यभाव इति भावः।

**आचार्यास्त्विति**। **विध्यर्थ इति**। **लिङर्थ** इत्यर्थः। तथा च प्रवृत्तिनिवृत्तिविषये आप्ताभिप्रायो लिङ्प्रत्ययार्थ इति भावः। **पाकं कुर्याइत्यादाविति**। आदिना पाकं कुर्याम्, पाकं कुर्यादित्यनयोः परिग्रहः। **आज्ञादिरूपेच्छावाचित्ववदिति**। आदिना सङ्कल्पपरिग्रहः। कुर्याः इत्यत्र आज्ञा, कुर्यामित्यत्र संकल्पः इति भेदः। यां वक्तुरिच्छामननुविधानस्तत्संक्षोभाद्बिभेति सा आज्ञा। या तु स्वकर्तव्यत्वेनेच्छा सा संकल्पः। एवं मध्यमोत्तमपुरुषयोरिच्छावाचित्ववत्प्रथमपुरुषस्यापि इच्छावाचित्वं लाघवात्। तदेवाह **लिङ्मात्रस्येति**। आज्ञादीत्यादिपदादध्येषणा अनुज्ञा संप्रश्न प्रार्थना आशीः परिग्रहः। या वक्तुरिच्छा श्रोतुः पूजासम्मानव्यंजिका इच्छा सा अध्येषणा। वारणाभावव्यंजिकेच्छा अनुज्ञा। अभिधानप्रयोजनेच्छा संप्रश्नः। लाभेच्छाप्रार्थना। शुभाशंसनं आशीः। **लाघवादिति**। कृतिसाध्यत्वादित्रितयापेक्षया इच्छात्वेन शक्तौलाघवादित्यर्थः। **एवंचेति**। इच्छामात्रस्य विध्यर्थत्वे चेत्यर्थः। **आप्तेष्ट इति**। अभिप्रायश्चेच्छा। आप्तेच्छा च यागः स्वर्गकामस्य कृतिसाध्योभवतु आप्तेच्छाविषय इत्यर्थः।

इत्यादौ यागः स्वर्गकामकृतिसाध्यतया आप्तेष्ट इत्यर्थः। ततश्चाऽऽप्तेष्टत्वेनेष्ट-साधनत्वादिकमनुमाय प्रवर्तते, कलञ्जभक्षणे तदभावान्न प्रवर्तते।

यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधिरेव, तावद् गर्भ इव श्रुतिकुमार्याः पुंयोगे मानम्। न च कर्त्रस्मरणं बाधकम्। कपिलकणादा-

आप्तेष्टत्व का निश्चय कर इष्टसाधनत्व का अनुमान करते हैं तब लोग इसमें प्रवृत्त होते हैं। और कलञ्जभक्षण में आप्तेष्टत्व नहीं है इसलिये प्रवृत्ति नहीं होती है।

प्रश्न—'पाकं कुर्याः' 'त्वं गच्छ' इत्यादि लोकस्थल में लिङ् को वक्ता की इच्छा का वाचक मान कर विध्यर्थत्व का निर्वाह कर सकते हैं—परन्तु वेदस्थल में तो कोई वक्ता पुरुष ही नहीं है अतः वहाँ किसकी इच्छा का वाचक लिङ् को मानकर विध्यर्थत्व उपपन्न किया जाय।

उत्तर—जैसे कुमारी के साथ पुरुष के संयोग में गर्भ ही प्रमाण होता है वैसे ही वेद में जो मीमांसक पौरुषेयत्व नहीं स्वीकार करते हैं उनके प्रति वेदस्थ विधिप्रत्यय ही वेद के साथ पुरुष का योग होने में अर्थात् वेद के पौरुषेयत्व में प्रमाण है, अन्यथा वेद में किसकी इच्छा को विध्यर्थ कहा जायगा।

---

इत्याकारिका बोध्या। एवं न कलंजंभक्षयेदित्यस्य कलंजभक्षणं कृतिसाध्यतया नाप्तेच्छाविषय इत्यर्थो बोध्यः। ननु तावतापि प्रवृत्तिहेतोरिष्टसाधनताज्ञानस्य निवृत्तिहेतोरनिष्टसाधनताज्ञानस्य चालाभात् कथं प्रवृत्तिनिवृत्ती इत्यत आह। **ततश्चेति**। शाब्दबोधात्मक "कृतिसाध्यत्वप्रकारकाऽऽप्तसमवेतेच्छाविशेष्यत्वात्मक" लिङ्गज्ञानानन्तरमित्यर्थः। एवं शाब्दबोधात्मक "कृतिसाध्यत्वप्रकारकाऽऽप्तसमवेतेच्छा-विशेष्यत्वाभावात्मकऽऽलिङ्गज्ञानानन्तरमित्यपिबोध्यम्। **इष्टसाधनत्वादिकमिति**। आदिनाबलवदनिष्टाननुबन्धित्वपरिग्रहः। इदमुपलक्षणम्। अनिष्टसाधनत्वमपि बोध्यम्। **अनुमायेति**। अनुमितिविषयीकृत्येत्यर्थः। तथा च यागो "बलवद-निष्टाननुबन्धि" मदिष्टसाधनं मत्कृतिसाध्यत्वप्रकारकाऽऽप्तसमवेतेच्छाविशेष्यत्वात् मत्पित्रामत्कृतिसाध्यत्वप्रकारकमत्पितृसमवेतेच्छाविशेष्यमत्कर्तृकभोजनवदित्यनुमि-तिर्जायते इति भावः। सामान्यव्याप्तिश्च योयस्य कृतिसाध्यतया आप्तेनेष्यते स तस्य बलवदनिष्टाननुबन्धीष्टसाधनमित्याकारिका बोध्या।

एवं कलंजभक्षणं मम बलवदनिष्टसाधनं मत्कृतिसाध्यतया आप्तेनाऽनिष्य-माणत्वात् मत्पित्रा मत्कृतिसाध्यतयाऽनिष्यमाणमधुविषसंपृक्तान्नभोजनवत्। यो यस्य कृतिसाध्यतया आप्तेन नेष्यते स तस्य बलवदनिष्टसाधनमिति सामान्य-व्याप्त्या अनिष्टसाधनत्वसिद्धिः। तदेवाह। **कलंजभक्षणे इति**। **तदभावात्**। इष्टसाधनत्वज्ञानाभावात्, प्रत्युततद्विरोधि अनिष्टसाधनत्वज्ञानादिति यावत् **न प्रवर्तते**। निवर्तते इति यावत्।

दिकमारभ्याद्यपर्यन्तं कर्तृस्मरणस्यैव प्रतीयमानत्वात्। अन्यथा स्मृतीनाम-प्यकर्तृकत्वापत्तेः, तत्रैव कर्तृस्मरणमप्यस्तीति चेत्—वेदेपि "छन्दांसि जज्ञिरे तस्मात्" इत्यादि कर्तृस्मरणमस्त्येव। एवं—

प्रतिमन्वन्तरं चैषाश्रुतिरन्या विधीयते। इत्यपि द्रष्टव्यम्।

स्वयंभूरेष भगवान् वेदोगीतस्त्वया पुरा।

शिवादिऋषिपर्यन्ताः स्मर्तारोनास्य कारकाः इति तु वेदस्य स्तुतिमात्रम्।

प्रश्न—वेद के किसी भी कर्त्ता का स्मरण न होना ही वेद के पौरुषेयत्व का बाधक मान लिया जाय।

उत्तर—यह ठीक नहीं—क्योंकि कपिल-कणाद आदि ऋषियों द्वारा आज तक वेद में कर्त्ता का स्मरण बना हुआ है। (अतः वेद को सकर्तृक अवश्य ही मानना होगा) अन्यथा स्मृति वगैरह को भी अकर्तृकत्व की आपत्ति लग जावेगी।

प्रश्न—मन्वादि स्मृति में तो उन-उन स्मृति कर्ताओं के नामों का उल्लेख होने के नाते कर्तृस्मरण बना हुआ है। (परन्तु वेद में नामोल्लेख न होने के नाते कैसे कर्तृस्मरण स्वीकार किया जावे)।

उत्तर—यदि ऐसा है तब तो वेद में भी "छंदांसि जज्ञिरे तस्मात्" इत्यादि मन्त्रों के द्वारा कर्तृस्मरण होता ही है अतः वेद को पौरुषेयत्व स्पष्ट ही है। एवं "प्रतिमन्वन्तरं चैषा

---

न च वेदेषु पुरुषस्य निरासाभ तत्राऽऽप्ताभिप्रायस्य विध्यर्थत्वसंभव इति। वाच्यम्। निरासहेतोरभावात्। न च तदस्तित्वेपि प्रमाणं नास्तीति वाच्यम्। तस्य दर्शितत्वात्। न च वक्तृणामध्यापकानामेवाभिप्रायस्य विध्यर्थत्वमस्तु कृतं स्वतन्त्रेण वक्त्रा परमेश्वरेणेति वाच्यम्। अध्यापकानामनुवक्तृतयाऽभ्यासमात्राभिप्रायेण प्रवृत्तेः शुकादिवत्तथाविधाभिप्रायाभावात्। भावे वा न राजशासनानुवादिनोऽभिप्राय आज्ञा, किन्तु राज्ञ एवेति लोके दर्शनात्, इहापि स्वतन्त्रस्य वक्तुः पुरुषधौरेयस्याभिप्रायो विध्यर्थो नानुवक्तृणाम्। मामूत्प्रमाणान्तरं तथाप्याह। यस्त्विति। पौरुषयत्वमिति। पुरुषप्रणीतत्वमित्यर्थः। विधिरेवेति। मानमित्युत्तरेण संबन्धः। कुमार्या गर्भ इवेति। कुमार्या गर्भ इत्यादिः। तथा च पुरुषसंबन्ध

न च पौरुषेयत्वे भ्रमादिसंभवादप्रामाण्यं स्यादिति वाच्यम्। नित्यसर्वज्ञत्वेन निर्दोषत्वात्। अत एव पुरुषान्तरस्य भ्रमादिसंभवाच्च कपिलादेरपि कर्तृत्वं वेदस्य, किं च वर्णानामनित्यत्वस्य वक्ष्यमाणत्वात्सुतरां तत्सन्दर्भस्य वेदस्याऽनित्यत्वमिति संक्षेपः ॥१५०॥

श्रुतिरन्या विधीयते" इत्यादि स्मृति भी प्रति मन्वन्तर में विभिन्न श्रुतियों के निर्माण में हेतु है, इससे भी श्रुति को अर्थात् वेद को पौरुषेयत्व स्पष्ट है। और "स्वयंभूरेष भगवान्" इत्यादि वचन तो वेद की स्तुतिमात्र है, न कि इसके आधार पर वेद को अपौरुषेय कहा जा सकता है।

प्रश्न—वेद को पौरुषेय मानने पर पुरुष में भ्रम आदि के संभावित होने के नाते वेद में अप्रामाण्य आ जायगा अर्थात् वेद अप्रमाण हो जावेगा।

उत्तर—नहीं, क्योंकि ईश्वर नित्य तथा सर्वज्ञ होने के नाते सर्वथा निर्दोष है। (अतः भ्रमादि की संभावना भी ईश्वर में नहीं है, जिससे कि वेद में अप्रामाण्य की शंका की जावे) हाँ कपिल आदि पुरुषान्तरों में भ्रमादि की संभावना अवश्य हो सकती है इसीलिये कपिलादि भी वेद के कर्त्ता नहीं हैं। और दूसरी बात यह है कि वर्णों को अनित्य जब की आगाड़ी हमें कहना ही है तो सुतरां उस वर्ण समुदायभूत वेद को नित्य (अपौरुषेय) नहीं माना जा सकता है। उपादान अर्थात् समवायिकारण का अध्यक्ष यानी प्रत्यक्ष भी प्रवृत्ति में कारण होता है ॥१५०॥

---

विना तदर्थोऽसंभवात् कुमार्यागर्भः पुंयोगे मानं तथा श्रुतिकुमारी मध्यस्थविधिरेव श्रुतेः पौरुषेयत्वे मानमिति समुदितार्थः। न च कर्तृस्मरणमिति। कर्तुः वेदकर्तुः। अस्मरणं स्मृतिभिरनवबोधनम्। बाधकमिति। तथा च वेदो न पौरुषेयः अस्मर्यमाणकर्तृकत्वात् आकाशादिवदित्यनुमानमीश्वरसिद्धौ बाधकमिति भावः। प्रतीयमानत्वादिति। कपिलकणादगौतमैस्तच्छिष्यैश्चाऽद्यपर्यन्तं वेदस्य सकर्तृकत्वस्मरणादित्यर्थः। चिरातीतत्वेन कर्तृस्मरणोपपत्तेश्च हिमालयस्थानित-कूपादिवत्। न च मूलभूताऽनुभवाभावात् स्मरणानुपपत्तिः। स्मरणस्यापलपितु-मशक्यत्वात्, पौरुषेयत्वानुमानेनैव अनुभवाच्च, अनुमितिस्तु वेदः पौरुषेयः वाक्यसमूहत्वादित्याकारिका। तथाचोक्तानुमितिमूलकस्मरणस्मृतिप्रणयनयोः संभवादिति भावः। अन्यथा। उक्तानुमानस्याऽप्रयोजकत्वमङ्गीकृत्य वेदस्य सकर्तृकत्वानङ्गीकारे। शंकते। तत्रैवेति। स्मृतिष्वेवेत्यर्थः। अस्तीति चेदिति। अस्तीतियदुच्यते इत्यर्थः। स्वयम्भूरिति। नित्य इत्यर्थः। एषभगवानिति। एतद्द्वयमपि वेदविशेषणम्। तथाचैतादृशवचनेन वेदस्य नित्यत्वलाभादपौरुषेयत्व-मिति भावः। शंकां परिहरति। वेदस्यस्तुतिमात्रमिति। तथा च पूर्वोक्तश्रुति-स्मृत्योर्विरोधेनाऽस्य भारतस्य न स्वार्थे तात्पर्यमपि तु स्तुतिपरत्वमिति भावः।

उपादानस्य चाऽध्यक्षं प्रवृत्तौ जनकं भवेत् ।
निवृत्तिस्तु भवेद् द्वेषाद् द्विष्टसाधनताधियः ॥१५१॥
यत्नो जीवनयोनिस्तु सर्वदाऽतीन्द्रियो भवेत् ।
शरीरे प्राणसंचारे कारणं स प्रकीर्तितः ॥१५२॥

उपादानस्येति । उपादानस्य समवायिकारणस्याऽध्यक्षं च प्रवृत्तौ कारणमिति । निवृत्तिरिति । द्विष्टसाधनताज्ञानस्य निवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकाभ्यामवधारितमिति भावः । १५१ । यत्न इति । जीवनयोनियत्नो यावज्जीवनमनुवर्तते । स चाऽतीन्द्रियः । तत्र प्रमाणमाह । शरीरे इति । प्राणसञ्चारो हि अधिकश्वासादिः यत्नसाध्यः । इत्थं च प्राणसंचारस्य

निवृत्तिरिति । द्विष्ट साधनताज्ञान निवृत्ति में कारण है यह अन्वय-व्यतिरेक से निश्चित है ॥१५१॥

जीवनपर्यन्त रहने वाला यत्न जीवनयोनियत्न कहलाता है और वह अतीन्द्रिय है। व्यायाम कालीन अधिक श्वास-प्रश्वास स्वरूप प्राणसंचार यत्न साध्य है। ( सो जिस यत्न से साध्य है वही यत्न जीवनयोनियत्न है ) इस प्रकार समस्त प्राणसंचार में प्रयत्न साध्यत्व का अनुमान

---

निर्दोषत्वादिति । भ्रमादिदोषवत्त्वाऽसंभवादिति भावः । अतएव । नित्य सर्वज्ञत्वाभावेच ।

ननु स एवायं गकार इत्यादि प्रत्यभिज्ञानाद् वर्णानां नित्यतया सुतरां वेदस्य नित्यत्वमितिनिर्दोषतया तत्प्रामाण्यमप्रत्यूहम्, तथाच सकर्तृकत्वानुमाने बाध इत्यतो वेदस्य नित्यत्वे बाधकमाह । किंचेति । तत्सन्दर्भस्य । वर्णघटितानुपूर्वीविशेषावच्छिन्नवाक्यरूपस्य । १५०

प्रवृत्तौकारणमिति । तथा च तद्विषयकप्रवृत्तिं प्रति तदुपादाननिष्ठलौकिकविषयताशालिप्रत्यक्षं कारणमिति भावः । ननु शब्दोद्देशेन मृदङ्गादौ प्रवृत्तिर्न स्यात्, तदुपादानस्य गगनस्य लौकिकविषयताशून्यत्वात्, एवं ध्वंसविषयकप्रवृत्तिरपि न स्यात् ध्वंसोपादानाऽप्रसिद्धेरिति चेन् इष्टापत्तेः । शब्दादिप्रत्यक्षमुद्दिश्यैव मृदङ्गादौ प्रवृत्तिस्वीकारात् । वस्तुतो द्रव्यविषयकप्रवृत्तिं प्रत्येव तदुपादानप्रत्यक्षस्य हेतुत्वमावश्यकम्, कपालादिप्रत्यक्षं विना तद्विषयकेच्छानुत्पादात् कपालादौ प्रवृत्त्यनुपपत्तेः, एवं च शब्दादिविषयकप्रवृत्तेः कार्यतावच्छेदकानाक्रान्ततया गगनादेरतीन्द्रियत्वेपि ध्वंसोपादानस्याऽप्रसिद्धत्वेपि नानुपपत्तिरिति ध्येयम् । मूले—निवृत्तिस्तु इति । उपाये निवृत्तिस्तु इत्यर्थः । द्वेषाद्—उपाये द्वेषात् । फले द्वेषाच्च । निवृत्तिं प्रति फलगतोद्वेषः कारणम् । उपायेच्छां प्रति फलेच्छाया इव उपायद्वेषं प्रति

अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वये तु तत् ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥१५३॥
तदेवाऽसमवायि स्यात्पतनाख्ये तु कर्मणि ।

सर्वस्य यत्नसाध्यत्वानुमानात्प्रत्यक्षयत्नबाधाच्चातीन्द्रिययत्नसिद्धिः । स एव जीवनयोनिर्यत्नः । १५२ ।

गुरुत्वं निरूपयति – अतीन्द्रियमिति । अनित्ये इति । अनित्ये द्व्यणुकादौ । गुरुत्वं, तद् अनित्यम् । नित्ये–परमाणौ । नित्यम् गुरुत्वमित्यनुवर्तते । तद्–गुरुत्वम् । असमवायि–असमवायिकारणम् पतनाख्ये इति । आद्यपतने इत्यर्थः ।

इति गुरुत्वनिरूपणम् ।

होता है कि—'प्राणसंचारो यत्नसाध्यः' इत्यादि । इस प्रकार उस यत्न का प्रत्यक्ष न होने के नाते वह अतीन्द्रिय सिद्ध हो रहा है । और वही जीवनयोनियत्न है ॥१५२॥

गुरुत्व का निरूपण करते हैं—स्पष्ट अर्थ है ॥१५३॥

---

फलद्वेषस्य हेतुत्वावश्यकत्वादिति भावः । द्विष्टसाधनताज्ञानस्येति । द्वेषविषयीभूतदुःखसाधनताज्ञानस्येत्यर्थः । निवृत्तिंप्रति । उपायविषयकनिवृत्तिं प्रति । उपायविषयकद्वेषं प्रतीत्यपि बोध्यम् । अन्वयव्यतिरेकाभ्यामिति । द्विष्टसाधनताज्ञानसत्त्वे निवृत्तिसत्त्वं, तदभावे तदभाव इति निश्चयाभ्यामित्यर्थः ॥१५१॥

जीवनं–जीवनाऽदृष्टं, योनिः–कारणमस्येति जीवनयोनिशब्दो यत्ने योगरूढः । सर्वदा इत्यस्य विवरणं यावज्जीवमिति । प्राणसञ्चारोहीति । एवकारार्थकोहिशब्द अधिकश्वासादिरित्युत्तरं योजनीयः । अधिकश्वासाद्रिरूपएत्रेत्यर्थः । प्रयत्नसाध्य इति । गुरुभारोत्तोलने धावनादौ च प्रयत्नविशेषात् श्वासक्रियाविशेषदर्शनात्प्रयत्नसाध्य इत्यर्थः । इत्थंचेति । एतादृशप्राणसंचारस्य यत्नसाध्यत्वे चेत्यर्थः । प्राणसञ्चारस्य सर्वस्येति । सर्वस्येति । प्राणसञ्चारत्वावच्छेदेनेत्यर्थः । सुषुप्तिकालीनश्वासात्मकप्राणसंचारस्येति यावत् । यत्नसाध्यत्वानुमानादिति । यद्विशेषयोः कार्यकारणभावोबाधकं विना तत्सामान्ययोरपीति न्यायेन प्राणक्रियासामान्ये यत्नसामान्यजन्यत्वानुमानादित्यर्थः । तथाच सुषुप्तिकालीनश्वासः भोक्तृप्रयत्नसाध्यः श्वासत्वात् धावतः श्वासवदित्यनुमानं बोध्यम् । नव्यास्तु सुषुप्तिकालीनप्राणसंचाररूपश्वासं प्रति जीवनाऽदृष्टस्य हेतुत्वस्वीकारेणैवोपपत्तेः, उक्तानुमानस्याऽप्रयोजकत्वाच्च जीवनयोनियत्ने मानाभावः, अन्यथा बाह्यपदार्थप्रयत्ने ज्ञानजन्यत्वस्य सिद्धत्वात्तद्दृष्टान्तेन प्रयत्नत्वलिङ्गेन जीवनयोनियत्नेपि ज्ञानजन्यत्वसिद्ध्यापत्त्या सुषुप्तिकाले आत्मनि अतीन्द्रियज्ञानस्यापि स्वीकारापत्तेरिति प्राहुः ॥१५२॥

इति यत्ननिरूपणम् ।

सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥१५४॥
सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः।
परमाणौ जले नित्यमन्यत्राऽनित्यमिष्यते ॥१५५॥
नैमित्तिकं वन्हियोगात्तपनीयघृतादिषु।
द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ॥१५६॥

द्रवत्वं निरूपयति। सांसिद्धिकमिति। द्रवत्वं द्विविधम् सांसिद्धिकं नैमित्तिकं चेति। द्वितीयं—नैमित्तिकम्। परमाणाविति। जलपरमाणौ द्रवत्वं नित्यमित्यर्थः। अन्यत्र—पृथिवीतेजःपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यम्। १५४-१५५। कुत्रचित्तेजसि कुत्रचित्पृथिव्यां च नैमित्तिकं द्रवत्वम्। तच्च सुवर्णात्मकतेजसि घृतजतुप्रभृतिपृथिव्यां च वर्तते इत्यर्थः। द्रवत्वं स्यन्दने हेतुरिति। असमवायिकारणमित्यर्थः। संग्रहे—सक्तुकादिसंयोगविशेषे। तत्—द्रवत्वं, स्नेहसहितमिति बोद्धव्यम्। तेन द्रुतसुवर्णस्य न संग्रहः। १५६।

द्रवत्व का निरूपण करते हैं—द्रवत्व दो प्रकार का है—सांसिद्धिक, (स्वाभाविक) नैमित्तिक ((निमित्त से होने वाला) जल के परमाणु में द्रवत्व नित्य है, और अन्यत्र पृथिवी परमाणु में तथा जलादि के द्व्यणुक आदि में अनित्य है। और तेज (सुवर्ण) में तथा पृथिवी (घृत) में नैमित्तिक द्रवत्व है ॥१५४॥

अग्नि संयोग से जायमान द्रवत्व नैमित्तिक है। और वह सुवर्ण रूप तेज में, तथा घृत-जतु (लाक्षा) आदि पृथिवी में रहता है ॥१५५॥१५६॥

---

मूलस्थाऽसमवायिशब्दस्य समवायिभिन्नपरत्वे रूपादावतिव्याप्तिरत आह। असमवायिकारणमिति। आद्यपतने इत्यर्थं इति। पतनं नाम वृन्तविभागजनकव्यापारमारभ्य भूमिसंयोगजनकव्यापारपर्यन्तं सर्वाः क्रियाः। तत्र प्राथमिकव्यापारे गुरुत्वमसमवायिकारणम्, द्वितीयादिपतने वेगोऽसमवायिकारणम्, तथा च द्वितीयपतनाऽसमवायिकारणत्वाद् वेगेऽतिव्याप्तिवारणाया ऽऽद्येति विशेषणमिति भावः। आद्यत्वं च स्वसमानाधिकरणपतनप्रतियोगिकध्वंसाऽसमानकालीनत्वम्। गुरुत्वमतीन्द्रियं इन्द्रियजन्यलौकिकप्रत्यक्षायोग्यत्वात् अदृष्टवदिति। किन्तु पतनकार्यानुमेयम्। अनुमितिस्तु आद्यपतनं साऽसमवायिकारणं क्रियात्वात् संयोगासमवायिकारणक्रियावत् इत्याकारिका। न्यायलीलावतीकृतस्तु अदृष्टसापेक्षेण त्वगिन्द्रियेण पृष्ठाद्यारोपितपदार्थस्य गुरुत्वमुपलभ्यते एव। न च तत्रापि तदुपलब्धिरानुमानिकी भवतीति वक्तुं शक्यम्। तदनुमापकपतनाऽयोगात्। अत एव तेषां मन्यः—"अतो-योगीन्द्रियवत् इन्द्रियमदृष्टसहायमतीन्द्रियेऽपि प्रवर्तते इति।" गुरुत्वस्य आश्रयः

स्नेहो जले स नित्योऽणावनित्येऽवयविन्यसौ।
तैलान्तरे तत्प्रकर्षाद्दहनस्याऽनुकूलता ॥१५७॥
संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने।

स्नेहं निरूपयति। जले इति। जले एवेत्यर्थः। असौ—स्नेहः। ननु पृथिव्यामपि तैले स्नेह उपलभ्यते। न चासौ जलीयः। तथा सति दहन-प्रातिकूल्यप्रसंगादत आह। तैलान्तरे इति। तत्प्रकर्षात्—स्नेहप्रकर्षात्। तैले उपलभ्यमानः स्नेहोपि जलीय एव तस्य प्रकृष्टत्वादग्नेरानुकूल्यम्। अपकृष्टस्नेहं हि जलं वन्हिं नाशयतीति भावः। १५७। संस्कारं निरूपयति। संस्कारेति। वेगस्थितिस्थापकभावनाभेदात्संस्कारस्त्रिविध इत्यर्थः। मूर्तमात्रे

स्नेह का निरूपण भी स्पष्ट ही है ॥१५७॥

संस्कार का निरूपण करते हैं—संस्कारेति। संस्कार तीन प्रकार का है—वेग-स्थितिस्थापक-भावना। वेग नामक संस्कार कहीं कर्म से होता है, और कहीं वेग से। शरीर आदि में नोद-

---

"फलादिः" समवायिकारणम्। अवयविसमवेतगुरुत्वस्य अवयवसमवेतगुरुत्वम-समवायिकारणम्। आश्रयनाशान्नाशः। लक्षणं तु आद्यपतनाऽसमवायिकारणत्वम्।

इति गुरुत्वनिरूपणम्।

आद्यस्यन्दनाऽसमवायिकारणं द्रवत्वम्। स्यन्दनं—प्रस्रवणम्, तच्च सन्निकृष्टे द्रव्यसंयोगानुकूलोव्यापारः। सांसिद्धिकं—अग्न्यादिसंयोगाजन्यम्। अग्न्यादिसंयोगोनिमित्तं, तज्जन्यं नैमित्तिकम्। सर्वं नैमित्तिकद्रवत्वमनित्यम्। तेजः-संयोगोऽसमवायिकारणम्। तेजःसंयोगनाशाच्च नश्यतीति ॥१५६॥

इति द्रवत्वनिरूपणम्।

स्नेहत्वं जातिविशेषः प्रत्यक्षसिद्धः तदेव स्नेहस्य लक्षणम्। जले एवेत्यर्थ इति। जलभिन्ने स्नेहव्यवस्थापकप्रमाणाभावादिति भावः। अथ घृततैलादावपि स्नेहाङ्गीकार आवश्यकः, अन्यथा तैलसंयुक्तचूर्णादौ अवयवानां विलक्षणदृढसंयोगा-नुपपत्तेः तथा च कथं स्नेहस्य जलमात्रवृत्तित्वमित्याशंकते। नन्विति। असौ—तैले प्रतीयमानस्नेहः। जलीयः—तैलान्तर्गतजलनिष्ठः तथासति। तैलादौ जलसत्वे। दहनप्रातिकूल्यप्रसंगादिति। तथाच ततोदहनानुपपत्तिः, जलस्य दहनप्रतिकूलत्वा-दिति भावः। जलीय एवेति। कालिन्दीजले श्यामादिवत् तैले औपाधिकस्नेह-प्रत्ययोपपत्तिरिति भावः। अपकृष्टस्नेहं हीति। अप्रकृष्टस्नेहवज्जलं हीत्यर्थः। तैला-नन्तर्वर्तिजलं हि वन्हिं नाशयतीति वा बोध्यम्। अत्रेदं बोध्यम्। द्रुतजलसंयोगस्य सांसिद्धिकद्रवत्वस्य स्नेहस्य वा कारणत्वमित्यत्र विनिगमनाविरहात्, अतिरिक्त-

मूर्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् ॥१५८॥
स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि ।
अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् ॥१५९॥

इति । कर्मजवेगजभेदाद् वेगो द्विविध इत्यर्थः । शरीरादौ हि नोदनजनितेन कर्मणा वेगोजन्यते, तेन च पूर्वकर्मनाशः तत उत्तरं कर्म । एवमग्रेऽपि । विना च वेगं कर्मणः कर्मप्रतिबन्धकत्वात् पूर्वकर्मनाशः उत्तरकर्मोत्पत्तिश्च न स्यात् । यत्र वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः ॥१५८॥

नोदन संयोग से जनित कर्म से वेग उत्पन्न होता है । और उस वेग से पूर्व कर्म का नाश तथा उसके बाद कर्मान्तरोत्पत्ति होती है । ऐसे ही फिर आगे भी ( अर्थात् उत्पन्न हुवे उस कर्मान्तर से पूर्व वेग का नाश तथा वेगान्तर ( दूसरे वेग ) की उत्पत्ति ) होती है । बिना वेग के अर्थात् वेग को यदि नहीं माना जायगा तो पूर्व कर्म ही स्थायी हो जायगा और वह कर्मान्तर की उत्पत्ति में प्रतिबन्धक हो जायेगा—इससे पूर्व कर्म नाश तथा कर्मान्तरोत्पत्ति ( उत्तर कर्म की उत्पत्ति ) न हो सकेगी । ( क्योंकि वही वेग पूर्व कर्म के नाश तथा कर्मान्तर की उत्पत्ति में कारण है ) जहाँ वेग वाले कपाल से जनित घट में वेग उत्पन्न हुआ वह वेगज वेग कहलाता है ॥१५८॥

---

स्नेहसिद्धिः । स्नेहोनित्यवृत्तिर्नित्यः । अनित्यवृत्तिरनित्यः । अनित्यः कारणपूर्वकः, आश्रयनाशनाश्यश्चेति ॥१५७॥

इति स्नेहनिरूपणम् ।

मूले—संस्कारभेद इति । भिद्यते अनेनेति भेदः असाधारणोधर्म इत्यर्थः, वेगादिशब्दोभावप्रधाननिर्देशपरः । तथा च वेगत्वादि त्रयं संस्कारधर्म इति फलितम् । संस्कारत्वजातिमत्त्वं संस्कारस्यलक्षणम् । संस्कारत्वजातिस्तु संस्कारपदशक्यतावच्छेदकतया सिद्धा । मूर्तमात्रे तु वेगः स्यादिति मूलम्—संख्यादावतिव्याप्तिवारणाय मात्रपदम् । अमूर्तेऽवृत्तित्वे सति मूर्तवृत्तित्वं तदर्थः । अमूर्तसमवेतावृत्ति मनः समवेतवृत्तिजातिमत्त्वं प्रत्यक्षसिद्धवेगत्वजातिमत्त्वं वा वेगस्य लक्षणम् । तेन रूपादौ नातिव्याप्तिः तादृशलक्षणम् । कर्मजवेगं तावदुदाहरति । शरीरादाविति । वेगशून्ये शरीरादावित्यर्थः । कर्मणेति । प्रयत्नवदात्मसंयोगजन्यकर्मणेत्यर्थः वेगोजन्यते इति । पूर्वं तदधिकरणे वेगाभावेन तादृशवेगस्य वेगजन्यत्वाऽसंभवादिति भावः ।

वेगादेव पूर्वकर्मणोनाशः, उत्तरकर्मणश्चोत्पत्तिर्जायते इत्याह । तेनचेति । तादृशवेगेनैवेत्यर्थः । पूर्वकर्मनाशः । स्वजनककर्मनाशः । ततः—तादृशनाशानन्तरं ।

स्थितिस्थापकेति। अतीन्द्रिय इति। आकृष्टशाखादीनां परित्यागे पुनर्गमनस्य स्थितिस्थापकसाध्यत्वात्। केचिदिति। चतुर्ष्विति चित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते तदप्रमाणमिति भावः। असौ स्थितिस्थापकः। क्वचित् आकृष्टशाखादौ ॥१५६॥ भावनाख्य इति। तस्य संस्कारस्य।

आकृष्ट शाखा आदि को छोड़ देने के पश्चात् उन शाखाओं का जो फिर से स्वस्थान पर चला जाना—वह स्थितिस्थापकसंस्कार साध्य है अर्थात् उस पुनर्गमन का कारण स्थिति-स्थापक संस्कार है। कोई लोग कहते हैं कि स्थिति स्थापक संस्कार पृथिवी-जल-तेज-वायु—इन चारों में रहता है, परन्तु वह मत सर्वथा अप्रमाण है ॥१५६॥

का अर्थ—भावना नामक संस्कार जीवात्मा में रहने वाला तथा अतीन्द्रिय है। और उपेक्षानात्मक अर्थात् अपेक्षात्मक निश्चय उस संस्कार का कारण होता है।

---

उत्तरकर्मचेति। उभयत्र जन्यते इत्यनुषरंजनीयम्। एवमग्रेपीति। द्वितीयादिकर्मणा पूर्ववेगनाशस्ततोवेगान्तरोत्पत्तिश्च तुल्यन्यायेन स्वीकार्येति भावः। ननु वेगस्य कर्मनाशकत्वे मानाभाव इत्यत आह। विना च वेगमिति। अस्य कर्मनाशोन स्यादित्युत्तरेणान्वयः। उत्तरसंयोगस्य आश्रयनाशस्य वा नाशकतया तयोरभावा दित्याशयः। ननु कर्मणो नाशाभावे का क्षतिरित्यत आह। कर्मोत्पत्तिश्च न स्यादिति। अत्र हेतुः कर्मणः कर्मप्रतिबन्धकत्वादिति। द्वितीयं वेगजवेगमुदा-हरति। यत्रेति। अस्यवेगोजन्यते इत्यत्र वेगेऽन्वयः। १५८ स्थिति स्थापकत्वं च पूर्वदेशसंयोगजनकक्रियाजनकतावच्छेदकतया सिद्धोजातिविशेषः, तद्वत्त्वं—वेग-भावनान्यसंस्कारत्वं वा स्थिति स्थापकलक्षणम् पुनर्गमनस्येति। पुनः पूर्वदेशसंयोग-जनकक्रियाया इत्यर्थः स्थितिस्थापकसाध्यत्वादिति। वेगस्य तूत्तरदेशसंयोग-जनकक्रियाजनकत्वम्, न तु यथापूर्वसंयोगजनकक्रियाजनकत्वमिति न वेगेन स्थिति स्थापकस्यान्यथासिद्धत्वमिति भावः। मूले—अतीन्द्रिय इति। क्रियाविशेषजनकः—स्वजन्यक्रियानाश्य इत्यपि बोध्यम्। १५९। अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावना-त्वम्। आत्मनि अति व्याप्तिवारणाय सत्यन्तम्। अनुभवध्वंसेऽ तिव्याप्तिवारणाय विशेष्यदलम्। न च दण्डीपुरुष इति विशिष्ट प्रत्यक्षेऽतिव्याप्तिः, तस्यापिस्वाव्यव-हितपूर्वक्षणोत्पन्नोयोदण्डज्ञानात्मकोऽनुभवः "विशेषणज्ञानविधया" तज्जन्यत्वात् जनिष्यमाणे दण्डीपुरुष इत्याकारकस्मरणे हेतुत्वाच्चेति वाच्यम् अनुभवत्वावच्छिन्न-कारणतानिरूपितकार्यताश्रयत्वस्य सत्यन्तार्थत्वात्। एवं सति स्मृतावतिव्याप्ति-

भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः।
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥१६०॥
स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते।

उपेक्षात्मकज्ञानात् संस्कारानुत्पत्तेः उपेक्षानात्मक इत्युक्तम्। तत्संशयात्तथा-नुत्पत्तेर्निश्चय इत्युक्तम्। तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः ॥१६०॥

ननु स्मरणं प्रति उपेक्षान्यनिश्चयत्वेन हेतुत्वं, तेनोपेक्षादिस्थले न स्मरणम्। इत्थं च संस्कारं प्रति ज्ञानत्वेनैव हेतुताऽस्तु इति चेन्न। विनि-गमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात्, किं चोपेक्षास्थले संस्कारकल्पनायाः गुरुत्वात् संस्कारं प्रति उपेक्षान्यनिश्चय-त्वेन हेतुतायाः सिद्धत्वात्। असौ-संस्कारः। तत्र प्रमाणं दर्शयति। स्मरणे इति। यतः स्मरणं प्रत्यभिज्ञानं च जनयति अतः संस्कारः कल्प्यते।

उपेक्षात्मक ज्ञान से भावना संस्कार की उत्पत्ति नहीं होती अतः उपेक्षानात्मक कहा। उपेक्षानात्मकसंशय से भी संस्कार की उत्पत्ति नहीं होती है अतः निश्चय पद दिया। इससे सिद्ध है कि भावनासंस्कार के प्रति उपेक्षान्यनिश्चय कारण है ॥१६०॥

प्रश्न—स्मरण के प्रति उपेक्षान्य निश्चय कारण है इसी से उपेक्षास्थल में स्मरण नहीं होता है। परन्तु इसी प्रकार संस्कार के प्रति उपेक्षान्यज्ञान ही को कारण क्यों न मान लिया जाय ?

उत्तर—उपेक्षान्यनिश्चय को संस्कार के प्रति उपेक्षान्यज्ञानत्वेनरूपेण ही कारण मानें और उपेक्षान्यनिश्चयत्वेनरूपेण न मानें इसमें आपके यहां कोई विनिगमना (युक्ति) न होने के नाते संस्कार के प्रति भी उपेक्षान्यनिश्चयत्वरूप से कारणता माननी उचित है। दूसरी बात यह है कि—संस्कार के प्रति उपेक्षान्यनिश्चय को तादृशनिश्चयत्वेनरूपेण कारण न मानकर यदि उपेक्षान्यज्ञानत्वरूप से कारण मानते हैं तो तादृशज्ञानत्व संशयादिसाधारण उपेक्षाज्ञान में भी है अतः संशयादिसाधारण उपेक्षाज्ञान से भी संस्कार होना चाहिये-इस वास्ते संस्कार कल्पना-प्रयुक्त गुरुत्व (गौरव) होने के नाते उपेक्षान्यनिश्चयत्वरूप से ही संस्कार के प्रति कारणता उचित है।

---

कारणाय विशेष्यदलसार्थक्यात्। तत्संशयादिति। उपेक्षानात्मकसंशयादित्यर्थः।
तस्य—संस्कारस्य। तेन—तादृशज्ञानात्—तत्संशयाच्च संस्कारानुत्पत्त्या ॥१६०॥
तेन उपेक्षान्यनिश्चयत्वेन हेतुत्वेन। इत्थंचेति। स्मरणं प्रति उपेक्षान्य-निश्चयत्वेन हेतुत्वं स्वीकृत्योपेक्षात्मकज्ञानात्स्मृतिवारणे चेत्यर्थः। ज्ञानत्वेनैवेति। एवकारेण उपेक्षान्यत्वस्य निश्चयत्वस्य च व्यावृत्तिः। हेतुताऽस्तु इति।

विना व्यापारं पूर्वानुभवस्य स्मरणादिजननाऽसामर्थ्यात्, स्वस्वव्यापारान्यतराभावे कारणत्वाऽसंभवात् । न च प्रत्यभिज्ञां प्रति तत्तत्संस्कारस्य हेतुत्वे प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम् । अप्रयोजकत्वात् । परे तु अनुद्बुद्धसंस्कारात्प्रत्यभिज्ञानुदयात् उद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यते इत्याहुः ।

भावनानामक संस्कार—असौ संस्कार—भावनानामक संस्कार में प्रमाण देते हैं कि—स्मरण तथा प्रत्यभिज्ञाज्ञान का यह भावनासंस्कार उत्पादन करता है अतः इसका स्वीकार आवश्यक है । क्योंकि विना व्यापार के पूर्वानुभव-स्मरण आदि ज्ञानों के जनन में असमर्थ होने के नाते कार्योत्पत्ति के पूर्व में कारण अथवा कारणव्यापार इस अन्यतर के अभाव होने पर कारण नहीं हो सकता है ।

प्रश्न—प्रत्यभिज्ञा के प्रति उन-उन संस्कारों को कारण मानने पर प्रत्यभिज्ञा को भी संस्कारजन्य होने के कारण स्मृतिरूप ही मान लिया जाय ?

उत्तर—यह ठीक नहीं—कारण कि संस्कारजन्यत्व स्मृतित्व का प्रयोजक नहीं है । गंगेशोपाध्याय का मत है कि अनुद्बुद्धसंस्कार से प्रत्यभिज्ञा नहीं होती है, और उद्बुद्धसंस्कार को कारण मानने की अपेक्षया तो तत्तत्स्मरण को ही प्रत्यभिज्ञा के प्रति कारण मानना उचित है । इसलिये प्रत्यभिज्ञा को संस्कारजन्य न होने के नाते स्मृतिरूप नहीं माना जा सकता है ।

---

लाघवादिति शेषः । वस्तुतः संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुत्वे एव विनिगमकमस्तीत्याह । **किंचेति** । स्मृतिं प्रत्येवोपेक्षान्यनिश्चयत्वेन हेतुत्वे इत्यादिः । संस्कारं प्रति केवल ज्ञानत्वेन हेतुत्वे इति यावत् । **उपेक्षास्थले** । उपेक्षाविशिष्टात्मनि । **संस्कारकल्पनाया गुरुत्वादिति** । संस्कारकल्पनाप्रयुक्तगौरवादित्यर्थः । **सिद्धत्वादिति** । आवश्यकत्वादित्यर्थः । भावनायां प्रमाणं दर्शयति । मूले **स्मरणे** इत्यादि । उद्देश्यवाचकपदस्य प्रागपेक्षितत्वात्पश्चान्निर्दिष्टस्यापि तस्य प्रथमं अनुसन्धानं करोति । **असौ संस्कार** इति । तत्र-संस्कारे । यत इति । अनुभवः इत्यादिः । यादृशव्यापारसहकारादेवेत्यर्थः । **अतः** । तादृशव्यापारसम्पत्त्यर्थम् । **संस्कारः** भावनाख्यसंस्कारः । **कल्प्यते** । इति । अनुमीयते इत्यर्थः । अनुमितिश्च अनुभवः फलकालपर्यन्तस्थायिस्वजन्यफलानुकूलव्यापारवान् तावत्कालमस्थायित्वे सति जनकत्वाद् यागवदित्याकारिका । ननु अनुभवो यथा स्वध्वंसजनने व्यापारं नाऽपेक्षते तथा स्वजन्यस्मृतावपि साक्षाद्धेतुरस्तु किं संस्कारकल्पनेनेत्यत आह । **विना व्यापारमिति** । **पूर्वानुभवस्येति** । अत्रानुभवसामान्यस्येत्येव सम्यक् शेषभागस्यवैयर्थ्यात् । **स्मरणादीति** । आदिना प्रत्यभिज्ञासंग्रहः । तथा च संस्काररूपव्यापारानङ्गीकारे कालान्तरभाविस्मृत्यव्यवहितपूर्ववर्त्तित्वाभावेना अनु-

धर्माऽधर्मावदृष्टं स्याद् धर्मः स्वर्गादिसाधनम् ॥१६१॥
गंगास्नानादियागादिव्यापारः स तु कीर्तितः ।

अदृष्टं निरूपयति । धर्मेति । स्वर्गादीति । स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनां च साधनं धर्म इत्यर्थः । तत्र प्रमाणं दर्शयितु माह । यागादीति । यागादिव्यापारतया धर्मः कल्प्यते । अन्यथा यागादीनां चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात् ।

तदुक्तमाचार्यैः "चिरध्वस्तं फलायालं न कर्मातिशयं विनेति ॥१६१॥

अदृष्टनिरूपण—धर्माधर्माविति । स्वर्गादि समस्तसुखों का स्वर्गसाधनीभूत शरीर आदि का साधन धर्म ही है । उस धर्म में प्रमाण बतलाते हैं कि—यागादि के व्यापाररूप से धर्म की कल्पना की जाती है । अन्यथा अर्थात् मध्य में यागादि का व्यापार यदि धर्म नहीं माना जायगा तो–चिरकाल से विनष्ट हुये यागादि निर्व्यापार होने के नाते कालान्तर में होनेवा स्वर्ग के जनक न हो सकेंगे । यही आचार्यचरण ने भी कहा है कि—चिरकाल से ध्वस्त यागादि कर्म अतिशय ( व्यापार ) के बिना फल के जनन में समर्थ नहीं हो सकता है ।

---

भवस्य स्मृतिहेतुत्वानुपपत्तिः । न चेष्टापत्तिः । अननुभूतस्यापि स्मरणापत्तेः । ननु तथापि अनुभवस्य स्मृत्यव्यवहितपूर्ववर्तित्वाभावात्तद्धेतुत्वाद्यवस्थ्यमित्यत आह । स्वस्वव्यापारान्यतराभावे इति । कारणत्वाऽसंभवादिति । कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यत्यन्ताभावाप्रतियोगि स्वस्वव्यापारान्यतरवत्त्वस्यैव कारणतापदार्थत्वात्, तस्य चाऽनुभवे असत्त्वादिति भावः । न चाऽनुभवध्वंस एव व्यापारोऽस्तु किं संस्कारकल्पनेनेति वाच्यम् । प्रतियोगिध्वंसयोरेकत्राऽजनकत्वात् । अनुभवस्य स्मृतिं प्रति प्रतिबन्धकत्वापत्तेश्च कारणीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकतापदार्थत्वात् । वस्तुतो वक्ष्यमाणाऽपूर्वसाधकयुक्त्या संस्कारसिद्धिर्निराबाधैवेति ध्येयम् ।

अप्रयोजकत्वादिति । संस्कारजन्यत्वस्य स्मृतित्वाप्रयोजकत्वादित्यर्थः । तथा च संस्कारजन्यत्वं न स्मृतित्वप्रयोजकं तद्ध्वंसस्यापि स्मृतित्वापत्तेः । किन्तु बहिरिन्द्रियाजन्यत्वे सति संस्कारजन्यत्वविशिष्टज्ञानत्वम्, तस्य च प्रत्यभिज्ञायामसत्वान्नोक्तापत्तिरित्याशय । मणिकृन्मतं दर्शयति । परेतु इति । तत्तत्स्मरणस्यैवेति । एवकारेणोद्बुद्धसंस्कारस्य व्यावृत्तिः । कल्प्यते । इति । उद्बुद्धसंस्कारत्वेन हेतुत्वापेक्षया स्मृतित्वेन हेतुत्वे लाघवादित्याशयः । अत्र प्रत्यभिज्ञापूर्वं स्मरणं न संभवति प्रतिबन्धकीभूतलौकिकप्रत्यक्षसामग्र्याः सत्वात्, स्मृत्युत्तरकालीनलौकिकप्रत्यक्षसामग्रीजनितप्रत्यभिज्ञायां स्मरणस्य हेतुत्वं न संभवति प्रत्यभिज्ञाकाले स्मरणस्य नाशादित्यस्वरस आहुरित्यनेन सूचितः ।

नतु यागध्वंस एव व्यापारः स्यात् । न च प्रतियोगितद्ध्वंसयोरेकत्राऽजनकत्वम् । सर्वत्र तथात्वे मानाभावात् । न च त्वन्मते फलानन्त्यम्, मन्मते चरमफलस्याऽपूर्वनाशकत्वान्न तथात्वमिति वाच्यम् । कालविशेषस्य

प्रश्न—धर्म को मध्यवर्ती व्यापार मानने की अपेक्षया यागध्वंस को ही याग का व्यापार मान लिया जाय । यदि यह कहा जाय कि प्रतियोगी ( याग ) और तद्ध्वंस को एकत्र ( स्वर्ग के प्रति ) जनकत्व ही अनुपपन्न है—तो यह कथन भी ठीक नहीं है क्योंकि सर्वत्र तथात्व में अर्थात् प्रतियोगी तथा तद्ध्वंस को एकत्राजनकत्व में कोई प्रमाण नहीं है । [ अर्थात् प्रतियोगी और प्रतियोगी का ध्वंस ये दोनों एकत्रकारण नहीं हो सकते हैं—इसमें कोई प्रमाण नहीं है ] यदि यह कहें कि—यागध्वंस को व्यापार माननेवाले तुम्हारे मत में स्वर्गात्मकफल का आनन्त्य दोष है । ( क्योंकि यागध्वंसात्मकव्यापार सर्वदा स्थायी रहेगा—उसका तो फिर ध्वंस होना नहीं

---

धर्मत्वजातिमत्त्वं धर्मस्य लक्षणम् । धर्मत्वं च विहितकर्ममात्रवृत्ति व्यापारानवच्छिन्नकारणतानिरूपितकार्यतावच्छेदकतया सुखत्वावच्छिन्नकार्यतानिरूपित व्यापारानवच्छिन्नकारणतावच्छेदकतया वा सिद्धोजातिविशेषः । **यागादिव्यापारतयेति** । यागादीत्यादिना होमादेः परिग्रहः । अत्र कात्यायनसूत्रम् । **यजति जुहोतिनां कोविशेषः** । अस्यार्थः—**यजतीनां**—यागानां **जुहोतीनां**—होमानां **कोविशेष** इतिः प्रश्ने **तिष्ठद्धोमाः वषट्कारप्रदानाः याज्यापुरोनुवाक्यावन्तोयजतयः** इति सूत्रम् । तिष्ठता होमो येषांते तिष्ठद्धोमाः—वषट्कारेण प्रदानं येषु ते वषट्कारप्रदानाः—तथा याज्यावन्तः पुरोनुवाक्यावन्तश्च ये ते यजतयः यागनामधेया उच्यन्ते इति तदर्थः । **उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः** इति सूत्रम् । उपविष्टेन कर्त्रा होमोयेषु ते उपविष्टहोमाः, स्वाहाकारेण प्रदानं येषु ते स्वाहाकार प्रदानाः, ते जुहोतयः होमपदवाच्या इति तदर्थः । तेषां व्यापारतयेत्यर्थः **धर्मः कल्प्यते** इति । धर्मः अवश्यं स्वीकार्य इत्यर्थः ! ननु यागादिरेव स्वर्गादि हेतुस्तु कृतं तज्जन्यादृष्टेनेत्यत आह । **अन्यथेति** । धर्मानंगीकारे इत्यर्थः । **चिरविनष्टतया** । चिरध्वस्ततया । चिरविनष्टस्याप्यनुभवस्य स्मृतिजनकत्वादाह । **निर्व्यापारतयेति** । अनुभवस्य संस्काररूपव्यापारवत्वादित्याशयः । तथा च यागादिकं फलकालपर्यन्तस्थायिस्वजन्यफलानुकूलव्यापारवत् तावत्कालमस्थायित्वे सति जनकत्वादनुभववत् इति प्रयोगः । न चाऽप्रयोजनकत्वम् । यागोयदि चिरध्वस्तत्वे सति सव्यापारो न स्यात्तदा स्वर्गकारणं न स्याद् घटवदित्यनुकूलतर्कसत्वात् । **चिरध्वस्तमिति** । चिरपदं वर्तमाने कभ्रमनिरासार्थम् । **चिरध्वस्तं**—यागादिकर्म—**कर्मातिशयं विना**—कर्मजन्यातिशयं "अदृष्टं" विना—**फलाय** स्वर्गादिजननाय—**नालं**—न समर्थमित्यर्थः । चिरध्वस्तकारणस्य व्यापारद्वारैव हेतुत्वम् , यथाऽनुभवस्य संस्कार द्वारा स्मृतौ ।

सहकारित्वादित्यत आह। गंगास्नानादीति। गंगास्नानस्य हि स्वर्गजनकत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमपूर्वमेव कल्प्यते लाघवादिति भावः।

है कारण कि ध्वंस का ध्वंस अप्रसिद्धवस्तु है—अतः उस यागध्वंसात्मकव्यापार से हमेशा एक के बाद दूसरा, दूसरे के बाद तीसरा इत्यादि रूप से नये-नये स्वर्ग पैदा होते रहा करेंगे, इस प्रकार फलानन्त्यदोष हो जायेगा ) और मेरे मत में अर्थात् धर्माधर्मात्मक अपूर्ववादी के मत में चरमफल ( स्वर्ग ) से धर्मात्मक अपूर्व का नाश हो जाने के नाते एक फल के बाद दूसरा—दूसरे के बाद तीसरा-यह परम्परा नहीं रह जाती है, क्योंकि उसका कारण अपूर्वात्मक व्यापार ही नहीं है—परन्तु यह कहना भी युक्तियुक्त नहीं है—क्योंकि यागध्वंस को व्यापारपक्ष में फलानन्त्यदोष कालविशेष को यागध्वंस का सहकारी कारण मानकर वारित हो सकता है।

उत्तर—ध्वंस व्यापारपक्ष में स्वर्ग कारणीभूत जो अनन्तजलसंयोगस्वरूप गंगास्नान—उसके अनन्त ध्वंसों को व्यापार मानने की अपेक्षया एक धर्मस्वरूप अपूर्व की ही व्यापारत्व कल्पना करने में लाघव है।

---

अयं भावः—यागादौ प्रवृत्ति र्न निष्फला प्रेक्षावत्प्रवृत्तित्वात्। एवं यागादौ प्रवृत्तिः न दुःखमात्रफलिका इष्टसाधनताज्ञानजन्यत्वात। तथा हि—इष्टसाधनताज्ञानं प्रवृत्तौ हेतुः, इष्टं च सुखं-दुःखाभावश्च, न तु दुःखम्। एवं च सुखसाधनताज्ञानादेव प्रवृत्तिर्वाच्या, तथा च न तस्याः दुःखमात्रफलकत्वम्। दुःखमात्रसाधनत्वे प्रवृत्तिरेव न स्यादिति भावः। एवं यागादिः न सम्मान-ख्याति-धनलाभफलकः तन्निरपेक्षैरपि विविक्ते गिरिगुहाऽरण्यादौ तदाचरणात। किं चाऽदृष्टाऽस्वीकारे तपस्विनां दृष्टधनादिलाभोऽपि न सम्भवति, अदृष्टार्थमेव तपस्विभ्योऽन्यैर्धनादिदानात्। अन्यथा प्राणेभ्योऽपि प्रियस्य धनस्य दानानुपपत्तेः। न च केनचित्प्रतारकेण स्वर्गादिफलजनकतया यागादिकं प्रकल्प्य स्वयमनुष्ठाय प्रतारितो लोकः प्रवर्तते इति वाच्यम्। क एवं बुद्धिमान यः परप्रतारणार्थं नानाविधक्लेशैरात्मानमवसादयेत्। तथा च यागादिः स्वर्गजनकः तत्फलोद्देशेन प्रेक्षावत्प्रवृत्तिविषयत्वात् तृप्त्युद्देशेन प्रेक्षावत्प्रवृत्तिविषयभोजनवत्। अथ वा यागादिः फलजनकः प्रेक्षावत्प्रवृत्तिविषयत्वाद् भोजनवदित्यादिप्रयोगाः बोध्याः तदुक्तम्।

> विफला विश्ववृत्तिर्नो न दुःखैक फलापि वा।
> दृष्टलाभफलानापि विप्रलंभोऽपि[1] नेदृश इति ॥१६१॥

यागध्वंस एवेति। एवकारेणाऽदृष्टस्य व्यवच्छेदः। व्यापारः स्यादिति। तथा च क्लृप्तेनैव निर्वाहे किमदृष्टेनेति भावः। प्रतियोगितद्ध्वंसयोरिति। प्रतियोगितदभावयोरित्यर्थः। एकत्राऽजनकत्वमिति। तथा च स्वर्गो न यागध्वंसप्रतियोगि...

---

[1] विप्रलंभः प्रतारणा।

कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥१६२॥

ननु ध्वंसोपि न व्यापारोऽस्तु। न च निर्व्यापारस्य चिरध्वस्तस्य कथं कारणत्वमिति वाच्यम्। अनन्यथासिद्धनियतपूर्ववर्त्तित्वस्य तत्रापि सत्वात्। अव्यवहितपूर्ववर्त्तित्वं हि चक्षुःसंयोगादेः कारणत्वे दृष्टं न तु सर्वत्र कार्यकालवृत्तित्वमिव समवायिकारणस्य कारणत्वे इत्यत आह। कर्मनाशेति। यदि हि अपूर्वं न स्यात् तदा कर्मनाशाजलस्पर्शादिना

प्रश्न—ध्वंस व्यापार न हो परन्तु निर्व्यापार एवं चिरध्वस्त याग स्वर्ग का कारण कैसे हो सकता है?

उत्तर—अनन्यथासिद्धनियत पूर्ववर्त्तित्वरूपकारणत्व याग तथा गंगास्नान आदि में भी है, अतः उनमें स्वर्गकारणत्व की अनुपपत्ति नहीं हुवी। [ यदि अव्यवहितपूर्ववर्तित्वरूपकारणत्व होता तो अनुपपत्ति होती, क्योंकि यागादि स्वर्ग के अव्यवहितपूर्ववर्त्ती नहीं हैं ] अव्यवहित-पूर्ववर्त्तित्वरूपकारणत्व चक्षुःसंयोग आदि को कारण मानने पर ही उत्पन्न हो सकता है न कि सर्वत्र। जैसे समवायिकारण की कारणता में कार्यकालवृत्तित्व माना जाता है, ऐसे ही चक्षुः-संयोग आदि की कारणता में अव्यवहितपूर्ववर्त्तित्व का नियम मान्य है। इससे निर्व्यापार याग

---

जन्यः यागजन्यत्वात् 'घटजन्यं जलाहरणं न घटध्वंसजन्यमिति दृष्टं, तथा चाऽय-मिति। तथात्वे। ध्वंसप्रतियोगिनोरेकत्रजनकत्वाभावे। मानाभावादिति। प्राचा-मते दुरितस्येव दुरितध्वंस-तत्प्रागभावयोरपि दुरितात्यन्ताभावप्रतियोगितया दुरित-संसर्गाभावत्वेन त्रयाणामपि समाप्तिहेतुत्वात्तादृशनियमे मानाभावादिति भावः। वस्तुतो ध्वंसस्य कारणत्वे यागस्य प्रतिबन्धकत्वापत्तिः, कारणीभूताभावप्रतियोगिन एव तत्वात्। अत एव "ध्वंसत्वेनापि हेतुत्वे प्रतियोगी न कारणमिति व्याप्तिरेव व्यभिचाराभावात्" इति शङ्करमणिटिप्पण्यां रुचिदत्तेनोक्तमिति विभावनी-यम्। ध्वंसस्याविनाशित्वात्स्वर्गधारापत्तिः स्वर्गोत्पादानन्तरमपि ध्वंसरूपव्यापारस्य सत्वादित्याशंकते। नचेति। न तथात्वम्—न फलानन्त्यम्। ध्वंसस्याविनाशित्वेपि कालादिरूपसहकारिकारणाभावादेव फलानन्त्यप्रसंगाभावादित्याशयेन समाधत्ते। कालविशेषस्येति। गंगास्नानस्य स्वर्गजनकत्वे स्नानध्वंसस्य व्यापारत्वं वाच्यं, स्नानं च सर्वाङ्गीणजलसंयोगः, तेषां चानन्त्यादनन्तध्वंसानां हेतुत्वकल्पने गौरव-मित्याह। स्वर्गजनकत्वे इति। एवं प्रतिज्ञासंकल्पमारभ्य कर्मापवर्गसमिदाधान-पर्यन्तस्य कर्मकलापात्मकस्य यागस्य ध्वंसानामानन्त्यादित्यपि बोध्यम्। न चात्र क्रियाणां युगपद्विनाशः, येनैकोध्वंसः स्यात्। न च चरमक्रियाध्वंसस्तथा, पूर्वक्रियाणा-मनर्थकत्वापत्तेः। तन्मात्रानुष्ठानेपि फलापत्तेश्च।

ध्वंसोपि न व्यापारोस्त्विति। यागादेरित्यादिः। निरुक्तगौरवादितिभावः।

नाश्यत्वं धर्मस्य न स्यात् । न हि तेन यागादेर्नाशः प्रतिबन्धो वा कर्तुं शक्यते, तस्य पूर्वमेव ध्वस्तत्वादिति भावः ।

एतेन देवताप्रीतेरेव फलत्वमित्यपास्तम् । गंगास्नानादौ सर्वत्र देवताप्रीतेरसंभवाच्च देवतायाश्चेतनत्वेपि तत्प्रीतेरनुद्देश्यत्वात् । प्रीतेः सुख-

को ही स्वर्ग का कारण मानना चाहिये यह सिद्ध हुआ, इसका उत्तर "विश्वनाथपञ्चानन" ने "कर्मनाशाजलस्पर्शादिना" इत्यादि ग्रन्थ से दिया ।

यदि अपूर्व न हो तो कर्मनाशा नदी के जल के स्पर्श से धर्म का नाश नहीं होना चाहिये । कर्मनाशा जलस्पर्श से याग का नाश अथवा प्रतिबन्ध ( याग की अनुत्पत्ति ) नहीं हो सकती है, क्योंकि याग पहिले ही उत्पन्न होकर नष्ट भी हो चुका है । इससे किसी मीमांसक का जो यह मत था कि याग अथवा गंगास्नान से देवता लोग प्रसन्न होते हैं अतः देवताप्रीति ही यागादि का फल है, धर्म का स्वीकार व्यर्थ है यह भी मत अपास्त ( खण्डित ) हो गया ।

---

चिरध्वस्तस्येति । यागादेरिति शेषः । कथं कारणत्वमिति कार्याव्यवहितपूर्ववर्तित्वाभावादिति भावः । नियतपूर्ववर्तित्वस्येति । नियतपूर्ववर्तित्वमात्रस्येत्यर्थः । तत्रापि । निर्व्यापारयागादावपि । अव्यवहितपूर्वत्वघटितकारणत्वस्याभावेपि न क्षतिरित्याह । अव्यवहितपूर्वत्वं हीति । चक्षुःसंयोगादेरिति । आदिना त्वक्संयोगादेः परिग्रहः । कारणत्वे इति । घटकत्व सप्तम्यर्थः । कारणत्वघटकमित्यर्थः । तथा चाऽव्यवहितपूर्वत्वं चक्षुःसंयोगादिरूपव्यापारनिष्ठकारणत्वघटकमेवेति समुदितार्थः । एवकारव्यवच्छेद्यं स्पष्टयति । न तु सर्वत्रेति । निर्व्यापारकारणनिष्ठकारणत्वघटकं नेत्यर्थः । कार्यकालवृत्तित्वमिवेति । कारणत्वे इति । सप्तम्यर्थो घटकत्वम् । तथा च कार्यकालवृत्तित्वं यथा नियमेन समवायिकारणत्वघटकं न तु कारणत्वमात्रघटकं प्रागभावादौ तदभावात् तथा प्रकृतेपीति भावः । कार्यकालवृत्तित्वघटककारणत्वं च कार्याधिकरणे कार्याव्यवहितकाल-कार्यकालान्यतरावच्छिन्नवृत्तिकाऽत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वं बोध्यम् । अपूर्वं न स्यादिति । धर्मो न स्यादित्यर्थः । तेन नैयायिकैः पराभिमताऽपूर्वानङ्गीकारेपि न क्षतिः । कर्मनाशाजलस्पर्शादिनेति । कर्मनाशानामकनदीजलस्पर्शादिनेत्यर्थः । आदिना—

कर्मनाशाजलस्पर्शात् करतोयाविलंघनात् ।
गण्डकीबाहुतरणात् धर्मः क्षरति कीर्तनात् ॥

इति वचनसिद्धकरतोयाविलंघनादेः परिग्रहः । धर्मस्य न स्यादिति । तेन । कर्मनाशानङ्गीकारादिति भावः । यागादिध्वंसस्य चाऽविनाशित्वात् ।

अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः।
प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ ॥१६३॥
इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः।

रूपत्वेन विष्णुप्रीत्यादौ तदसंभवात् जन्यसुखस्य तत्राभावात्, तेन विष्णुप्रीति जन्यत्वेन पराभिमत स्वर्गादिरेव विष्णुप्रीतिशब्देन लभ्यते ॥१६२॥

अधर्मेति। नरकादिसकलदुःखानां नारकीयशरीरादीनां च साधन मधर्म इत्यर्थः। तत्र प्रमाणमाह। प्रायश्चितेति। यदिह्यधर्मो न स्यात्तदा प्रायश्चित्तादिना नाश्यत्वं न स्यात्, न हि तेन ब्रह्महननादीनां नाशः

क्योंकि धर्म को यदि नहीं माना जायगा तो कर्मनाशा के जल से नाश किसका होगा। दूसरी बात यह है कि गंगास्नान एवं याग आदि का फल देवताप्रीति होना सर्वत्र संभव नहीं है। क्योंकि देवता के चेतनत्वपक्ष में भी देवताप्रीति, याग अथवा गंगास्नानादि का उद्देश्य ही नहीं नहीं है। कारण कि प्रीति सुखस्वरूप होने के नाते विष्णु की प्रीति में उद्देश्यता ही नहीं है– क्योंकि विष्णु में जन्यसुखादि का अभाव है। अतः विष्णुप्रीति से जन्य जो पराभिमत (मीमांसकाभिमत) स्वर्गादि हैं उनका ही लक्षणया विष्णुप्रीति शब्द से बोध होता है ॥१६२॥

---

जलस्पर्शादिना। तस्य। यागादेः। पूर्वमेव। कर्मनाशाजलस्पर्शादिपूर्वमेव। वृत्तत्वादिति। उत्पन्नत्वाद्विनष्टत्वाच्चेत्यर्थः। एतेन। कर्मनाशाजलस्पर्शादिनाऽनाश्यत्वेन। अपास्तमिति। विष्णुप्रीतेरविनाशादिति भावः। दोषान्तरमाह। गङ्गास्नानादाविति। १६२ अधर्मेति। अधर्मत्वजातिमत्त्वमधर्मस्य लक्षणम्। अधर्मत्वं तु निषिद्धकर्ममात्रवृत्तिव्यापारानवच्छिन्नकारणतानिरूपितकार्यतावच्छेदकतया दुःखत्वावच्छिन्नकार्यतानिरूपितव्यापारानवच्छिन्नकारणतावच्छेदकतया वा सिद्धोजातिविशेषः। निषिद्धत्वं चाऽकर्तव्यतया श्रुतिविहितत्वम्। अधर्मो न स्यादिति। अधर्मो "निषिद्धकर्मातिरिक्त" एव न स्यादित्यर्थः। प्रायश्चित्तादिनेति। आदिना भोग तत्वज्ञानयोः परिग्रहः। तेन। प्रायश्चित्तेन। तस्य। ब्रह्महननादेः। पूर्वमेव। प्रायश्चित्तात्पूर्वमेव। प्रायश्चितं च पापक्षयमात्रसाधनम्। तत्वं च पापक्षयेतराऽसाधनत्वे सति पापक्षयसाधनत्वम्। पापक्षयस्वर्गोभयसाधनीभूत गङ्गास्नानाऽश्वमेधादावतिव्याप्तिवारणाय सत्यन्तम्। परिमाण्डल्यवारणाय विशेष्यदलम्। अधिकं वेदान्तसारे गङ्गायां द्रष्टव्यम्। धर्माऽधर्माऽभावादिति। ईश्वरे धर्माऽधर्मोत्पत्त्यभावादित्यर्थः। समवायेन विहितनिषिद्धक्रियां प्रति अवच्छेदकतासम्बन्धेन शरीरस्य हेतुतया ईश्वरेशरीराभावात्, तत्समवेतक्रियाया अभावाच्च न धर्माधर्मोत्पत्तिसंभव इति भावः।

प्रतिबन्धो वा कर्तुं शक्यते, तस्य पूर्वमेव विनष्टत्वादिति भावः। जीवेति। ईश्वरस्य धर्माधर्माभावादिति भावः ॥१६३॥

इमौ धर्माधर्मौ। वासनेति। अतो ज्ञानिना कृते अपि सुकृतदुष्कृतकर्मणी न फलायाऽलमिति भावः। ज्ञानादपीति। अपिना भोगपरिग्रहः। ननु तत्त्वज्ञानस्य कथं धर्माधर्मनाशकत्वम्।

नाभुक्तंक्षीयतेकर्मकल्पकोटिशतैरपीति वचनविरोधात्। इत्थं च तत्त्वज्ञानिनां झटिति कायव्यूहेन सकलकर्मणां भोगेन क्षय इति चेन्न। तत्र

अधर्म इति। नरकादि सकलदुःखों का तथा नारकीय शरीरादि का साधन अधर्म होता है। अधर्म में प्रमाण कहते हैं कि–प्रायश्चित्त इति। यदि अधर्म न हो तो प्रायश्चित्त से नाश्य कौन होगा। ब्रह्महननादि का नाश अथवा प्रतिबन्ध प्रायश्चित्त से नहीं हो सकता है, क्योंकि वह पहिले ही विनष्ट हो चुका है। धर्माधर्म ईश्वर में नहीं है।

धर्माधर्म मिथ्याज्ञानजन्य वासना से पैदा होनेवाले हैं, और तत्त्वज्ञान से इनका नाश हो जाता है। इसलिये ज्ञानी पुरुष के द्वारा किये हुवे जो अच्छे-बुरे कर्म हैं उनसे धर्माधर्म फल उत्पन्न नहीं होते हैं।

प्रश्न—तत्त्वज्ञान धर्माधर्म का नाशक कैसे हो सकता है, क्योंकि "नाभुक्तम्" इत्यादि वचन में जब कि यह सिद्ध है कि–धर्माधर्म का बिना भोग के क्षय नहीं है–अतः इस वचन से विरोध हो जाता है। इस प्रकार तत्त्वज्ञानी लोगों को भी झटिति कायव्यूह के द्वारा ही अर्थात् एक शरीर के अनेक शरीर बनाकर ही अपने समस्त कर्मों का क्षय करना होता है।

---

सांख्यास्तु अन्तःकरणस्य बुद्धेर्वृत्तिविशेषं धर्ममाहुः। वृद्धमीमांसका यागादिकर्मनिर्वर्त्यमपूर्वं नाम धर्मं वदन्ति। भट्टपादास्तु—

श्रेयोहि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः।
चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता॥

इत्यादिश्लोकैः श्रेयःसाधनतया यागादिकर्मणोधर्मत्वं, नरकपातादिसाधनत्वाच्च हिंसादिकर्मणो धर्मत्वं प्रतिपादयन्ति, तानि द्रव्यगुणकर्मात्मकानीति तेष्वेव धर्माधर्मयोरन्तर्भाव इति वदन्ति। अपूर्वमेव धर्मशब्दवाच्यमिति प्राभाकराः। शाक्यभिक्षवश्च चित्तवासनांधर्ममाचक्षते। आर्हतास्तु पुण्यपुद्गलान् धर्मत्वेन व्यदिशन्ति। १६३

वासनाजन्याविति। वासना च मिथ्याज्ञानजन्यसंस्कारः राग इति यावत्। अत इति। तज्जन्यो इत्यर्थः। ईश्वरे वासनाविरहाच्च धर्माधर्मोत्पाद इति भावः। न फलायाऽलमिति। न धर्माधर्माऽधर्मौ प्रति वासनाया हेतुत्वादेवेत्यर्थः। न फलायाऽलमिति। तथा च ज्ञानिनोरागरूपसहकारिकारणाभावाच्च सुकृतधर्मोत्पादनसमर्थे इति।

शब्दोध्वनिश्च वर्णश्च मृदङ्गादिभवोध्वनिः ॥१६४॥
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः।

भोगेन वेदबोधितनाशकोपलक्षकत्वात्। कथमन्यथा प्रायश्चित्तादिना कर्मणां नाशः। तदुक्तम्—

ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन
क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे इति।

ननु तत्वज्ञानिनस्तद्दिशरीरावस्थानं सुखदुःखादिकं न स्यात्। ज्ञानेन सर्वकर्मणां नाशात् इति चेन्न। प्रारब्धेतरकर्मणामेव नाशात्। तत्तच्छरीर-भोगजनकं हि यत्कर्म तत्प्रारब्धम्, तदभिप्रायकमेव नाभुक्तमिति वचनमिति।

उत्तर—"नाभुक्तम्" यहाँ पर भोग वेदबोधितनाशकमात्र का उपलक्षक (बोधक) है, अर्थात् भोग से जैसे कर्म का नाश होता है वैसे ही वेदबोधित जो तत्त्वज्ञान एवं प्रायश्चित आदि हैं उनसे भी कर्म का नाश होता है। (उक्त वचन के साथ कोई विरोध नहीं है) अन्यथा अर्थात् यदि भोग से ही कर्मों का क्षय होता है तब फिर प्रायश्चित्त आदि से कर्मों का नाश कैसे होता है। जो कि गीता में कहा है कि—"ज्ञानाग्निः सर्वकर्माणि" इत्यादि। तथा श्रुति भी कहती है कि—"क्षीयन्ते चास्य कर्माणि" इत्यादि। (अतः मानना होगा कि भोग से अतिरिक्त तत्त्वज्ञान तथा प्रायश्चित्त आदि से भी कर्मों का नाश हो जाता है।)

प्रश्न—तब तो तत्त्वज्ञानियों के शरीर की तथा सुख-दुःख आदि की स्थिति नहीं रहनी चाहिये, क्योंकि ज्ञान से समस्त कर्मों का तथा कर्मजन्य अदृष्ट का नाश हो चुका है।

उत्तर—प्रारब्ध कर्म से इतर जो संचित तथा क्रियमाण कर्म हैं उन्हीं का तत्त्वज्ञान से नाश होता है। तत्तत् शरीर के द्वारा भोग का जनक जो कर्म उसे प्रारब्ध कर्म कहते हैं, और इसी प्रारब्ध कर्म के अभिप्राय वाले "नाभुक्तं क्षीयते कर्म" इत्यादि वचन हैं।

शब्द का निरूपण करते हैं—शब्द इति। दूरस्थ शब्द का ग्रहण नहीं होता है अतः श्रोत्र कहा। अर्थात् श्रोत्र में उत्पन्न हुवे शब्द का ही प्रत्यक्ष होता है।

---

दुःष्कृतकर्मभ्यां धर्माधर्मोत्पाद इति भावः। इत्थं च। भोगस्यैव धर्मनाशकत्वे च। झटिति कायव्यूहेन। एकदा अनेकशरीरस्वीकारेण। तत्र। नाभुक्तमित्यत्र। भुक्तपदार्थैकदेशभोगस्य। वेदबोधितनाशकोपलक्षकत्वादिति। वेदबोधितनाशकस्य "तत्वज्ञानस्य" सूचकत्वादित्यर्थः। तथा च नाभुक्तं क्षीयते इत्यस्य भोगवेद-बोधितनाशकान्यतरं विना न क्षीयते इत्यर्थान्न तत्वज्ञानस्य धर्मादिनाशकत्वानुप-पत्तिरिति भावः। अन्यथा कर्मणांभोगैकनाश्यत्वे। कर्मणां नाश इति। कथमिति पूर्वेणान्वयः। भोगस्यैव धर्माधर्मनाशकत्वपक्षे बाधकं प्रदर्श्य इदानी

सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥१६५॥
वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता।
कदंबगोलन्यायादुत्पत्तिः कस्यचिन्मते ॥१६६॥

शब्दं निरूपयति। शब्द इति। नभोवृत्तिः आकाशसमवेतः। दूरस्थशब्दस्याऽग्रहणादाह। श्रोत्रोत्पन्न इति। ननु मृदङ्गाद्यवच्छेदेनोत्पन्नशब्दे श्रोत्रे कथमुत्पत्तिरत आह। वीचीति। आद्यशब्देन बहिर्दशदिगवच्छिन्नोऽन्य शब्दस्तेनैव जन्यते। तेन चापरस्तद्व्यापकः। एवं क्रमेण श्रोत्रोत्पन्नो गृह्यते इति। कदम्बेति। आद्यशब्दाद्दशदिक्षु दशशब्दा उत्पद्यन्ते, तैश्चान्ये दश शब्दा उत्पद्यन्ते इति भावः। अस्मिन्मते कल्पनागौरवादुक्तम्, कस्यचिन्मते इति।

प्रश्न—मृदङ्गप्रदेश में उत्पन्न हुवे शब्द की श्रोत्रप्रदेश में उत्पत्ति कैसे होती है—( अर्थात् मृदङ्ग प्रदेश में उत्पन्न हुवा शब्द कानों तक कैसे पहुँचता है—क्योंकि दोनों दूर हैं )

उत्तर—वीचीतरङ्ग न्याय से आद्यशब्द से बाह्य दशदिशाओं से अवच्छिन्न ( सम्बद्ध ) अन्य ( दूसरा ) शब्द उत्पन्न होता है। और उस दूसरे शब्द से फिर तीसरा, इस क्रम से श्रोत्र में उत्पन्न हुवे शब्द का ग्रहण हो जाता है।

कदम्बगोलक न्याय से शब्द की उत्पत्ति मानने वाले किसी का यह मत है कि प्रथम शब्द से दशदिशाओं में दश शब्द उत्पन्न होते हैं। और उनमें से प्रत्येक शब्द से फिर दश दश शब्द उत्पन्न होते हैं। इस मत में बहुत से शब्दों की कल्पना करनी पड़ती है अतः गौरव अवश्य है इसी अरुचि को दिखलाने के "कस्यचिन्मते" यह कहा है ॥१६६॥

---

तत्त्वज्ञानस्यादृष्टनाशकत्वे श्रुति स्मृति प्रमाणयति। तदुक्तमिति। तर्हि। भोगस्येव तत्त्वसाक्षात्कारस्यापि कर्मनाशकत्वे। प्रारब्धेतरकर्मणामेवेति। सञ्चित-क्रियमाणकर्मणामेवेत्यर्थः। नाशात्। नाशस्वीकारादित्यर्थः। प्रारब्धकर्मलक्षयति। तत्तच्छरीरभोगजनकं हीति। तत्तच्छरीरावच्छेदेनभोगजनकं हीत्यर्थः। तदभिप्रायकमिति। प्रारब्धकर्माभिप्रायकमित्यर्थः।

इति अदृष्टनिरूपणम्।

शब्दं निरूपयतीति। शब्दविशेष्यकलक्षणस्वरूपप्रामाण्यप्रकारज्ञानानुकूलकृतिमानिति बोधः। श्रोत्रेन्द्रियजन्यज्ञानीयलौकिकविषयतावच्छेदकगुणत्वव्याप्यजातिमत्वं शब्दस्य लक्षणम्। शब्दो द्विविधः। द्वैविध्यमुपपादयति। ध्वनिश्च वर्णश्चेति। ध्वन्यात्मको वर्णात्मकश्चेत्यर्थः ध्वनिपदक्षयतावच्छेदकतया, सिद्धां जातिविशेषां

उत्पन्नः को विनष्टः क इति बुद्धे रनित्यता।
सोयं क इति बुद्धिस्तु साजात्यमवलंबते ॥१६७॥

ननु शब्दस्य नित्यत्वादुत्पत्तिकथनमसंगतमतआह। उत्पन्न इति। शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः। ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम्। इत्थं चोत्पादविनाशबुद्धिर्भ्रमरूपैवेत्यत आह। सोयमिति। साजात्यमिति। तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदोविषयः। उक्तप्रतीतिविरोधात्। इत्थं च द्वयोरपि प्रतीत्योरभ्रमत्वमिति।

---

ध्वनित्वम्। मृदङ्गादिभव इति। आदिना भेर्यादिसंग्रहः। मृदङ्गाद्यवच्छेद्य इत्यर्थः। तथा च मृदंगाद्यवच्छेद्यः शब्दो ध्वन्यात्मक इत्यर्थः। मृदंगादिः शब्देऽवच्छेदकः। शब्दस्तु मृदंगावच्छेद्यः। एतेन वीथ्यां कोलाहलः, वने कोलाहलः इत्यादि प्रतीतेः अवच्छेद्यतासंबन्धेन वीथीवनादिविषयकत्वेनोपपत्तिः।

ध्वन्यात्मकः शब्दस्त्रिविधः। संयोगजो विभागजः शब्दजश्चेति। तत्राऽऽद्योभेरीदण्डसंयोगनिमित्तकारणकः। तस्यभेर्याकाशसंयोगोऽसमवायिकारणम्। एवं हस्तमृदङ्गसंयोगोनिमित्तकारणम्। हस्ताकाशसंयोगोऽ समवायिकारणम्। वंशक्रियाजन्यवंशदलद्वयविभागजोद्वितीयः तस्य वंशदलद्वयाकाशविभागोऽसमवायिकारणम्। शब्दोत्पत्तिदेशमारभ्यश्रोत्रदेशपर्यन्तं शब्दधारा जायन्ते तत्राऽऽद्यध्वनिं विहाय द्वितीयध्वनिप्रभृतिचरमध्वनिपर्यन्ताः ध्वन्यात्मकाः शब्दाः शब्दजाः। ध्वन्यात्मकशब्दाऽसमवायिकारणकाः तृतीयाः।

ताल्वोष्ठपुटसंयोगजन्यतावच्छेदकजातिविशेषोवर्णत्वम्। ताल्वोष्ठपुटसंयोगजन्यः शब्दो वर्णस्वरूप इतियावत्। वर्णात्मकोपि द्विविधः संयोगजो वर्णजश्च। आद्यः ताल्वोष्ठपुटसंयोगनिमित्तकारणकः। तस्य ताल्वाकाशसंयोगोऽसमवायिकारणम्। तदाहरति वर्णास्तेकादयो मता इति। द्वितीयवर्णप्रभृतिरन्त्यवर्णपर्यन्तं सर्ववर्णा वर्णाऽसमवायिकारणकाः। वक्ष्यमाणयुक्त्या सर्वोपि शब्दोऽनित्यः। अव्याप्यवृत्तिश्च। अन्त्यभिन्नः शब्दः स्वेतरकार्यशब्दनाश्यः, अन्त्यशब्दस्तु उपान्त्यशब्दनाश्य इत्युक्तं प्रागिति ध्येयम्।

शब्दस्याऽऽश्रयमाह। नभोवृत्तिरिति। मृदंगाद्यवच्छेदेनेति। आकाशे इति शेषः। उत्पन्नेशब्दे इति। उत्पन्नस्य शब्दस्येत्यर्थः। श्रोत्रे इति। कर्णविवराद्यवच्छेदेनेत्यर्थः। आकाशे इति। शेषः। कथमुत्पत्तिरिति। कर्णविवरस्य तदुत्पत्त्यवच्छेदकत्वाभावादिति भावः। अन्यः शब्द इति। प्रथमशब्दान्यशब्द-

इत्यर्थः। **तेनैवेति**। आद्यशब्देनैवेत्यर्थः। एवकारेण द्वितीयादिशब्देन शब्दोत्पत्तिव्यवच्छेदः। **तेन च**। आद्यशब्देन च। **तद्व्यापक इति**। आद्यशब्दापेक्षयामहानित्यर्थः। **एवं क्रमेणेति**। वीचितरङ्गन्यायेनेत्यर्थः। **श्रोत्रोत्पन्न इति**। कर्णविवरावच्छेदेनोत्पन्न इत्यर्थः। **उपलभ्यते इति**। प्रत्यक्षविषयोभवतीत्यर्थः। तथा च शब्दान्तरोत्पत्यवच्छेदकत्वं कर्णविवरस्य सुलभमिति भावः। अयं भावः। वीची यथा सर्वदिगवच्छेदेन एकदा तरङ्गान् जनयति परन्तु यद्देशदिगभिमुखोवायुः तद्देशदिगवच्छेदेन अधिकतरङ्गान् जनयति तथा भेरीमृदङ्गाद्यवच्छेदेन जायमानशब्दः भेर्यादिभिन्नसर्वदेशावच्छेदेन सर्वदिगवच्छेदेन चैकदैव शब्दान् जनयति परन्तु यद्देशदिगभिमुखोवायुः तद्देशदिगवच्छेदेनाधिकशब्दान् जनयतीति वीचीतरङ्गन्यायेनोत्पत्तिक्रम इति।

कदम्बमुकुलन्यायेनशब्दोत्पत्तिप्रकारमाह। **आद्यशब्दादिति**। भेर्याद्यवच्छेदेन जायमानशब्दादित्यर्थः। **तैः**। दशशब्दैः। एवं क्रमेण श्रोत्रावच्छेदेनोत्पन्नशब्दोगृह्यते। पक्षद्वयेपि आद्यशब्दोऽतीन्द्रियः, भेर्याद्यवच्छेदेन जायमानत्वात् श्रोत्रावच्छेदेन जायमानस्यैव प्रत्यक्षत्वसंभवादिति। **गौरवादिति**। दशशब्दानां तत्प्रागभावानां तद्धेतुहेतुमद्भावानां च कल्पने गौरवादित्यर्थः। १६४–१६६। **उत्पादविनाशप्रत्ययशालित्वादिति**। उत्पादविनाशप्रत्ययविशेष्यत्वादित्यर्थः। न चोत्पत्तिविनाशप्रत्ययोभ्रमः। बाधकाभावात्। न चौपाधिकः। तमन्तरेणैव जायमानत्वात्। उपाधिर्हि नात्रानुभविकः। विदितकुङ्कुमस्य कुङ्कुमारुणा तरुणीवत्, उपाधेरननुभवात्। न च वायुगतविनाशोत्पत्ती शब्दे भासेते इति वाच्यम्। उत्पत्तेस्वत्वघटितत्वेनाऽन्योत्पत्तेरन्यत्र भानायोगात्। तथात्वे वा घटादेरपि नित्यत्वप्रसंगः। किं च तीव्रमन्दादिभावेन शुकसारिकामनुष्यस्त्रीप्रभवत्वेन च वैलक्षण्यस्य स्फुटमुपलभ्यमानतया वर्णानां नानात्वम्, तथा च सुतरामुत्पत्तिविनाशवत्वम्। न च वायुनिष्ठतीव्रमन्दादिभावः शब्दे प्रतीयते इति वाच्यम्। वायोरप्रतीतेः। अन्यथा गत्वादयोपि वायुधर्मा एव शब्दे भासन्ते इत्येव किं नरोचयेः। तथाचेक एव वर्णोजगति स्यात्। एवं तारत्वमन्दत्वप्रतीतेरपि भेदसिद्धिः। नचैषां वायुधर्मत्वम्। श्रोत्रग्राह्यत्वात्। तथा च प्रयोगः तारत्वादयो न वायुधर्माः श्रावणत्वात् कादिवत्। वायुर्वा न श्रोत्रग्राह्यधर्मवान् मूर्तत्वात् पटवदिति। तस्मात्प्रयत्नजन्यत्वादनित्यः शब्दः।

न च प्रयत्नस्य व्यञ्जकत्वम्। समानदेशानां समानेन्द्रियग्राह्याणां एकव्यञ्जकव्यंग्यत्वनियमात् एकवर्णाभिव्यक्तये कृते प्रयत्ने सर्वेषां वर्णानां अभिव्यक्तिप्रसंगात्।

तदुक्तम्—

> सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रकाशयेत्।
> घटायोन्मीलितं चक्षुः पटं न हि न बुध्यते इति॥

**तदेवौषधमित्यादौ सजातीयेपि दर्शनात् ।**
**तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥१६८॥**

प्रश्न—शब्द तो नित्य है तब फिर उसका उत्पत्तिकथन अनुचित है ।

उत्तर—ककारादि शब्दों की उत्पत्ति विनाशयुक्त अनित्यता स्पष्ट ही है ।

प्रश्न—यह वही ककारात्मक शब्द है इस प्रत्यभिज्ञा से शब्दों को नित्यत्व सिद्ध ही है, अतः उत्पाद विनाशबुद्धि भ्रमरूप है ।

---

किं च दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्द उपलभ्यते, शब्दस्य व्यंग्यत्वे तु तन्न स्यात्, व्यञ्जकनिवृत्तौ व्यंग्यास्यानुपलंभात् । किं च भेरीशब्दात्तन्त्रीशब्दाभिभवो न स्यात्, प्राप्त्यभावात् । अप्राप्तौ चाभिभवे क्वचिदेव भेर्यां प्रणोदितायां समानकालास्तन्त्रीस्वनालोकेषु न श्रूयेरन् । उत्पत्तौ तु सन्तानक्रमेण श्रोत्रप्रत्यासन्नोमन्दस्तन्त्रीस्वन स्तथाविधेन तीव्रेण भेरीध्वनिना, अभिभूयते इति युक्तम् । तस्मादुत्पद्यते शब्दोनाभिव्यज्यते । अष्टकृत्वोगकार उच्चरित इति तु अष्टकृत्वोनृत्यमकरोदितिवत् प्रत्ययोबोध्य इति । तच्चतत्शब्दानामनित्यत्वं "आदिमत्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च" इत्यादिसूत्रैर्न्याये, "सतोलिंगाभावात्" इत्यादिसूत्रैर्वैशेषिके, शब्दमणौ च विस्तरतः प्रतिपादितम् । **प्रत्यभिज्ञानादिति** । प्रत्यभिज्ञा च पुरोवर्तिनि पूर्वदृष्टस्याऽभेदावगाहिज्ञानम् । **इत्थं च** । वर्णानां नित्यत्वे च । **उत्पादविनाशबुद्धिरिति** । ककारः उत्पन्नः ककारोविनष्ट इत्याकारिका बुद्धिरित्यर्थः । **भ्रमरूपैवेति** । उत्पन्नत्वाभाववति उत्पन्नत्वप्रकारिका, विनष्टत्वाभाववति विनष्टत्वप्रकारिका इत्यर्थ । **उक्तप्रतीतिविरोधादिति** । उत्पादविनाशशालिप्रत्ययविरोधादित्यर्थ । **इत्थंचेति** । सोयं क इति बुद्धेः सजातीयविषयकत्वे चेत्यर्थः । **द्वयोरपीति** । उत्पन्नः को विनष्टः क इति प्रत्यय सोयं क इति प्रत्यभिज्ञयोरित्यर्थः । **न भ्रमत्वमिति** । सर्वांशे प्रमात्वमित्यर्थः । उपपद्यते इति शेषः । न चोक्तप्रत्यभिज्ञायाः सजातीयविषयकत्वे तज्जातीयोऽयमितीति वाच्यम् । यादृशप्रत्यभिज्ञायां जातित्वेन कत्वादेर्भानं तादृशप्रत्यभिज्ञैव तज्जातीयोयमित्याकारिका, यस्यां तु स्वरूपतः कत्वादिजातेर्भानं तादृशप्रत्यभिज्ञा सोयमित्याकारिकैव स्वीक्रियते इति न काप्यनुपपत्तिः ॥ १६८ ॥

मूले—**तदेवौषधमित्यादाविति** । आदिना पूर्वेद्युर्यद्भुक्तं तदेवेदं भक्ष्यमित्यादेः परिग्रहः । ननु तदेवौषधमित्यादौ व्यक्त्यभेद एव विषयोस्तु बाधकाभावादित्याशंकां परिहरति । **यदौषधं मया कृतमिति** । मयैव कृतमित्यर्थः । यथाश्रुते उभयकर्तृकौषधस्याभेदसंभवादसंगत्यापत्तेः । तथा च स्वकर्तृकत्व—स्वभिन्नकर्तृकत्वरूपविरुद्धधर्माध्यासेनाभेदस्य वक्त मशक्यत्वादिति भावः ।

ननु सजातीये सोयमिति प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह । तदेवेति । यदेवौषधं मया कृतं तदौषधमन्येनापि कृतमित्यादि दर्शनादिति भावः ।१६८

इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्यपुत्र श्रीयुतविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां गुणनिरूपणम् ।

समाप्तश्चायं ग्रन्थः ॥

उत्तर—'सोऽयंकः' यह वही ककारात्मक शब्द है यह प्रत्यभिज्ञाज्ञान को विषय करती है न कि ककारात्मकशब्दव्यक्तियों के अभेद को, क्योंकि उस प्रतीति से अर्थात् ककारादिशब्दों की उत्पाद-विनाश सम्बन्धी प्रतीति से विरोध हो जायेगा। इसीलिये सोऽयंककारः" "उत्पन्नःककारः" इन दोनों प्रतीतियों में से किसी भी प्रतीति को असत्य नहीं है।

प्रश्न—सजातीय पदार्थों में भी "सोऽयम्" यह प्रत्यभिज्ञा कहाँ देखी गयी है।

उत्तर—जो औषधि मैंने की है वही औषधि दूसरे व्यक्ति ने भी की इत्यादिस्थल में 'तदेव औषधम्' इत्यादिरूप से साक्षात्यदर्शन होता है।

कृष्णा टीका समाप्त।

---

शब्दो द्रव्यं इन्द्रियसंयोगसमवायान्यतरवेद्यत्वाद् घटवदित्यनुमानात्, अत एव महानेकः शब्दो वेगेन दूरं गत इत्यादि सर्वजनव्यवहारोप्युपपद्यते इति भाट्टमतं न समीचीनम्, अश्रावणत्वस्योपाधित्वात्। तथा च महत्वादिगुणवत्वं तत्रैकार्थसमवायनैवोपपद्यते इति।

अत्रेदं बोध्यम्। वैशेषिकमते वीचीतरङ्गन्यायेन शब्दात् शब्दान्तरमुत्पद्यते तथा च प्रशस्तभाष्ये शब्दाच्च संयोगविभागनिष्पन्नात् वीचीसन्तानवच्छब्दसन्तान इत्येवं सन्तानेन श्रोत्रप्रदेशमागतस्य ग्रहणम्, इति। न्यायनये च कदम्बगोलकन्यायेन तदुत्पत्तिः। तदुक्तं-न्यायवार्तिके तत्राद्यः शब्दः संयोगविभागहेतुकः तस्माच्छब्दान्तराणि कदम्बगोलकन्यायेन सर्वदिक्कानि तेभ्यः प्रत्येकमेकैकं शब्दो मन्दतरतमादिन्यायेनाश्रयाप्रतिबन्धमनुविधीयमानः प्रादुरस्तीति।

वेदान्तिनस्तु प्राणरसनत्वगात्मकानि इन्द्रियाणि स्वस्थानस्थितान्येव गन्धरसस्पर्शोपलम्भान् जनयन्ति। चक्षुः श्रोत्रे तु स्वत एव विषयदेशं गत्वा स्वस्वविषयंगृह्णीतः, श्रोत्रस्यापि चक्षुरादिवत्परिच्छिन्नतया भेर्यादिदेशगमनसंभवात्। अत एवानुभवो भेरीशब्दो मया श्रुत इति वदन्ति। अत्रेदमालोचनीयम्। यतः श्रोत्रस्याभूर्तत्वेन विषयदेशागमनं न संभवति। न च क्रियाकारणनोदनाभिघातसमावायात्तत्र क्रियावत्त्वमित्यपि सांप्रतम्।

आत्मनि व्यभिचारात्। अतः विद्यमानोऽप्याकाशे अभिघातः क्रियाहेतुर्न भवति, महत्परिमाणेन प्रतिबन्धात्। "तुष्यतुदुर्जन" इति न्यायेन श्रोत्रस्य क्रियावत्त्वस्वीकारेपि न समीहितसिद्धिः। तथासति—

वायौ शब्दानुकूले च न तस्य श्रवणं भवेत् ।
गच्छन्त्याः प्रतिकूलो हि श्रोत्रवृत्तेः स मारुतः ॥

शब्दानुकूले पवने दवीयसोपि शब्दस्य श्रवणं प्रतिवातं च समीपेपि तस्याऽश्रवणमित्यस्य विपरीतप्रसक्तिः स्यात् श्रोत्रस्य विषयदेशगमनपक्षे । वस्तुतस्तु श्रोत्रस्य शब्ददेशमुपसर्पणमेवाऽसंभवदुक्तिकम्, कर्णशष्कुल्यवच्छिन्नस्यैव नभसः श्रोत्रत्वस्वीकारात्, न हि कर्णशष्कुलीमूर्तापि वक्तृवक्त्रमुपसर्पति, तस्माद् गच्छत्यपि नभोमात्रे कर्णशष्कुल्युपधानविरहात् श्रोत्रस्य विषयदेशगमनं कथमपि न संभवति, कर्णशष्कुल्युपधानमन्तरेणापि केवलनभःसंबन्धेन शब्दप्रत्यक्षोपगमे गौड़देशप्रयुक्तो-गोशब्दोवाराणस्यामपि श्रूयेत । तस्मादकामेनापि वीचीतरंगन्यायेन शब्दोत्पत्तिपक्ष एव स्वीकरणीयः ।

आर्हतास्तु भाषावर्गणापरमाणुभिः पुद्गलाभिधानैरारभ्यते शब्दः, तथा च सावयवः । तदुक्तं प्रमेयकमलमार्तण्डे "यदस्माभिः श्रावणस्वभावविनाशोत्पत्तिमत् पुद्गलं द्रव्यमित्यभिधीयते, तद्युष्माभिर्वर्ण इत्याख्यायते" । सूत्रितं च प्रमाणनयतत्त्वालोकालङ्कारे "अकारादिः पौद्गलिकोवर्ण" इति । स च शब्दःस्वोत्पत्तिस्थानात् प्रविशति कर्णरन्ध्रमिति नानुपपत्तिः प्रत्यक्षस्येति वदन्ति । तन्मतमित्थं निराकृतं जयन्तभट्टेन—

वर्णस्यावयवाः सूक्ष्माः सन्ति के च न पुद्गलाः ।
तै वर्णोऽवयवी नाम जन्यते पश्य कौतुकम् ॥
कृशश्च गच्छन् स कथं न विक्षिप्येत मारुतैः ।
दलशो वा न भज्येत वृक्षाद्यभिहतः कथम् ॥
प्रमाणकावधिः कश्च गच्छतोऽस्य तपस्विनः ।
एकश्रोत्रप्रविष्टो वा स श्रूयेताऽपरैः कथम् ॥
निष्क्रम्य कर्णादेकस्मात् प्रवेशः श्रवणान्तरे ।
यदीष्येत कथं तस्य युगपद् बहुभिः श्रुतिः ॥
श्रोतृसंख्यानुसारेण न नानावर्णसंभवः ।
वक्तुस्तुल्यप्रयत्नत्वात् श्रोतृभेदे तदन्वये इति ।
अथ नैयायिकमतेपि शब्दः शब्दान्तरं सूते इति तावदलौकिकम् ।
कार्यकारणभावोहि न दृष्टस्तेषु बुद्धिवत् ॥
जन्यन्तेऽनन्तरे देशे शब्दैः स्वसदृशाश्च ते ।
तिर्यगूर्द्ध्वमधश्चेति केयं वा श्रद्दधानता ॥
शब्दान्तराणि कुर्वन्तः कथं च विरमन्ति ते ॥
न हि वेगक्षयस्तेषां मरुतामिव कल्पते ।
कुड्यादिव्यवधाने च शब्दस्यावरणं कथम् ॥
व्योम्नः सर्वगतत्वाद्धि कुड्यमध्ये व्यवस्थितिः ।
तुल्यारम्भे च तीव्रेण मन्दस्य जननं कथम् ॥

श्रूयते चान्तिकात्तीव्रः शब्दोमन्दस्तु दूरतः।
वीचीसन्तानतुल्यत्वमपि शब्देषु दुर्वचम्॥
मूर्तिमत्वक्रियायोगवेगादिरहितात्मसु। मैवम्।
समानजातीयगुणारम्भिणो बहवो गुणाः॥
सन्ति रूपादयो लोके ततो नेयं कुकल्पना।

शब्दसन्तानविरतिरपि भवत्यद्यापि [illegible] [illegible]। तदुक्तम् कन्दलीकृता "नचाऽनवस्था याव [illegible]
तावद्दूरं शब्दसन्तानुवृत्तिः। अत एव [illegible]
घातात्" इति। कणादरहस्येपि। "कण्ठताल्वाद्यभिघातजनितकर्मणोवायोः शब्द-निमित्तकारणतामापन्नस्य यावद्वेगमभिप्रतिष्ठमानस्य क्वचिद्गतिप्रतिबन्धात् क्वचिद्विनाशाद्वा शब्दान्तरानुत्पत्तेः शब्दसन्तानविनाशात्। अत एव कुड्यादि-व्यवधाने शब्दानुपलब्धिरप्युपपद्यते। न्यायमञ्जरीकृताऽन्यथापि समाहितमेतत्। तथा च "यत्तुकुड्यादिव्यवधाने किमिति विरमति शब्दसन्तानारम्भ इति। नैष दोषः। निरावरणस्य हि बोधः शब्दारम्भे समवायिकारणत्वम्, तथा दर्शनात् कल्प्यते नाकाशमात्रस्येति"। तीव्रेणापि शनैरेवमतीव्रारम्भसंभवः।

सोदृत्सचिवसामर्थ्यसापेक्षक्षीणवृत्तिना।
वीचीसन्तानदृष्टान्तः किंचित्साम्यादुदाहृतः॥
नतुवेगादिसामर्थ्यंशब्दानामस्त्ययामिवेति। १६९
श्री ज्वालाप्रसादकृते गुणेचैव सविस्तरे॥
समाप्तिमगमच्चैव मुक्तावलिविलासिनी।
समाप्तश्चाय ग्रन्थः। शुभंभूतात्॥
काशीविश्वेश्वरार्पणमस्तु॥